॥ श्रीः ॥

चौखम्बा संस्कृत ग्रन्थमाला

( ग्रन्थ-संख्या १०२ )

श्रीश्वेतायनव्यासविरचिता

# श्रीलक्ष्मीनारायणसंहिता

## तिष्यसन्तानाख्यः चतुर्थः खण्डः

रचयिता

न्यायाचार्यः

स्वामी श्रीकृष्णवल्लभाचार्यः शास्त्री

( नवानगर, सौराष्ट्र )



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९७६

THE
CHOWKHAMBA SANSKRIT SERIES
( WORK NO. 102 )

# S'RĪLAKṢMĪNĀRĀYAṆASAṂHITĀ

OF

S'RĪ S'VETĀYANA VYĀSA

VOL. IV
( TISYASANTAN )

BY
Nyayacarya
SWAMI SRIKRSNAVALLABHACARYA, SHASTRI

THE
Chowkhamba Sanskrit Series Office
VARANASI-1
1976

ओम्

श्रीलक्ष्मीनारायणसंहितायाः

# चतुर्थखण्डस्य तिष्यसन्तानस्याऽनुक्रमणिका

---

## ॥ इतिश्रीलक्ष्मीनारायणसंहितायाः

### तिष्यसन्तानात्मकस्य

### चतुर्थतुण्डस्य

### अध्यायविषयाणाम्

### अनुक्रमणिका ॥

तिष्यसन्तानस्य श्लोकाः······ १३०३८

······७ अधिकाः

१३०४५ सन्ति



| | | | | |
|---|---|---|---|---|
| कृतसन्ताने | ५९० | अध्यायाः, | ५५,५२७ | श्लोकाः। |
| त्रेतासन्ताने | ३०० | अध्यायाः, | ३२,२५४ | श्लोकाः। |
| द्वापरसन्ताने | २३७ | अध्यायाः, | २५,१६२ | श्लोकाः। |
| तिष्यसन्ताने | १२३ | अध्यायाः, | १३,०४५ | श्लोकाः। |
| सम्पूर्णसंहितायाः—१२५० | | अ०। | १२,५,९८८ | श्लोकाः। |



॥ अनादिश्रीकृष्णनारायणाय नमः ॥

॥ श्रीगणेशाय नमः ॥

# ॐ श्रीलक्ष्मीनारायणसंहिता

## चतुर्थः—

## ॥ तिष्यसन्तानः ॥



श्रीश्वेतायनव्यास उवाच—

ओं नमो युगरूपाय नमस्तिष्यादिमोक्षिणे ।
बालयोगिनीनाथाय नमस्ते बालयोगिने ॥ १ ॥
नमोऽसंख्यचरित्राय नमश्चानन्दवार्धये ।
नमस्ते बालकृष्णाय बालान्तरात्मने नमः ॥ २ ॥
चिदचिद्वपुषेऽनादिश्रीकृष्णाय नमोनमः ।
बद्रिकापतये नरनारायणात्मने नमः ॥ ३ ॥
सर्वसौख्यविधात्रे तं सर्वधर्माधिकारिणे ।
यावच्छीलादिवास्याय नमस्ते साधुरूपिणे ॥ ४ ॥
साध्वीशक्तिसुमिश्राय स्वर्णरेखाजटाधृगे ।
एकरसस्वरूपाय सगोजनीजुषे नमः ॥ ५ ॥
एकधा दशधा सहस्रधा कोट्यर्बुदाब्जधा ।
कान्ताकान्तोऽन्वितश्चास्ते पृथक् चापि च ते नमः ॥ ६ ॥
यो दधार तु राधायाः कृते कृष्णं निजं वपुः ।
यश्च श्रियः कृते नारायणो नारायणेश्वरः ॥ ७ ॥
यश्च रम्यं वासुदेवं व्यूहं दधार सृष्टये ।
यश्च हिरण्मयं रूपं विष्णुरूपं दधार च ॥ ८ ॥
तथा तिष्याऽर्दितानां तूद्धाराय तापसं वपुः ।
धर्माद् दधार भगवान् नरनारायणात्मकम् ॥ ९ ॥
सर्वथा करुणापूर्णं साधुशीलसमन्वितम् ।
मुक्तर्षिसेवितं शान्तं तं नमामि परेश्वरम् ॥१०॥
नरनारायणं रूपं वीक्ष्य कान्तस्य चक्रिणः ।
या माणिक्या चाऽक्षरश्रीस्तापसी शीलयोगिनी ॥११॥
या दिव्या दिव्यशक्तिश्च ब्रह्मचर्यपरायणा ।
मनाक् स्पर्शं न सहते याऽन्यस्य श्रीहरिं विना ॥१२॥
सा कान्तं तापसं संसेवितुं बदरिकाऽभवत् ।
बद्रीश्वरी माणिकी सुप्रज्ञा पार्वतिकात्मिका ॥१३॥
राधारमादिसंपूज्या राजते नन्दसच्चितिः ।
श्यात्मिकाऽप्येकरूपाऽस्ति छत्ररूपा हरेः सदा ॥१४॥
यस्याः पत्रेषु देव्यश्च मुक्तानिका वसन्त्यपि ।
यस्या मुक्ता बदरेषु वसन्ति मधुरात्मकाः ॥१५॥
अक्षरं ब्रह्म परमं साकारं बदरीति तत् ।
तेजोमयं धामरूपं तत् द्रुमात्मकमत्र वै ॥१६॥
सेवाऽक्षरकृता मूर्तिमती यावाहनं हरेः ।
ब्रह्मचर्यं हरेरत्र नररूपं विराजते ॥१७॥
ऋषयो भगवत्केशाः सर्वे तपन्ति यत्र च ।
अन्याश्चात्र बदर्यो वै हरेः शक्तय एव ताः ॥१८॥
गंगा चिद्बुद्धिरूपाऽत्र वर्तते न्रायणांगना ।
आनन्दैश्वर्यरूपाश्च भूमयो बदरीवने ॥१९॥

सत्त्वरूपिण्य उपला धवला दावनाशिकाः ।
पर्णकुट्योऽत्र धामानि सभा ब्रह्मव्रतात्मिका ॥२०॥
समाधिर्धारणा ध्यानं वितानेषु वसन्ति हि ।
राजते मुनिभालेषु मुनिभालेषु तूर्ध्वस्रोतस्त्वमुत्तमम् ॥२१॥
जितेन्द्रियत्वं चिह्नेषु धातुस्राववियोगिषु ।
जितात्मत्वं हृदयेषु राजते बद्रिकाश्रमे ॥२२॥
यत्र नास्ति कलेर्वासः सत्यं वसति सर्वदा ।
सत्यधर्माः सत्यसन्तो विद्यन्ते कृतधर्मिणः ॥२३॥
यावत्स्थास्यति भूदेवी यावद्धिमगिरिस्तथा ।
तावच्छ्रीमत्कृष्णनारायणः स्थास्यति तापसः ॥२४॥
नरनारायणनाम्ना बद्रीश्वरपरप्रभुः ।
तावत् कृतस्य धर्मा वै स्थास्यन्ति बदरीवने ॥२५॥
धन्योऽयं मानवो लोको यदर्थे पुरुषोत्तमः ।
कुंकुमवापिकानाथो नरनारायणात्मना ॥२६॥
बदरीनाथ एवाऽयं भूत्वा शश्वद्विराजते ।
माणिक्यायाऽश्विनी दिव्या वाहा चेयं द्रुरूपिणी ॥२७॥
बद्री भूत्वा ब्राह्मतन्वी तेन साकं विराजते ।
नारायणी हि सा लक्ष्मीर्बालकृष्णं निषेवते ॥२८॥
यैर्जनैः समनुध्याता वन्दिता विदिता तथा ।
याभिश्च कृतसेवा ताः कृष्णयोगं प्रयच्छति ॥२९॥
ते नरा योषितः सर्वे माणिक्यानुग्रहाद् भुवि ।
सगुणा अपि जायन्ते निर्गुणा मोक्षभागिनः ॥३०॥
अहो भाग्यं भुवनानां यन्मध्ये बदरीवनम् ।
'अहो भाग्यं मानवानां ये वसन्ति वनाऽभितः' ॥३१॥
बदर्याः शीतला वाता यान् स्पृशन्ति जनास्पदान् ।
ते देशाः पावनाः पुण्या जायन्ते बदरीसमाः ॥३२॥
धन्येयं बदरीदेवी पारिजाताऽवहासिनी ।
पारिजातस्तु वै वर्षमुवास कृष्णमन्दिरे ॥३३॥
इयं तु बदरीदेवी ह्याकल्पं छत्रवद्धरेः ।
राजते नित्ययोगेन मुक्तानी शीलयोगिनी ॥३४॥
कल्पद्रुमोऽपि यस्याऽग्रे नोत्कृष्टत्वं प्रसेवते ।
सकामः स हि सेयं तु निष्कामा श्रीनरायणी ॥३५॥
तुलसी भाग्यशीलाऽपि वने वने विना हरिम् ।
साक्षात् पतिमृते त्वास्ते ततो न बदरीसमा ॥३६॥
बद्रिकेयं तु भगवद्गृहिणी गृहरूपिणी ।
यन्नाम्ना श्रीनारायणालयः प्रसिद्ध्यति ॥३७॥
वृन्दां त्यक्त्वा ययौ वृन्दावने कृष्णस्तु पश्चिमाम् ।
द्वारिकां तेन सा वृन्दा वृक्षरूपा वियोगिनी ॥३८॥
नैनां बदरीं भगवाँस्त्यजत्येव क्वचित् प्रभुः ।
वृन्दायां च तुलस्यां च निरोधो राजसो मतः ॥३९॥
बदर्यां ब्रह्मसत्त्वं वै सदा सात्त्विकतां गतम् ।
केतकी च तपः कृत्वा ययावम्बरमूर्ध्वगम् ॥४०॥
सा तु कापट्यदोषेण प्रक्षिप्ताऽधोजगाम ह ।
मिथ्यासाक्ष्यं वेधसश्च कृत्वा ह्यपूज्यतां गता ॥४१॥
बदरीयं महामुक्तानिका चाज्ञाकरी हरेः ।
महामाणिक्यवर्णा सा मुक्तानिका च दासिका ॥४२॥
अनादिश्रीकृष्णनारायणस्य विरहाऽसहा ।
नरनारायणं कान्तं तापसं चाऽनुतापसी ॥४३॥
भूत्वा नारायणीदेवी बालकृष्णमनुस्मृता ।
सदा बालस्वभावा वै बदरी बालयोगिनी ॥४४॥
सर्वश्रेष्ठा विद्यतेऽत्र नित्यकृष्णसुयोगिनी ।
कामदुघाः समस्ता वै गत्वा श्रीबदरीवनम् ॥४५॥
नत्वा नारायणीं बद्रीं छायायां ताः समासते ।
नारायणं पयः पाययित्वा यान्त्यनु तद्दिवम् ॥४६॥
ता मन्वते धन्यभाग्यं बदर्याः कृष्णयोजितम् ।
कल्पलताः स्वर्गवल्ल्यः शोचन्ते विरहं हरेः ॥४७॥
प्रशंसन्ति महद्भाग्यं बदर्या नित्ययोजितम् ।
फलामृतं क्वचित् प्राप्य देवा गंगाप्लवार्थिनः ॥४८॥
प्रमोदन्ते फलरसे तिरस्कुर्वन्ति चामृतम् ।
अमृतस्य सदा पाने तृप्ता देवा भवन्ति न ॥४९॥
बदरीफलमासाद्य वर्षे तृप्ता महर्षयः ।
बोधिवृक्षो वने त्यक्तो नारायणेन साधुना ॥५०॥
सोऽपि नाऽभ्युदयं धत्ते धत्ते बद्री तु यादृशम् ।
यष्टिका श्रीवामनस्य कृतकार्ये लयं गता ॥५१॥
विना सेवां वर्तते सा ब्रह्मलोके वियोगिनी ।
बदरीयं भाग्यवती महती यष्टिकादितः ॥५२॥
यज्ञनारायणः कृष्णः समिधार्थे द्रुमान् शुभान् ।
व्यरचयत्तथा यज्ञे जुहाव तान् पुरा स्वयम् ॥५३॥
तथापि ते न बदरीसमा भाग्ययुजो यतः ।
यज्ञान्ते ते वने त्यक्ता नारायणेन यज्ञिना ॥५४॥
बदरीयं सदा नारायणेन शिरसि कृता ।
धन्या त्वं माणिकीदेवि धन्या त्वं बदरीश्वरि ॥५५॥
या त्वं कृष्णेन न त्यक्ता चान्ते सत्यादिका यथा ।
धन्या वै कोटिशो नार्यः कृष्णयोगमुपागताः ॥५६॥
शश्वद्धन्या यथा त्वं वै तथा ता न कदाचन ।
सर्वालयं गताः पश्चाद् राजसे त्वं तु बद्रिके ॥५७॥

त्वन्मूलात् खलु तीर्थानि नद्यो भवन्ति बद्रिके ।
त्वं लक्ष्मीस्त्वं रमा श्रीश्च कमला त्वं हरिप्रिया ॥५८॥
त्वं नारायणवासेन नारायणी नरायणी ।
राधा विरजा हरिणी सरस्वती त्वदाश्रयाः ॥५९॥
सर्वास्त्वां वीक्षितुं यान्ति नित्यं नारायणाज्ञया ।
गंगा त्वत्पादमाप्लाव्य ततो याति स्थलान्तरम् ॥६०॥
नर्मदा सप्तकल्पा वै गोदा तु दशकल्पिका ।
सर्वकल्पा बदरीति नारायणेन निर्मिता ॥६१॥
यावच्छेषः क्षीरनिधौ रमा श्वेतनिवासिनी ।
लक्ष्मीर्यावच्च वैकुण्ठे तावद् बद्री हि शाश्वती ॥६२॥
यावतीनां द्रुजातीनां पादपानां च मूलिनाम् ।
पावनी बदरीदेवी नारायणी परेश्वरी ॥६३॥
प्लक्षद्वीपे प्लक्षदेवालये प्लक्षमहोत्सवे ।
द्वीपान्तरेभ्यश्चोद्भिज्जा जातयः समुपाययुः ॥६४॥
कल्पोद्भिज्जास्तु वै स्वर्गात् पुण्योद्भिज्जास्तु सत्यतः ।
श्राद्धोद्भिज्जा जनादिभ्यो भूमेस्तु दैविपादपाः ॥६५॥
चैत्यवृक्षाः समिद्वृक्षा अंकुरा दर्भजातयः ।
रसिणः शाकिनश्चापि फलिनः पुष्पिणस्तथा ॥६६॥
द्वीपनामकरा जम्बुप्रभृतयश्च चाययुः ।
ओषधयो विषहन्त्र्यो जीवदाश्चाययुस्तथा ॥६७॥
गर्भिण्यः प्रसविण्यश्च वंशिन्यश्च समाययुः ।
सन्धिन्यो ब्रह्मचारिण्यो युगलाश्च समाययुः ॥६८॥
प्लक्षपूजोत्तरं कोट्योषधीनां मण्डपे तदा ।
कल्पद्रुमो जगादैतान् पादपान् दैवसंज्ञकान् ॥६९॥
प्लक्षोत्सवोऽयं सम्पन्नः पुण्यकृत् सर्वशाखिनाम् ।
जिज्ञासैका वर्तते मे प्रकाशयामि वः पुरः ॥७०॥
वयं तु पादपाः सर्वे कराग्रफलशालिनः ।
भुञ्जन्तेऽन्ये नः फलानि वयं तु तापसाः सदा ॥७१॥
पृथिवीगर्भभोक्तारो देवार्पणविवर्जिताः ।
पापभुजस्ततः स्यामो वृत्रहत्याऽघयोगिनः ॥७२॥
क्लेद्यखाद्यप्रभोक्तारः पूजाधर्मादिवर्जिताः ।
तीर्थकार्यविधुराश्च तामसा ज्ञानवर्जिताः ॥७३॥
कथं दुरितनाशो नः संभवेद् बद्धशाखिनाम् ।
प्लक्षद्रुमो महान् विप्र उद्धारं नः प्रवक्ष्यति ॥७४॥
इत्येवं तथ्यजिज्ञासां श्रुत्वा प्लक्षेश्वरो द्रुमः ।
विचार्य बहुधा सर्वपादपानां विशुद्धये ॥७५॥
सामर्थ्यं परमं यत्र वर्तते श्रीहरेः समम् ।
अव्याहतं शाश्वतं च मनाक् ह्रासविवर्जितम् ॥७६॥
तं शरण्यं मोक्षदं च पापघ्नं शान्तिदं तथा ।
मायाशान्तिकरं नारायणमूर्त्यात्मकं द्रुमम् ॥७७॥
सत्सभासंगतं नित्यं बदरीद्रुममाह तान् ।
शृण्वन्तु शाखिनः सर्वे सर्वपापविनाशकम् ॥७८॥
कृष्णतुल्यं मोक्षदं च नरनारायणाश्रमे ।
बदरीवनमध्ये वै त्वास्ते या बालयोगिनी ॥७९॥
बालबदरीदेवी या माणिक्या पारमेश्वरी ।
बद्रीश्वरी शीलयुता सदैव ब्रह्मचारिणी ॥८०॥
महामुक्तानिका कोटिमुक्तमण्डलधारिणी ।
सा बद्रिका पादपानां जात्युद्धारकरी शुभा ॥८१॥
दर्शनात् स्पर्शनान्नाम्ना नमस्काराद् विचिन्तनात् ।
आश्रयाद्योगतश्चापि वर्तते पापनाशिनी ॥८२॥
यानि वै वृक्षजातीनां पापानि सहजानि च ।
आगन्तुकानि चान्यानि सा बद्री नाशयिष्यति ॥८३॥
यत्र नारायणः साक्षाद् ब्रह्मचर्यार्थतापसः ।
यदर्थं सा बद्रिकाऽपि ब्रह्मशीला च तापसी ॥८४॥
सर्वपापहरा दिव्या सर्वकल्मषनाशिनी ।
वर्तते सर्वसामर्थ्यान्वितोर्ध्वा पारमेश्वरी ॥८५॥
तत्र पापविनाशार्थं गन्तव्यं तु यथायथम् ।
शाखिभिः पादपैः सर्वैर्यात्रार्थं प्रतिवत्सरम् ॥८६॥
नारायणं नमस्कृत्य नरं च योगिनस्तथा ।
फलपुष्परसाद्यैश्च सम्पूज्य बदरीं नमेत् ॥८७॥
स्पृशेद् बदरीं दिव्यां तां वसेत्तच्छायिके स्थले ।
मिलेच्च वक्षसा बद्रीं मकरन्दं प्रसेत्तथा ॥८८॥
तद्वायुं चापि गृह्णीयात् प्रदक्षिणं चरेत्तथा ।
धूपं दीपं च नैवेद्यं समर्पयेत् क्षमां स्तुतिम् ॥८९॥
प्रकुर्यात् परमेशि त्वं पापजालं विनाशय ।
वृक्षयोनेर्महाकष्टान्मोचयाऽस्मान् प्रमोक्षय ॥९०॥
एवं सम्प्रार्थ्य तां देवीं नत्वा स्वं स्वं वनं व्रजेत् ।
संस्मरेद् बदरीं नारायणं मोक्षमवाप्नुयात् ॥९१॥
वृक्षाणां मोक्षदा देवी बद्रिका त्वेकजन्मनि ।
एवं यात्राकृतो वृक्षा यास्यन्ति परमां गतिम् ॥९२॥
ततो वृक्षैरर्थिता वै यात्रार्थं चलता निजा ।
श्वेतद्वीपे हरेरग्रे हरिस्तानाह सर्वदा ॥९३॥
स्थिरा भवन्तो वृक्षा वै तथापि मोक्षलब्धये ।
सूक्ष्मदेहेन गन्तारो यात्रार्थिनो भविष्यथ ॥९४॥
पादस्यैकस्य सूक्ष्मस्य भूगर्भे वस्तु लप्स्यता ।
भविष्यति तु यावद्वै तावज्जीवनमस्तु वः ॥९५॥

सूक्ष्मे देहे गते चापि बदर्यां यात्रया पुनः ।
स्वदेहे स्थूलसंज्ञे त्वागत्य वासं विधास्यथ ॥९६॥
बदरीयात्रिकाः सर्वे पादपा धाममोक्षणम् ।
प्रयास्यथो वदाम्येषः श्वेतनारायणः स्वयम् ॥९७॥
एवं प्राप्य हरेरनुग्रहं ते पादपास्ततः ।
बदरीयात्रिणो भूत्वा पूजयित्वा नरायणीम् ॥९८॥
प्रज्वाल्य निजपापानि बद्रीप्रतापतो द्रुमाः ।
ययुर्वै मोक्षणं त्वेकजन्मना यान्ति वै तथा ॥९९॥
यास्यन्त्येव पदं दिव्यं बदरीशीप्रसेवनात् ।
बदरीनाथयोगेन प्लक्षोक्ता मोक्षदायिनी ॥१००॥
सर्वमोक्षकरी दिव्या साक्षान्नारायणाश्रयात् ।
जयते बदरीदेवी माणिक्या बाल्ययोगिनी ॥१०१॥
सा पप्रच्छ कथा दिव्यास्तिष्येऽपि मोक्षकारिणीः ।
नरनारायणं कान्तं बदर्याश्रम उत्तमे ॥१०२॥
या या बद्रयाः कथाः पृष्टा नरनारायणं प्रति ।
उत्तरिता नरनारायणेन स्वामिना च याः ॥१०३॥
तास्तादिव्यास्तिष्यखण्डे विद्यन्ते मोक्षदायिकाः ।
अनादिश्रीकृष्णनारायणश्रीवल्लभाश्रिताः ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीनरनारायणस्य श्रीमाणिक्यात्मकबदर्याः स्वरूपवर्तनं माहात्म्यकथनं कथाप्रस्तावश्चेत्यादिनिरूपणनामा प्रथमोऽध्यायः ॥ १ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीरमे देवि तव भक्तकथानकम् ।
यथा त्वं बदरीभावं प्राप्ता भक्तिवशानुगा ॥ १ ॥
बदरो नाम राजर्षिर्हिमभूमौ पुराऽभवत् ।
महाभागवतो भक्तो वैष्णवोत्तम ऊर्ध्वगः ॥ २ ॥
पृथिव्यर्धं शशासाऽसौ दिव्यसामर्थ्यसाधनैः ।
विमानान्यभवन् यस्य पारे लक्षं सुखानि च ॥ ३ ॥
सौवर्णानि कल्पवृक्षोद्यानोपशोभितानि हि ।
दिव्यकन्यानिवासानि स्मृद्धान्युच्चावचानि च ॥ ४ ॥
एकैकं सूर्यवद्भाति चन्द्रवत्तेजसां चयैः ।
यत्प्रभाभिर्निशा पृथ्व्यां लीनेव वर्तते तदा ॥ ५ ॥
भ्रान्तिर्नक्षत्रताराणां जायतेऽल्पे विमानके ।
चन्द्रज्योत्स्ना तु मिलिता तदा दुग्धायतेऽम्बरे ॥ ६ ॥
इन्द्रधनुःप्रकाशाश्चोत्प्रसरन्ति घनेष्वपि ।
विमानानां किरणानां बदरस्य महात्मनः ॥ ७ ॥
एकं सत्याभिधं दिव्यं विमानं सत्यसंचरम् ।
ब्रह्मसभायां नृपतिस्तेन याति हि योगिराट् ॥ ८ ॥
द्वितीयं चार्यमसंज्ञं पितृलोकादिसञ्चरम् ।
तृतीयं त्रिदिवं नाम चैन्द्रपदं चतुर्थकम् ॥ ९ ॥
पञ्चमं भास्करं नाम षष्ठं कौमुदकं तथा ।
सप्तमं ध्रुवसंज्ञं चाऽष्टमं कैलासनामकम् ॥१०॥
धर्मसंज्ञं नवमं च मेरुसंज्ञं ततोऽधिकम् ।
श्वेतवाहं क्षीरवाहं तलाख्यान्यपराणि च ॥११॥
लोकालोकाभिधं चापि मनोजवानि तानि वै ।
यथाभिधानगुणकान्यतिदिगन्तगानि च ॥१२॥
सर्वभोग्यर्द्धिपूर्णानि यथा धिष्ण्यानि तानि ह ।
तेषु सर्वेषु रत्नानां सुवर्णानां च मूर्तयः ॥१३॥
अनादिश्रीकृष्णनारायणस्य प्रतिमाः शुभाः ।
श्रीमाणिक्यामहालक्ष्मीयुता युगलविग्रहाः ॥१४॥
गजासने स्थापिताः पूजिताः श्रीबदरेण ह ।
सर्वशृंगारशोभाढ्याः सर्वगन्धरसार्पिताः ॥१५॥
देवदूताः पार्षदाश्च भूसुराः साधवोऽमलाः ।
वैमानिकाः प्रविद्यन्ते तेषु भागवतोत्तमाः ॥१६॥
महाभागवतीसत्यः साध्व्यः शीलपरायणाः ।
चन्द्रानन्दाश्चन्द्रकान्त्याननाः स्वर्णप्रभान्विताः ॥१७॥
महाभक्तानिकास्तेषु विद्यन्ते बदरस्य ह ।
कीर्तनं सततं तेषु जायते बदरीश्वरि ! ॥१८॥
यत्प्रसंगेन देवाद्या यान्ति ब्रह्म सनातनम् ।
नैतादृशोऽभवद् भक्तो येन जगत् प्रपूरितम् ॥१९॥
हरिकीर्तनभक्त्याढ्यमहाघोषैः समस्तकम् ।
स्थले स्थलेऽस्य नृपतेर्जयघोषः प्रवर्तते ॥२०॥
बदरस्य विमानानि यद्दिशं यन्ति तद्दिशि ।
नमन्ति देवमुनयो भक्त्या नृत्यन्ति तत्स्त्रियः ॥२१॥
पूजयन्ति विमाने श्रीकृष्णनारायणच्छविम् ।
नीराजयन्ति मुदिता दत्वोपदाः प्रयान्ति च ॥२२॥
बदरस्य महाराज्ये ग्रामे खेटे पुरादिषु ।
नगरे पत्तने राजधान्यां घोषेऽपि सर्वथा ॥२३॥
साधवो यतयः साध्व्यः पूज्यन्तेऽन्नाम्बरादिभिः ।
विप्रा दक्षिणया चापि निराश्रयाः शुभाश्रयैः ॥२४॥
अनाथाद्या यथापेक्षैर्न्यायः स्वेष्टसमर्पणैः ।
ग्रामे ग्रामे ब्रह्मयज्ञा जायन्ते बदरस्य वै ॥२५॥
अन्नसत्राणि भूभागे बदरस्य तु पञ्चकम् ।
प्रपादानानि सर्वत्र चासन् कल्पलतास्तथा ॥२६॥

यात्रालवो लतामाप्य भुंजते भिक्षया फलम् ।
तृप्तिदं च रसं मिष्टं पिबन्ति च भजन्ति माम् ॥२७॥
वैष्णवानां मण्डलानि ह्यासन् वै प्रतिखर्वटम् ।
प्रातर्मध्याह्नके सायं कीर्तयन्ति भजन्ति माम् ॥२८॥
देवकथाकरा भूमावागत्य च कथां मम ।
वाचयित्वा संहितां च बोधयन्ति भजन्ति माम् ॥२९॥
उत्सवा उत्तमाः श्रेष्ठा जायन्ते च प्रजासु वै ।
ऊर्जाऽसिताष्टमीप्रभृत्यहस्सु द्वादशीष्वपि ॥३०॥
जयन्तीषु समस्तासु सत्संगाः संभवन्ति च ।
व्रतोत्सवानां सम्मानं पालनं पूजनादिकम् ॥३१॥
उद्यापनं चाऽऽदरश्च जायन्तेऽस्य प्रजास्वपि ।
नित्यं गवां तु बह्वीनां दानं नृपस्य जायते ॥३२॥
शेषो नवः कृतः स्वर्णमयो येन तु भूभुजा ।
प्रतिष्ठाप्य च तं शेषं नागं नीत्वा विमानके ॥३३॥
ययौ पातालके प्राह पूर्वशेषं निवर्तय ।
मम शेषो बलिष्ठोऽयं धारयिष्यति के भुवम् ॥३४॥
मूलशेषः परीक्षार्थं मुमोचाऽधो हि गोलकम् ।
सहसा स्वर्णनागस्तं भूगोलं के न्यधाद् द्रुतम् ॥३५॥
मूलशेषस्य मानं वै निर्मूलं संव्यजायत ।
गर्वो नष्टोऽथ नेमे तं बदरं स्वर्णशेषिणम् ॥३६॥
प्रार्थयामास मानार्थे धारणं निजमस्तके ।
अन्यथा भूभृता चाऽवमानितस्य यशोलयः ॥३७॥
अप्रतिष्ठा भवेल्लोके ययाचे गोलकं पुनः ।
धर्तुं निजफणायां वै तदा तु बदरो ददौ ॥३८॥
पूर्वशेषाय पृथिवीं स्वर्णशेषं निजालयम् ।
आनिनाय ततः स्वर्णशेषो विज्ञानवान् यतिः ॥३९॥
पतञ्जलिर्महायोगी विद्याधरो व्यजायत ।
सर्वयोगकलाभिश्च जगदुद्धारमाचरत् ॥४०॥
एवंविधस्य भक्तस्य बदरस्य गृहे गृहे ।
कृष्णधून्योऽभवन् बद्रि भक्तिश्चासीद् गृहे गृहे ॥४१॥
श्रीमाणिक्या सेवितस्य कृष्णनारायणस्य वै ।
मम मूलस्वरूपस्याऽऽश्रितं सर्वं जगद्भयभृत् ॥४२॥
शृणु बद्रीप्रभे देवि तदा राज्यं तु ऋद्धिमत् ।
स्वर्गोत्तरं भूतलं तु वीक्ष्याऽन्यभ्यर्धपालकाः ॥४३॥
पस्पर्धुर्बदरं भक्तं राजानं समृद्धिलालसाः ।
बहवो बदरं प्राप्याऽयुध्यन् पराजयं ह्ययुः ॥४४॥
भक्तो भक्त्या हि जीयेत नान्ययुद्धैः कदाचन ।
यद्गृहे भगवान् साक्षाद् वसति दुर्जयः कुतः ॥४५॥
राज्ञः शरैर्हि बहवो हता भूपा विरोधिनः ।
सर्वे ते निहता वार्धौ हिमवार्धिसमाह्वये ॥४६॥
किंपुरुषप्रदेशानां दक्षिणे मध्यसंस्थिते ।
द्विसाहस्रयोजनात्मविस्तृते मिष्टवारिणि ॥४७॥
मानसाख्यः समुद्रोऽयं मिष्टोदो ह्यभवत्तदा ।
सदा शीतलजलधिः सर्वरत्नसमन्वितः ॥४८॥
यत्रास्ते साम्प्रतं बद्रि हिमालयोऽद्रिराडिह ।
शृणु बद्रीप्रभे देवि जेतुं तु बदरं नृपम् ॥४९॥
आययौ त्वेकदा व्योम्ना हेमाऽनलोऽसुरो महान् ।
अपरं यत् पृथिव्यर्धं तस्मादर्बुदसैन्यवान् ॥५०॥
व्योममार्गेण सहसाऽयुतैर्विमानकैः सह ।
खण्डे किंपुरुषे युद्धं बदरेण समाचरत् ॥५१॥
बदरस्य विमानानि ससैन्यानि तदाम्बरे ।
अभिपेतुश्चासुराणां सैन्येषु दिव्यशक्तयः ॥५२॥
सहस्रशो विमानानि नष्टान्यासुरकाणि वै ।
सैन्यानि मिष्टजलधौ भूत्वा यादांसि चाविशन् ॥५३॥
हेमानलोऽसुरवर्यो युयुधे बदरेण ह ।
मिथः सैन्यानि युयुधुः प्राणान्तनिश्चयानि वै ॥५४॥
दिव्यास्त्रवर्षणैर्दिव्यशरैर्दिव्यैश्च हेतिभिः ।
विद्युत्प्रवाहणैश्चापि पाशैर्वारुणजैस्तथा ॥५५॥
वज्रैश्च विविधैर्दण्डैः कालचक्रैर्विशालकैः ।
मन्त्रैस्तन्त्रैर्महायन्त्रैर्मायिकैरैन्द्रजालिकैः ॥५६॥
वाय्वग्निनागगवयैर्गरुत्मतैश्च वृश्चिकैः ।
पर्वतैश्चापि वृक्षैश्च युयुधिरे तु कृत्रिमैः ॥५७॥
हिमशैलैश्च विविधैर्महगोलैरनुत्तमैः ।
गदाभिश्चाण्डभेत्त्रीभिर्जघ्नुरन्योन्यमुद्रुषः ॥५८॥
आसुराणां हि सैन्यानि मारयित्वा मुहुर्मुहुः ।
मिष्टाब्धौ ते प्रविशन्ति स्वस्थास्तत्र भवन्ति च ॥५९॥
पुनर्बलं नीरुग्णत्वं प्राप्य चायान्ति संगरे ।
बदरेण हतास्ते च पुनर्विशन्ति सागरे ॥६०॥
अथाऽयं बदरो राजा भक्तराड् वीक्ष्य जीवितान् ।
समुद्रस्थानासुरांश्च चिन्तयामास चान्तरे ॥६१॥
कथमेषां समुद्रे वै विनाशं प्रतिपादये ।
पुनर्नैव यथा स्वस्था निर्गच्छेयुर्बहिर्युधि ॥६२॥
जलं सर्वं त्वब्धिरूपं हिमशैलात्मकं भवेत् ।
अन्तःस्थिता आसुरास्ते स्युर्मृताश्च शिलात्मकाः ॥६३॥
सञ्चिन्त्यैवं बदरोऽयं सस्मार चन्द्रदेवताम् ।
तूर्णं चोपस्थिता तत्र देवकार्यसहायिनी ॥६४॥

आसुराणां सुरघ्नानां विनाशार्थे मतिं दधे।
आगत्य सहसोवाच बदराय महात्मने ॥६५॥
वद राजन् तव कार्यं सुरकार्यं तथा सुखम्।
तूर्णं करोमि साध्यं ते दुःसाध्यमपि सर्वथा ॥६६॥
बदरः शशिनः पूजां स्वागतं वन्दनं स्तुतिम्।
चकाराऽऽसनवर्यं च ददौ नेमे पुनः पुनः ॥६७॥
कृपालो शान्तिकृत् स्वर्गसुधाकर महाप्रभो।
भक्तानुग्रहधातस्त्वं जयसे चामृतप्रद ॥६८॥
जीवनं सर्वलोकानां कलासु तव तिष्ठति।
माधुर्यं चौषधीनां च तव योगात्प्रवर्तते ॥६९॥
वृद्धिः पुष्टिस्तव योगाज्जायते दाहरोधनम्।
त्वदाधाराश्चौषधयस्तदाधाराश्च देहिनः ॥७०॥
चन्द्र कौमुदिकानाथ निशेश प्रियसंगकृत्।
शशिन् नक्षत्रनाथ त्वं जयसे वै तमोनुद ॥७१॥
मृगांक दुग्धवर्ण त्वं हिमांशो जयसे सदा।
शीतलाब्वे सुधामूर्ते भक्तकार्यं दधात्विह ॥७२॥
असुरा मुहुरागत्य समर्दयन्ति मानवान्।
देवान् पितॄन्मुनीन् भक्तान् क्लेशयन्ति मुहुर्मुहुः ॥७३॥
मद्बाणैरर्दिताश्चैते प्रविष्टा हिमसागरे।
ते यथा स्युर्मर्दिता वै हिमपाषाणपर्वतैः ॥७४॥
पुनर्न ते बहिस्त्वत्राऽऽययुस्तथा विधेहि यत्।
त्वमोषधिर्हि लोकानां चासुराणां निबर्हणम् ॥७५॥
शीतं शस्त्रं मतोऽस्त्येव शीघ्रं तदोषधं कुरु।
इत्येवमर्थितो रात्रिनाथः श्रीबदरीप्रभे ॥७६॥
ददौ कण्ठात् समुत्तार्य चन्द्रकान्तमणिं शुभम्।
बदराय स्वभक्ताय देवकार्यकराय च ॥७७॥
प्राह मणिं नृप चात्र शीताब्धौ सन्निवेशय।
शीताब्धिः सहसा शीतशिलात्मको महान् गिरिः ॥७८॥
अत्रैव शीतलभूमिर्भविष्यति न संशयः।
त्वं विमाने वस राजन्नम्बरे न तु भूतले ॥७९॥
शीतेनाऽभिभवं नैव व्रजेथास्त्वत्तथा कुरु।
एषोऽहं संप्रयाम्येव शीघ्रं मणिं जले क्षिप ॥८०॥
एवमुक्तस्तु बदरो द्रुतं विमानमम्बरे।
कृत्वा चन्द्रमसं नत्वा चिक्षेप मणिमब्धिषु ॥८१॥
तावज्जलानि सर्वाणि शीताग्निपीडितानि वै।
पिण्डितान्यभवँस्तत्र शीताब्धौ शीतलोपलाः ॥८२॥
शीताब्धिः शीतभूभावं हिमभूतलतां गतः।
जलान्यूर्ध्वं चोष्मणा चोत्क्षिप्यन्ते परितस्तदा ॥८३॥
शिखराणि श्वेतहैमशिलात्मकानि तानि च।
सञ्जातान्येव सहसा चाम्बरं शीततां गतम् ॥८४॥
हिमानां करकावर्षाः सहसा पेतुरम्बरात्।
ताभिश्च वर्धमानानि शृंगाणि पार्वतानि वै ॥८५॥
महःस्पर्शीनि जातानि वर्धमानानि तानि वै।
एवं स पर्वतो जातो युगसाहस्रयोजनः ॥८६॥
चन्द्रकान्तेन सम्पन्नो हिमवद्धिमवर्षणः।
हिमांशुमणिना भूमौ हिमाद्रिर्बदरीप्रभे ॥८७॥
आसुरा युद्धकर्तारो जलोपलासु तत्तले।
मर्दिताश्च निरुद्धाश्चोपलाभावं गता मृताः ॥८८॥
उपद्रवाः प्रशान्ताश्च महतः परिवर्तनात्।
अथ लोकाश्च ऋषयो मुनयो देवतास्तथा ॥८९॥
श्रुत्वा हिमालयं भूमिं वीक्षितुं त्वाययुर्मुदा।
राक्षसा असुरा दैत्या दानवा मानवाः खगाः ॥९०॥
पितरो लोकपालाश्च सिद्धाश्चारणनर्तकाः।
गान्धर्वाः किन्नराः सूता मागधा बन्दिनस्तथा ॥९१॥
विद्याधरा अप्सरसः साध्व्यः शंकरयोगिनः।
गणाश्च गणदेव्यश्च मातरो वसवस्तथा ॥९२॥
मेरुस्थाः परलोकस्था दिव्यदेहाः समाययुः।
मुमुदुर्बहुधा हैमं शीतं चान्द्रं विलोक्यते ॥९३॥
वर्धयामासुरत्यर्थं भूपतिं बदरं तथा।
प्रशशंसुश्च ते सर्वे दिक्पाला मानमादधुः ॥९४॥
ब्रह्मविष्णुमहेशाश्च प्रसन्नास्त्वभवन् बहु।
बदरस्याऽभवद् राज्यं सर्वं हिमालयात्मकम् ॥९५॥
नवं त्वरण्यकं तस्य परितो नाऽभवत्तदा।
देवाद्या वासयोग्यं तं मेरुतुल्यं तु भूभृतम् ॥९६॥
वीक्ष्य स्पृहां प्रचक्रुश्चार्थयामासुर्नृपं मुहुः।
राजा वासं ददौ देवकोटिभ्यस्तु हिमालये ॥९७॥
देवजातयः सर्वे ये ते वासान् स्वकुलोचितान्।
चक्रुः शृंगेषु हैमेषु देवालयो बभूव सः ॥९८॥
स्वर्गं वै चापरं भूमौ हिमालयो बभूव ह।
कल्पद्रुमाः कल्पलतास्तथा कल्पतृणान्यपि ॥९९॥
हिमालयेऽभितो देवैः रोपितानि वनानि च।
भूसन्धौ परितः शतयोजनानां तु वर्तुले ॥१००॥
दिव्यौषधीनां सर्वासां वनानि रोपितानि वै।
उद्यानानि विचित्राणि फलपत्ररसादिभिः ॥१०१॥
स्पृद्धानि स्वर्गलोकाद् वै स्वस्वलोकात्तथाऽपरैः।
आहृत्याऽऽहृत्य परितो निहितानि शुभानि च ॥१०२॥

सप्तर्षयो न्यवसँश्च शंकरोऽप्यवसत्ततः ।
ब्रह्मा विष्णुस्तथा देव्यो न्यवसन् चाप्सरोगणाः ॥१०३॥
गान्धर्वाश्चारणाः किंपुमांसश्च किन्नराः सुराः ।
अन्येऽपि बहवो देवा न्यवसन् वै हिमालये ॥१०४॥
एवं हिमगिरिर्जातो भूमौ चन्द्रगिरिर्महान् ।
भूतलं स्वर्गमिश्रं च जातं दिव्यांशशोभितम् ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने महाभागवतस्य बदराख्यराजर्षेराख्यानं, हेमानलासुरयुद्धं, बदरभयेन भूमध्यशीतवार्धौ त्वसुराणां प्रवेशनं, बदरस्तुत्या चन्द्रप्रदत्तचन्द्रकान्तमणेः शीतवार्धौ निक्षेपेण शीतोपलात्मक-महाहिमाद्रिरूपपरिवर्तनं, चतुर्दशलोकवासिनां दिव्य-हिमाद्रौ निवासाकांक्षया बदरप्रदत्तवसतयः स्वर्गी-यौषधीनां देवाद्यैरोपितानि वनोद्याना-रण्यानि चेत्यादिनिरूपणनामा द्वितीयोऽध्यायः ॥ २ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीरमे पार्वतिके यज्जातमुल्बणम् ।
विद्रावकं हि देवानां रक्षणं च यथा पुनः ॥ १ ॥
सुस्थिरेषु तु देवेषु विश्वस्ते तु हिमाचले ।
यत्र हेमानलो हैमशिलातलेऽर्दितोऽभवत् ॥ २ ॥
शिखरं तत् सहसैवाऽम्बरे मूलात् परापतत् ।
भूकम्पश्चापि शृंगेषु चान्येषु संव्यजायत ॥ ३ ॥
शब्दो भयंकरश्चापि प्रलयाग्नेरिवाऽभवत् ।
मुहुर्भूधूननं जातं शिलावर्षा भुवोऽभवत् ॥ ४ ॥
समुत्पतन्ति तलतश्चोपला हैमभासुराः ।
हेमानलेन तलतो नोदिताः क्षेपितास्तथा ॥ ५ ॥
हिमे शिलातलाद्धेमासुरो बलात् पुनस्तदा ।
उत्तस्थौ योगबलतो महाश्चर्यमिदं ह्यभूत् ॥ ६ ॥
देवा भयंगताश्चान्ये ब्रह्मविष्णुशिवादयः ।
सुराद्या देहिनः सर्वे वीक्ष्योपद्रवमुल्बणम् ॥ ७ ॥
सस्मरुः श्रीभगवन्तं श्रीकृष्णवल्लभं प्रभुम् ।
तथा बदरं राजानं महाभागवतं तदा ॥ ८ ॥
हेमानलोऽपि गदया योद्धुं तदाऽम्बरेऽभवत् ।
पर्वतप्रायदेहः स हिमोपलेव भासुरः ॥ ९ ॥
यं यं देवं गिरौ तत्र व्यलोकयद् व्यपोथयत् ।
हाहाकारो महान् जातस्तावद् विमानकः प्रभुः ॥१०॥
अनादिश्रीकृष्णनारायणश्रीबदरीश्वरः ।
विमानेनाऽऽगमत्तत्र यत्र हेमाऽनलोऽसुरः ॥११॥
वीक्ष्य दिव्यविमानं तद् योद्धुमुपाद्रवद्धरिम् ।
भगवान् गदया तूर्णं सन्नद्धश्च तदाऽभवत् ॥१२॥
श्रियं रमामवस्थाप्य विमाने बहिराययौ ।
बदरोऽपि महाराजस्तूर्णं तत्राऽप्युपाययौ ॥१३॥
वीक्ष्य हेमानलं महाऽसुरं चोज्जीवितं पुनः ।
महाश्चर्यं प्राप राजा तेनाऽयुद्ध्यद् गदाकरः ॥१४॥
कृष्णेन बदरेणापि ताडितो गदयाऽसुरः ।
जातक्लमोऽभवद् भग्नकटिः पपात भूतले ॥१५॥
बदरस्तं समुत्तोल्य जीवन्तं तत्र गर्तके ।
यत्राऽभवत् स तत्रैव चिक्षेप हिमगर्तके ॥१६॥
हिमशैलं पुनस्तत्र स्थापयामास माधवः ।
बदरश्च तदा कृष्णनारायणं परं प्रभुम् ॥१७॥
प्रार्थयामास बहुधा ह्यनुत्थाय वै पुनः ।
भगवानाह वै राजन् शृणु हैमानलीकथाम् ॥१८॥
तपस्तेपे पुराकल्पे प्रसादाय स चक्रिणः ।
हस्ते कृत्वा हरेर्मूर्तिं वर्षसहस्रकं तदा ॥१९॥
ततो वर्षसहस्रं वै त्वेकपादेन चोत्थितः ।
ततो वर्षसहस्रं वै वटशाखावलम्बितः ॥२०॥
अधोमुखस्तपस्तेपे हस्ते पश्यन् हरिं हि माम् ।
ततो वर्षसहस्रं स प्रज्वाल्याऽनलमूर्धनि ॥२१॥
लम्बमानो हि शाखायां तपस्तेपेऽतिदारुणम् ।
अनाहारस्ततो वाय्वाहारो वर्षसहस्रकम् ॥२२॥
वटशाखाजटामध्ये प्रोतदेहोऽभवद्धि सः ।
शुष्कमांसाऽस्थिकुणपः शाखाजटान्तरेऽभवत् ॥२३॥
जटारूपोऽभवत्तत्र पिपीलिकाधिरोधितः ।
मृत्तिकावल्मिकैराच्छादितश्छन्नतरोऽभवत् ॥२४॥
हस्ततले मम मूर्तिं चाऽत्यजन् वल्मिकोऽभवत् ।
दशवर्षसहस्रान्ते चाहं प्रसन्नतां गतः ॥२५॥
तस्य करे स्थितश्चाऽहं चैतन्यरसमाददन् ।
वटदुग्धं ददँश्चाप्याप्लावयं तस्य वर्ष्म तत् ॥२६॥
वर्षावेगेन च धूलीः सर्वा धूताऽभवत्ततः ।
अधोमुखः प्राप्तरसोऽसुरो हेमानलोऽभवत् ॥२७॥
शनैः सम्प्राप्तचैतन्यश्चोन्निद्र इव चक्षुषा ।
उद्घाटितेन परितो व्यलोकयत्तदा पुरः ॥२८॥
अदर्शयं मम रूपं चतुर्भुजं श्रियाऽन्वितम् ।
असुरः प्राञ्जलिर्भूत्वा नेमे मां स जटान्तरे ॥२९॥

प्राप्तमद्विषयज्ञानः प्रसन्नमानसोऽभवत् ।
जिज्ञासमान इव तु विह्वलोऽभूत्तु मां प्रति ॥३०॥
मया सम्बोधितश्चायं वरदानाय वै तथा ।
तपःसमापनार्थं च तदा वव्रे स विह्वलः ॥३१॥
यदि त्वं वरदानाय कृष्ण प्रवर्तसे त्विह ।
यदि सत्यव्रतस्त्वं वै यदि योग्योऽस्मि पात्रकम् ॥३२॥
तदाऽहं ते श्रियाः पादौ वीक्ष्य मोहं गतोऽस्म्यतः ।
श्रियाः पादौ कोमलौ भासुरौ सर्वशुभाश्रयौ ॥३३॥
सुस्पृश्यौ दर्शनीयौ च देहि मे चाऽव्ययौ यथा ।
मम देहं स्पृशमानौ भवेतां चरणौ श्रियाः ॥३४॥
राज्यं तथा परं श्रेष्ठं देहि वैभवसंभृतम् ।
सामर्थ्यं च तथा देहि भूतैः पराभवो न मे ॥३५॥
श्रियोऽधीनो भवाम्येव नान्यस्य कस्यचित् क्वचित् ।
यदि देहि वरं तं वै तदा त्यक्ष्यामि वै तपः ॥३६॥
अन्यथा त्वमसद्वक्ता विश्वास्यो नासि माधव ।
यथागतस्तथा याहि तपश्चरामि वै चिरम् ॥३७॥
इत्येवमर्थितः कृष्णनारायणः परेश्वरः ।
सर्वेषां शृण्वतां बद्रि तथाऽस्त्वेवं जगाद ह ॥३८॥
प्राप्ते कर्मविपाके ते सर्वं सत्यं भविष्यति ।
इत्युक्त्वा भगवान् कृष्णस्तिरोभवच्छ्रियाऽन्वितः ॥३९॥
हेमाऽनलोऽयं सहसा तपस्त्यक्त्वा गृहं ययौ ।
मेरौ गत्वा स गदया युद्धार्थं च विनिर्ययौ ॥४०॥
पृथिव्यर्धं कृतं तेन कल्पेऽत्र प्राप्तपोबलात् ।
सम्राड्राजा वर्ततेऽयं तदा विष्णुरिवापरः ॥४१॥
स चायं बदरस्यापि राज्यं जेतुमुपाययौ ।
श्रीतरेण न केनापि भूतेन भौतिकेन वा ॥४२॥
पराभवं त्वासुरः स समवाप्स्यति वै क्वचित् ।
एवं लब्धवरश्चाऽयं हिमशैलशिलोपमः ॥४३॥
उत्क्षिप्यापि भुवो गर्भादुत्तस्थौ प्राप्तपोबलात् ।
सोऽयं क्षिप्तो बदरेण त्वया गर्तेऽत्र वै पुनः ॥४४॥
किन्तु यावच्छ्रियाः पादौ तद्देहे न पतिष्यतः ।
तावन्नैव पराभाव्यश्चाऽसुरोऽयं भविष्यति ॥४५॥
श्रियाः पद्भ्यां निश्चलोऽयं भूगर्भे सन्निवत्स्यति ।
अव्ययौ चरणौ लब्ध्वा निश्चलात्मा भविष्यति ॥४६॥
तस्माद् बदर माणिक्यां श्रियं मम प्रियां त्विह ।
आराधय निवासार्थं देवकार्यार्थमित्यपि ॥४७॥
मया दत्तवरस्यापि याथार्थ्याय जयाय च ।
अन्यथा निष्फलः सर्वो यत्नस्तेऽत्र भविष्यति ॥४८॥

इत्युक्तो बदरो राजा तुष्टाव परमेश्वरीम् ।
माणिक्यां श्रीं महामुक्तानिकां श्रीबालयोगिनीम् ॥४९॥
'नमश्चराचरस्थायै चमत्कारमयीश्रियै ।
नारायण्यै ह्यभेदायै बालकृष्णांगयोषिते ॥५०॥
नमः श्रीपुरुषोत्तम्यै हरिण्यै ब्रह्मयोषिते ।
नमोऽनादिकृष्णनारायणांगनायै ते नमः ॥५१॥
नमो माणिक्यवर्णायै धारिण्यै श्रीहरेर्नमः ।
नमः श्रीकृष्णकान्तायै पारब्राह्मयै नमोनमः ॥५२॥
भक्तकार्यातिसम्पादयित्र्यै मात्रे नमोनमः ।
प्रसन्ना भव देवेशि हेमानलप्रशान्तये ॥५३॥
महासुरोऽयं श्रीकान्तामृते मृधो न जायते ।
त्वं मातस्तन्मर्दनं वै कुरु देवार्थसाधिके ॥५४॥
नमस्तस्यै सर्वहन्त्र्यै रक्षयित्र्यै च ते नमः ।
महानारायणपत्न्यै माणिक्यायै च ते नमः' ॥५५॥
एवमभ्यर्थ्य तां शक्तिं हृदा पूजां चकार सः ।
अर्पयामास पुष्पाणि माणिक्याचरणे तदा ॥५६॥
तावत् सा परमा लक्ष्मीश्चाक्षरब्रह्मवासिनी ।
पुरो बभूव सहसा प्रसन्नास्या हि सुप्रभा ॥५७॥
अनादिश्रीकृष्णनारायणरूपानुरूपिणी ।
युवती तेजसा व्याप्ता चक्रपद्मादिधारिणी ॥५८॥
अंकुशं शूलमुत्कृष्टं दधाना करयोस्तथा ।
कृष्णं कान्तं प्रियं प्राणं वीक्षमाणा पुनः पुनः ॥५९॥
आशां वोढुं सत्वरा सा तत्परा बलशालिनी ।
तन्वी प्रपूर्णपुष्टास्या नवयौवनशालिनी ॥६०॥
स्वर्णवर्णा कनकाभा पद्मायतसुलोचना ।
शुकनासा कुन्ददन्ता बिम्बौष्ठी शीतलस्पृशा ॥६१॥
विद्युद्भास्वरवस्त्राढ्या कौस्तुभेन विराजिता ।
कर्णनासाभालबाहुप्रकोष्ठपादभूषणा ॥६२॥
कट्यां रशनया युक्ता शृंगारकज्जलान्विता ।
कबरीधम्मिलशोभा सिन्दूरचन्द्रकान्विता ॥६३॥
सुस्तनी मुनितम्बा च सुमध्या च सुगन्धिनी ।
तेजःपरिधिसंव्याप्ता चन्द्राभनखशोभिता ॥६४॥
अलक्तकातिसौन्दर्या स्वर्णरोमावलिश्रिता ।
प्रेमरसमहापूर्णा कृष्णनारायणी प्रिया ॥६५॥
सुगन्धिपुष्पहारालिव्याप्तवक्षःस्थलोत्तमा ।
स्थलपद्मनिभसक्थिद्वयशोभामनोहरा ॥६६॥
कृष्णनारायणं कान्तं त्यक्तुं नेच्छावती सदा ।
गृहीतश्रीकृष्णकरा नित्ययुक्ता महासती ॥६७॥

भगवत्प्रेमपात्रं सा श्रीकृष्णांगनिवासिनी।
शीतशैलसमा देहे तापसीव परेश्वरी ॥६८॥
सर्वैश्वर्यादिसम्पन्ना वात्सल्यगुणसागरा।
लावण्याऽऽनन्त्यसंजुष्टा नैकसखीप्रवन्दिता ॥६९॥
भगवन्मुखलग्नाक्षी पूर्णानन्दातिमोदिनी।
हसमाना बदरं सा जगाद पुरुषोत्तमी ॥७०॥
वद राजँस्तव श्रेयो विधास्ये सहसा त्विह।
सुरकार्यं कृष्णकार्यं विधास्ये द्रुतमत्र च ॥७१॥
श्रुत्वा राजाऽसुरचूर्णनार्थं व्यजिज्ञपच्छ्रियम्।
नारायणेच्छया सापि पद्भ्यां हन्तुमुपाद्रवत् ॥७२॥
तावद् दैत्यवरो गर्त्ते हिमोपलात्मकोऽभवत्।
नारायणस्तदा लक्ष्मीं माणिक्यां प्राह सत्वरम् ॥७३॥
नारायणि द्रुतं त्वत्र पद्भ्यां तिष्ठाऽसुरोपरि।
तव पद्भ्यां हतः स्पृष्टोऽसुरः पुनर्न वै बहिः ॥७४॥
उद्गमिष्यति दुष्टात्मा वरदानबलात्तथा।
कुरु कार्यं बदरस्य देवानां च हितावहम् ॥७५॥
तदा तु खिन्नचित्ता श्रीमाणिक्या त्ववदत् प्रभुम्।
कथमेकाकिनी कृष्णमृते त्वत्र वसामि वै ॥७६॥
अनादिश्रीकृष्णनारायणस्त्वं मे पतिः सदा।
पत्नी चाहं तव कृष्ण पातिव्रत्यपरायणा ॥७७॥
पतिं विना क्षणं स्थातुं नोत्सहे विजने हिमे।
यथेष्टं कुरु कृष्ण त्वं शाधि धर्म्यं व्रतं मम ॥७८॥
श्रुत्वा विचारमकरोद् भगवान् भूतभावनः।
माणिक्ये त्वं भव बद्री बहुपादा द्रुमात्मिका ॥७९॥
अंकुशं शूलमेवापि कण्टकौ ते महायुधे।
भवतां पत्रसहिते सर्वासुरविनाशके ॥८०॥
सदा त्वं तापसी वार्क्षी बदरी भव शोभना।
पादैर्हेमानलं स्पृष्ट्वा भूगर्भे तं प्रपेषय ॥८१॥
निश्चला शाश्वती देवी बद्रीदेवी सदा भव।
बदरेण स्तुता राज्ञा बदरेणाभिवाञ्छिता ॥८२॥
बदरेण तथाऽऽकृष्टा त्वायाताऽसि यतस्त्विह।
बदरीतिसदानाम्ना सफला त्वं भविष्यति ॥८३॥
बद्रिकाश्रम एवाऽयं दिव्यावासो भविष्यति।
अहं नित्यं बदर्यास्तं छायायां तापसोत्तमः ॥८४॥
धर्मपुत्रो नरनारायणात्मा संभवामि च।
जटी शौली ब्रह्मचारी त्वन्मूलावासशोभनः ॥८५॥
भवाम्यत्र जगत्कल्याणार्थे नरनारायणः।
यावच्चन्द्रस्तथासूर्यो यावत् स्थास्यति मेदिनी ॥८६॥
तावत्तापसवेषोऽहं तापसी त्वं तु बद्रिके।
निवत्स्यामोऽत्र धवले शीतले हिमकाश्रमे ॥८७॥
हेमानलोऽपि भूगर्भे तव पादतले सदा।
संपिष्टस्तव भक्तो वै सुमुक्षुः संभविष्यति ॥८८॥
श्रेयो जगतां परमं तथा स्यात्तत्तथा कुरु।
इत्युक्त्वा माणिकीदेवी बभूव बद्रिका द्रुतम् ॥८९॥
हेमानलासुरमूर्ध्नि कृत्वोपलाप्रवर्षणम्।
पादाँस्तत्र निधायैव माणिक्या सा स्थिराऽभवत् ॥९०॥
बद्रीरमा महादिव्या वार्क्षी देवी तु शाश्वती।
तापसी तापसेनापि नारायणेन संयुता ॥९१॥
न्यवसत्तत्र सहसा धर्मपुत्रेण चक्रिणा।
उपद्रवाः प्रशान्ताश्चाऽसुरभीतिर्लयं गता ॥९२॥
देवाद्या निश्चलास्त्वासन् पुपूजुर्बदरीश्वरीम्।
नरनारायणं कृष्णनारायणं समर्चयन् ॥९३॥
बद्रीनाथं बद्रिकां च बदरं च नृपं तथा।
बद्रिकाश्रममेवैनं स्थलं प्राहुः सुरादयः ॥९४॥
दिव्यं च पावनं बद्रीश्वरि त्वद्वासशोभनम्।
तत आरभ्य देवा वै मासषट्कं पुनः पुनः ॥९५॥
तीर्थं कुर्वन्ति हिमवच्छिखरे बद्रिकाश्रमे।
मासद्वयं तु पितरश्चतुर्मासाँश्च मानवाः ॥९६॥
बद्रिकाश्रमयात्रां ते कृत्वा हेमानलासुरम्।
पापरूपं हृदयस्थं चार्दयन्ति हिमालये ॥९७॥
भूत्वा ते पावना बद्रीश्वरि ते दर्शनात्तथा।
ममापि दर्शनात् पूता मुक्ता भवन्ति देहिनः ॥९८॥
यथाऽक्षरे परे धाम्नि ब्रह्मलोके वसाम्यहम्।
माणिक्यासहितस्तद्वच्चात्र बद्रिकया युतः ॥९९॥
वसामि सर्वथा बद्रि लोकानां श्रेयसां कृते।
एवं त्वं सर्वथा श्रेष्ठा सर्वपादपपूजिता ॥१००॥
तापसी वर्तसे त्वत्र हिमाद्रौ मत्सधर्मिणी।
नारायणी त्वं बदरी माणिक्या वाहिनी मम ॥१०१॥
नारायणोऽहं भगवान् नरयुक् पुरुषोत्तमः।
नरनारायणनाम्ना भजनीयो भवामि ह ॥१०२॥
एवं ते वै समाख्यानं प्रोक्तं श्रीबदरीश्वरि।
बदरस्य सुभक्तस्य भक्त्या संभृतमुत्तमम् ॥१०३॥
बदरोऽपि सदा भक्त्या रसरूपो व्यजायत।
फलात्मा ते बदर्या वै वर्तते ते सुतो यथा ॥१०४॥
बीजं फले नररूपं फलगर्भे वसाम्यहम्।
तेन त्वन्या बदर्योऽत्र प्रजायन्ते हि बद्रिके ॥१०५॥

एतत्स्थानं प्रतीकं मे मूलं स्थानं तु मे गिरौ ।
इतो दूरे दिव्यरूपं यस्य यात्रा न जायते ॥१०६॥
पश्य त्वं माणिकि तद्धि मानवानां न दृष्टिगम् ।
न गतिर्मानवानां तु मुक्तानां गतिरस्ति यत् ॥१०७॥
पटनाच्छ्रवणादस्य स्मरणान्मोक्षणं भवेत् ।
आसुरोपद्रवशान्तिस्तथा ब्रह्ममयी गतिः ॥१०८॥
सर्वश्रेयःप्रदाशक्तिः प्रजायेत परा यथा ।
सर्वाः श्रियो वसेयुश्च बद्रीकथाश्रवाऽन्तिके ॥१०९॥
भुक्तिर्मुक्तिर्भवेच्चापि न तिष्यस्य पराभवः ।
नरनारायणश्चाऽहं श्रोतुश्चित्ते वसामि हि ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने पुनर्हेमानलोत्थानं, शिखरक्षेपाद्युपद्रवाः, बदरेण हरिणा च गर्ते निक्षेपः, हेमानलस्य पूर्वतपःकथा, वरदानं श्रीपादाक्रान्तत्ववरप्राप्तिः, श्रीमाणिक्यायास्तन्मर्दनार्थं बदरीरूपता, तत्पादैर्मर्दनं, श्रीकृष्णनारायणस्य नरनारायणरूपता, बदरस्य फलरूपता, नरस्य बीजरूपता, बद्रिकाश्रमतीर्थप्राकट्यं, मूलं बद्रिकाश्रमं तु भिन्नं दूरे चेत्यादिनिरूपणनामा तृतीयोऽध्यायः ॥ ३ ॥

**श्रीबद्रीश्वर्युवाच—**

नरनारायणविष्णो कृष्णनारायणप्रभो ।
कृष्णकान्तहरे कृष्णश्रीमाणिकीरमाऽऽर्त्तिहन् ॥ १ ॥
कथं स बदरो राजा बदरीफलतां गतः ।
नरश्च बीजतां प्राप्तस्तन्मे ब्रूहि नरायण ॥ २ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीरमे देवि तत्कथां पावनीं शुभाम् ।
मोक्षकरीं हि भक्तानां पापिनां पापनाशिनीम् ॥ ३ ॥
बदरो वै महाभक्तो राज्यं धनं गृहादिकम् ।
सम्पदः स्त्रीजनं यानवाहनानि प्रजास्तथा ॥ ४ ॥
कोशं रत्नानि भूमिश्च देहदैहिकमित्यपि ।
सर्वं कृत्वा हि कृष्णार्थे व्यवर्तत स साधुवत् ॥ ५ ॥
न्ययुङ्क्त दासदासीश्च साधुसेवासु सर्वदा ।
सौधेषु साधवस्तस्य निवसन्ति हरेर्जनाः ॥ ६ ॥
कीर्तनानि सदा तस्यालये भवन्ति बद्रिके ।
सर्वस्वं श्रीकृष्णभक्तयोगार्थे त्वकरोद्धि सः ॥ ७ ॥
आत्मनिवेदितां प्राप्तस्त्वेकदाऽचिन्तयन्नृपः ।
निवेदितं मया सर्वं हरये परमात्मने ॥ ८ ॥
मायिकं सर्वमेवाऽपि तथाऽऽत्माऽपि निवेदितः ।
पार्थिवं च जलीयं च तैजसं प्राण इत्यपि ॥ ९ ॥
सर्वं निवेदितं श्रीमन्नारायणाय चक्रिणे ।
गेहं यानं भोजनादि वस्त्रालङ्कारभूषणम् ॥१०॥
गन्धसुगन्धतैलादि कृष्णार्थे चौपयोगिकम् ।
सर्वं प्रजायते योग्यं सेवार्हं जडवस्तुकम् ॥११॥
किन्तु निकृष्टमत्यर्थं वर्ष्म दुर्गन्धिसंभृतम् ।
समलं विकृतं क्लेद्यं नोपयोगाय चक्रिणः ॥१२॥
भवत्येवाऽशुचि नित्यं मलमूत्रसमन्वितम् ।
स्नाय्वस्थिमांससंव्याप्तं न्यक्कृतं कुणपं शवम् ॥१३॥
सर्वथा नोपयोगार्थं स्वामिनो मे प्रजायते ।
जीवच्छवं मृतं भस्म विष्टा मृद् वा प्रकीर्तितम् ॥१४॥
कथं कृष्णकृते कार्ष्णसतां कृतंऽस्य योजनम् ।
उपयोगि कथं स्याच्च कथं न स्यान्निरर्थकम् ॥१५॥
यन्मया पोषितं लक्षवत्सरैः सेवितं शुभैः ।
तस्य कथं सतामर्थे ह्युपयोगो भवेदिह ॥१६॥
सार्थक्यं च भवेदस्य मानवस्य हि वर्ष्मणः ।
करोमि तपसा दिव्यं सतां भोग्यं हरेस्तथा ॥१७॥
भक्त्या वा चोपयोगस्थं कुर्वे सेवार्हमेव तत् ।
नृपाय साधवः सेवां दिशन्ति न कदाचन ॥१८॥
नृपदेहो दीनवच्च करोति सेवनं न च ।
तस्मान्नृपस्य देहोऽयं निष्फलोऽद्य प्रवर्तते ॥१९॥
सफलं तं करोम्येव तपसाऽऽराधनेन च ।
यद्धिरण्यं न तु देवाय तद्धिरण्यं धिक्कृतं मतम् ॥२०॥
यच्छिरो देवनमने नोपयुक्तं तु धिक्कृतम् ।
ये नेत्रे न दर्शनार्थे देवानां तेऽपि धिक्कृते ॥२१॥
ये श्रोत्रे न श्रवणार्थे देवानां तेऽपि धिक्कृते ।
यल्ललाटं न देवार्हचन्दनादिप्रसादवत् ॥२२॥
तन्निर्भाग्यं सदा बोध्यं भालं भल्लुकभालवत् ।
या नासा श्रीहरेर्गन्धग्राहिणी नैव वर्तते ॥२३॥
सा शुष्कतिलपुष्पाभा गह्वराढ्या न शोभना ।
यन्मुखं श्रीहरेर्वाचं न गृणाति कदाचन ॥२४॥
न कीर्तनं न मोदं च तन्मुखं मूर्खकर्कवत् ।
या जिह्वा न रसं वेत्ति नारायणप्रसादजम् ॥२५॥
सा तु दर्वीव बोध्या वा दर्दुरीव च निर्गुणा ।
यन्मुखं सुन्दरं रम्यं हरेर्भोग्यं न चेद्यदि ॥२६॥

राहुग्रस्तं सदा तत्तु बोध्यं सुयोषितामपि ।
नरस्य च मुखं तत्तु वानरास्यसमं मतम् ॥२७॥
यन्मुखं न हरेर्नारायणाऽऽस्यरसवेदि तत् ।
ताम्बूलरसशून्यं च तद्बिलं मूषकस्य वै ॥२८॥
यः कण्ठो न हरेः कीर्तिगीतिमग्नोऽतिसुस्वरः ।
स बोध्यः कीचकवद्धि वृथास्वननिनादवान् ॥२९॥
यद्वक्षो न हरेर्योग्यं यन्नोरः श्रीहरेः श्रितम् ।
यत्र नास्ति हरेर्वासस्तद्वक्षो वृक्षनीडकम् ॥३०॥
यद्वक्षसि स्वयं कृष्णो न शेते हारवत्तु तत् ।
शववक्षोऽशुचिर्बोध्यं वृथास्तनविलम्बितम् ॥३१॥
यौ स्तनौ श्रीकृष्णकान्तकरपद्मतलाऽस्पृशौ ।
तौ पिण्डौ चाऽमंगलौ वै रसालीग्रन्थिसदृशौ ॥३२॥
यौ स्कन्धौ कृष्णहस्ताभ्यां नाऽऽश्लिष्टौ स्तम्बिनौ तु तौ ।
यः पृष्ठः कृष्णशयने स्पृष्टो नैव स काष्ठवत् ॥३३॥
उदरं यद् रमाकान्तोदरलग्नं न तद् दरम् ।
नाभिः कृष्णेन दृष्टा न सा गर्तः खनिरूपवत् ॥३४॥
कटिर्जघनं गुप्तं च स्पृष्टं कृष्णेन नैव यत् ।
तद् याम्यं चालयं बोध्यं पापाश्रयं समस्तकम् ॥३५॥
नितम्बौ सक्थिनी जानू जंघे पादौ च पत्तले ।
कृष्णस्पर्शमनापन्ने वृक्षस्तम्बनिभे तु ते ॥३६॥
मनो यत् कृष्णविरहं रौरवं तत्तु वै मतम् ।
बुद्धिर्या कृष्णशून्या सा कुंभिपाकात्मिका खनिः ॥३७॥
चित्तं कृष्णविहीनं यत् तत्तु श्रृगालसदृशम् ।
अहन्ता कृष्णशून्या या सा वृकीव विनाशिनी ॥३८॥
गुणत्रयं कृष्णशून्यं तत्तु त्रिदोषरूपि यत् ।
अवस्थात्रितयं कृष्णशून्यं त्वघत्रयं हि तत् ॥३९॥
रूपं कृष्णानपेक्षं यत् तत् श्वित्रं सर्वदा मतम् ।
रसः कृष्णविहीनो यः स वै वैतरणी नदी ॥४०॥
गन्धः कृष्णविहीनस्तु मलपात्रनिभः स वै ।
शब्दः कृष्णेन विधुरो घूकशब्दो हि सर्वथा ॥४१॥
स्पर्शः कृष्णेन हीनस्तु विषानलसमः स हि ।
रतिः प्रीतिः सुखं मोदः कृष्णहीनास्तथोत्सवाः ॥४२॥
सर्वे ते नारका बोध्या आनन्दा निरयात्मकाः ।
कृष्णयुक्तं समस्तं वै स्वल्पं महत्तु यद् भवेत् ॥४३॥
तत्तु दिव्यं शाश्वतं च मोक्षप्रदं महामृतम् ।
श्रीकृष्णस्य सतामर्थे यद् भवेदुपकारकम् ॥४४॥
चेन्निकृष्टं भवेत् तत्तु चोत्कृष्टं सुरवन्दितम् ।
अपि मज्जाऽस्थिचर्मादि कृष्णार्थे योजितं भवेत् ॥४५॥
सर्वं दिव्यं मुक्तिदातृ सार्थकं नरवर्ष्म तत् ।
वृक्षाः कृष्णकृते यानरूपा भवन्ति सार्थकाः ॥४६॥
हस्तिदन्तास्तृणवल्ल्यो भवन्ति भूषणासनम् ।
चमरीपुच्छवालानां चामरं जायते शुभम् ॥४७॥
कस्तूरिका मृगस्याऽपि मता कृष्णोपयोगिनी ।
मृगसिंहादिचर्माणि भवन्ति चासनान्यपि ॥४८॥
शुक्त्यादीनि च रत्नानि भूषणानि भवन्त्यपि ।
कन्दमूलफलानां च नैवेद्यं जायते हरेः ॥४९॥
कणानां मिष्टभोज्यानि जायन्ते परमात्मनः ।
दुग्धादीनि गवोत्थानि पेयानि संभवन्त्यपि ॥५०॥
माक्षिकं च मधुरं च मधु भक्ष्यं प्रजायते ।
कौशेयं कीटजं वस्त्रं कृष्णार्थे चौपयोगिकम् ॥५१॥
धातवः खनिजाश्चापि हेतिरूपा भवन्त्यपि ।
शंखः सामुद्रजन्तूत्थो वाद्यरूपो भवत्यपि ॥५२॥
मणयोऽपि शरीरोत्था मौक्तिकानि च वै स्रजि ।
धार्यन्ते कृष्णकान्तेन सर्वं तथौपयोगिकम् ॥५३॥
अपि हंसस्य पृष्ठं च गरुडस्य गजस्य च ।
अश्वस्यापि हरेः शुभासनयोग्यं भवत्यपि ॥५४॥
किन्त्वयं नरदेहो वै नास्ति कृष्णोपयोगिकः ।
सतां वा नोपयोगार्थस्ततो निरर्थकः सदा ॥५५॥
एवं व्यचिन्तयद् राजा बहुधा निजवर्ष्मणः ।
अपि वै कज्जलं कृष्णं कृष्णनेत्रासनं भवेत् ॥५६॥
तत्तुल्योऽपि न वै देहो नरस्याऽतो निरर्थकः ।
नारीदेहो हरेरर्थे दास्या इव कृतार्थकः ॥५७॥
तत्तुल्यो न नरदेहो यः कृष्णार्थो न वर्तते ।
तस्मान्मया तु कृष्णार्थः साधुसाध्व्यर्थ इत्यपि ॥५८॥
ऋषिमुन्यर्थ एवापि कर्तव्यस्तापसार्थकः ।
भुक्तं राज्यं कृतं सर्वं कर्तव्यं नाऽवशिष्यते ॥५९॥
विशालाख्यो युवा पुत्रो योग्योऽस्ति राज्यकोविदः ।
तस्मै समर्प्य राज्यं मे कार्यं कृष्णार्पणं तनु ॥६०॥
विचार्येत्थं स बदरः समाहूय प्रजाजनान् ।
प्रकाशं हृदयं कृत्वा प्राप्य प्रजामतानि च ॥६१॥
महोत्सवेन पुत्राय विशालाख्याय वै धुरम् ।
ददौ राज्यस्य धर्म्यां च मनो मोक्षेऽकरोत्ततः ॥६२॥
नरनारायणशालां समासाद्य हिमालये ।
व्यचिन्तयन्निजं देहं सतां सेवौपयोगिकम् ॥६३॥
नारायणस्य सेवायां तथा यथौपयोगिकम् ।
तस्थौ समाधौ सहसाऽऽत्मन्यात्मानं निधाय सः ॥६४॥

स्नेहातिशयमासाद्य नरनारायणप्रभौ ।
तल्लीनः सम्बभूवैव विस्मृत्य देहमात्मनः ॥६५॥
ब्रह्मानलेन सम्पूर्णो ज्ञानाऽग्निनाऽतिभासुरः ।
स्नेहशिखिना द्रवितो विदेहः सहसाऽभवत् ॥६६॥
सर्वेषां मुनिवर्याणां पश्यतां द्रवतां गतः ।
रोमलोहितमांसानि स्नाय्वस्थिमज्जिकास्ततः ॥६७॥
वीर्यं चैतानि सर्वाणि रसात्मकानि चाऽभवन् ।
बदर्याः श्रीमाणिकीश्रीरूपायाः पादभूस्थले ॥६८॥
रसः सर्वः खाद्यरूपो व्यलीयत तदा द्रुतम् ।
महाश्चर्यमिदं जातं श्रीपादयोः समर्पितः ॥६९॥
यादृशी भावना चान्ते तथा भवति देह्यपि ।
तूर्णं बदरो राजाऽसौ रसभावमुपागतः ॥७०॥
द्रवखाद्यस्वरूपो वै बद्रीमूलेष्वलीयत ।
बद्रीस्तम्बे चाविवेश रसरूपोऽतिमिष्टकृत् ॥७१॥
शाखासु सहसा व्याप्तः पुष्परूपोऽभवत्तथा ।
फलरूपोऽभवच्चापि बदराणि ततोऽभवन् ॥७२॥
महाश्चर्यमिदं जातं बदरेण निजं वपुः ।
कृत्वा रसं द्रवितं तत् फलरूपं प्रपादितम् ॥७३॥
बद्रीफलानि मिष्टानि तानि पक्वानि सर्वशः ।
सुगन्धीनि सुरूपाणि महान्ति तृप्तिदानि च ॥७४॥
माणिक्याश्रीगर्भजानि पावनानि तदाऽभवन् ।
प्रसादजानि सर्वाणि बदराणि तदाऽभवन् ॥७५॥
नरनारायणो देवो जग्राह कानिचित्तदा ।
नैवेद्येऽभुङ्क्त भगवान् मधुराणि फलानि वै ॥७६॥
अथाऽन्ये ऋषयो देवा गन्धर्वा मानवाः सुराः ।
ये ये त्वासन् हिमाद्रौ ते चखदुः सत्फलानि वै ॥७७॥
एकं फलं वर्षकालतृप्तिदं तद् व्यजायत ।
मधुगर्भं समस्तं वै तापसानां हि तृप्तिकृत् ॥७८॥
चतुर्दशसु लोकेषु प्रशंसा संव्यजायत ।
सुधाश्रेष्ठानि हिमवद्गिरौ बद्रीफलानि वै ॥७९॥
नारायणप्रसादानि प्राप्यन्ते तृप्तिदानि वै ।
परम्परया त्वाकर्ण्य पितरः सिद्धचारणाः ॥८०॥
ऋषयो मानवा देवास्तथाऽन्ये देहिनो गिरौ ।
आययुः फललाभार्थं नारायणोऽपि सन्ददौ ॥८१॥
प्राप्य फलानि सर्वेऽपि सुधोर्ध्वस्वादवन्ति वै ।
अत्त्वा तृप्तिं वार्षिकीं चावापुः सर्वे सुखप्रदाम् ॥८२॥
ये येऽदन्ति फलान्यस्यास्ते ते प्रयान्ति दिव्यताम् ।
बलं पुष्टिं च वीर्यं च सहस्रधाऽऽप्नुवन्ति ते ॥८३॥
श्रुत्वा श्रुत्वा समायान्ति नीत्वा नीत्वा प्रयान्ति च ।
दृष्ट्वा हिमालयं बद्रीं नरनारायणाश्रमम् ॥८४॥
बदराणि विचित्राणि मोदन्ते त्वण्डवासिनः ।
महोत्सवः समस्तानां जातो बदरभोजिनाम् ॥८५॥
अब्धौ तु पर्वतं वीक्ष्य माणिक्यां बदरीं तथा ।
कृष्णनारायणं वीक्ष्य नरनारायणात्मकम् ॥८६॥
तापसं जटिनं चापि नवां सृष्टिं हि मेनिरे ।
यात्रार्थं तीर्थवर्यं वै जातं बदरिकाश्रमम् ॥८७॥
मुक्तताराः पार्षदाश्च व्यूहा ईश्वरकोटयः ।
ईश्वराण्यः सुरा देव्यश्चाययुः फलवाञ्छया ॥८८॥
यथा यथा बदराणि नीयन्ते तु तथा तथा ।
प्रागेव नूतनान्येव प्रोद्भवन्ति द्रुमेऽभितः ॥८९॥
बदरोऽयं महाराजः स्नेहबदरसद्रसः ।
फलरूपोऽतिभक्त्याऽभूत् सर्वभोग्यशरीरकः ॥९०॥
अव्ययश्चाऽक्षयश्चाऽपि तथा संख्याविवर्जितः ।
दिव्यरसो ब्रह्मरसात्मकः श्रीरस उत्तमः ॥९१॥
व्यजायत कृपयाऽपि नरनारायणस्य वै ।
लक्ष्म्याश्च कृपया चापि फलपुत्रात्मकः सदा ॥९२॥
माणिक्याफलरूपः स सदा दिव्यफलोऽभवत् ।
बद्रीदेवी सफलाऽभूद् वृक्षरूपाऽपि सर्वदा ॥९३॥
नारायणोऽपि भगवान् फलपुत्राऽन्वितोऽभवत् ।
ब्रह्मचर्यव्रतस्थोऽपि बदरस्य पिताऽभवत् ॥९४॥
माणिक्याश्रीः सदा शीलव्रता च बालयोगिनी ।
बदराख्यफलैर्बहुपुत्रवती सदाऽभवत् ॥९५॥
तानीमानि बदराणि नारायणात्मकानि वै ।
लक्ष्यात्मकानि दिव्यानि मुक्तभोज्यानि चाऽभवन् ॥९६॥
तस्माद्बद्रीफलभोक्ता कृष्णमूर्तेर्महासुखम् ।
भुंक्ते मूर्त्यानन्दभोक्ता स एव बदरीवने ॥९७॥
अमायिकानि सर्वाणि बदराणि शुभानि वै ।
चैकतत्त्वमयान्येव सन्ति तद्बदरीद्रुमे ॥९८॥
एवं वै बदरीदेवि बदरः फलतां गतः ।
अतिभक्त्या रसभावं द्रवं प्राप्य द्रुमे स्थितः ॥९९॥
महाभागवतानां हि सर्वं कृष्णार्पणं मतम् ।
दिव्यं सर्वं भवत्येव श्रीकृष्णानुग्रहात्तथा ॥१००॥
मायाऽप्यमाया भवति देहोऽप्यदेह इत्यपि ।
गुणाश्चाऽगुणतां यान्ति जडं दिव्यं सचेतनम् ॥१०१॥
कृष्णार्पितं समस्तं वै कृष्णात्मकं प्रजायते ।
एवं श्रीमाणिकीदेवि तव भक्तकथानकम् ॥१०२॥

दिव्यं श्रीबदरीदेवि मोक्षकृत् कीर्तितं मया ।
पठनाच्छ्रवणादस्य भुक्तिं मुक्तिं गतिं लभेत् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
बदराख्यनृपस्य स्वदेहस्यौपयोगिकतासिद्ध्यर्थं बदरी-
मूले तपसा भक्त्या रसात्मकता बदरात्मकफल-
रूपता चेत्यादिनिरूपणनामा
चतुर्थोऽध्यायः ॥ ४ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीरमे देवि ततो नरकथामपि ।
निर्बीजे बदरे तत्र नरो वै बीजतां ययौ ॥ १ ॥
दृष्ट्वा भुक्त्वाऽमृतस्वादून्युत्तमानि फलानि वै ।
सुरा महर्षयो देवा मानवा देहिनोऽपरे ॥२॥
नरनारायणं कृष्णनारायणं च माणिकीम् ।
प्रार्थयामासुरत्यर्थं बद्रीं देशे निनीषया ॥ ३ ॥
नरनारायणविष्णो सर्वोपकारकप्रभो ।
बदरीयं कल्पवृक्षोत्तमा पीयूषसत्फला ॥ ४ ॥
सम्पन्ना कृपया तेऽत्राऽक्षरधामनिवासिनी ।
बदरोऽत्र च फलतां प्राप्तस्तृप्तिकरो रसः ॥ ५ ॥
नैतादृशी सुधा स्वर्गे जने तपसि सत्यके ।
न मानवे न पाताले मेरौ लोकाऽचलेऽपि न ॥ ६ ॥
इमामक्षय्यफलदामक्षय्यतृप्तिदामपि ।
देहि लोकेषु नः कृष्णनारायणदयानिधे ॥ ७ ॥
यथा देवा वयं भक्ताः ऋषयश्च महर्षयः ।
वनारण्यनिवासा वै स्याम चैतत्फलादनाः ॥ ८ ॥
भवान् लोकस्य सर्वस्य श्रेयोऽर्थं तपति प्रभो ।
बदरीलाभदानेन परंश्रेयः करोत्वपि ॥ ९ ॥
पापा जीवा अपि लोके बदराशनकारिणः ।
निष्पापास्ते भविष्यन्ति यास्यन्ति परमं पदम् ॥१०॥
कृपा कार्या हि लोकेषु फलं नैतादृशं परम् ।
मोक्षदं पावनं पुण्यप्रदं यज्ञफलप्रदम् ॥११॥
तपस्विनां तपोवृद्धिकरं शाश्वततृप्तिदम् ।
देवाऽमृतातिमिष्टं च पितॄणां तृप्तिदं परम् ॥१२॥
वनारण्यनिवासानां साधूनां सत्त्ववर्धनम् ।
अन्तःकरणनैर्मल्यसम्पादकं हरेः प्रियम् ॥१३॥
ब्रह्मफलं हि बदरं दिव्यामृतफलं तथा ।
लक्ष्मीफलं तथा भक्तिफलं श्रीमाणिकीफलम् ॥१४॥
आक्षरं सत्फलं त्वेतन्नान्यत्र लभ्यते प्रभो ।
दत्वा नस्त्वं कृतार्थान्नः कुरु कृष्णनरायण ॥१५॥
बदराख्यफलं त्वेतद् बदराख्यो नृपस्तथा ।
लक्ष्मीश्रीमाणिकीबद्रीपार्वतीरमा हरिप्रियाः ॥१६॥
नरनारायणस्त्वं च सर्वे लोकोपकारकाः ।
उपकारं प्रकुर्वन्तु बदरार्पणकर्मणा ॥१७॥
इत्यर्थितो हरिः प्राह सर्वान् बदरभिक्षुकान् ।
भवतां मम भक्तानां मनःपूर्त्यै दयावशः ॥१८॥
दातुमिच्छामि बदराण्यधिच्छिन्नानि स्युर्यथा ।
इमानि दिव्यरूपाणि निर्बीजानि भवन्ति वै ॥१९॥
तेषां दानेन भवतां चिरप्राप्तिर्न वै भवेत् ।
वृक्षस्त्वेको बदर्यास्तु विद्यतेऽविचलस्तथा ॥२०॥
हेमासुरोपमर्दार्थश्चोत्खातुं स न शक्यते ।
बदराणां यथा वंशपरम्परा भवेत्तथा ॥२१॥
मया फलानि सर्वाणि कार्याणि बीजवन्ति च ।
विना बीजं न तज्जातिरविच्छिन्ना प्रवर्धते ॥२२॥
मूलात्स्तम्बात्फलात्पत्रात्काण्डान्नालाच्च चक्षुषः ।
शाखायाश्च जटायाश्च ग्रन्थेर्वा वंशवर्धनम् ॥२३॥
बीजाच्छ्रेष्ठतरा वंशवृद्धिः साऽत्र विभाव्यते ।
वंशजैः पूर्वजानां तु समुद्धारो वितन्यते ॥२४॥
ह्रासे नूतनसम्पत्तौ क्षयश्चापि भवेन्न वै ।
ततश्चात्र बदरेषु बीजानि रचयाम्यहम् ॥२५॥
उक्त्वैवं बदरीनाथो नारायणस्तु शीलवान् ।
स्वांशं नरं प्रसन्नात्मा लोकयामास तत्क्षणे ॥२६॥
नरो नम्रो विनीतश्च कृताञ्जलिरभाषत ।
यदिच्छा ते हरे चास्ते कुर्वे द्रुतं वदाऽत्र मे ॥२७॥
त्वदिच्छयाऽक्षरे धाम्नि श्रीपुरुषोत्तमात् पुरा ।
यदा राधाऽऽबभूव तदाऽहं कृष्णतां गतः ॥२८॥
गोलोके राधया साकं त्वदाज्ञयाऽवसं सदा ।
यदा पुनश्च ते मूर्तेः रमादेवी व्यजायत ॥२९॥
तदा नारायणत्वं सम्प्राप्य वैकुण्ठगोऽभवम् ।
यदा रमा तव मूर्तेः प्राविर्बभूव वै तदा ॥३०॥
वासुदेवस्वरूपोऽहं व्यूहरूपोऽभवं पुरा ।
यदा जाता महालक्ष्मीर्ललिता ते स्वरूपतः ॥३१॥
तदाऽहं तु महाविष्णुः श्रीपुरे त्वभवं पुरा ।
लक्ष्मीर्यदा तव देहाज्जाता विष्णुस्तदाऽभवम् ॥३२॥
श्रीश्च जाता तव मूर्तेस्तदाहं शेषशायनः ।
कमला च तव मूर्तेर्जाता यदा त्वदाज्ञया ॥३३॥

श्वेतद्वीपे श्वेतनारायणोऽहं त्वभवं तदा ।
यदा त्वं माणिकीं बद्रीं कृत्वा निषेवसे हिमे ॥३४॥
तदाऽत्राऽहं तव भ्राता नरो भवामि तेऽनुजः ।
धर्मपुत्रो मानसोऽस्मि वद यत्तत्करोम्यहम् ॥३५॥
धर्मपुत्रा हि चत्वारो नारायणा भवन्ति ये ।
ज्येष्ठो हरिस्त्वक्षरेऽस्ति भवान् श्रीपुरुषोत्तमः ॥३६॥
कृष्णो गोलोकधामस्थो नारायणो विकुण्ठके ।
स त्वं शीलस्वरूपश्च कृष्णनारायणो हरिः ॥३७॥
माणिक्यासहितस्त्वत्र वर्तसे परमेश्वरः ।
तवांऽशोऽहं नरश्चाऽस्मि करोम्याज्ञां प्रदर्शय ॥३८॥
इत्युक्त्वा प्रणनामैनं बद्रीनाथं नरायणम् ।
तदा नारायणः प्राह भ्रातः कल्याणकृद्भवान् ॥३९॥
लोकोपकारकर्ताऽस्ति मत्पराक्रमरूपवान् ।
वर्तसे त्वं मम वीर्यबलशक्त्यादिमूर्तिकः ॥४०॥
इमे देवादयो भक्ताः प्रार्थयन्ति हि बद्रिकाम् ।
बदराणि समिच्छन्ति नित्यभोजनसिद्धये ॥४१॥
एकैव बदरी त्वत्र वर्तते मूलदेविका ।
बदराणि ह्यसंख्यानि जातान्यस्याः फलानि वै ॥४२॥
निर्बीजानि भवन्त्येव सुराद्यैरर्थितानि च ।
तानि सर्वाणि दीयन्ते भक्ष्यन्ते च सुरादिभिः ॥४३॥
एकवारं तृप्तिदानि भविष्यन्ति न चाधिकम् ।
किन्तु वंशकराण्येव तानि स्युर्यदि सर्वदा ॥४४॥
अक्षय्यवंशदान्येव तदा लोकसुखं भवेत् ।
बदर्या वंशवृद्धिश्च तापसानां च भोजनम् ॥४५॥
फलाहारात्मकं स्याच्च भूतले दिवि चापरे ।
सर्वलोकेषु बदरीवंशो भवेत् परार्थकः ॥४६॥
बदरेषु ततश्चात्र बीजानीष्टानि सन्ति मे ।
भूत्वा त्वं बीजरूपोऽत्र फलेष्वाविश चाऽनुज ॥४७॥
त्वदात्मकैर्बीजमूलैर्बदर्यः कोटिशोऽपराः ।
भविष्यन्ति वनारण्योद्यानक्षेत्राटवीष्वपि ॥४८॥
सर्वलोकेषु बीजाढ्यबदराण्युत्तमान्यपि ।
भविष्यन्ति तवादेशाद् बदरे बीजवन्द्रव ॥४९॥
इत्युक्तः सहसा भक्तो नरो नारायणाज्ञया ।
बीजरूपोऽभवद् बद्रीमूले विवेश च द्रुमे ॥५०॥
बदरेषु समस्तेषु बीजात्मा स व्यजायत ।
नरोऽयं बदरीगर्भो व्यजायत सुवंशकृत् ॥५१॥
तापसेनापि वेषेण पृथक् चापि स्थितोऽभवत् ।
नारायणः प्रसन्नोऽभूद् दृष्ट्वा बीजात्मकं नरम् ॥५२॥
बदरीश्रीः प्रसन्नाऽभूद् वंशवती ह्यजायत ।
अथ नारायणः प्राह देवादिभ्योऽतिगौरवम् ॥५३॥
माहात्म्यं बदराणां वै बदर्याश्चाघनाशनम् ।
एतन्मूला बदर्यो वै भविष्यन्ति क्षितौ दिवि ॥५४॥
चन्द्रे मेरौ सत्यलोके जने तपसि मानवे ।
लोकालोके रैवताद्रौ पुष्करे दक्षिणे कुरौ ॥५५॥
ब्राह्मे परीप्रदेशेषु प्राचीनेष्वमरीशके ।
गौरीलोके चाब्रिक्तेषु तथोष्ट्रेषु च भूमिषु ॥५६॥
पातालादौ मुनीनां च निवासेषु शुभेष्वपि ।
नदीतीरेष्वरण्येषु सिंहारण्यादिकेष्वपि ॥५७॥
धर्मारण्येषु सर्वत्र भविष्यन्ति हि बद्रिकाः ।
सर्वर्तुफलदाः काश्चित् स्वर्गादौ चाक्षयाः सदा ॥५८॥
काश्चिद् देशादिगुणका यथर्तुफलदा अपि ।
काश्चिद् वर्षासु फलदाः काश्चिच्छीतफलप्रदाः ॥५९॥
काश्चिदुष्णर्तुफलदा भविष्यन्ति द्रुमात्मिकाः ।
काश्चित्पौष्यस्तथा माध्यः फाल्गुन्यश्चैत्र्य इत्यपि ॥६०॥
भूभागेषु भविष्यन्ति बदर्यश्चापि पुत्रिकाः ।
पक्वमिष्टायतपुष्टमहत्फलप्रदाः शुभाः ॥६१॥
माघे पूजां बदरीणां करिष्यन्ति तु ये जनाः ।
तेषां लक्ष्मीरमापूजाफलं स्यान्नात्र संशयः ॥६२॥
वसन्तस्य दिने त्वेकादश्यां वा पूर्णिमातिथौ ।
अमायां वा बदर्यास्तु गत्वा मूलस्य सन्निधौ ॥६३॥
फाल्गुनैकादशिकायां फाल्गुनपूर्णिमातिथौ ।
फाल्गुनस्यामावास्यायां गत्वा श्रीबदरीतले ॥६४॥
पूजयेद्बदरीं देवीं जलार्पणेन वै पुरा ।
गूडं दद्याच्छर्करां च मिष्टान्नं मूलकेऽर्पयेत् ॥६५॥
दुग्धं समर्पयेच्चापि धूपं दीपं तथाऽक्षतान् ।
कुंकुमं च गुलालं च चन्दनं जलमर्पयेत् ॥६६॥
यज्ञोपवीतकं सूत्रं शाटीसूत्रं च कज्जलम् ।
सिन्दूरकं च भूषार्थं पुष्पमालां समर्पयेत् ॥६७॥
आरार्त्रिकं प्रकुर्याच्च प्रदक्षिणं नमःक्रियाम् ।
ताम्बूलकं प्रदद्याच्च फलं दद्यान्मनोहरम् ॥६८॥
बद्रीदेव्यै ध्वजं दद्यान्नारायण्यै नमोऽस्तु ते ।
श्रीमाणिक्यै नमस्तुभ्यं रमायै ते नमोनमः ॥६९॥
नमः श्रीपुरुषोत्तम्यै पद्मावत्यै नमोनमः ।
नमस्ते बालयोगिन्यै कार्ष्ण्यै देव्यै नमोनमः ॥७०॥
शूलांऽकुशधरायै ते हिमजायै नमोऽस्तु ते ।
त्वं लक्ष्मीस्त्वं सती श्रीश्च त्वं रमा राधिका प्रभौ ॥७१॥

त्वं पार्वती महालक्ष्मीस्तस्यै ब्राह्म्यै च ते नमः ।
नमस्ते बदरीश्वर्यै हरिण्यै ते नमोनमः ॥७२॥
तापसानां फलदात्र्यै सुधाधात्र्यै च ते नमः ।
त्रैलोक्यवन्दितायै ते मातर्बद्रि च ते नमः ॥७३॥
तव छायाऽनादिमायाच्छायानाशकरी मता ।
तव मूलं ब्रह्ममूलं मूलप्रकृतिवारकम् ॥७४॥
तव शाखा धामशाखा उल्लंघ्याऽक्षरधामदाः ।
तव पत्राणिच्छत्राणि ब्रह्मसाम्राज्यदानि वै ॥७५॥
तव फलानि भुक्तानि योगिनां फलदानि च ।
सर्वयोगफलदानि परब्रह्मप्रदानि च ॥७६॥
तव बीजानि लोकानां वासनाक्षयकाणि वै ।
तव वंश्या बदर्यश्च पापिनां पापनाशिकाः ॥७७॥
त्वत्फलानां भक्षणं च मोक्षफलादनप्रदम् ।
त्वत्पत्राणां स्पर्शनं च ब्रह्मानन्दगृहप्रदम् ॥७८॥
त्वन्मूलेषु नमनं च सर्वाऽसुरविनाशनम् ।
त्वन्मूर्तेर्दर्शनं बद्रि परब्रह्माऽवलोकनम् ॥७९॥
त्वत्फलाढ्यजलैः स्नानं ब्रह्महृदावगाहनम् ।
त्वदधःशयनं बद्रि सर्वतीर्थाधिवासनम् ॥८०॥
त्वन्मूले जलदानादि पितॄणां तृप्तिदायकम् ।
त्वत्फलार्पणमेवापि श्राद्धेऽयुताधितृप्तिदम् ॥८१॥
त्वत्फलानां प्रपक्वानां दानं ब्रह्मरसप्रदम् ।
सर्वरसप्रदं बद्रि सर्वसम्पत्प्रवर्धनम् ॥८२॥
बदरी यत्र वै स्थाल्यां तत्राऽक्षरं पदं मम ।
यत्र श्रीबदरीदेवी तत्र श्रीबद्रिकाश्रमः ॥८३॥
बद्रीवने गतप्राणो देही मोक्षाय कल्पते ।
बद्रीतले न वै याम्या दूता यान्ति कदाचन ॥८४॥
पापिनां पापनाशानि बदर्यधो भवन्ति वै ।
मरणे बदरीद्रष्टा स्वर्गं मोक्षं च विन्दति ॥८५॥
फलं भुंजन् बदर्यास्तु मृतो याति परां गतिम् ।
बदरीपुष्पसंव्याप्तशय्यो यात्यक्षरं पदम् ॥८६॥
आपद्गतस्य बदरीपूजयाऽऽपद्विनाशनम् ।
दुःस्वप्नं जायते नैव बदरीसेविनः क्वचित् ॥८७॥
भूतप्रेतपिशाचानां नश्यन्त्युपद्रवास्तथा ।
ग्रहोपपीडा नश्यन्ति बदरीसेविनां सदा ॥८८॥
धार्या बदरमाला वै कण्ठे माध्यां शुभे दिने ।
भक्ष्यं च बदरं पक्वं मिष्टं माध्यां शुभे दिने ॥८९॥
देहे बदरगर्भश्च रसो मृग्यः शुभेऽहनि ।
स्नानं कार्यं बदराढ्यजलैश्चापि व्रतेऽहनि ॥९०॥
तेन यावन्मखानां वै चावभृथफलं भवेत् ।
सर्वयज्ञफलं बद्रीपूजनात् स्यान्न संशयः ॥९१॥
बदरीफलहारांश्चाऽर्पयेत् पक्वफलकृतान् ।
देवकार्यार्थमेवापि बदरीकाष्ठमर्पयेत् ॥९२॥
हवनार्थं बदराणि पक्वानि चार्पयेत्तथा ।
फलाहारार्थमेवापि बदराणि समर्पयेत् ॥९३॥
शर्करासहितान्येव घृतयुक्तानि वै तथा ।
दुग्धयुक्तानि यतये तापसाय समर्पयेत् ॥९४॥
माघ्यां गत्वा बदर्यास्तु तले भोजनमाचरेत् ।
सर्वे देवा भुञ्जते तत् तृप्यन्ति पितरोऽपि च ॥९५॥
विप्राय साधवे दद्याद् दानानि बदरीतले ।
अनाथाय स्त्रियै दद्यादक्षयानि भवन्ति हि ॥९६॥
पुरा पित्रे सुशीलाख्यो विप्रो दत्वा शुभं फलम् ।
बदरं पितृकरयोः श्राद्धे त्विन्द्रपदं ह्यगात् ॥९७॥
बदरं बदरीनाथं बद्रिकां बद्रिकाश्रमम् ।
बद्रीबीजं वदन् मर्त्यो ब्रह्मभूयाय जायते ॥९८॥
स्मृत्वा बदरीं बदरं बद्रीश्वरं हिमाश्रमम् ।
अन्तकाले त्यजन् देहं यास्यत्यूर्ध्वां परां गतिम् ॥९९॥
नारी श्रीबदरीदेवीं स्मृत्वा यास्यति चाक्षरम् ।
भविष्यति हरेः पत्नी माणिक्यायाः सखीश्वरी ॥१००॥
नरो यास्यति मोक्षं च नारायणपदाम्बुजे ।
पशवः पक्षिणश्चापि कीटाश्च जलजा अपि ॥१०१॥
तृणाद्या बदरीं श्रित्वा मृत्वा यास्यन्ति मोक्षणम् ।
बदरीयं नरनारायणांऽगना प्रवर्तते ॥१०२॥
तस्या योगेन भुक्तिं च मुक्तिं स्वर्गादिसम्पदः ।
प्राप्स्यन्ति कृतपापा वै भविष्यन्ति हि पावनाः ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने देवादीनां सततबदरीफलासिवाञ्छायां बदर्याः सबीजफलवत्त्वकरणं, नरस्य बीजरूपता, बदरीमाहात्म्यं चेत्यादिनिरूपण-नामा पञ्चमोऽध्यायः ॥ ५ ॥

श्रीबद्रीश्वर्युवाच—

अनादिश्रीकृष्णनारायणनारायणप्रभो ।
नरनारायणविष्णो बद्रीनाथसुतापस ॥ १ ॥
सुशीलाख्यो भूसुरो वै कदा कुत्राऽभवत्पुरा ।
पितृतृप्तिर्बदरेण कृता येन दिवम्प्रदा ॥ २ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीरमे देवि सुशीलस्य कथानकम् ।
विहाराख्ये शुभे देशे पुलहाश्रमसन्निधौ ॥ ३ ॥
गण्डक्याः सुभगे तीरे मौक्तिकाहारपत्तने ।
सुशीलोऽभूद्विप्रवर्यः कुटुम्बिबहुलः खलु ॥ ४ ॥
पिता तस्याऽभवन्नाम्ना श्रीशीलः कर्मठः सदा ।
विद्वान् ' लोभाभिभूतश्च व्ययभीतिपरायणः ॥ ५ ॥
कुटुम्बार्थे व्ययहीनो लब्धद्रव्यादिसञ्चयः ।
उत्सवादिविहीनश्च व्रतोत्साहादिवर्जितः ॥ ६ ॥
महीमानादिसम्माने कदर्य इव निर्व्ययः ।
वेषे याने भोजनेऽपि रूक्ष इव वनेचरः ॥ ७ ॥
देवपूजादिकार्येषु भिक्षोपलब्धनिर्वहः ।
आतिथ्यादिविहीनश्च शुष्कयज्ञपरायणः ॥ ८ ॥
अपत्यानां दुग्धपाने पिष्टमण्डप्रदायकः ।
शाकादिशून्यमध्याह्नभोजनो घृतवर्जितम् ॥ ९ ॥
कृशरान्नं भुनक्त्येव भोजयत्यपि योषितम् ।
पुत्रादीन् शाकमात्रं च भोजयत्यपि तद्विधम् ॥१०॥
दानादिवर्जितो विप्रः श्रीशीलः कर्मठः पिता ।
नदीतीरे स्वयं गत्वा स्नात्वा नीत्वा फलादिकम् ॥११॥
समिधश्च स्वयं समाहृत्याग्नौ प्रजुहोति वै ।
तत्रापि बिन्दुमात्रं वै घृतं ददाति नाऽधिकम् ॥१२॥
कौपीनं चाऽञ्चलं धत्ते नाधिकं वस्त्रमित्यपि ।
यज्ञपट्टेन वै स्कन्धे निर्वहत्येव भूसुरः ॥१३॥
गृहस्थोऽपि लोभवशात्तापसो हि मुनिर्यथा ।
तथाऽयं वर्तते गेहे पर्युषितेन वै क्वचित् ॥१४॥
भार्या लब्ध्वाऽथवा कन्दान् मूलानि वा दलानि वा ।
वनेऽरण्येऽप्यटव्यां वाऽऽनयत्ययं भुनक्ति तत् ॥१५॥
एवंविधस्य विप्रस्य पुत्रा दशाऽभवन् शनैः ।
पुत्र्यः सप्ताऽभवँश्चापि ब्राह्मणधर्मशोभिताः ॥१६॥
ज्येष्ठः सुशीलनामाऽस्य सुतो वेदादिविद्यया ।
ख्यातिमाप समस्तेषु पार्श्वग्रामेषु कर्मठः ॥१७॥
उदारो दानशीलश्च धर्मोत्सवपरायणः ।
भोजने छादने भोग्ये कुटुम्बपरिपोषकः ॥१८॥
राजमानादिपात्रं च प्रजासम्मानसत्कृतः ।
यज्ञकार्यादिनिष्णातो वैष्णवो भक्तराड् यथा ॥१९॥
सतां सेवाव्रतवाँश्च साध्वीसेवापरायणः ।
आतिथ्यधर्मो गोसेवाग्रामसेवापरायणः ॥२०॥
पाठको बालकानां च कथाकारश्च सर्वदा ।
एवंविधं निजं पुत्रं लोभधर्मविवर्जितम् ॥२१॥
व्ययशीलं पिता वीक्ष्य गृहाद्दूरं चकार तम् ।
तेनाऽयं स्वं गृहं त्यक्त्वा ययौ तु पत्तनान्तरम् ॥२२॥
दाराभाग्याऽभिधं राज्यं तद्राज्ञा तु कृतादरः ।
उवास स्वस्थचित्तोऽयं प्रजाराजादिमानितः ॥२३॥
दाराभाग्येश्वरो राजा नाम्ना दारेश्वराभिधः ।
सौधं वासाय विदुषे सुशीलायाऽर्पणं ददौ ॥२४॥
भूमिं क्षेत्रं वाटिकां च महोद्यानं च वाहनम् ।
अन्नं निर्वाहमात्रं च ददौ दानेऽर्कपर्वणि ॥२५॥
विप्रोऽयं प्राप्य सम्मानं प्रसन्नः शुभसम्पदा ।
शान्तचित्तो हरिं भेजे श्रीपतिं निजवल्लभम् ॥२६॥
जीविकां निजयात्राया योग्यां लब्ध्वा तुतोष ह ।
उपाधिं सर्वथोपार्ज्यगोचरं स विहाय वै ॥२७॥
लक्ष्मीनारायणसंहितायाः कथां तु ' प्रत्यहम् ।
नगरे वाचयामास प्रजासंघसभास्थले ॥२८॥
नृपो दारेश्वरश्चापि प्रत्यहं तूपतिष्ठति ।
आख्यानानि विविधानि भक्तभक्तिपराणि हि ॥२९॥
अनादिश्रीकृष्णनारायणाख्यानानि यान्यपि ।
श्रुत्वा श्रुत्वा मोदते वै वैष्णवास्योद्गतानि च ॥३०॥
कथान्ते कारयत्येव सवाद्योत्सवकीर्तनम् ।
हरे कृष्ण बालकृष्ण श्रीपते पुरुषोत्तम ॥३१॥
अनादिश्रीकृष्णनारायण श्रीबदरीश्वर ।
एवं कृत्वा कीर्तनं च नैवेद्यं विनिवेद्य च ॥३२॥
प्रसादं संविभज्याऽथ गृहं यान्ति सभाजनाः ।
विप्रः सायं हरेर्भक्तिं प्रातर्भक्तिं करोति च ॥३३॥
मध्याह्नभक्तिं कृत्वाऽथ भोजनं स करोति वै ।
सायं प्रातर्जनास्तस्य समागमार्थमुत्सुकाः ॥३४॥
आयान्ति श्रेयसे नित्यं मुमुक्षवः सुमानसाः ।
तेभ्यो मन्त्रं विप्रवर्यो ददाति मोक्षदायकम् ॥३५॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
बहवो वैष्णवाश्चैवं सम्पन्नास्तत्र पत्तने ॥३६॥
नराणां योषितां चापि भक्तिसंघा सुधार्मिकाः ।
अभवन् भक्तिकर्माणो भजन्ति श्रीप्रभापतिम् ॥३७॥
पत्तने तु यथा तद्वद् ग्रामेषु चेतरेष्वपि ।
भक्तसंघा अभवँश्च कृष्णनारायणाश्रिताः ॥३८॥
अथ भक्तोत्तमं श्रेष्ठं विप्रं भागवतं शुभम् ।
योग्यं मत्वाऽस्मै स्वपुत्रीं राजा कुन्दनिकां ददौ ॥३९॥

सुशीलोऽयं भाग्यवाँश्च लब्ध्वा कुन्दनिकां सतीम् ।
पत्नीं नृपसुतां दिव्यां मुमुदे कृपया हरेः ॥४०॥
सापि लक्ष्मीसमा धर्मवती भक्तिमती सती ।
भेजेऽनादिकृष्णनारायणार्यं वल्लभं प्रभुम् ॥४१॥
उदारा हि महर्द्धिसंभृता दानेश्वरी प्रिया ।
कृष्णप्रिया सदा कृष्णभक्तिपरा व्यजायत ॥४२॥
जामाता राजभवने शोभते भाग्यवर्धितः ।
कीर्तिश्चाऽस्याऽभवद् व्याप्ताऽभितः शुश्राव तां पिता ॥४३॥
पित्रा प्रहिताः पुत्राश्च पुत्र्यश्चापि सहोदरम् ।
ज्येष्ठं द्रष्टुं चाययुश्च महोत्साहसमन्विताः ॥४४॥
माताऽपि गालवीदेवी पुत्रं द्रष्टुमुपाययौ ।
पिता तस्थौ गृहे त्वेकस्त्यागदोषातिलज्जितः ॥४५॥
धनलोभपरश्चापि गृहे धनस्य रक्षकः ।
दैवयोगेन विप्रस्य श्रीशीलस्याऽभवज्ज्वरः ॥४६॥
आयुःक्षयेन मरणं प्राप्तो गृहेऽतिनिर्जने ।
ज्ञातिजनैः शनैर्ज्ञाते मरणे तत्क्रिया कृता ॥४७॥
पापिनश्च कदर्यस्य लुब्धस्य बदरीश्वरि ।
मृतिः शून्या जायते वै बहुष्वपि कुटुम्बिषु ॥४८॥
लोभदोषेण विप्रोऽसौ वासनाद्रिप्रवासितः ।
प्रेततां लब्धवाँस्तत्र गृहे भूतशरीरधृक् ॥४९॥
गृहपृथ्वीगते द्रव्ये कृतवासो हि तिष्ठति ।
नान्यः प्रवेशं लभते प्रविष्टं पीडयत्ययम् ॥५०॥
ख्यातोऽभवत् स भूतोऽसौ प्रेतचेष्टापरायणः ।
अदत्तदानो लभते नैवाऽन्नं भोजनं जलम् ॥५१॥
क्षुधायुक्तः क्वचिद् रौति रात्र्यर्धोत्तरमेव सः ।
क्वचिद्धसति सस्फोटं गर्जयन्नम्बरं बहु ॥५२॥
क्वचिद् विप्रात्मको भूत्वा ग्राममध्येऽर्धरात्रिके ।
समये च तदूर्ध्वे च विहरत्यतिदुःखितः ॥५३॥
श्रीशीलस्य गतिस्त्वेवं जाता बद्रीप्रभेश्वरि ।
दारभाग्येऽपि पुत्राश्च पुत्र्यश्च पत्निका तथा ॥५४॥
राजसम्मानमासाद्य सुखं लब्ध्वा महत्तरम् ।
तत्रैव ज्येष्ठभ्रातुश्चाऽऽज्ञया न्यूषुर्निरन्तरम् ॥५५॥
देवकन्यासमा रूपे युवत्यो विप्रकन्यकाः ।
राजकुटुम्बे भाग्येन विवाहितास्ततोऽभवन् ॥५६॥
माताऽभवत् सुसुखिनी सुता राज्ञ्योऽभवन्नपि ।
पुत्राश्चापि ख्यातिमन्तो नृपकुटुम्बयोगिनः ॥५७॥
नृपकुटुम्बिकन्यानां पतयस्ते ततोऽभवन् ।
भक्तिः कृता हि फलति सतां सेवा फलत्यपि ॥५८॥
दानं पुण्यं चोपकारश्चाशीर्वादाः फलन्त्यपि ।
ज्येष्ठभ्रातुः पुण्ययोगैः सर्वं राजकुटुम्बवत् ॥५९॥
जातं याने भोजने च दारेषु ऋद्धिवैभवे ।
यत्र लक्ष्मीः प्रसन्नाऽस्ति यत्र नारायणोऽपि च ॥६०॥
यत्र देवाः प्रतुष्टाश्च तत्र न्यूनं न विद्यते ।
कृतं कालेन फलति नाऽकृतं त्वाप्यते क्वचित् ॥६१॥
बद्रीप्रभे सुशीलोऽयं प्रजेश्वर इवाऽभवत् ।
मम भक्त्या कथया च कीर्तनैर्दानपूजनैः ॥६२॥
अथैकदा पिता प्रेतो निजपत्न्यामुपाययौ ।
आवेशं बहुलं प्राप्य रुरोद बहुधा ततः ॥६३॥
भजनेन कृतः सर्वैः स्फुटाक्षरश्च को भवान् ।
जगादाऽहं पिता नाम्ना श्रीशीलोऽस्मि मृतोऽस्मि च ॥६४॥
अथ शोकं गताः सर्वे रुरुदुश्चापि लौकिकम् ।
क्रियां चक्रुस्ततो राज्ञ आज्ञामासाद्य ते जनाः ॥६५॥
ययौ लौकिककार्यार्थं श्राद्धार्थं तन्मृतिस्थलम् ।
पत्तनं मौक्तिकहारं चक्रुः श्राद्धादि कर्म च ॥६६॥
उद्धारार्थं पितुस्तत्र बहुदानानि ते ददुः ।
पुत्राश्चक्रुर्हि बहुधोद्धारपुण्यानि तत्र ह ॥६७॥
गण्डक्यां चाऽस्थिविन्यासं चक्रुस्ते वार्षिकं विधिम् ।
यद्धनं त्वर्जितं पित्रा निहितं भूतलेऽपि च ॥६८॥
सर्वं दानेषु पुत्रास्ते ददुः कदर्यदूषितम् ।
तथापि प्रेतविप्रस्य सद्गतिर्न व्यजायत ॥६९॥
कृते यज्ञेऽपि बद्रीशि न मुक्तिर्वासनावतः ।
किं पुनर्दानकर्मादि मोक्षदं वासनावतः ॥७०॥
न मोक्षं समवापाऽसौ पुनः पत्न्यामुपाययौ ।
सकम्पं च महाक्रोशं कृत्वोवाच निजात्मजान् ॥७१॥
न मे मुक्तिः प्रजाता वै वासना बाधते हि माम् ।
भोजनस्य सुवेषादेर्लोभस्य च धनस्य च ॥७२॥
वासनापरिहारार्थं यान्तु बदरिकाश्रमम् ।
नरनारायणावासं महर्षिगणसेवितम् ॥७३॥
श्राद्धं मदर्थे तत्रैव कुर्वन्तु बदरीतले ।
दिव्यं च बदरं मह्यं भोजनार्थं ददत्वपि ॥७४॥
नारायणार्पितं वारि फलं च बदरं महत् ।
तथा च वल्कलं वस्त्रं कम्बलं वा यथोचितम् ॥७५॥
बदरीफलकुद्धारं बदरीरसमित्यपि ।
श्राद्धे मह्यं ददत्वेव तृप्तिर्मे शाश्वती तथा ॥७६॥
भविष्यति क्षुधानाशस्तृषानाशो भविष्यति ।
वासना बद्रीशनारायणाग्रे मे विनंक्ष्यति ॥७७॥

पत्न्यामाविश्य बदरीनाथं त्वायामि वै सह।
कुर्वन्तु मम कार्याणि दिव्ये बदरिकाऽऽश्रमे ॥७८॥
एकस्यापि बदरस्य दानेन तर्पणं मम।
मोक्षदं शाश्वततृप्तिप्रदं स्यान्मे न संशयः ॥७९॥
अन्यथा मे न वै मोक्षः कोटिदानैरपीह वै।
कदर्याणां न वै मोक्षस्तीर्थायुते कृतेऽपि हि ॥८०॥
अथ ते प्रययुः सर्वे पद्भ्यां बदरिकाश्रमम्।
सस्नुस्तत्राऽऽदिगंगायां नेमुर्नरं नरायणम् ॥८१॥
बद्रीप्रभां प्रणेमुश्च साध्वर्गीनार्चयँस्तथा।
सर्वतीर्थानि कृत्वैव श्राद्धं चक्रुः समाहिताः ॥८२॥
ज्येष्ठपुत्रो ददौ पिण्डान् बदराख्यं फलं तथा।
गांगेयं सलिलं नारायणपादप्रसादजम् ॥८३॥
ददौ सुवर्णदानं च विप्राय वल्कलं तथा।
गोदानं च तथा दानोत्तमानि भूमिदानकम् ॥८४॥
गोरसादिप्रदानानि मिष्टान्नानि घृतानि च।
अम्बराणि विचित्राणि ददुर्नृपोचितानि हि ॥८५॥
जग्राह श्रीशीलविप्रः साक्षादागत्य वै करे।
बदरं च जलं रम्यं वल्कलं शर्करां तथा ॥८६॥
अन्यत् सर्वं विशिष्टं च प्राप्य तृप्तिं जगाम सः।
पत्न्यां प्रविश्य तत्रैव प्राह तृप्तोऽस्मि सर्वथा ॥८७॥
इदानीं शाश्वता लोका मदर्थं समुपस्थिताः।
प्रेतता मे गता त्वत्र ह्येष यामि परं पदम् ॥८८॥
वासना मे सदा नष्टा माया नष्टा दुरन्तगा।
पापानि मम नष्टानि पुण्यं जातं च मुक्तिकृत् ॥८९॥
विमानं च मदर्थं वै समागतं सुतैजसम्।
नरनारायणकृष्णपार्षदैः शोभनं परम् ॥९०॥
सर्वे भवन्तु सुखिनः पुत्राः पुत्र्यश्च मे प्रिया।
एकेन बदरेणाऽहं शाश्वतीं तृप्तिमाप्तवान् ॥९१॥
एष यामि स्वस्ति वोऽस्तु तारितोऽहं व्रजामि वै।
इत्युक्त्वा दिव्यसदने त्वधिरुह्य विमानके ॥९२॥
पार्षदैर्विष्णुभक्तैश्च सम्मानितो हि पश्यताम्।
सर्वेषां निजपुत्राणां पुत्रीणां योषितस्तथा ॥९३॥
महर्षीणां पश्यतां च विमानेनाऽक्षरं ययौ।
महाश्चर्यं गताः सर्वे नरनारायणाश्रमे ॥९४॥
पितृमुक्तिं विधायैव न्यवर्तन्त सुतादयः।
पूजयित्वा बदरीशीं बद्रीनाथं नरायणम् ॥९५॥
नरं सम्पूज्य बदरं सबीजं प्राप्य ते ततः।
अवतीर्य हिमाद्रेस्तु निजालयं ययुर्द्रुतम् ॥९६॥
मौक्तिकाहारमासाद्य दत्वा दानं गृहस्य च।
सर्वेषामुपकरणादीनां दानं प्रदाय च ॥९७॥
आययुस्ते सुखस्थानं दाराभाग्याख्यपत्तनम्।
श्वशुरं नृपतिं दारेश्वरं तथा प्रजाजनान् ॥९८॥
भक्तान् भक्तानिकाश्चापि प्राहुर्वृत्तान्तमेव ते।
आश्चर्यं परमं प्राप्ता बदरीशप्रतापजम् ॥९९॥
एवं बदरदानस्य माहात्म्यं मोक्षदं परम्।
कथितं ते बद्रिके वै सर्वापद्विनिवारकम् ॥१००॥
ततः श्रुत्वा जनसंघा दाराभाग्याभिधो नृपः।
प्रजाश्च संघशो भूत्वा कुटुम्बसहिता ययुः ॥१०१॥
बदर्याः खलु यात्रार्थं नरनारायणाश्रमम्।
सर्वसामग्रिकायुक्ता भक्तिलग्नैकमानसाः ॥१०२॥
भजन्तः श्रीबद्रिकेशं ध्यायन्तो बदरीश्वरीम्।
प्रापुर्हिमालये बद्रीप्रभे बदरिकाश्रमम् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीशीलस्य पुत्राणां दाराभाग्यपत्तने राजसम्मानं श्रीशीलस्य मरणं प्रेतता तदुद्धाराय बद्रिकाश्रमे श्राद्धे बदरादिदानं प्रेतमोक्षणं चेत्यादिनिरूपण-नामा षष्ठोऽध्यायः ॥ ६ ॥

**श्रीबदरीश्वर्युवाच—**

कान्तनारायणकृष्ण दाराभाग्यो नृपो हि मे।
बद्रिकालयमासाद्य किं चकार वदस्व मे ॥ १ ॥

**श्रीनरनारायण उवाच—**

हृषीकेशात्समारभ्य प्रतिक्रोशं स भूपतिः।
व्यधाद्वै दण्डवद् बद्रीनाथं दानानि सन्ददौ ॥ २ ॥
पद्भ्यां ययौ शनैः सर्वप्रजाभिः सहितो हि मे।
भोज्यव्ययः समस्तो वै सहस्रदेहिनां निजः ॥ ३ ॥
व्रतं मध्याह्नभोजित्वं चक्रे राजा प्रजान्वितः।
सहस्रमालिकाऽऽवर्तनं चक्रे प्रत्यहं नृपः ॥ ४ ॥
प्रजाश्चापि तथा चक्रुर्मालाऽऽवर्तनकीर्तनम्।
हरे कृष्णबालकृष्णबद्रीनाथेशमाधव ॥ ५ ॥
अनादिश्रीकृष्णनारायणपद्मावतीधव।
एवं संभूय भजनं चक्रुस्ते वाचिकं पथि ॥ ६ ॥
तीर्थव्रतानि ते सर्वे पालयामासुरुत्सुकाः।
भूशायित्वं ब्रह्मचर्यं चैकभुक्तत्वमित्यपि ॥ ७ ॥

नारीणां च नराणां च मिथः स्पर्शविहीनताम् ।
सत्यवचनं चाऽद्रोहं चान्यगाथाविवर्जनम् ॥ ८ ॥
अस्तेयं चेश्वरवृत्तिं स्वाध्यायं फलभोजनम् ।
सतां सेवां हरेः सेवां साध्वीनां सेवनं तथा ॥ ९ ॥
कथायाः श्रवणं सायं कीर्तनं वाद्यसंयुतम् ।
वृद्धानां वन्दनं प्रातर्देवानां पूजनं प्रगे ॥१०॥
अहिंसां चापि जीवानां नोच्छेदं तृणशाखिनाम् ।
स्नानं ध्यानं जपं चापि हवनं पितृतर्पणम् ॥११॥

पित्रोः प्रसेवनं पत्युः सेवनं साधुसेवनम् ।
नित्यदानं च गोसेवां विप्रसम्मानमर्हणम् ॥१२॥
अन्नवस्त्रप्रदानं च धूपदीपनिवेदनम् ।
व्रतान्येवंविधान्येव चक्रुर्मार्गे हि यात्रिकाः ॥१३॥
सहस्रमानवाः सर्वे दाराभाग्यनृपान्विताः ।
बदरीश जय विष्णो नरनारायण प्रभो ॥१४॥
गंगा जयतु बद्रीशी हिमालयो जयत्वपि ।
एवं जयादिशब्दैस्ते सोत्साहा रुरुहुर्गिरिम् ॥१५॥

शिखराणि कज्जलानि धवलानि क्रमात् ततः ।
विलोकयन्तो भक्तौ च मग्ना यान्ति शनैः शनैः ॥१६॥
अथ नारायणस्वामी साधुर्भूत्वा नरोऽपि च ।
तथा श्रीबदरी साध्वी भूत्वा भागवतीप्रभा ॥१७॥
भिक्षुकाणां वेषवन्तो ययुः संघेन संयुताः ।
रात्रौ त्रयो मिलित्वा च मिष्टस्वरैः सुकीर्तनम् ॥१८॥
नरनारायणस्यैव कुर्वन्ति स्नेहगर्भितम् ।
शृण्वन्ति संघशः सर्वे नमन्ति त्रीन् गुरूनिव ॥१९॥

भोजयन्ति परे चापि सेवन्ते त्वपरेऽपि तु ।
अर्पयन्ति यथेष्टं वै त्रिभ्यो यात्रालवो मुहुः ॥२०॥
त्रिकं चापि दिव्यरूपं भागवतं स्थले स्थले ।
आवेदयति पन्थानं पथ्यं पाथेयमित्यपि ॥२१॥

विक्रेतृरूपमासाद्य पर्वतीयफलादिकम् ।
आपणे त्विव धृत्वा च मार्गे तिष्ठति वै पुरः ॥२२॥
एवं श्रीभगवान् बद्रि संघेन सह वर्तते ।
भक्ता यतः प्रसन्नाः स्युः सेवया दुःखवर्जिताः ॥२३॥
वियोगं निजभक्तानां तत्रापि स्वं प्रयायिनाम् ।
सहते न हरिकृष्णो भक्ताः सहन्त एव न ॥२४॥
तथा बद्रीप्रभो नारायणोऽहं वै त्वया सह ।
नरेण सहितः संघे युतोऽभवं निजेच्छया ॥२५॥
मुक्तिदोऽहं हि भक्तानां पार्वतिकोऽघनाशकः ।
दयया प्रेरितः संघे व्यचरं साधुवेषभाग् ॥२६॥

साधूनां सेवया कृष्णसेवया तीर्थयात्रिका ।
सफला जायते बद्रि दर्शनात् पादवाहनात् ॥२७॥
अथ राजस्तु संघस्य परीक्षार्थे मया तदा ।
रुग्णं रूपं मम बद्रि दर्शितं ज्वरवेष्टितम् ॥२८॥
चलितुं त्वसमर्थोऽहं ज्वराग्निना तदाऽभवम् ।
मम भ्राताऽपि सहसा ज्वराऽऽविष्टोऽभवत्ततः ॥२९॥
मम पत्नी सती नारी साध्वी रुरोध वै भृशम् ।
ज्वराविष्टौ पुमांसौ द्वौ सेवनीयौ कथं पथि ॥३०॥

एकया योषिता साध्व्या रुग्णौ पाल्यौ कथं पथि ।
शीताढ्ये हिममार्गे वै पराधीनौ सुदुःखितौ ॥३१॥
भिक्षुक्याः सन्निधौ तत्र नायान्ति धनमानिनः ।
भिक्षुकी रौति विजने निषद्य सन्निधौ तयोः ॥३२॥
संघस्था मानवाः सर्वे दयायुक्तास्तु तैर्थिकाः ।
ये ये त्वायान्ति तत्पार्श्वे तिष्ठन्ति दययाऽन्विताः ॥३३॥
सेवन्ते ज्वरनाशार्थं देहं संवाहयन्त्यपि ।
धैर्यं वदन्ति नार्यै च यथेष्टं संददत्यपि ॥३४॥

क्रमशस्ते सहस्रं वै मानवा रुग्णसन्निधौ ।
यात्रां निरुध्य मिलितास्त्यक्तुं शक्ता न चाऽभवन् ॥३५॥
राजाऽपि त्वाययौ मार्गे निर्गच्छन् तौ व्यलोकयत् ।
रुग्णौ साधूसत्तमौ च दुःखिनीं साध्विकां प्रियाम् ॥३६॥
अतिष्ठत् सहसा तत्र निषसाद पुरस्तयोः ।
पप्रच्छेप्सितमेवाऽपि धैर्यं ददौ धनं ददौ ॥३७॥
वचनं प्रददौ ताभ्यां साधुभ्यां नृपतिः शुभम् ।
यावद् रोगो न भवतोर्निवर्तेत तु तावता ॥३८॥
नाऽस्मात् स्थानात् प्रयास्यामि त्वग्रे बदरिकाश्रमम् ।
सह नीत्वैव यास्यामि मा खेदं कुरुतं युवाम् ॥३९॥
सर्वे वयं निवत्स्यामश्चात्रैव स्वस्थतावधिम् ।
यद्वाऽऽज्ञया तु भवतोर्वो कृत्वा स्कन्धवाहिनी ॥४०॥

यास्यामो बदरीतीर्थे सन्तो हि हृदयं हरेः ।
न त्यक्तव्या मोक्षणार्थैः प्राप्ताः सन्तः कदाचन ॥४१॥
साध्वीयं मा शुचं यातु तिष्ठामस्त्वत्सहायिनः ।
बद्रीनाथो द्रुतं चेमौ नीरुग्णौ विदधात्विह ॥४२॥
एवं निश्चित्य राजाऽपि प्रजाश्चापि हरिप्रियाः ।
सर्वे यात्रां विहायैव साध्वर्थं तूषिताः पथि ॥४३॥
अथ भोजनपानादि फलादनं प्रचक्रिरे ।
साधुभ्यां दत्तवन्तश्च मुद्गपक्वादिमण्डकम् ॥४४॥
पपतुस्तौ सुखं साध्वी भोजनं प्रचकार ह ।
सर्वेऽपि भुक्तवन्तस्ते रात्र्यागमोऽभवत्ततः ॥४५॥

रात्रौ सर्वे कीर्तनं च प्रचक्रुः कण्ठरागिणः ।
सवाद्यं श्रीनरनारायणनाम प्रचक्रिरे ॥४६॥
अथापि हिमवर्षा वै निशाऽर्धविगमेऽभवत् ।
शीताऽनलोऽभवद् व्याप्तः संघे सर्वत्र भूतले ॥४७॥
रुग्णौ प्रातर्मृतौ त्यक्त्वा प्राणान् प्रेतौ बभूवतुः ।
रुरोध साध्वी साऽनाथा रुरुदुर्नृपतत्प्रजाः ॥४८॥
हिमस्य विगमे जाते प्रातःप्रकाशनोत्तरम् ।
राजा सर्वान् यात्रिकाँश्च सम्बोधयन्नुवाच ह ॥४९॥
यावन्मृतौ न जीवेतां तावदन्नं त्यजाम्यहम् ।
मरणं साधुभिः साकं मन्ये मोक्षप्रदं मम ॥५०॥
श्रुत्वैवं यात्रिकाः सर्वे नरा नार्योऽपि बालकाः ।
प्रतिज्ञां तादृशीं चक्रुर्ग्रह्लामो भोजनं नहि ॥५१॥
यावन्मृतौ हि जीवेतां मरिष्यामोऽत्र निर्जलाः ।
यास्यामो ब्रह्मसदनं साध्वर्थे प्राणरोधिनः ॥५२॥
किमत्र यात्रया साधून् त्यक्त्वा स्वार्थपरार्थिनाम् ।
निष्फलं जीवनं तस्य साधूँस्त्यक्त्वा तु जीवति ॥५३॥
अपि प्राणान् प्रदायैव साधून् संरक्षयेत् सदा ।
गवार्थे ब्राह्मणार्थे वा साध्वर्थे च सतीस्त्रियै ॥५४॥
प्राणार्पणं विधायाऽपि रक्षां करोति यो जनः ।
तस्य स्वर्गे च मोक्षश्च शरण्यस्य ध्रुवौ मतौ ॥५५॥
अपि पञ्चमहापापप्रसक्तोऽपि सतां कृते ।
प्राणान् जहाति रक्षार्थे सर्वपापात् स मुच्यते ॥५६॥
साधुरक्षाकृतः रक्षां करोति भगवान् हरिः ।
साधुष्वेव हरिश्चास्ते साधुरेव स्वयं हरिः ॥५७॥
या प्रीतिर्निजपुत्रेषु पत्न्यां पित्रोश्च बन्धुषु ।
तां कृत्वा सत्सु देह्यत्र मुच्यते जन्मबन्धनात् ॥५८॥
यो यत्नः स्वकुटुम्बस्य भरणार्थे वितन्यते ।
स चेत् कृतः सतामर्थे यत्नवान् मुच्यते ह्यघात् ॥५९॥
यथा लोकैः पक्षपातः क्रियते स्वकुटुम्बिषु ।
तथा कृतः सतामर्थे तारयत्येव तत्कृतः ॥६०॥
यथा स्नेहो निजदेहे दैहिके वर्तते नृणाम् ।
तथा चेज्जायते सत्सु मुच्यते भवसागरात् ॥६१॥
यथा स्वार्थे कृतयत्नः पुमान्न मनुते श्रमम् ।
तथा सतां कृते यत्ने स्नेहान्न मनुते श्रमम् ॥६२॥
न पारक्यं च मनुते मनुते मोक्षकृच्छ्रमम् ।
स एव लभते धाम्नि नारायणपदाम्बुजम् ॥६३॥
रुग्णं साधुं तु यस्त्यक्त्वा याति देही मदान्वितः ।
स याति याम्यलोकं वै दुःखं याम्यनिभं त्विह ॥६४॥
मातृसेवाफलं पितृसेवाफलं तथा सताम् ।
सेवया लभते कान्तसेवाफलं हि शाश्वतम् ॥६५॥
सर्वतीर्थानि साधूनां मूर्तौ वसन्ति सर्वदा ।
साधुतीर्थाऽवमन्ता न लभते तीर्थजं फलम् ॥६६॥
साध्वोरेतयोर्मार्गेऽत्र गताऽस्वोस्त्यजनं ह्यघम् ।
तदर्थे प्राणदानेन पुण्यं स्वर्गं च मोक्षणम् ॥६७॥
इति निश्चित्य राजा च प्रजा यात्रां विहाय वै ।
अन्नं जलं विहायाऽपि निषेदुः शवसन्निधौ ॥६८॥
चक्रुस्ते भजनं तत्र सततं नामकीर्तनम् ।
अथ साध्वी सती नारी प्राणान् हातुं समिच्छति ॥६९॥
कृत्वा काष्ठानि चैकत्र शवौ निधाय तत्र च ।
यावदग्निं तत्र कर्तुं याति तावन्नृपः स्वयम् ॥७०॥
उत्प्लुत्य काष्ठचयने निपपात पुरः स्त्रियाः ।
ततो राज्ञी तथा नार्यः प्रजाश्चापि शुचाकुलाः ॥७१॥
निपेतुः सहसा काष्ठचितायां मरणाय वै ।
नारी वह्निं समुत्पाद्य शेते तु यावदेव ह ॥७२॥
शेरते भूभृताद्याश्च न निर्गच्छन्ति वह्नितः ।
तादृशीं परमां भक्तिं विलोक्य भगवान् स्वयम् ॥७३॥
चितायाः शान्तवह्नेस्तु सजीवः सनरो हरिः ।
उत्थितश्च हसन् दिव्यवपुश्चतुर्भुजान्वितः ॥७४॥
शंखचक्रगदापद्मधरो नरेण शोभितः ।
तथा लक्ष्म्या युतः साध्व्या हसन्नाह नृपादिकान् ॥७५॥
भवन्तो मम भक्ताः स्थ सर्वस्वार्पणकारिणः ।
साधुस्नेहयुतास्तीर्थपावनाश्चात्मसदृशाः ॥७६॥
आत्मनिवेदिनः सर्वे सर्वपापविवर्जिताः ।
वैकुण्ठयोग्या यूयं स्थ मम प्रसन्नतान्विताः ॥७७॥
परीक्षिता मया सर्वे मदर्थकृतयत्नकाः ।
मदर्थप्राणदातारो मदर्थकृतजीवनाः ॥७८॥
त्यक्तसंसारपुत्रादिस्नेहाः साधुपरायणाः ।
धामयोग्या मुक्तियोग्या भवथाऽत्र हिमालये ॥७९॥
मत्प्रसादाद्दिव्यदेहा भवथाऽत्र सुगन्धिनः ।
व्योमगाः संभवन्त्वेव सर्वे दुःखविवर्जिताः ॥८०॥
इतो दूरं न मे बद्रिकाश्रमो विद्यतेऽनघाः ।
आयान्तु व्योममार्गेण सहसा तु मया सह ॥८१॥
इत्युक्त्वा भगवान्नारायणो नरश्च बद्रिका ।
व्योममार्गेण सर्वास्तान्निन्युर्बदरिकाश्रमम् ॥८२॥
बदर्या अभितस्तत्र तस्थुस्ते भगवत्पराः ।
ऊषुः पक्षं सेवमाना बद्रीनाथं नरं सतीम् ॥८३॥

ऋषीन्देवान्पितृगणान्दिव्यान्दिवः समागतान् ।
वीक्षयामासुरूर्ध्वेशा मुक्ता इवाऽभवँश्च ते ॥८४॥

अथैकं तत्र विप्रं च तपन्तं तापसं मुनिम् ।
व्यलोकयन् बदर्यग्रे नारायणजपान्वितम् ॥८५॥

निराहारं ध्यानमग्नं दिव्यमूर्तिं जटान्वितम् ।
व्यपश्यँश्च द्विजस्याऽग्रे त्वायातां कन्यकां शुभाम् ॥८६॥

बदरीमूलतो दिव्यामुद्भूतामद्भुतां प्रभाम् ।
विप्राय बदरं दत्वा व्यलीयत द्रुतं तु सा ॥८७॥

बदर्यां सा लीनभावमुपयाता नरायणी ।
दृष्ट्वाऽऽश्चर्यं तु परमं प्राप्तास्ते नृपमानवाः ॥८८॥

तीर्थविधिं ततश्चक्रुर्नारायणस्य पूजनम् ।
गंगास्नानं बदरस्य फलाहारं व्यधुस्तदा ॥८९॥

नामसंकीर्तनं चक्रुर्नारायणगतासवः ।
नीराजनं हरेश्चक्रुः प्रसादं जग्धुरुत्सुकाः ॥९०॥

एकाग्रमानसा जाताः कृष्णे स्नेहद्रवान्विताः ।
तावत्तेषां शरीराणि दिव्यानि तैजसानि वै ॥९१॥

व्यजायन्त क्षणाद् बद्रि विमानं चागतं ततः ।
निर्विकल्पसमाधिस्था दिव्येन्द्रियादिविग्रहाः ॥९२॥

तैरेव विग्रहैर्दिव्यैरारुरुहुर्विमानकम् ।
सर्वे चतुर्भुजा दिव्या नरा नार्यश्च बालकाः ॥९३॥

वैकुण्ठमार्गं विमलं त्वविच्छिन्नं तथाऽम्बरे ।
व्यलोकयन् हरिं नत्वा पार्षदैः सह तैजसैः ॥९४॥

ययुर्वैकुण्ठधामाऽथ जयशब्दास्तदा दिवि ।
देवानामभवन् बद्रि महर्षीणां शुभा रवाः ॥९५॥

नारायणाः सर्वनरा नारायण्यः स्त्रियस्तदा ।
दिव्या वैकुण्ठयोग्यास्ते वैकुण्ठं विविशुः क्षणात् ॥९६॥

साधुरूपस्य कृष्णस्य सेवाफलं हि मोक्षणम् ।
दाराभाग्यनृपाद्याँस्तान् स्वप्ने ददृशिरे प्रजाः ॥९७॥

मुक्तिं गतान् विमानेन महोत्सवान् प्रचक्रिरे ।
एवं श्रीमाणिकीबद्रि बद्रिकाश्रमयात्रया ॥९८॥

मुक्तिं यान्ति मानवा वै दिव्यदेहा विमानगाः ।
पठनाच्छ्रवणादस्य स्मरणात् संस्तवादपि ॥९९॥

भुक्तिं मुक्तिं लभन्ते वै बद्रीप्रभेतिवादिनः ।
साक्षान्नारायणो यत्र यत्र त्वं बद्रिकाश्रमे ॥१००॥

यत्र महर्षयो दिव्या गंगा यत्र च पार्वती ।
तत्र वैकुण्ठमेवास्ते पञ्चमं तपसाऽन्वितम् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने दाराभाग्यनृपस्य सहस्रमानवयुतस्य बद्रिकाश्रमयात्रायां साधुसाध्वीरूपबदरीनरनारायणदर्शनं, परीक्षणं, नारायणार्थप्राणदानं, प्रसन्नता, व्योम्ना बद्रिकाश्रमप्रापणं, दिव्यदेहवत्त्वं, मोक्षणं चेत्यादिनिरूपणनामा सप्तमोऽध्यायः ॥ ७ ॥

श्रीबद्रीश्वर्युवाच—

कोऽसौ विप्रोऽभवत् तत्र तापसो बदरीस्थले ।
यस्मै कन्यां च बदरं ददौ ब्रूहि हरे कथाम् ॥ १ ॥

श्रीनरनारायण उवाच—

ब्रह्मदेवोऽभवद्विप्रो लूनीग्रामनिवासकृत् ।
सौराष्ट्रे वेदवेदांगप्रवीणो मखकर्मठः ॥ २ ॥
प्रातः स्नात्वा पूजयित्वा कृष्णं दैवतपञ्चकम् ।
भिक्षार्थं स प्रयात्येव ग्रामवसतिसद्गृहम् ॥ ३ ॥
अलं प्राप्योदरपूर्णं निवर्तते गृहं निजम् ।
अप्राप्य पूर्णं वसतिगृहांगणानि यात्यपि ॥ ४ ॥
अलं लब्ध्वा गृहं याति पाचयित्वा स्त्रिया सह ।
नाम्ना तु विशदाक्ष्या वै भुंक्ते देवार्पणोत्तरम् ॥ ५ ॥
इत्येवं वर्तमानस्य गतं वर्षसहस्रकम् ।
व्यजायत न चापत्यं पत्नी शोकातुराऽभवत् ॥ ६ ॥
अनपत्यस्य लोका न भवन्ति सुखदायिनः ।
उद्धारोऽपि भवेन्नैव ऋणानुबन्धिनस्तथा ॥ ७ ॥
अपि मूर्खोऽपि वंशीयः समुद्धरति पूर्वजान् ।
अपुत्रस्य गतिर्नास्ति वन्ध्याया नहि मोक्षणम् ॥ ८ ॥
तस्मात् प्रयतितव्यं वै पुत्रार्थं तपआदिभिः ।
विचार्येत्थं पतिं प्राह विशदाक्षी प्रतापिनी ॥ ९ ॥
गतं वर्षसहस्रं वै पुत्रो नास्ति हि मानसः ।
न गर्भजो नाऽकजश्च न दत्तो न च रक्षितः ॥१०॥
विना पुत्रं गतिर्नास्ति चैषितव्यः सुतस्ततः ।
सर्वेभ्यः खलु पुत्रेभ्यो गरीयान् गर्भजः सुतः ॥११॥
औरसो गुणसम्पन्नः पित्रोश्च प्रतिबिम्बकः ।
उत्पादनीयश्चावाभ्यां पुत्रो गर्भज उत्तमः ॥१२॥

देहि गर्भे हरिं ध्यात्वा कृतकृत्या भवामि यत्।
श्रुत्वैवं प्रमदावाक्यं विप्रः प्राह न मे सुतः ॥१३॥
ललाटे लिखितश्चास्ति न ते पुत्रो भविष्यति।
स्थेयं तस्माद् पुत्राभ्यामावाभ्यां भवसागरे ॥१४॥
श्रुत्वैवं प्रमदा प्राह भाग्यं तपसा वर्धते।
पुत्रेच्छया तपः कार्यं भवता वा मया त्विह ॥१५॥
अपुत्रयोर्मरणं वै नरकाय भवेदिति।
ऋणानि त्रीण्यपाकृत्य मोक्षे चित्तं निवेशयेत् ॥१६॥
असाध्यं नास्ति विप्रस्य तपस्विनो विशेषतः।
तस्मात्तपः परं कार्यं पुत्रार्थं कान्त सर्वथा ॥१७॥
इत्युक्त्वा विररामेयं विप्रश्चिन्तां चकार ह।
पत्न्या वाक्यं यथार्थं वै नाऽनपत्यस्य सद्गतिः ॥१८॥
संकल्पपूरकं क्षेत्रं दिव्यं बदरिकाश्रमम्।
गन्तव्यं तत्र यात्रार्थे पुत्रार्थं तपसेऽपि च ॥१९॥
पुत्रप्राप्तिर्भवेद्वा न मोक्षसिद्धिर्भविष्यति।
तस्मादुभयसिद्ध्यर्थं गन्तव्यं बदरीवनम् ॥२०॥
निर्णीयेत्थं स्त्रिया साकं ययौ बदरिकाश्रमम्।
तीर्थविधिं विधायैव कृत्वाऽऽसनं प्रकाशके ॥२१॥
तपस्तेपे भूसुरोऽसौ पत्न्या साकमहर्निशम्।
मासं चक्रे फलाहारं बदरस्यैव केवलम् ॥२२॥
मासं तस्थौ निराहारं हिमानिलकृताशनः।
मासद्वयान्ते बदरीं स्मृत्वा स्तोत्रं चकार ह ॥२३॥
'नारायणी सती साध्वी माणिकी श्रीः रमा रतिः।
हरिणी कमला लक्ष्मीः सदा जयतु माधवी ॥२४॥
मूलिनी पत्रिणी देवी शाखावती हिमालया।
बदराढ्या नरबीजा सदा जयतु माधवी ॥२५॥
शूलांकुशधरा साध्वी ब्राह्मणी बालयोगिनी।
सर्वर्षिदेववासा श्रीः सदा जयतु माधवी ॥२६॥
कार्ष्णी कृष्णप्रिया शीता हेमानलनिवारिणी।
हर्यंगना ब्रह्मशीला सदा जयतु माधवी ॥२७॥
सत्त्वमयी बालकृष्णस्वरूपा पुरुषोत्तमी।
प्रज्ञाऽनादिकृष्णनारायणी जयतु माधवी ॥२८॥
पार्वती ब्रह्ममुक्तादिजगन्माताऽवतारिणी।
श्रीकृष्णे वल्लभा गोप्त्री सदा जयतु माधवी ॥२९॥
चमत्कारस्थिता देवी तापसी परमेश्वरी।
भक्तेच्छापूरिका चान्द्री सदा जयतु माधवी' ॥३०॥
एवं स्तुत्वा नमः कृत्वोपारराम स भूसुरः।
विशदाक्षी ततो गत्वा पुपूज बदरीश्वरीम् ॥३१॥
जलं तथाऽक्षतान् पुष्पाण्युत्तमानि च शर्कराः।
धूपं दीपं चन्दनं च कुंकुमं च तथाऽम्बरम् ॥३२॥
समर्प्य बद्रिकादेव्यै नीराजनं समाचरत्।
अपराधक्षमां चापि ययाचे विशदाक्षिका ॥३३॥
ततश्चाकाशवाक् तत्र बदर्यूर्ध्वं मनोहरा।
अश्रूयत विशदाक्षि बदरीव्रतमाचर ॥३४॥
'नित्यं प्रातर्बदर्यास्तु मूले सेचय वारि तु।
बदर्यधःशयनं च बदर्यधो निजासनम् ॥३५॥
बद्रीपत्रप्रपूतं च बदरीफलभोजनम्।
बद्रीछायां समासाद्य मासमेकं निवासनम् ॥३६॥
बदरीरससम्मिश्रवारिस्नानं तथोत्तमम्।
बदरीफलमालायाः कण्ठे नित्यं प्रधारणम् ॥३७॥
प्रकोष्ठे बदरीपत्रफलमालावधारणम्।
कट्यां बदरीपत्राणां मेखलायाः प्रधारणम् ॥३८॥
बदरीपुष्पगन्धस्य मञ्जर्या ग्रहणं तथा।
धम्मिल्ले बदरीपुष्पमञ्जर्या धारणं तथा ॥३९॥
सायमाराधनं बद्रीप्रमायाः स्तोत्रकीर्तनम्।
बद्रीभूमेर्मार्जनं च बद्रीगुन्द्रस्य भक्षणम् ॥४०॥
बद्रीत्वक्चूर्णयुक्तस्य जलस्य पानमित्यपि।
मासान्ते बदरीबीजांऽकुररोपणमित्यपि ॥४१॥
उद्यापनं पूजनं च बदराणां प्रदानकम्।
यथाशक्तिस्वर्णरूप्यभूषारत्नप्रदानकम् ॥४२॥
अन्नवस्त्रादिदानं च स्मृद्धिराज्यप्रदानकम्।
यथा वैभवदानं च पूजनं च विसर्जनम् ॥४३॥
साधूनां भोजनं चापि साध्वीनां भोजनं तथा।
कन्यानां भोजनं चापि कुमाराणां च भोजनम् ॥४४॥
वधूनां भोजनं चापि गर्भिणीनां च भोजनम्।
शाटिकां घर्घरीं चोलीं कुचलीं स्तनबन्धिनीम् ॥४५॥
दद्याद् दाने प्रमदाभ्यो मम प्रसादकारिणीम्।
धनं तु दक्षिणां दद्यात् परिहारं ततश्चरेत् ॥४६॥
एवं मासव्रतं कुर्यात्तस्याः पुत्रो भवेदिति।
पुत्री चापि मया तुल्या भवेन्नास्त्यत्र संशयः ॥४७॥
श्रुत्वैवं व्योमवाणी सा मासं श्रीबदरीव्रतम्।
प्रचकार यथाप्रोक्तं विप्रोऽपि तप आचरत् ॥४८॥
व्रतान्ते बदरीदेवी प्रसन्ना माणिकीरमा।
कन्यारूपा स्वयं भूत्वा निर्जगाम द्रुमान्तरात् ॥४९॥
बदरं सा करे धृत्वा ददौ तद् विप्रयोषिते।
विशदाक्षी फलं नेमे नेमे तां बदरीश्वरीम् ॥५०॥

पतये फललाभार्थं सा चेयेष हृदन्तरे ।
बदरी सहसा भावं ज्ञात्वा विप्राय तद् ददौ ॥५१॥
प्रथमं बदरं दिव्यं सबीजं पुत्रदायकम् ।
द्वितीयं बदरं चास्यै ब्राह्मण्यै सा ततो ददौ ॥५२॥
उवाच बदरीदेवी विप्रं भुंक्ष्व सबीजकम् ।
पुत्रवान् त्वं यथाकालं पत्नीद्वारा भविष्यसि ॥५३॥
विशदाक्षीं ततः प्राह पुत्रस्तेऽपि ततः परम् ।
स्नुषासंकल्पमात्रेण पुत्रिकावान् भविष्यति ॥५४॥
पुत्रिका सा मानसीति चाकस्माद् बाल्ययोगिनि ।
मत्समा श्रीहरेर्भक्ता नारायणी भविष्यति ॥५५॥
द्वितीयं बदरं तस्माद् रक्ष स्नुषार्थमव्ययम् ।
प्रसन्नाऽस्मि भव ब्राह्मि वंशविस्तारयोगिनी ॥५६॥
पौत्रीवंशो मानसस्ते बादराख्यो भविष्यति ।
इत्याशीर्वादमेवैतां ब्राह्मणीं ब्राह्मणं तथा ॥५७॥
दत्वा तिरोऽभवद् बद्रीनारायणी नरेश्वरी ।
कृतकृत्योऽभवद् विप्रो विप्राणी पूर्णमानसा ॥५८॥
नारायणं बदरीशं बद्रीं प्रपूज्य भावतः ।
उद्यापनं समस्तं च यथाशक्ति विधाय च ॥५९॥
यात्रां पूर्णां संविधाय तपःपूर्णं विधाय च ।
ऋषीन्देवान्प्रपूज्याऽपि गंगां विगाह्य वै ततः ॥६०॥
शनैर्नत्वा हरिं स्मृत्वा न्यवर्ततामुभावपि ।
ऋषीकेशं हरिद्वारं पुष्करं सिद्धपत्तनम् ॥६१॥
कृत्वा तीर्थानि तौ मासचतुष्टयोत्तरं मुदा ।
सौराष्ट्रे त्वाययतुश्च क्षेत्रं कुंकुमवापिकाम् ॥६२॥
तीर्थविधिं विधायाऽपि दृष्ट्वा श्रीलोमशं मुनिम् ।
अनादिश्रीकृष्णनारायणं प्रपूज्य तावुभौ ॥६३॥
प्रापतुः स्वगृहं लूनीग्रामं प्रसन्नमानसौ ।
पूजाभिः पूजितौ वासं चक्रतुर्गृहधर्मिणौ ॥६४॥
विशदाक्षी बभूवाऽपि पत्युर्दौहृदलक्षणा ।
सुषुवे सा सुसमये कुमारं शुभलक्षणम् ॥६५॥
ददौ दानानि विप्रश्च जातकर्मादि चाचरत् ।
विशदाक्षी पुत्रवतीगणनां प्रजगाम ह ॥६६॥
बद्रीपार्वीरमादेव्याः कृपयाऽपत्ययोगिनी ।
जाता सौभाग्यसम्पन्ना सफला गृहधर्मिणी ॥६७॥
अथ काले प्रयाते च सुतो यदा युवाऽभवत् ।
नाम्ना निकामदेवेति ख्यातिं प्राप प्रजास्वपि ॥६८॥
विवाहितः स पित्राऽपि धूनीग्रामे शुभालये ।
गिरीश्वरस्य विप्रस्य सुतां सुरेश्वरीं सतीम् ॥६९॥

कन्यां विवाहविधिना जग्राह स तु मण्डपे ।
साऽपि महेन्द्रतुल्यं वै बदर्यनुग्रहोद्भवम् ॥७०॥
पतिं त्वासाद्य मुमुदे निकामदेवनामकम् ।
निकामदेवमाताऽपि स्नुषायै बदरं फलम् ॥७१॥
रक्षितं चिरकालेन सोपाख्यानं ददौ मुदा ।
सुरेश्वरी स्नुषा भुक्त्वा फलं बदरीदैवतम् ॥७२॥
दिव्यज्ञानवती जाता सत्यसंकल्पशालिनी ।
यत्तत् सुरेश्वरी पत्नी कल्पयत्येव मानसे ॥७३॥
तत्तत् सर्वं भवत्येव यथा लक्ष्मीः सरस्वती ।
एवं ते बद्रिके प्रोक्तं सुरेश्वरीकथानकम् ॥७४॥
अथाऽग्रेऽपि कथयामि कथां ते बाल्ययोगिनि ।
त्वमेव बदरी जाता पुत्रिका बाल्ययोगिनी ॥७५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने लूनीग्रामस्य ब्रह्मदेवविप्रस्याऽनपत्यस्य बद्रिकाश्रमे तपसा प्राप्तवरदानबदरफलाभ्यां पुत्रपौत्रीप्राप्तिप्रभृतिनिरूपण-नामाऽष्टमोऽध्यायः ॥ ८ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीरमे देवि कथां भक्तस्य पावनीम् ।
नाम्ना निकामदेवस्य सौराष्ट्रे धूनिवासिनः ॥ १ ॥
धूनिग्रामेऽवसद् विप्रः श्वशुरस्य गृहे शुभे ।
रैवताद्रेररण्येषु वसतीनां गुरुर्हि सः ॥ २ ॥
वैदिकः कर्मधर्मस्थः क्रियाकाण्डपरायणः ।
पञ्चदेवार्चनरतो यजमानसुखावहः ॥ ३ ॥
बभूव स क्रिया यत्र संस्कारमूलिकास्तथा ।
विवाहादिस्वरूपिण्यो यत्र सप्ताहवाचनम् ॥ ४ ॥
देवोत्सवा वत्सरस्योत्सवास्तत्र प्रजाजनैः ।
आकारितः प्रयात्येव बहुमान्यपुरःसरम् ॥ ५ ॥
निष्पादयति कार्याणि समस्तानि यथाविधि ।
ग्रामे ग्रामे यजमानाः सहस्रशोऽस्य चाऽभवन् ॥ ६ ॥
यत्र यत्र प्रयात्येव तस्माद् द्रविणमुत्तमम् ।
विपुलं समवाप्नोति गृहं नयति चोत्सुकः ॥ ७ ॥
अन्नं वस्त्राणि बहूनि विभूषा विन्दतेऽपि च ।
यानवाहनपात्राणि तथोपकरणान्यपि ॥ ८ ॥
गृहीत्वा स्वगृहं याति लोभप्रधान एव ह ।
नाऽन्येभ्यश्चापि विप्रेभ्योऽनाथेभ्यः प्रददात्यपि ॥ ९ ॥

सञ्चयं कुरुते सौधे वस्तूनां नित्यमेव ह ।
स्वज्ञातीनां तथाऽन्येषां कार्यार्थे न ददात्यपि ॥१०॥
गृहमध्ये भवन्त्येव जीर्णानि शरदादिभिः ।
वर्षाभिश्चापि नष्टानि जायन्ते चातपादिभिः ॥११॥
कीटाः खादन्ति वस्त्राणि चान्नान्यपि बहूनि च ।
तथापि नैव लोकेभ्यः प्रददाति हि लोभवान् ॥१२॥
निकामदेवविप्रस्य पत्नी नाम्ना सुरेश्वरी ।
भक्ताऽभूद्दानकार्येषु महोदार्यवती तथा ॥१३॥
भिक्षुकेभ्यः प्रददाति यथा जानाति नैव सः ।
अन्नं वस्त्रं च पात्रं च ददात्यनाथदेहिने ॥१४॥
परमेशः प्रसन्नोऽस्तु चान्तरात्मा हरिः प्रभुः ।
एवमुच्चार्य विप्राणी देहिभ्यः प्रददाति वै ॥१५॥
कृष्णार्पणविधानेन ददाति भक्तियोगिनी ।
पुण्यं चास्यास्ततो नित्यं जायते शाश्वतं बहु ॥१६॥
अन्तरात्मा प्रभुश्चास्याः प्रसन्नो वर्तते ध्रुति ।
पूजाकाले च विप्राणी यदर्पयति शार्ङ्गिणे ॥१७॥
मूर्तौ हरिः समस्तं तद् गृह्णाति दिव्यरूपवान् ।
अनादिश्रीकृष्णनारायणः श्रीवल्लभः स्वयम् ॥१८॥
श्वश्राऽर्पितं बदरं सा बुभुजे पुत्रिकार्थिनी ।
पुत्रीं तथेहमानाया विप्राण्यास्तु गृहे क्वचित् ॥१९॥
बद्रीरूपा नववर्षा कन्या काचित् समाययौ ।
न मे रक्षाकरः कश्चिन्मातापितृविहीनिका ॥२०॥
न कुटुम्बं वर्तते मे रक्ष मां ब्रह्मपत्निके ।
इत्येवमार्थयत् कन्या सुरेश्वरीं मुहुर्मुहुः ॥२१॥
सुरेश्वरी ततो बद्रिं स्नेहपरा ररक्ष ताम् ।
कुरु कार्याणि सर्वाणि गृहस्येव सुता मम ॥२२॥
पालयिष्ये सदा त्वां वै मानसी त्वं सुता मम ।
इत्येवं स्वाश्रये पृष्ट्वा पतिं ररक्ष सा तु ताम् ॥२३॥
कन्याऽपि सेवते मत्वा मातरं पितरं च तौ ।
अथ काले गते प्राप्ते यौवने बाल्योगिनी ॥२४॥
बलं प्राप्याऽपीन्द्रियाणां विकृतिं न जगाम सा ।
पृष्टा विवाहविषये नेत्येवं प्राह भूसुरौ ॥२५॥
उवाच मातरं त्वाध्यात्मिकं प्राग्भवयोगिनी ।
मातर्मनुष्यदेहोऽयं मोक्षार्थं मुख्यतोऽर्जितः ॥२६॥
न मात्रार्थे प्रयोक्तव्यो भवार्थे वा मुमुक्षुणा ।
गतान्यनेकजन्मानि तन्मात्राणि सुखानि च ॥२७॥
तत्र भुक्तानि सर्वाणि न तृष्णान्तो विलोकितः ।
भोगे तु जायते तृष्णाऽधिका या न निवर्तते ॥२८॥
अक्षताया न मे तृष्णा विद्यते जायतेऽपि च ।
अभुक्तायाश्च मुक्ताया मोक्षो हस्ततले मम ॥२९॥
ब्रह्म सम्पाद्यमेवाऽस्ति विवाह्यश्च नरायणः ।
गन्तव्यं त्वात्मना तत्र श्रीमन्नारायणगृहे ॥३०॥
हरेः संगो हि सत्संगस्तदन्यस्तु कुसंगकः ।
सत्संगं दुर्लभं प्राप्य लब्धव्यः परमेश्वरः ॥३१॥
जीवोऽयं मानवे लोके बहुधा स्त्रीव्यंजायत ।
नरोऽपि संबभूवैषः कामनां त्यक्तवान्नहि ॥३२॥
यदा सत्संगमेत्यत्र विज्ञानं ज्ञानमित्यपि ।
विवेकं भेदविज्ञानं लभते भक्तिमेति च ॥३३॥
प्रत्यक्षे श्रीकृष्णनारायणे शक्तिनिधौ प्रभौ ।
तदा संसारपारं वै याति भक्तजनो मुदा ॥३४॥
अनादिश्रीकृष्णनारायणः श्रीपुरुषोत्तमः ।
वर्तते भूतले मातर्गोपालकृष्णबालकः ॥३५॥
दिव्योऽनन्तब्रह्मप्रियापतिः श्रीपरमेश्वरः ।
तं भजित्वा भयं नास्ति कालमायाकुकर्मणाम् ॥३६॥
ये भजन्ते परात्मानं त्यक्तदैहिकवासनाः ।
साधवस्ते सदोक्ता वै साध्व्यस्ता योषितोऽपि च ॥३७॥
कामक्रोधादयो येषां सन्ति नैव कदाचन ।
भक्तेषु चेत् क्वचित् कामो दृश्येताऽपि न बन्धकृत् ॥३८॥
भगवत्संगमात्तस्य दिव्याः कामादयः सदा ।
कृष्णमाहात्म्ययोगेन मायाऽपि चैति दिव्यताम् ॥३९॥
अतः कृष्णे कृष्णभक्ते दुर्गुणोऽपि गुणोत्तमः ।
दिव्य एव भवत्येव मोक्षदः पापनाशकः ॥४०॥
यत्र यत्र कृष्णनारायणो यत्र च तत्प्रियाः ।
तद्रजोधूसरं देहं वाञ्छन्ति भक्तिवेदिनः ॥४१॥
अपि वृक्षास्तृणगुल्मा वल्लिकाः पशुपक्षिणः ।
कृष्णसम्बन्धमापन्नास्ते सर्वे दिव्यतां गताः ॥४२॥
देवपूज्या भवन्त्येव तेषां संगात् प्रमोक्षणम् ।
किं पुनर्मानवा भक्ताः कृष्णसेवापरायणाः ॥४३॥
सदा कृष्णध्यानपूजानामस्मृत्यादिकारकाः ।
मातस्त्वं भजसे कृष्णं श्रीपतिं पुरुषोत्तमम् ॥४४॥
ततोऽहं दिव्यतां प्राप्ता सेवया ते निरन्तम् ।
नाऽन्यं पतिं समिच्छामि श्रीकृष्णकान्तमन्तरा ॥४५॥
सर्वत्र भगवत्प्रीतिहेतुस्तप उदीरितम् ।
प्रसादितो वेधसाऽपि हरिः पूर्वं तपोमयैः ॥४६॥
निष्कामार्पणभावैश्च सनकाद्यैः प्रसादितः ।
अन्ये विवेकवन्तोऽपि विष्णोस्तोषणहेतवे ॥४७॥

समाचरन्ति बहुधा तपांसि संयमानपि ।
संयमेन च वर्तन्ते भगवत्प्रीतिकामुकाः ॥४८॥
बदर्यां श्वेतभवने तपः कुर्वन्ति साधवः ।
भगवत्प्रेमलब्ध्यर्थं सेवाप्राप्त्यर्थमित्यपि ॥४९॥
अनेन वा परैश्चापि जन्मभिः पुरुषोत्तमः ।
यावत्प्रीतो भवेत्तावत्तपः कुर्यां हि शीलिनी ॥५०॥
हरेर्दास्यप्रतापेन शिवाब्राह्मीरमासमा ।
भविष्यामि हरेर्भक्त्या मातस्ते कृपयाऽपि च ॥५१॥
स्रक्चन्दनांऽशुकाऽऽभूषानैवेद्यसेवनादिभिः ।
प्रसाद्य श्रीहरिं कान्तं प्राप्स्यामि स्वामिनं प्रभुम् ॥५२॥
इहाऽमुत्र च सर्वासां निःश्रेयसकरं हि तत् ।
दास्यं तपःस्वरूपं वै श्रीकृष्णस्य महात्मनः ॥५३॥
तत्रोद्युक्तस्य विघ्नौघा भवन्ति न कदाचन ।
नानाविधानि भोग्यानि स्वर्णाऽलंकारसम्पदः ॥५४॥
खाद्यपेयरसाद्याश्च जायन्ते बन्धनाय न ।
मातर्लोकप्रवाहोऽयमन्धानामन्धगामिवत् ॥५५॥
वहत्येव विना ज्ञानं यत्पारो नैव लभ्यते ।
कामिन्यो विधवाश्चापि कामतृष्णाऽऽकुलास्तु याः ॥५६॥
मृतं कान्तं प्रशोचन्ति चाश्रयन्ति नरान्तरम् ।
कृष्णैकभक्तिमत्यस्तु तरुण्यः सधवा अपि ॥५७॥
कामसुखं त्ववमत्य भजन्ति श्रीहरिं पतिम् ।
एषणा वासना चाप्यविवेकस्तत्र बन्धनम् ॥५८॥
दिव्यता भावना चात्मज्ञानं निःश्रेयसां प्रदम् ।
तस्मात् प्रीतये कृष्णस्य प्रेमभक्तियुतं तपः ॥५९॥
कर्तव्यं मोक्षदं मातर्मया त्वत्सन्निधाविह ।
कृष्णे प्रीतिः प्रकर्तव्या मातः प्रेष्ठतमे मया ॥६०॥
यद्यत् प्रियं भवत्यस्य कार्यं तत्तन्मया सदा ।
तस्य रुच्यनुसारेण वृत्त्यं नित्यं मया तथा ॥६१॥
विप्रकृष्टेऽन्तिके वापि स्थेयं तदाज्ञया सदा ।
नाऽप्रियं निजभक्तस्य क्वापि कृष्णः करोति हि ॥६२॥
भक्तिमती यत्र यत्र वर्तते च तदाशया ।
तत्र तत्र हरिर्याति भक्तायाः प्रेमसंवशः ॥६३॥
अतो नैव हि भक्ताया विरहोऽस्य भवेत् क्वचित् ।
कृष्णो भक्तस्य विरहं सोढुं शक्तो न वै क्वचित् ॥६४॥
मातः शरीरमेतत्तु मायिकं जीवबन्धकृत् ।
जन्मनः कारणं माया तमोऽज्ञानं च मोहनम् ॥६५॥
सत्संगं सम्विधायैव मायामोहादि नाशयेत् ।
प्रेम्णा ध्यायेत् परब्रह्म साक्षाद्धरिं रमापतिम् ॥६६॥
क्षेत्रज्ञेशं परमेशं हृत्स्थं कान्तं मनोहरम् ।
दिव्यानन्दप्रदं ध्यायेद् बालकृष्णं जगत्पतिम् ॥६७॥
कर्णाभ्यां शृणुयात्तस्य लीलाचरित्रमुत्सवात् ।
हरेर्लीला गरीयस्यस्तपोदानेभ्य उत्तमाः ॥६८॥
हरेर्योगेन मातर्वै निष्कामत्वं सदा भवेत् ।
पूर्णकामस्य योगेन सदा स्यात् पूर्णकामता ॥६९॥
दृष्ट्वा नरं बालकं वा युवानं वृद्धमित्यपि ।
विक्रियां प्राप्नुयान्नारी मायायुक्ता हि सा मता ॥७०॥
नरस्य त्रिविधस्याऽपि त्वंगानां दर्शने सति ।
विक्रियां तु मनाक् प्राप्ता भवेत् साऽपि तु मायिकी ॥७१॥
पशुं दृष्ट्वा यथा तद्वन्नरं दृष्ट्वा न विक्रियाम् ।
प्राप्नुयात् सा भवेज्जितेन्द्रिया नारी विरागिणी ॥७२॥
रहो विकारमापन्ना मध्यरागा हि सोच्यते ।
पुंसो योगेऽपि यस्या न विकृतिः सा तु चेश्वरी ॥७३॥
ब्राह्मी मुक्तानिका बोध्या ब्रह्मप्रिया हरिप्रिया ।
महावैराग्यसम्पन्ना दिव्यनारायणप्रिया ॥७४॥
एतादृशी तु या नारी नारायणपरेश्वरे ।
वीक्ष्य कामं मदं क्रोधं दिव्यं तं मनुते सदा ॥७५॥
तस्या ज्ञेयोपासना तु मेरुतुल्या हि निश्चला ।
तयाऽऽप्नुयान्महासिद्धिमुत्तमामिह जन्मनि ॥७६॥
मायादोषैः काममानस्वादैर्दम्भाशयस्त्रियाः ।
कृतार्थता न वै स्याद्धि प्राप्तौ सत्यामपि प्रभोः ॥७७॥
मायादोषा नाशनीया अमायिकप्रसेवनैः ।
अमायिको हरिः साक्षात्तत्सन्तश्चाप्यमायिकाः ॥७८॥
तेषां समागमात् त्याज्या माया च मायिकाऽरयः ।
ब्रह्मभूतया वृत्त्यं वै दास्या कृष्णस्य योषिता ॥७९॥
न स्थातव्यं क्षणं चापि विना कार्ष्णीं हि संगतिम् ।
नराकारे हरौ स्थेयं सर्वानन्दप्रदे प्रभौ ॥८०॥
साधुवाक्यानि संगृह्य वृत्त्यं श्रीपरमेश्वरे ।
अहंममते सन्त्यज्य वर्तितव्यं मया हरौ ॥८१॥
कठिनानि सद्वचांसि ह्यपि ग्राह्याणि सर्वथा ।
अगुणाः संविनश्यन्ति प्रसादात् परमात्मनः ॥८२॥
दुर्गुणाश्च विनश्यन्ति सतां प्रसादनात्ततः ।
वृत्त्यं तदग्रे निश्छद्ममनोदेहेन्द्रियादिभिः ॥८३॥
सर्वथा तत्प्रियं कार्यं कार्यं नैवाऽपराधनम् ।
अपराधे क्वचिज्जाते प्रसादनीयाः सेवनैः ॥८४॥
सन्तो यस्याः प्रसन्नाः स्युस्तस्याः कालभयं नहि ।
श्रेयः परं निश्चितं च तस्याः स्यान्नात्र संशयः ॥८५॥

ज्ञानवती ब्रह्मरूपा न बिभेति कुतश्चन ।
कृतार्था कृष्णयोगेन मातर्भवति भामिनी ॥८६॥
विश्वस्ता श्रीहरौ खलु न बिभेति कुतश्चन ।
अनादि श्रीकृष्णनारायणस्याऽस्मीतिनिश्चिता ॥८७॥
स्निग्धप्रीतिमती कृष्णे न बिभेति कुतश्चन ।
कृष्ण एव वरस्तस्याः पातिव्रत्यं हरौ सदा ॥८८॥
हृदयेऽस्या भयं नास्ति कृतार्थाया हरेः श्रियाः ।
कृष्णस्य वा सतां प्रीत्यै सर्वे जह्याद्धि मायिकम् ॥८९॥
राज्यं पतिं च भोगांश्च गृहं कुटुम्बिनः स्त्रियम् ।
न तस्याः क्वापि किमपि भयं त्वन्यत् प्रजायते ॥९०॥
दिक्करिणी मदोन्मत्ता यथा तथैव सा भवेत् ।
कृष्णग्रहगृहीतात्मा नान्यदिच्छेत् कदाचन ॥९१॥
अनेनैव हि देहेन यायात् सा परमां गतिम् ।
संस्कृता चाऽसंस्कृता वा भगवद्धाम याति सा ॥९२॥
ब्रह्मधामाऽधिपः कृष्णो विरहाऽश्रमिणामिह ।
सुखायाऽऽयाति च सुखयित्वा नयति चाऽक्षरम् ॥९३॥
एवं सर्वेषु चाण्डेषु भक्तसुखाय जायते ।
सुखयित्वा सखीन् सखीर्नयत्यक्षरधाम सः ॥९४॥
देवेषु जायते कृष्णः क्वचिदृषिषु पितृषु ।
क्वचिन्नरेषु नारीषु यादस्सु पशुपक्षिषु ॥९५॥
यावदर्थं विनिर्वर्त्य मूलरूपं व्रजत्ययम् ।
द्विभुजं तु निजं रूपं त्र्याकृति मुक्तसेवितम् ॥९६॥
भक्तेच्छया क्वचिन्निजेच्छयाऽपि बहुबाहुमान् ।
गृहस्थो वा विरक्तो वा जायते पुरुषोत्तमः ॥९७॥
श्रेयोमूर्तिः सर्वथैव मातः सोऽस्ति परेश्वरः ।
बहुरूपं महैश्वर्यं मातस्तस्य कृपानिधेः ॥९८॥
दास्यो जानन्ति नाऽन्यास्तु कृष्णस्य चान्तरात्मनः ।
सोऽन्तर्यामिस्वरूपेण सर्वत्राऽऽस्ते वरः प्रभुः ॥९९॥
तस्मै समर्पिता चास्मि मातः कृष्णाय सर्वथा ।
कृष्णाश्रयबला चाहं नान्यं पतिं वृणोमि वै ॥१००॥
हरे कृष्ण बालकृष्ण श्रीकान्त पुरुषोत्तम ।
त्वमेव मे पतिर्नित्यस्तवाऽस्मि शरणं गता ॥१०१॥
इत्युक्त्वा सा विरराम बद्रिके बालयोगिनी ।
सुरेश्वरी च माताऽपि महाश्चर्यपराऽभवत् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बालयोगिनीगीतायां सुरेश्वरीविप्राण्यै पुत्रीरूपाया बदर्यां बालयोगिन्या मुक्ताया ब्रह्मभावोपदेशादिरिति-निरूपणनामा नवमोऽध्यायः ॥ ९ ॥

श्रीनरनारायण उवाच—

ततः सुरेश्वरी माता पुनः पप्रच्छ कन्यकाम् ।
कथं प्राप्येत भगवान् पुनर्मे वद विस्तरात् ॥ १ ॥
इत्युक्ता सा पुनः प्राह प्रसन्ना बालयोगिनी ।
तत्सर्वं ते कथयामि शृणु बद्रीरमे हितम् ॥ २ ॥
मातः प्राप्यो भवेत् कृष्णनारायणोऽतिसेवया ।
दास्येन स्नेहपूरेण तदर्थार्पणकर्मभिः ॥ ३ ॥
देहस्तस्य कृते कार्यस्तदर्थानीन्द्रियाण्यपि ।
तदर्थं मानसं चाहं चित्तं बुद्धिस्तदर्थिका ॥ ४ ॥
कामो मोदः प्रमोदश्चोत्सवो महस्तदर्थकाः ।
रमणं स्वपनं केलिः स्पर्शः शय्या तदर्थिकाः ॥ ५ ॥
अन्तरं वा बहिश्चापि रहस्यं च तदर्थकम् ।
गुप्तं प्रकाशं सर्वं वा तदर्थं कार्यमञ्जसा ॥ ६ ॥
तेन लभ्येत कमलाकान्तः कान्ततया प्रभुः ।
मया तदर्थं सर्वं वै कृतं चाहर्निशं मम ॥ ७ ॥
मिलिष्यतीति भगवान् भक्तायाः स्नेहपाशवान् ।
भगवन्तं हृदये मे पश्यामि संस्मरामि च ॥ ८ ॥
शयने भोजने याने मातः पश्यामि तं मनाक् ।
हसमानं क्वचित् कान्तं चाह्वयन्तं निजान्तिके ॥ ९ ॥
रममाणं रामये तं रममाणा हि तन्मयी ।
स एवं मे त्र्यवस्थासु सहयुक्तो विभाव्यते ॥१०॥
नैनं त्यक्त्वा परं कंचित् स्मरामि मातरन्वहम् ।
खानपानगतिस्थानशयनश्रवणादिषु ॥११॥
तमेव श्रीप्रभाकान्तं प्रसेवे सहयोगिनी ।
रमाभर्तुश्च साधूनां कृपयाऽहं तथाविधा ॥१२॥
आहारनियमं प्राप्ता नारायणे परात्मनि ।
आत्मनः संयमं प्राप्ता मालतीशे परात्मनि ॥१३॥
एतादृशी सदा साध्या कृष्णैकान्तिकता स्थिरा ।
सर्वाभिश्चापि नारीभिस्तदा मोक्षः करे स्थितः ॥१४॥
ब्रह्मचर्यव्रतं तद्वै यद्वै ब्रह्मणि कामना ।
ब्रह्मचर्यव्रतेनैव धर्माः सिद्ध्यन्ति सर्वशः ॥१५॥
मुख्यं कार्यं कृष्णयोगो नारीणां सर्वदोत्तमः ।
दिव्यताऽऽपादको मातर्मोक्षस्तेन प्रजायते ॥१६॥
श्रीकृष्णे कान्तवृत्तिर्या परावर्त्या न सा क्वचित् ।
पोषणीया साधुसंगात् प्रयत्नेन हि योषिता ॥१७॥
कृष्णस्याऽरुचिकृद् यत्तत् परावृत्त्यं द्रुतं खलु ।
अप्रसादकरो भावस्त्याज्यो निसर्गजोऽपि वै ॥१८॥

नित्यं सदनुरोधेन वर्तितव्यं सुयोषिता ।
सा जायते संगयोग्या दिव्यमुक्तिप्रदायिनी ॥१९॥
देहाभिमानं मानं वा त्याज्यं कृष्णान्तिके सदा ।
एवंविधाया भक्तायाः श्रेयःसिद्धिर्भवेदिह ॥२०॥
सत्संगस्तादृशीनार्याः कर्तव्यः श्रेयसाम्प्रदः ।
या कृष्णे योजयेत् स्निग्धा सैव माता पिता प्रभुः ॥२१॥
या कृष्णं स्मारयेन्नैव योजयेन्न परेश्वरे ।
श्रेयोहेतुं बोधयेन्न शैथिल्यं दर्शयेद्धरौ ॥२२॥
दोषान् प्रदर्शयेत् सत्सु श्रीकृष्णे दुर्गुणाँस्तथा ।
पातयेद् भगवद्योगात् सा संगार्हा न सर्वथा ॥२३॥
तस्या वचनं मान्यं न स्थेयं साकं तया न च ।
निरयाणां प्रदात्री या सा न माता शुभावहा ॥२४॥
कृष्णश्चयवेत यद्वाक्यान्मान्यं तस्या वचो नहि ।
कुतर्काश्चेत् हृदयेऽपि भवेयुः कृष्णबाधकाः ॥२५॥
तदा कृष्णस्य सततं कर्तव्यं कीर्तनं शुभम् ।
प्रार्थनीयोऽपि भगवान् दीनबन्धुर्दयार्णवः ॥२६॥
हरे नारायण कृष्ण तवाऽस्मि पाहि मामिह ।
सतां नामानि दिव्यानि कीर्तनीयानि वै तथा ॥२७॥
आत्मनिष्ठा तथा कृष्णनिष्ठा कार्या दृढा सदा ।
दिव्यता च भवेच्छ्रेष्ठा कुतर्काणां विनाशिनी ॥२८॥
कृष्णस्याकारसंस्फूर्तिर्यथा स्यात् कार्यमेव तत् ।
यत्र रूपे न वै कृष्णो द्रष्टव्यं रूपमेव न ॥२९॥
यत्र गन्धे न वै कृष्णो घ्रातव्यो गन्ध एव न ।
यत्र स्पर्शे न वै कृष्णः स्प्रष्टव्यः स्पर्श एव न ॥३०॥
यत्राऽऽनन्दे न वै कृष्ण आनन्दयितव्य एव न ।
यत्र स्वादे न वै कृष्ण आस्वादनीय एव न ॥३१॥
यत्र स्वापे न वै कृष्णः स्वपितव्यं न तत्र ह ।
यत्र स्थाने न वै कृष्णः स्थातव्यं तत्र नैव च ॥३२॥
यत्र वेषे हरिर्नास्ति वेषो विषायते मम ।
यत्र तत्त्वे न वै कृष्णः सर्वं दुःखायते मम ॥३३॥
ईदृग्भावादिसंसिद्ध्या कृष्णः सिद्ध्यति कान्तवत् ।
ईदृक् श्रीकृष्णयोगेन मातर्मुक्ता भवाम्यहम् ॥३४॥
मुक्तया च मया नित्यं सेव्यते परमेश्वरः ।
एवंविधा ब्रह्मवेत्री परमाप्नोति मापतिम् ॥३५॥
भक्त्याश्रयं परब्रह्म प्रत्यक्षं पुरुषोत्तमम् ।
भक्त्या त्वनन्यया मातश्चाप्नोति कृष्णकामिनी ॥३६॥
पृथिवी स्त्री सदा बोध्या बीजप्रदः पतिः प्रभुः ।
सर्वा नार्यः कृष्णपत्न्यः पार्थिव्यो माधवांगनाः ॥३७॥
अक्षरं चावताराश्च मुक्ता मुक्तानिकास्तथा ।
ईश्वराश्च सुरा माया तत्त्वानि चेतनास्तथा ॥३८॥
शरीरं यस्य कृष्णस्य शरीरं त्वंगनात्मकम् ।
स कृष्णः सर्वतस्त्वात्मा सर्वकमपतिः प्रभुः ॥३९॥
पुरुषोत्तमरूपः स ब्रह्मपुरेश्वरो नरः ।
अनन्तैश्वर्यसम्पन्नः साक्षात् सेव्योऽस्ति नः पतिः ॥४०॥
एवं ज्ञानं परज्ञानं मुक्तिसाधनमुत्तमम् ।
पूर्णज्ञानवती सा स्यात् कृष्णस्यैव हि कामिनी ॥४१॥
चाञ्चल्यवर्जिता स्यात् सा कृष्णेतरस्मिन् सर्वथा ।
कृष्णे नेत्रं योजनीयं त्वक् कृष्णे श्रीरमेश्वरे ॥४२॥
हस्तपादास्तथा कृष्णे योक्तव्याः माधवीश्वरे ।
इन्द्रियाणि समस्तानि योक्तव्यानि रमेश्वरे ॥४३॥
चाञ्चल्यं सर्वथा कृष्णे लग्नं स्थिरतरं भवेत् ।
श्रद्धायास्तारतम्येन भक्तशैथिल्ययोगतः ॥४४॥
तारतम्यं स्थिरत्वेऽपि हरौ भक्तस्य संभवेत् ।
सत्सेवायां परा श्रद्धा यस्यास्तस्या हरावपि ॥४५॥
भवत्येव न सन्देहः सा दिव्या जायते द्रुतम् ।
लक्ष्मीनारायणसंहितायास्तु सत्कथा मुहुः ॥४६॥
श्रोतव्यास्ताभिरुदयो भक्तेः स्नेहस्य जायते ।
हरौ स्निग्धा हरिप्स्येव नारायणी प्रजायते ॥४७॥
गाढः स्नेहो हरौ नित्यवियोगाऽसहनात्मकः ।
जायते योषितो यस्याः सा स्वाभीष्टविलोकने ॥४८॥
प्राणान् जह्याद् विना कृष्णं सर्वं तस्या विषायते ।
विकला जायते कृष्णं विना सौख्यं लभेत न ॥४९॥
रक्ताऽस्थिमल्मांसादिभृतेषु सर्वदेहिषु ।
विरागभावमापन्ना स्थैर्यं नैति हि कुत्रचित् ॥५०॥
पुरुषा दुर्लभा नैव श्रेयोऽध्वपरिपन्थिनः ।
संसारभ्रमदातारः परत्राऽत्र च दुःखदाः ॥५१॥
दुष्पूरकामाः सर्वस्वहर्तारो न हिताः परे ।
बहुजन्मसु भुक्तास्ते मुहुर्जन्मप्रदा नराः ॥५२॥
एक एव हि सत्संगः श्रीकृष्णो मोक्षदो मम ।
तं विना पुत्तलं सर्वं कथं पुत्तलमाश्रये ॥५३॥
आत्मनिष्ठावती नारी नरेक्षणात्र मुह्यति ।
नापि क्षुभ्यति युक्तात्मा दिव्या कृष्णप्रिया क्वचित् ॥५४॥
आत्मात्मा नित्यसुखवान् स प्राप्यो माधवीश्वरः ।
आत्माऽहं ब्रह्मरूपाऽस्मि दास्यस्मि वै प्रभापतेः ॥५५॥
ब्रह्मात्माऽसंख्यसखीभिः सेवितस्य प्रियाऽस्म्यहम् ।
स कृष्णोऽस्ति नराकारः स कृष्णः शरणं मम ॥५६॥

एवंविधाया भक्ताया दिव्या दृष्टिर्विवर्धते ।
अतो न स्वर्गभोगानामिच्छास्तस्याः प्रवर्तते ॥५७॥
तदा लौकिकदेहानां भोगतृष्णा कुतस्तराम् ।
एतादृश्या नित्यसाध्व्या योगिन्याः परमं सुखम् ॥५८॥
माया तु दुःखरूपाऽस्ति ह्यभक्तायाः कृते सदा ।
भक्तायास्तु कृते कृष्णे सेवायां पुष्टिदा हि सा ॥५९॥
भक्तायाः सुखदा कृष्णयोगदा दिव्यताप्रदा ।
मोक्षदाऽपि भवत्येव कृष्णप्रसाददायिनी ॥६०॥
माया बन्धकरी या वै ह्यभक्तानां कृते मता ।
भक्तानां योषितां सा तु भक्तिपुष्टिकरी मता ॥६१॥
देहेन मनसा वाचाऽर्पणेन कामनादिभिः ।
सेवन्ते योषितः कृष्णं देहाद्यास्तत्र मोक्षदाः ॥६२॥
कृष्णप्रसन्नताप्राप्तिसाधनं स्त्रीवपुस्ततः ।
प्रसादितो गोपिकाभिर्मोक्षदो माधवीश्वरः ॥६३॥
तथा मया प्रसाद्योऽयं रमाकृष्णनारायणः ।
सर्वात्माऽक्षरनाथश्च कालकालेश्वरेश्वरः ॥६४॥
यत्र कृष्णाचार्यकान्ते विकल्पोऽन्यो न जायते ।
निर्विकल्पा स्थितिः सा वै साधनीया हि योषिता ॥६५॥
नरवत् कामभावेषु प्रवर्तेत प्रभुर्यदि ।
अधिकोऽपि प्रवर्तेत प्रवर्तेत ततोऽधिकः ॥६६॥
सर्वविषयभोगेषु प्रवर्तेत ततोऽतिगः ।
सर्वलोकविगर्ह्येषु तथापि माधवीश्वरे ॥६७॥
शंका यस्या न जायेत दिव्यता उतजायते ।
सर्वकर्तरि कृष्णे वै घटते सर्वकारणे ॥६८॥
सर्वमेवेति जानाति सेवते सा हरिप्रिया ।
हरिस्तु वह्निवद् व्योमवत्तथा लेपवर्जितः ॥६९॥
कोटिश्वराणीभोक्ताऽपि कोटिमुक्तानिकापतिः ।
बोद्धव्यः सर्वदा धाम्नि राधाप्रज्ञारमापतिः ॥७०॥
यद्दिव्यं भगवद्धाम ब्रह्म चामृतमक्षरम् ।
तत्र मया प्रापणीयः कृष्णः कान्तः प्रियः पतिः ॥७१॥
एवंविधा मम प्रज्ञा प्रमा विकल्पवर्जिता ।
श्रीकृष्णे सर्वदा चास्तु स्वामिश्रीमतिवल्लभे ॥७२॥
एवं शिष्या निर्विकल्पनिश्चयाढ्या हरिप्रिया ।
कृतकृत्या निर्भया च कार्ष्णी नारायणी मता ॥७३॥
कृष्णसम्पत्तियुक्ताद्धै गुरोर्निजेष्टसिद्धयः ।
प्रजायन्ते ततः सेव्यो गुरुर्नारायणस्थितिः ॥७४॥
गुरोर्बलेन शिष्याऽपि कनिष्ठोत्कृष्टतां व्रजेत् ।
निर्विकल्पस्थितिर्यस्याः साक्षात्कृष्णपदाम्बुजे ॥७५॥
सा नैवाऽऽकृष्यते त्वन्यैः कृष्णशून्यैस्तरंगकैः ।
भगवन्तं प्रपन्ना या न त्वन्यमानसा क्वचित् ॥७६॥
सा मायापारमापन्ना ब्रह्मप्रिया न संशयः ।
कृष्णे कृष्टशरीरा सा जायते पुरुषोत्तमी ॥७७॥
कृष्णानन्दे कृष्णपत्नी भूत्वाऽश्नुतेऽतिकामनाः ।
कृष्णसेवां तु सम्प्राप्ता मोदते कृष्णकान्तके ॥७८॥
एवं मातर्महानारायणकृष्णं भजाम्यहम् ।
दासी भूत्वाऽङ्गनारूपा सेवे श्रीवल्लभम् प्रभुम् ॥७९॥
अरुचिर्भूयसी मेऽस्ति कृष्णहीने तु वस्तुनि ।
अतस्तु मायिके त्यागे सदाऽस्ति वै रुचिर्मम ॥८०॥
सत्सु प्रीतिर्हरौ प्रीतिर्नैसर्गिकी ममाऽस्ति च ।
श्रीकृष्णे वल्लभे सर्वस्वामिनि रुचिरस्ति मे ॥८१॥
नित्यं मंगलमूर्तिर्वै कृष्णनारायणः प्रभुः ।
अवतारी समस्ताविर्भावानां परमेश्वरः ॥८२॥
परितश्चान्तरे बाह्ये सोऽयं कान्तो मयेक्ष्यते ।
दिव्यो दिव्यगुणागारः साकारो दिव्यभूषणः ॥८३॥
कोटिमुक्तानिकाकान्तश्चातितेजःप्रपूरितः ।
दिव्यलावण्यमाधुर्यौज्ज्वल्यशीतलताऽन्वितः ॥८४॥
दिव्यचन्दनपुष्पाद्यैरर्चितो ब्रह्मशक्तिभिः ।
अतिप्रीत्या वीक्षमाणो मां कटाक्षेण हर्षकृत् ॥८५॥
प्रतिक्षणं चेक्ष्यतेऽयं नवो नवो हरिः पतिः ।
तत्र भक्तिर्मम मातर्निष्कामा निश्चला सदा ॥८६॥
पुत्रे धने स्त्रियां कान्ते इव स्नेहो हरौ मम ।
एवं सत्सु हरेश्चापि प्रेम साहजिकं मम ॥८७॥
तेषां कीर्तनवेलायां मनो मे तत्र धावति ।
श्रीकृष्णे वल्लभाचार्ये गोपीनां वल्लभे प्रभौ ॥८८॥
ताराभे त्वात्महृदये विद्युदाभेऽनलप्रभे ।
वाडवाभे महातेजोनिभे चात्मनि मे धवः ॥८९॥
ममाऽऽनन्दप्रदश्चास्ते ब्रह्मानन्दप्रवर्षकः ।
सर्वानन्दप्रदश्चास्ते तादात्म्येन सदा मयि ॥९०॥
निरावरणरूपाऽहं पश्यामि स्वामिनं मयि ।
महामोदप्रदं शुद्धं पूर्णं पश्यामि मत्परम् ॥९१॥
एतादृश्या मम मातर्मायारागो न विद्यते ।
नैर्गुण्ये वर्तमानायाः कुतो वै गुणलेपना ॥९२॥
कुतोऽत्र वासनाश्चापि कुतः कर्माशयास्तथा ।
कुतः कोशा भौतिकाश्च कुत संगो विनाशिनाम् ॥९३॥
कुतो द्रोहश्च भक्तानां कुतो दोषेक्षणं सताम् ।
कुतोऽहंममतास्पर्धाः कुतो भेदादि कल्मषम् ॥९४॥

कुतो मानं सर्वदोषनिकरं सत्सु मापतौ।
राधारमणयोगेन मातर्दिव्यं समस्तकम् ॥९५॥
विद्यते मे शरीरं च शारीरोऽपि सुसेवकः।
एतादृशीनां मुक्तानामन्यासां कृष्णयोषिताम् ॥९६॥
मातर्भवामि पत्त्राणा रजोधूल्यादिधूसरा।
भृत्या दासी प्रेष्यधर्मा दीना च सेविकाऽपि च ॥९७॥
एवं माहात्म्यपाना च मतिः कृष्णाचलेत्नहि।
नाऽस्या दुष्यति दासीत्वं कृपावेदी तु सा हरेः ॥९८॥
नाऽस्याः पतनं दासीत्वात् कृष्णकान्तात्वतः क्वचित्।
सा शक्तिः स्यात् पराब्राह्मी कृष्णनारायणी प्रिया ॥९९॥
तस्या भयाद् वाति वातस्तपत्यर्कोऽपि तद्भयात्।
मेघाः ऋतूनाश्रयन्ति तस्या भयात् सदाम्बरे ॥१००॥
अब्धिस्तिष्ठति वेलायां भयात्तस्य ध्रुवः स्थिरः।
लोकपालास्तथा मृत्युः कालो माया च तद्भयात् ॥१०१॥
वर्तन्ते निजकार्येषु यथायुक्ता यथायथम्।
एतादृशी महाशक्तिर्जायते सा हरिश्रिता ॥१०२॥
तमनादिकृष्णनारायणं गोपालनन्दनम्।
प्राप्ताऽस्म्यनादिकान्तं श्रीपतिं श्रीकान्तवल्लभम् ॥१०३॥
तथा वर्तेत या नारी, प्राप्नुयात्तं पतिं प्रभुम्।
त्वं मातस्तं कृष्णकान्तं प्राप्नुहि श्रीप्रसेवितम् ॥१०४॥
इत्युक्त्वा विररामाऽपि सा कन्या बालयोगिनी।
सुरेश्वरी दधारापि हृदये बदरीश्वरि ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
बालयोगिनीगीतायां सुरेश्वर्यै भगवत्प्राप्तिस्थितिप्रभृति-
बालयोगिन्युक्तमित्यादिनिरूपणनामा
दशमोऽध्यायः ॥ १० ॥

**श्रीनरनारायण उवाच—**

बदरीप्रिये शृणु त्वं च ततो देवी सुरेश्वरी।
पप्रच्छ दास्यं कन्यायै किंविधं तद् वदामि ते ॥ १ ॥
दास्यं दानमयं सर्वमात्मदानं महत्तरम्।
सुखदानं मनोदानं बुद्धिदानं तु शार्ङ्गिणे ॥ २ ॥
चित्तदानं मानदानं सर्वेन्द्रियप्रदानकम्।
प्राणदानं देहदानं दास्यं सर्वप्रदानकम् ॥ ३ ॥
मातस्त्वेवं दासिका या ब्रह्मप्रिया तु सा मता।
एतादृशीं परां दासीं मानवश्चाऽमरोऽपि वा ॥ ४ ॥
चालयितुं समर्थो न कृष्णकान्तात् पथान्तरे।
दास्याश्चैवंविधायास्तु भयं मनाङ् न विद्यते ॥ ५ ॥
दासी सा देवदेवस्य श्रीपतेः पद्मिनीपतेः।
यथा तथा सतां दासी प्रज्ञावद् बालयोगिनी ॥ ६ ॥
धन्येयं या सतां योगं हरेर्योगं च विन्दते।
नरं कान्तं बालकृष्णं सेवते बालयोगिनी ॥ ७ ॥
सिद्धं कार्यं भवेत् तस्या मातर्दास्यं चिदम्बरे।
यदत्रानुभूयमानं विकासतेऽक्षरे पदे ॥ ८ ॥
तद्रूपं चैतदेवापि स्वसिद्धं परमात्मनः।
श्रेयसे चोभयं रूपं तथाऽनन्तानि यान्यपि ॥ ९ ॥
सच्चिदानन्दरूपाणि लावण्यसंभृतान्यपि।
दिव्यैश्वर्यपूरितानि सर्वालंकारवन्ति च ॥१०॥
कोटिकामसुरूपाणि चानन्ततैजसानि हि।
नैकशक्तिकलावन्ति सर्वान्तर्यमनानि च ॥११॥
अनन्तकोटिराधाश्रीलक्ष्मीक्षासुखमुत्तमम्।
अनादिश्रीकृष्णनारायणस्य दर्शनेस्ति वै ॥१२॥
स कार्यार्थे बहून्येव धत्ते रूपाणि माधवः।
यथोपयोगं योजयित्वा तिरोधापयति प्रभुः ॥१३॥
इन्द्रियात्मा च देवात्मा विषयात्मा समीक्ष्यते।
मायिकैर्न तु दिव्यैर्वै दास्यं प्राप्तैर्हि देहिभिः ॥१४॥
मायामयीच्छया लीला नारायणस्य साऽस्ति हि।
सर्वा कल्याणरूपा सा दिव्यधामप्रदा हि सा ॥१५॥
नराकारे भावना सा दिव्या दासीत्वबोधिनी।
नराकारेषु या सत्सु दिव्या सा भावनोत्तमा ॥१६॥
कृष्णवत् सर्वथा कार्या कृष्णदासित्वबोधिका।
नारीष्वपि च साध्वीषु दिव्या सा भावनोत्तमा ॥१७॥
कर्तव्या सर्वदा मातर्दासित्वबोधिका तथा।
ब्रह्मप्रियात्वं चाप्येत तया सर्वोर्ध्वया ततः ॥१८॥
एवं भावनया युक्तं दास्यं पूर्णं प्रकाशते।
संसाध्यैवं परं कान्तं कृष्णं लभते नाऽन्यथा ॥१९॥
दास्याः कृष्ण इन्द्रियाणि दिव्यानि विदधाति वै।
कृष्णयोगेन सौगन्ध्यं दिव्यं देहे प्रजायते ॥२०॥
कृष्णयोगेन च नित्यं निरावरणता भवेत्।
कृष्णयोगेन चाऽऽनन्दपूर्णताऽहर्निशं भवेत् ॥२१॥
उत्तमाः सर्वविषयाः कृष्णयोगेन कृष्णवत्।
जायन्ते शान्तये मातर्निरत्ययास्तथाऽव्ययाः ॥२२॥
असंख्यसृष्टिनाथस्य सुखोर्ध्वं त्वाक्षरं सुखम्।
ततोऽनन्तगुणं कृष्णकान्तस्य सुखमुत्तमम् ॥२३॥
ब्रह्माद्या ईश्वरास्तस्याऽन्तिके रंकजना इव।
भवन्ति सर्वथा मातस्तं कृष्णं हृदि धारयेत् ॥२४॥

पूर्णानन्दनिवेस्त्वंके सुखं सर्वं समाप्यते ।
न दूरे तादृशं चास्ते तस्मात् कृष्णेऽर्पिता भवेत् ॥२५॥
एवं श्रीमत्कृष्णमूर्तिर्भूयानन्दपरिप्लुता ।
जाताऽस्मि ते कृपयाऽत्र मातर्दास्यं भजामि च ॥२६॥
तादात्म्यानुभवेनैव कृष्णकान्तोऽधिभुज्यते ।
नैर्गुण्यभावमापन्ना सेवते या तु दासिका ॥२७॥
सेविनं कृष्णकान्तं तं लभते सा निजान्वितम् ।
महानन्दप्रदं सर्वभोगतृप्तिप्रदं प्रभुम् ॥२८॥
अल्पापि कृष्णकान्तार्था यस्या बुद्धिः क्रियाऽपि च ।
सा दिव्या ब्रह्मशक्त्याख्या सर्वसिद्धिप्रवर्षिणी ॥२९॥
निर्गुणा कृष्णसम्बन्धाद् दिव्याऽक्षयाऽक्षराऽभिधा ।
दर्शनं स्पर्शनं घ्राणं रसनं श्रवणादि च ॥३०॥
स्वपनं रमणं दास्यमाश्लेषणं हरेः प्रभोः ।
कृष्णस्यैव सदा मातः कार्यं दास्या न चेतरत् ॥३१॥
नान्यत्र प्रेरणीयानि देहेन्द्रियाणि सर्वथा ।
विश्वस्तानि कृष्णयोगात् पातयन्ति हि योगिनीम् ॥३२॥
हरे कृष्ण प्रियाकृष्ण माधवीकृष्ण सेविकाम् ।
दासीं मां रक्षय चान्यात् प्रार्थयेत् परमेश्वरम् ॥३३॥
एवं सम्प्रार्थितः कृष्णकान्तो रक्षति दासिकाम् ।
ब्रह्माण्डे तादृशो नास्ति यादृशः कृष्णसद्वरः ॥३४॥
अक्षरे ब्रह्मणि स्वीये राजते योऽत्र विद्यते ।
दिव्याभिः शक्तिभिर्दिव्यपार्षदैः सेवितः प्रभुः ॥३५॥
राधारमादिभिर्भक्त्या सेव्यते पुरुषोत्तमः ।
ब्रह्माण्डाधिस्वामिभिश्च प्रार्थ्यतेऽण्डागमाय सः ॥३६॥
कृपया स बालकृष्णस्त्वाविर्भवति तत्र तु ।
देवमानवपश्वादौ करोति तन्मयीं क्रियाम् ॥३७॥
युगानुरूपं स्वाऽऽयुष्यं दधाति परमेश्वरः ।
बलं सामर्थ्यमेवापि देहं चापि यथायुगम् ॥३८॥
गुणा दोषाश्च दृश्यन्ते दिव्या एव हरौ तु ते ।
हितं भवेन्नृणां यद्वद् वर्तते स तथा भुवि ॥३९॥
सजातीयप्रसंगं स ददात्येव तथाभवन् ।
तेजः संकोचयित्वैव मानवः सन् प्रवर्तते ॥४०॥
दिव्ये तत्र नातिप्रीतिर्मानवानां यतो भवेत् ।
तेजसां चाऽसहा लोकाः सौमनस्यं न यन्ति हि ॥४१॥
क्वचित् कार्यवशान्मातर्महैश्वर्यं दधाति सः ।
प्रदर्शयति भक्तेभ्यः पुनर्लीनं करोति तत् ॥४२॥
अनादिश्रीकृष्णनारायणार्यः पुरुषोत्तमः ।
गोपालनन्दनो मातः सर्वावतारधृक् स हि ॥४३॥
तस्याश्रये भवेद् भक्तानिका सदाऽकुतोभया ।
शर्करारसमूर्तिर्वै यथैकतात्त्विकी भवेत् ॥४४॥
तथैकतत्त्वे श्रीकान्ते सच्चिदानन्दधामनि ।
परब्रह्मणि मे मातस्तादात्म्यं विद्यतेऽधुना ॥४५॥
यथा वह्निः प्रविष्टो वै त्वयोगोले विलोक्यते ।
न लोक्यतेऽयोगोलस्तु तथा मातर्मयि प्रभुः ॥४६॥
लोक्यते पश्य सर्वेशं नाऽहं दृष्टिपथाऽस्मि हि ।
ऐतदात्म्यमिदं सर्वं चाऽहं व्याप्ता महात्मना ॥४७॥
चिदानन्देन कृष्णेन यत्र त्याज्यं न विद्यते ।
एवंवेत्त्री पराब्राह्मी ज्ञेया सा ब्रह्मवित्तमा ॥४८॥
प्राप्ता निर्विकल्पभावं स्थितप्रज्ञाऽतिनिर्भया ।
ऐकान्तिकीं स्थितिं प्राप्ता कृष्णे निरोधितां गता ॥४९॥
नराकृतौ हरौ जाता दृढस्नेहानुबन्धिनी ।
स्नेहमयी सदा भक्ता निर्विकल्पा मता सखी ॥५०॥
मतिः कृष्णे दृढा यस्याः कार्ष्णी सा कृतमोक्षणा ।
विकल्पैः सह योद्धव्यं निर्विकल्पेच्छया सदा ॥५१॥
अयुध्यमाना विषयैराकृष्यते पतत्यपि ।
सर्वेश्वरं विदित्वापि येश्वरेशं त्यजत्यपि ॥५२॥
सा भवेद् द्रोहिणी पत्यौ कृष्णे कान्ते प्रभेश्वरे ।
एवं द्रोहविधात्र्यां वै कृष्णो नैव प्रसीदति ॥५३॥
कालं कर्म स्वभावं वा मायां वेत्ति तु कारणम् ।
कृष्णनारायणं हित्वा सा भवेद् द्रोहिणी हरेः ॥५४॥
कृष्णनारायणे मुक्ता ब्रह्म कृष्णनरायणे ।
कृष्णनारायणे सन्ति ह्यवतारा असंख्यकाः ॥५५॥
कृष्णनारायणे सर्वाः शक्तयश्च तपांसि च ।
ऐश्वर्याणि मखाश्चमत्काराः कृष्णनरायणे ॥५६॥
देवा लोकाश्च गतयः सन्ति कृष्णनरायणे ।
सृष्टयश्च समस्ता वै सन्ति कृष्णनरायणे ॥५७॥
परं तत्त्वं प्रियं कान्तं विदुर्या ज्ञानसागरा ।
सा वेत्त्री श्रीकृष्णदासी ब्राह्मी सा ब्रह्मवित्तमा ॥५८॥
एवंविधायां भक्तायां भवेत् कृष्णप्रसन्नता ।
स्नेहातिशयमाप्तायां गुणाः सर्वे वसन्ति हि ॥५९॥
माहात्म्यज्ञानयुग्भक्ता भवेदेकान्तिनी प्रभौ ।
सतां सेवाप्रसंगेन कृष्णे भक्तिः प्रजायते ॥६०॥
मनोवाक्तनुभिः सेव्याः सन्तः कृष्णस्वरूपिणः ।
सेवात्मकेन धर्मेण साधनेन कृतेन वै ॥६१॥
सर्वं कृतं भवेदत्र कर्तव्यं शिष्यते नहि ।
सतां योगेन भगवान् बहिश्चान्तः प्रकाशते ॥६२॥

पतंगवत् स्वयं कृष्णस्तस्या वृत्तिमयो भवेत् ।
आनन्दं परमं तेन याति मातर्हरेर्हि सा ॥६३॥
धृतस्य शुद्धकान्तस्य हृदि चात्मनि चाऽक्षरे ।
हरेर्माया स्नेहरूपा सुखयत्येव तां सतीम् ॥६४॥
प्रत्यक्षे भगवत्कान्ते रसलीना प्रजायते ।
कान्ता कान्तं समाश्लिष्य ब्रह्मानन्दे प्रमोदते ॥६५॥
निमज्जति महानन्दे परे ब्रह्मणि स्वामिनि ।
गुणातीते महानन्दे प्रेमरसं पिबत्यपि ॥६६॥
मायातीतं पतिं प्राप्य मायातीता प्रजायते ।
हरौ लग्ना हरिं याति मोचयत्येव तां हरिः ॥६७॥
एवं कृष्णं प्रपन्नायाः कमलात्वं प्रजायते ।
यद्यत् सुखमभीष्टं स्यादस्याः सर्वं प्रवर्षति ॥६८॥
प्रपन्नायां प्रपत्तिर्वै हरेर्मिथः प्रजायते ।
मिथश्चैकान्तिकताऽपि भक्तायाश्चाऽच्युतस्य च ॥६९॥
मुक्तवत् सर्वकर्माणि मिथस्तयोर्भवन्ति हि ।
एवंविधायां भक्तायां मातः सत्ययुगस्य तु ॥७०॥
सर्वे धर्माः प्रवर्तन्ते संकल्पाः सत्यसंभृताः ।
मानस्यस्तत्र सर्वा वै सृष्टयश्चेष्टदायिकाः ॥७१॥
भवन्ति कृतकृत्यायां कृष्णयोगेन कृष्णवत् ।
कृपाद्धर्भगवान् कृष्णश्चौदार्यं वितरत्यपि ॥७२॥
मया सर्ववर्ष्मवतां कर्तव्यं श्रेय उत्तमम् ।
एवं कृपां परां कृत्वा नरान्नारीर्नपुंसकान् ॥७३॥
पशून् द्रुमान् पक्षिणश्चोद्धारयत्येव योगदः ।
अपि शत्रून् राक्षसांश्च दैत्यानुद्धारयत्यपि ॥७४॥
पापस्थान् स्त्रीसमुदायान् भोगेनोद्धारयत्यपि ।
पापाः प्रसंगमासाद्य दिव्या मुक्ता भवन्ति हि ॥७५॥
सर्वतत्त्वानि कृष्णस्य चानुप्रवेशतो द्रुतम् ।
ब्रह्मतां यान्ति मायाऽपि प्रयात्यक्षरभावताम् ॥७६॥
नेत्रवृत्तिः स्थूलभावा रश्मिरूपाऽपि तैजसी ।
भौतिक्यपि हरौ लग्ना ब्रह्मभावमुपैति सा ॥७७॥
अतः सा निर्गुणा भूत्वा ब्रह्मप्रकाशिका भवेत् ।
कृष्णाकारा महानन्दसुखमोदपरिप्लुता ॥७८॥
कृष्णे सा लीयते दिव्ये त्वात्माऽश्नुते सुखं तु तत् ।
एवं भूत्वा कृष्णरूपा कृष्णानन्दं समश्नुते ॥७९॥
महाभागवतं मातः सुखं कृष्णात् प्रपद्यते ।
समाधौ दिव्यनेत्रास्तं कृष्णस्य दर्शनं शुभम् ॥८०॥
क्षणं लब्धमपि स्याच्चत् सहस्राब्दकृतं यथा ।
अखण्डं निर्गुणं पूर्णब्रह्मानन्दभृतं सुखम् ॥८१॥
भक्ताभिः शाश्वतं त्ववस्थासु कृष्णेऽनुभूयते ।
नराकारे प्रभौ कृष्णे नृपे वा साधुरूपिणि ॥८२॥
अन्तःस्थे दिव्यरूपे वा तत् सुखं त्वनुभूयते ।
तस्य कृपाल्याः सन्तो मिलेयुस्तेषु चान्वहम् ॥८३॥
स्नेहवृत्त्या सेवयापि तादृशं सुखमाप्यते ।
गुरोर्मूर्तेः परं दिव्यं सुखं तु सेवयाऽऽप्यते ॥८४॥
गुरोर्द्रोहः सतां द्रोहः कृष्णद्रोहो विनाशकृत् ।
गुरोः सेवा सतां सेवा कृष्णसेवाऽक्षरप्रदा ॥८५॥
द्रोग्धुर्भवेत् कृमिकीटशिलाकाष्ठाऽद्रिलोकता ।
यत्र मोक्षार्थयोगो न तस्माद् द्रोहं विवर्जयेत् ॥८६॥
मानं विवर्जयेच्चापि भक्ताग्रे कृष्णसन्निधौ ।
मानं हि कारणं चास्ति महाऽसुरपदस्य वै ॥८७॥
आसुरत्वं निरयाय जायते द्वेषकारितम् ।
तेन मानं नयत्येव निरयाध्वनि सर्वथा ॥८८॥
मानिनस्तु हरौ साधौ कल्पयन्त्यगुणान् मुहुः ।
आपकार्ष्यख्यापनार्थे ततो यान्त्यधमां गतिम् ॥८९॥
मानद्वेषादिनाशार्थे सेवनीया हि साधवः ।
कृष्णाऽभिन्नाः साधवस्ते पावयन्त्यपि दूषितान् ॥९०॥
साधौ स्नेहः परः कार्यो येन दोषो न चोद्भवेत् ।
स्निग्धे दोषो भवेन्नैव गुणग्राहो भवेत् सदा ॥९१॥
सतां गुणग्रहेणैव कृष्णगुणग्रहो भवेत् ।
ब्रह्मात्मदर्शनं तेन साक्षाद्धरेश्च दर्शनम् ॥९२॥
सर्वदा यौगलं भावं हरिणा सह विन्दते ।
नाऽस्या न्यूनं भवेत् सख्याः सख्युः पत्युः समर्जनात् ॥९३॥
अनन्तकोटिसूर्येन्दुवह्निविद्युत्समप्रभम् ।
अक्षरस्थं कृष्णनारायणं सा लभते सखी ॥९४॥
पृथ्व्यां स्थितं बालकृष्णं कान्तं सा लभते सखी ।
महावीर्यं महारूपं महाशक्तिप्रपूरितम् ॥९५॥
आनन्दानां महावार्धिं कान्तं सा लभते सखी ।
मुक्तिबीजानि सर्वाणि लभते कृष्णकान्ततः ॥९६॥
दिव्योन्मत्ता वर्तते सा मनुते स्वकृतार्थताम् ।
तस्या दर्शनकर्तॄणां श्रोतॄणां वचसामपि ॥९७॥
मुक्तिर्दिव्याऽक्षरधाम्नि भवेद् यान्त्यक्षरं हि ते ।
मातश्चैवं बालकृष्णं कृष्णनारायणं पतिम् ॥९८॥
प्राप्ताऽस्मि सर्वहृदयं कृतकृत्याऽस्मि सर्वथा ।
न मे कृष्णादृते कश्चित् संसारो मानमर्हति ॥९९॥
मद्विधा श्रीपतिं नारायणं श्रीबदरीश्वरम् ।
या भजिष्यति भक्तानी मुक्तानी सा भविष्यति ॥१००॥

एवमुक्त्वा विरराम क्षणं सा बालयोगिनी ।
बद्रीप्रिये पुनः सा च मातरं प्राह वच्मि तत् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बाल्योगिनीगीतायां दास्येन नारायणीस्वरूपताप्राप्त्यादि-निरूपणनामैकादशोऽध्यायः ॥ ११ ॥

श्रीनरनारायण उवाच—

पार्वतिके ! शृणु बद्रीप्रिये ! च बालयोगिनी ।
साऽऽह मात्रे धर्मभृतं वर्तनं शीलयोषिताम् ॥ १ ॥
या सती श्रीपतिं प्राप्य वर्तते सा वधूरिति ।
सर्वस्वाऽर्पणशीला च कृष्णधर्मा मता हि सा ॥ २ ॥
कृष्णं कान्तं निजं देहं तथा सर्वेन्द्रियाण्यपि ।
एकीकृत्याऽन्तःकरणैरभिन्ना जायते सदा ॥ ३ ॥
आकृष्टा श्रीपतौ नित्यं लोष्टं वै चुम्बके यथा ।
तथा जायेत मग्ना वै समाधौ च निमज्जति ॥ ४ ॥
तत्र कोट्यर्कभाव्याप्तं कृष्णं कान्तं समीक्षते ।
कृष्णाऽभिन्नस्वरूपा सा योगसिद्धा तपस्विनी ॥ ५ ॥
बहुरूपधरा दिव्या जायते बालयोगिनी ।
शृणोति धामशब्दान् सा ब्रह्माण्डानि च पश्यति ॥ ६ ॥
तथा स्वाभाविकाऽनन्तैश्वर्याढ्या जायते सदा ।
यत्र दातुं समिच्छेत् स्वदर्शनं स्वेच्छया तु सा ॥ ७ ॥
तत्र तत्राऽऽविर्भवति कृष्णवत् कृष्णकामिनी ।
यथा कृष्णस्तथा कार्ष्णी व्यापिनी जायते परा ॥ ८ ॥
तस्या योगात् कुपात्रं या नारी कृष्णातिरेकिणी ।
विमुखापि भवेत् सद्यःसमाधिस्था कृपाकृणात् ॥ ९ ॥
विमुच्यते सद्य एव सेवया कृष्णयोषिताम् ।
महापापान्मुच्यतेऽपि साध्वीसेवापरायणा ॥१०॥
अतिपुण्यवती बोध्या तीर्थरूपा हि साध्विका ।
साध्वीसंयोगमापन्ना साध्वी सती प्रजायते ॥११॥
दैवीयोगाद् भवेद् दैवी दिव्या मुक्तानिका सती ।
अनुग्रहोऽस्ति दैवीत्वे हेतुः साध्व्याः कुयोषिति ॥१२॥
सेवया साधवः साध्व्यस्तोषणीयाः सदा त्विह ।
प्रसादनीयाः सर्वदानैश्च मोक्षप्रदा यतः ॥१३॥
कृष्णमदो हि साधूनां भक्तिस्नेहमदोऽपि च ।
तन्मदेनाऽऽश्रितां साध्वीं मदयन्ति हि साधवः ॥१४॥
कृष्णध्यानैकहृदयाः कृष्णनारायणे रताः ।
कृष्णे चान्यान् वेशयन्ति कार्ष्णान् कुर्वन्ति सर्वथा ॥१५॥
कृष्णेतरं सर्वसृष्टिसुखं नेच्छन्ति साधवः ।
ममाऽपि मातः कृष्णस्य सुखं प्ररोचतेऽन्वहम् ॥१६॥
तदन्यन्निरयैस्तुल्यं भासते दुःखमुल्बणम् ।
यत्र नास्ति प्रभाकान्तस्तत्र दुःखं हि मायिकम् ॥१७॥
यत्रास्ति माधवीस्वामी तत्राऽऽनन्दो हि शाश्वतः ।
जितेन्द्रियता सा मातः कृष्णे यदिन्द्रियस्थितिः ॥१८॥
यावदर्थं प्रसेवेत कृष्णान्वितं जितेन्द्रिया ।
कृष्णस्य बहुधा भक्त्या तस्या दिनानि यान्ति वै ॥१९॥
निवृत्तिधर्मनिरता सा कृष्णार्थप्रवृत्तिका ।
निःसंगा प्रमदा चास्ते बध्यते न हरिं विना ॥२०॥
हर्याशया क्रियायां सा वर्तमानाऽपि निर्गुणा ।
निर्विकारा बाह्यरूपे जडेवाऽन्तस्तु सन्मतिः ॥२१॥
कृष्णतद्भक्तसम्बन्धिप्रवृत्तौ निरता हि सा ।
निवृत्तिधर्मिणी सैव भक्तियुक्ता च मुक्तिगा ॥२२॥
कृष्णमृते क्रिया सर्वा चास्त्यधोगतिदायिनी ।
कृष्णार्थकृतसर्वस्वा त्यागिनी चोत्तमा हि सा ॥२३॥
प्रवृत्तौ वर्तमानायाः कृष्णार्था च सतां कृते ।
हरेः कृपापात्रिकायाः क्रिया न बन्धदायिनी ॥२४॥
इष्टः पतिस्तु भगवान् कृष्णनारायणो हरिः ।
राधाप्रज्ञापाशवतीबद्रीलक्ष्मीरमापतिः ॥२५॥
अक्षरे चापि गोलोके वैकुण्ठे बदरीवने ।
वर्तते श्रीमहाराजः कृष्णनारायणः पतिः ॥२६॥
स एवाऽनन्तकोट्यण्डसर्गस्थित्यन्तकारकः ।
वासुदेवादिरूपः सः केशवादिस्वरूपधृक् ॥२७॥
प्रत्यक्षः स नराकारः कोट्यर्बुदाब्जशक्तिधृक् ।
क्षेत्रे कुंकुमवाप्यां वै बालकृष्णो विराजते ॥२८॥
बदर्यां श्रीनरनारायणः सोऽपि विराजते ।
तस्य शक्तिः शीलसाध्वी सैवाऽस्ति बालयोगिनी ॥२९॥
तस्या धर्मा मम धर्मा मातर्विद्धि सदा शुभाः ।
नराकृतेर्भगवतो लीलाः श्रव्या हि मोक्षदाः ॥३०॥
कामक्रोधादिभावेन येन केन भयादिना ।
स्नेहेन स्वार्थभावेन कृष्णं प्राप्ता हि निर्गुणाः ॥३१॥
निर्गुणं जन्मकर्मादि चरित्रं श्रीपतेः प्रभोः ।
अनादिश्रीकृष्णनारायणस्पर्शोऽपि निर्गुणः ॥३२॥
विदित्वा निर्गुणं नारायणं यात्यक्षरं पदम् ।
कृष्णलीलाः कृष्णभक्तैराकृष्टैर्दिव्यतां गतैः ॥३३॥
विधातव्याः स्मरणार्थं बाधिका या न देहिनाम् ।
लोकानां दर्शनार्थं वै स्फूर्त्यर्थं भक्तिशालिनाम् ॥३४॥

पापिनां पापनाशार्थं ध्यानार्थं स्नेहिनां तथा ।
इदंकारस्मरणार्थं लीलाः कार्या हरेरनु ॥३५॥
नाटकादि प्रकर्तव्यं कृष्णभक्तिविवर्धकम् ।
यथाकथञ्चिज्जीवानां कृष्णभक्तिर्भविष्यति ॥३६॥
गुरोर्गौरवबोधार्थं भर्तव्यं सुप्रदर्शनम् ।
विधेयदर्शनं चापि योजनीयं हरेरपि ॥३७॥
एवं वै श्रीकृष्णलग्नचित्तानां मोक्षणं भवेत् ।
पृथिव्यां नरदेहानां सार्थक्यं योषितां तथा ॥३८॥
कृष्णलीलादर्शनेन जायते श्रेय इत्यपि ।
कृष्णस्तस्य भक्तिमन्तो भक्ताः श्रेयस्करास्तु ये ॥३९॥
तेषां दिव्यचमत्कारलीलाः कार्या जनैर्भुवि ।
मुमुक्षूणां यथा भक्तिर्विवर्धेत विशेषतः ॥४०॥
विवेकेन शरीरादौ निस्पृहत्वं यथा भवेत् ।
एकस्मिन् श्रीपतौ साररूपे स्वात्मा यथा लगेत् ॥४१॥
सच्चिदानन्दरूपस्य हरेर्दास्यं यथा भवेत् ।
त्यागो भक्तिर्दिव्यता च भवेयुश्च यथा सदा ॥४२॥
तथा कृष्णचरित्राणि त्वनुकार्याणि नाऽन्यथा ।
दर्शनैः स्पार्शनैर्भावैर्मुक्तिः स्याद् देहिनां यतः ॥४३॥
ब्रह्मीभूताश्च दिव्यांगास्ते न यान्ति पुनर्भवे ।
आविर्भवन्ति चेल्लोके स्वातन्त्र्येण हरीच्छया ॥४४॥
तेषां तु विषया दिव्या भवन्ति भगवन्मयाः ।
वर्तन्ते ते प्रहित्वैव देहत्रयस्य भावनाम् ॥४५॥
सच्चिदानन्दरूपे स्वे चिन्तयन्ति हरिं पतिम् ।
हरेर्बलात्तु तेषां वै हृत्सु चोपशमस्थितिः ॥४६॥
वर्ततेऽतो न विषयाः प्रवेष्टुं तत्र वै क्षमाः ।
ये त्वायान्ति भवन्त्येव दिव्यास्ते भगवन्मयाः ॥४७॥
कृष्णस्य च सतां सेवापरा दिव्या तथा भवेत् ।
स्थितिं चोपशमाख्यां च लभते श्रीपतौ सदा ।
विवेकिन्यां तु दास्यां वै प्रीयन्ते सुतरां हि ते ॥४८॥
प्रीणनात्तु सतां साध्व्या नोपसर्गा भवन्ति हि ।
आत्मनो दिव्यतां ज्ञात्वा मोदते सा नरायणी ॥४९॥
आत्मनिष्ठा तथा मातः कृष्णनिष्ठा तु देहिनः ।
पक्षौ द्वावम्बरे गन्तुं चिदाकाशे हि चेतनौ ॥५०॥
विज्ञानं स्नेह एवैतौ परमेशप्रसञ्जकौ ।
स्नेहः स्वप्ने सुषुप्तौ च तुर्यायां कृष्णयोजकः ॥५१॥
पातिव्रत्यं विना नैव मातः कृष्णोऽनुसज्जते ।
दास्यं विना न वै कृष्णो दासीं गृह्णाति वक्षसि ॥५२॥
दास्यं तु सर्वथा चाज्ञाकरं किन्तु निजार्थकम् ।
पातिव्रत्यं तु कृष्णस्यार्थकं स्वार्थविवर्जितम् ॥५३॥
दास्याच्छ्रेष्ठं पातिव्रत्यं पत्यर्थं सर्वथाऽर्पणम् ।
तदधीनत्वमेवेदं पत्नीव गृहबन्धनम् ॥५४॥
दास्यं यावन्मनो मग्नं तावत् स्नेहात् प्रवर्तते ।
मनो वियुक्तं चेद् दास्या दासीत्वं विगमायते ॥५५॥
अतो बध्वा वधूटीत्वं पातिव्रत्यं प्रशस्यते ।
सर्वसाधनमूर्धन्यं स्वामिव्रतं प्रशस्यते ॥५६॥
हरेः प्रसन्नताप्राप्त्यै हरेः प्राप्त्यै तु योषिता ।
आन्तरं दीयते लक्ष्मीपतये तु यया तया ॥५७॥
प्राप्त एव हरिः कान्तः साधितश्च निजीकृतः ।
आन्तरं सर्वथा दानं स्वामितामर्जयत्यनु ॥५८॥
स्वामित्वं दुर्लभं मातः कृष्णे प्राकृतयोषिताम् ।
स्वामिनीत्वं तु सुतरामपुण्याया न जायते ॥५९॥
माणिकीत्वं च राधात्वं लक्ष्मीत्वं बदरीत्वकम् ।
अक्षरे चापि गोलोके वैकुण्ठे बदरीवने ॥६०॥
बहुस्नेहेन कृष्णस्य परया कृपयाऽर्ज्यते ।
भक्तिर्यथा परोक्षे वै देवे भवति देहिनाम् ॥६१॥
तथा साक्षाद्धरौ कान्ते गुरौ कार्या हि योषिता ।
तस्याः सर्वे प्रसिद्ध्यन्ति दिव्याश्चर्या हि शाश्वताः ॥६२॥
सतां योगाद्धरेर्योगाद् गुरोर्योगात् पुनः पुनः ।
प्राप्तव्यं लभ्यते सर्वं परं पदं कृतार्थता ॥६३॥
स्नेहोऽस्ति मधुना तुल्यः कृतः कृष्णे तु मोक्षदः ।
कृष्णयोगेन कामिन्याः सन्मात्रं ब्रह्म भासते ॥६४॥
आत्मा ब्रह्मत्वमाप्नोति कामना नावशिष्यते ।
अभ्यासवशतः कृष्णे ब्रह्मणि ब्रह्मतां व्रजेत् ॥६५॥
ब्रह्मीभूतायास्तु पत्न्याः कृष्णे कार्ष्णेषु चान्वहम् ।
स्नेहरसः प्रवर्तेत सौहार्दं च प्रमोदनम् ॥६६॥
हरेर्गुणाकृष्टचित्ताः श्रीर्लक्ष्मीः माधवी प्रिया ।
माणिक्या राधिका बद्री कुर्वन्ति हरितोषणम् ॥६७॥
हरेर्ध्याननिधेर्योगाद्धरिण्यस्ताः सदाऽभवन् ।
हरेः सतां सेवया ता नारायण्योऽभवन् सदा ॥६८॥
नासां कृष्णं विना चान्यद् रोचते भयदं न च ।
नारायणीनां सर्वासां वशे सर्वं प्रवर्तते ॥६९॥
एतादृश्यस्तु या नार्यः कृष्णकान्ते शमं गताः ।
कृष्णसंयोगदाढर्येन यातास्ताः परमां गतिम् ॥७०॥
यान्ति तथाऽक्षरं धाम परं सर्वार्थपूरकम् ।
प्राकृता अपि देहिन्यः किमु दास्यादिशोभनाः ॥७१॥
देहे त्वात्माऽऽत्मनि श्रीशो वर्तते पुरुषोत्तमः ।
भक्तायाः परमं प्रीतिं वीक्ष्य बहिः स वर्तते ॥७२॥

ददात्यानन्दमुत्कृष्टं निजसंगमसंभवम् ।
रमते रमयत्येव चाश्लिष्यन्निजमूर्तिकम् ॥७३॥
स्नेहमाहात्म्यसंव्याप्ता सेवा विघ्नैर्न हीयते ।
पातिव्रत्यं कथं नित्याधीनं त्वभिभवेद् दृढम् ॥७४॥
तन्नामस्मरणात् तस्य कीर्तनात्तस्य संस्मृतेः ।
तत्प्रणामात्तस्य संगात्तस्य स्पर्शात्तदंकनात् ॥७५॥
तदंशधारणात्तस्य शय्यावासात्तदन्वयात् ।
तद्दर्शनात्तद्रमणात् श्वादाऽपि सवनायते ॥७६॥
गणिकाऽपि तस्य संगान्मुक्तासु गणनायते ।
किं पुनः पातिव्रत्येन दास्येन सेविका वधूः ॥७७॥
अहो श्वादा प्रमाकृष्ण नामयुक्ता गरीयसी ।
अहो तपांसि यज्ञाश्च तीर्थानि च व्रतानि च ॥७८॥
कृष्णकान्तस्य नाम्नैव चरितार्थानि सर्वशः ।
हरेः सर्वेश्वरस्यैव नाम्ना निर्भयता भवेत् ॥७९॥
देहिनां कृष्णकृष्णेतिगृह्णतां भीर्निवर्तते ।
सेवया पादमूले वै विशत्येषाऽकुतोभये ॥८०॥
महतां सेवया कृष्णे प्रवेष्टुं क्षण आप्यते ।
सकामाऽपेक्षया मातर्निष्कामाया महत्सुखम् ॥८१॥
कृष्णार्थे तु सकामाऽपि निष्कामा परिकीर्तिता ।
अनन्यभक्ता साध्वीयं कृष्णेतरन्न वाञ्छति ॥८२॥
श्रेयसे सा हरिं प्राप्ता ततो हरिः प्रसीदति ।
श्रेयोऽर्थया सुभक्त्या श्रीहरिस्तूर्णं प्रसीदति ॥८३॥
साक्षात्कृष्णे प्रसन्ने सिद्ध्यन्ति सर्वमनोरथाः ।
सुखदो निजभक्तानां कृष्णः कार्ष्णा न चेतराः ॥८४॥
अतश्चात्ममतिः कार्या कृष्णे कार्ष्णेषु सर्वथा ।
तत्पार्श्वे सर्वथा ग्राह्यं रक्ष्यं दृढं निजं यथा ॥८५॥
सोढव्यं स्वापमानादि मृत्युर्वा पार्श्वरक्षिणा ।
तेषु प्रीतिर्विशेषेण कर्तव्या देहतोऽधिका ॥८६॥
अभावो न ग्रहीतव्यस्तेषां मातः कदाचन ।
एवंविधाया भक्ताया भयं नास्ति यमादिजम् ॥८७॥
तां नाभिभवितुं शक्ता महाकालादयोऽपि हि ।
अतः कृष्णे मनो योज्यं वज्रभूवज्रकीलवत् ॥८८॥
एवं कृष्णमानसा तु देहे सत्यस्ति धामनि ।
कृष्णे कार्ष्णेषु या मैत्री साऽक्षरस्य प्रयोजिका ॥८९॥
पार्थक्यं कृष्णभक्तेभ्यो विघ्नं तत्र महत्तरम् ।
निःस्नेहेन वर्तनं च धामतो दूरताप्रदम् ॥९०॥
आत्मज्ञानं हरेर्ज्ञानं भक्तानां ज्ञानमित्यपि ।
गोपुरत्रयमेवाऽस्ति हरेर्धाम्नि प्रवेशने ॥९१॥
सन्तः साध्व्यः सदा ज्ञानत्रये तिष्ठन्ति सोत्सुकाः ।
स्नेहो दास्यं सेवनं च त्रयं चान्तर्गतिप्रदम् ॥९२॥
सन्तः साध्व्यस्त्रयं लब्ध्वा कृष्णावासं प्रयान्ति हि ।
सर्वार्पणं पातिव्रत्यं विश्वासः शयनं त्रयम् ॥९३॥
सन्तः साध्व्यस्त्रिभिर्यान्ति श्रीहरेः शयनं प्रति ।
तादात्म्यैकरसं ते वै विदन्ति शयनं गताः ॥९४॥
अपरोक्षानुभूत्या तं साक्षात्पश्यन्ति सद्रसम् ।
कान्तं कृष्णं महानन्दं चानुभवन्ति तन्मयाः ॥९५॥
एवंविधानां भक्तानां संसारः किंकरिष्यति ।
क्रियाः सर्वा भवन्त्येषां दिव्या देहोद्भवा अपि ॥९६॥
ब्रह्माण्डनाशमायाति भक्तानाशं व्रजन्ति न ।
भक्तास्तथाविधा दिव्या मोदन्तेऽक्षरमन्दिरे ॥९७॥
वृन्दावनं सदा दिव्यं दिव्यं च तुलसीवनम् ।
बद्रीवनं तथा दिव्यं दिव्या कुंकुमवापिका ॥९८॥
दिव्या साकेतनगरी दिव्यो वै रासमण्डपः ।
गोप्यो दिव्या ब्रह्मपत्न्यो दिव्या हरिप्रियाः सदा ॥९९॥
दिव्यास्ते त्वक्षरे लोके चाऽत्रापि सन्ति चाऽपृथक् ।
ब्रह्मप्रियाः सदा दिव्या दिव्यकान्तेन दिव्यता ॥१००॥
कृष्णो दिव्यश्च तद्धाम दिव्यं व्यापकमत्र च ।
तत्र ये ये सेवकाश्चाऽऽलया भोगा विभूतयः ॥१०१॥
दिव्या एव ततो मातर्दिव्येयं बाल्ययोगिनी ।
त्वं दिव्या वर्तसे नित्यं मा भौतिकीं विभावय ॥१०२॥
श्रीकृष्णशरणं प्राप्ता दिव्या भवन्ति देहिनः ।
ब्रह्मीभूता भवन्त्येव सखीत्वं च व्रजन्त्यपि ॥१०३॥
नारायणीत्वं शक्तित्वं व्रजन्ति कृष्णसेविकाः ।
विष्णुत्वं च नरत्वं च व्रजन्ति कृष्णसेवकाः ॥१०४॥
एवं श्रीकृष्णयोगोऽयं मातस्ते कथितो मया ।
इत्युक्त्वा विररामैव बद्रि सा बाल्ययोगिनी ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बाल्ययोगिनीगीतायां नारीणां महाभागवतधर्माढ्यतादिमत्त्वमित्यादिनिरूपणनामा द्वादशोऽध्यायः ॥ १२ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि ततः सा बाल्ययोगिनी ।
स्वमात्रे यत्पुनश्चाह बाल्ययोगगुणान् शुभान् ॥ १ ॥
मातर्बालत्वमाद्यं वै सर्वेषां देहिनामिह ।
तत्र कामो न न क्रोधो न स्वार्थो नापि रागिता ॥ २ ॥

न दोषाश्चात्मनि प्रोव्या नाऽन्तःकरणे नेन्द्रिये ।
न देहे नापि तत्त्वेषु वैशद्यं बालकेऽन्वहम् ॥ ३ ॥
स्वच्छदर्पणवद् बाल्यं सदा पाल्यं मुमुक्षुणा ।
यौवनं न स्पृशेद् यस्याः सा सदा बाल्ययोगिनी ॥ ४ ॥
कामना यौवने वृत्तिर्लज्जाचौर्यादिकारिणी ।
बह्वनर्थावहा सा तु वासनाद्रिप्रवर्धिनी ॥ ५ ॥
विकाराश्च स्वभावाश्च क्रियाः सर्वाः कृतिस्तथा ।
विजातीयाः प्रवर्तन्ते चेष्टास्तु यौवने खलु ॥ ६ ॥

त एव दोषाः सर्वे वै नोद्भवन्ति कदाचन ।
श्रीकृष्णकान्तमाश्रित्य यस्यां सा बाल्ययोगिनी ॥ ७ ॥
तपो धर्मो विरागश्च नियमः संयमस्तथा ।
इन्द्रियाणां जये हेतुर्मनोजयेऽपि वर्तते ॥ ८ ॥
बाल्यं सर्वजयकारं सहजं बालयोगवत् ।
बालकृष्णस्य योगो वै सर्वेन्द्रियजयप्रदः ॥ ९ ॥
अनादिश्रीकृष्णनारायणसख्यं सुखावहम् ।
मायाकालादिजयकृत् कर्मणां गणना तु का ॥१०॥

आत्यन्तिकी महाशक्तिर्मातः कृष्णे भवेत् सदा ।
कृष्णे स्नेहाच्च कार्ष्णेषु स्नेहाच्छान्तिः परा भवेत् ॥११॥
अवरायां च भक्तायां स्नेहाच्छान्तिर्हि दास्यवत् ।
कृष्णनारायणभक्तिमत्यां शान्तिर्हि शाश्वती ॥१२॥
गुर्व्यां पूज्यतया शान्तिः समानायां सखीतया ।
एवं गुणान् गृहीत्वैव भजेत् कृष्णपदाम्बुजम् ॥१३॥
इतस्ततो भ्रममाणो जीवः कर्मानुबन्धनः ।
क्वचिन्नारी क्वचित् क्लीबः क्वचिन्नरो भवत्यपि ॥१४॥

स्वतन्त्रः परतन्त्रो वा दुःखी सुखी क्वचित्तथा ।
वनेऽरण्ये पत्तने वा गृहे बाह्ये क्वचिद् रणे ॥१५॥
कारागारे याम्यलोके स्वर्गे क्वचित्तु मानवे ।
एवं कर्मानुचारस्य कृष्णप्राप्तिर्हि दुर्लभा ॥१६॥
सा चेज्जाता ततश्चाऽन्यन्नेष्टव्यं देहिना त्विह ।
चक्रवर्तिनृपद्धिस्तु मलवत् कर्दमादिवत् ॥१७॥

संबोध्या सिद्धयश्चापि तृणवन्मृत्तिकेव च ।
आत्मा कृष्णे योजनीयो गिरिवद् ध्रुववत्तथा ॥१८॥
मातर्बद्धाऽस्मि कमलाकान्ते सत्सु च सर्वदा ।
स्नेहपाशेन हरिणा स्वायत्तीकारिताऽस्मि हि ॥१९॥
अतो नारायणसंगं सतां संगं प्रसेवनम् ।
नोत्सहे सर्वदा त्यक्तुं शिरोदानं कृतं मया ॥२०॥
ईदृश्यस्मि हरौ तस्य भक्तेषु प्रीतिसञ्जिता ।
तद्विनाऽन्यत्र लग्ना न मनोवृत्तिर्ममाऽस्ति हि ॥२१॥

कृष्णस्य कीर्तने मातर्मत्तता मे प्रजायते ।
विह्वलाया मम कृष्णे जायते देहविस्मृतिः ॥२२॥
तथापि प्राणवद् देहे तिष्ठामि शक्तियोगिनी ।
दासीत्वेन हरौ चास्मि स्वामित्वेन हरिर्मयि ॥२३॥
अतः स्वेच्छानुसारेण प्रभुनक्तु हरिर्हि माम् ।
विमाने वा गजे हंसे वैकुण्ठे वा क्षितावपि ॥२४॥
स्वर्गे बद्रीवने श्वेतद्वीपे वा क्षीरसागरे ।
गोलोके श्रीपुरे वापि ब्रह्मलोकेऽक्षरे परे ॥२५॥

अव्याकृतेऽमृते वापि हरिर्नयतु मां सखीम् ।
रुचिः स्याद् यादृशी तस्य तथैव विदधातु माम् ॥२६॥
न मे कृष्णप्रियाद् भिन्नं नैजं प्रियं हि विद्यते ।
कृष्णस्यैव प्रियं यत्तत् प्रियं मे मानरुत्तमम् ॥२७॥
न वा कृष्णेच्छया वृत्तौ विपरीतं क्वचिन्मम ।
न च नारायणेच्छातः प्रारब्धं त्वपरं मम ॥२८॥
सर्वेश्वरे प्रभौ कृष्णे सदा प्राप्ताऽस्मि लग्नताम् ।
ततः सर्वास्ववस्थासु ब्राह्मी स्थितिर्ममाऽस्ति हि ॥२९॥

यामाश्रित्य परा नारी कृष्णैकान्तिकतां व्रजेत् ।
तत्प्रसादाद्भयं तस्या विघ्नजन्यं न चास्ति हि ॥३०॥
सारं कृष्णेतरन्नास्ति सारं भयं न विद्यते ।
अश्लीलायां न सारोऽस्ति कृष्णस्तत्र न तिष्ठति ॥३१॥
शीलस्थायां हरिश्चास्ते जायते बाल्ययोगिनी ।
कार्ष्णं सुखं मायिकाद्धि दिव्यं श्रेष्ठं च दुर्लभम् ॥३२॥
प्राप्तं मया तया प्राप्तं सर्वं साम्राज्यमुत्तमम् ।
कृपयैव प्रजेशस्य तत्प्राप्तं साम्प्रतं मया ॥३३॥

ब्राह्मी ब्रह्मप्रिया जाता नारायणी परेश्वरी ।
भूयसीं परमां प्रीतिं प्राप्ताऽस्मि बदरीश्वरी ॥३४॥
यादृशी तादृशी वापि कृष्णकान्ताऽस्मि संगता ।
इक्षुरसं परं प्रेम प्राप्ताऽस्मि चाऽमृतं हरौ ॥३५॥
अन्तरायकरं कृष्णे मातस्त्यजामि दूरतः ।
आसञ्जनविधातृ यद् गृह्णामि तद्धि साधनम् ॥३६॥

विश्वासिनी हरौ नित्यं भवामि भवनाशिनी ।
अनासक्ता परत्रापि भवामि कृष्णकामिनी ॥३७॥
स्नानपानशिरःपाणिपादसंवाहनादिभिः ।
साधूनां सेवने रक्ता वर्तेऽहं कृष्णसेवने ॥३८॥
अतिप्रियं समस्तं मेऽर्पयामि माधवाय वै ।
अर्पयित्वा सतीभ्यश्च साधुभ्यश्चापि सर्वथा ॥३९॥
उपयोगं ततस्तस्य वस्तुनः प्रकरोम्यहम् ।
दयया सम्प्रदायैव शेषं भुनज्मि चाज्ञया ॥४०॥

करोमि श्रीहरेः साक्षाद् दिव्यमूर्तेः समर्हणम् ।
मानसं पूजनं चापि करोमि ऋतुवत्तथा ॥४१॥
पातिव्रत्यं पुरस्कृत्य करोमि सेवनं हरेः ।
पतिव्रतायाः कान्ताऽन्ये स्वप्नेऽपि नास्ति चादरः ॥४२॥
पत्यावेव तथा कृष्णे प्रीतिं करोमि नित्यदा ।
कृष्णभक्तेषु चैवाऽपि कृष्णसम्बन्धतस्तथा ॥४३॥
ऐकपत्यं हरौ कृष्णनारायणेऽस्मि मे सदा ।
सर्वाभीष्टा प्रमेशार्थे निष्कामा बन्धनोज्झिता ॥४४॥
भर्जितानि च बीजानि चोप्तानि क्षेत्रके यथा ।
नांऽकुराय प्रभवन्ति तथा कर्माणि माधवे ॥४५॥
न जन्मादिप्रदान्येव जायन्ते निर्गुणानि हि ।
श्रीकृष्णस्य प्रसंगेन जीर्णानीव भवन्ति हि ॥४६॥
वासनाः प्रशमं यान्ति संकल्पा न भवन्ति च ।
नष्टा भवति सर्वा चैषणा विषयगोचरा ॥४७॥
क्रियाः सर्वा हरेराज्ञामय्यो नान्या हि मे क्वचित् ।
यया त्यक्तं जगत् सर्वे कृष्णे प्रीतिः कृता यया ॥४८॥
तस्या नान्यद् गृहं कृष्णं विना मातर्हि विद्यते ।
कृष्णार्थे योगिनी जाता कार्ष्णी साऽहं तथाऽस्मि च ॥४९॥
जगद्धर्ता मतो धर्मः स मे कृष्णोऽस्ति नेतरः ।
आत्मपरिचयो ज्ञानं स मे परिचयो हरौ ॥५०॥
स्नेहश्चाकृष्टभावो मे कृष्णे नान्यत्र कुत्रचित् ।
भक्तिः सेवा सर्वरीत्या कृष्णस्यैव न चेतरा ॥५१॥
सा मे सेवा कृष्णनारायणे निवृत्तिरुत्तमा ।
हरेः सम्बन्धशून्यस्तु धर्मो जन्मान्तरप्रदः ॥५२॥
प्रवृत्तिर्वा निवृत्तिर्वा नारायणसुयोगिनी ।
महाभागवती बोध्या धर्मिणी सत्क्रिया हि सा ॥५३॥
कृष्णार्थे कृष्णसाधर्म्ये सेवाऽर्हं दिव्यमेव तत् ।
प्रीतियोग्यं तदेवाऽस्ति हेयं चान्यत्तु सर्वथा ॥५४॥
असंख्यानां मनुष्याणां सम्मर्देऽपि हरेः कृते ।
वासं कर्तुं समिच्छामि नान्यथा तु वनेऽपि वै ॥५५॥
कृष्णार्थे कृष्णसाधर्म्ये वनं मे नगरायते ।
यत्र कृष्णस्तत्र हंसा दृश्यन्ते तु मया सदा ॥५६॥
यत्र कृष्णो न मिलति व्याघ्रायन्ते द्विजा अपि ।
अपि बद्रीवनं शीतं नारायणेन पत्तनम् ॥५७॥
स्मृद्धं मे विद्यते मातः साम्राज्यं नेतरन्मम ।
यत्र कृष्णः पूज्यते न तत्स्थलं मे सकण्टकम् ॥५८॥
बाणशय्या विना कृष्णं पुष्पशय्या तदन्विता ।
कृष्णं विना ह्यभक्ताया जलान्नं रोचते न मे ॥५९॥
अकृष्णायां न मे प्रीतिर्दीपो मे मानसो हरिः ।
हारो मे हृदये कृष्णो मणिर्मे केशवेशने ॥६०॥
कल्पानन्दो मानसे मे कृष्णः कान्तो रहःपतिः ।
यासु भक्तिर्हरेश्चास्ते यास्त्वस्ति कृष्णवल्लभा ॥६१॥
ता मेऽपि वल्लभाः सन्ति मातर्नान्याः क्वचित् खलु ।
श्रीकृष्णवल्लभाचारा श्रीकृष्णवल्लभक्रिया ॥६२॥
श्रीकृष्णवल्लभौदार्या श्रीकृष्णवल्लभान्तरा ।
श्रीकृष्णो वल्लभो यस्या सा सती बदरीश्वरी ॥६३॥
माणिक्या चाऽक्षरे धाम्नि त्वद्गृहे बाल्ययोगिनी ।
नारायणी चमत्कारे राधा कृष्णस्य मानसे ॥६४॥
लक्ष्मीः कृष्णस्य पार्श्वे सा हिमाद्रौ बदरीश्वरी ।
सुरेश्वर्या गृहे कन्या वर्तेऽहं परमेश्वरी ॥६५॥
या पार्वती हरपत्नी साहं प्रभोश्च बद्रिका ।
नरनारायणवासा बदरी बाल्ययोगिनी ॥६६॥
कार्ष्ण्यो या वैष्णवीदेव्यो बान्धव्यो मम ताः सदा ।
सदा ताभिः सह वासो रोचते मेऽत्र वा परे ॥६७॥
स्निग्धाः सत्यो दुर्लभा वै भवन्ति मानवे भवे ।
प्रेमभक्तिप्रपूराश्च सदा कृष्णार्थकामनाः ॥६८॥
दासीभावेन वा साध्वीभावेन कृष्णमाश्रिताः ।
चिद्रूपाऽऽसजनप्राप्त्या चिद्रूपास्ताः स्त्रियो नराः ॥६९॥
परं भागवतं स्थानं लब्ध्वा चाऽक्षरधामनि ।
प्रेम्णा कान्तं प्रभुं नारायणं प्रसादयन्ति वै ॥७०॥
स्निग्धया भक्तया भाव्यं कृष्णे रसिकया मुदा ।
निश्छद्मसेवया कृष्णः प्रसादं प्रकरोति हि ॥७१॥
अनुवृत्त्या साधवश्च प्रसन्नाः संभवन्ति वै ।
मान्याः प्रसाद्याः सन्तस्ते नमनाद्यैर्मुहुर्मुहुः ॥७२॥
यथा यथा प्रसन्नाः स्युर्विधातव्यं तथा तथा ।
तेषां प्रसादलभ्या वै महती पदवी मता ॥७३॥
कृष्णनारायणस्वामिसन्तः पूज्याः सदा मुदा ।
मानसी चाऽर्हणा कार्या यथर्तुसूपचारकैः ॥७४॥
मातश्चाहं सदा प्रातः करोमि पूजनं हरेः ।
उष्णकाले शीतवारिं सुगन्धि चार्पयामि वै ॥७५॥
स्नपयामि शीतजलैः प्रेम्णा सम्मर्दयामि च ।
शीतसुगन्धितैलैश्च सुगन्धिसारसद्रसैः ॥७६॥
मार्जयामि हरेः समस्तांगानि सूक्ष्मवाससा ।
सूक्ष्माणि शोभनान्येव नवानि चाम्बराण्यपि ॥७७॥
सुगन्धिपुष्पहारांश्च शृंगारं भूषणानि च ।
राजाधिराजविभवान् तं परिधापयामि च ॥७८॥

चन्दनेन हरेर्भाले तिलकं चन्द्रकं तथा ।
कौंकुमं संविधायैव करपादतलार्चनम् ॥७९॥
करोमि चन्दनैर्मातर्वक्षउदरपूजनम् ।
सक्थिजानुफणाग्राणां करोमि पूजनं ततः ॥८०॥
धूपं दीपं सुनैवेद्यं श्रीखण्डादि यथारुचि ।
शीतं वारि पोलिकादि समर्पयामि चक्रिणे ॥८१॥
उत्तरापोशनं दत्वा दत्वा ताम्बूलकं तथा ।
आरार्त्रिकं ततः कृत्वा चालिंग्यामि मुहुर्हरिम् ॥८२॥
शीर्ष्णि भाले स्तनयोश्च धारयामि पदे हरेः ।
तत्कुमकुंकुमाक्तानि ममांगानि भवन्ति वै ॥८३॥
परिष्वंगे तदंगस्थचन्दनाद्यैः सुचिह्नितम् ।
समस्तं मच्छरीरं च दिव्यं पश्यामि तद्धृतम् ॥८४॥
पुष्पोद्याने रमयामि निकुञ्जे स्वामिनं हरिम् ।
विहरन्तं रममाणं सेवे प्रसन्नमानसम् ॥८५॥
कोमले शयने पुष्पदलालंकृतशोभने ।
स्वापयामि प्रभुं कान्तं कामयामि यथायथम् ॥८६॥
संवाहयामि चांगानि प्रातरुद्बोधयामि च ।
वर्षायां पूजनं नैजवल्लभस्य यथोचितम् ॥८७॥
करोमि तु यथा वर्षाशैत्यं तस्य न बाधते ।
ईषदुष्णजलैः कान्तं स्नपयामि तथाऽम्बरम् ॥८८॥
ईषद्वनं तथाऽन्यानि धारयामि शुभानि च ।
केसराक्तं चन्दनं च ददामि पूजने तदा ॥८९॥
तत्कालीनसुपुष्पाद्यैः पूजयामि ममेश्वरम् ।
भोजनानि समशीतोष्णानि चाऽवातुलान्यपि ॥९०॥
ददामि स्वामिनो मातः सेवे शय्यागतं हरिम् ।
शीतकाले परमोष्णवारि ददामि सर्वथा ॥९१॥
उष्णाम्बराणि सर्वाणि तथोष्णभोजनान्यपि ।
उष्णमिष्टान्नपक्वान्न्यर्पयामि तु शार्ङ्गिणे ॥९२॥
शय्यायां बालकृष्णस्य पार्श्वलीना भवामि च ।
प्रातर्यथा न वै शैत्यं बाधतेऽस्य करोमि तत् ॥९३॥
एवं स्वत्या महद्भाग्यं जानामि कृष्णसेवने ।
ब्रह्मानन्दं महानन्दं सदा प्राप्नोमि वै हरेः ॥९४॥
अक्षरेऽपि परे धाम्नि सेवाप्राप्तेस्तु हेतवः ।
अक्षरस्याऽधिगमनेच्छावत्त्वं सततं निजम् ॥९५॥
आत्मनिष्ठतया ज्ञानं भगवन्निष्ठभावना ।
भक्तिर्भगवतश्चापि कृष्णनारायणस्य वै ॥९६॥
मायाया वर्जनं नित्यं दिव्यस्वात्मविचिन्तनम् ।
मृषाज्ञानादिविलयः प्रमाज्ञानोदयस्तथा ॥९७॥
लिप्सता मौंसतीनाथे पातिव्रत्यं हरौ तथा ।
सत्संगः साधुसेवा च श्रीकृष्णाराधना सदा ॥९८॥
एवमादिभिर्हेतुभिश्चाक्षरं धाम लभ्यते ।
तत्र कृष्णस्नेहपात्रीभूता प्राप्नोति सेवनम् ॥९९॥
कृष्णात्तो स्वार्थदार्ढ्यं वै यस्यास्तु वर्तते सदा ।
सा श्रीकृष्णं प्रभुं कान्तं प्राप्नोत्येव न मुञ्चति ॥१००॥
हरेर्माहात्म्यज्ञानेन जयत्येव हरेः प्रिया ।
हरौ प्रीतिमती पत्नी विवर्धतेऽतिसद्गुणैः ॥१०१॥
श्रुत्वा कृष्णगुणान् कृष्णं चिन्तयेत् कृष्णकामिनी ।
विनिश्चिनुयात् हृदये पार्वतीशंनरायणम् ॥१०२॥
तं तु भुञ्जीत सततं दिव्यं प्रत्यक्षतां गतम् ।
स एव श्रीहरेर्बोध्यः प्रसादो भोगनामकः ॥१०३॥
रंके वा राजसदृशे समा प्रसन्नता हरेः ।
पत्रपुष्पार्पणाद्यैश्च द्रुतं कृष्णः प्रसीदति ॥१०४॥
श्रद्धास्नेहप्रेमभक्त्यादिभिः शीघ्रं प्रसीदति ।
इत्येवं बद्रिके बालयोगिनी मातरं प्रति ॥१०५॥
बहुधोक्त्वा स्थितिं स्वीयां विरराम हरौ क्षणम् ।
पुनश्च बहिरागत्य प्रभोकृष्णेति सञ्जगौ ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बालयोगिनीगीतायां बालयोगिन्या कथितानां बालयोगधर्माणां निरूपणमित्यादिनामा त्रयोदशोऽध्यायः ॥ १३ ॥

**श्रीनरनारायण उवाच—**

ततो बद्रीप्रिये देवि मात्रे श्रीबालयोगिनी ।
परमं वैष्णवयोगं प्राह ते कथयाम्यपि ॥ १ ॥
वैष्णवा विष्णुवन्मान्या मातः सर्वप्रवैष्णवैः ।
वैष्णवीभिर्विशेषेण कृष्णवत् कृष्णमूर्तयः ॥ २ ॥
सर्वथा विष्णुसम्बन्धिक्रियास्वेव हि ते रताः ।
आत्मनां च वशे येषामिन्द्रियाण्यान्तराण्यपि ॥ ३ ॥
ब्रह्मचर्ये हरौ येषां ब्रह्मता च प्रभौ पतौ ।
कृष्णैकचेतसो भक्ता मान्याः पूज्या हरिर्यथा ॥ ४ ॥
नैते मानवतुल्या वा सुरतुल्या न चापि ते ।
भक्तानिका न मानव्यः कमलास्ता हि सर्वथा ॥ ५ ॥
वैष्णव्यः सर्वथा सेव्या योषिद्भिर्योषितस्तु ताः ।
धर्मांशे पारगामिन्यः कृष्णांशे सर्ववर्तनाः ॥ ६ ॥

हर्यर्थे लोकलज्जाद्यावरणादि विवर्जिताः ।
कृष्णेतरोपभोगादौ दोषभीतिसमन्विताः ॥ ७ ॥
कार्ष्णवैष्णवसेवायां कृष्णवन्महिमान्विताः ।
मायाबन्धनहीनाश्च दिव्यतामोदमोजनाः ॥ ८ ॥
कृष्णार्थदेहदानाश्च वैष्णवार्थप्रवर्तनाः ।
कार्ष्णकुटुम्बमोदिन्यो वैष्णवीस्त्रीजनाभिगाः ॥ ९ ॥
वैष्णवीमण्डलशोभा वैष्णवीरुचिरञ्जिताः ।
वैष्णव्यो हृदये यासां सेव्यास्ताः कृष्णवत् सदा ॥१०॥
राधावत् कमलावत्ताः सेव्याश्च माणिकी यथा ।
बद्रिकावत् प्रसेव्याश्च श्रीर्भूर्लीला सती यथा ॥११॥
लक्ष्मीवत् पद्मावतीवत् सेव्यास्ताश्च प्रभुः यथा ।
ललितावन्महालक्ष्मीवत् सेव्यास्ता हरिप्रियाः ॥१२॥
तास्तु शुभाऽशुभाश्चेष्टाः क्रियाः स्पृशन्ति नैव ह ।
श्रेयसे देहिनां दोषविलयाय विमुक्तये ॥१३॥
हरिः प्रजायते लोके तद्योगात्ता विबन्धनाः ।
कृष्णवत् कार्ष्णवच्चापि कार्ष्णीवच्चापि ताः सदा ॥१४॥
दिव्याः सेव्यास्तोषणीयाः सेवाभिश्चान्तरार्पणैः ।
असंकुचितभावैश्चाऽनावरणाऽनुवर्तनैः ॥१५॥
सेवायां नैव मानं वा गर्वं चाहंकृतिं गुणम् ।
लज्जां चावरणं कुर्याद् या सा सखी हरिप्रिया ॥१६॥
ब्रह्मप्रिया सदा ब्राह्मीमण्डलं मनुते हृदि ।
कृष्णवत् सेवते चापि सर्वस्वदानसत्कृतैः ॥१७॥
विनीता वैष्णवीनां तु सन्निधौ सर्वथाऽमला ।
आत्मप्रौढिविहीना च ब्रह्मप्रिया सदोत्तमा ॥१८॥
आनन्दमूर्तौ श्रीकृष्णे दिव्या आनन्दवार्धयः ।
रोम्णि रोम्णि भवन्त्येव चाणौ चाऽणौ समस्तशः ॥१९॥
मानं विहाय संसेव्या आनन्दा दिव्यचक्रिणः ।
अन्याऽऽनन्दाः शेषभूताः सर्वशोऽस्य परात्मनः ॥२०॥
सेवया सम्प्रसन्नस्य प्रसीदन्ति हि साधवः ।
सत्येवं सर्वकामाश्च पूर्णा भवन्ति सेविनाम् ॥२१॥
कामयेत् सुसतां प्रसन्नतां कृष्णस्य सर्वदा ।
तदप्रियं प्रजह्याच्च प्रसन्नताऽवरोधकृत् ॥२२॥
प्रभुं कृष्णं विना बन्धनीया न ग्रन्थयोऽपराः ।
कृष्णप्रसन्नतासाधिकास्तु धार्यास्तदाप्तये ॥२३॥
कृष्णनारायणग्रन्थिः परा ग्रन्थिर्विवाहिनी ।
तया तु ग्रथिता बद्धा ब्रह्मर्षिणी समुच्यते ॥२४॥
सैव प्रिया सैव पत्नी सैव भार्या सधर्मिणी ।
सैव स्वस्वामिनी कान्ता भगवद्ग्रन्थियोगिनी ॥२५॥
प्रेमाम्बरप्रान्तजां तु ग्रन्थिं प्राप्य परात्मनः ।
वरेण्यस्य वरारोहा जायते ब्रह्मरोहिणी ॥२६॥
कृष्णारोहा कृष्णपार्श्वा श्रीकृष्णहृदया सखी ।
कृष्णे शयनमापन्ना कृष्णानन्दे प्रमज्जति ॥२७॥
तस्याः सम्बन्धतश्चान्याः सख्योऽपि स्वामिनः सुखम् ।
प्राप्नुवन्ति स्पृहाभक्त्या ततस्तथा भवन्त्यपि ॥२८॥
कार्ष्ण्याः संसर्गयोगेन कार्ष्ण्यो भवन्ति कृष्णगाः ।
विना यत्नं प्रजायन्ते मातस्ता ब्रह्मयोगगाः ॥२९॥
तत एव हरेर्योगाद् बालयोगिन्य एव ताः ।
नारायण्यः प्रजायन्ते नारायणार्धविग्रहाः ॥३०॥
कृपया सहयोगेन प्रजायन्ते हरिप्रियाः ।
आत्मार्पणेन जायन्ते ब्रह्मप्रियाः सदा प्रियाः ॥३१॥
शुष्कचित्ता दोषदृश्यो न जायन्ते हरेः प्रियाः ।
पूर्णकामो हि भगवान् पूर्णानन्दभरः सदा ॥३२॥
भक्तानां सुखदाः कृष्णकान्तचेष्टा हि मोक्षदाः ।
पूर्णानन्दस्य मात्राभिश्चान्यसृष्टिः सुखान्विता ॥३३॥
स्वात्मारामस्य कृष्णस्याऽऽरामो नाऽपरपेक्षकः ।
अन्याऽऽरामाः कृष्णकान्ताऽऽपेक्षकाः शाश्वताऽशकाः ॥३४॥
एवंमत्यवहीनानां भवेदज्ञानमुल्बणम् ।
मम भोगेन कृष्णोऽयं सुखमानन्दमश्नुते ॥३५॥
इतिदोषवती मातर्नैव स्यात् माधवप्रिया ।
सर्वावतारधर्तृत्वं वेद या स्वामिनः सती ॥३६॥
सर्वसौख्यप्रदातृत्वं वेद कृष्णस्य भामिनी ।
सा तदग्रे मानदोषहीना जायेत तत्प्रिया ॥३७॥
एवंविधायाः सततं साहचर्यं तु शार्ङ्गिणा ।
किंकर्यो सर्वदा स्याच्च हरेर्भूरिप्रसन्नता ॥३८॥
मत्स्यस्य जीवनं वार्षु किंकर्या जीवनं हरौ ।
सुखं दिव्यं भागवतं किंकर्या जीवनेऽस्ति वै ॥३९॥
जीवनं प्राणदे कान्ते सुखं चापि च माधवे ।
आकर्षणं तैजसं च कान्ते प्राणप्रदे प्रभौ ॥४०॥
किंकर्याः सर्वथा चास्ति मातः श्रीमाधवीश्वरे ।
सर्वं स्वत्वं हरौ तस्यास्तस्यां स्वत्वं हरेस्तथा ॥४१॥
त्यागिनी वा गृहिणी वा कृष्णे तैक्ष्ण्यं परं परम् ।
यस्या आस्वादस्य तस्या ब्राह्मीत्वं श्रीत्वमित्यपि ॥४२॥
शीलव्रतं ब्रह्मचर्यं तस्या एवाऽस्त्यखण्डितम् ।
वैराग्यं चात्मनिष्ठत्वं तस्याः साध्वीत्वमित्यपि ॥४३॥
न्यासिनीत्वं च मुक्तात्वं तस्या दिव्यात्वमित्यपि ।
नारायणीत्वं कमलास्थानं तस्याः सदाऽक्षरे ॥४४॥

यस्याः प्रथमं श्रवणं माहात्म्यस्य हरेरथ ।
ततः स्नेहोद्भवः प्रीतिस्ततो मेलनवृत्तयः ॥४५॥
आकर्षणं स्फुरणं च तदाकारात्मवर्तनम् ।
सुखानन्दप्रमोदादिवाञ्छा ततोऽभियोजनम् ॥४६॥
ततः प्राप्तिः परोक्षस्य स्वप्ने वा साधुरूपिणः ।
ततः साक्षाद्भवेत् प्राप्तिर्महानन्दस्य शेवधेः ॥४७॥
आश्लेषणं चैकतानानन्दस्पर्शादिजं सुखम् ।
सर्वविषयसौख्यं च स्वामिनाथात् तदाऽऽप्यते ॥४८॥
एवं भवेत् कृष्णरतिः कृष्णप्रिया क्रमात्पुरा ।
सतां प्रसेवया कृष्णे भक्त्या तादात्म्यमाप्नुयात् ॥४९॥
सत्सेवया त्वतिप्रीत्या सर्वे सम्पद्यते क्रियाः ।
अतिप्रीत्यैव कृष्णे ता भवन्ति रुचिवर्तनाः ॥५०॥
वर्तनं त्यागरूपं तद् दिव्यं नारायणेऽर्पितम् ।
देहक्रियासु सर्वासु देहमानविवर्जितम् ॥५१॥
साध्यो नारायणः कृष्णः कान्तः पतिर्मयाऽर्जितः ।
भावनाः श्रीहरौ कान्ते सर्वा मे सन्ति नाऽपराः ॥५२॥
मदाश्रयस्थितानां च तथैव सन्ति भावनाः ।
तास्वेव वासतो मोदोऽन्यत्र दैन्यं प्रसज्यते ॥५३॥
एतादृशीं स्थितिं प्राप्य मनो मे मोदतेतराम् ।
योऽक्षरे राजते स्वामी श्रीकान्तः कान्त एव मे ॥५४॥
अवतारा भवन्त्यस्य श्रेयसे बहवोऽपि हि ।
स एव भगवान् साक्षात् कृष्णनारायणः प्रभुः ॥५५॥
आक्षरीभिर्हि मुक्ताभिः सेव्यमानपदाम्बुजः ।
कुंकुमवापिकाक्षेत्रेऽस्मदृष्टिगोचरोऽस्ति सः ॥५६॥
अत्यन्तकरुणापूर्णः श्रीमद्गोपालनन्दनः ।
कंभराश्रीसुतः कृष्णो बालकृष्णः प्रभुः पतिः ॥५७॥
सदा किशोररूपश्च सर्वकामातिकामनः ।
सर्वेच्छापूरकः कान्तः सर्वासां पावनः पतिः ॥५८॥
तं प्रभुं शुद्धहृदया पश्यत्येव हृदम्बरे ।
वर्णेन वयसा कान्त्या पुष्ट्या शान्त्या बलेन च ॥५९॥
योग्योऽस्ति सर्वकान्तानां समर्थः माधवीपतिः ।
अनुभवित्री जानाति करपाशाधिशायिनी ॥६०॥
दिव्यं कृष्णस्य कान्तस्य सुखं वाचामगोचरम् ।
अपरोक्षं वधूर्वेत्ति वक्षआश्लेषपिण्डिता ॥६१॥
वध्वो भवन्ति मातर्वै कान्ते विविधवृत्तयः ।
काश्चित् कान्तस्य हास्ये स्युः प्रसन्ना लग्नवृत्तयः ॥६२॥
काश्चित् कान्तस्य वै नर्मवाक्येषु मिष्टवृत्तयः ।
काश्चित् कान्तस्य वै प्रेमपूर्णनेत्रेऽतिवृत्तयः ॥६३॥
काश्चित् कान्तस्य सौन्दर्ये शृंगारे यौवनेऽतिगाः ।
काश्चिद् भावेषु हावेषु प्रशंसायां च केलिषु ॥६४॥
काश्चिदेकान्तरमणे काश्चिद् विहरणे बहिः ।
काश्चित् प्रसन्ना जायन्ते द्यूतजयपराजये ॥६५॥
काश्चिन्मानप्रदाने च काश्चित् स्पर्शे सहादने ।
काश्चित् सहासने काश्चिदाशायां वर्तने तथा ॥६६॥
काश्चित्तुजलकेल्यादौ काश्चित् पुष्पावभूषणे ।
काश्चित् प्रसन्ना जायन्ते वारं वारं विलोकने ॥६७॥
काश्चिद् याने विमाने च शय्यायां च निकुञ्जके ।
काश्चिद् विजने सजने भवन्त्याकृष्टवृत्तयः ॥६८॥
काश्चिद्वक्षःसमाश्लेषे काश्चित् केशादिवेशने ।
काश्चित् पाने सुगन्धे च काश्चित् ताम्बुलके प्रियाः ॥६९॥
एवं काश्चित्तु कलहे वैमनस्येऽतिवृत्तयः ।
राजस्यो वापि तामस्यो भवन्त्याकृष्टवृत्तयः ॥७०॥
एवं भाववशा वध्वो भवन्ति कान्तवृत्तयः ।
कान्तोऽपि भगवान् भावान् विज्ञायाऽऽनन्दयत्यपि ॥७१॥
आन्तरस्थो बहिस्तिष्ठन् यथाभावं निजप्रियाम् ।
समाकर्षयति स्वस्मिन् महानन्दं ददात्यपि ॥७२॥
दिव्यानन्दभराकारः सर्वानन्दपयोदधिः ।
प्रत्यक्षकान्तरूपः श्रीकृष्णनारायणोऽवति ॥७३॥
तन्मर्यादां महामुक्ता महामुक्तानिकाः स्त्रियः ।
अवतारास्तथा व्यूहा ईश्वरा ईशनीस्त्रियः ॥७४॥
सुराः सिद्धाः सतीवर्गाः साध्व्यश्च साधवोऽमलाः ।
योगिन्यो यतयः सर्वे पालयन्ति महेश्वराः ॥७५॥
तन्मर्यादा मया पाल्या तत्प्रीतये सदा शुभा ।
स एव लोकजीवानां तारकोऽक्षरनायकः ॥७६॥
अधमोद्धारकः कृष्णस्वामी पतितपावनः ।
आश्रिताया मनोवृत्तेः पूरणार्थे तथाविधः ॥७७॥
स्वस्य रीतिं तिरोभाव्याऽऽश्रितवृत्तिं दधाति वै ।
अहो कृपालुता तस्याऽऽश्रिताऽऽश्रयित्वमिच्छति ॥७८॥
निजाया अपि नैजत्वं संविभाव्य प्रमोदते ।
धन्या मातर्हि सा नारी या तथा विन्दति प्रभुम् ॥७९॥
यस्या नान्यत्र वै श्रद्धा रुचिर्वा कान्तमन्तरा ।
पुंपुत्ररत्नवित्तादिमायिकाऽहतमानसा ॥८०॥
पत्यर्थे चान्यमन्त्रादौ श्रद्धा यस्या न विद्यते ।
प्रभुं कृष्णं विना यस्या रजनी रञ्जनी न वै ॥८१॥
अलौकिकेन्द्रजालादिप्रदर्शयितृमानवे ।
यस्या न गौरवं श्रद्धा जायते हरिमन्तरा ॥८२॥

मयि सच्चित्स्वरूपे स्वात्मन्येव राजते हरिः।
तत्रैव तु चमत्काराः सिद्धयः सन्ति मत्कृते ॥८३॥
लब्धव्यार्थाः समस्ता मे प्रभौ कान्ते भवन्ति हि।
भ्रमो येन भवेदन्योऽन्यत्र नारायणेतरे ॥८४॥
एवंविधाऽतिमतिमत्पत्न्यां प्रसन्नतां व्रजेत्।
प्रभुश्च प्रभुवत्पुण्याः सन्तो महान्त उत्तमाः ॥८५॥
सत्पथस्था हरेर्भक्ता यासु प्रसन्नवृत्तयः।
तासां भाग्यं महद्दिव्यं ताभिः सारः समर्जितः ॥८६॥
अथैवं श्रीकृष्णकान्तस्वाम्यंके संनिषद्य च।
श्रीकृष्णेतरकोट्यन्येश्वरमानं न वाञ्छति ॥८७॥
अनादिश्रीकृष्णनारायणभिन्ने न मोहनम्।
नरनारायणस्येव मोहनं न स्त्रियां नरे ॥८८॥
पतिः ऋषिर्नरनारायणो मे तापसः प्रभुः।
शीलव्रतो महामायापारवर्ती हिमालये ॥८९॥
निर्मोहो वर्तते मातर्बदरीवनभूतले।
तथाऽहं तापसी मातर्बदरीनाथबद्रिका ॥९०॥
वर्तेऽहं मोक्षशून्याऽत्र गृहे ते बालयोगिनी।
सदा शीलव्रता कन्या लोककल्याणकारिणी ॥९१॥
मत्फलैः ऋषयो यान्ति विनिर्धूताऽघकोटयः।
मदक्षरं परं धाम स्वामिनो मेऽक्षरं पदम् ॥९२॥
व्यसनं मे हरेर्जातं तद्विना न क्षणं मम।
केवलं विद्यते मातर्विशिष्टं तेन विद्यते ॥९३॥
स्नेहतादात्म्यतन्वा मे लीनता स्वामिनि प्रभौ।
सदाऽस्ति तद्विना मातर्नाहं भवामि साकृतिः ॥९४॥
सर्वावस्थासु सुखदं सर्वलोकेषु रक्षकम्।
प्रभुं कृष्णं प्रियं कान्तं कथं मुञ्चाम्यसुस्थितम् ॥९५॥
आधारमात्मनः कृष्णंनारायणं सुखास्पदम्।
श्रीलक्ष्मीमाणिकीसेव्यं ललितावरमुत्तमम् ॥९६॥
प्रभुं नाथं बदरीशं पाशवतीपतिं हरिम्।
सर्वदा श्रीमहालक्ष्मीसेवितं पूजितं तथा ॥९७॥
कम्भराश्रीश्वरीध्यातं लालितं पालितं तथा।
प्राप्तं कथं विमुञ्चामि वद मातर्मनीषया ॥९८॥
न शैथिल्यं हरौ मेऽस्ति न मायायां प्रवर्तना।
नाऽन्यदेहे रतिर्मेऽस्ति ब्रह्माऽन्यं चिन्तयामि किम् ॥९९॥
इत्युक्त्वा विरराामाऽसौ बद्रीशि बालयोगिनी।
माता भाग्यं निजं मेने धन्यं सुरेश्वरी सती ॥१००॥
व्यचिन्तयद्धरेः प्राप्त्यै पुत्रीतः साधनान्यपि।
आशीर्वादान् ददौ पुत्र्यै ज्ञात्वा तां बदरीश्वरीम् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बालयोगिनीगीतायां परमवैष्णवीयोगविवेचननामा चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि ततः श्रीबालयोगिनी।
स्वमात्रे परमब्रह्मप्रेमरसं जगाद यम् ॥ १ ॥
मातर्हृदि सदा तिष्ठेद् वासुदेवस्य भावना।
प्रीतिदाढ्यं सुमाहात्म्यं श्रद्धा हरौ प्रभूयसी ॥ २ ॥
महानन्दः प्रमोदश्च सुखं विराम ईश्वरे।
कृष्णनारायणे शान्तिस्तिष्ठेयुः सर्वथा प्रभौ ॥ ३ ॥
यस्याः सा भवति ब्रह्मरसवेत्त्री न चेतरा।
तस्या आपदि कष्टायां स्थैर्यं कृष्णनरायणे ॥ ४ ॥
अनुवृत्तायाः कृष्णस्य कृष्णाश्रयसतामपि।
सेवाभावयुतायास्तु ब्रह्मप्रेमरसो मिलेत् ॥ ५ ॥
श्रेयःसाधनमात्ताया ब्रह्मप्रेमरसोद्भवः।
आत्मनः श्रीकृष्णनारायणस्य दर्शनं विना ॥ ६ ॥
कस्या अपि न शान्तिः स्यात् साक्षाद् योगं विनाऽपि च।
योगश्च श्रीहरेरेव ध्यानोपासनभक्तिभिः ॥ ७ ॥
तद्विनेष्टरसप्राप्त्यै वृथा श्रमः खलेहवत्।
कृपया श्रीहरिर्योगं ददाति भक्तियोषिते ॥ ८ ॥
अतीव रमणीयांगः सर्वसौन्दर्यसंग्रहः।
नित्यदिव्यगुणाढ्यश्च सर्वदेहिमनोहरः ॥ ९ ॥
कृष्णः स्वामी सेविकाश्च मुक्तानिकाः पुमुत्तमम्।
भजन्ति संप्रसेवन्ते सरूपाः समकामनाः ॥१०॥
अस्य योगेन नैर्गुण्यं यान्ति गुणाढ्यदेहिनः।
अन्तर्यामितया सर्वेष्ववस्थितस्य चक्रिणः ॥११॥
स जीवनं चिदचितां कर्ता भोक्ता पतिः प्रभुः।
तथा स्वतःसिद्धभूरिमहैश्वर्यकलानिधिः ॥१२॥
तस्य श्रीबालकृष्णस्य योगः सौख्यप्रदः सदा।
सच्चिदानन्दरूपाया मुक्ताया अत्र चाक्षरे ॥१३॥
परमानन्दकृत् कृष्णः प्रेम्णा प्रसेवितः प्रभुः।
स्वमूर्तौ निजभक्तां वै लीनीकरोति तद्रसः ॥१४॥
अद्य कालान्तरे वापि कृष्णे लीनत्वमाप्नुयात्।
यदा तदा कृष्णप्रेमरसमास्वादयेत् सखी ॥१५॥

आत्मनिष्ठाबलं श्रीमत्कृष्णनारायणार्पणम् ।
उभयं प्राप्य कान्ते वै लीनतां तु सदाऽर्जयेत् ॥१६॥
सर्वराजाधिराजश्रीकृष्णे प्रमोदमाप्नुयात् ।
महिमानं विजानीयाद् ब्रह्मरसमुपाहरेत् ॥१७॥
चतुर्दशावृतिजुष्टं ब्रह्माण्डं ब्रह्मणाऽवितम् ।
असंख्याऽण्डानि सन्त्येषां राजा विराट् सुपूरुषः ॥१८॥
वैराजास्ते ह्यसंख्याता महाविष्णोः सुपुत्रकाः ।
एवं महाविष्णवोऽपि प्रधानपुरुषोद्भवाः ॥१९॥
असंख्यास्ते प्रधानेशाः प्रकृतिपुंसमुद्भवाः ।
सा माया स पुमान् मुक्तोक्षरे लीनौ लये मतौ ॥२०॥
पुनः प्रकाश्यतां प्राप्तौ सृष्ट्यारम्भे पुनः पुनः ।
एवंविधाऽक्षरांशस्य सुखमात्राभिसंप्लुता ॥२१॥
सृष्टिः सर्वा सुखं भुंक्तेऽक्षरं तु सुखवद्धरेः ।
अनन्ताऽक्षरमुक्ताश्चाऽनन्तधामानि धामिनाम् ॥२२॥
अवतारा असंख्याता मुक्ता मुक्तानिकास्तथा ।
ऐश्वर्याणि समस्तानि शक्तयः पार्षदास्तथा ॥२३॥
पार्षदान्यः समस्ताश्च यन्मूर्तेः सुखभागिनः ।
तस्याऽनादिकृष्णनारायणस्य परमात्मनः ॥२४॥
एकैकांगे सुखानन्त्यं विद्यते रोमरोमसु ।
तस्याग्रे त्वीश्वरा जीवाश्चार्काग्रे विस्फुलिंगवत् ॥२५॥
अतितुच्छा भवन्त्येव ब्रह्माण्डपालका अपि ।
सर्वेऽनादिकृष्णनारायणदत्तं प्रभुञ्जते ॥२६॥
सुखांशं भुञ्जते स्वल्पमुच्छिष्टं मायिकं क्षयि ।
एतादृशार्थं तपसा यतन्ते स्वर्गवाञ्छया ॥२७॥
मन्वते दुर्लभं चापि राजसा मोहवृत्तयः ।
तदा कार्ष्णं भागवतं सुखं किं वर्ण्यगोचरम् ॥२८॥
सहजं शाश्वतं यत्र सुखं चालौकिकं परम् ।
यदंशे योगिनो योगसमाधौ यान्ति लीनताम् ॥२९॥
सहस्रवत्सरान् तत्र तिष्ठन्त्यव्यक्तमोदिनः ।
महासुषुप्तौ तुर्यायां भवन्ति सुखिनोऽपरे ॥३०॥
कामनायां रतौ चापि भवन्ति सुखिनोऽपि च ।
तथेतरेन्द्रियजन्यसुखैर्भवन्ति नन्दिनः ॥३१॥
ईदृक्सुखाब्धिर्भगवान् स्वामीश्रीवल्लभः प्रभुः ।
रामकृष्णादिरूपाणां भर्ता श्रीमाधवीपतिः ॥३२॥
अवतारेश्वरेशश्च सर्वमुक्ताभिपूजितः ।
सर्वपरो बालकृष्णोऽनन्तब्रह्मरसोदधिः ॥३३॥
सर्वब्रह्मप्रियाजुष्टो हरिप्रियाभिनन्दितः ।
यस्य पादरजो राधालक्ष्मीबदरीशक्तिभिः ॥३४॥
ब्रह्मविराण्महाविष्णुपूरुषैरुह्यते सदा ।
यत्र श्रीभगवच्छब्दः परब्रह्मैव वर्तते ॥३५॥
यस्त्वेक एव सर्वेशो यत्समो नाऽधिकोऽपरः ।
यत्सेवयोपास्तिभिश्च यत्साधर्म्यं व्रजन्ति च ॥३६॥
तथापि दासवत् सर्वे तस्याऽग्रे तन्निता यथा ।
वर्तन्ते ते सरूपाश्च सरूपिण्योऽपि शक्तयः ॥३७॥
कालो माया पूरुषाद्या यद्धीताः किंकरा इव ।
यदाशां प्राप्य कुर्वन्ति सृष्ट्युद्भवादि सर्वदा ॥३८॥
एवमचिन्त्यविभवो बदरीशो जनार्दनः ।
अनादिश्रीकृष्णनारायणो गोपालनन्दनः ॥३९॥
मानवो वर्तते त्वद्य कुंकुमवापिकालये ।
येन जलांशतश्चित्रा हंसा मयूरकाः शुकाः ॥४०॥
नराः पतत्रिणः कीटाः पशवः स्वस्वजातयः ।
निर्मिता वंशरूपेण महाश्चर्यादिलीलया ॥४१॥
तत्कृतं नान्यथाकर्तुं केनापि शक्यते त्विह ।
इत्यादिसर्वसामर्थ्ययुक्तेन तेन शार्ङ्गिणा ॥४२॥
रचयित्वा सृष्टिजीवान् सुखांशं प्रददौ निजम् ।
तद्रसे रसवन्तश्च सर्वा भवन्ति सृष्टयः ॥४३॥
विदित्वा तं कम्भरायाः सुतं श्रीकमलापतिम् ।
बदरीशं माधवीशं भार्गवीशं प्रभुंपतिम् ॥४४॥
माधवीस्वामिनं तं श्रीलक्ष्मीनाथं सतीपतिम् ।
माणिक्याधिपतिं कृष्णं कान्तं मायापतिं हरिम् ॥४५॥
मुक्तमुक्तानिकानाथं ब्रह्मधामाधिपं प्रभुम् ।
राधारमाऽधिनाथं च रामकृष्णादिकारणम् ॥४६॥
तत्र कुर्याद् रतिं प्रीतिं स्नेहं मोहं समुत्सवम् ।
आनन्दं क्रीडनं मातर्ब्रह्मरसमवाप्नुयात् ॥४७॥
एवंविधा हि बदरी मायिके बध्यते कथम् ।
बद्धाऽपि मुच्यते कृष्णे मुक्ताऽन्यत्र न सज्जते ॥४८॥
निर्मला जायते दिव्या बध्नाति श्रीहरौ रतिम् ।
एषा तु भावना मातः पुष्णात्यंगानि दुग्धवत् ॥४९॥
एषा ब्रह्मरसगाथा मातः सर्वार्थसंभृता ।
पीता यया तया पीतं नवं ब्रह्मरसामृतम् ॥५०॥
एतादृशीप्रभक्तायाः संगं करोति या सती ।
साऽपि ब्रह्मरसैः पूर्णा भवेत् कार्ष्णी न संशयः ॥५१॥
भक्तिरैकान्तिकी कृष्णे सिद्ध्येदस्याऽवधारणात् ।
अस्यैव श्रीहरेर्योगादन्यत्र संगवर्जनात् ॥५२॥
शृणु मातः कथां वच्मि चारण्या दिव्ययोषितः ।
नाम्ना नागमुखीदेवी जात्याऽभवच्च चारणी ॥५३॥

रैवताद्रेः पश्चिमे सा ह्युन्मादनपत्तने ।
पार्श्ववने महिषीणां पालिकाऽभूत् स्वधर्मिणी ॥५४॥
पतिपुत्रविहीना सा त्वेकला जनवर्जिता ।
दधिदुग्धघृताद्यादिनिर्वाहा धर्मसंस्थिता ॥५५॥
साऽचिन्तयत् पतिर्नष्टः पुत्रा नष्टाश्च पञ्च वै ।
पुत्री नास्ति कुटुम्बं न जातिस्तु वर्तते मम ॥५६॥
चारण्योऽपि भवन्त्यत्र बह्व्यो गार्हस्थ्यमाश्रिताः ।
म्रियन्ते चापि जायन्ते विना ता भक्तिमन्तरा ॥५७॥
पतयो बहवः प्राप्तास्ताभिश्चान्तो न विद्यते ।
पतीनां सुतपुत्रीणां मायान्तोऽपि न विद्यते ॥५८॥
कामदेवस्य चाऽन्तो न विषयाणां लयोऽपि न ।
कर्मणां नैव विरतिः कथं जन्मक्षयो भवेत् ॥५९॥
वासनाः प्रत्यहं नूत्ना जायन्ते भोगसंभवाः ।
आत्मनस्तत्र मोक्षो न कामरसेन योषिताम् ॥६०॥
तस्माच्छरीरमासाद्य दुर्लभं मोक्षदं त्विदम् ।
तेन लभ्यः शाश्वतो यो ब्रह्मरसो निरामयः ॥६१॥
परमात्मा साधवश्च मूर्तिमन्तो धरातले ।
भूत्वा तु मानवाश्चापि मानव्यस्तस्य शक्तयः ॥६२॥
विचरन्ति श्रेयसे देहिनां त्यागस्वरूपिणः ।
तस्य मानवरूपस्य श्रीहरेः साधुरूपिणः ॥६३॥
साधूनां सेवया प्रसादेन किंकरीचर्यया ।
ब्रह्मरसो ह्यवाप्येत नान्यथा तु कथंचन ॥६४॥
हरिर्वा हरिणी वाऽत्र हरिभक्ताश्च साधवः ।
परब्रह्मरसाब्धिस्थाः पाययन्ति परानपि ॥६५॥
तस्मान्मया सदा सेव्याः साधवः कृष्णरूपिणः ।
साध्व्यो लक्ष्मीस्वरूपाश्च राधारमात्मिकास्तथा ॥६६॥
तत्प्रसंगेन भगवान् मिलिष्यति प्रियापतिः ।
विना मस्तकदानेन साम्राज्यं नोपलभ्यते ॥६७॥
विना सर्वस्वदानेन स्वामित्वं दुर्लभं खलु ।
कर्मचिते कर्मलोके कृतस्य फलमश्नुते ॥६८॥
अहं ददामि सर्वस्वं कृष्णाय कृष्णसेविने ।
ततः कृष्णः स्वसर्वस्वं मह्यं दास्यति निश्चितम् ॥६९॥
न मे विघ्नं कुटुम्बात्म न मे शास्ता पतिस्तथा ।
न मे बन्धो नृपस्यापि स्वतन्त्राऽस्मि सुखान्विता ॥७०॥
महद्भाग्योदयो जातो यन्मायाबन्धनं गतम् ।
अधुना प्राप्य कृष्णस्य बन्धनं तत्सतामपि ॥७१॥
ब्रह्मानन्दमहानन्दं प्राप्स्यामि श्रीशसेवनात् ।
विचार्येत्थं नागमुखी चारणी ब्रह्मचारिणी ॥७२॥
निजावासे सतां सेवां चक्रे तीर्थनिवासिनाम् ।
साध्वीनां सततं सेवां चक्रे दुग्धादिभिर्मुदा ॥७३॥
नागमुख्या भावभक्तिं श्रुत्वा चायान्ति साधवः ।
निवसन्ति गृहे तस्याः सेवते तान् मुदान्विता ॥७४॥
साधुव्रतं विदधाना वर्तते सेविकोत्तमा ।
उष्णोदकैः स्नपयति तैलाद्यंगविमर्दनैः ॥७५॥
प्रातर्दुग्धानि चोष्णानि सशर्करैलानि भावुकी ।
केसराढ्यानि साधूँश्च संपाययति चारणी ॥७६॥
चन्दनेन सतां भाले वक्षस्यूर्वोश्च पादयोः ।
पूजनं प्रकरोत्येषा पुष्पमालार्पणैस्तथा ॥७७॥
आरात्रिकं ततः कृत्वा मध्याह्नभोजनादिकम् ।
पाचयित्वा मिष्टमिष्टं संभोजयति चारणी ॥७८॥
साधवोऽपि प्रभुक्त्वैव कुर्वन्ति भजनं हरेः ।
सायं सा चारणी साधून् भोजयित्वा ततः स्वयम् ॥७९॥
पादसंवाहनं सतां करोत्यसंशया सती ।
साधुरूपः कृष्णनारायणश्चास्ते मिलत्यपि ॥८०॥
साधुसेवा निर्गुणा च दिव्या पापविनाशिनी ।
मोक्षदा चेति मत्वैव शय्यायां साऽति मोदते ॥८१॥
एवं सा चारणी देवी साधुव्रतं करोति हि ।
श्रद्धया श्रीकृष्णनारायणं रटति नित्यदा ॥८२॥
साधुसेवोद्भवं चात्मानन्दं देहसुखादिकम् ।
परब्रह्मरसं मत्वा तृप्ता तत्र प्रमोदते ॥८३॥
अस्मिन् साधौ परस्मिन् वा चाऽन्यस्मिन् वा हरिः स्वयम् ।
मिलिष्यति प्रसन्नो मे सेवयेति प्रसेवते ॥८४॥
अथैकदाऽनादिकृष्णनारायणः श्रियाः पतिः ।
साधुरूपं गृहीत्वैव बहुसाधुसमायुतः ॥८५॥
ययौ तस्या गृहं मातर्बालकृष्णस्वरूपधृक् ।
रूपे गुणे शरीरे च विलक्षणश्च तेजसि ॥८६॥
चारण्यास्तु मनस्तत्र लग्नं कृष्णनरायणे ।
सर्वान् साधून् भोजयित्वा सेवित्वा देहमर्दनैः ॥८७॥
क्षणे क्षणे तु सततं स्फुरन्तं तं विलक्षणम् ।
रात्र्यर्धान्ते ययौ सुप्तं तेजःपरिधिमण्डितम् ॥८८॥
ब्रह्मानन्दभरं शीतगुणं चन्द्रातिशीतलम् ।
पीयूषातिसुखवार्द्धिं सुन्दरं पुष्टयौवनम् ॥८९॥
आश्लिष्य प्रथमं स्पर्शसुखं लेभे तु चारणी ।
तावच्छ्रीबालकृष्णस्य मूर्तेः सर्वेन्द्रियोद्भवम् ॥९०॥
आकर्षणादिसंपुष्टप्रवाहाऽऽनन्दसागरम् ।
महासुखं चारणी सा लेभे सर्वेन्द्रियोद्भवम् ॥९१॥

तल्लीना सा जडेवाऽऽसीद् देहभानादिवर्जिता ।
लीनाऽभवत् कृष्णमूर्तौ यथा संसारपारगा ॥९२॥
आप्रातः सा हरौ सक्ता सर्वाङ्गस्पर्शमोदना ।
नोत्तस्थौ कृष्णसंश्लिष्टशय्यातश्चारणी तदा ॥९३॥
दशसाहस्रयुगजं ब्रह्मरसाऽमृताऽशनम् ।
लब्ध्वा तृप्तिं गता कृष्णेच्छयाऽपि ब्रह्मचारिणी ॥९४॥
अविप्लुता कृष्णवत् सा कार्ष्णी दिव्या व्यजायत ।
अथ कृष्णः प्रगे प्राह पश्य मे रूपमैश्वरम् ॥९५॥
इत्युक्त्वा दर्शयामासाऽक्षरं धाम परात्परम् ।
अनन्तमुक्तजुष्टं च निजरूपं सुशोभनम् ॥९६॥
अनन्तराधालक्ष्म्यादिसेवितं बदरीपतिम् ।
ततोऽनादिकृष्णनारायणं कुंकुमवाप्ययम् ॥९७॥
बालकृष्णस्वरूपं च दर्शयामास सुन्दरम् ।
ततस्तूर्णं तिरोभाव्याऽवदत् तां चारणीं सतीम् ॥९८॥
किमिच्छसि ददाम्यत्र त्वया सन्तः प्रतोषिताः ।
अहं फलं प्रदातुं ते समागतोऽस्मि त्वत्पतिः ॥९९॥
चारणी प्राह भगवन् महिषीमण्डलेन वै ।
साकं चाहं तव धामाऽक्षरं प्रयामि देहि तत् ॥१००॥
तथाऽस्त्विति प्रभुः प्राह तावद् विमानमाययौ ।
तेनैव दिव्यदेहेन चारणीं नाम्नकैसरीम् ॥१०१॥
नाम कृत्वा विमाने च संगृह्य परमेश्वरः ।
पशुदेहान् महिषीणां त्याजयित्वा च ता अपि ॥१०२॥
दिव्यदेहा विधायैव नाम्नकैसरीदासिकाः ।
अक्षरं धाम परमं निनाय कृतवल्लभः ॥१०३॥
ब्रह्महृदे स्नपयित्वा मुक्तानिका विधाय च ।
ब्रह्मानन्दरसं दत्वा मोक्षपदे ररक्ष ताः ॥१०४॥
एवं मातश्चारणी सा प्रेम्णा सतां प्रसेवया ।
परब्रह्मरसं प्राप दिव्या मुक्ता बभूव ह ॥१०५॥
सोऽयं श्रीमद्बालकृष्णो राजते श्रीपतिः पतिः ।
कुंकुमवापिकाक्षेत्रे लोमशस्याश्रमान्तिके ॥१०६॥
राजाधिराजो भगवान् कोट्यर्बुदाब्जशक्तिधृक् ।
वृतो मयाऽपि स स्वामी ब्रह्मरसं लभाम्यपि ॥१०७॥
इत्युक्त्वा बदरीदेवि क्षणं सा बालयोगिनी ।
विरराम पतिं स्वस्या वल्लभं संगता हृदि ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
बालयोगिनीगीतायां परब्रह्मप्रेमरसवर्णनं नाम्नमुखी-
चारण्याः सतां सेवया श्रीकृष्णनारायणप्राप्ति-
ब्रह्मरसाप्तिर्मोक्षणं चेत्यादिनिरूपणनामा
पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीनरनारायण उवाच—

शृणु बदरीप्रिये त्वं यत्प्राह श्रीबालयोगिनी ।
नर्मकर्त्रीसमाख्यानं मातरं ब्रह्मरासनम् ॥ १ ॥
तत्ते वक्ष्यामि कृष्णस्य ब्रह्मरसाशनप्रदम् ।
यच्छ्रुत्वाऽपि नरा नार्यस्तद्रीत्या यान्ति मोक्षणम् ॥ २ ॥
आसीद् ग्रामे कामयाने नाम्ना देवलको जनः ।
तस्य भार्याऽभवत् साध्वी नर्मकार्यविचक्षणा ॥ ३ ॥
औदासीन्यगतस्याऽपि महादुःखगतस्य च ।
हास्यविनोदशून्यस्य हास्यं जनयते तु सा ॥ ४ ॥
तत्कालोचितलावण्यपूर्णवाक्यैस्तथेतरैः ।
यावद्रसप्रयोगैश्च नर्म जनयते द्रुतम् ॥ ५ ॥
गृहे समागता लोकाः प्रसन्नमानसा इति ।
जायन्ते वार्तया तस्याः समर्पयन्ति चोपदाः ॥ ६ ॥
धनं भूषा अम्बराणि मिष्टान्नानि शुभानि च ।
धान्यानि चोपकरणान्यपि सर्वेऽर्पयन्ति च ॥ ७ ॥
राजा राजसभायां च महोत्सवे निजोत्सवे ।
सूरिकाव्योत्तरं तस्या हास्यरसं युनक्त्यपि ॥ ८ ॥
सभा प्रसन्ना भवति मोदन्ते मानवा इति ।
राजा तस्यै महापारितोषिकं प्रददात्यपि ॥ ९ ॥
एवं सा देवलभार्या नाम्ना विनोदिनी सती ।
सौराष्ट्रे सुभगे देशे प्रसिद्धा संव्यजायत ॥१०॥
हास्यकलाभ्यसनार्थं त्वायान्ति योषितो नराः ।
तान् सा यथायथं सर्वान् शिक्षयत्यपि सर्वथा ॥११॥
अथैकदाऽगमत्तस्या गृहे सतां सुमण्डलम् ।
साध्वीनां मण्डलं चापि भगवद्भक्तिकारकम् ॥१२॥
भोजिता वन्दिताः सर्वे गृहे स्वागतकर्मभिः ।
तया प्रसेविताश्चापि रात्रौ चक्रुः सुकीर्तनम् ॥१३॥
साधूनां कीर्तनं श्रुत्वा साध्वीनां गीतिकास्तथा ।
परमेशमतिर्जाता भक्तिधर्मपरायणा ॥१४॥
विनोदिन्या विचारोऽभूद् विनोदेन हरिः स्वयम् ।
यथा सतां च साध्वीनां कीर्तनैः सुप्रसादवान् ॥१५॥
सन्तुष्टो जायते कृष्णनारायणः परप्रभुः ।
तथा भवेत् सुसन्तुष्टो नित्यं तथा करोम्यहम् ॥१६॥
विचार्येत्थं ब्रह्मरसायनाख्यसाधुतस्तु सा ।
जग्राह वैष्णवं मन्त्रं मोक्षदं तुलसीस्रजम् ॥१७॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
जजाप परमं मन्त्रं मूर्तिं जग्राह चित्रजाम् ॥१८॥

पुपूज तां हरेर्मूर्तिं नित्यं प्रसेवते मुदा ।
भक्ता जाता हरेः शुद्धा विनोदिनी 'विलासिनी ॥१९॥
सा पप्रच्छ गुरुं साधुं ब्रह्मरसायनाऽभिधम् ।
ब्रह्मानन्दमहामिष्टानन्दरसाप्तिसाधनम् ॥२०॥
अत्यादरेण तां शिष्यां प्राह ब्रह्मरसायनः ।
सर्वे रसा यत्र चैकीभवन्ति परमे रसे ॥२१॥
श्रीमत्स्वामिबालकृष्णनारायणाऽवतारिणि ।
तदाप्तिस्तद्रसाप्तेस्तु साधनं भगवान् स्वयम् ॥२२॥
प्रेमभक्त्यात्मसर्वस्वनिवेदिता हरेःप्रिया ।
आत्मनिवेदनेनाऽयं श्रीकृष्णः समवाप्यते ॥२३॥
आत्मनिवेदनं स्नेहप्रेमानुरागसंभृतम् ।
प्रातिकूल्याऽलसत्वाऽश्रद्धादिदोषविवर्जितम् ॥२४॥
अन्यवृत्त्यप्रतिहतं सततस्फूर्तिगोचरम् ।
दिव्याऽपरोक्षमानाढ्यश्रीकृष्णकान्तसंश्रितम् ॥२५॥
पञ्चभूतशरीरेऽस्याऽऽवेशः कृष्णस्य सर्वथा ।
इन्द्रियाणां गोचरेषु मूर्तिस्तस्यैव तद्गुणाः ॥२६॥
तद्विषयास्तन्माधुर्यं तत्सुखं तत्प्रमोदिता ।
तद्रसस्तस्य संस्पर्शस्तद्रूपं तच्छ्रवस्तथा ॥२७॥
तद्गन्धस्तस्य चादानं तद्विहारस्तत्सर्जनम् ।
तदानन्दश्च मननं तस्य सञ्चिन्तनं मतिः ॥२८॥
तन्मानं तन्निर्णयश्च तत्प्रमा तत्स्मृतिस्तथा ।
तत्संस्कारास्तदिच्छा च स ज्ञेयो ज्ञप्तिसंग्रहे ॥२९॥
स्फूर्तौ माने विरामे च स एव गोचरः सदा ।
अन्तर्बहिश्च स एव कृष्णनारायणः प्रभुः ॥३०॥
गुप्ते प्रकाशे हृदये निर्जने सजनेऽपि सः ।
क्रियायां निजचेष्टायां हास्ये प्रमोदने च सः ॥३१॥
सर्वथाऽऽभूषणादौ च शृंगारेऽपि हरिर्हि सः ।
स्नाने स्वपने धूल्यादौ विनोदे च व्रतेऽपि सः ॥३२॥
स्वत्वे पारक्यरूपे च समर्पणे ग्रहेऽपि च ।
आदाने च प्रतिदाने विनिमयेऽपि मापतिः ॥३३॥
परितः सन्मुखे पृष्ठे मध्येऽधश्चार्धकेऽपि सः ।
अनुयोगी प्रतियोगी संसर्गेऽपि हरिर्हि सः ॥३४॥
आस्वाद्ये रस्यविकृतौ तृप्तौ पेयेऽतिशीतले ।
काम्ये चाकर्षणे गोष्ठौ विनोदेऽपि च माधवः ॥३५॥
गृहे वने चत्वरे च वितर्दौ मंचकेऽपि सः ।
दोलायां च विमाने च याने च वाहनेऽपि सः ॥३६॥
इष्यमाणे च तन्निजे महानन्दात्मको हरिः ।
आनुकूल्यप्रवाहे च प्रच्छाद्येऽपि प्रभुर्हि सः ॥३७॥
एवं सर्वत्र भगवान् यस्याः श्रीकृष्ण एव हि ।
तस्या भक्तिः प्रेमपूर्णा साधनं कृष्णलब्धिकृत् ॥३८॥
कृष्णाप्तौ तद्रसाप्तिश्च शाश्वती चाऽनिवर्तिनी ।
तद्योगजा भवेद् दिव्या चात्मार्पणरसादिजा ॥३९॥
अन्यथा नाऽऽप्यते कृष्णो नाऽऽप्यते तद्रसोऽपि च ।
नाप्यते शाश्वतानन्दो विनोदिनि ! कृपां विना ॥४०॥
सेवया त्वर्जयेत्तस्य कृपां स्नेहेन तन्मनः ।
अर्पणेनाऽर्जयेत् कृष्णं कृष्णेन तन्महारसम् ॥४१॥
फलं ब्रह्मरसं प्राप्य प्राप्तव्यं नाऽवशिष्यते ।
इत्युक्ता गुरुणा साध्वी विनोदिनी तु देवली ॥४२॥
गुरोः सेवां तथा चक्रे यथा शिक्षा समर्जिता ।
नारायणः स्वयं कृष्णो गुरुर्नारायणः स्वयम् ॥४३॥
प्रत्यक्षः सर्वफलदो यथाभक्तानुवर्तनः ।
गुरुर्ब्रह्म गुरुः कृष्णो गुरुर्जीवहरिः प्रभुः ॥४४॥
स एव तोषितः सम्यक् सर्वमानुषनाटनः ।
तया प्रतर्पितो देवेश्वराधिपनरायणः ॥४५॥
मत्वैवं सा गुरुं भक्त्या तोषयामास सुन्दरी ।
ब्रह्मचर्यपरा धर्मपरा सेवापरायणा ॥४६॥
गुरुस्तस्या गृहे वासं चिरं चकार शान्तिमान् ।
अथैकदा दधाराऽसौ रूपं देवलकस्य वै ॥४७॥
अथ तं सुन्दरं कान्तं पतिं गुरुं विलोक्य सा ।
उवाच परया प्रीत्या धन्याऽस्म्यनुग्रहाऽर्थिनी ॥४८॥
यथेष्टं गुरुदेव त्वं मम स्वामिस्वरूपधृक् ।
प्रसेवस्व निजां मत्वा ब्रह्मरसं प्रपायय ॥४९॥
पातिव्रत्यं स्वाम्यधीनं स्वामी त्वं वर्तसेऽधुना ।
नारायणस्वरूपस्त्वं स्वामिरूपोऽसि गृह्ण माम् ॥५०॥
अथ प्रसन्नो गुरुराड् वीक्ष्य सर्वां शुभावनाम् ।
अगृह्य तां ततश्चाशीर्वादं ददौ हृदा मुदा ॥५१॥
भव दासी हरेः पत्नी भक्ता चैकान्तिनी परा ।
दिव्यलक्ष्मीसमा शिष्या नारायणी नरोत्तमी ॥५२॥
अहं त्वत्सेवया तुष्टो ददामि तेऽतिवैभवम् ।
चमत्कारं दिव्यरूपधारिणी सुखिनी भव ॥५३॥
इत्युक्त्वा श्रीगुरुर्ब्रह्मरसायनो विनोदिनीम् ।
पस्पर्श करमात्रेण पाययामास वारि च ॥५४॥
तावद् दिव्या पररूपा राधालक्ष्मीसमा सती ।
निरावरणदेहा च सम्बभूव विनोदिनी ॥५५॥
एवं जाता दिव्यदेवी दिव्यक्रियाऽतिमानुषी ।
गुरुः पूजां गृहीत्वा च कृष्णपूजां समर्प्य च ॥५६॥

तिरोबभूव सहसा विद्युल्लतेव चाम्बरे ।
वीक्ष्यैवं परमं श्रेष्ठं चमत्कारं गुरावपि ॥५७॥
विनोदिनी महाश्चर्यपरा स्तब्धाऽभवत् क्षणम् ।
तर्कयामास बहुधा कोऽयं गुरुस्वरूपधृक् ॥५८॥
साक्षान्नारायणः किंवा नरो नारायणाऽनुजः ।
ईश्वरो वाऽन्तरात्मा वा परब्रह्म प्रभुश्च वा ॥५९॥
दिव्यतां संगता यस्य कृपया स्पर्शनेन च ।
तथापि दिव्यदृष्ट्याऽयं गुरुर्मया न वीक्ष्यते ॥६०॥

अतोऽतिदिव्यलोकस्थो भवेन्नारायणो गुरुः ।
मायालोकास्तु मे दृष्टेर्गोचराः सन्ति चाऽधुना ॥६१॥
दृश्यते न गुरुस्तत्र ततो ब्रह्म भवेदयम् ।
अहो प्राप्तो विनोदिन्या विनोदेन विनोदकृत् ॥६२॥
अथापि धन्यभाग्याऽस्मि गुर्वर्पितामममायिकीम् ।
कृष्णमूर्तिं भजिष्येऽहं यतिष्ये लब्धये पुनः ॥६३॥
इत्येवं सा महाशान्तिं मत्वा ध्यायति चाच्युतम् ।
तावदन्ये साधवश्च साध्व्यश्चापि तिरोऽभवन् ॥६४॥
सर्वे ते श्रीकृष्णनारायणमूर्तौ लयं गताः ।
अथ प्राप्ता निश्चयं सा गुरुर्मूर्तिरियं यतः ॥६५॥

साक्षान्नारायणे कृष्णे सर्वेऽत्र विलयं गताः ।
गुरुर्मूर्तिं च मे दत्वा तिरोऽभवन्न लोक्यते ॥६६॥
ततः सोऽयं वर्ततेऽद्य स्वामिकृष्णनरायणः ।
एवं त्वतिप्रसन्तुष्टा प्राह देवलकं पतिम् ॥६७॥
मूर्तिश्चाऽयं स्वयं साधुर्ब्रह्मरसायनात्मकः ।
चेतनोऽपि प्रतिमाऽऽस्ते धन्यः स्वामिन् भवस्यपि ॥६८॥
आवयोः परमं भाग्यं विनोदेन च देहिनाम् ।
अन्तरात्मा प्रतुष्टः सन्नस्मद्गृहमुपाययौ ॥६९॥
विनोदयिष्ये सततं तं साक्षात्पुरुषोत्तमम् ।
सेवां करोतु भगवन् भवान् स्वामिन् सदाऽस्य वै ॥७०॥
अथ मूर्तिं सजीवां तां सेवेते तौ मुदान्वितौ ।
यथोक्तरीत्या देवेशं यथासत्कारमाननम् ॥७१॥
देवलको नित्यमेवाऽर्चयत्यच्युतमुत्सुकः ।
किन्तु विनोदिनी भेजे प्रभुं प्रत्यक्षवत् पतिम् ॥७२॥
तथापि श्रीकृष्णनारायणश्चेतनरूपवान् ।
नाऽऽविर्भवति मूर्तेस्तु भावाभिज्ञश्चिरं क्वचित् ॥७३॥
अस्थैर्ये तु विनोदिन्याः परीक्षितुं समिच्छति ।
विनोदिनी गते वर्षे मूर्तेः सेवनतस्ततः ॥७४॥
व्रतं जग्राह मूर्त्यग्रेऽनशनं दर्शनेच्छया ।
मासं व्रतं चकारैव मूर्त्यग्रे कमलासने ॥७५॥

सन्निषक्ता करे मालां धृत्वा जजाप केशवम् ।
नेत्राभ्यां तन्मूर्तिरूपं मनसा मननं हरेः ॥७६॥
आत्मना स्फुरणं तस्य स्वप्नादौ प्रतिमां हरेः ।
आलोचयति नान्यद्वै पूजायां स्पर्शनं व्यधात् ॥७७॥
यावदिन्द्रियवृत्तीः सा नियुयोजान्तरे हरौ ।
बाह्ये हरौ नियुयोज बाह्यभानाऽपि सुन्दरी ॥७८॥
बाह्यान्तरैक्यमापन्ना चैकतानपरायणा ।
अभवत् सा सती भक्ता विनोदिनी वरेऽच्युते ॥७९॥
अथ श्रीभगवानस्या हास्यरसाभिलाषुकः ।
नाविर्भवति व्यक्तात्मा प्रतीक्षते विनोदनम् ॥८०॥
मासोत्तरो व्यतीयाय समयस्त्वेककाऽऽसने ।
ततो मूर्तेर्विनोदं सा कर्तुमारब्धवत्यपि ॥८१॥
दृश्यसे त्वं चैकमुखो तथापि विमुखो ह्यसि ।
द्विमुख्याः पञ्जरे न्यस्तो भविष्यस्यमुखोऽन्तरे ॥८२॥
प्रस्रवणप्रशून्यस्त्वं चाऽव्यक्तस्रवणे धृतः ।
भविष्यस्यस्रवो नित्यं सस्रवो भव मत्कृते ॥८३॥
एवं विनोदवाक्यानि मूर्तेर्हास्याय मानिनी ।
मुक्तकण्ठेन सततं जगाद कृष्णसन्निधौ ॥८४॥

अथाऽप्याह हरिं सा च नर्मवाक्यं ततः परम् ।
महद्रूपोऽसि सततं वितस्तिमूर्तितां गतः ॥८५॥
प्रवेष्टुं च हिरण्गर्भे किमिच्छसि तथा कुरु ।
एवमाभाष्यासनात् सा समुत्थाय ननर्त ह ॥८६॥
तावत्प्रसन्नतां प्राप्तः स्वामिकृष्णनरायणः ।
मूर्तिं विवृत्य सहसा तेजसा व्याप्तविग्रहः ॥८७॥
युवा किशोरः समभूद्धास्यं कृत्वा पुरःस्थितः ।
समाश्लिष्यत् सतीं भक्तामपाययद् रसं निजम् ॥८८॥
मूर्तेः सुखं ददौ तस्यै सर्वेन्द्रियादिगोचरम् ।
ततो विनोदिनीं मूर्तौ लीनीभूतां चकार सः ॥८९॥
यावत् स्वस्य सुखं दिव्यं सर्वं तस्यै ददौ प्रभुः ।
तृप्ताऽभवत्तु सा दिव्या दिव्यमुक्तानिका द्रुतम् ॥९०॥
अभवन्मायया हीना ब्रह्मलोके स्थिता यथा ।
तावत् तत्र महापुण्यैर्देवलोऽपि समाययौ ॥९१॥
वीक्ष्य कान्तेन कृष्णेन कार्ष्णीं विनोदिनीं सतीम् ।
निजं चापि तथैच्छत् सः कृष्णे द्रवमवाप्तवान् ॥९२॥
श्रीकृष्णोऽपि परं भावं ज्ञात्वा देवलकान्तरे ।
सखीरूपं विनोदिन्या इव तं योषितं व्यधात् ॥९३॥
नररूपं विहायैव सखी देवलिकाऽभवत् ।
विनोदिनीसमा रूपे सर्वथा कृपया हरेः ॥९४॥

यथा लक्ष्मीःप्रिया राधा तथा देवलिकाऽभवत् ।
उभे मुक्तानिके जाते दिव्ये दिव्यविभूषिते ॥९५॥
दिव्यब्रह्मरसाढ्ये च दिव्यकृष्णस्वरूपिके ।
लीने जाते कृष्णनारायणे तद्देहसंस्थिते ॥९६॥
एवं श्रीकृष्णकान्तरते शुभे धाम निनाय वै ।
शाश्वते ब्रह्मपरमानन्दसुखे ममज्जतुः ॥९७॥
मातश्चैवं ब्रह्ममहारसपानाशनं सदा ।
जायते कृष्णभक्तायास्तथा मे विद्यतेऽधुना ॥९८॥
न मेऽन्यत्राऽस्ति भवनं भावना श्रीहरिं विना ।
ब्रह्मरसो हरावस्तीत्युक्त्वा मौनं समादधत् ॥९९॥
इत्येवं बदरीदेवि परब्रह्मरसोऽव्ययः ।
यथाऽऽप्यते तयाऽऽसश्चोभाभ्यामातस्तथोदितः ॥१००॥
या चाऽन्या वाऽन्य एवापि सर्वस्वभावनार्पणात् ।
उक्तरीत्या परब्रह्मानन्दरसमवाऽप्नुयात् ॥१०१॥
परब्रह्मरसाऽवाप्तौ परब्रह्माऽस्ति . कारणम् ।
साधुरूपस्य सेवाऽपि परब्रह्माऽऽप्तिकारणम् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बाल्योगिनीगीतायां परब्रह्मरसाशनाप्तये विनोदिन्या देवलकपत्न्या विनोदेन प्रसादितभगवतो ब्रह्मरसायनसाधुरूपेण साक्षात्प्राप्तिर्मोक्षणं देवलकस्य सखीत्वं चेत्यादिनिरूपणनामा षोडशोऽध्यायः ॥ १६ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि पुनः सा बाल्योगिनी ।
सुरेश्वरीं मातरं यज्जगाद कथयामि ते ॥ १ ॥
सौराष्ट्रे महुवाख्ये पत्तनेऽब्धितटे शुभे ।
बहुरूपोऽभवच्छूद्रो नैकवेषाभिधारकः ॥ २ ॥
रूपे त्विन्द्रसमो देहे युवा षोडशवत्सरः ।
नारीमुखः सुजटिलः केशवेषाभिसुन्दरः ॥ ३ ॥
कर्णनासाविभूषादिधारकः समयो क्वचित् ।
क्वचिद् राजा क्वचिद् राज्ञी क्वचित् सेनापतिस्तथा ॥ ४ ॥
क्वचिच्छ्रेष्ठी क्वचिच्चौरः क्वचित् कन्या कुमारकः ।
क्वचिद् वधूः क्वचिद् देवी देवः क्वचिन्नटः क्वचित् ॥ ५ ॥
क्वचिद् विप्रः क्वचिद् योद्धा दरिद्रो भिक्षुकः क्वचित् ।
क्वचिद् वनेचरो नौकावाहः क्वचित्तु कर्षुकः ॥ ६ ॥
क्वचित् प्रेतो वानरश्च क्वचिद् भल्लुकरूपधृक् ।
क्वचित् पुत्रवती भार्या क्वचिद् वाजिनियामकः ॥ ७ ॥
क्वचित् साधुर्यतिः स्वामी ब्रह्मचारी च तापसः ।
क्वचिन्नर्मकरः सर्वशृंगाराढ्यः क्वचित् खलः ॥ ८ ॥
एवंविधः स भवति वेषरूपाढ्यचेष्टितैः ।
बाहुलकइतिनाम्ना तं वदन्ति प्रजाजनाः ॥ ९ ॥
नृत्ये वेषे गायने तं कुशलं वाद्यवादने ।
आहूय चोत्सवान् लोकाः कुर्वन्ति जनरञ्जनान् ॥१०॥
पूर्वभाग्यवशात् तस्य पत्नी तत्सदृशी ततः ।
विवाहिताऽभवत् कन्या नाम्ना लीलावती शुभा ॥११॥
गान्धर्वीव कलाभिज्ञा सर्ववेषाभिधारिणी ।
चतुरा नरवत् प्राज्ञा नरवेषेषु कोविदा ॥१२॥
पूर्वे सम्यक् कृतोऽभ्यासो जन्मान्तरे फलत्यपि ।
धर्मो धनार्पणं सेवा भक्तिः फलन्ति कालतः ॥१३॥
नाऽकृतं प्राप्यते किञ्चिद्दर्येनुग्रहमन्तरा ।
पूर्वदत्ता शुभा विद्या नारी सम्पत् सुखानि च ॥१४॥
जन्मान्तरेऽभिलभ्यन्ते गुणा यशो धनानि च ।
तथैव कृतपापानां चोपतिष्ठन्ति चाऽऽपदः ॥१५॥
सुकृतीनां सूत्सवास्तु प्रवर्धन्ते दिने दिने ।
भार्या नैवाऽल्पपुण्येन लभ्यते निजसक्रिया ॥१६॥
गुणे रूपे स्वभावे च विचारे हृदये समा ।
चातुर्ये च विवेके च बहुपुण्येन लभ्यते ॥१७॥
पतिश्चापि तथा पत्न्या स्वानुकूलस्वभाववान् ।
नाऽल्पपुण्येन लभ्येत लभ्यते तपसा तु वै ॥१८॥
हानौ दुःखे तथोद्वेगे कैंकर्ये निर्धनस्थितौ ।
रोगे विपदि पीडायां समचित्तौ हि दुर्लभौ ॥१९॥
हान्यादौ समचित्तौ चेत् स्वर्गे तयोः करस्थितम् ।
लाभादौ तु भवेतां वै समचित्तौ गृहेगृहे ॥२०॥
लाभहान्योः समचित्ताः साधवो योगिनोऽमलाः ।
नारायणोऽतिबुद्धाश्च पुण्या वा गृहधर्मिणः ॥२१॥
एवमेतौ युयुजाते किन्त्वेकस्य कृतिद्वयम् ।
एवंविधौ तौ सुखिनौ नाट्यादिव्यवसायिनौ ॥२२॥
नाट्यप्रसंगे चोपार्ज्य धनाऽन्नाम्बरवस्तुभिः ।
सम्यङ्निर्वहतो यात्रां प्राणादेर्लोकदुस्तराम् ॥२३॥
प्रयातस्तीर्थयात्रायां सोमनाथं च रैवतम् ।
द्वारावतीं चमत्कारपुरं कुंकुमवापिकाम् ॥२४॥
तत्राऽक्षरे शुभे क्षेत्रे चाऽश्वपट्टसरोवरे ।
स्नात्वा श्रीलोमशं गत्वा नेमतुः सद्गुरुमृषीन् ॥२५॥
जगृहतुर्महामन्त्रं मायापाशविनाशकम् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥२६॥

वैष्णवौ परमौ जातौ भक्तौ यथा कृतश्रमौ ।
ऊषतुर्बहुकालं च भेजतुर्बालकृष्णकम् ॥२७॥
गोपालबालकं दिव्यं प्रभुं कृष्णनरायणम् ।
नित्यमानर्चतुः प्रीत्या भेजतुः माधवीपतिम् ॥२८॥
चक्रतुश्च सदा तत्र सत्संगं ज्ञानमापतुः ।
दिव्यतां प्रापतुश्चोभौ वर्तेते दास्यशोभितौ ॥२९॥
लक्ष्मीनारायणसंहितायाः कथां मुहुर्मुहुः ।
शुश्रुवतुश्च तत्रत्याऽवतारचरितानि च ॥३०॥
प्रदध्यतुः सुराणां सन्नृपाणां चरितान्यपि ।
मुक्तानां योषितां चापि भक्तानां चरितान्यपि ॥३१॥
श्रुत्वा हृदये संकल्प्य चाश्वपट्टसरस्तटे ।
यथाश्रुतानि सर्वाणि वेषचेष्टाक्रियादिभिः ॥३२॥
तावत्तारयामासतुर्दर्शयामासतुर्मुहुः ।
रात्रौ चान्द्र्यां हि कौमुद्यां जनेभ्योऽतिमुदाऽन्वितौ ॥३३॥
जनास्तु लक्षशो दृष्ट्वा भवन्ति चकिता इति ।
नटीं नटं प्रशंसन्ति बहुरूपाभियोगिनौ ॥३४॥
देवतुल्याविमौ स्तश्च नारायणांशकाविव ।
पुरावृत्तं तदाकारं यच्चोपस्थापयन्ति वै ॥३५॥
मानार्हौ कुंकुमवापीक्षेत्रे जातौ सुरूपिणौ ।
एवंविधयोः सम्प्राप्तः समयो भाग्यवर्धनः ॥३६॥
अनादिश्रीकृष्णनारायणजन्मदिनोत्सवः ।
ससदशस्तत्र देवा मुक्ताः सन्तः समाययुः ॥३७॥
ईश्वरा मानवाद्याश्च सूतमागधबन्दिनः ।
महर्षितीर्थविप्राश्च कलाविदः समाययुः ॥३८॥
रमाद्याः शक्तयश्चापि प्रजा लोकाः समाययुः ।
अनादिश्रीकृष्णनारायणस्य परमात्मनः ॥३९॥
सम्बन्धिनो भुवनानां वासिनश्च समाययुः ।
कृष्णनारायणजन्मतिथ्यूर्जकृष्णकाष्टमीम् ॥४०॥
अभिलक्ष्य निशायामाययुः स्थावरजङ्गमाः ।
अष्टम्यां प्रातरेवाऽयं स्नात्वा श्रीकृष्णमाधवः ॥४१॥
कृतमंगलपूजादिः कृतकौतुकशोभनः ।
कोट्यर्बुदाब्जपत्नीभिः कृतार्चनसुवन्दनः ॥४२॥
मात्रा पित्रा वृद्धजनैः श्वश्रूभिः श्वशुरादिभिः ।
कृताशीर्वादसद्भाग्यः कृतवेषाभिसुन्दरः ॥४३॥
सभायां तु विशालायां चाऽश्वपट्टसरस्तटे ।
सर्वसृष्टिजनाढ्यायां युक्तायां लोमशादिभिः ॥४४॥
गजासने जयकारान् शृण्वन् कृष्णसद्यशः ।
निषसाद समागत्य तदाऽवाद्यन्त सर्वशः ॥४५॥
वाद्यानि सर्वलोकानां गीतयश्चाऽभवन् शुभाः ।
वेदघोषा महर्षीणामभवन् कर्णपावनाः ॥४६॥
स्नेहभराणि सर्वेषां विलोकनानि चाऽभवन् ।
हर्षाः प्रमोदा आनन्दा मूर्तिमन्तस्तदाऽभवन् ॥४७॥
पुपूजुः परमात्मानं लोमशः ऋषयः सुराः ।
द्विजा नृपाश्च पितरः सिद्धा ईश्वरकोटयः ॥४८॥
अप्सरसश्च देव्यश्च मानव्यो मानवादयः ।
पातालादिनिवासाश्च तीर्थानि जडचेतनाः ॥४९॥
समस्तसिद्धयो वृद्धा नार्यो देव्यो रमादिकाः ।
साध्व्यश्च साधवश्चापि पुपूजुः परमेश्वरम् ॥५०॥
तिलकं चन्दनाद्यैश्चाऽक्षतकुंकुममंगलैः ।
चन्द्रकं ते प्रचक्रुश्च पुष्पहारान् न्यधुर्गले ॥५१॥
गन्धसारान् शब्दसारान् मन्त्रसारान् शुभाशिषः ।
प्रददुश्चोपदाश्चापि हृदयानि विशेषतः ॥५२॥
मुकुटं कुण्डले हारान् कटकानि च शृंखलाः ।
ऊर्मिकाश्च मणीन् रत्नस्वर्णभूषाश्च ते ददुः ॥५३॥
यशोगानान्यभवँश्च नर्तनान्यभवँस्तथा ।
ताम्बूलदानपानादि मिष्टान्नमंगलानि च ॥५४॥
हस्तधूननमेवाऽपि तदाऽभवन् समाजके ।
महीमानाऽभियोगाश्च सभायां चाऽभवँस्तदा ॥५५॥
आरार्त्रिकं कृष्णनारायणस्यर्षिगणा व्यधुः ।
मुक्ताद्याः संस्तवान् चक्रुश्चैवं महोत्सवोऽभवत् ॥५६॥
अत्रोत्सवे तु सम्प्राप्याऽवसरं बहुरूपधृक् ।
बाहुलकश्च तत्पत्नी कृतवेषौ सुसुन्दरौ ॥५७॥
चमत्कारकरौ सम्यमनोहरौ सभान्तरे ।
आययतुर्हसन्तौ तावुभौ स्त्रीवेषशोभनौ ॥५८॥
का नारी को नरश्चेत्यविदितौ तौ सभाजनैः ।
रूपातिसुन्दरौ देवैरपरीक्ष्यौ तदा क्षणे ॥५९॥
समकण्ठस्वरौ हावभावांगव्यञ्जनैः समौ ।
सर्वज्ञोऽपि हरिः साक्षात्तदर्थे मुग्धतां गतः ॥६०॥
का कथा तु तदाऽन्येषां मायाढ्यचर्मचक्षुषान् ।
एवं सभाऽपि सहसा वीक्ष्य स्त्रियौ समन्ततः ॥६१॥
स्तब्धतां वै गता यद्वन्मुग्धा पुत्तलिकामयी ।
गायनं ते स्त्रियौ तत्र बालकृष्णयशोमयम् ॥६२॥
चक्रतुः सर्वकामानामानन्दरसपूरितम् ।
प्रसन्नः श्रीकृष्णनारायणस्ताभ्यां मणीन् ददौ ॥६३॥
रत्नहारानलंकारानाशिषश्च शुभा ददौ ।
अथ नृत्यं चक्रतुस्ते स्त्रियौ भावादिगर्भितम् ॥६४॥

अनादिश्रीकृष्णनारायणवृत्तान्तगानयुक् ।
अक्षराधिपतिः साक्षात् परमेशोऽस्ति मानवः ॥६५॥
भवान् येषां तु जिह्वासु मनस्सु च मतिष्वपि ।
आत्मस्वपि नर्तकोऽस्ति तेषां मोक्षो हि शाश्वतः ॥६६॥
प्रसन्नो भव भगवन् रूपं नृत्यं सुसार्थकम् ।
कुरु त्वं चावयोर्नार्योः पादस्पर्शं प्रदेहि नौ ॥६७॥
ओमित्याह सभामध्ये प्रसन्नः कृष्णनन्दनः ।
द्रुतं नार्यौ समायातां श्रीकृष्णाचरणान्तिकम् ॥६८॥
कृष्णचरणधूलीं ते चोहतुर्मस्तके तथा ।
उरस्युदरे देहे च ततः पादौ हरेः पुनः ॥६९॥
स्पर्शयामासतुर्वक्षोजयोः प्रसन्नमानसे ।
पश्यतां सभ्यलोकानां तावच्छाटीविहीनकौ ॥७०॥
पुंवेषसहितौ तूर्णं युवानौ संबभूवतुः ।
पुंभाषासहितौ सर्वपुंमंकपरिशोभितौ ॥७१॥
स्त्रीत्वं गतं प्रवीक्ष्यैव कृष्णनारायणः प्रभुः ।
समाजश्चेश्वराद्याश्च महाश्चर्यं प्रपेदिरे ॥७२॥
जग्मुः सभाजनास्तत्र संशयं वा नरौ स्त्रियौ ।
न निर्णयं तदा कर्तुं समर्थाः केऽपि चाऽभवन् ॥७३॥
मुग्धा सभा समाजश्च सर्वे निरीक्षकास्तदा ।
अथेमौ किंकिणीजालैर्घुर्घुरैः पादसंक्रमान् ॥७४॥
कुर्वन्तौ रंगमध्ये तौ महानृत्यं प्रचक्रतुः ।
शंकरोऽपि क्षणं मुग्धोऽप्सरसः सुतरां तदा ॥७५॥
गन्धर्वा नर्तकाश्चाऽन्ये गलद्गर्वास्तदाऽभवन् ।
अथ नृत्यं विधायैव बालकृष्णमहाप्रभोः ॥७६॥
संस्पृश्य चरणौ प्राप्योपदाश्च पारितोषिकम् ।
मणिरत्नहीरकादि स्वर्णभूषाऽम्बरादि च ॥७७॥
सभामध्ये समन्यस्य तूर्णं पुंभाववर्जितौ ।
अभवतामुभौ तत्र पश्यतां सर्वदेहिनाम् ॥७८॥
षण्ढवेषौ षण्ढभावौ षण्ढविलासनर्मदौ ।
हस्ततालीपरौ नेत्रकोणोल्लाससमन्वितौ ॥७९॥
षण्ढभाषां भाषमाणौ सभाहास्यकरावुभौ ।
अथ क्षणान्ते तत्रैको नटी भूत्वा ननर्त ह ॥८०॥
भूत्वाऽपरो नटस्तत्र वाद्यं श्रेष्ठमवादयत् ।
पश्यतां देवतादीनां नटी चाऽदृश्यतां गता ॥८१॥
नटोऽपि रंगसातत्यार्थं नटी संबभूव ह ।
ननर्त यावद् रंगे सा तावन्नटी समाययौ ॥८२॥
दृष्ट्वा नटीं तु नृत्यन्तीं नरोऽभवद्धि सा नटी ।
एवं बहुस्वरूपाणि वीक्ष्य सभाऽतिहर्षिता ॥८३॥
तयोर्द्वयोर्बहुमानशब्दान् जगाद सा सभा ।
अथ पत्नीपतिरूपौ क्षणान्ते वरमालया ॥८४॥
योजितौ दम्पतीरूपौ सभामध्ये बभूवतुः ।
नमस्कारं हरये च सभ्येभ्यस्तौ प्रचक्रतुः ॥८५॥
अपराधक्षमायाञ्चां चक्रतुर्विनयाऽन्वितौ ।
तस्थतुश्च सभामध्ये यथार्थरूपमास्थितौ ॥८६॥
तदेश्वराद्या देवाद्या मानवाः संशयोज्झिताः ।
अभवन् ऋषयश्चापि प्रसन्नाश्चाऽभवन् इति ॥८७॥
अनादिश्रीकृष्णनारायणः श्रीपुरुषोत्तमः ।
श्रीमद्गोपालकृष्णाद्या माता श्रीकंभरा सती ॥८८॥
अन्येऽपि लोकपालाद्या महाश्चर्यपरायणाः ।
उपदाः प्रददुस्ताभ्यां प्रसन्नत्वप्रयोजिताः ॥८९॥
अनादिश्रीकृष्णनारायणः प्रसन्नमानसः ।
वरदानं ग्रहीतुं तावुवाच तौ तदा शुभम् ॥९०॥
परब्रह्मरसानन्दं वरयामासतुर्हरेः ।
दिव्यानन्दमहाब्रह्मरसाऽब्धौ मग्नतां पराम् ॥९१॥
अर्थयामासतुः कृष्णानारायणाद्धि केशवात् ।
तथाऽस्त्वेवं हरिः प्राह तत आरभ्य वै तयोः ॥९२॥
निर्विकल्पसमाधिश्च बभूव कृष्णमोददः ।
सर्वभूतेन्द्रियादीनां वृत्तिषु स्फुरणं हरेः ॥९३॥
सदा तयोरभवद्वै यथाऽक्षरस्थमुक्तयोः ।
एवं हरेर्हि कृपया कलया निजयाऽपि च ॥९४॥
बहुरूपभवनया हर्यर्थकृतया तदा ।
परब्रह्मानन्दमहासुखमोदरसं परम् ॥९५॥
अवापतुः सदा दिव्यं दिव्यदेहेन्द्रियाऽन्वितौ ।
सप्तदशो जन्ममहोत्सवः सम्पूर्णतां गतः ॥९६॥
भोजनानि विचित्राणि समाजानां तदाऽभवन् ।
पूजाश्च परितोषाश्च महादानानि चाऽभवन् ॥९७॥
एवं स्वां मातरं बालयोगिन्याह हरेः रसम् ।
यौ लब्धवन्तौ तौ भक्तौ वृत्तौ च माधवं ततः ॥९८॥
एवं ब्रह्मरसं प्राप्ता कृपयाऽपि सुधाश्वतम् ।
बालयोगिनी संभ्रमा स्मृत्वेदं विरराम ह ॥९९॥
एवं ते कथितो बद्रीप्रिये ब्रह्मरसः परः ।
अनुग्रहेण कृष्णस्याऽवाप्यते नाऽन्यथा क्वचित् ॥१००॥

बहवः सेवया प्राप्ता ब्रह्मानन्दरसं परम् ।
कृपया बहवः प्राप्ता यथा ब्रह्मप्रियास्त्विह ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बाल्योगिनीगीतायां बाल्योगिन्या मात्रे बहुरूपधृग्युगलस्य बाहुलकलीलावतीनामकस्य भक्तिवृत्तान्तकथनेन परब्रह्मरसाऽवाप्तिसाधनोक्तिः श्रीहरेःसप्तदशजन्मदिन्योत्सवश्चेति निरूपणनामा सप्तदशोऽध्यायः ॥ १७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि मातरं बाल्योगिनी ।
ततश्च पुनरुत्कर्षे प्राह ब्रह्मरसस्य सा ॥ १ ॥
भद्रग्रामे मालियानो मालाकारोऽभवत् पुरा ।
मालियानस्य भार्याऽभून्मल्लिकाश्रीतिनामिका ॥ २ ॥
उद्यानं पोषयन्तौ तौ फलादिविक्रयार्थिनौ ।
पुष्पमालादिकर्तारौ भक्तौ तौ सम्बभूवतुः ॥ ३ ॥
यत्र यत्र श्रुतवन्तौ परितस्तौ सुरालयान् ।
सौराष्ट्रे तौ गतवन्तौ सुरपूजां प्रचक्रतुः ॥ ४ ॥
सूर्यं दामोदरं सोमनाथं श्रीगोपनाथकम् ।
गुप्तप्रयागं चाऽप्यश्वपट्टसरश्च रैवतम् ॥ ५ ॥
चमत्कारं द्वारवतीं प्रजग्मतुः पुपूजतुः ।
पुष्पहारफलाद्यैश्च तुलसीदलगुच्छकैः ॥ ६ ॥
कमलैर्विविधैश्चापि स्थलपद्मैर्जलाब्जकैः ।
मालत्यादिकुसुमैश्च पारिजातादिपुष्पकैः ॥ ७ ॥
चम्पकैर्बकुलैश्चापि वल्लीपुष्पैस्तृणेशजैः ।
तथा च कदलैर्मिष्टैर्नवरंगादिभिश्च वै ॥ ८ ॥
चन्दनैः शीतलैश्चापि केसरादिसुमिश्रितैः ।
पुष्पाणां बहुरूपाणां बहुसुगन्धशालिनाम् ॥ ९ ॥
अपर्युषितभावानां दिव्यानां चित्तकर्षिणाम् ।
ऊष्णीषं प्रच्छदपटीं चतुष्कालं च धोत्रकम् ॥१०॥
सुरवालं प्रावरणं कम्बलं चांगरक्षकम् ।
शाटीं च घर्घरीं वक्षोबन्धिनकां कचलीनिकाम् ॥११॥
कुचलीं कर्पटीं चौलीं चौलं त्वन्तःपटीं तथा ।
एवमादीनि वस्त्राणि पौष्पाण्येव विधाय तौ ॥१२॥
तत्र तत्र शुभे तीर्थे तद्देवीदेवमूर्तये ।
अर्पयामासतुः प्रेम्णा धारयामासतुर्हृदा ॥१३॥
अर्हयामासतुर्देवं देवीं राधारमाप्रियाः ।
माधवीकृष्णविष्णुश्रीनारायणाऽर्धशंकरान् ॥१४॥
सर्वकौसुमवेषान् संकल्प्य्वा ददतुर्मूर्तये ।
मूर्तिस्था देवता देव्यो गणेशाद्या हरिस्तथा ॥१५॥
देविकाद्याः प्रसन्ना वै भवन्ति भक्तिवीक्षकाः ।
अथ भूषाः समस्ताश्च पुष्पमयीर्विधाय तौ ॥१६॥
अर्पयामासतुर्नित्यं देवेभ्यो भक्तिशालिनौ ।
मुकुटं ग्रथितं पुष्पैः कुण्डले कर्णपूरकौ ॥१७॥
गच्छौ च कन्दुकं हारान् मालाश्च कटकौ शुभौ ।
शृंखला विविधाश्चापि रशनाः कटिसूत्रकम् ॥१८॥
केशहारान् स्तनपत्रे भालपत्रे च तन्तिकाम् ।
शिखामणिं तथा चूडामणिं कौस्तुभमुत्तमम् ॥१९॥
पादयोर्झंझरीश्चापि चक्राणि चोर्मिकास्तथा ।
नक्तकं केशपूराँश्च तथा धम्मिल्लमालिकाः ॥२०॥
कबरीस्रक् नाभिचन्द्रौ तथानितम्बचन्द्रकौ ।
सक्थिमालाः शुभाः प्रकोष्ठपत्राणि च मञ्जरीः ॥२१॥
पृष्ठसूर्यौ कण्ठपत्रां चैवंविधानि यान्यपि ।
भूषणानि भवन्त्येव तानि सर्वाणि तावुभौ ॥२२॥
विधाय विविधैः पुष्पैः कलाकौशल्यशालिनौ ।
तीर्थदेवान् स्नेहभक्त्या मुदा शृंगारशोभितान् ॥२३॥
चक्रतुस्तौ प्रत्यहं वै गत्वा गत्वा सुरालयान् ।
श्रद्धा प्रवर्धते नित्यं सुखं तयोः प्रवर्धते ॥२४॥
ख्यातिः प्रवर्धते दिव्या पुण्यं प्रवर्धतेऽव्ययम् ।
पूजां प्रकुर्वतोः पौष्पैस्तयोर्हरेरनुग्रहः ॥२५॥
देवानां कृतपूजानां प्रसन्नताऽपि वर्धते ।
एवं तौ बहुपुण्यौ वै जातौ प्रियतमौ तथा ॥२६॥
अखिलानां तु देवानां पुष्पपूजादिकारिणौ ।
आशीर्वादाऽतिपात्रत्वं प्राप्तौ देवाद्यनुग्रहम् ॥२७॥
अथैकदा हरिः साक्षाद् दातुमियेष दर्शनम् ।
कुंकुमवापिकाक्षेत्रे पूजयन्तौ निजं यदा ॥२८॥
अश्वपट्टसरस्तीरे याः सन्ति दिव्यमूर्तयः ।
मन्दिराणि समस्तानि देवालयास्तथा शुभाः ॥२९॥
तत्र तत्र हरिस्तस्मै मूर्तिद्वारा चमत्कृतिम् ।
दर्शयितुं पाययितुं ब्रह्मरसं मधुप्रभम् ॥३०॥
दातुमियेष तौ दिव्यं दर्शनं प्रतिमोद्भवम् ।
अनादिश्रीकृष्णनारायणः स्वर्णालये यदा ॥३१॥
प्रातस्ताभ्यां पूजितो वै पुष्पशृंगारकाम्बरैः ।
तदा स मानवः कृष्णो बभूवाऽक्षरधामगः ॥३२॥
उपविष्टो दिव्यगजासने चाक्षरधामनि ।
दिव्यभूषाम्बरहेतिशृंगारकौतुकान्वितः ॥३३॥

असंख्यमुक्तसञ्जुष्टोऽनन्तमुक्तानिकाऽर्चितः ।
अवतारी ह्यसंख्यानामवतारादिवर्ष्मणाम् ॥३४॥
अनन्तैश्वर्यसामर्थ्याश्चर्यशक्तिप्रपूर्णकः ।
राजाधिराजशोभश्च सर्वतत्त्वनियामकः ॥३५॥
अनन्तगाढतेजोभिः पूर्णमूर्तिः परात्परः ।
एवं भूत्वा हि भगवान् ब्रह्मतेजो ह्यदर्शयत् ॥३६॥
गुणातीताऽक्षरब्रह्म सर्वतेजःप्रकारणम् ।
असीमाऽसंख्यभायुक्तं व्यापकं मूर्तिनिःसृतम् ॥३७॥
मालियानाय मल्लिकाश्रियै प्रदर्श्य धाम तत् ।
तत्राऽऽक्षरीं दिव्यभूमिं तैजसीं शान्तशीतलाम् ॥३८॥
महानन्दमयीं दिव्यपीयूषसलिलां शुभाम् ।
शुद्धचैतन्यरूपां तामक्षरब्रह्ममूर्तिजाम् ॥३९॥
दर्शयामास भगवान् धामेशश्रीनरायणः ।
आक्षरं नगरं नैजं दर्शयामास माधवः ॥४०॥
अनन्तमुक्तवसतिं दर्शयामास तौ ततः ।
दिव्यसमाधौ तौ नीत्वा दर्शयामास वाटिकाम् ॥४१॥
भद्रायनं शुभं ग्रामं महोद्यानं च कौसुमम् ।
दर्शयामास भगवान् यत्पुष्पैः पूज्यते हरिः ॥४२॥
मालियानस्य मल्लिकाश्रिया उद्यान उत्तमः ।
वर्तते त्वक्षरे तत्र फलपुष्पद्रुमात्मकः ॥४३॥
शाश्वतो दिव्यफलदो दिव्यमधुरसप्रदः ।
दिव्यपुष्पोद्भवमिष्टमकरन्दरसप्रदः ॥४४॥
तौ प्रदर्श्य तमुद्यानं हरिः प्राह शुभं वचः ।
पृथ्व्यां यदर्पितं मह्यं तत्सर्वं वाटिकादिकम् ॥४५॥
उद्यानजन्यपुष्पादि महोद्यानफलादिकम् ।
सर्वं वां शाश्वतं त्वत्र विद्यते कुरुतं निजम् ॥४६॥
कल्पद्रुमा रसैः पूर्णा भवन्त्यत्र हि शाश्वताः !
मिष्टफलप्रदाः सन्ति पिबतं तद्भवामृतम् ॥४७॥
मिष्टफलानामदनं कुरुतं दिव्यतृप्तिदम् ।
इत्युक्त्वा भगवाँस्ताभ्यां पाययामास तद्रसम् ॥४८॥
फलाहारं प्रसादेन कारयामास तत्क्षणम् ।
पुष्पश्रृंगाररचनामर्पयामास तौ प्रभुः ॥४९॥
दिव्यं नैजं मुखं मिष्टं शाश्वतं मोदनन्दितम् ।
महानन्दमयं सर्वं ददौ ताभ्यां प्रभुः स्वयम् ॥५०॥
यो रसः शंकरे नास्ति नाऽजे नाऽपीश्वरेष्वपि ।
न विष्णौ नाऽवतारेषु न मुक्तेष्वपि यो रसः ॥५१॥
रसो यो वर्तते कृष्णतादात्म्यभाविमात्रके ।
कृष्णमूर्तौ सदा त्वास्ते कृष्णाभिन्ने च वर्तते ॥५२॥
कृष्णांगनायां राधाश्रीप्रज्ञामाधविकादिषु ।
ब्रह्मप्रियासु सर्वासु हरिप्रियासु यो रसः ॥५३॥
श्रीलक्ष्मीकमलापद्मामाणिक्यालक्ष्मितादिषु ।
यो रसो वर्तते नित्यप्रेमानन्दमहोदधिः ॥५४॥
स्नेहाकर्षणतादात्म्याऽऽद्वयाऽऽनन्दसुखोदधिः ।
सर्वभानप्रभानाद्रिलयमूर्छातिमूर्छनः ॥५५॥
सर्वेन्द्रियाऽन्तःकरणाकृष्टिपिण्डैक्यरूपधृक् ।
एकतानमहानन्दाऽविच्छिन्नमृतप्रवाहणः ॥५६॥
एतादृशं परब्रह्ममहानन्दरसं हरिः ।
अंके कृत्वा च तौ भक्तौ पाययामास मूर्तिजम् ॥५७॥
ततश्चोद्यानवृक्षाणां पाययामास तन्मधु ।
मकरन्दं च पुष्पाणां पाययामास गन्धिनम् ॥५८॥
कारयामास तृप्तिं तौ तत्रैवाऽक्षरधामनि ।
अथोत्थाप्य समाधेस्तौ दर्शयामास भूतलम् ॥५९॥
कुंकुमवापिकाक्षेत्रं मानवं विग्रहं निजम् ।
बालकृष्णालयं दिव्यं सप्तभौमं सुवर्णजम् ॥६०॥
अथोत्थितौ तौ सहसा प्रणेमतुर्हरिं मुहुः ।
अमूल्याऽपूर्वलावण्यामृतरसप्रपूरितम् ॥६१॥
स्तुत्वा नत्वाऽर्चयित्वैव लब्ध्वा तृप्तिं तु शाश्वतीम् ।
विसर्जितौ श्रीहरिणा ययतुर्मन्दिराद् बहिः ॥६२॥
दिव्यभावान्वितौ पुष्पहारश्रृंगारकान्वितौ ।
अश्वपट्टसरस्तीरे देवानामर्हणाय तौ ॥६३॥
ययतुः पश्चिमाद् भागाद् उत्तरां दिशमुत्सुकौ ।
शंकरं क्षेत्रपालं चाऽर्चयामासतुरीश्वरीम् ॥६४॥
मूतर्श्रिये हरिकृष्णं वीक्षयामासतू रमाम् ।
त्रिकं धृत्वा करे पात्रं महामृतरसान्वितम् ॥६५॥
पाययामास ताभ्यां वै परब्रह्मरसं परम् ।
गणेशं कार्तिकं दुर्गां रुद्रं पुपूजतुस्ततः ॥६६॥
तेषु देवेषु भगवान् कृष्णनारायणप्रभुः ।
प्राप्य पूजां पुष्पमयीं पाययामास तौ रसम् ॥६७॥
कुबेरेन्द्राग्निधर्मादीन् पुपूजतुश्च तौ ततः ।
तेषु देवेषु भगवान् स्वामीश्रीनरवल्लभः ॥६८॥
लब्ध्वा पूजां दिव्यरूपः पाययामास तौ रसम् ।
सूर्यचन्द्रगुरुप्रभृतीन् देवान् तौ पुपूजतुः ॥६९॥
तेषु देवेषु भगवान् स्वामी कृष्णनरायणः ।
पूजां संगृह्य तौ तत्र पाययामास तद्रसम् ॥७०॥
ब्रह्मविष्णुमहेशादिप्रतिमापूजनं च तौ ।
व्यधातां तेषु देवेषु कृष्णनारायणप्रभुः ॥७१॥

पूजां संगृह्य तौ तत्र पाययामास तद्रसम् ।
पितृप्रतिमापूजां च प्रचक्रतुस्ततश्च तौ ॥७२॥
तेषु स्वामिकृष्णनारायणश्रीकृष्णनन्दनः ।
पूजां संगृह्य तौ भक्तौ पाययामास तद्रसम् ॥७३॥
सिद्धर्षिमूर्तिषु ताभ्यां पूजितासु प्रमापतिः ।
पूजां संगृह्य तौ दिव्यं पाययामास तद्रसम् ॥७४॥
ईश्वराणामीश्वरीणां मूर्तिषु माधवीपतिः ।
प्रतिमासु परां पूजां लब्ध्वा पौष्पीं च तद्रसम् ॥७५॥
पाययामास ताभ्यां श्रीकान्तः कृष्णनरायणः ।
मुक्तानिकासु मुक्तेषु चावतारेषु मूर्तिषु ॥७६॥
पार्षदेषु च गोपेषु गोपीषु शारदादिषु ।
समस्ततीर्थदेवेषु प्रतिमासु कृतार्हणाम् ॥७७॥
प्राप्य स्वामिहरिकृष्णो बालकृष्णोऽक्षराधिपः ।
ताभ्यां ब्रह्मरसं दिव्यं पाययामास पानवत् ॥७८॥
हसन् पात्रं करे धृत्वा ब्रह्मरसप्रपूरितम् ।
अन्यहस्तं न्यस्य मूर्ध्नि तौ संस्पृश्याऽङ्कसंस्थितौ ॥७९॥
आधाय चौष्ठयोः पात्रं पाययामास तद्रसम् ।
घट्टकैर्घट्टकैः कृष्णः प्रेमरसं तु शाश्वतम् ॥८०॥
पाययामास मूर्तिस्थस्ताभ्यां पूजाफलात्मकम् ।
अश्वपट्टसरस्तीरे ये देवास्तीर्थवासिनः ॥८१॥
ईश्वराश्चावताराश्च महर्षयश्च साधवः ।
सिद्धाः साध्व्यः पार्षदाश्च शक्तयो ब्रह्मयोषितः ॥८२॥
तत्र सर्वत्र भगवान् कृष्णनारायणो हरिः ।
दिव्यं स्वं दर्शनं दत्वा पाययामास तौ रसम् ॥८३॥
एवं तं मालियानं च मल्लिकाश्रीं हरिः स्वयम् ।
कृपया पाययामास परब्रह्मरसं निजम् ॥८४॥
तेन तौ दिव्यतां प्राप्तौ ब्रह्मधामादिमुक्तवत् ।
दिव्यदेहौ हि सम्पन्नौ तदा मायांशवर्जितौ ॥८५॥
पुष्पफलादिसेवायाः फलं दिव्यं प्रजग्मतुः ।
परब्रह्मरसपानात् कायाकल्पो व्यजायत ॥८६॥
पाञ्चभौतिकतत्त्वानि व्यलीयन्त तयोस्ततः ।
इन्द्रियाणि समस्तानि चैतन्यानि तदाऽभवन् ॥८७॥
अन्तःकरणमेवाऽपि नित्यज्ञानात्मकं ह्यभूत् ।
मायांशो विलयं प्राप्य ब्रह्मांशः समजायत ॥८८॥
सर्वांशाः सम्परावृत्य ब्रह्मांशास्त्वभवँस्तदा ।
नित्यतृप्तौ महानन्दपूर्णौ तौ सम्बभूवतुः ॥८९॥
सप्ताशीतिसहस्राणि वर्षाणां चायुषोऽन्तरे ।
पूजां कृत्वा दिव्यभावं गते तं मालिमल्लिके ॥९०॥
दिव्यदेहौ षोडशाब्दवयस्कौ तौ बभूवतुः ।
बालकृष्णसमौ रूपे युगलौ संबभूवतुः ॥९१॥
अथ वैराग्ययुक्तौ तौ पृथ्व्युद्यानगृहादिषु ।
ब्रह्मपारदृशौ तूर्णं चार्थयामासतुर्हरिम् ॥९२॥
न भद्रायननगरं न भूमिर्न दिवं तथा ।
नौ सत्यं रोचते नापि नैशलोकादि सात्त्विकम् ॥९३॥
विना त्वत्पादसेवायुग्धामाऽक्षरनिवासनम् ।
तस्माद् रक्षय नौ कृष्ण यथेष्टं त्वक्षरे पदे ॥९४॥
कुंकुमवापिकाक्षेत्रे दिव्येऽक्षरेऽत्र तत्र वा ।
अर्पितौ स्वश्चरणयोस्तव श्रीकान्त सर्वदा ॥९५॥
इत्यभ्यर्थ्य क्षणं मौनं जगृहतुस्ततो हरिः ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥९६॥
इतिमन्त्रं ददौ ताभ्यां विमानं च ददौ शुभम् ।
पार्षदैर्वाहितं दिव्यं प्रेषयामास चाऽक्षरम् ॥९७॥
कृपया श्रीहरेस्तौ वै तेनैव वर्ष्मणा ततः ।
परब्रह्मरसं पीत्वा ययतुर्धाम चाक्षरम् ॥९८॥
स्नात्वा ब्रह्महृदे सीम्नि विविशतुस्ततोऽक्षरम् ।
मुक्तौ चरणसेवायां वर्तमानौ बभूवतुः ॥९९॥
इत्येवं मातरं बद्रि प्राह सा बालयोगिनी ।
परब्रह्मरसानन्दमाहात्म्यं दिव्यमुक्तिदम् ॥१००॥
विरराम क्षणं साऽपि माता व्यचिन्तयद् रसम् ।
अनादिश्रीकृष्णनारायणात् प्राप्यं हि सेवया ॥१०१॥
उत्कर्षं परमं ज्ञात्वा धारयामास तं हृदि ।
यत् कृत्वाऽपि सती नारी प्राप्नुयात् परमं पदम् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बालयोगिन्या मात्रे कथितं मालियानमल्लिकाश्रीभ्यां मालाकाराभ्यां पुष्पफलादिसेवया तेनैव वर्ष्मणा परब्रह्मरसाऽऽप्त्या दिव्यतोत्तरं ब्रह्माऽक्षरधाम शाश्वतं चाऽपुनरागमाय प्राप्तमितिनिरूपण-नामाऽष्टादशोऽध्यायः ॥ १८ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि ततः श्रीबालयोगिनी ।
स्वमात्रे ज्ञानलभ्यं यं प्राह ब्रह्मरसोत्तमम् ॥ १ ॥
यादृङ्मोहः शरीरे स्वे तत्रापीन्द्रियगोलके ।
तत्रापि हृदये नैजे तथाऽऽत्मनि स्त्रियां सुते ॥ २ ॥
पत्यौ धने जीविकायां देहिनः समवर्तते ।
तादृङ्मोहं हरेर्मूर्तौ कुर्यान्नारी नरोऽपि वा ॥ ३ ॥

अन्यमोहं त्यजेत्सर्वं नारायणमृषिं विना ।
क्षेत्रज्ञे श्रीपतौ कृष्णे कुर्यान्मोहं नरायणे ॥ ४ ॥
तत्र वृत्तिं धारयेच्च हरौ श्रीपुरुषोत्तमे ।
रमणीयतमे कृष्णे लग्नं मनो न चालयेत् ॥ ५ ॥
गुरौ सत्सु हरौ स्नेहं कुर्यान्नान्यत्र वै क्वचित् ।
आसक्तिं श्रीहरौ कुर्यात् तद्रसे पावनोत्तमे ॥ ६ ॥
आत्मन्येव हरिं कृष्णनारायणं प्रधारयेत् ।
हरौ सर्वविषयाणां सुखान्येकत्र सर्वथा ॥ ७ ॥
लभ्यन्तेऽतो ब्रह्मरसोऽवाप्यते दर्शनेऽपि वै ।
एवं ज्ञात्वा भजेत् कृष्णं पातिव्रत्येन सुन्दरी ॥ ८ ॥
प्रसन्नो जायते तस्या भगवान् कृपया ध्रुति ।
शनैः शनैः सेवया तं प्रभुं नाथं प्रसादयेत् ॥ ९ ॥
अनेकावर्तसंसिद्धा सेवया रसमाप्नुयात् ।
अमाया स्यात् सदा यस्याः परे कान्ते रमेश्वरे ॥१०॥
सिद्धदशा भवेदस्याः कृतार्थता च शाश्वती ।
परब्रह्मानन्दरसयोग्यताऽस्यास्तदा मता ॥११॥
आत्यन्तिकं च कल्याणं साध्वीता चोत्तमा तथा ।
प्राप्तव्या तु यया साध्व्या तया पेयो रसो हरेः ॥१२॥
अहर्निशं स्मृतिः कार्या कृष्णकान्तस्य स्वात्मनि ।
धार्या मूर्तिर्भगवतः सेव्या दिव्येन वर्ष्मणा ॥१३॥
पूर्णाब्धिवत् सुखं तस्य भक्तायां पूर्यतेऽनिशम् ।
रसिकायां रसिकस्य कृष्णस्याऽऽनन्दपूर्णता ॥१४॥
भक्त्या रसिकया कृष्णो रसं नैजं ददाति वै ।
ब्रह्मरसं महानन्दं भक्तायै स्वामिभावनाम् ॥१५॥
निर्दोषदिव्यभावाया ब्रह्मान्तर्यामियुक्तया ।
भक्त्या चार्पितया कृष्णो रसिको रसमेति वै ॥१६॥
ब्रह्मैक्यभावया स्वामी सेव्यः सेविकयाऽनिशम् ।
सेविकाऽपि रसदाच्छ्रीकृष्णाद् रसं समश्नुते ॥१७॥
कृष्णः कान्तः प्रसन्नः स्याद् भक्त्या वा सेवयाऽपि च ।
आज्ञया चानुवृत्त्या वा तं धर्मं पालयेत् सती ॥१८॥
अखण्डचिन्ता कृष्णस्य यस्या भवति मानसे ।
सा तद्रसं महामिष्टं प्राप्नोत्यन्या न विन्दति ॥१९॥
एकताना भवेद् या तु सैकरसा प्रजायते ।
दृश्यते भगवान् यद्वन् मानवोऽपि न मानवः ॥२०॥
नाऽस्य बाधो मायिकैर्वै पदार्थैश्च पराभवः ।
अलौकिकं हि सामर्थ्यं कृष्णकान्ते विराजते ॥२१॥
असंख्यश्रीपतिः कृष्णो निर्लेपोऽपि रसप्रदः ।
विदित्वैवं प्रभुं नाथं भजते रसभागिनी ॥२२॥
कान्तव्रतं शूरता च सर्वार्पणं तदात्मता ।
पक्षः स्नेहश्च यस्याः स्यात् कृष्णे सा रसभागिनी ॥२३॥
सतां सेवा हरेः सेवा साध्वीसेवाऽपि सर्वदा ।
पद्मावतीकृष्णनारायणसेवात्मिका यदि ॥२४॥
यस्या भवति संसारेऽप्यसारे सारगा तु सा ।
अन्तरायकरं सर्वं त्यजत्येव हि सा सती ॥२५॥
महतां तु सतां सेवा हरेराज्ञा कृपा तथा ।
अर्पणं सर्वथा दिव्यपरब्रह्मरसप्रदाः ॥२६॥
आहाराः सर्वथा कृष्णे देहेन्द्रियाऽऽन्तरात्मनाम् ।
यस्या भवन्ति सततं सा स्याद्वै रसभागिनी ॥२७॥
आत्मनिवेदितायज्ञः सर्वयज्ञशिरोमणिः ।
परब्रह्मणि देवेशेऽर्पणं यत् पुरुषोत्तमे ॥२८॥
आन्तरं सर्वथा दानं बाह्यं दानं च सर्वथा ।
हरेः सम्बन्धवत् सर्वं वर्तनं स्फुरणादिकम् ॥२९॥
निर्गुणं भगवद्भावं प्राप्य निर्गुणवर्तनम् ।
महद्भाग्यं परं प्राप्य परं पदं च निर्मलम् ॥३०॥
या साक्षाद् भगवत्प्राप्तिः सर्वेन्द्रियादिहोमजा ।
राधालक्ष्मीसमा साध्वी तया प्रजायते सदा ॥३१॥
मूर्तेर्बलं तु बहुधा विपुलं रक्ष्यमेव यत् ।
स्नेहस्तस्याः प्रवर्धेत बलिष्ठाया हरौ प्रभौ ॥३२॥
हरेर्मूर्तेर्बलवत्या नैष्कर्म्यं संप्रसिद्ध्यति ।
भयं नास्या हि मायाया महाकालस्य वा भवेत् ॥३३॥
पक्वभक्ता हि सा त्वेकान्तिनी भक्ता हि सा भवेत् ।
हरेः स्वरूपनिष्ठायां पक्वायाः श्रेय उत्तमम् ॥३४॥
एवंवेत्र्याः कृतार्थत्वं ब्रह्मरसाभिमम्मता ।
सारातिसारप्राप्तिश्च श्रीत्वं सम्पद्यते त्विह ॥३५॥
यदक्षरेशान्मुक्ताश्च मुक्तान्यः संभवन्त्यपि ।
अवतारा अवतारिण्यश्च राधारमादयः ॥३६॥
ईश्वरा ईश्वराण्यश्च गोपा गोप्यो भवन्त्यपि ।
सखायश्च तथा सख्यो दासा दास्यो भवन्त्यपि ॥३७॥
आतिवाहिकदेवाश्च तथाऽधिदेवताः सुराः ।
अध्यात्मानश्च पुरुषा व्यूहाः समुद्भवन्त्यपि ॥३८॥
अधिभूतानि सर्वाणि समस्ततैजसानि च ।
उत्पद्यन्ते हरेर्मूर्तेर्ब्रह्मान्तर्यामिशक्तयः ॥३९॥
तमनादिकृष्णनारायणं कान्तं समाश्रयेत् ।
सर्वानन्दप्रमोदानां निधिं ब्रह्मरसाश्रयम् ॥४०॥
कामपूरं च निष्कामं सर्वानन्दरसप्रदम् ।
संगिनं चाऽप्यसंगं च भोगिनं भोगवर्जितम् ॥४१॥

लेपिनं चापि निर्लेपं कान्तं कान्तत्ववर्जितम् ।
वरेण्यं चाऽवरं रम्यं शयानं शयनोज्झितम् ॥४२॥

वधूग्रस्तं च विधुरं गृहस्थं गृहवर्जितम् ।
अलिंगं दिव्यलिंगं च शास्त्रयोनिमयोनिकम् ॥४३॥

इन्द्रं निरिन्द्रियं चापि शक्तं शक्तिप्रयोजकम् ।
शीलिनं स्त्रीशीलिनं च कृष्णं श्वेतं निरूपिणम् ॥४४॥

अचेष्टं दिव्यचेष्टं च सर्वचारित्र्यसंभृतम् ।
एवंविधं परं कान्तं मत्वा कृष्णनरायणम् ॥४५॥

प्राप्य साक्षाद् दिव्ययोगं ब्रह्मरसमवाप्नुयात् ।
नैतादृश्याः प्रेमरसार्जने किञ्चिद्धि शिष्यते ॥४६॥

देवलोका ब्रह्मलोकाः सर्वलोका हरेः कृते ।
देवीलोकाः परीलोकाः श्रीलोकाश्च हरेः कृते ॥४७॥

गुणातीतादिलोकाश्च भक्तलोका हरेः कृते ।
मुक्तमुक्तानिकालोकाः श्रेयसामालयास्तथा ॥४८॥

सम्पदामालयाश्चापि कल्पिताः परमेश्वरे ।
भवन्ति मोक्षदाः सर्वे दिव्यस्वाम्यभिधिष्ठिताः ॥४९॥

सर्वविधायां विकृतौ कृतौ ज्ञाने प्रसेवने ।
हरेः प्रसन्नतावाञ्छा यस्याः सा रसभोगिनी ॥५०॥

आत्मप्रयत्नसंरूढा देहेन्द्रियादिशासिका ।
हर्यर्थकृतसर्वस्वा ब्रह्मरसं समश्नुते ॥५१॥

आलोचनरसान् दिव्यान् व्यापारसद्रसान् परान् ।
आनन्दमोदभोगादीन् स्नेहप्रेमसुखोत्सवान् ॥५२॥

कामसंकल्पसक्त्यादीन् रत्याकर्षणमूर्छनाः ।
समस्तामृतपानादीन् ताम्बूलरसमाधवीम् ॥५३॥

स्पर्शमाधुर्यलावण्याऽभिन्नसंगोद्भवान् रसान् ।
अश्नुते दत्तसर्वस्वा सर्वशृंगारजान् रसान् ॥५४॥

सर्वं ब्रह्ममयं यस्यास्तस्या ब्रह्मरसाशनम् ।
घनश्यामां श्वेतमां च मनोहरां किशोरिकाम् ॥५५॥

मुक्तानिकामहामण्डलादिभावप्रसेविताम् ।
मूर्तिं कृष्णात्मिकां प्राप्य भवेद् ब्रह्मरसाशनम् ॥५६॥

एकरसं महातेजोऽक्षरब्रह्मप्रकाशकम् ।
रसपूर्णं निजं धाम परब्रह्मरसात्मकम् ॥५७॥

सम्पादयति भगवान् प्रज्ञेशः पुरुषोत्तमः ।
कैवल्यसंभृतः श्रीमत्कृष्णनारायणः पतिः ॥५८॥

स एव मानवश्चास्ते तथाऽप्यमानवोऽस्ति सः ।
तद्वस्त्रालंकृतयश्च दिव्या वाहनदासिकाः ॥५९॥

परिचर्यापरा दासा दिव्याः पानाशनार्हणाः ।
सर्वावतारधर्ता सः सर्वावतारकारणम् ॥६०॥

अलौकिकोऽपि भगवान् वर्तते लोकवत् त्विह ।
एवंवेत्त्यास्त्विह मोक्षपदं करतलेऽस्ति वै ॥६१॥

कर्तव्यं शिष्यते नाऽस्याः साधनान्तं गता तु सा ।
वर्तते ब्रह्ममोदस्था परब्रह्मरसाशना ॥६२॥

सत्यप्राणस्थिता चास्ते भागवतासद्रसा ।
एकान्तिकसतां योगात् तादात्म्यरूपनिश्चया ॥६३॥

निर्विकल्पसमाधिस्था निर्गुणब्रह्मरूपिणी ।
परब्रह्मरसास्वादा सैव भवति भामिनी ॥६४॥

या विशिष्टा स्थूलरूपा माया तद्रसमाधवी ।
या सूक्ष्माऽपि कृष्णयोगात् प्रसूतिं प्रकरोत्यपि ॥६५॥

सा कृष्णस्य सदा पत्नी भोग्या माया तु बन्धिनी ।
जडाऽपि कृष्णसम्बन्धाद् दिव्या तद्रससंभृता ॥६६॥

भवत्यसंख्यलोकानां कृष्णरसाभिषञ्जिका ।
राधारमाप्रियाद्याश्च परब्रह्मरसैः प्लुताः ॥६७॥

रसयन्ति जगत् सर्वं तथैव तन्नरायणी ।
साधुसंगतिमापन्ना चाऽप्रधृष्या हरीतरैः ॥६८॥

रसयत्येव सहजानन्दे निजात्मवर्तिनि ।
परब्रह्मरसे नित्ये स्वामिसक्तेऽतिशान्तिदे ॥६९॥

कृष्णनिष्ठावती साध्वी कृष्णस्वरूपलोभिनी ।
कृष्णार्थधर्मधर्त्र्येव शान्तिं द्रुतं प्रगच्छति ॥७०॥

तीव्रश्रद्धा हरेः प्राप्तौ तद्रसावाप्तयेऽपि च ।
यस्याः सा विन्दति प्रज्ञाप्रसूतं कृष्णजं रसम् ॥७१॥

यस्या विह्वलता कृष्णदर्शनादौ सदाऽस्ति सा ।
तीव्रवेगवतीश्रद्धाश्रया बोध्या तु भामिनी ॥७२॥

महात्म्यज्ञानयुक्तायाः श्रद्धातैक्ष्ण्यं प्रजायते ।
असंख्यरसलोभेन कृष्णकान्ता प्रजायते ॥७३॥

कृष्णमूर्तिं विना भेदं विना त्यागं प्रसेवते ।
स्थितप्रज्ञा निर्विकल्पा दृढप्रज्ञा प्रभुं पतिम् ॥७४॥

सेवते सर्वपापघ्नं रसदं चाऽभयप्रदम् ।
सोऽपि भक्तां तथा नैजां सेवते पुरुषोत्तमीम् ॥७५॥

निर्विकारं सर्वविधक्षेत्रज्ञं लेपवर्जितम् ।
योग्याऽयोग्यचरित्राणां गायिका गायति प्रभुम् ॥७६॥

अहोभाग्यं च मन्वाना स्थितप्रज्ञा हरौ हि सा ।
आक्षरीं स्थितिमापन्ना ध्यानकीर्तनतत्परा ॥७७॥

वन्दनार्चनदानाद्यैः प्रसन्नतापरायणा ।
दासीव सर्वसेवार्हा बद्रीमुक्ता यथा तथा ॥७८॥

श्वेतद्वीपनिवासाभा श्रीपुराभिस्थितेव सा ।
स्वेष्टदेवताश्रीकृष्णनारायणं श्रिता सदा ॥७९॥

पतिव्रता सा श्रीकृष्णनारायणे प्रभौपतौ ।
मनसा वर्ष्मणा भक्त्या मूर्तौ तत्सत्सु सेवया ॥८०॥
राधारमाप्रभापद्मावतीसमा प्रसादिता ।
वर्तते सा लभतेऽत्र परब्रह्मरसाशनम् ॥८१॥
यदा सा वर्ततेऽनादिकृष्णसंगमसद्रसे ।
तदा ब्राह्मी भवत्येव दिव्या मायापरा सखी ॥८२॥
आत्मचैतन्यतादात्म्यं हरौ लब्धवती सती ।
अनादिश्रीकृष्णकान्तमात्रसंसर्गसंभृता ॥८३॥
परब्रह्माभियोगेन ब्रह्मवद् व्यापिका तथा ।
सर्वैश्वर्यमहाशक्त्यसंख्यचमत्कृतिभृता ॥८४॥
सर्वेशेव महाराज्ञी सम्राज्ञी समजायते ।
सिद्धदशावती पत्नी महामुक्तानिका यथा ॥८५॥
सिद्धदशां परां प्राप्य तेनैव वर्ष्मणा प्रिया ।
गोलोकं चाक्षरं दिव्यं वैकुण्ठं श्रीपुरं तथा ॥८६॥
अव्याकृतं चामृतं च धामन्यन्यानि यानि च ।
तत्र याति हरेर्योगात् स्वतन्त्रा रसवेदिनी ॥८७॥
सृष्टित्रयेऽपि सुगतिर्जायते कृष्णभामिनी ।
कल्याणदं हि विज्ञानं सर्वकृत्त्वं हरेः सदा ॥८८॥
हरेः सतां चरित्राणि दैहिकानि पराण्यपि ।
सकामानि तथा यद्वा कामनावर्जितान्यपि ॥८९॥
दिव्यान्येव सदा मोक्षप्रदानि पावनानि च ।
अमायिकानि सर्वाणि प्रत्यक्षस्य हरेः सताम् ॥९०॥
प्रत्यक्षो भगवानत्र सन्तः साक्षाद् भुवि स्थिताः ।
प्राचीनाऽव्ययधामस्थसनातनस्वरूपिणः ॥९१॥
भवन्त्येवेतिमाहात्म्यज्ञानं यस्यास्त्विहास्ति वै ।
सा प्राप्ता परमब्रह्मचिन्तामणिं हि शाश्वतम् ॥९२॥
कल्याणं परमं तस्या जायते ज्ञानयोषितः ।
लक्ष्यं धामाऽक्षरं यस्याः प्राप्यो यस्याः पतिः प्रभुः ॥९३॥
राज्यं कृष्णरसाऽवाप्तिः प्रजा मुक्तानिकागणाः ।
आनन्दः श्रीकृष्णसंगे किं तस्या ननु शिष्यते ॥९४॥
हरिं विना न लोभोऽस्ति परत्र वा निजात्मनि ।
यावच्च ब्रह्मलोकेषु वैभवेष्वपि कश्चन ॥९५॥
यन्मनो न भवेल्लग्नं सा चैकान्तिककोटिगा ।
साध्वीं पदवीं चोत्कृष्टतमां साऽधिगता यतः ॥९६॥
साध्व्यास्तस्या ब्रह्मपत्न्याः पूजां कुर्वन्ति देवताः ।
हरेर्योगेन सा प्राप्ता ह्यलौकिकचमत्कृतिम् ॥९७॥
चिन्तामणिः कृष्णनारायणस्तस्याः करे स्थितः ।
तेन श्रीकृष्णभगवत्प्रेमरसं समश्नुते ॥९८॥
इत्येवं श्रीकृष्णनारायणकान्तरसं त्वहम् ।
मातर्नित्यं प्राप्तवती समश्नामि तदंकगा ॥९९॥
नान्यमिच्छामि राधेशाद्भिन्नं वा चेतनं जडम् ।
इत्युक्त्वा विररामाऽपि बद्रिके बालयोगिनी ॥१००॥
प्रभोकृष्ण हरिकृष्ण बालकृष्ण रमापते ।
कृष्णनारायणस्वामिन् माधवीश सतां पते ॥१०१॥
भावयामास भजनं मातरं बलयोगिनी ।
ननर्त च क्षणं मग्ना कान्ते भावभरा तदा ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बालयोगिनीगीतायां बालयोगिन्या मात्रे उपदिष्टस्य ज्ञानलभ्यस्योत्तमब्रह्मरसस्य निरूपणमित्यादि-नामा नवदशोऽध्यायः ॥ १९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि ततः श्रीबालयोगिनी ।
पुनः स्वमातरं प्राह यत्तद्वदामि ते तथा ॥ १ ॥
उपासनां परब्रह्मरसास्वादनदायिनीम् ।
आत्मनः किरणं यद्वन्मनोऽन्तःकरणं तथा ॥ २ ॥
मानसीं प्रतिमां कृत्वोपासीत मनसि प्रभुम् ।
अविकृतं मनस्तद्वै यत्कृष्णे चानुसंहितम् ॥ ३ ॥
तदेव बोध्यं परमभागवतसतां मनः ।
आसक्तं यद्धरौ नित्यं शीतोष्णभाववर्जितम् ॥ ४ ॥
साधु मनस्तद्विशेयं कृष्णे निश्चलनिष्ठितम् ।
अखण्डस्नेहधाराढ्यं कृष्णे विश्राममेति यत् ॥ ५ ॥
सिद्धवद् यदिवद्योगिजनवन्मुक्तवन्मनः ।
वधूवत् कान्तवच्चच निजेष्टतमवत्तथा ॥ ६ ॥
यन्मनो वर्तते कृष्णे यत्स्फूर्तिं विदधाति यत् ।
यन्मग्नं यत्स्मृतेर्हेतुस्तदश्नुते हरेः रसम् ॥ ७ ॥
निर्वासनं मनो नित्यं निर्वासनहरिस्थितम् ।
हरेः सतां सेवया च वासना लीयते द्रुतम् ॥ ८ ॥
सेवायां किंकरी भूत्वा राज्ञ्यपि वर्तते तु या ।
दीनाधीनसमा दासी प्रसादं विन्दति प्रभोः ॥ ९ ॥
भगवतः सतां चापि रुचेरविषयं तु यत् ।
न कर्तव्यं भवेद् यस्याः कर्तव्यं कृष्णरोचकम् ॥१०॥
अन्तरायकरं कृष्णसेवायामिष्टमित्यपि ।
त्यक्तव्यं च भवेद् यस्या हरेः प्रसादमृच्छति ॥११॥
गुरुवत्पितृवन्मातृवद्भूमिपालवत्तथा ।
हरिः प्रसन्नतामेति शिष्यायां या हि रोचिका ॥१२॥

श्रेयसे या सतां प्रसन्नतार्थं यतते सदा ।
दयात्यागौ कृष्णसेवोपासनायां क्षतिप्रदौ ॥१३॥
दयात्यागौ ततो मन्दीकृत्याऽपि माधवं भजेत् ।
पुष्पशृंगारहाराद्यैः प्रसादयेत् प्रियम्पतिम् ॥१४॥
शय्याभोजनपानाद्यैः तोषयेन्माधवीपतिम् ।
सर्वस्वार्पणदानाद्यैः रामयेल्ललितापतिम् ॥१५॥

सर्वेन्द्रियान्तःकरणैरुपासीत श्रियाः पतिम् ।
देहेन गुणधर्माद्यैः प्रसादयेज्जयापतिम् ॥१६॥
भक्तान् प्रसादयेच्चापि सेवया चानुसेवया ।
भक्तानामपि भक्ता स्याद् या सा ब्रह्मरसाशना ॥१७॥
हरेः प्रसन्नताहेतुर्भक्तसेवाऽपि चोत्तमा ।
भक्तसंपप्रसादौ च भक्तसेवा रसप्रदा ॥१८॥
भूस्थापि साधुसेवायां रक्ता या साऽक्षरे स्थिता ।
न रोगाः श्रीहरेः संगे विघ्नं कुर्वन्ति सेवने ॥१९॥
सावधाना हरेर्नाम्नां वृत्तान्तस्य श्रवेऽपि च ।
दृढासक्त्या दृढसंस्कारैश्च कृष्णमयी भवेत् ॥२०॥
ब्राह्मी भूत्वा भजेत् कृष्णं वल्लभं स्वामिनं प्रभुम् ।
अक्षरातीतपुरुषोत्तमं कारणकारणम् ॥२१॥
वासुदेवं भगवन्तं महापुरुषपूरुषम् ।
पितरं सर्वसृष्टीनां पतिं सर्वशरीरिणाम् ॥२२॥
साक्षिणं कर्मिणां चान्तःप्रकाशकं गुणात्मनाम् ।
उत्तमं च विशेषं च पुंसां सर्वावतारिणम् ॥२३॥

स्वामिनं ब्रह्मपुरुषैरुपासितपदाम्बुजम् ।
सेवेत कम्भरानन्दं बालकृष्णं नरायणम् ॥२४॥
कृष्णे सम्बन्धमुत्कृष्टं कुर्यात् सञ्जीवनी लता ।
अमृतावल्लिका यद्वच्छिन्ना सक्ताऽपि जीवति ॥२५॥
वटद्रुवत् प्रकुर्याच्च स्नेहं श्रीमतिवल्लभे ।
जटां स्वस्मात् समुद्भाव्य शाखामूलोऽपि जीवति ॥२६॥
तथेन्द्रियादिविषयैः स्नेहं कृत्वाऽपि माधवे ।
या जीवेत् प्राणमर्पय्य सा कृष्णरसमश्नुते ॥२७॥

कृष्णं कुटुम्बिनं नैजं स्निग्धं सर्वार्थपूरकम् ।
ज्ञात्वा धृत्वाऽग्रगं कृत्वा विहरेद् ब्रह्मभूमिषु ॥२८॥
ध्यात्वा साक्षाद् बालकृष्णं संकीर्त्य गुणगायनैः ।
आसेव्य हृदये कान्तं रहोरसं समर्जयेत् ॥२९॥
स्मृतिं सदाऽन्तःकरणे कुर्याच्छ्रीकृष्णचक्रिणः ।
प्रसन्नतां हरेः श्रेष्ठामासादयेत् प्रसेवया ॥३०॥
निष्कामतां प्रालयेच्च कृष्णार्थकृतनिश्चया ।
सर्वस्वार्पणरूपा सा श्रीकृष्णे सर्वकामना ॥३१॥

एवं नैष्कर्म्यमासाद्य निष्कामं कृष्णमर्जयेत् ।
उपासीत पतिं कृष्णं क्रियया सेवयेहया ॥३२॥
स्नेहभक्त्या भावनया निजार्पणविधानया ।
आसक्त्या प्रश्रया वासनयाऽऽत्मार्पणचिन्तया ॥३३॥
प्राणार्पणप्रकारेण रसेच्छाचिन्तनेन च ।
साध्वीधर्मविशेषेण तथाऽभ्यासेन चाऽर्जयेत् ॥३४॥

कृष्णं कृष्णरसं कृष्णसतां सत्संगसद्रसम् ।
कार्ष्णीनां च समस्तानां रसं दिव्यं समर्जयेत् ॥३५॥
सञ्चितानि समस्तानि प्रभौकान्ते विनिक्षिपेत् ।
देहेन्द्रियादि कर्माणि श्रीकृष्णे निक्षिपेत् सती ॥३६॥
आत्मदर्शनकर्त्री स्यात् परमात्मविलोकिनी ।
हरेश्चरित्रगीत्याद्यैश्चोपासनादिभिस्तथा ॥३७॥
स्मृत्या सन्ततया चापि कृष्णरसं समर्जयेत् ।
उपासीत हरिं साक्षात्तच्चरित्राणि कीर्तयेत् ॥३८॥
नामाभिभजनं कुर्यात् कृष्णधर्मं प्रपालयेत् ।
कृष्णलीलामयी भूत्वा कृष्णब्रह्मरसं पिबेत् ॥३९॥
अखण्डवृत्तिं श्रीकृष्णे समाधिना प्रवर्तयेत् ।
शूरवीरा भवेत् कृष्णे स्निग्धा माहात्म्यवेदिनी ॥४०॥
कृपापात्रं भवेच्चापि सेवया सा रसं पिबेत् ।
कृष्णं विनाऽन्यतुच्छार्थे स्नेहो माया हि तां जयेत् ॥४१॥
कृष्णाज्ञां संवहेन्मूर्ध्ना माया तस्या लयं व्रजेत् ।
धनदे पुत्रदे लोके प्रतीतिर्जायते द्रुतम् ॥४२॥

सा प्रतीतिर्हरौ कृष्णे यस्याः सा प्रकृतिं जयेत् ।
स्वभावं स्वं च सा त्यक्त्वा श्रीकृष्णे प्रविशेत् सदा ॥४३॥
जीवात्मनो हरौ तत्र तादात्म्यं स्नेहसंभृतम् ।
दिव्यं वै बन्धनं कृष्णे प्रवेशो रटनात्मकः ॥४४॥
कृष्णं विना महादुःखविपन्नदिवसान् नयेत् ।
कृष्णेऽनादौ परे नारायणे तादात्म्यमाप्नुयात् ॥४५॥
देहान्ते वा सदेहे वा कृष्णकान्तेतिभावयेत् ।
अन्तर्दृष्ट्या हरौ कान्तेऽपरोक्षानुभवो भवेत् ॥४६॥

तेन ब्रह्मरसश्रेष्ठसुखचैतन्यमापतेत् ।
कृष्णनारायणः साक्षात् स्वरसं वै समर्पयेत् ॥४७॥
सदा सा कृष्णवामांगी रहस्यं परमं लभेत् ।
जगत्स्थित्यै भक्ततृप्त्यै वर्तते भुवि माधवः ॥४८॥
अनादिवासुदेवोऽपि कृष्णो नारायणः प्रभुः ।
धर्मार्थकामनाचेष्टाः कृतवान् प्रकरोत्यपि ॥४९॥
जीवा गायन्ति शृण्वन्ति तास्ते मुच्यन्त एव ह ।
मायाया बन्धनात् पापात् प्राप्नुवन्ति परं पदम् ॥५०॥

जन्म कर्म रतिः कामो मूर्तिश्चेष्टा क्रिया हरेः ।
मूर्तिर्दिव्या मोक्षदा च सर्वे कृष्णस्य मोक्षकृत् ॥५१॥
श्रीकृष्णपरमब्रह्मोपासनां विदधीत या ।
दृढप्रतीतियुक्ता सा वधूटीः स्यात् परेश्वरी ॥५२॥
सतां सेवापरा साध्वी भवेत् कार्ष्णी जनार्दनी ।
भक्तापराधनिरपेक्षिणी कृष्णाद्यपेक्षिणी ॥५३॥
सतां सेवाऽपेक्षिणी च श्रीकृष्णरसभागिनी ।
महासुखाब्धिमग्ना सा सम्मानार्हा रमा यथा ॥५४॥
भवत्येव सदा सेवागुणप्रार्थनावती ।
दण्डवत्प्रणामादिपरा साध्वादरान्विता ॥५५॥
अज्ञातद्रोहशान्त्यर्थं दीनवत्प्रार्थनापरा ।
कृष्णप्रेमातिमग्ना च साध्वाशीर्वादपात्रिणी ॥५६॥
भाग्यं महत्तमं नैजं सेवायां मन्यते सताम् ।
हरेः प्रसन्नतार्थं सा निजकल्याणहेतवे ॥५७॥
सर्वस्वं संप्रदायैव ब्रह्मरसं समश्नुते ।
प्रतिशोपिसमरूपो ददाति स्वं रसं परम् ॥५८॥
कोट्यर्बुदाब्जपत्नीनां प्रतिरूपो बभूव यः ।
विवाहे च रतौ वासे रहस्ये रससम्प्रदः ॥५९॥
अनादिश्रीकृष्णनारायणो गोपालनन्दनः ।
अक्षराधिपतिः स्वामी कान्तः श्रीकम्भरात्मजः ॥६०॥
स्वामिनीश्रीमहालक्ष्मीलालितो माधवीपतिः ।
कोटिमुक्तानिकास्वामी प्रत्यात्मान्तरतत्पतिः ॥६१॥
सर्वकामप्रदस्तस्य योगस्था रसमश्नुते ।
स्निग्धां मुग्धां वियुक्तां न कदाचित् कुरुते प्रभुः ॥६२॥
गुणातीतां निजसत्तामात्ररूपां समुत्थिताम् ।
निर्गुणां ब्रह्मरूपात्मप्रीतिं सा माधवेऽश्नुते ॥६३॥
यस्याः सतां भगवतः संगो वा दर्शनं पुरा ।
जातं तस्या दिव्यभावो ब्रह्मभावः सदा भवेत् ॥६४॥
नाऽस्या माया नैव रागो वासना न हरीतरा ।
बदरीनाथरमणे सर्वथा वर्तनं भवेत् ॥६५॥
निरन्नमुक्तातुल्या सा हरेः प्रसन्नतापरा ।
भक्तप्रसादमापन्ना तत्परा परमे पदे ॥६६॥
कृष्णनारायणमूर्तिसच्चिदानन्दभोगिनी ।
सतां प्रसादमासाद्य भुंक्ते धामाऽक्षरे सुखम् ॥६७॥
अग्निचन्द्रार्कविद्युद्भिः प्रसादिता हि साधवः ।
ततस्ते संप्रकाशन्ते सदैव सुखिनो दिवि ॥६८॥
शुभैः सन्तस्तोषणीया ब्रह्मरसाप्तिहेतवे ।
ते सन्ति ब्रह्मचैतन्यरसपूर्णा हरौ स्थिताः ॥६९॥
आत्मकल्याणपरमब्रह्मानन्दसुखैषिणी ।
हरेः सतां प्रसादं वै सेवया सर्वथाऽर्जयेत् ॥७०॥
हानिं वृद्धिं हि लोकानां दृष्ट्वा यो न विशोचति ।
भजते श्रीहरिं दिव्यः सत्पुरुषः स कृष्णवत् ॥७१॥
एकान्तिकं महाभागवतं धर्मं समाश्रितः ।
अभावस्तादृशानां तु यस्याः सा मृतसदृशी ॥७२॥
विन्दत्यत्र न सौख्यं स्वं कथं ब्रह्मसुखं लभेत् ।
महापापाऽपि या नारी सतां गुणं प्रसन्नताम् ॥७३॥
सेवां चाशां प्रगृह्णाति सा पूताऽप्यक्षरं व्रजेत् ।
सतां योगेन पापानि प्रणश्यन्ति द्रुतं त्विह ॥७४॥
इन्द्रियाणि शरीरं च मन आत्मा मतिस्तथा ।
दिव्यान्यत्र प्रजायन्ते परमोक्षकराण्यपि ॥७५॥
अखण्डं शाश्वतं कृष्णस्वरूपं सत्समागमे ।
स्थित्वाऽर्ज्यं परमब्रह्मरसावाप्त्यै क्रिया ततः ॥७६॥
कृष्णवत् कृष्णभक्तानां मिथो भक्तैः सुमाननम् ।
कर्तव्यं चापि बोद्धव्यं माहात्म्यं सेवनं तथा ॥७७॥
कृष्णनारायणसङ्गाद् भक्ता भक्तानिकास्त्विह ।
दिव्यास्ते आक्षराः सन्ति मुक्ता निर्गुणभावनाः ॥७८॥
पावनाः सर्वलोकानां सेवनीया यतो मिथः ।
मोक्षदास्ते प्रसन्नाः स्युः कृष्णस्तेषु विराजते ॥७९॥
राधारमाद्या भक्तासु विराजन्ते सदा स्त्रिषु ।
अनादिश्रीकृष्णनारायणो नरेषु राजते ॥८०॥
प्रसादनीयाः सततं कृष्णवच्छ्रीर्यथा मिथः ।
प्रसादेन हि लभ्यन्ते परब्रह्मरसाब्धयः ॥८१॥
उपासना हरेर्यद्वत् तथा सतां सदा शुभा ।
भक्तानां चापि कर्तव्या ब्रह्मानन्दस्ततो भवेत् ॥८२॥
निजानन्दरसं भुंक्ते सहजानन्दसद्रसम् ।
कृष्णनारायणस्वामिरसं कार्ष्णी वधूः सदा ॥८३॥
कृष्णमूर्त्यखण्डचिन्तावती साध्वी सखी प्रिया ।
प्रेमपूर्णा बालकृष्णस्वरूपैक्यगता सती ॥८४॥
या कृष्णरससम्पूर्णा तस्यां कृष्णोऽपि सर्वदा ।
प्रसह्य वसति प्रेम्णा दातुं नैजं रसं परम् ॥८५॥
साध्वीमध्ये रमा चास्ते रमायां भगवानपि ।
महानन्दरसस्तत्र कृष्णे नित्यं विराजते ॥८६॥
रसे प्रेमसखी चास्ते प्रेमसख्यां तथा हरिः ।
एवमैकात्म्यमेवाऽस्ति सखीकृष्णरसात्मनाम् ॥८७॥
साध्वी कृष्णमयी यत्र जन्म गृह्णाति सुन्दरी ।
तत्प्रसूस्तद्गृहं तस्या धन्याः कुटुम्बिबान्धवाः ॥८८॥

ब्रह्मवित्साधुसंगेन वार्तेयं श्रूयते परा ।
अनादिश्रीकृष्णनारायणसाक्षात्प्रदर्शनम् ॥८९॥
चिन्तनं स्फुरणं ब्रह्मवित्सतां संगमाद् भवेत् ।
लाभो मानुषदेहस्य नान्यो ह्यस्तिमिन्तरा ॥९०॥
सर्वेन्द्रियाणि साधूनां हरेः सेवार्थकानि च ।
तत्पराणि सदा यस्याश्चैकान्तिकी हि सा भवेत् ॥९१॥
मुख्या सा हरिभक्तासु राधा लक्ष्मीः प्रभौ यथा ।
एकान्तं कृष्णकान्तस्य यस्या रसाय रोचते ॥९२॥
यस्याः कृष्णस्वरूपस्याऽऽकारस्य दिव्यता मता ।
सतां च दिव्यता यस्याः साऽश्नुते कृष्णसद्रसम् ॥९३॥
यथा नद्यः समुद्रेषु यथाऽग्नौ तु पतंगकाः ।
शूरा रणेषु सत्यश्च पत्यौ कृष्णे तु गोपिकाः ॥९४॥
लीनाः सर्वस्वहोमाश्च भवन्ति हि तथा हरौ ।
एकरसे परिपूर्णे ब्रह्मात्मनि परेश्वरे ॥९५॥
लीना या चाक्षरी भक्ता दिव्या स्त्री पुरुषोत्तमी ।
अखण्डिताऽतिस्नेहा च निःसीमप्रीतियोजिका ॥९६॥
सर्वद्रवाभियोगा च सर्वथा कृष्णसंश्रिता ।
लभते चाश्नुते कृष्णकान्तरसं तु शाश्वतम् ॥९७॥
आत्मसत्तास्वरूपेण वर्तमाना प्रभापतौ ।
मर्यादयाऽतितादात्म्यमापन्ना लभते रसम् ॥९८॥
इत्युक्त्वा बद्रिके ताबद्विरराम हि सा क्षणम् ।
माताऽप्युपासनायोगाद् ब्रह्मरसेच्छुकी ह्यभूत् ॥९९॥
बाल्ययोगिनी बालेशं बालकृष्णं बलीश्वरम् ।
बालरसात्मकं प्राप्य मोदते मातृसन्निधौ ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
बाल्ययोगिनीगीतायां श्रीकृष्णकान्तोपासनया
तद्रसावाप्तिरितिनिरूपणनामा
विंशोऽध्यायः ॥ २० ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि सदा मे सहचारिणि ।
ततः श्रीमातरं प्राह यं धर्मं बाल्ययोगिनी ॥ १ ॥
त्यागिनीनां वृषा ये च योगिनीनां च ये वृषाः ।
गृहिणीनां वृषा ये च तेऽनुयन्ति परेश्वरे ॥ २ ॥
साध्वीनां ये वृषाः प्रोक्ता दासीनां चापि ये वृषाः ।
वधूनां किंकरीणां ये तेऽनुयन्ति जनार्दने ॥ ३ ॥
शोभन्ते ते वृषाः सर्वे सर्वासां माधवीश्वरे ।
सर्वधर्माश्रये कृष्णनारायणे सुधर्मिणि ॥ ४ ॥
भोगाः सर्वे विलासाश्च कामाश्च सम्पदोऽपि च ।
विभूतयः स्त्रियो दास्यो युज्यन्ते परमात्मनि ॥ ५ ॥
वने वासो विवासाश्च जटित्वं चाऽवमानिता ।
काषायकृष्णवेषित्वं युज्यन्तेऽपि परात्मनि ॥ ६ ॥
आश्रमाश्चापि वर्णाश्च युज्यन्ते श्रीरमापतौ ।
श्रद्धायुता ततो नारी प्रसेवेत परेश्वरम् ॥ ७ ॥
सर्वधर्माश्रयं ज्ञात्वा श्रीकान्तं कम्भरासुतम् ।
अल्पप्रज्ञा तु गृह्णीयात् स्वां तु पण्डितमानिनीम् ॥ ८ ॥
निर्दोषां च बहुज्ञां च परेशं बुद्धिवर्जितम् ।
सर्वकर्तारमात्मानं सर्वकर्त्री परेश्वरीम् ॥ ९ ॥
लक्ष्मीपतिं बदरीशं ललितेशं तु किंकरम् ।
शेषादिवन्दितं कृष्णं तथा वृथाभिमानिनम् ॥१०॥
निगमागमवन्द्यं तं तुच्छचेष्टादिकारिणम् ।
एवं दोषान् हरौ कृष्णे समुद्भाव्य वदेद्घृणाम् ॥११॥
सा तु धर्मान्न जानाति धर्ममूर्तिं न विन्दति ।
परमेशं न मनुते मनुते कर्मचारिणम् ॥१२॥
एतादृशी मोहवती ब्रह्मरसं न विन्दति ।
विन्दत्येवाऽरसं कष्टं याम्यकृतं तु दक्षिणे ॥१३॥
सत्संगेन वशं याति प्रभुः कृष्णनरायणः ।
हरौ सत्सु च साध्वीषु त्वात्मबुद्धिः सदा शुभा ॥१४॥
यस्याः प्रजायते प्रीतिजननी सार्वकालिकी ।
सैव वशं हरिकृष्णधवं करोति कामिनी ॥१५॥
आत्मबुद्धिर्यथा देहे नार्या पत्यौ च मन्दिरे ।
भवने प्रतिमायां च जले निजजनादिषु ॥१६॥
पुत्रे च विषये स्वष्टे तथेन्द्रिये मुखे शुभे ।
रूपे भोगे विलासे च तथा यस्या हरौ प्रभौ ॥१७॥
सैव कृष्णरसं पाति पिबत्यपि मुहुर्वधूः ।
सैव कृष्णं वशं सम्पादयत्येव न चेतरा ॥१८॥
या भाविनी कृष्णकान्ता तस्याश्चेष्टापि वैष्णवी ।
देवाभिगमनं नित्यं कृष्णदर्शनमन्वहम् ॥१९॥
कृष्णनारायणवार्ताकथारसातिमोदनम् ।
सतां समागमे वृत्तिस्तीर्थवासो विशेषतः ॥२०॥
कृष्णभक्तेषु रमणं शयनं कालयापनम् ।
निर्भीकत्वं मायिकेषु तथौदासीन्यमन्वहम् ॥२१॥
तुल्यता कृष्णभिन्नेषु कृष्णे विशेषता सदा ।
साररूपं तु यत् कार्ष्णं तदन्यत् सारवर्जितम् ॥२२॥
सतां प्रसन्नतार्थं च क्रियाः सर्वाः प्रचेष्टनम् ।
हरेः स्वरूपचिन्तैव गुणगानं हरेस्तथा ॥२३॥

हर्यर्थे कृतसर्वस्वं हर्यर्थे जीवनादिकम् ।
शृंगाररूपसौन्दर्ये हर्यर्थे सर्वमेव तत् ॥२४॥
यस्या एवं सदा वृत्तं भाविनी सा हरिप्रिया ।
परब्रह्मरसवेत्त्री नारायणी रमानिभा ॥२५॥
अन्ते पक्वदृढमूला परब्रह्महृदंगता ।
प्रीतिर्यस्या हरौ प्राप्ता विश्रान्तिं सा रसाशना ॥२६॥
यत्राऽऽवरणं नास्त्येव ब्रह्मसत्तात्मवर्तने ।
निरावरणा तद्योगाद् ब्रह्मनारायणी भवेत् ॥२७॥
अन्यस्त्यागवती साध्वी रोधकस्य विसर्जिनी ।
प्राणेशस्याऽभियाना च कल्याणादेशशायिनी ॥२८॥
संगिनीनां सखीनां श्रेयसे यत्नोपदेशिनी ।
स्वेष्टस्वामिचरित्राणां गायिका चोपदेशिका ॥२९॥
सतां हरेश्च कैंकर्ये वेत्ति श्रेयो निजं परम् ।
यस्याः सन्त्यधिकाः सन्तः श्रेष्ठा ब्रह्मादितोऽप्यति ॥३०॥
हरेः सतां सुयोगाद्वै नान्यच्छ्रेयः परं मतम् ।
महापुण्यवतीनां च सेवायोगं करोत्यपि ॥३१॥
स्नेहः खलु यथा पत्न्यां पत्यौ पुत्रे च मातरि ।
सहोदरे च पितरि गुरौ देहे धने तथा ॥३२॥
कारयित्री हरौ खलु स्नेहं सा रसपात्रिका ।
कृतार्था सा नित्यसक्ता स्निग्धा भवति भामिनी ॥३३॥
पूर्वभवादिभिः साधोर्हरेः सेवापरायणा ।
पुनर्भवं प्रसादार्थं सेवार्थं संगतेच्छया ॥३४॥
भजमानां न लोकानां विक्षेपाः पीडयन्ति ताम् ।
हरेर्वियोगविक्षेपाः सतां वियोगरूपिणः ॥३५॥
पीडयन्त्येव तां भक्तां ब्रह्मरसपरायणाम् ।
स्वयं श्रुत्वाऽवमानादि स्वेष्टस्य च सतामपि ॥३६॥
उद्वेगं हृदये नैजे प्राप्नोति स्वावमानवत् ।
श्रुत्वा मानं सतां चापि मोदते सा हरिप्रिया ॥३७॥
साधुस्वाम्यपराधाद्यसहमाना हरिप्रिया ।
शिरो दत्वाऽपि कान्तस्य कृष्णस्य रञ्जने स्थिता ॥३८॥
कृष्णनारायणे भावे निम्नगा न कदाचन ।
असंख्यया हरेः कार्ये ह्युपस्थिता च या भवेत् ॥३९॥
सपत्नीनां सखीनां च स्नेहपक्षाभियोगिनी ।
हर्यर्थार्पितसर्वस्वा मस्तकं स्वं ददात्यपि ॥४०॥
आशां प्राप्याऽविचार्यैव करोति सर्वथा तथा ।
परब्रह्मरसास्वादा द्रुतं सा जायते सखी ॥४१॥
देहेन्द्रियान्तःकरणैरात्मना क्रियया हि सा ।
कृष्णार्पणविधाना वै द्रुतं चाप्नोति तद्रसम् ॥४२॥
मनाक् वा कृष्णसंयुक्ता दिव्यतां याति तत्क्षणात् ।
सर्वं नैजं योजयेद्वै कृष्णसेवादिकर्मसु ॥४३॥
वर्तेत श्रीकृष्णनारायणकान्तपरायणा ।
सा श्रीराधारमातुल्या जायतेऽत्रैव माधवे ॥४४॥
पातिव्रत्येन च तथा ह्यात्मनिष्ठाऽतिशोभिना ।
दास्येन याऽपि सेवायां वर्तते साऽक्षरप्रिया ॥४५॥
प्रकाशमानां सततं ब्राह्मी चाऽक्षरसन्निभा ।
ब्रह्मभावे निजे रूपे परब्रह्म प्रपश्यति ॥४६॥
अतः कृष्णेतरत् सौख्यं विषवद् भासते सदा ।
कृष्णसंगे भवेच्छान्तिरितरत्र तु तापनम् ॥४७॥
कृष्णसंगिसतां संगे चाश्रये शान्तिरस्ति च ।
कृतार्थता सतां संगैर्हरेः संगैर्विशेषतः ॥४८॥
सेवयाऽपि महामोक्षो भवेत् प्राकृतयोषिताम् ।
कृष्णसत्तावतीनार्या मायाकालभयं न वै ॥४९॥
सतां सत्तावतीनार्या वासनाबन्धनं न वै ।
आत्मनिष्ठावतीनार्याः पुनर्जन्मभयं न वै ॥५०॥
हरेः प्रीतिमतीनार्या मृत्युपाशो न विद्यते ।
भक्तसेवावतीनार्या निरयाणां भयं न वै ॥५१॥
सतां दर्शनकर्त्र्यास्तु व्याध्याधिभीर्न विद्यते ।
सन्तः सन्ति ब्रह्मरूपा ब्रह्ममूर्तय उत्तमाः ॥५२॥
तेषां सेवासमं पुण्यं मोक्षो वाऽन्यो न विद्यते ।
बलेच्छा यदि वर्तेत सेवनीया हि साधवः ॥५३॥
स्वरूपाः श्रीहरेः सन्तोऽवताराः श्रेयसांप्रदाः ।
परोऽनादिकृष्णनारायणः श्रीमाधवीपतिः ॥५४॥
स्वामी सर्वावताराणां मुक्तानां ब्रह्मणस्तथा ।
स्वामिनीनां च शक्तीनामीश्वरीणां च कारणम् ॥५५॥
वासुदेवादयो व्यूहाः श्रीकृष्णाद्यास्तु पूर्णकाः ।
आवेशाः पर्शुरामाद्या अंशाः पृथ्वादयस्तथा ॥५६॥
सनकाद्याः कलाश्चापि सूर्याद्याश्च विभूतयः ।
नारायणाश्च विभवा अर्चास्तु शक्तिमूर्तयः ॥५७॥
सर्वे ते ब्रह्मदेहा वै परब्रह्मोद्भवाः शुभाः ।
परब्रह्मसमाः सेव्याः परब्रह्मरसाप्तये ॥५८॥
सर्वे ते पूर्णसुखदाः संभृताः सुखसद्रसैः ।
परब्रह्मानन्ददास्ते सेव्या योषिन्नरादिभिः ॥५९॥
मोक्षदास्ते मताः सर्वे सर्वकामप्रदास्तथा ।
दिव्यानन्दप्रदाः सर्वे मायापारकरास्तथा ॥६०॥
तेषां सर्वावताराणां धारकः पुरुषोत्तमः ।
अनादिश्रीकृष्णनारायणो गोपालनन्दनः ॥६१॥

कोट्यर्बुदाब्जकान्तानां कान्तः श्रीकम्भरात्मजः ।
स्वाऽक्षरपरधामस्थो राजाधिराजशासनः ॥६२॥
ददाति दर्शनं सृष्टौ यत्रेच्छा भक्तपूरणी ।
अनादिसर्वसिद्ध्याढ्यः सर्वाश्चर्यप्रपूजितः ॥६३॥
अनन्तचमत्कारेशो युगपत्सर्वरूपधृक् ।
कोट्यर्बुदाब्जमूर्त्यात्मा सर्वयोगकलानिधिः ॥६४॥
रसिको रसिकानां सः त्यागिनां त्यागवर्तनः ।
ज्ञानिनां ज्ञानदश्चापि सर्वमानसपूरकः ॥६५॥

सर्वबलच्छलकलामायाजालफलार्थकृत् ।
सर्वोपरिस्थितः शास्ताऽनादिस्वामिनरायणः ॥६६॥
निर्मोहो देहिदेहेषु ह्यलौकिकप्रतापवान् ।
भक्तसेवां प्रेमयुक्तामङ्गीकर्तुं कृपावशः ॥६७॥
भक्तदत्तान् विषयोत्थान् भोगान् भुंक्ते पतिर्यथा ।
अज्ञा दोषान् कल्पयन्ति मन्वते सक्तमेव तम् ॥६८॥
प्राकृतं मानवं यद्वत् खला महिमवर्जिताः ।
एषा भ्रान्तिश्च माया च तादृशानां हराविह ॥६९॥

न ज्ञानं श्रीहरेर्यद्वै प्रत्युताऽभावदर्शनम् ।
ब्रह्मस्थितिसमापन्ना ये त्वात्मदर्शिनो जनाः ॥७०॥
न मुह्यन्ति हरौ तत्र जानन्ति परभावनाम् ।
नापि मुह्यन्ति मायायां कुतो मोहो हरेस्तदा ॥७१॥
निर्लेपः सर्वदा चास्ति कृष्णनारायणः प्रभुः ।
सर्वभोक्ताऽप्यभोक्ताऽस्ति पावनः पावको यथा ॥७२॥
नार्यः पवित्रा जायन्ते तदङ्गैर्गोपिका इव ।
नराः पवित्रा जायन्ते सत्संगात्तस्य सर्वथा ॥७३॥

एवंविदो नरा भक्ता भक्तानिकाश्च सर्वशः ।
ज्ञानैकान्तिकताऽनन्यदास्यभक्ता मताः सदा ॥७४॥
तादृशानां कृते कृष्णो ब्रह्मरसान् सुशाश्वतान् ।
प्रवर्षयति मूर्तिस्थान् प्रपाययति चाश्रितान् ॥७५॥
कृपा मुख्यं साधनं वै हरेर्ब्रह्मरसाप्तये ।
आश्रयः साधनं चापि प्रपत्तिः साधनं परम् ॥७६॥
अनन्यभावना चापि दृढोपास्तिश्च साधनम् ।
आज्ञाप्रपालनं चापि सेवा स्नेहश्च साधनम् ॥७७॥

माहात्म्यज्ञानमेवापि स्मरणं च निरन्तरम् ।
सर्वस्वार्पणमेवाऽपि विश्वासो न्यास इत्यपि ॥७८॥
दास्यं शुश्रूषणं पातिव्रत्यं साधुत्वमित्यपि ।
पत्नीत्वं स्वामिनीत्वं च प्रेमभावाभिषञ्जनम् ॥७९॥
कृष्णेङ्गितानुसरणं सतां प्रसन्नतादिकम् ।
साक्षात् सतां सुसत्संगो हरेर्ब्रह्मरसप्रदः ॥८०॥

यस्याः सतां भगवतः साक्षात्प्राप्तिरिहाऽस्ति वै ।
तस्यास्तेषां कथागानैः स्मृत्या कालस्य निर्गमः ॥८१॥
त्र्यवस्थाऽतीतचैतन्यात्मकात्मनो निजस्य वै ।
ब्रह्मरूपस्य साक्षात् स्याद् दर्शनं कृष्णमिश्रितम् ॥८२॥
कृष्णवज्जायते धाम्नि लोकेऽप्यत्र न संशयः ।
अनादिश्रीकृष्णनारायणस्य चरणाश्रये ॥८३॥
अत्र परत्र सर्वत्र वसति राधिका यथा ।
स्वामिनी जायते तत्र सेविकाऽनुग्रहाद्धरेः ॥८४॥

यावन्तं च महिमानं जानाति परमात्मनः ।
सुखसामर्थ्यशोभाभिप्रतापरूपसद्गुणैः ॥८५॥
तावत्समर्था भवति कार्ष्णी नारायणी यथा ।
तथापि श्रीहरेः पत्युः सामर्थ्यादेरसीमता ॥८६॥
अपारता महैश्वर्यसौन्दर्यादेस्तु माधवे ।
असंख्यकोट्यः सन्ति मादृश्यो भगवन्निभाः ॥८७॥
प्राप्ताः कृष्णसकाशात् ता गुणैश्वर्यप्रभादिकम् ।
तथापि महिमा पत्युश्चापारो विद्यते सदा ॥८८॥

लेशोऽपि न्यूनभावो न विद्यते परमात्मनि ।
सामर्थ्यगुणकर्मादिसौन्दर्यसुखदायिताः ॥८९॥
कल्याणधर्मयोगाश्च भवन्त्यनन्तसंख्यकाः ।
हरेस्तैर्गुणलेशैश्च भजनैश्च हरेः परे ॥९०॥
हरितुल्याः प्रजायन्ते ह्यनन्तार्बुदवैष्णवाः ।
तथापि नाणुमात्रश्रीहरिप्रतापसद्गुणाः ॥९१॥
न्यूनतां संव्रजन्त्येव परिपूर्णतमस्ततः ।
अगाधाऽपारसीमादिसंख्याऽन्तच्छेदवर्जितः ॥९२॥

वर्तते श्रीकृष्णनारायणः श्रीपुरुषोत्तमः ।
भजनेन गता धाम्नि तत्समा अपि योषितः ॥९३॥
अपारतां विदित्वैव सेवन्ते सेविकाः सदा ।
दास्यः सदा प्रवर्तन्ते ब्रह्मरसान् प्रभुञ्जते ॥९४॥
एवं किं बहुनोक्तेन प्राप्ता साधनकोटिभिः ।
साध्यं कान्तं बदरीशं माणिक्येशं सतां पतिम् ॥९५॥
भवामीति न चान्यन्मे प्राप्तव्यमवशिष्यते ।
विधेयं शिष्यते नैव विवाहितायाश्चक्रिणा ॥९६॥

सर्वे कामाः समाप्ता मे मातः श्रीबालमाधवे ।
ततोऽहं सर्वदा दासी कृष्णस्य बालयोगिनी ॥९७॥
बदरीशी तापसी च ब्रह्मशीला परेश्वरी ।
भवामि श्रीकृष्णनारायणकान्तरसात्मिका ॥९८॥
रसं विन्दामि तस्यैव जाताऽपि तव पुत्रिका ।
वरदानप्रपूर्त्यर्थमिहाऽहं समुपागता ॥९९॥

कृष्णार्धाऽहं कृष्णकान्ता ललिता माणिकी यथा ।
राधा लक्ष्मीः माधवी च यथा कृष्णस्य वै प्रियाः ॥१००॥
भज मातस्तथा तं श्रीकृष्णनारायणं प्रभुम् ।
इत्युक्त्वा सा कन्यका स्वां मातरं तु सुरेश्वरीम् ॥१०१॥
विररामाऽधिकवाष्पै कृष्णनारायणस्मृतिः ।
ततः सुरेश्वरी कान्तं निकामदेवमाह तत् ॥१०२॥
पुत्रीयं बदरीदेवी माणिक्या चाक्षरे स्थिता ।
अनादिश्रीकृष्णनारायणपत्नी परेश्वरी ॥१०३॥
पुत्रीरूपा गृहेऽस्माकं प्रजाताऽस्ति नरायणी ।
नान्यं चेच्छति विषयं श्रीकृष्णकान्तमन्तरा ॥१०४॥
तद्योगे चावयोर्मुक्तिर्भाविन्येव न संशयः ।
एवं विज्ञाय विप्रोऽपि मुमुदे चाभजद्धरिम् ॥१०५॥
बाल्ययोगिनी बाल्याद्वै बभूव ब्रह्मचारिणी ।
सा त्वं श्री बदरीदेवि बदर्याश्रमवासिनी ॥१०६॥
बद्रीग्रमे भवसि बद्रिका त्यागस्वरूपिणी ।
स्मर सर्वं तवैवेमं वृत्तान्तं परमेश्वरि ॥१०७॥
मम प्रेमरसः प्राप्तस्त्वया वै शाश्वतः सदा ।
करोषि त्वं योषितां च मोक्षणं गीतयाऽनया ॥१०८॥
बाल्ययोगिनीं गीतां या नारी श्रोष्यति वै तथा ।
वदिष्यति हरौ स्नेहं विधास्यति वधूरिव ॥१०९॥
सा वंशं च धनं कीर्तिं सुखं शाश्वतजीवनम् ।
कान्तं कृष्णं परब्रह्म समवाप्स्यति धामनि ॥११०॥
चतुर्णां पुरुषार्थानां सिद्धिस्तस्या भविष्यति ।
ताम्बूलं प्राप्य कृष्णांऽके भोक्ष्यत्यक्षय्यतद्रसम् ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बाल्ययोगिनीगीतायां शाश्वतबाल्ययोगब्रह्मरसप्रद-धर्मादीनां निरूपणनामैकविंशति-तमोऽध्यायः ॥ २१ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि ततः सा बाल्ययोगिनी ।
क्रियायोगं समग्रं वै हरौ चक्रेऽतितन्मयी ॥ १ ॥
चतुरङ्गं महायोगं योजयामास माधवे ।
व्यापारान् कर्मरूपान् सा निदधे श्रीधवे धवे ॥ २ ॥
तद्यथा निजदेहं श्रीकृष्णशय्यावशं व्यधात् ।
हस्तौ निजौ हरेः कण्ठाश्लेषणे समयोजयत् ॥ ३ ॥
पादौ कृष्णाभिगमने कृष्णप्रदक्षिणादिषु ।
कृष्णार्थे सा व्यधाज्जिह्वां श्रीकृष्णकीर्तने व्यधात् ॥ ४ ॥
कटिदानं च कृष्णार्थे कृष्णांके स्वासनं व्यधात् ।
रतिं प्रीतिं पराशक्तिं कामनां हरयेऽकरोत् ॥ ५ ॥
हावान् भावान् प्रमोदांश्च चेष्टाश्च हरये व्यधात् ।
संकेतान् मौनिनिर्देशान् क्रियार्थान् हरयेऽकरोत् ॥ ६ ॥
भोजनं शयनं पानं विहारं हरये व्यधात् ।
शृंगारं शोभनं रूपं दिव्यतां हरयेऽकरोत् ॥ ७ ॥
कज्जलं रञ्जनं सम्मार्जनं केशप्रसाधनम् ।
वेषं भूषाः सुगन्धं च रचनां हरये व्यधात् ॥ ८ ॥
मालां हारं मणिं रत्नं तैलं स्नानं सुचन्दनम् ।
केसरं कुंकुमं चन्द्रं पत्रिकां हरये व्यधात् ॥ ९ ॥
अलक्तकं केशवेषं धम्मिलं कबरीं लताम् ।
तिलं तिलकं तिलकीं चन्द्रिकां हरये व्यधात् ॥१०॥
हास्यं नृत्यं च गमनं लीलां रमणं खेलनम् ।
अंगस्वास्थ्यं सुशुद्धिं च नारायणाय सा व्यधात् ॥११॥
उद्गारं प्राणनं निषदनं देहांगभंजनम् ।
अंगुलिस्फोटनं तालीवादनं हरये व्यधात् ॥१२॥
गीतिं मिष्टस्वरं तालं वादनं चांगसर्जनम् ।
सन्धिवलयनं वार्यानयनं शाकरन्धनम् ॥१३॥
आस्तरणं तापशीतसहनं हरये व्यधात् ।
एवं सखीवयस्याभिर्बाल्यक्रीडनकादिकम् ॥१४॥
काष्ठसमित्फलपुष्पपत्राहरणमित्यपि ।
अनादिश्रीकृष्णनारायणकान्तार्थमानयत् ॥१५॥
सर्वाः कलाः श्रीहरयेऽकरोत्मार्थमीश्वरी ।
एवं व्यापारयोगांगं श्रीकृष्णार्थे व्यधात् सदा ॥१६॥
अथ द्वितीयं योगांगमालोचनं हरौ व्यधात् ।
आलोचनानि ज्ञानानि सर्वाणि हरये व्यधात् ॥१७॥
दर्शनानि समस्तानि यावन्ति श्रवणानि च ।
स्पार्शनानि समस्तानि यावन्ति रासनानि च ॥१८॥
घ्राणजानि समस्तानि जाग्रत्स्वप्नकृतानि च ।
मूर्छासुषुप्तितुर्यादिप्रोद्भवानि व्यधाद्धरौ ॥१९॥
प्रत्यक्षादीनि सर्वाणि प्रत्यभिज्ञानकान्यपि ।
धार्याकाराणि सर्वाणि यावन्ति स्फुरणानि च ॥२०॥
अनुमानानुमित्यादीन्यपि सा हरये व्यधात् ।
उपमानं चोपमितिं सादृश्यं शाब्दमित्यपि ॥२१॥
आकांक्षावद्यसंसर्गज्ञानानि हरये व्यधात् ।
अर्थापादनमेवाऽपि तर्कं सिद्धिं च निर्णयम् ॥२२॥
अनुपलम्भमेवापि संभावनां कुतूहलम् ।
मानसं चिन्तनं प्रबोधनं तथाऽभिमाननम् ॥२३॥

गुणानां गणनां चापि भावनां शुभवासिनीम् ।
स्नेहं सुखं प्रमोदं च वाञ्च्छां यत्नं वृषं श्रुतिम् ॥२४॥
वेगं चोपासनां भक्तिं सेवां ध्यानं दयां कृतिम् ।
ग्रहणं स्मरणं हर्षं विह्वलतां प्रसज्जनम् ॥२५॥
एवमालोचनान्यस्या हर्यर्थं वै सदाऽभवन् ।
अथ तृतीयं योगांगं जीवार्पणं व्यधाद्धरौ ॥२६॥
आत्मा यश्चेतनो देहे प्राणयोगेन जीवति ।
जीवनं भोगसम्पत्तिर्भोगार्पणं व्यधाद्धरौ ॥२७॥
सुखमोदानुचैतन्यं प्रकाशश्चात्मरूपकः ।
प्रकाशस्याऽर्पणं कृष्णे व्यधाद्वै बाल्ययोगिनी ॥२८॥
सच्चिदानन्दरूपो यो नित्यानन्दप्रपूरितः ।
सच्चिदानन्दतां कृष्णे प्रार्पयत्सा तु बालिका ॥२९॥
आत्मनिवेदितां कृष्णकान्ते व्यधात्तु योगिनी ।
सद्भावं सत्स्वरूपे वै चिद्भावं चित्सनातने ॥३०॥
आनन्दं शाश्वतानन्दे चात्मानं परमात्मनि ।
ब्रह्मतां पूर्णतां चापि ज्ञातृतां चेन्द्रतां निजाम् ॥३१॥
शास्तृत्वं राजतां चापि कृष्णे बाला समार्पयत् ।
अथ तुर्ये परब्रह्मरसभोगात्मकं सुखम् ॥३२॥
योगांगं कृष्णनिर्वाणं कृष्णानन्दरसाप्लवम् ।
परब्रह्मरसाऽऽभोगं कृष्णतादात्म्यसंभवम् ॥३३॥
अखण्डाऽसीमसंभोगाऽऽनन्दास्वादसुखोत्तमम् ।
स्वादैकतानतामूर्छातदात्मकसमाधिताम् ॥३४॥
द्रवीभावं तदद्वयात्मकत्वं रसदिव्यताम् ।
लावण्याऽमृतमाधुर्यपीयूषपानतृप्तिजाम् ॥३५॥
सुधाशीतलशान्तिं सा प्रार्पयत् परमात्मनि ।
एवं सा बदरीदेवि कन्यका बाल्ययोगिनी ॥३६॥
योगांगानि तु चत्वारि समार्पयत् परात्मनि ।
माता सुरेश्वरी वीक्ष्य विस्मयं याति नित्यदा ॥३७॥
नाऽस्याः कृष्णं विना तत्त्वं पार्थक्यं भजते क्वचित् ।
कृष्णः कार्ष्णी तथा कार्ष्णी कृष्णः सा बाल्ययोगिनी ॥३८॥
वाचकेऽपि न वै भेदो लिङ्गभेदोऽप्यलीयत ।
मात्रा क्वचिद् दृश्यते सा कृष्णनारायणात्मिका ॥३९॥
कृष्णनारायणो भूत्वा दृश्यते बाल्ययोगिनी ।
कृष्णनारायणी लक्ष्मीर्बदरीतिमुहुर्मुहुः ॥४०॥
व्यापारालोचनजीवब्रह्मरससमर्पणम् ।
चतुरंगमहायोगं योगीश्वरे ह्यवाप सा ॥४१॥
अथैवं वीक्ष्य तां कन्यां नारायणपरायणाम् ।
सुरेश्वरी सुतां प्राह पुत्रि संस्कारमन्तरा ॥४२॥
देहो ह्यशुद्धो भवति तस्माद् विवाह इष्यते ।
विवाहेन सदा शुद्धिः कन्यकानां प्रजायते ॥४३॥
दीर्घिकायाः कुमार्यास्तु स्वर्गे त्विन्द्रसभास्थले ।
सभायां वर्तमानाया यदा सभाविसर्जनम् ॥४४॥
भवत्येव ततः पश्चात् तस्या असनमुत्तमम् ।
इन्द्रो मत्वा ह्यशुद्धं वै कारयत्येव शोधनम् ॥४५॥
जलेन प्रोक्षणं कृत्वा शुद्धिं करोति देवराट् ।
तद् विज्ञाय ततः पृष्टो दीर्घिकया सुरेश्वरः ॥४६॥
कथं मदासने चेन्द्र प्रोक्षणं क्रियतेऽन्वहम् ।
प्रत्युत्तरं जगादेन्द्रो भवती युवती ह्यसि ॥४७॥
अविवाहितकन्याऽसि ह्यशुद्धाऽसि ततो न्वहम् ।
अशुद्धमासनं तेऽत्र शोधयामि तु सिञ्चनैः ॥४८॥
यद्वा विवाहिता भूत्वा भव शुद्धिमती सुते ।
मानव्यसि रजोव्याप्ता पतिशून्या ह्यशुद्धिगा ॥४९॥
पतिं प्राप्य विवाहेन शुद्धा त्वं संभविष्यसि ।
विवाहाख्यस्तु संस्कारः पतिना च समागमः ॥५०॥
कन्यानां देहशुद्ध्यर्थं ब्रह्मणा तु विनिर्मितः ।
तद् याहि कृतशुद्धिस्त्वं भव शुद्धासना सुते ॥५१॥
इत्युक्ता सा महेन्द्रेण कृत्वा विवाहमात्मनः ।
ऋषिणा स्वेष्टयोग्येन ततः शुद्धासनाऽभवत् ॥५२॥
तत् त्वं कन्ये बालिके त्वं वरं कृष्णं पतिं प्रभुम् ।
विधिना तु विवाहेन समासादय मद्गृहे ॥५३॥
वह्निविप्रजनसाक्ष्ये शुद्धाऽपि शुद्धिमेष्यसि ।
मातुर्मे वचनं मत्वा विवाहोत्सवमाप्नुहि ॥५४॥
इत्युक्ता सा मातृभक्ता सर्वधर्मार्थवेदिनी ।
ओमित्याह प्रसूं तत्र माता मोदमवाप ह ॥५५॥
दध्यौ सा कन्यका कृष्णनारायणं वरं हरिम् ।
कुंकुमवापिकावासं पार्वीबद्रीप्रियम्पतिम् ॥५६॥
गोपालबालकं श्रीमत्कंभरातनुजं प्रभुम् ।
नरनारायणरूपं स्वेष्टस्वामिपुमुत्तमम् ॥५७॥
मातुर्मानससिद्ध्यर्थं नितरां मग्नमानसा ।
सततं श्रीकृष्णनारायणं दध्यौ समाधिषु ॥५८॥
दिवारात्रं स्थिता ध्याने तावत् तैजसविग्रहः ।
पुष्ट्युवाऽनादिकृष्णनारायणो हसन् हरिः ॥५९॥
श्रीकृष्णोवल्लभःस्वामी सर्वश्रृंगारभूषणः ।
रूपरूपानुरूपाढ्यमूर्तिः कन्यामनोहरः ॥६०॥
स्वर्णभासुरशोभांगः स्वयमेक उपागतः ।
उवाच तां निजपत्नीं वद किं कांक्षसि प्रिये ॥६१॥

या ते वाञ्छा करिष्ये तां पूर्णां ब्रूहि मनोगतम् ।
अथ शीघ्रं समुत्थाय हृष्टा सा बालयोगिनी ॥६२॥
पपात पादयोः प्राह गृहाण विधिना तु माम् ।
वरमालाभूषितश्च वह्निमण्डपसत्कृतः ॥६३॥
विवाहनं देवतानां सन्निधौ मे कुरु प्रभो ।
मातुर्मे वचनं तथ्यं कुरु नारायण प्रभो ॥६४॥
श्रुत्वा बालोदितं चानुग्रहमूर्तिः स्वयं हरिः ।
अस्त्वेवं चेति जग्राह विवाहार्थं समुत्सुकः ॥६५॥
अथ बाला ददौ तस्मै मधुपर्कं प्रपूजनम् ।
जग्राह स ततो बाला निन्ये तं निजमातरम् ॥६६॥
प्राह तां मातरं कन्या मातः कृष्णनरायणः ।
आयातः कृपया चात्र तवेच्छयाऽर्थिमानकृत् ॥६७॥
कृतार्थं कुरु चात्मानं मातः प्रपूज्य केशवम् ।
मानवेन स्वरूपेण कृपया त्वामुपस्थितम् ॥६८॥
माता ससंभ्रमा तस्य चक्रे स्वागतमासनम् ।
अनर्घ्यं प्रददावर्घ्यं ददौ चक्रे प्रपूजनम् ॥६९॥
निकामदेवं सहसा जगादाऽऽगतमच्युतम् ।
सोऽपि वीक्ष्य हरिं पुत्रीप्राणेशं परमेश्वरम् ॥७०॥
सुप्रहृष्टः परं चक्रे सन्मानं पारमेश्वरम् ।
ननर्त स क्षणं दृष्ट्वा कन्याप्राणपतिं पतिम् ॥७१॥
सर्वपतिं कृपापारावारं मानवविग्रहम् ।
गृहातिथिं सौम्यवेषं सर्वाभरणभूषितम् ॥७२॥
अथ माता समियेष द्रष्टुं रूपं चतुर्भुजम् ।
दिव्यं श्रीस्वामिनं कृष्णं नारायणं परेश्वरम् ॥७३॥
विज्ञाय सहसा श्रीमद्बालकृष्णो हृदि स्थितम् ।
चतुर्भुजोऽभवत्तूर्णं शंखचक्रगदाधरः ॥७४॥
राधालक्ष्मीपूजितश्च पार्षदादिकृतार्हणः ।
दर्शयित्वा दिव्यरूपं पुनः स मानवोऽभवत् ॥७५॥
अर्चितो वन्दितः कृष्णो भोजितः सेवितस्ततः ।
तिलकेन सुचन्द्रेण पुष्पहारैः प्रशोभितः ॥७६॥
वाग्दानेन च कन्यायाः प्रहर्षितो विधानतः ।
विवाहविधिना कन्यां परिणेतुं ततोऽर्थितः ॥७७॥
प्रस्थापितश्च बहुधा शीघ्रागमाय चार्थितः ।
वर्धितश्चाशिषा तूर्णं तिरोऽभवत् तदाऽम्बरे ॥७८॥
अथ सर्वे प्रतीक्षन्ते पुनर्नारायणागमम् ।
बाल्ययोगिनीरूपायाः श्रिया विवाहसूत्सवम् ॥७९॥
तावन्नारायणकृष्णः प्रेषयामास भूसुरम् ।
नाम्ना योगीश्वरदेवं वृत्तान्तकथनाय वै ॥८०॥
विप्रः शीघ्रं समागत्य निकामदेवमन्दिरम् ।
कृष्णोदितं तु वृत्तान्तं निकामदेवनामिने ॥८१॥
कथयामास सर्वस्वं विवाहस्य क्षणोत्तमम् ।
आषाढधवले पक्षे चतुर्थ्यां प्रातरेव ह ॥८२॥
आगमिष्ये हि लग्नोक्तविवाहार्थं कुटुम्बयुक् ।
इत्युक्त्वा प्रययौ विप्रस्तिरोभूय निजालयम् ॥८३॥
सुरेश्वरी च तत्पुत्री निकामदेवभूसुरः ।
प्रसन्नाश्चाऽभवँस्तत्र कन्याविवाहमोदिनः ॥८४॥
अथ निकामदेवश्च लग्नपत्रं विलिख्य वै ।
प्रेषयामास शीघ्रं तद् विप्रद्वारा तु माधवम् ॥८५॥
कुंकुमवापिकाक्षेत्रं गत्वा विप्रो हरीश्वरः ।
अर्पयामास लग्नस्य पत्रं मंगलबोधकम् ॥८६॥
जग्राह भगवान् कृष्णनारायणो मुदा तु तत् ।
विप्रं पुपूज पुष्पाद्यैर्धनं रत्नानि सम्पदः ॥८७॥
विप्राय प्रददौ श्रीमद्गोपालकृष्ण आदरात् ।
माता श्रीकंभरालक्ष्मीर्मंगलानि ह्यगापयत् ॥८८॥
ददौ दानानि बहूनि रोपयामास मण्डपम् ।
कुटुम्बिभ्यः पत्रिकाश्च तद्बोधिका ह्यवासृजत् ॥८९॥
लोमशेन समं कृष्णनारायणो हरिः प्रभुः ।
अश्वपट्टसरस्तीर्थे स्नात्वा निजालये स्थितः ॥९०॥
पिष्टिकामर्दनं चक्रुर्नार्यस्तस्य हरिप्रियाः ।
स्नपयामासुरत्यर्थं चन्दनाद्यैः सुमर्दितैः ॥९१॥
आषाढशुक्लतृतीयानिशायां परमेश्वरः ।
विभूषितो युवा पुष्टो राजाधिराजचिह्नितः ॥९२॥
मातापितृकृतसर्वमंगलः सुमहर्षिभिः ।
आशीर्भिर्वर्धितः सर्वकुटुम्बिभिः प्रमोदितः ॥९३॥
तीर्थदेवैश्च मुक्तैश्च ब्रह्मप्रियादिभिर्युतः ।
सौराष्ट्रभक्तवर्गैश्च दिव्याश्वगजवाहनैः ॥९४॥
पारेसाहस्रनारीभिः समन्वितः शुभे क्षणे ।
सर्वैर्दिव्यसुशोभाढ्यैर्युतश्च साधुभिर्वरैः ॥९५॥
कुंकुमवापिकासर्वप्रजाभिः सहितो ययौ ।
प्रतस्थिरे कृताशाश्च वरवाहिनिकायुजः ॥९६॥
बहूत्साहभवा नार्यो नराः सौभाग्यशालिनः ।
प्रातरेव ब्राह्मकाले प्रापुर्वरसमन्विताः ॥९७॥
धूनीग्रामं महोद्यानाभिव्याप्तं बहुशोभितम् ।
करुणावारिगातीरे महोद्याने निवासनम् ॥९८॥
विश्रान्तिं लेभिरे तत्र तावन्निकामदेवकः ।
कुटुम्बसहितो नारीगीतमंगलशोभितः ॥९९॥

विप्रादिसहितः पूजां कर्तुं तूर्णमुपाययौ ।
अनादिश्रीबालकृष्णं वरं कन्यार्थमागतम् ॥१००॥
सर्वैश्वर्यपरिपूर्णं वीक्ष्य हर्षं जगाम ह ।
दिव्यो वरो वरवृद्धा दिव्याः कुटुम्बिनस्तथा ॥१०१॥
दिव्याश्च वरवाहिन्यागता नार्यो नरास्तदा ।
दिव्या वाहाश्च यानानि दिव्योपकरणान्यपि ॥१०२॥
दिव्या देवा देवताश्च देव्यो ब्रह्मप्रियास्तथा ।
हरिप्रियाः प्रजाश्चापि दिव्यतैजसविग्रहाः ॥१०३॥
सर्वं दिव्यं विलोक्यैव महाश्चर्यं ययौ मुधा ।
चिन्तयामास सर्वेषां दशसाहस्रदेहिनाम् ॥१०४॥
सत्कारार्थं मिष्टमन्नं मिष्टं जलं च मन्दिरम् ।
शय्यासनानि सर्वाणि भवनान्युत्तमानि च ॥१०५॥
भोज्यपात्राण्यनन्तानि द्रव्याऽन्नरसशर्कराः ।
पूजां चक्रे महाधैर्यः स्मरन्नारायणप्रभुम् ॥१०६॥
पुत्रीपतिं सर्वसिद्धिसेवितं चागतं हरिम् ।
चिन्तामणिं प्रभुं स्पृष्ट्वा चिन्तयामास वैभवान् ॥१०७॥
नारायणार्थपर्याप्तान् विवाहोत्सवशोभनान् ।
सर्वार्थान् कल्पयामास पूजयन् स्वसुतापतिम् ॥१०८॥
जामातारं प्रभुं प्राप्य भयं दारिद्र्यसंभवम् ।
नाऽभूत्तस्य तदा तत्र पुत्र्याः प्रतापतोऽपि च ॥१०९॥
महाराजाधिराजानां चिन्तयामास सम्पदः ।
तावत्तत्र वनोद्देशे महोद्यानानि सर्वतः ॥११०॥
फलपुष्पसुगन्धाढ्यजलाब्जपूरितानि वै ।
अभवन् तत्र सौवर्णसौधानि परितस्तदा ॥१११॥
दासा दास्योऽयुतान्यपि देवा देव्योऽभवन् द्रुतम् ।
निकामदेवपक्षस्य कार्यनिर्वर्तकास्तदा ॥११२॥
पाकशाला अश्वशाला राजशालाश्च वै शुभाः ।
नारीशाला मण्डपश्च सौवर्णनिर्मितास्तदा ॥११३॥
महानसानि भोज्यानि रसाश्च मधुशर्कराः ।
मिष्टान्नानि समस्तानि शाकानि द्रववन्ति च ॥११४॥
गन्धसाराणि सर्वाणि दुग्धसाराणि यानि च ।
भक्ष्याणि लेह्यचोष्याणि प्रत्यक्षाणि तदाऽभवन् ॥११५॥
शय्यासनानि पर्यंका समस्तभोग्यकान्यपि ।
न न्यूनं विद्यते तत्र कल्पवल्ल्यो गृहे गृहे ॥११६॥
यथा स्वर्गे च वैकुण्ठं धूनीग्रामस्तथाऽभवत् ।
नार्यो नराश्च पशवो गृहाणि मृत्तिकास्थलम् ॥११७॥
सर्वं स्वर्गसमं तत्र जातं कृष्णकृपावशात् ।
पूजयित्वा वरं वृद्धान् सत्कृत्वा च प्रजास्तथा ॥११८॥
निकामदेवो वीक्ष्याऽपि वैकुण्ठाभं निजस्थलम् ।
मुमुदे कृष्णजं सर्वं दिव्यं मत्वा तु वैभवम् ॥११९॥
आवासान् कारयामास ददौ दासीश्च किंकरान् ।
वादयामास वाद्यानि वेदघोषान् व्यधापयत् ॥१२०॥
गापयामास सर्वत्र मंगलानि तदा द्रुतम् ।
प्रेषयामास भोग्यानि रसान्नसलिलान्यपि ॥१२१॥
अपेक्षितातिवस्तूनि दिव्यमनोहराणि च ।
सेवयामास भावैश्च महीमानानशेषतः ॥१२२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
बालयोगिन्याश्चतुर्विधमहायोगवर्णनं मातृवचनेन
विवाहविध्यर्थम् अनादिश्रीकृष्णनारायणस्य
ध्यानोत्तरमागमनं तिरोभावश्च, विवाहार्थे
वाहिन्या सह धूनीग्राममागमनम्,
दिव्यवैकुण्ठवत् सम्पत्करणं महीमान-
सत्कारादि चेतिनिरूपणनामा
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि मध्याह्नभोजनान्यपि ।
प्रवृत्तानि समस्तानि सर्वेषां तृप्तिदान्यति ॥ १ ॥
दिव्यामृतानि सर्वाणि निहितानि तु चक्रिणा ।
यदग्रे मायिकाः सर्वे रसा निःस्वादतां गताः ॥ २ ॥
संकल्पैर्बालयोगिन्या ब्रह्मरसान्वितानि वै ।
मिष्टान्नानि समस्तानि भोजनाऽवसरेऽभवन् ॥ ३ ॥
जलं ब्रह्महृदात्तत्र समुद्भूतं तदाऽक्षरात् ।
गोलोकाद्घृतदुग्धादि दध्याज्यनवनीतकम् ॥ ४ ॥
वैकुण्ठाद्दिव्यशाकादि श्रीपुरान्द्रोजनानि च ।
क्षीरोदात् पायसान्नानि बद्रीक्षेत्रात् फलानि च ॥ ५ ॥
सूर्यलोकाच्चटन्यादि चन्द्राच्छ्रीखण्डकान्यपि ।
हिरण्ययात्तु पात्राणि श्रीलोकाच्छयनानि च ॥ ६ ॥
विष्णुलोकात् समस्तानि शृंगारकाणि चाऽगमन् ।
नाऽपूर्णं विद्यते तत्र किंचित् संकल्पितं नवम् ॥ ७ ॥
अदृष्टं चाऽश्रुतं वापि द्राग् रम्यं समजायत ।
उपस्थितं द्रुतं भोक्तुः सन्निधौ चाऽविलम्बितम् ॥ ८ ॥
सम्पन्ने भोजने त्वेवं बद्रिके मुखवासनम् ।
ताम्बूलकादि सर्वं च योग्यं समर्पितं तदा ॥ ९ ॥
विश्रान्तिं च ततः सौधेष्वेव ते मध्यकेऽहनि ।
प्रापुस्ततस्तु सज्जाश्चाऽभवन् दिनव्ययोत्तरम् ॥१०॥

अनादिश्रीकृष्णनारायणः शृंगारितस्तदा ।
वरराजस्वरूपेण शोभान्वितः सुवेषितः ॥११॥
सहस्रसूक्ष्ममणिभिर्मध्ये च महता तथा ।
मणिना खचितः श्रेष्ठो मृदुसौवर्णनिर्मितः ॥१२॥
मुकुटः कलिसहितस्तेजःपरिधिशोभितः ।
संधृतः कृष्णशिरसि ललाटे चन्द्रमाः कृतः ॥१३॥
कज्जलं नेत्रयोर्दत्तं कर्णयोः कुण्डले शुभे ।
पुष्पावतंसाः परितो वरबोधनकारिणः ॥१४॥
मुकुटे लम्बिता हाराश्चित्रसुगन्धिपुष्पजाः ।
स्वर्णहारा रत्नयुताः कौस्तुभेन समन्विताः ॥१५॥
कण्ठे धृता पीतवर्णनीशारोपरि वक्षसि ।
पीताम्बरं स्वर्णतारैर्ग्रथितप्रान्तशोभितम् ॥१६॥
पटं कटितटे बद्धं स्वर्णभासुरमुज्ज्वलम् ।
पत्त्राणे कौशेयजन्ये रक्तवर्णे पिशंगिनी ॥१७॥
स्कन्धयोः श्रेष्ठवसनं प्रावारवरमुत्तमम् ।
सौवर्णप्रान्तसंशोभं पुष्पहारावलिभृतम् ॥१८॥
भुजबन्धौ प्रकोष्ठस्थशृंखले कटके तथा ।
ऊर्मिकाश्चांगुलिचक्रांऽगुलीयकानि वै तथा ॥१९॥
रत्नाढ्यानि च दिव्यानि धारितानि हि चक्रिणः ।
रशनां स्वर्णनिर्माणां खड्गं सौवर्णतैजसम् ॥२०॥
धारयामासुरेवैनं नारिकेलफलादिकम् ।
चतुर्दन्तं श्वेतवर्णं हस्तिनं चाद्रिसदृशम् ॥२१॥
महाशुण्डं सुरूपैश्च रूपितं स्वर्णकूथिनम् ।
साम्बालिकं सूर्यभावत् तैजसं मुक्तकोटिकम् ॥२२॥
शृंगारितं कृतसर्वकौतुकः श्रीनरायणः ।
आरोहयच्छत्रयष्टिधरचामरिसेवितः ॥२३॥
वरवाहिनिका देवैर्जुष्टा महर्षिमानवैः ।
दिव्यवाजिगरुडाद्यैः शोभते धामगा यथा ॥२४॥
प्रदीपाश्चौषधीनां च घृतानां विद्युतां तथा ।
मणीनां दिव्यरत्नानां तदाऽऽसन् परितः सुखाः ॥२५॥
एवं सा सर्वशोभाढ्या वृद्धजनैरलंकृता ।
नारीवर्गैरतिगीता वाहिनी व्यचरत् पुरः ॥२६॥
तदा वाद्यान्यवाद्यन्त जयशब्दास्तथाऽभवन् ।
पुष्पवृष्टिर्दिव्यहस्तैर्मुक्ताऽभवच्च चान्दनी ॥२७॥
लाजाऽक्षतादिमांगल्यैर्वर्धितः परमेश्वरः ।
हस्तिना संधृतः पृष्ठे ययौ विवाहमण्डपम् ॥२८॥
विशालं चाऽम्बरस्पृष्टं विचित्राम्बरशोभितम् ।
स्वर्णस्तम्भप्रशाखातोरणाद्यैरत्यलंकृतम् ॥२९॥

नैसर्गिकप्रदीपाद्यैः स्वर्णकलशैर्वर्धितम् ।
कल्पलतादिभिर्व्याप्तं निसर्गगीतिगर्जितम् ॥३०॥
मंगलायतनदैवप्रतिमाद्यभिराजितम् ।
कुण्डविप्रोपकरणैर्वह्निदेवाधिवासितम् ॥३१॥
सर्वसमित्समाजुष्टं वेदविप्राऽभिवर्धितम् ।
एतादृशं धामतुल्यं प्राप्य वै मण्डपं वरः ॥३२॥
अवतीर्य गजान्नमस्कृत्य तन्मण्डपेश्वरम् ।
श्वशुरेण तथा श्वश्वा सत्कृतः पूजितो हरिः ॥३३॥
लोकाचारैः संस्कृतश्च जलाद्यैर्मालिकादिभिः ।
अक्षताद्यैर्वर्धितश्च गृहोपकरणैस्तथा ॥३४॥
निर्विघ्नीकृत ईशेशो विश्रान्त्यै नीत आलयम् ।
महामन्दिरमध्ये सुस्वर्णसौधान्तरे तदा ॥३५॥
सिंहासने श्वशुराद्यैरुपावेशित आदृतः ।
हारैः स्वागतयत्नैश्च प्रसादितोऽन्नवारिभिः ॥३६॥
प्राघूणिकाः समस्ताश्च जलताम्बूलदानकैः ।
मिष्टान्नकैः फलैश्चापि प्रसादिताः सुखीकृताः ॥३७॥
वाद्यन्ते तत्र वाद्यानि गीयन्ते गीतयः शुभाः ।
उद्घोष्यन्ते वेदमन्त्राः प्रमोदन्ते नराः स्त्रियः ॥३८॥
अथ नार्यः कुमार्यश्च सौभाग्ययोषितस्तदा ।
विविधैर्दिव्यवेषाद्यैः शृंगारैर्भूषणादिभिः ॥३९॥
प्रसाधनैः शृंगारयामासुस्तां बाल्ययोगिनीम् ।
सुगन्धितैलसाराद्यैः सलिलैस्तीर्थपावनैः ॥४०॥
चन्दनैः केसरैः पिष्टैः पिशंगैः स्वर्णचूर्णकैः ।
संस्नाप्य घर्घरीं स्वर्णबुट्टरत्नादिसंभृताम् ॥४१॥
निधारयामासुरपि शाटीं सौवर्णभासुरीम् ।
कञ्चुकीं कानकीं सूक्ष्मतन्तूत्थां कचलीं तथा ॥४२॥
चोलीं च कुचलीं स्वर्णवर्णां च नक्तकं शुभम् ।
रक्तरूपां सूक्ष्मशाटीसहायिशाटिकां ददुः ॥४३॥
केशवेशं च कबरीं धम्मिलं भूषणानि च ।
सफुलकं ग्रथनं च कृत्वा सुमुकुटं न्यधुः ॥४४॥
ललाटिकां बालपाशीं चूडामणिं च शृंखलाम् ।
चूडामणिं कर्णभूषामीरयाने च वालिकाम् ॥४५॥
नत्थीं च चन्द्रिकां फुल्लीं टिप्पकीं रत्नचक्रिकाम् ।
पट्टपत्रीं फुल्लमालां मुद्रमालां च माषजाम् ॥४६॥
चणहारान् मणिहारान् पर्वहारान् न्यधुर्गले ।
कटके शृंखले सिंहकटके भुजबन्धके ॥४७॥
ऊर्मिकाश्चांगुलिचक्राण्यपि प्रपद्मपत्रिकाम् ।
रशनां धारयामासुर्मोक्षीरे घुर्घुरीयुते ॥४८॥

किंकिणीबालनादाढ्ये कटके काम्बिके न्यधुः ।
पादाङ्गुलीयकान्यूर्ध्वचन्द्राढ्यानि न्यधुस्तथा ॥४९॥
कण्ठीं ललन्तिकां ग्रैवेयकाणि कुण्डलानि च ।
मुक्ताहारादिकान् हारान् गुच्छगोस्तनमालिकाः ॥५०॥
कंकणे मेखलां मंजीरे च न्यधारयत्तदा ।
नखालक्तकदानं च करपादतलादिषु ॥५१॥
ओष्ठगण्डकपोलादौ भाले स्तनयोः रञ्जनम् ।
कज्जलं नेत्रयोर्देहे वेषे स्वर्णादिचूर्णकम् ॥५२॥
न्यधुस्ता योषितः कन्यारूपे रूपाभिवृद्धये ।
पुष्पहारान्नधुश्चापि वधूटीमुकुटे शुभान् ॥५३॥
स्वल्पलज्जां सूक्ष्मशाटिकया व्यरचयन् स्त्रियः ।
ताम्बूलचर्वणं मिष्टभोजनं वारिपानकम् ॥५४॥
ददुः प्राप्ते मुहूर्तेऽथ लाग्निके मण्डपं प्रति ।
वरं च महीमानादीनानयामासुरुत्सुकाः ॥५५॥
विप्रा वृद्धा लोमशाद्याः शिष्टाचारं व्यधुस्तदा ।
प्रक्षाल्य चरणौ सुरेश्वरी नीराजनं व्यधात् ॥५६॥
पुपूजाऽक्षतकुसुमैर्लाजाद्यैः समवर्धयत् ।
वरं चाथ गीतिवेदैर्वर्धितो मृत्कपालकम् ॥५७॥
संचूर्ण्य नत्वा देवाँश्च गुरुं वह्निं स मण्डपे ।
कुण्डाग्रे न्यषीदद् दर्शितासने वरराट् स हि ॥५८॥
योषाभिश्चाऽक्षतपुष्पैर्वर्धितो विप्रपुंगवैः ।
निपीतो ग्रामयोषाभिश्चक्षुर्भिस्तृषितैरति ॥५९॥
हृदये गमितो दिव्यश्चात्मन्यर्पित इष्टवत् ।
अथ स्त्रियः समानिन्युर्मण्डपं बालयोगिनीम् ॥६०॥
सुरेश्वरीसहितास्ता जगुश्च लग्नगीतिकाः ।
विप्राः कन्यां तदा गन्धाक्षतपुष्पादिभिर्वृतम् ॥६१॥
वर्धयामासुरुच्चैश्च मंगलानि जगुर्मुहुः ।
दिनं संकल्पयामासुर्न्यषादयन् सुरान्तिके ॥६२॥
कन्यकां वामभागे श्रीकृष्णनारायणस्य वै ।
गणेशादिपूजनं च कारयामासुरित्यपि ॥६३॥
कामफलबन्धनं च मण्डपाग्निप्रपूजनम् ।
कुण्डप्रपूजनं विप्रवृद्धादिपूजनं तथा ॥६४॥
प्रायश्चित्तं तु शुद्ध्यर्थं कारयामासुरित्यथ ।
श्राद्धादितर्पणं चापि कुलदेवादिपूजनम् ॥६५॥
कारयित्वा वरगले कन्याहस्तेन मालिकाम् ।
पुष्पाणां दापयामासुः पुष्पाक्षतादिवर्धनम् ॥६६॥
वरहस्तेन कन्यायाः कण्ठेऽपि मालिकां तथा ।
वस्त्रग्रन्थिमतो विप्राश्चक्रुस्ततोऽभिदानकम् ॥६७॥

अग्नेः प्रदक्षिणां चतुर्वारं च नमनार्चनम् ।
कारयामासुरेवैतौ हवनं हविषां तथा ॥६८॥
हस्तग्रहं पिता तत्र कारयामास दानकृत् ।
वरहस्ते ददौ हस्तं कन्यायास्तु निकामतः ॥६९॥
निकामदेवो विप्रर्षिश्चाशीर्वादान् ददौ तदा ।
महाभाग्यवती पुत्रि भव नारायणी सदा ॥७०॥
बालकृष्णः प्रजग्राह करं कन्यार्पितं करे ।
सहधर्मान् चरतां वै तादात्म्यं चरतां सदा ॥७१॥
ददुर्विप्रा आशिषश्च दानं ददुः परे जनाः ।
हस्तद्रव्यं ददुश्चापि बहुरत्नादिसंभृतम् ॥७२॥
दक्षिणाऽर्हणदानानि विप्रेभ्यः प्रददौ पिता ।
श्रीमद्गोपालकृष्णाद्या ददुर्दानानि भूरिशः ॥७३॥
गोदानादिसमस्तानि महादानानि वै ददुः ।
कवलं च मिथस्तत्र जगृहतुर्वधूवरौ ॥७४॥
अन्योन्यस्य मुखे प्रेम्णा ददतुस्तत्र मण्डपे ।
ऊर्मिकाखेलनं तत्र चक्रतुर्जलपात्रके ॥७५॥
परिहारं तु भूदेवाश्चक्रुर्वै योषितस्तदा ।
गीतिकापूर्वकं रम्ये मन्दिरे दम्पती शुभे ॥७६॥
निन्युर्हास्यानि चक्रुश्च ददुस्ताभ्यां सुभोजनम् ।
जलपानं तथा ताम्बूलकं ददुश्च वै रहः ॥७७॥
शयनं प्रददुस्तत्र वधूटी पारितोषिकम् ।
प्राप्य सिषेवे कान्तं चाऽथ प्राघुणास्तथा प्रजाः ॥७८॥
भुक्त्वा व्यधुश्च शयनं प्रातर्जातं ततो जनाः ।
पञ्चम्यामाषाढशुक्ले स्नात्वा भुक्त्वा समुत्सुकाः ॥७९॥
दम्पतीवाहिनीयुक्ताः सज्जा गन्तुं ततोऽभवन् ।
पितानिकामदेवश्च धनं प्रादान्महोत्तमम् ॥८०॥
यौतकं बहुधा तत्र दिव्यं सर्वं विशेषतः ।
प्रददौ कन्यका सापि श्रीमत्कृष्णनरायणम् ॥८१॥
पतिं प्राह पितरौ मे सह कृष्ण नय त्वया ।
धूनीग्रामे पितरौ मे मद्वियोगेन दुःखितौ ॥८२॥
स्यातां तस्माद् भवत्क्षेत्रं नय कृष्ण कृपां कुरु ।
अथ तावत् समागत्य पादौ धृत्वा हरेरपि ॥८३॥
प्राह निकामदेवोऽपि नय नौ वै निजं गृहम् ।
हरिः प्राह तथास्त्वेवं तथा गोपालकृष्णकः ॥८४॥
निन्ये स्नुषापितरौ तौ निजां कुंकुमवापिकाम् ।
सुरेश्वरी तथा निकामदेवो बालयोगिनी ॥८५॥
ययुः कृष्णस्य वाहिन्या समं कुंकुमवापिकाम् ।
धूनीग्रामजनाश्चाऽन्ये ययुर्भक्ता हरेस्तु ये ॥८६॥

प्रस्थानं चक्रिरे सर्वे मध्याह्ने भोजनोत्तरम् ।
देववाद्यान्यवाद्यन्त पुष्पवृष्टिर्बभूव ह ॥८७॥
सुरेश्वर्या जिता माया जितः कृष्णः सुतार्पणात् ।
जितो मोक्षश्चेति वाणी सुराणामभवद्दिवि ॥८८॥
अथ स्वर्गसमो ग्रामो मण्डपो दिव्यकानकः ।
यज्ञशाला रसशाला महानसानि यान्यपि ॥८९॥
सर्वं तिरोऽभवत् सद्यः प्रस्थिते परमेश्वरे ।
मिष्टान्नानि प्रसादानि देवाद्या निन्युरुत्सुकाः ॥९०॥
तीर्थानि च सुराद्याश्च ययुर्विस्मयमच्युते ।
दासा दास्यो हरिकृता अदृश्यतां ययुर्द्रुतम् ॥९१॥
वाहयित्वा वाहिनीं स्वां बालयोगिनिकापतिः ।
बालकृष्णः प्रियायुक् चाऽऽययौ कुंकुमवापिकाम् ॥९२॥
मंगलानि समस्तानि तत्राऽऽसन् कृष्णमन्दिरे ।
पिता प्रददौ दानानि भोजनानि मधूनि च ॥९३॥
महीमानादिपूजां स प्रचकार तथाऽर्पणम् ।
धनादीनां यथायोग्यं व्यसर्जयतत्तः परम् ॥९४॥
महीमानाः प्रसन्नाश्च प्रययुः स्वालयाँस्ततः ।
बध्वाः पित्रे च मात्रे च बालकृष्णः सुवर्णजम् ॥९५॥
मन्दिरं नित्यवासार्थं प्रददौ भोग्यजातकम् ।
प्रापतुस्तौ परानन्दं जामातारं हरिं प्रभुम् ॥९६॥
प्राप्यकन्यामहाभाग्यं वीक्ष्य ययतुर्हर्षणम् ।
निवृत्तौ तावृणात् कन्यां दत्वा तु विधिना ततः ॥९७॥
युयुजाते हरेर्मूर्तौ मोक्षार्थं तावहर्निशम् ।
अथैकदा श्रीनिकामदेवः पप्रच्छ तं हरिम् ॥९८॥
श्रेयसे श्रेष्ठमत्रैव साधनं मोक्षकृत्तु यत् ।
बद्रिके श्वशुरं मोक्षमानसं वीक्ष्य वै ततः ॥९९॥
मोक्षयोगं स्वजामाता बोधयामास सर्वथा ।
यत् प्राप्य मानवाश्चापि मोक्षं तूर्णमवाप्नुयुः ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने महीमानानां भोजनादि, शृंगारः, मण्डपं प्रतिगमनम्, श्रीकृष्णस्य शृंगारो मण्डपं प्रतिगमनम्, विधिश्चोद्वाहः कुंकुमवापिकां प्रत्यागमनं चेत्यादिनिरूपणनामा त्रयोविंशोऽध्यायः ॥ २३ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि श्रेयसे श्वशुरो हरिम् ।
पप्रच्छाऽऽत्यन्तिकं मोक्षं कथं स स्याद् वदात्र मे ॥ १ ॥
जामाता श्रीबालकृष्णोऽवतारी पुरुषोत्तमः ।
उपादिदेश निकामदेवाय मोक्षसाधनम् ॥ २ ॥
पूज्यतम श्वशुराऽत्र वदामि मोक्षसाधनम् ।
मोक्षयोगं सुसुलभं दुर्भाग्यानां तु दुर्लभम् ॥ ३ ॥
साक्षात् कृष्णप्रसंगेन मुच्यते भवबन्धनात् ।
कृष्णे सर्वस्वदाता वै मुक्तो भवति मायिकात् ॥ ४ ॥
कन्यां कृष्णाय दाता वै याति मत्परमं पदम् ।
कृष्णतादात्म्यमापन्ना कन्योद्धरति तत्कुलम् ॥ ५ ॥
कृष्णनारायणभक्त्या मानवा यान्ति तत्पदम् ।
श्रीकृष्णमन्दिराऽऽवासा वसन्ति चाऽक्षरे ततः ॥ ६ ॥
श्रीकृष्णे कृतविश्वासा मोक्षं यान्ति हि शाश्वतम् ।
यस्य नारायणी पुत्री पिता मोक्षगतो हि सः ॥ ७ ॥
कुंकुमवापिकातीर्थे तारयत्येव वासिनम् ।
सत्संगो मोक्षदश्चास्ति कृतो नारायणे परः ॥ ८ ॥
सतां समागमः श्रेष्ठश्रेयसः साधनं सदा ।
सतीसाध्वीप्रसंगेन नार्यो यान्ति परं पदम् ॥ ९ ॥
सेवया प्राप्यते सतां प्रसन्नता तया हरिः ।
हरेः प्राप्तौ परा प्राप्तिर्मोक्षार्थे नैव विद्यते ॥१०॥
एषा तु सुलभा विप्रवर्य भवता चार्जिता ।
प्राप्तव्यो विद्यते नाऽन्यः ततोऽहं परमेश्वरः ॥११॥
नारायणीं महालक्ष्मीं नारायणं परेश्वरम् ।
ध्यात्वा स्नेहेन सेवित्वा मुच्यते कर्मबन्धनात् ॥१२॥
सोऽहं नारायणश्चाऽस्मि लक्ष्मीश्च बालयोगिनी ।
या सा बद्रीप्रिया बद्रिकाश्रमेऽस्ति मम प्रिया ॥१३॥
बद्रिका सा भवत्पुत्री मम भार्या त्वयाऽर्पिता ।
एवं मां तां भवान् ध्यात्वा मद्रूपः संभविष्यति ॥१४॥
श्रेयसे त्वाययोः साक्षात्सेवाज्ञानं भवद्धितम् ।
तत् कृत्वाऽत्र महत्तीर्थे स्वयं मोक्षं गमिष्यसि ॥१५॥
गुरुदेवर्षिसिद्धर्षिसेवा साधुसमागमः ।
ब्रह्मात्मवेदनं भक्तिर्मोक्षसाधनमुत्तमम् ॥१६॥
मोक्षयोगो महानस्ति सर्वयोगेश्वरः सुखः ।
हरेर्मूर्तिः सदा योगो मोक्षयोगो महत्तमः ॥१७॥
मूलं संसारवृक्षस्य ममाऽहं चेति नित्यदा ।
तन्ममाऽहं परे कृष्णे योजितं मयि मोक्षकृत् ॥१८॥
अहं मायांकुरो बोध्यो वासना मूलमेव सा ।
ममेति स्कन्धवान् वृक्षः शाखाः क्षेत्रगृहाणि च ॥१९॥
दाराः सख्यः पल्लवाश्च धनधान्यादिपत्रिकाः ।
पापमञ्जरिकाव्याप्तो दुःखादिफलदस्तथा ॥२०॥

तस्य प्रछित्तये कृष्णमाहात्म्यज्ञानमुत्तमम् ।
अर्जयित्वा विद्ययाऽहंवृक्षश्छेद्यो हि पण्डितैः ॥२१॥
ततो ब्रह्मरसं पीत्वा दिव्यतृप्तिप्रदं परम् ।
प्रयान्त्येव परब्रह्म प्राज्ञा निर्वृत्तिमुत्तमाम् ॥२२॥
नाऽयं देहो हि विप्रोऽस्ति नाऽऽत्मा वा विप्र उच्यते ।
वित्तिं प्राप्तो हरेर्यः स विप्रो माहात्म्यवित्तियुक् ॥२३॥
त्वमहं चेति संसारो भिन्नवासनया कृतः ।
मयि विप्रेश्वरे कृष्णेऽर्पणात् त्वमादि लीयते ॥२४॥

गृहं दारा धनं वंशो लीयन्ते चास्य वासनाः ।
तद्गृहं यत्र वसति सा दारा दीर्यते यया ॥२५॥
तद्धनं यत्सहायार्थे वंशः स यस्तु शाश्वतः ।
नारायणो गृहं नित्यं दारा बुद्धिः प्रमोक्षिणी ॥२६॥
भक्तिर्धनं दूरमार्गे सहायदं तथाऽव्ययम् ।
वंशः स एव मुक्तानां वंशा ये ते मताश्च नः ॥२७॥
ब्रह्मरसो महद् भोज्यं येन जीवति सर्वदा ।
यन्मुक्तये कृतं तद्वै पुरुषार्थः प्रकीर्तितः ॥२८॥

मूर्ध्नि कण्ठे ललाटे च हृदये च निजे हरिम् ।
ध्यायेदात्मनि चात्मस्थं यः स मुच्येत बन्धनात् ॥२९॥
निकामदेव कामानां यदा लयो मयीश्वरे ।
तदा निष्कामतामेत्य ब्रह्मरसान् समश्नुते ॥३०॥
यथाऽग्निर्वर्धते काष्ठैस्तेजस्वी जायते बहुः ।
काष्ठानि संविधायैव भस्मरूपाणि नान्यथा ॥३१॥
तथाऽऽत्मा वर्धते पुण्यैः सुप्रकाशः प्रजायते ।
पुण्यानि भस्मसात् कृत्वा ब्रह्मरसं समश्नुते ॥३२॥

पुण्यं वा यदि वा पापं महारण्यं भवाय तत् ।
पुण्यपापेऽर्पयित्वा मे महामोक्षं प्रविन्दति ॥३३॥
ज्ञात्वा मां परमात्मानं स्वात्मस्थं स्वामिनं पतिम् ।
प्रभुं दिव्यगुणागारं मुच्यते ब्रह्मरूपभाक् ॥३४॥
अहं ब्रह्म परब्रह्मलग्नोऽस्मि स्थूलवर्जितः ।
अहं ब्रह्म परब्रह्मलग्नोऽस्मि सूक्ष्मवर्जितः ॥३५॥
अहं ब्रह्म परब्रह्मलग्नोऽस्मि हेतुवर्जितः ।
अहं ब्रह्म परब्रह्मलग्नोऽस्मि व्योमवर्जितः ॥३६॥
अहं ब्रह्म परब्रह्मलग्नोऽस्मि स्थानवर्जितः ।
अहं ब्रह्म परब्रह्मलग्नोऽस्मि मात्रवर्जितः ॥३७॥
अहं ब्रह्म परब्रह्मलग्नोऽस्मीन्द्रियवर्जितः ।
अहं ब्रह्म परब्रह्मलग्नोऽस्मि प्राणवर्जितः ॥३८॥
अहं ब्रह्म परब्रह्मलग्नोऽस्मि चार्थवर्जितः ।
अहं ब्रह्म परब्रह्मलग्नोऽस्मि दिव्यतान्वितः ॥३९॥

अहं ब्रह्म परब्रह्मप्रभ्वऽस्मि ज्ञानभानवान् ।
परब्रह्मणि लग्नोऽस्मि शेषो दासश्च किंकरः ॥४०॥
नान्यन्मे रोचते कृष्णमन्तरा दृष्टिसृष्टिषु ।
इत्येवं त्वात्मनो ब्राह्मीं मां ज्ञात्वा मुच्यते भवात् ॥४१॥
ततो न मरणं दुःखं न रोगो नरकं न च ।
न पापैर्युज्यते विज्ञो निरये न च पच्यते ॥४२॥
न गर्भे न तथा बाह्ये वासोऽस्य मायिकः क्वचित् ।
कृष्णनारायणं प्राप्तः श्वेतनारायणो हि सः ॥४३॥

भक्त्या च सेवयोपासनया मां लभते स हि ।
ध्यानेन कीर्तनेनापि पूजनेन जपेन मे ॥४४॥
स्तवनेन व्रतेनाऽपि दानेन च मखेन च ।
मय्यर्पितेन सर्वेण शुद्धात्मा ब्रह्म जायते ॥४५॥
नारायणेतिमन्त्रेण कृष्णनारायणेन च ।
अनादिश्रीकृष्णनारायणेन याति मोक्षणम् ॥४६॥
मम भक्त्या निःकृष्टोऽपि सर्वमाप्नोति चोत्तमम् ।
स्वर्गे वा शाश्वतानन्दाऽक्षरं धाम प्रयात्यपि ॥४७॥

तुष्याम्यहं यथा भक्त्या सेवया चार्पणेन च ।
तथा नाऽन्येन तुष्यामि तुष्यामि साधुसेवया ॥४८॥
महतां श्रेयसां मूलं प्रसवः पुण्यसन्ततेः ।
जीवितस्य फलं स्वादु स्मरणं मे सदा द्विज ॥४९॥
मुञ्चन्त्यश्रूणि संहर्षात् संप्रहृष्टतनूरुहाः ।
गायन्ति सामसूक्तानि मयि वासं गता जनाः ॥५०॥
परब्रह्म प्रगायन्तो ब्रह्मरूपेतिसंस्थिताः ।
भक्त्या प्रणामकर्तारो वैष्णवाः पावना भुवि ॥५१॥

श्रीभक्तजनवात्सल्यं कृष्णभक्तानुमोदनम् ।
हरिलीलाश्रवःप्रीतिं प्राप्तानां सफलो भवः ॥५२॥
येन सर्वार्पणेनैव कृष्णे भक्तिर्निवेदिता ।
भावो निवेशितः कृष्णे महाभागवतो हि सः ॥५३॥
अर्चयत्येव मां नित्यं ध्यायति मां रटत्यपि ।
सर्वरागविनिर्मुक्तो म्लेच्छो विप्रोत्तमो हि सः ॥५४॥
मोक्षगत्यै प्रवृत्तो यो मत्कृपापात्रमेव यः ।
पावनः स मनुष्याणां स पूज्यः स यथा हरिः ॥५५॥

पुनाति श्रीहरेर्भक्तश्चाण्डालोऽपि तु पावनः ।
यद्गृहे श्रीहरिश्चास्ते यच्चित्ते श्रीनरायणः ॥५६॥
तस्मै देयं ततो ग्राह्यं पावनः पापिनां हि सः ।
श्रुत्वाऽन्यं पापिनं पापमुक्तये स्तौति मां हि सः ॥५७॥
दयां कुरु प्रपन्नाय तवाऽस्मीति दयां कुरु ।
एवं भूताऽभयदस्य वशो कृष्णो हि वर्तते ॥५८॥

वेदमन्त्रिसहस्रेभ्यो व्रत्ययुतेभ्य एव च ।
तापसानां कोटितश्च कृष्णभक्तो विशिष्यते ॥५९॥
एकान्तिनो हरेर्भक्ता दिव्येन वर्ष्मणाऽक्षरम् ।
तेनैव वपुषा भक्त्या यद्वा यान्ति परं पदम् ॥६०॥
एकान्तज्ञानभक्त्याढ्यश्चानन्यभावसंभृतः ।
हरेः प्रियतमो नित्यं भक्तावव्यभिचारवान् ॥६१॥
आपत्स्वपि न मुञ्चेत प्रीतिं मय्यनपायिनीम् ।
मां स्मरन् मां चाश्रयँश्च मे चित्तान्नोपसर्पति ॥६२॥
नाऽधीतो न मखी नैव व्रती नाऽऽचारवानपि ।
भक्तिं मे वहते यस्तु कृत्यकृत्यः स वै मतः ॥६३॥
तपसां च मखानां च वेदानां पारगा अपि ।
विना भक्तिं गतिं नैव यान्ति यां भक्तियोगिनः ॥६४॥
यः कश्चिच्छ्रीकृष्णभक्तोऽप्यनाचारोऽप्यनाश्रमी ।
तथापि जगतां सूर्य इवोदितः स पावनः ॥६५॥
अपि पापप्रयोगाश्च देहेन्द्रियवशा जनाः ।
भक्ता मे यान्त्यक्षरं यन्नारायणपरायणाः ॥६६॥
दृढा नारायणे भक्तिर्येषां चाऽव्यभिचारिणी ।
तुच्छं स्वर्गसुखं तेषां भक्तिः शाश्वतमोक्षदा ॥६७॥
कर्ममयेऽत्र संसारे प्रपन्नानां करात् प्रभुः ।
भुंक्तेऽन्नजलताम्बूलं तुष्टो भवति मोक्षदः ॥६८॥
यो न कृष्णं भोजयति न पाययति सेवते ।
पूजयत्येव नैवाऽपि तस्य सर्वं निरर्थकम् ॥६९॥
कथां न संश्रृणुते स बधिरो माययाऽऽवृतः ।
दर्शनं कुरुते नैव सोऽत्राऽन्धोऽज्ञानसंवृतः ॥७०॥
नाम्नां च कीर्तने मेऽत्र न यस्य पुलकोद्गमः ।
हृदुल्लासोऽपि नैवाऽस्ति सोऽस्ति कुणप एव ह ॥७१॥
मयि भक्तिमतां विप्र मुक्तिर्दासीव वर्तते ।
मय्यनन्यमनसां तु सर्वथा भवसंक्षयः ॥७२॥
यमोऽपि स्वदूतवर्गान् प्रातर्गदति नित्यशः ।
वैष्णवान् वर्जयित्वैव चरन्त्ववैष्णवान् प्रति ॥७३॥
नाऽहं वैष्णवभक्तानां प्रभुर्दण्डधरोऽपि सन् ।
अनाचारी दुराचारी विष्णुभक्तो हि मुच्यते ॥७४॥
अनन्यभक्तिमान् कृष्णे कृष्णनिश्चयशोभनः ।
साधुधर्मा परो दिव्यो भवत्येव स उत्तमः ॥७५॥
यस्य भक्तिः स्थिरा कृष्णे प्रत्यणु वर्ष्मणि स्थिता ।
सर्वार्थास्तस्य करगा मुक्तिर्हस्तेऽस्य वर्तते ॥७६॥
मया विनिर्मिता माया सर्वेषां बन्धनप्रदा ।
या सा तस्य भवत्येवाऽनुकूला भक्तिमोक्षदा ॥७७॥
तरन्ति ते मम मायां प्रपद्यन्ते तु मां धिया ।
भक्त्या तुष्यामि श्रीनाथः सेवया यावदात्मना ॥७८॥
नान्योपायैस्तुष्टिमेमि यथैमि चार्पणात्मना ।
संसारो गारलो वृक्षस्तस्य फले शुभे युगे ॥७९॥
मयि स्नेहमयी भक्तिस्तथा साधुसमागमः ।
पितरस्तस्य तुष्यन्ति प्रनृत्यन्ति पितामहाः ॥८०॥
सत्संगं च तथा भक्तिं कुर्वन् कुलेऽस्ति चेज्जनः ।
जलान्नानि मया विप्र निर्मितानि प्रशान्तये ॥८१॥
तथापि नैव मां लोका भजन्ते मोहसम्पदः ।
पापा द्विष्टा मम स्मृत्या यान्त्यमायं पदं मम ॥८२॥
जडा अपि जना ये मच्छरणं संगता भुवि ।
तेऽपि मायामतिक्रम्य प्रयान्ति परमाऽक्षरम् ॥८३॥
नमस्यो जायते देही नमस्कारपरोऽपि मे ।
योऽहमन्तर्निविष्टोऽस्मि हृदयालयशोभनः ॥८४॥
मम योगेन दिव्यो मे भक्तो - मुक्तोऽस्ति सर्वदा ।
तं सर्वसाक्षिणं कृष्णं नमस्येत हृदाऽनिशम् ॥८५॥
नमस्कारे सुशक्तोऽपि न मां नमस्करोति यः ।
सोऽत्र मग्नो महाघोरे संसारे न तरिष्यति ॥८६॥
कृष्णनारायणे चैका मयि भावनमस्कृतिः ।
पुनाति सद्यश्चाण्डालं किमुताऽन्यजनानिह ॥८७॥
कृत्वा सुदण्डवन्नारायणं मां प्रणमेत्तु यः ।
स प्राप्नोति गतिं श्रेष्ठां सहस्रमखजोर्जिताम् ॥८८॥
संसारे दुष्टकान्तारे धावतां देहिनामिह ।
मयि कृष्णे नमस्कारो विश्रान्तिदश्च तारकः ॥८९॥
आसीनो वा शयानो वा भुञ्जानो विहरन्नपि ।
अनादिश्रीकृष्णनारायणाय नम उच्चरेत् ॥९०॥
मम नाम सुलभं वै जिह्वा दत्ता तदर्थिनी ।
तथापि न गृणन्त्येते नारकाः किं तदद्भुतम् ॥९१॥
अनन्तसृष्टिजा व्यासाः शेषाश्चाऽनन्तरूपिणः ।
मम लीलाचरित्राणां नाम्नां नान्तं प्रयन्ति ते ॥९२॥
मतिक्षयान्निवर्तन्ते न मे गुणक्षयात् क्वचित् ।
अवशोऽपि वदेत् कृष्ण मुच्यते सर्वबन्धनात् ॥९३॥
बद्धः परिकरस्तेन सर्वथा चाऽक्षरं प्रति ।
स्वप्नेऽपि मां स्मरत्येषो मोक्षाय कल्प्यते द्विजः ॥९४॥
नमः श्रीबालकृष्णाय श्रीकृष्णस्य शुभाय च ।
वदन् भावेन भक्तोऽसौ यमाय नैव कल्पितः ॥९५॥
सूर्योदयेऽन्धतमसां क्षयवन्मम कीर्तने ।
पापानां जायते विप्र क्षयो मोक्षस्ततोऽपि च ॥९६॥

पाथेयं श्रीकृष्णनारायणनाम महाध्वनि ।
गच्छतां मध्यलोकानां विघ्नानां विनिवारकम् ॥९७॥
श्रीकृष्णश्रीकृष्णनारायणश्रीकृष्णमाधव ।
जपन्नरोऽक्षरं याति युगेषु सर्वदा सदा ॥९८॥
जिह्वायां श्रीबालकृष्णहरे यस्य स मोक्षगः ।
सर्वसारोत्तमसारश्चाराधनं हरेर्मम ॥९९॥
पूज्योऽसि मच्छ्वशुरोऽसि नारायणीपिताऽसि च ।
सर्वथा चानुग्राह्योऽसि मोक्षे स्थितोऽसि मानद ॥१००॥
जामातारं च मां लब्ध्वा दत्वा दानं सुतात्मकम् ।
किमन्यच्छिष्यते मोक्षे निकामदेव मे वद ॥१०१॥
सम्पन्नं सर्वकार्यं ते निष्पन्नं मोक्षणं शुभम् ।
कृतकृत्योऽसि भगवन् मद्रहस्यं तवोदितम् ॥१०२॥
प्रभोकृष्ण जयकृष्ण माधवीकृष्ण संजपन् ।
श्रीकृष्ण ललिताकृष्ण जपन् याहि ममाऽक्षरम् ॥१०३॥
बालायोगिनिकाकृष्ण बालाकृष्णेति संजपन् ।
मे कृष्णो वल्लभः स्वामी जपन् याहि ममाऽक्षरम् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने निकामदेवाख्येन मोक्षयोगं प्रति पृष्टः श्रीकृष्ण-नाराणस्तस्मै मोक्षयोगमुपादिदेशेतिनिरूपणनामा चतुर्विंशोऽध्यायः ॥ २४ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि ततः कृष्णनरायणः ।
पुनः स्वरूपयोगं स्वं सुभक्ताय त्वुपादिशत् ॥ १ ॥
स्वरूपं श्रीकृष्णनारायणं मानवविग्रहम् ।
आश्रित्य वर्तते यस्तु तस्य मोक्षोऽस्ति सर्वथा ॥ २ ॥
परेऽक्षरे राजमानो राजाधिराज ईशपः ।
अवताराऽवतारी यः सोऽहं श्रीकृष्ण एव हि ॥ ३ ॥
अनन्तवासुदेवानां वासुदेवोत्तमोऽस्म्यहम् ।
अनन्तश्रीकृष्णनारायणनारायणोत्तमः ॥ ४ ॥
अनन्तानां भगवतां भगवानुत्तमोत्तमः ।
अनन्तानां पुरुषाणामस्म्यहं पुरुषोत्तमः ॥ ५ ॥
अनन्तानामक्षराणामक्षरोत्तमशासकः ।
अनन्तानां च मुक्तानां मुक्ताऽधिपाऽधिपोऽस्म्यहम् ॥ ६ ॥
असंख्यानां पार्षदानां पार्षदेशेश्वरोऽस्म्यहम् ।
असंख्यानां च शक्तीनां महाशक्तीश्वरोऽस्म्यहम् ॥ ७ ॥
दिव्यमुक्तानिकानां च महामुक्तानिकेश्वरः ।
समस्तसाधुसाध्वीनां श्रेष्ठसाधूत्तमोऽस्म्यहम् ॥ ८ ॥
असंख्यानां विभवानां महाविभूत्तमोऽस्म्यहम् ।
अनन्तांऽशांऽशरूपाणामंशी चास्मि परः पुमान् ॥ ९ ॥
अनन्ताऽऽवेशकर्ताऽहं महावेशेश्वरोऽस्म्यहम् ।
असंख्याधिकलानां च कलेश्वरोऽस्म्यहं प्रभुः ॥१०॥
विभूतीनामसंख्यानां महाविभूतिपोऽस्म्यहम् ।
माणिक्यालललिताराधारमादीनां परः पतिः ॥११॥
सतां पतिश्चाऽक्षरेशश्चाऽक्षरातीत आत्मपः ।
आत्मेशः सर्वसृष्टीनां पालकानां नियामकः ॥१२॥
सच्चिदानन्दरूपोऽस्मि सदा दिव्योऽतिसुन्दरः ।
दिव्यमूर्तिश्चैकतत्त्वात्मकोऽसंख्यसुखान्वितः ॥१३॥
मोदप्रमोदानन्दानामाश्रयोऽस्मि महानहम् ।
उत्सवानां समस्तानां प्रकाशकोऽस्मि पावनः ॥१४॥
समस्तानाममृतानां सागरोऽस्मि सुधाभृतः ।
मिष्टातिमिष्टमिष्टानां रसानामस्मि शेवधिः ॥१५॥
आकर्षणानां दिव्यानां महाकर्षणमूर्तिमान् ।
आनन्दमूर्छनानां च सदाऽस्म्यानन्दमूर्छनः ॥१६॥
सर्वदिव्यप्रसादानां प्रसन्नतादिवारिधिः ।
सर्वलावण्यसुखवान् सर्वमाधुर्यसंभृतः ॥१७॥
सर्वरम्यप्रसंगानां प्रसञ्जकोऽस्मि माधवः ।
यावन्मनोरथानां च पूरकोऽस्मि तृषाहरः ॥१८॥
सर्वासां चापि तृप्तीनां तृप्तिदाताऽस्मि तर्पणे ।
सन्तोषाणां समस्तानां तुष्टस्तोषप्रदोऽस्मि च ॥१९॥
प्रेम्णां च यावतां प्रेमप्रदोऽस्मि प्रेमभूः प्रभुः ।
स्नेहानां स्निग्धभावनां स्नेहपूर्णो भवाम्यहम् ॥२०॥
आसक्तीनां समस्तानामासक्तिपतिरस्म्यहम् ।
शर्कराणां च मिष्टानां पीयूषमधुदोऽस्म्यहम् ॥२१॥
शीतलानां सुखानां च विशेषः शीतसौख्यदः ।
उष्णानां च महानन्दप्रदानामुष्णसौख्यदः ॥२२॥
शृंगाराणामसंख्यानां शृंगाररसदोऽस्म्यहम् ।
स्वादानां च समस्तानां महास्वादभरोऽस्म्यहम् ॥२३॥
आश्लेषाणां महानन्दभरोऽस्म्यहं प्रमीलने ।
चूम्बनानां समस्तानां सकम्पानन्ददोऽस्म्यहम् ॥२४॥
स्नेहाश्रूणां वाहकोऽस्मि प्रेमरोमोद्गमोऽस्म्यहम् ।
पुलकानां विचित्राणां प्रपुलकोऽपि सर्वथा ॥२५॥
मोहानां च समस्तानां मुग्धतासंभृतोऽस्म्यपि ।
शयनानां सुषुप्तीनां विश्रान्तीनां ।विरामदः ॥२६॥
आरामाणां महारामो रामोऽस्मि रमतामहम् ।
रमणोऽस्मि सकामानां कामोऽस्मि कामिनामपि ॥२७॥

रतिश्चास्मि रतानां च शान्तिश्च सिद्धयोगिनाम् ।
पुष्टिश्चास्मि प्रपुष्टानां बलिनां बलमुत्तमम् ॥२८॥
आत्मबलं समस्तानामस्म्यहं निर्भयत्वदम् ।
सुरभिः सौरभाणां च पुष्पमस्मि च पुष्पिणाम् ॥२९॥
फलं चास्मि च फलिनां धातुर्धातुमतामहम् ।
सुवर्णश्चाऽस्मि वर्णानां रूपिणां रूपमस्म्यहम् ॥३०॥
सुकण्ठीनां मिष्टकण्ठः सुस्वराणां स्वरोऽस्म्यहम् ।
गीतीनां मधुरा गीतिर्नृत्यानां चैकतानता ॥३१॥

हावो भावस्तथा चेष्टा चिह्नं चास्मि समस्तगः ।
संयोगोऽस्मि धृतिश्चाऽस्मि वृषोऽस्मि सत्त्ववानपि ॥३२॥
आकांक्षाऽस्मि समस्तानां मर्यादाऽस्मि च देहिनाम् ।
आश्चर्याणां समग्राणामाश्चर्यमस्मि सर्वगम् ॥३३॥
कौतुकानां समस्तानामस्म्यहं कौतुकोत्तमः ।
निर्वृत्तीनां रमणीनां क्रियानिर्वृत्तिरस्म्यहम् ॥३४॥
सर्वविधानां केलीनां केलिचातुर्यवानहम् ।
योगानां च समस्तानां शाश्वतानन्दयोगदः ॥३५॥
रागाणां चापि सर्वेषां राग्यहं रञ्जनार्थकृत् ।
शोभानां यावतीनां च शोभनोऽहं सुभासुरः ॥३६॥
मदानां मादकश्चाऽहं भोग्यानां भोगवर्धनः ।
आभोगानां महाभोगस्वरूपोऽस्मि प्रभोगिषु ॥३७॥
द्रवाणां यावतां चास्मि स्नेहद्रवात्मकः प्रभुः ।
वात्सल्यानां वत्सलता नैसर्गिकी भवाम्यहम् ॥३८॥
चुम्बकानां समस्तानां पिण्डचुम्बकवानहम् ।
आन्तराणां प्रहर्षाणां महाप्रहर्षणोऽस्म्यहम् ॥३९॥

समस्तानां प्रहास्यानां मन्दहास्यं भवाम्यहम् ।
कटाक्षाणां चेङ्गितानां कटाक्षेङ्गितवानहम् ॥४०॥
हार्दानां चान्तराणां च महाहृदयवानहम् ।
प्रकर्षणानां सर्वेषां महाप्रकर्षणोऽस्म्यहम् ॥४१॥
श्रेष्ठानां च वरिष्ठानां श्रेष्ठवरेण्यधर्म्यहम् ।
प्रवराणां वराणां च प्रवरो वरदोऽस्म्यहम् ॥४२॥
व्यापकानामम्बराणां महाव्यापकताऽस्ति मे ।
कल्लोलानां च खेलानां प्रखेलकोऽस्मि तद्गतः ॥४३॥

उल्लासानां विलासानां समुल्लासो विलासकृत् ।
भावनानां च भावानां महाभावनयाऽन्वितः ॥४४॥
निवासानां च वासानां वासनानां वसानकः ।
प्रस्थानाभिमुखानां च प्रभवाम्यवसानकृत् ॥४५॥
पारितोषिकवर्याणामुपदानां च तोषणम् ।
स्वागतानां च मानानां मानदोऽस्मि पिता प्रभुः ॥४६॥

प्रपन्नानां चाश्रयदो महाधारोऽस्मि नाथवत् ।
अनाथानां सुनाथोऽस्मि धवोऽस्मि धविनीगणे ॥४७॥
सौभाग्यानां तु सर्वेषां महासौभाग्यचन्द्रवान् ।
सम्पदां च विपुलानां सम्पत्तिरस्मि शाश्वती ॥४८॥
ऋद्धीनां परमर्द्धिश्च लाभानां चात्मलाभदः ।
प्रसेवानां चांऽगसेवास्वरूपोऽस्मि समर्पणे ॥४९॥
शुश्रूषाणां चानुवृत्तिरस्म्यहं साधुवृत्तिता ।
साधुता च क्षमा दैन्यं त्यागिनामस्मि मत्तता ॥५०॥

शीलधर्मः समस्तेषु वीर्ये वीर्यवतामहम् ।
अस्मि रूपं च योषासु पुंसु श्मश्रुर्भवाम्यहम् ॥५१॥
वध्वा अलक्तकश्चाऽस्मि मन्थरा च पदोः गतिः ।
चाञ्चल्यं नवसंयोगाद् भवामि च निसर्गजम् ॥५२॥
आनुकूल्यं देहिनां चोपकारिणां भवाम्यहम् ।
अनुग्रहो दया कारुण्यं हितं चास्मि साधुषु ॥५३॥
जयो जयिनां मूर्धन्यो विद्या चात्मविदामहम् ।
तर्कः सर्वज्ञकल्पानां कवीनां काव्यमस्म्यहम् ॥५४॥
वल्लभता वल्लभानां कूजनं मन्त्रवेदिनाम् ।
स्तवनं स्तावकानां च भवामि मिषतां मिषः ॥५५॥
लग्नता लग्निनामस्मि ग्रन्थिश्च ग्रथ्नतामपि ।
निसर्गोऽस्मि निसर्गिस्थस्तानस्तानवतामहम् ॥५६॥
निकामदेव जानीहि चेतनानां तु चेतनः ।
अस्म्यहं सर्वसाक्षीति प्रवर्तको निवर्तकः ॥५७॥
सर्वकर्मफलदाता सूक्ष्मः सूक्ष्माऽसुजीविनाम् ।
स्थूलश्चास्मि च स्थूलानां दृश्योऽस्मि नेत्रिणां सदा ॥५८॥

अदृश्योऽस्मि दिव्यनेत्रविहीनानां तु देहिनाम् ।
गोचरोऽस्मि मदर्थानां दूरेऽस्मि द्वेषिणामपि ॥५९॥
जीवनं सर्वसत्त्वानां जडानामस्मि चास्तिता ।
योषितां नाभिपद्मेऽस्मि नराणामस्मि नृत्वके ॥६०॥
देवानां चाऽमृते ह्यस्मि पितॄणां पुण्यसञ्चये ।
ऋषीणां ब्रह्मभावेऽस्मि मानवानां नयेऽस्मि च ॥६१॥
शूराणां योधने चास्मि विदुषां बहुवेदने ।
सतीनां सत्यधर्मेऽस्मि वधूनां पतिदैवते ॥६२॥

पत्नीनां पातिव्रत्येऽस्मि पुत्राणां पितृसेवने ।
धनिनां दानभावेऽस्मि राज्ञां धिष्ण्ये वसाम्यहम् ॥६३॥
अप्सरसां चाननेऽस्मि गान्धर्वाणां तु गायने ।
नर्तकीनां नृत्यकार्ये सभायां च सभापतौ ॥६४॥
कथायां व्यासदेवेऽस्मि मखेऽनलेऽस्मि सर्वथा ।
युद्धे जये स्थितश्चास्मि नीतावस्मि समुद्यमे ॥६५॥

दुग्धे गवादिपशूनामस्मि गुन्द्रे तु शाखिनाम्।
संस्कारे द्विदलादीनामस्मि भिक्षुकभिक्षिते ॥६६॥
मन्दिराणां मध्यदेशे भवनानां तु गोपुरे।
ग्रामाणां चत्वरे चास्मि नगराणां नयालये ॥६७॥
अरण्येषु पिप्पलेऽस्मि देहल्यां तु गृहे गृहे।
तुलस्यां वैष्णवस्थल्यां वैष्णवेऽस्मि वनेऽपि च ॥६८॥
तीर्थेषु सत्सु वर्तेऽहं पृथ्व्यां भक्तालयेऽस्मि च।
कालेषु ब्राह्मकालेऽस्मि सायं चारात्रिकेऽस्मि च ॥६९॥
नक्षत्रेऽस्मि जयन्त्यादौ बिम्बेऽस्मि श्रेष्ठपूजने।
सर्वमित्रेऽस्मि मनुजे शास्त्रेऽस्मि मत्कथान्विते ॥७०॥
धर्मेऽस्मि ब्रह्मचर्येऽहं श्रद्धायामस्मि दातरि।
भाग्यवतां पुरश्चाऽस्मि दुर्भाग्यानां तु पृष्ठतः।
अधश्चास्मि तु पापानामूर्ध्वमस्मि दिवौकसाम् ॥७१॥
आत्मनिवेदिनामस्मि देहेन्द्रियान्तरात्मसु।
विप्राणां वचने चास्मि मायायां सात्त्विके गुणे ॥७२॥
अन्यायानां भयं चास्मि शिक्षाऽस्मि शास्यवर्गिणाम्।
वादानां निर्णयश्चास्मि फलव्याप्तोऽस्मि सर्वथा ॥७३॥
सजातीनां प्रवाहेऽस्मि चानुपूर्व्यां तु वाङ्मये।
विशिष्टं चाऽक्षरं ब्रह्म तत्राऽद्वैतो वसाम्यहम् ॥७४॥
अतो विशिष्टब्रह्माऽद्वैतात्मकोऽहं परेश्वरः।
निकामदेव मां यस्तु जानीयात् सुस्वरूपिणम् ॥७५॥
श्रीकृष्णं वल्लभं चार्यं स्वामिनं बालकृष्णकम्।
मुक्तिं गच्छेन्न सन्देहो मद्विशो न प्रणश्यति ॥७६॥

**श्रीनिकामदेव उवाच—**

कथं विशिष्टब्रह्माद्वैतात्मकस्त्वं विबुध्यसे।
संक्षेपान्मे कथयस्व सर्वस्वामिन्नारायण ॥७७॥

**श्रीकृष्णनारायण उवाच—**

विशेषणं स्थूलमाया सर्वकार्यात्मिका तु या।
विशेषणं सूक्ष्ममाया साम्यावस्था गुणत्रयम् ॥७८॥
ताभ्यामचेतनाभ्यां तु विशिष्टं ब्रह्म चाक्षरम्।
अन्तःस्थं व्यापकं चास्ति विशिष्टे ते शुभेऽक्षरे ॥७९॥
विशेषणं स्थूलात्मानः सर्वकर्मफलाशनाः।
विशेषणं सूक्ष्मात्मानः कर्मफलादिवर्जिताः ॥८०॥
ताभ्यां वै चेतनाभ्यां तु विशिष्टं ब्रह्म चाऽक्षरम्।
अन्तःस्थं व्यापकं चास्ति विशिष्टे ते शुभेऽक्षरे।
अक्षरं त्वेकमेवाऽस्ति द्वितीयेन विवर्जितम् ॥८१॥

ब्रह्माभिधं धाम दिव्यं परब्रह्मपरात्मनः।
प्रकाशाख्यं सच्चिदानन्दात्मतेजोमयं सदा ॥८२॥
तदेकं तु चतुर्धाऽत्र विशेषणैर्विशेषितम्।
विशिष्टयोर्विशिष्टयोरद्वैतं ब्रह्मधाम तत् ॥८३॥
विशिष्टाद्वैतमुक्तं मे धामाऽक्षराभिधं द्विज।
जडेषु चेतनेष्वेव सर्वावस्थासु सर्वथा ॥८४॥
राजते चाऽक्षरं ब्रह्म सर्वाश्चर्यसमन्वितम्।
तत्र विशिष्टाद्वैते वै धाम्न्यक्षरे विराजते ॥८५॥

अनादिश्रीकृष्णनारायणः श्रीपुरुषोत्तमः।
यः सोऽहं त्वेक एवाऽस्मि तुल्याधिकविवर्जितः ॥८६॥
अद्वैतोऽस्मि न स्वो द्वौ वै परमेशौ कदाचन।
अतो विशिष्टाऽद्वैताऽद्वैतोऽहं श्रीपरमेश्वरः ॥८७॥
परब्रह्माऽक्षरातीतः सर्वात्माऽक्षरब्रह्मगः।
विशिष्टं चाऽक्षरं ब्रह्माऽद्वैतं तत्राऽस्मि चैकलः ॥८८॥
मद्विशिष्टं ब्रह्म सर्वजडचेतनगं मतम्।
एवं चाऽस्मि सदा विप्र व्यापिनो व्यापकोऽप्यहम् ॥८९॥
एतत्ते कथितं तत्त्वं मम स्वरूपवेदने।
सोऽहं मूर्तोऽस्मि सर्वत्राऽक्षरे मूर्तेऽपि तेजसि ॥९०॥
अक्षरं ब्रह्म मद्व्यक्तं सर्वत्राऽस्ति द्विजोत्तम।
सृष्टित्रयं चाऽक्षरेऽस्ति विशेषणतयाऽन्वितम् ॥९१॥
अक्षरे सन्ति मुक्ताश्च धामान्यन्यानि सन्त्यपि।
तद्धाम च समर्थं मद्योगेन मूर्तिमत् तथा ॥९२॥
सेवायां वर्तते चापि मुक्तेश्वरं हि मन्निभम्।
मत्सारूप्यं भजमानं सर्वाधारमपि ध्रुवम् ॥९३॥
पुमानक्षरपुरुषः सोऽयं ब्रह्मपुमान् स्वयम्।
तदेव व्यापकं दिव्यं भूमिका तैजसी सदा ॥९४॥
तत्प्राविर्भूतभोग्यादि भोगोपकरणान्यपि।
भोगाश्च सम्पदः सर्वा विद्यन्ते तत्र सर्वशः ॥९५॥
यदाधारा यत्प्रपोषा यद्व्द्विमन्त इत्यपि।
मुक्ताः सर्वे वसन्त्येव मुक्तानिकाश्च धामनि ॥९६॥
मम मूर्तेः सुयोगेन पूर्णं चाऽखण्डमक्षरम्।
अव्ययं शाश्वतं धाम तत्र वासो हि मोक्षणम् ॥९७॥
निकामदेव मे योगात् त्वं गतोऽसि तदक्षरम्।
यत्राऽहं तत्र वै धामाऽक्षरं नित्यं हि विद्यते ॥९८॥
सा भूश्च सम्पदः सर्वा भवन्त्यत्र मयि प्रभौ।
कुंकुमवापिकाक्षेत्रं धामाऽक्षरं त्विहास्ति वै ॥९९॥
अनादिश्रीकृष्णनारायणःश्रीवल्लभः प्रभुः।
अक्षरस्थो विराजेऽत्र सर्वेशस्ते सुतापतिः ॥१००॥

मम योगेन मोक्षेऽसि गन्तव्यं ते न विद्यते।
मम साक्षात्प्रसंगोऽत्राऽक्षरे मोक्षप्रदस्तव ॥१०१॥
सदा त्वं मम मुक्तोऽसि पश्य दिव्यं निजं गृहम्।
इत्युक्त्वा श्रीकृष्णनारायणस्तं चाऽक्षरं पदम् ॥१०२॥
दर्शयामास सहसा मुक्तं निकामदेवकम्।
मुक्तानिकां तथा सुरेश्वरीं दिव्यां तु शाश्वतीम् ॥१०३॥
बद्रीप्रियां बाल्ययोगिनीं च पद्मावतीसतीम्।
माणिकीं हरिपत्नीं स प्रदर्श्याऽभावयत्तिरः ॥१०४॥
बद्रिके त्वं सैव चास्से या तत्र बाल्ययोगिनी।
माणिक्यवर्णा श्रीकृष्णनारायणस्य वाहिनी ॥१०५॥
पृथ्व्यां सा माणिकी वाहा वडवाऽभवदच्युता।
ब्रह्मप्रभावती युक्ता या जयाललितात्मिका ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने परब्रह्मस्वरूपयोगनिरूपणं विशिष्टब्रह्माऽद्वैतात्मकपरब्रह्मविवेचनं चेत्यादिनिरूपणनामा पञ्चविंशोऽध्यायः ॥ २५ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि ततोऽनादिनरायणः।
भक्तं निकामदेवं तं प्राह योगं तु निर्भयम् ॥ १ ॥

**श्रीकृष्णनारायण उवाच—**

शृणु निकामदेव त्वं निर्भीकयोगमुत्तमम्।
यज्ज्ञात्वा न भयं तस्य मायाकालाद्यकर्मणाम् ॥ २ ॥
अनादिश्रीकृष्णनारायणस्य ध्यातुरन्वहम्।
नदानतीर्थतपसां पुण्यभोगभयं भवेत् ॥ ३ ॥
सर्वपुण्यानि वै कृष्णे मयि न्यस्तानि येन तु।
तस्याऽक्षरं परंधाम निर्भयं प्राप्यमेव हि ॥ ४ ॥
सर्वकर्माधिकं कर्मोपासनं मम सर्वदा।
स्मरणं चानुमननं सर्वथा भयनाशनम् ॥ ५ ॥
मायालेशानुसक्तिस्तु पापं चात्र महात्मनाम्।
हरेः स्मरणरूपं तत्प्रायश्चित्तं महात्मनाम् ॥ ६ ॥
मुहूर्तस्मृतिमात्रेण मम धामाऽभिगो भवेत्।
किं पुनः सततं भक्तो निर्भीकोऽन्यसमागमात् ॥ ७ ॥
जाग्रत्स्वप्नसुषुप्तीनां पारे तिष्ठति योगवित्।
योगः स एव मनसो वृत्तिर्मय्येव सर्वदा ॥ ८ ॥
गच्छंस्तिष्ठन् श्वसन् कृष्णं नारायणं तु मां स्मरेत्।
प्रलपन् विविशन् भुंजन् रमन् मां सर्वथा स्मरेत् ॥ ९ ॥
सर्वकर्मसु रक्तोऽपि चित्तं कुर्यात्तु यो मयि।
तस्य लेपो न भोगानां भोगमध्याऽधिवासिनः ॥१०॥
स्मृतिर्मे परमो धर्मो ध्यानं तपश्च वै मखः।
शुद्धिः सर्वा परा शान्तिः सर्वं मे स्मरणे स्थितम् ॥११॥
दुर्लभं यत्परं दूरमगोचरं यदक्षरम्।
तथापि प्राप्यमेवाऽस्य स्मर्तुर्मे कृपया मम ॥१२॥
अप्यध्वरशतानां यद् वैगुण्यं विक्रमादिकम्।
निर्दोषं प्रत्युत पूर्णं श्रीकृष्णस्य स्मृतेर्मम ॥१३॥
न स्मृत्या सदृशं मेऽत्र शोधनं चाऽघकारिणाम्।
भवानां दाहिका चापि मोक्षदा सा मम स्मृतिः ॥१४॥
निष्पन्नध्यानवृत्तेस्तु मुक्तिरत्रैव जन्मनि।
स्मर्तुर्मेऽनलवत् कक्षं स्मृतिर्दहति वासनाम् ॥१५॥
हरौ चात्मस्थिते चित्तस्थिते तु सर्वकिल्बिषम्।
स्वयं लीनं भवत्येव ततो भयं न विद्यते ॥१६॥
कलहो दूषणं दोषो राग उद्वेजनं क्षयम्।
न क्रामेन्मानसं स्मर्तुर्यतस्तच्चित्तगोऽस्म्यहम् ॥१७॥
तिथिर्मासः क्षणं योगश्चन्द्रो लग्नं शुभं दिनम्।
तदेव यत्र गोविन्दः स्मर्यते सर्वथा शुभः ॥१८॥
सा क्षतिः सा परा हानिर्व्यसनं तत्परं तथा।
यत्र क्षणेऽनादिकृष्णनारायणो न चिन्त्यते ॥१९॥
कलौ कृतयुगस्तस्य यस्य चित्ते जनार्दनः।
कृते कलियुगस्तस्य यच्चित्ते न जनार्दनः ॥२०॥
अग्रे पृष्ठे पुर ऊर्ध्वेऽधोऽभितो मध्यवर्तुले।
हृदये यस्य गोविन्दः कृतकृत्यो हि सोऽस्ति हि ॥२१॥
शुभेऽशुभे मनो यस्याऽनादिकृष्णनरायणे।
तस्य फलं महत् स्वर्गं दुःखदोषादिवर्जितम् ॥२२॥
असन्त्यज्याऽपि गार्हस्थ्यं स्मरते मां तु यः सदा।
छिनत्ति पौरुषीं मायां मय्यर्पितक्रियो हि सः ॥२३॥
यस्य चित्ते हरिश्चास्ते क्षमावान् सोऽपराधिषु।
अशेषु दयया युक्तो मोदवान् धार्मिकेषु सः ॥२४॥
स्मरेन्नारायणं मां तु त्यागभोगादिकर्मसु।
जाग्रत्स्वप्नसुषुप्त्यादौ दुष्कर्मस्वपि चाधिकम् ॥२५॥
हृदयस्थोऽहमेतस्य लाभं जयं यशो धनम्।
सम्पादयामि सततं शान्तिमानन्दमुत्तमम् ॥२६॥
असंख्यपक्षिपादपपशूनां मोक्षदोऽस्म्यहम्।
स्मरतां मम चैश्वर्यं किं प्रपन्ननृणां तदा ॥२७॥
श्रीकृष्णपादपच्छाया शीतातपविवर्जिता।
अमृतपददा मायाभीहन्त्री किं न सेव्यते ॥२८॥

न शापस्य भयं तस्य न च राज्ञो भयं तथा ।
न तु याम्यभयं तस्य यस्य चित्तं मयि प्रभौ ॥२९॥
ध्यानं स्मरणसंजुष्टं पवित्रमुत्तमं सदा ।
येन पापाशनोऽप्यत्र लिप्यते न कदाचन ॥३०॥
यथा तु विषये चित्तं तथा यस्य हरौ मयि ।
तथा मे खलु सत्सङ्गे स मुक्तोऽत्र प्रमुक्तिदः ॥३१॥
कृष्णनारायणभक्तिर्हृदये वासकारिणी ।
तत्सङ्गसङ्गिसङ्गाख्यान् तारयत्यघसागरात् ॥३२॥
तज्ज्ञानं श्रीहरिर्यत्र सा कथा यत्र माधवः ।
सत्कर्म तद् यत्र चाहं तच्चित्तं यन्मदर्पितम् ॥३३॥
जिह्वा सा या हरिं स्तौति सा त्वग् या स्पृशति प्रभुम् ।
तौ हस्तौ चाश्लेषितौ मां तद्धर्म्मं यन्मदर्थकम् ॥३४॥
शिरःफलं नमो मेऽत्र पाणिफलं मदर्चनम् ।
मनःफलं मननं मे वचःफलं गुणस्तवः ॥३५॥
मेरुतुल्यः पापराशिर्मत्स्मृतेर्द्राग्विनश्यति ।
साध्वसाधु चरितं चार्पितं मयि न लेपकृत् ॥३६॥
अनाथानां हरिर्नाथोऽबलानां तु बलं हरिः ।
सकामानां हरिर्दाता सर्वेषां शरणं हरिः ॥३७॥
अनादिश्रीकृष्णनारायणाऽऽश्रयोऽत्र भूसुर ।
तीर्थं तत्परमं मायाकालकर्मादिनाशकम् ॥३८॥
शूद्रं चर्मकरं चाण्डालं वा भक्तियुतं मम ।
विप्रवत् पावनं मन्ये मम योगं गतो हि सः ॥३९॥
धनिनां स्तावकाः प्रायो यदि स्तुवन्ति मां तथा ।
धनेश्वरानिह कृत्वा मोचयामि च बन्धनात् ॥४०॥
वह्निर्वनेऽभिसंव्याप्तः शुष्काऽऽर्द्रदाहको यथा ।
तथाऽहं हृदये न्यस्तो दहामि वासनादिकम् ॥४१॥
प्रज्वलन्तं महारण्यं नाश्रयन्ति मृगेश्वराः ।
तथा मया प्रकाशन्तं नाश्रयन्ति मदादयः ॥४२॥
यावद्वेगेन भक्तिर्मे विश्वासोऽपि यथा मम ।
तथाऽत्र फलमाप्नोति कृपाऽत्र मे विशिष्यते ॥४३॥
पुत्रदारकुटुम्बादौ मग्ना सीदन्ति देहिनः ।
सीदन्ति मयि ते चेद्वै द्रागुत्तरन्ति मद्बलात् ॥४४॥
मुक्तिसुखं तु पिहितं येन साधुनिषेवणम् ।
तस्य मुक्तिं न पश्यामि कदापि भावसर्जने ॥४५॥
पूजयेत् परमात्मानं मां सदा हृदये बहिः ।
ध्यायेन्मां सर्वगं मूर्तं कान्तं श्रीवल्लभम् प्रभुम् ॥४६॥
गुरुं पतिं स्वामिनं मां जुष्टं साक्षिणमच्युतम् ।
परब्रह्माऽनादि कृष्णं नारायणं परेश्वरम् ॥४७॥
एवंविधं तु मां ध्यायन् पूज्य सन्मान्य मानद ।
अवाप्स्यसि ध्रुवं तात शाश्वतं मेऽक्षरं पदम् ॥४८॥
इत्येवं बोधितो विप्रो निकामदेव आहतः ।
महाहर्षं समापन्नः सामोवाच तु निर्भयम् ॥४९॥
नृत्यन् गायन् हसन् देहं कूर्दयन् चेष्टयन् मुहुः ।
उवाचाऽऽवेशयोगेन निर्भयं साम गायनम् ॥५०॥
'बालकृष्णं प्रपन्नोऽस्मि किं मे कालः करिष्यति ।
अक्षरेशं परमेशं ब्रह्मेशं पुरुषोत्तमम् ॥५१॥
शंखचक्रगदापद्मधारिणं परमेश्वरम् ।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥५२॥
अनादिश्रीकृष्णनारायणं श्रीपतिमच्युतम् ।
गोपालजं प्रपन्नोऽस्मि किं मे माया करिष्यति ॥५३॥
सर्वावतारिणं सर्वशक्तिसेवितमाधवम् ।
कांभरेयं प्रपन्नोऽस्मि किं मे पापं करिष्यति ॥५४॥
कुंकुमवापिकातीर्थे लोमशस्य शुभाश्रमम् ।
अश्वसरः प्रपन्नोऽस्मि किं मे कर्म करिष्यति ॥५५॥
भगवन्तं सर्वधाम्नां नारायणनरायणम् ।
राधाकान्तं प्रपन्नोऽस्मि किं मे तृष्णा करिष्यति ॥५६॥
मायातारं कृष्णनारायणं श्रीमाधवीपतिम् ।
माणिकीशं प्रपन्नोऽस्मि किं मे कामः करिष्यति ॥५७॥
सर्वान्तर्यामिणं साक्षाद् बालयोगिनीस्वामिनम् ।
परमेशं प्रपन्नोऽस्मि किं मे भ्रान्तिः करिष्यति ॥५८॥
अक्षरेशं च मुक्तेशं मुक्तानिकापतिं हरिम् ।
ब्रह्मप्रियेशं प्राप्तोऽस्मि किं मे सम्पत् करिष्यति ॥५९॥
ईश्वरेशं चेश्वराणीपतिं हरिप्रियापतिम् ।
प्रभुम्पतिं प्रपन्नोऽस्मि किं मे तमः करिष्यति ॥६०॥
पद्मावतीस्वामिनं च जडचेतनवर्तिनम् ।
लक्ष्मीनाथं प्रपन्नोऽस्मि किं वासना करिष्यति ॥६१॥
एकरूपं बहुरूपं विश्वरूपं तु बालकम् ।
सतां पतिं प्रपन्नोऽस्मि किं मे बन्धः करिष्यति' ॥६२॥
'ओंनमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
नमोऽक्षरनिवासाय नमो गोलोकवासिने ॥६३॥
नमो वैकुण्ठनाथाय नमः श्रीपुरवासिने ।
नमो ललिताकान्ताय सर्वकान्ताय ते नमः ॥६४॥
बालयोगिनीकान्ताय बद्रीकान्ताय ते नमः ।
निकामदेवनाथाय वासुदेवाय ते नमः ॥६५॥
नमोऽमृतनिवासाय नमोऽव्याकृतवासिने ।
नमः कैलासवासाय हिरण्यगर्भवासिने ॥६६॥

नमः सिद्धाधिवासाय नमः सुरादिवासिने ।
नमः पितृनिवासाय नमो मानवरूपिणे ॥६७॥
नमः सर्वनिवासाय नमो मदात्मवासिने ।
सुरेश्वरीहृदिस्थाय नमोऽनन्तस्वरूपिणे ॥६८॥
नमो देहेन्द्रियप्राणान्तरात्मवासिने सदा ।
नमस्ते परमानन्द नमस्ते ज्ञानसंभृत ॥६९॥
नमस्ते ज्ञानविज्ञानप्रद श्रीपुरुषोत्तम ।
नमस्ते विश्वकृद्विष्णो नमस्ते सर्वकारण ॥७०॥
नमस्ते गोपगोपीश नमः सर्वार्थसाधक ।
नमस्तेऽनुग्रहदातर्नमस्ते मोक्षद प्रभो ॥७१॥
जय कृष्ण जय विष्णो ममाऽभयद माधव ।
जय शान्त चिदानन्द सच्चिदानन्द केशव ॥७२॥
जय जीव जयद त्वं जय साक्षाज्जनार्दन ।
जय शास्त्रादिसन्न्यस्तबीजगर्भाग्र्युपासन ॥७३॥
त्वं गुरुस्त्वं पिता भ्राता सुहृद् बन्धुः प्रसूर्मम ।
त्वं मोक्षस्त्वं परानन्दस्त्वं मे सर्वस्वमच्युत ॥७४॥
त्वमुद्धर्ता च पाता च नेता त्वं विरतिर्भवान् ।
जगत् सर्वं तव रूपरूपितं संप्रकाशते ॥७५॥
त्वं परब्रह्म भगवन् देवाद्यैस्तु दुरासदः ।
मया त्वासादितश्चाऽत्र बालयोगिनीवैभवात् ॥७६॥
कस्त्वां जानाति चात्मेशं मुक्तगम्यं परात्परम् ।
सनातनपुमांसं तं पुराणपुरुषोत्तमम् ॥७७॥
परं रूपमजान्तो दिवौकसो महर्षयः ।
अवतारमयीमूर्तीस्ते भजन्ति सुगोचराः ॥७८॥
अवतारा भजन्ते त्वां पुमांसमवतारिणम् ।
नारायणा असंख्यास्त्वां भजन्ते परमायणम् ॥७९॥
नारायण्यश्च मुक्तान्यस्त्वां भजन्ते परं पतिम् ।
सन्तो मुक्तास्त्वां भजन्ते सर्वावस्थासु सत्पतिम् ॥८०॥
तवाऽज्ञानेन भगवन् मानुषादिनिसर्गतः ।
क्षन्तुमर्हसि सर्वं मे यत् कृतं न कृतं तव ॥८१॥
सर्वावस्थासु सर्वत्र सर्वकालेषु सर्वथा ।
अचला तु हरे भक्तिस्तेऽङ्घ्रियुगेऽस्तु मे प्रभो ॥८२॥
प्रीतिस्त्वय्येव सततं भवत्वात्यन्तिकी मम ।
सर्वकामफलदातस्त्वयि भक्तिर्दृढास्तु मे ॥८३॥
स्तोत्रं कर्तुमनन्तस्य कः शक्नोति तु मानवः ।
तथापि व्यापृतं वाक्यं क्षमस्व नाथ ते नमः ॥८४॥
पुरुषोत्तमयोगेन निर्भयत्वं प्रजायते ।
तव योगेन पुरुषः पुरुषोत्तमतां व्रजेत् ॥८५॥
अधन्यो जायते धन्यस्त्वसाधुः साधुतां व्रजेत् ।
अभाग्यो भाग्यवान् स्याच्च ते स्तवात् पुरुषोत्तम ॥८६॥
अपि लोकबहिष्कार्या यदि ते शरणं गताः ।
साधुशीला हि ते सर्वे जायन्ते पंक्तिपावनाः ॥८७॥
येषां सर्वाधिपे कृष्णे भक्तिरव्यभिचारिणी ।
अपि चाण्डालकर्माणस्तेऽपि विप्रोत्तमोत्तमाः ॥८८॥
अपि शौचसमाचाराः कृष्णे ते संगवर्जिताः ।
श्मशानवासास्ते सर्वे सर्वकिल्बिषसंभृताः ॥८९॥
तव ध्यानपरा ये च तव पूजापरायणाः ।
तव प्रसादभोक्तारस्ते सदा विघसाशिनः ॥९०॥
आराध्य सततं त्वां श्रीहरिं सर्वसुखप्रदम् ।
प्राप्य त्वां परमात्मानमेष्टव्यं नावशिष्यते ॥९१॥
साधुभिश्चिन्त्यते यश्च साध्वीभिः काम्यते तु यः ।
पीयते योगमापन्नैर्यः स कृष्णोऽस्तु मे हृदि ॥९२॥
भावपुष्पैः पूजयामि श्रद्धाञ्जलिप्रदोऽस्मि च ।
आत्मानं दक्षिणां कृत्वाऽर्पयामि ते परेश्वर ॥९३॥
यथा सर्पिः शरीरस्थं गवां न कुरुते बलम् ।
निर्गतं कर्मसंयुक्तं दत्तं तासां बलप्रदम् ॥९४॥
तथा त्वं हृदयस्थोऽपि मानवानां बलाय न ।
त्वमेव निर्गतः साक्षाद् भूतो बलाय विद्यसे ॥९५॥
विनाऽऽराधनया कृष्ण त्वं कृपावशगो मम ।
प्रत्यक्षं मानवं रूपं दृष्टं नारायणाच्युत ॥९६॥
सदैव सेवितं चापि दिव्यं रूपं प्रदर्शय ।
यद्यहं पात्रमस्म्यत्र कृपापात्रं भवामि चेत् ॥९७॥
विप्रत्वं मे गतं चापि त्वय्येव तत्समर्पितम् ।
मुक्तत्वं वर्तते मे चेत् सर्वेशे तव भक्तिमान् ॥९८॥
एवं श्रीबदरीदेवि प्रार्थितः परमेश्वरः ।
कृपयैव भूसुराय दिव्यं रूपमदर्शयत् ॥९९॥
अक्षरस्थं चाऽवतारैरसंख्यैराप्रपूरितम् ।
मुक्तैर्मुक्तानिकाभिश्च सेवितं कमलादिभिः ॥१००॥
तथा श्रीबालयोगिन्या बदर्या जुष्टमुत्सुकम् ।
कृपयाऽदर्शयत् कृष्णनारायणो निकामिने ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीकृष्णनारायणकृतनिर्भययोगोपदेशोत्तरं निकामदेवस्य दिव्यज्ञानासिलाभोत्तरं स्तुतिरित्यादिनिरूपणनामा षड्विंशोऽध्यायः ॥ २६ ॥

**श्रीनरनारायण उवाच—**

श्रूयतां बदरीदेवि त्वया निकामयोगिनः ।
पत्न्याः कथा परा दिव्या मोक्षदाऽपि ततोऽभवत् ॥ १ ॥

यावत् पश्यति दिव्यं श्रीकृष्णनारायणं प्रभुम् ।
निकामदेवः सहसा दिव्यस्तब्धाकृतिं गतः ॥ २ ॥
तावत् तत्र समायाता सुरेश्वरी सती द्रुतम् ।
पूजार्थं श्रीकृष्णनारायणस्य कमलैः शुभैः ॥ ३ ॥
सहस्रकमलैश्चाऽश्वपट्टसरोभवैः सती ।
चन्दनैश्चाक्षतैः पुष्पैः कृष्णपूजार्थमागता ॥ ४ ॥
व्यपश्यत् स्वपतिं स्तब्धं दिव्यसमाधिसंस्थितम् ।
अनुक्त्वा सा द्रुतं कृष्णनारायणाय चक्रिणे ॥ ५ ॥
कमलानि समर्प्यैव चन्दनं चाक्षतान्यपि ।
समस्तानि सुपुष्पाणि समर्प्य परमात्मने ॥ ६ ॥
पादसंवाहनार्थं सा यावत् पुरो निषीदति ।
तावच्छ्रीकृष्णकान्तस्य पादयोर्निर्गता प्रभा ॥ ७ ॥
अव्याप्नोद् बद्रिके सौधे ततश्चत्वरमण्डले ।
निबिडा च घनीभूताऽव्याप्नोदम्बरमण्डले ॥ ८ ॥
चन्द्रनिभाऽभवत् सा तु माधुर्यशीतमिष्टदा ।
अथ विद्युन्निभा जाता स्वर्गानलसमा ततः ॥ ९ ॥
महाभूतमयी जाता तैजसी सा ततोऽम्बरे ।
अथेश्वराणां योग्या च गम्या स्वर्गनिवासिनाम् ॥१०॥
ब्रह्मादीनां ततो गम्या ततश्चेश्वरपुंगवैः ।
निभाल्या श्रीपुरे धाम्नि यथा वै तैजसी प्रभा ॥११॥
वासुदेवप्रभा पश्चात् कृष्णप्रभाऽक्षरप्रभा ।
अक्षरं धाम सर्वं साऽभवत् ताभ्यां निभालितम् ॥१२॥
मुक्ता मुक्तानिकाश्चापि ब्रह्मप्रिया हरिप्रियाः ।
समस्ता श्रीर्माणिकी च ललिता च जया रमा ॥१३॥
राधापद्मावतीशक्तयश्च ताभ्यां विलोकिताः ।
धाम्नि चारामसौधानि मन्दिराणि शुभानि च ॥१४॥
भवनानि विचित्राणि मुक्तानामालयाः शुभाः ।
अनादिश्रीकृष्णनारायणस्य मुख्यमन्दिरम् ॥१५॥
सहस्रैककलशाढ्यबहुमन्दिरमध्यगम् ।
निभालितास्तथा सख्यः सखायः परमात्मनः ॥१६॥
उद्यानानि विहाराश्च दिव्यभोगा विलोकिताः ।
दिव्याऽतिदिव्यसौन्दर्यमाधुर्यौज्ज्वल्यसंभृताः ॥१७॥
पार्षदाः पार्षदान्यश्च ताभ्यां तत्र विलोकिताः ।
कल्पद्रुमा ब्रह्मद्रुमा ब्रह्मवल्ल्यो विलोकिताः ॥१८॥
फलपुष्पर्द्धयस्तेषु मिष्टरसा विभाविताः ।
अनन्तभोगसामग्र्योऽसंख्यसाधनसंभृताः ॥१९॥
अनन्तदासदास्यश्चाऽनन्तैश्वर्यविभूतयः ।
अनन्तसिद्धदेहाश्च मुक्तात्मानो विलोकिताः ॥२०॥

मुक्तैर्मुक्तानिकाभिश्च सेवितः परमेश्वरः ।
कुंकुमवापिकाक्षेत्रस्थितो धाम्नि विलोकितः ॥२१॥
दिव्याक्षरे परे धाम्नि सौराष्ट्रोऽपि विलोकितः ।
अश्वपट्टसरो दिव्यं रम्यः श्रीलोमशाश्रमः ॥२२॥
महर्षीणां चाऽवसथान्यपि दिव्यानि तत्र च ।
आलोकितानि दिव्यानि कोट्यर्बुदाब्जशक्तयः ॥२३॥
अनादिश्रीकृष्णनारायणकान्ता विलोकिता ।
तत्र त्वं बदरी चास्से माणिक्या भगवत्प्रिया ॥२४॥
दिव्यगजासनं कृष्णमन्दिरे सर्वशोभने ।
सर्वर्द्धिसंभृतं चापि ताभ्यां विलोकितं तदा ॥२५॥
अथ तत्राऽनादिकृष्णनारायणः पुमुत्तमः ।
पुराणपुरुषो बद्रि दिव्ययुवा सुसुन्दरः ॥२६॥
स्वर्णकेशः स्वर्णश्मश्रुः स्वर्णाम्बरः सुतैजसः ।
सर्वलावण्यमूर्तिश्च मन्दहास्यान्वितः प्रभुः ॥२७॥
अनन्तचन्द्रशीताढ्यनेत्रद्वयविराजितः ।
सर्वानन्दप्रदप्रेमरसाढ्यनेत्रपद्मजः ॥२८॥
मन्दहास्यसुगन्धाढ्यमुखमण्डलराजितः ।
रक्तौष्ठस्थसुमाधुर्यप्रियताबोधबोधकः ॥२९॥
श्वेतकान्तिप्रसरत्सद्रत्नबीजाभदन्तकः ।
श्रीरूपाऽव्यक्तभावाढ्यमाणिक्यजिह्विकान्तरः ॥३०॥
पुष्टस्कन्धद्वयाऽऽलम्बिमन्दारादिस्रगन्वितः ।
भुजबन्धभुजाशोभच्छल्लाढ्यप्रकोष्ठकः ॥३१॥
दक्षकरतलस्थानमीनशूलधनुर्ध्वजः ।
नखचन्द्रावलिद्योतत्समग्राभिपुरःस्थलः ॥३२॥
रत्नभूषावलिव्याप्तकौस्तुभरेखिकौरसः ।
स्वर्णाम्बरादिशोभाढ्यो रशनाकटिशोभितः ॥३३॥
क्वणत्किंकिणिकाकूजत्पादभूषाविराजितः ।
स्वर्णचित्रमृदुस्वस्तिपादुकाचरणान्वितः ॥३४॥
अलक्ताभचरणोभतलादिसर्वचिह्नवान् ।
पारमेशं परं छत्रं मस्तकोर्ध्वे विराजते ॥३५॥
चामरे चाऽल्पमानेऽपि श्रीलक्ष्मीभ्यां धृते शुभे ।
व्यजनेन सती बालयोगिनी यत्र तिष्ठति ॥३६॥
सुरेश्वरी ताम्बूलकं यस्मै कृष्णाय यच्छति ।
निकामदेवः श्रीकृष्णवेषधरोऽत्र राजते ॥३७॥
एवं दिव्यस्वरूपः श्रीकृष्णस्ताभ्यां प्रवीक्षितः ।
अथाऽस्य कृपया कृष्णोद्यानानि भवनानि च ॥३८॥
अन्तः प्रविश्य सर्वाणि ताभ्यां विलोकितानि वै ।
अनन्तानन्दमोदाश्च ताभ्यां तत्र समर्पिताः ॥३९॥

प्रसादाश्चार्जिता दिव्यश्रीकृष्णेन समर्पिताः ।
तृप्ताः शाश्वतभावाश्च मुक्ताश्चापि विलोकिताः ॥४०॥
श्रीमद्गोपालकृष्णश्च धर्ममूर्तिर्विलोकितः ।
तथा श्रीकंभरालक्ष्मीर्भक्तिरूपाऽवलोकिता ॥४१॥
सन्तुष्टा च सती बाला कृष्णशक्तिर्विलोकिता ।
एवं दृष्ट्वा प्रसादं च लब्ध्वा भुक्त्वा च तौ तदा ॥४२॥
तृप्तौ नारायणदृष्ट्या गोलोकं समुपागतौ ।
अक्षरं धाम सहसा समस्तं विलयं गतम् ॥४३॥
गोलोके श्रीकृष्णरूपस्ताभ्यां स एव माधवः ।
अनादिश्रीकृष्णनारायणः कृष्णो विलोकितः ॥४४॥
वंशीधरो गोपिकानां मण्डलेषु सराधिकः ।
रासं रामयन् रमयन् गोपवृन्देषु वीक्षितः ॥४५॥
गवां सुसेवने सक्तो दुग्धदध्यादिभोजनः ।
अनादिश्रीकृष्णनारायणः कृष्णो विलोकितः ॥४६॥
अथ ताभ्यां स गोलोकस्तिरोभूतो विलोकितः ।
वैकुण्ठस्तावदेवैव सञ्जात इति वीक्षितः ॥४७॥
तत्र नारायणो लक्ष्मीपतिः प्रभुर्विलोकितः ।
असंख्यपार्षदैः सेव्योऽनन्तरमादिरामणः ॥४८॥
अव्याकृतं महद्धाम ततस्ताभ्यां विलोकितम् ।
वासुदेवस्तत्र धाम्नि वासुदेव्यादिसेवितः ॥४९॥
प्रद्युम्नादिभ्रातृभिश्च सर्वसामर्थ्यशोभितः ।
आलोकितो हि भगवान् ततः श्रीपुरधामनि ॥५०॥
ललिताश्रीमहादेव्या सेवितोऽनन्तशक्तिभिः ।
अमृताख्ये ततो धाम्नि कृष्णनारायणः स च ॥५१॥
भूमा हि भगवान् सोऽपि वीक्षितः कमलापतिः ।
ततः कैलासरूपे च सदाशिवो विलोकितः ॥५२॥
स एव भगवाँस्ताभ्यां हिरण्यगर्भधामनि ।
हिरण्मयः स्वर्णमूर्तिर्महाविष्णुर्विलोकितः ॥५३॥
वैकुण्ठे चाऽपरे तत्र स वै विष्णुस्वरूपधृक् ।
पद्माश्रीसहितः कृष्णनारायणो विलोकितः ॥५४॥
अथ सूर्ये स एवाऽपि नारायणो हिरण्मयः ।
विलोकितो हि भगवान् वह्नौ वह्निस्वरूपधृक् ॥५५॥
स एव भगवान् बद्रिकाश्रमे च नराग्रजः ।
तापसो लोकितस्ताभ्यां श्वेतद्वीपेऽथ शेषगः ॥५६॥
स एव भगवान् क्षीरे लक्ष्मीकान्तो विलोकितः ।
कुंकुमवापिकाक्षेत्रे सर्वावताररूपधृक् ॥५७॥
कोट्यवतारसहितः कोटिकृष्णसमन्वितः ।
विलोकितस्ततस्ताभ्यामनादिपुरुषोत्तमः ॥५८॥
अथाऽन्तर्यामिरूपः स प्रत्यात्माऽपि निभालितः ।
सुरेश्वर्या हृदयेऽपि निकामदेवमानसे ॥५९॥
समग्रायां प्रतिमायां बालयोगिनिकाऽस्थिषु ।
प्रत्यवयवं श्रीकृष्णनारायणो विलोकितः ॥६०॥
एवं प्रदर्श्य भगवान् ताभ्यां दिव्यं महत्तमम् ।
महिमानं निजं पश्चात् तिरोऽभावयदच्युतः ॥६१॥
मानवः सहसा जातश्चाश्वपट्टसरस्तटे ।
पृथ्व्यां स्थितोऽभवत्तत्र स्नानार्थकृतनिश्चयः ॥६२॥
निकामदेवं हस्ताभ्यां पस्पर्श च सुरेश्वरीम् ।
तावत्तौ चर्मचक्षुष्कौ जातौ यद्वद्धि मानवौ ॥६३॥
निपेततुः पूर्णकामौ कृतसर्वात्मदर्शनौ ।
स्तुतिं साश्रुदृष्टिनेत्रौ चक्रतुः स्वामिनः प्रभोः ॥६४॥
पावितौ कृपया कृष्ण पुत्रीदानेन पावितौ ।
रक्षितौ सन्निधौ कृष्ण कृपया मोक्षितावपि ॥६५॥
कृतकृत्यौ प्रजातौ स्वः प्रार्थितं नाऽवशिष्यते ।
परेशस्त्वं चिरं प्राप्तो भवार्णवे पुनस्त्विह ॥६६॥
भवो गतो गतो भावो भयं गतं तु नैधनम् ।
आगता ब्रह्मसंवित्तिर्ब्राह्मी तृप्तिः समागता ॥६७॥
यद्वा प्रेषय तत्रैव यत्रास्से त्वं महाऽक्षरे ।
यद्वा रक्षय चात्रैव पादयोस्ते जनार्दन ॥६८॥
ब्रह्मेशस्त्वं यथार्थोऽसि जन्ममरणतारकः ।
जा जनिर्मा मृतिश्चेति तस्तारक इत्यसि ॥६९॥
सर्वात्मकोऽसि भगवन् सर्वेच्छा नौ रराम ह ।
न त्वां विना परात्मानं किञ्चिज्जगति विद्यते ॥७०॥
त्वामेव विश्वरूपं च परं ज्ञात्वा विमुच्यते ।
सर्वस्थं त्वां विलोक्यैव समाधिः सर्वदा स्थितः ॥७१॥
त्वां ध्यात्वा यस्त्यजेत्प्राणान् स याति ब्रह्मधाम वै ।
त्वां संस्थाप्य निजात्माऽब्जे गन्तव्यं नाऽवशिष्यते ॥७२॥
कृष्णप्रकाशकं ध्यानं सर्वबन्धविमोचकम् ।
अहो भाग्यं परं नौ च यदत्र मिलितो भवान् ॥७३॥
मन्थनाद् दृश्यते ह्यग्निर्भवान् सर्वसमर्पणात् ।
कृपा ते नौ विमोक्षाय नान्यः पन्था हि कारणम् ॥७४॥
श्रवणं मननं ध्यानं ज्ञानं तीर्थं तपो व्रतम् ।
न मुक्तौ कारणं चात्र कृपा ते चात्र कारणम् ॥७५॥
यदा सर्वे समर्प्यन्ते कामा हृत्स्थास्त्वयीश्वरे ।
तदाऽमृतपदप्राप्तिः कृपया ते भवेदिह ॥७६॥
सर्वज्ञः सर्वदर्शी त्वं क्षेत्रज्ञश्चात्मदीपकृत् ।
विलीय वासना नैजान् नयस्यक्षरधामनि ॥७७॥

इत्युच्चार्य नम ओं श्रीकृष्णनारायणाय ते ।
नमस्कारं चक्रतुस्तौ तावच्छ्रीबालयोगिनी ॥७८॥
आयाता श्रीकृष्णनारायणाय दातुमुत्तमम् ।
सुमिष्टं सलिलं पानयोग्यं च शीतलं सती ॥७९॥
दिव्यदृष्ट्या ज्ञातवती पित्रोस्तूर्णं हि मोक्षणम् ।
नातिदूरे च सहसा पाययित्वा जलं हरिम् ॥८०॥
प्रसादवारि पितृभ्यां ददौ सा बालयोगिनी ।
तावत्तौ कृष्णकृष्णेति कृष्णनारायणेति च ॥८१॥

जगदतुर्दिव्यवाचा कृपया स्वामिनः प्रभोः ।
प्रसादवारिपानेन देहाभ्यां परिवर्तितौ ॥८२॥
दिव्यरूपौ तैजसौ तौ भागत्यागविवर्जितौ ।
बभूवतुर्हि तत्रैव मुक्तौ धामगतौ यथा ॥८३॥
तावद् विमानं सुभगं गजाग्रपरिशोभितम् ।
मुक्तमुक्तानिकाजुष्टं जयशब्दादिकूजितम् ॥८४॥
अम्बरं पृथिवीं स्वर्गं प्रभासयद् यथाऽक्षरम् ।
अवातरन्मन्दिरस्य सन्निधौ सेतुभूमिषु ॥८५॥

जयशब्दैर्हरिकृष्णं स्वामिनं श्रीरमापतिम् ।
पुष्पाक्षतादिभिर्दिव्यैश्चन्दनैस्तमपूजयन् ॥८६॥
अवतीर्य विमानाच्च श्रीकृष्णचरणामृतम् ।
जगृहुश्च रजो मूर्ध्नि निदधुश्च पपुर्जलम् ॥८७॥
पश्यतां सर्वलोकानां तावत्तौ मानवावपि ।
दिव्यदेहौ बालकृष्णहस्तधृतौ विमानके ॥८८॥
निषादितौ विप्रसुरेश्वरीनिकामदेवकौ ।
नतौ पुत्र्या च हरिणा बदर्या तत्र तावुभौ ॥८९॥

माणिक्यया नतौ चापि नतौ कृष्णकुटुम्बिभिः ।
नत्वा सर्वान् विमानेन ययतुर्धाम चाऽक्षरम् ॥९०॥
आश्चर्यं परमं प्राप्ता देहिनो देवकोटयः ।
एवं बद्रीप्रिये देवि श्वशुरौ परमात्मना ॥९१॥
प्रेषितावक्षरं धाम पितरौ ते तदा मतौ ।
इदं ये परमाख्यानं श्रोष्यन्ति परमादरात् ॥९२॥
श्रावयिष्यन्ति वा लोकान् प्राप्स्यन्ति परमां गतिम् ।
कृष्णसेवा मोक्षदा वै साधुसेवा च मोक्षदा ॥९३॥

मन्त्रो विषं वारयति वह्निः शीतं हरत्यपि ।
सदा तु तौ हि निर्दोषौ मन्त्रः कृष्णोऽनलो हि सन् ॥९४॥
सतां योगेन मुक्तिः स्याद् यथा श्रीकृष्णयोगतः ।
कृष्णयोगेन मोक्षः स्याद् यथा साधुप्रसंगतः ॥९५॥
साक्षात् कृष्णस्य योगेन दिव्यता वर्ष्मणस्त्विह ।
सर्वार्थलाभ एवापि शिष्यते नाऽपरं सुखम् ॥९६॥

बालयोगिनीगीताया अभ्यासेन परात्मनः ।
पत्नी स्यात् कन्यका नारी नरो दासस्तु पार्षदः ॥९७॥
सकामाः सम्पदां वासा निष्कामाः स्युर्विमुक्तिगाः ।
असिद्धाः सिद्धतां चेयुर्बद्धा निर्बद्धतामपि ॥९८॥
भ्रमिता ब्रह्मभावं च प्राप्नुयुः श्रवणादपि ।
मानतात् कृष्णतां निदिध्यासनात् परमेशताम् ॥९९॥
प्राप्नुयुः सर्वथा बद्रि प्राह श्रीपुरुषोत्तमः ।
बालयोगिनीगीतेयं बालकृष्णसुयोगदा ॥१००॥

श्रोतव्या सततं मुक्त्यै गन्तव्यः परमः पुमान् ।
भोक्तव्यं च सुखं कार्ष्णे सुप्तव्यं शयने हरेः ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने-ऽनादिश्रीकृष्णनारायणेन निकामदेवाय तत्पत्न्यै च सर्वधामधामिरूपस्वदर्शनं दत्तम्, निकामदेव-तत्पत्न्योः सदेहदिव्यमोक्षणं कृतमित्यादिनि-रूपणनामा सप्तविंशतितमोऽध्यायः ॥ २७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां श्रीपरमात्मनः ।
कैवर्तकस्य भक्तस्य प्रपन्नस्य विमोचिनीम् ॥ १ ॥
अस्ति ज्वालालकं नाम नगरं भद्रिकातटे ।
तत्राऽऽस्ते निगडभ्रामो नाम्ना कैवर्तजातिजः ॥ २ ॥
करोति वासं भद्राया नद्यास्तु सन्निधौ दिवा ।
मत्स्यग्राहक्रियासक्तः कुटुम्बभरणोद्यमः ॥ ३ ॥

जालमादाय भद्राया ह्रदे गत्वा तु मत्स्यकान् ।
पाशयित्वा गृहं याति सायं मत्स्यादनः सदा ॥ ४ ॥
विक्रीय चाविकान्मत्स्यान् धनं प्राप्नोति यत्तु सः ।
तेनाऽन्नं शाकपत्रादि क्रीत्वा भरते बालकान् ॥ ५ ॥
पुत्रान् पुत्रीस्तथा पत्नीं भरते तेन कर्मणा ।
अथैकदा स्त्रिया साकं वस्त्रक्षालनहेतवे ॥ ६ ॥
भद्रां नदीं ययौ जालयुतो निगडभ्रामकः ।
स तु तीरे स्थितो जालं चिक्षेपाऽगाधवारिषु ॥ ७ ॥

पत्नी तस्याऽम्बरप्रक्षालनोद्यता जलैस्तदा ।
क्षालयत्येव वस्त्राणि तत्र निर्मलवारिधौ ॥ ८ ॥
वस्त्रध्यानपरा यावन्मज्जयत्यम्बरं जले ।
तावत् तत्पतिना जाले पाशितं तु तिमिं पतिम् ॥ ९ ॥
वीक्ष्य द्राक् च तिमेश्चाक्रोशनं श्रुत्वा भयावहम् ।
तिमिनी पाशबद्धं स्वं पतिं कैवर्तरोधितम् ॥१०॥

आकृष्यमाणं जालेन बहुमत्स्यसमन्वितम् ।
शशाप दुःखमापन्ना रक्षणे शक्तिवर्जिता ॥११॥
कैवर्त्त मानुषीवाप्या भूत्वाऽतिविह्वला तदा ।
कैवर्त्त त्वं भवावर्त्तान्मा मुक्तः कर्हिचिद् भव ॥१२॥
मुहुस्तिमिङ्गिलो भूत्वा मर कैवर्तजालगः ।
यथाऽहं दुःखिनी त्वत्र भवामि पतिनाशतः ॥१३॥
तथा पत्नी तव चापि सदाऽस्तु दुःखिनीति च ।
एवं मत्स्यवधूश्चोक्त्वा रुरोदाऽपत्यवारिता ॥१४॥
तावत् कैवर्तिकाऽऽश्चर्ये श्रुत्वाऽपश्यज्जलान्तरे ।
मीनी रौतीति पत्यर्थे पतिर्जालान्तराऽर्दितः ॥१५॥
शापं ददौ तु सा मत्स्येत्येवं वेद निजान्तरे ।
सहसा चाऽम्बरं त्यक्त्वा पत्युः सन्निधिमेत्य च ॥१६॥
विचार्य मत्स्यमोक्षार्थे जालसूत्रं करेऽकरोत् ।
पतिहस्तान्मोचयित्वा लब्ध्वा जालं जले शनैः ॥१७॥
मुमोचाऽबन्धनायैव मत्स्यानां शापभीयुता ।
जालशैथिल्यभावेन मत्स्या जालाद्विनिर्ययुः ॥१८॥
सर्वेऽपि त्वक्षता जाले निर्गत्य विविशुर्जलम् ।
संवदन्तः प्रसन्नाश्च जीव त्वं लक्षवत्सरान् ॥१९॥
सदैव सधवा चापि पतिसेवापरायणा ।
दयावती च मत्स्यानां हिंसाकर्मादिवर्जिता ॥२०॥
हृष्टा भवतु कैवर्त्ति सदाऽस्मद्रक्षणादिह ।
एवं मत्स्यादयश्चोक्त्वा विविशुर्जलमध्यके ॥२१॥
अथ श्रुत्वा तु कैवर्त्तो महाश्चर्यपरोऽभवत् ।
क्षुधान्वितोऽपि पत्न्यास्तत् कर्म वीक्ष्य दयापरम् ॥२२॥
अनुमेने मुमोचापि जालं तीरे वियत्नकः ।
पत्नीं पप्रच्छ किमिदं सहसा जालकर्षणम् ॥२३॥
पत्नी तं श्रावयामास शापं मत्स्योदितं तदा ।
कैवर्त्तश्च समाश्रुत्य भयं चावाप जन्मनाम् ॥२४॥
मत्स्ययोनिजदुःखानां पश्यन्नानन्त्यमन्वहम् ।
मत्स्यै तु शापदात्र्यै च मोचयित्र्यै तु योषिते ॥२५॥
धन्यवादान् ददौ तत्र यत् पापान्मोचितस्त्विति ।
जालं त्यक्त्वा क्षणे तत्र वह्नौ प्रज्वाल्य धीवरः ॥२६॥
फलकन्दाऽन्नशाकादस्तत आरभ्य सोऽभवत् ।
बद्रिके पुण्यसाधूनां संगमः सद्गतिप्रदः ॥२७॥
मत्स्या इमेऽभवत् सर्वे ऋषयो मत्स्यरूपिणः ।
भद्रायां तज्जलेऽनादिकृष्णनारायणः प्रभुः ॥२८॥
बहुवारं गजे स्थित्वा यत्र स्नानाय गच्छति ।
तत्तीर्थलोभवशगा महर्षयोऽभवन् झषाः ॥२९॥
यस्तु धृतो महान् मत्स्यो मत्स्या चान्ये च येऽभवन् ।
मत्स्यरूपोऽभवत् सोऽत्र महर्षिः पिपठायनः ॥३०॥
सर्वज्ञकल्प ऊर्ध्वदृक् सर्वविद्यानिधिर्द्विजः ।
मत्स्या पत्नी च नाम्नाऽस्य पाठायनीति साऽभवत् ॥३१॥
अन्ये मत्स्यादयो विप्रा वेदज्ञाश्चाऽभवन् जले ।
बद्रिके स तु कैवर्त्तः पापो महर्षिदण्डवान् ॥३२॥
पत्न्या सदयया कान्तस्तारितः समयज्ञया ।
बन्धकृन्निरयं याति बन्धहा याति गौरवम् ॥३३॥
जीवाऽभवप्रदाता तु सर्वस्वर्गानि विन्दति ।
भयदस्तु पतत्येव स्वर्गादपि सुखालयात् ॥३४॥
अथ कैवर्त्तिकी नत्वा पप्रच्छ जलमत्स्यकान् ।
के भवन्तः कथं मत्स्याः कथं वागीदृशी शुभा ॥३५॥
कथं वा मत्स्यरूपत्वं कथयन्तु दयालयाः ।
इत्यभिनोदिता विप्राः प्रत्यूचुर्निगडभ्रमम् ॥३६॥
अत्राऽनादिकृष्णनारायणः श्रीभगवान् स्वयम् ।
कुंकुमवापिकाक्षेत्राद् विहर्तुं गजमास्थितः ॥३७॥
रसालारण्यमायाति विश्राम्यत्यत्र शाद्वले ।
स्नाति क्रीडति भद्रायास्तटे सत्सलिले हरिः ॥३८॥
बहुधा श्रीरमालक्ष्मीराधाप्रियादिभिः सह ।
माधवीललितामुक्ताजयाभिः सह पार्षदैः ॥३९॥
रमते वार्षु तैस्ताभिर्भुंक्ते फलानि पाति वाः ।
प्रसादं प्रददात्येवोपस्थितेभ्यः कृपापरः ॥४०॥
ऋषिभ्यः पार्षदेभ्यश्च यादोभ्यः पशुपक्षिषु ।
क्षिपत्येते प्रसादं तं प्राप्य यान्ति कृतादराः ॥४१॥
मिष्टान्नानि विचित्राणि भोजयत्यत्र माधवः ।
उत्सवान् प्रकरोत्यत्र दानान्यर्पयति प्रभुः ॥४२॥
तदर्थं बहुधा चात्र विप्रा दीनाश्च सेवकाः ।
वसन्त्यत्र प्रसादानां दानानामिच्छया मुधा ॥४३॥
वयं चापि वसामोऽत्र विप्रा हर्यर्थमेव ह ।
पिपठायनमूर्धन्याः शतं कुटुम्बिनः शुभाः ॥४४॥
आश्रमाः श्रीरसालानामधः सन्ति विलोकय ।
अथाप्यत्र समायान्ति जलार्थं वनराक्षसाः ॥४५॥
क्वचिद् रात्रौ दिवा वापि बहुक्रूरप्रकर्मिणः ।
पीडयन्ति विप्रजनान् प्रहरन्ति क्वचित् खलाः ॥४६॥
अपहरन्ति च योषिद्वर्गं हरन्ति वस्तुकम् ।
प्रतिकर्तुं वयं शक्ता अपि त्वहिंसया स्थिताः ॥४७॥
भगवल्लाभयोगेन चाऽक्लेशेन च वारिषु ।
क्वचित् क्वचिद् वसामोऽत्र मत्स्या भूत्वा जलान्तरे ॥४८॥

क्वचित्तु मानवाश्चापि मृगा वा सिद्धसाधवः ।
भूत्वा भूत्वा विचरामो चूतारण्ये सुराष्ट्रके ॥४९॥
वद त्वं वै कथमत्र कोऽसि कस्माच्च हिंससि ।
कथं वै क्रूरतां हिंसां वहस्यत्रापि मानवे ॥५०॥
दुर्लभो मानवो देहो मोक्षदः स्वर्गदः शुभः ।
कथं हिंसया निरयान् व्रजितुं कर्मकृद् भवान् ॥५१॥
हिंसा स्तैन्यं पारदार्यं कपटं छलताऽनृतम् ।
निन्दा दोषारोपणं च निरयाणां प्रदास्त्विमे ॥५२॥
मांसाशनं सुरापानं द्रोहो मालिन्यमार्त्तदा ।
परापहरणं क्रोधो निरयाणां प्रदास्त्विमे ॥५३॥
सेवा सतां हरौ भक्तिः पराऽभयप्रदानकम् ।
अहिंसनं प्रसादानामशनं चाप्यनिन्दनम् ॥५४॥
परोपकरणं दानं स्वर्गस्यैते प्रदा मताः ।
शुद्धिः पूजा दर्शनं च सत्संगोऽन्नफलाशनम् ॥५५॥
स्वत्वमात्रेण निर्वाहः स्वर्गाणां तु प्रदास्त्विमे ।
हिंसया जायते दुःखं पापं तन्निरयप्रदम् ॥५६॥
उदरार्थे परप्राणविनाशः कर्म निर्घृणम् ।
सत्सु फलेषु कन्देषु विविधान्नेषु सत्स्वपि ॥५७॥
मांसाशनो भवेद् यस्तु स याति रौरवं परम् ।
जीवा नैव तु हन्तव्याः फलं भक्ष्यं पवित्रकृत् ॥५८॥
दुग्धं पेयं गवां सम्यक् हन्तव्या गौर्न वै क्वचित् ।
फलं पुष्पं च पत्रं च भक्षणीयं द्रुमादिजम् ॥५९॥
द्रुमा नैव विहन्तव्या वृथा फलादिनिर्वहे ।
दुग्धं पेयं तथा मातुर्मारणीया न जीवतः ॥६०॥
मधु ग्राह्यं कुसुमेभ्यो नाशनीयानि नैव ह ।
करा ग्राह्या प्रजाभ्यस्तु भक्षणीया न सर्वथा ॥६१॥
कस्तूरिका हरिणेभ्यो ग्राह्या घात्या न ते मताः ।
एवं भोगमयं सर्वं यदंशो भोगयोगि तत् ॥६२॥
भोक्तव्यं न तु हन्तव्यं हननं नरकप्रदम् ।
तस्मात्त्वं हिंसको भूत्वा मा याहि नरकान् प्रति ॥६३॥
स्वर्गं साधय कैवर्त्त त्यज हिंसां सुखी भव ।
इत्युपदिष्टः कैवर्त्तो नत्वा मत्स्यात्मकानृषीन् ॥६४॥
अपराधक्षमां तेभ्यो ययाचे शापमोचनीम् ।
शापोऽयं मत्स्यिकादेव्या विसर्जितः शरो यथा ॥६५॥
लग्नो मे हृदये तूर्णमुद्वेजयति चाधिकम् ।
शापमुक्तिर्यथा स्यान्मे तथा ऋषे विधेहि वै ॥६६॥
इत्येवं त्वं त्वर्थयामास ययाचे तत्पुनः पुनः ।
कृपां कृत्वा ततो बद्रि पिपठायनभूसुरः ॥६७॥

उवाच मे वचनात्ते शापो निःसत्त्वतां गतः ।
किन्तु मे वचनं लब्ध्वा याहि कुंकुमवापिकाम् ॥६८॥
अनादिश्रीकृष्णनारायणो यत्र विराजते ।
अश्वपट्टसरोवारिमध्ये स्नानं विधेहि च ॥६९॥
दर्शनं श्रीकृष्णनारायणस्याऽपि विधेहि च ।
पूजनं पत्रपुष्पाद्यैर्विधेहि कुरुसेवनम् ॥७०॥
मन्त्रं गृहाण मत्तोऽत्र पावनं पौरुषोत्तमम् ।
'ओं नमः श्रीकृष्णनारायणायस्वामिने स्वाहा' ॥७१॥
बद्रिके स समाकर्ण्य मन्त्रं प्राप्य ऋषेर्गुरोः ।
सपत्नीकः स कैवर्त्तो जग्राह नियमान् यमान् ॥७२॥
अहिंसनं साधुसेवामचौर्यं वन्यवृत्तिताम् ।
कन्दमूलफलाद्याद्याहारं तीर्थनिषेवणम् ॥७३॥
भजनं 'श्रीकृष्णनारायणे'ति मालया सदा ।
पूजनं च सदा नारायणस्य माधवीपतेः ॥७४॥
सत्संगं लोमशादीनां पिपठायनदर्शितम् ।
भूतानामभयं चेति व्रतं जग्राह सर्वथा ॥७५॥
पूजयित्वा गुरुं चापि गुर्वीं च पिपठायनीम् ।
तथाऽन्यान् सर्वब्रह्मर्षीन् जालं त्यक्त्वा नदीतटे ॥७६॥
जलं पीत्वा तु भद्रायाः पिपठायनपादजम् ।
नत्वा चाशीर्वचो लब्ध्वा सपत्नीको गृहं ययौ ॥७७॥
पुत्रादीन् सह नीत्वैव त्यक्त्वा ज्वालालकं पुरम् ।
ययावश्वपट्टसरो हर्षितो निगडभ्रमः ॥७८॥
तीर्थं चकार देवानां दर्शनं स्नानमर्चनम् ।
उपवासं चकारापि लोमशस्यापि दर्शनम् ॥७९॥
अनादिश्रीकृष्णनारायणस्याऽर्चनमुत्तमम् ।
भावदर्शनयुक्तं स चकार वन्दनं ततः ॥८०॥
कृतकृत्योऽस्मि भगवन् भवच्चरणदर्शनात् ।
नारायणेन भवता दत्तो मानवविग्रहः ॥८१॥
धर्मार्थः स मया नीतोऽधर्मार्थः क्षपितोऽधुना ।
पिपठायनसंगेन बोधमाप्तोऽस्मि मुक्तये ॥८२॥
अप्यहं मत्स्यशापाच्च मुक्त्यर्थमत्र संगतः ।
समुद्धर कृपासिन्धो प्रज्वालयाऽघपर्वतम् ॥८३॥
मत्स्यादोऽहं मत्स्यमार एष ते शरणं गतः ।
इत्युक्त्वा बद्रिके कृष्णपादयोर्निपपात ह ॥८४॥
तद्भार्याऽपि हरेः पादौ धृत्वाऽङ्गुष्ठं चुचुम्ब ह ।
पादजलं पपौ पादौ दधारोरसि शीतलौ ॥८५॥
मस्तके च रजश्चापि दधार भावसंभृता ।
अनादिश्रीकृष्णनारायणस्तां नैगडीं स्त्रियम् ॥८६॥

निगडभ्रामकं चापि दिव्यमूर्तिमदर्शयत् ।
कृपयैव च पापानि ज्वालयामास तत्क्षणात् ॥८७॥
दिव्यदृष्ट्या निगडोऽपि नैगडी तं परेश्वरम् ।
चतुर्भुजं कमलया सहितं सन्ददर्श ह ॥८८॥
भद्रानद्यां हरिं तीरे रमन्तमृषिमण्डले ।
अपश्यद् विहरन्तं च बालकृष्णं श्रियः पतिम् ॥८९॥
अथैनं कुंकुमवापीक्षेत्रे तेजसि भूम्नि वै ।
अपश्यत् सन्निधौ चापि मानवं संस्थितं प्रभुम् ॥९०॥
एवं प्रदर्श्य रूपं स्वं तमाह निगडभ्रमम् ।
पिपठायनयोगेन याम्यक्लेशो गतस्तव ॥९१॥
मम योगेन निगडभ्रम याहि मदक्षरम् ।
इत्युक्त्वा विरराम‌ाऽसौ श्रीहरिकृष्णधर्मजः ॥९२॥
निगडभ्रामकश्चाह नम ओम् परमात्मने ।
तावत्तत्र समायातं विमानं पारमेश्वरम् ॥९३॥
दिव्यं पार्षदसंजुष्टं सर्वसौवर्णभूषणम् ।
निगडो नैगडी चोभौ तत्यजतुर्हि भौतिकौ ॥९४॥
देहौ प्राप्याऽपरौ दिव्यौ ययतुश्चाऽधिरुह्य तत् ।
वैकुण्ठं श्रीहरेर्धाम कल्पपर्यन्तमेव ह ॥९५॥
ततोऽक्षरपदं तौ वै प्राप्स्यतः परमात्मनः ।
तत्पुत्राद्यास्ततश्चक्रुः पित्रोस्तत्रौर्ध्वदैहिकम् ॥९६॥
वैष्णवाः परमा जाता बालकृष्णसमाश्रिताः ।
कैंकर्यं ते प्रकुर्वन्ति पञ्च पुत्रा हरेः सदा ॥९७॥
पुत्रीत्रयं हरेर्दास्यं चक्रुश्चाजीवनं ततः ।
साध्व्यश्च साधवस्ते वै जाता भागवतोत्तमाः ॥९८॥
नाम्ना साध्व्यः पुण्डरिकासती निर्वाणिकासती ।
आनन्दघनिकासाध्वी तिस्रो नारायणाश्रिताः ॥९९॥
पुत्राः पञ्च ज्ञानदर्भिः प्रभादर्भिर्विदर्भिकः ।
विष्णुदर्भिः कृष्णदर्भिस्त्वेते भागवतोत्तमाः ॥१००॥
अभवन् साधवो दिव्यास्तापसाः सिद्धयोगिनः ।
अश्वपट्टसरोभूमौ स्वामिसेवापरायणाः ॥१०१॥
बद्रिके तेऽपि कालेन परां मुक्तिं ततो गताः ।
अनादिश्रीकृष्णनारायणप्रतापपावनाः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने भद्रानद्यां पिपठायनर्षियोगेन निगडभ्रमादिकैवर्तानां श्रीकृष्णनारायणाश्रयो मोक्षणं चेत्यादिनिरूपणनामाऽष्टाविंशोऽध्यायः ॥ २८ ॥

**श्रीनरनारायण उवाच—**

श्रूयतां च त्वया बद्रि माणिक्ये माधवि प्रिये ।
कथां तत्र कृतघ्नाया योषितो मुक्तिकारिणीम् ॥ १ ॥
आसीदेका विभावर्यां पुर्यां सौराष्ट्रमण्डले ।
कुथली नामतो योषा दीना सगरजातिजा ॥ २ ॥
एकाकिनी दीनबाला ह्यनाथाऽभवदार्त्तिनी ।
आबाल्यान्मृतजननीपितृबान्धवपालका ॥ ३ ॥
पञ्चवर्षाऽभवद् यावत् तावत् सा मृतरक्षका ।
गुरुणा सगराणां सा पोषिता वर्धिता गृहे ॥ ४ ॥
प्राप्तद्वादशवर्षा सा विवेद स्वां तु सागरीम् ।
न विप्रां तेन विप्राण्यां स्नेहो विच्छिन्नतां गतः ॥ ५ ॥
या माता गर्भधर्त्री स्यात् सैव स्नेहस्य भाजनम् ।
अन्यां तु कृत्रिमस्नेहा कन्यास्नेहो न तत्र वै ॥ ६ ॥
वध्वाः स्नेहो जनन्यां यादृशः श्वश्र्वां न तादृशः ।
जनयित्र्यां यथा स्नेहः स्तन्यदायां न तादृशः ॥ ७ ॥
गर्भधर्त्र्यां यथा स्नेहस्तत्सपत्न्यां न तादृशः ।
गुरौ स्नेहो यथा लोके पितृस्नेहस्ततोऽधिकः ॥ ८ ॥
रक्तस्नेहाद्धर्मजन्यस्नेहो गौणो हि सर्वदा ।
आपत्काले रक्तजः सः धर्मजाद्वै विशिष्यते ॥ ९ ॥
कुथली सागरी कन्या विप्राण्यां भेददृष्टितः ।
वर्तनं त्वकरोत्तत्राऽऽज्ञायां प्रसेवनादिषु ॥१०॥
सर्वक्रियासु यद्वत् सा भ्रान्तचित्ता हि वर्तते ।
न करोति गृहकार्यं जलस्याऽऽहरणादिकम् ॥११॥
मार्जनं मज्जनं शय्यास्तरणं पेषणीभ्रमिम् ।
प्रातरुत्थाय विप्राण्या दत्तं भुक्त्वा तु सोत्सुका ॥१२॥
सगराणां गृहाण्येव प्रयाति खेलने रता ।
विमनस्का विप्रगृहे समनस्का तु सागरे ॥१३॥
सागरीभिः प्रमदाभिर्बोधिता सागरीति सा ।
सागरी भवितुं तत्र चेच्छद् द्रुतं विवाहिता ॥१४॥
गुरुणा तु कृतं तस्या उपकारं न वेत्ति सा ।
आबाल्यात् पालिता सर्वदानैः सा वेत्ति नैव तत् ॥१५॥
गणयत्येव नैवाऽपि मातापितृसमौ द्विजौ ।
कृतं प्रपोषणं वर्षसप्तकं मनुते न तत् ॥१६॥
अबुद्धित्वात् स्वभावाद्वा बालत्वाद्वा प्रदूषणम् ।
कृतघ्नीत्वं समापन्नं सागरीसंगतोऽपि वा ॥१७॥
बद्रिके कृतलाभानां हननं नरकाय तत् ।
कृतानां हननं पुण्यहननं स्वर्गहं तथा ॥१८॥
गुरोर्गृहे तु कन्याया वासोऽयुतजनुःफलम् ।
अन्ययोनिप्रसूताया विप्राणीत्वं हि दुर्लभम् ॥१९॥
तदस्याः सुलभं जातं तथापि कर्मनोदिता ।
विप्रात्वं सा परित्यज्य सागरीत्वे मनोऽकरोत् ॥२०॥

अथ भार्या गुरोः कन्यामुपादिदेश शान्तये ।
पुत्रिके कर्मसंसारो वासनामूलपोषितः ॥२१॥
विषयाद्यशनो मोदप्रमोदवारिसेचितः ।
धर्माऽधर्मादिशाखश्च तृष्णादिपत्रपल्लवः ॥२२॥
भोगेहांऽकुरशोभाढ्यः सुखदुःखफलप्रदः ।
रागद्वेषकुसुमाद्यैराकृष्यन्तेऽत्र देहिनः ॥२३॥
आत्मा दोषविहीनश्च वृक्षतामेति संगतः ।
संसारी वासनाबद्धस्तत उच्यत आर्त्तिमान् ॥२४॥
बाल्ये त्वात्मा दोषहीनो निर्मलश्चेन्द्रियेश्वरः ।
यौवने दोषसर्वस्वो मलिनश्चेन्द्रियानुगः ॥२५॥
कन्या वापि कुमारा वा जिह्वारसातिबन्धनाः ।
युवत्यो वा युवानोऽपि यो निशि भ्राति वेगिनः ॥२६॥
स वेगो निर्जितो येन यया तौ मोक्षभागिनौ ।
नित्यसुखं परमेशधाम्नि तन्मोक्षणं महत् ॥२७॥
नारायणप्रसंगेन सतां योगेन कन्यके ।
मोक्षो भवति संसारान्निरयस्त्वन्यसंगतः ॥२८॥
गर्भे प्रपाचितो देहो बाल्ये मुहुश्च संस्कृतः ।
यौवने मलिनो मलवन्निम्नेन्द्रियमलाधिकः ॥२९॥
यदि वेगेन कामेन वासनयाऽतिवेगया ।
परदेहे नरदेहे मुग्धा स्यात् सा विनश्यति ॥३०॥
मातापितृस्नेहपात्रं कन्या कुमारवन्मता ।
तौ त्यक्त्वा येतरं याति सा कृतघ्ना भवेदिह ॥३१॥
अदीयमाना कन्या वै नेच्छया गन्तुमर्हति ।
वधूर्भूत्वा प्रेषिता वै धर्मेण याति कान्तगा ॥३२॥
त्वं विप्रौ पोषकौ त्यक्त्वा नित्यं यासि गृहान्तरम् ।
नाद्य ते समयस्तादृग् विनाऽऽज्ञां याहि मा तथा ॥३३॥
कन्यकानां परगृहे चिरयोगो भयावहः ।
हावभावैश्च पुंयोगैर्मर्यादानाश आपतेत् ॥३४॥
विवाहवर्जिता कन्या भ्रंशं लभेन्न संशयः ।
सागरी त्वं जन्मतोऽपि विप्रा त्वं ब्राह्मणीगृहे ॥३५॥
उत्पन्नफलवत् कन्ये पवित्रा त्वं हि भूसुरी ।
देहस्ते निर्मलो जातो विप्रपोषणकारितः ॥३६॥
विप्राणीयोगमुत्सृज्य सागरीगा तु मा भव ।
विप्राणीं मां विहायैव यदि पुत्रि गमिष्यसि ॥३७॥
कृतघ्नीत्वं तदा प्राप्य भ्रश्यसे नात्र संशयः ।
इत्युक्ता विप्रपत्न्या सा कन्या पप्रच्छ मातरम् ॥३८॥
कीदृश्यस्ताः कृतघ्न्यश्च वद मे मातरञ्जसा ।
अथ माता विप्रपत्नी नाम्ना सा त्वात्मशेमुषी ॥३९॥

पुत्रीं प्राह कृतानां या हन्त्री कृतघ्निका तु सा ।
शृणु पुत्रि तथा नार्यो भवन्तीह नरा अपि ॥४०॥
तेन पापेन निरयान् भुञ्जते मरणोत्तरम् ।
मातृपुष्टा बालिका या मातरं नैव सेवते ॥४१॥
सा कृतघ्नी प्रथमैव द्वितीया मातृदुःखदा ।
पोषिताऽपि च कन्या या विपरीता विरोधिनी ॥४२॥
सा कृतघ्ना कुटुम्बस्य दोषवक्त्री कृतघ्निका ।
गृहच्छिद्रं बहिर्वक्ति क्लेशं करोति तेन या ॥४३॥
सा कृतघ्ना सदा प्रोक्ता हन्त्री कीर्तेः कुटुम्बिनाम् ।
या प्राप्तयौवना याति विनाऽऽज्ञां परमन्दिरम् ॥४४॥
स्वतन्त्रस्वविहारा सा कृतघ्ना कुलनाशिनी
या विधिं तु समुत्सृज्य वृणुते तु स्वयंवरम् ॥४५॥
सा पित्रोर्दुःखदा चेत् स्यात् कृतघ्नात्वेन दूषिता ।
गृहकार्याणि या त्यक्त्वा परकार्यपरायणा ॥४६॥
गृहकार्ये महतीनामर्थे रक्षति साऽपि सा ।
वधूर्भूत्वा कान्तसेवां या करोति न मानिनी ॥४७॥
सा कृतघ्ना तथा श्वश्रूक्लेशिनी तद्विधा तथा ।
सपत्नीदुःखदा या च गृहनारी विरोधिनी ॥४८॥
कान्तसम्बन्धिकलिदा गृहक्लेशाभिरोपिणी ।
कृतघ्ना सा सदा बोध्योदासीना गृहकर्मसु ॥४९॥
या वधूं सेविकां नैव श्वश्रूः स्नेहयति क्वचित् ।
सा वृद्धा दुःखदा वध्वाः कृतघ्ना गृहशासिनी ॥५०॥
या बालेषु पक्षपातं भोजनादौ विशेषतः ।
अयोग्यं प्रकरोत्येषा कृतघ्ना ज्ञानवर्जिता ॥५१॥
कृतोपकारं साहाय्यं चाऽक्षमत्याऽतिवर्तिनी ।
दोषान् वक्ति विरोधेन कृतघ्ना सा सदा मता ॥५२॥
पुष्टा तुष्टा पालिता च पालकं सा विहाय चेत् ।
प्रयात्यन्यत्र पशुवत् सा कृतघ्ना सदा मता ॥५३॥
अभ्युदयः कृतो येन शिक्षाधनमन्दिरैः ।
तं चेदापत्सु सहसा क्षिपेद् या सा कृतघ्निका ॥५४॥
गुरुं देवं पालकं च पितरं मातरं पतिम् ।
या त्वापत्सु प्रक्षिपति कृतघ्ना सा प्रकीर्तिता ॥५५॥
कृतापकारं वदति नोपकारं कदाचन ।
सा कृतघ्ना कृतहन्त्री निरयान् याति भामिनी ॥५६॥
आपद्विनाशकस्याऽपि तदापत्तौ न पक्षदा ।
प्रत्युताऽनिष्टसंयोक्त्री सा कृतघ्ना मता सदा ॥५७॥
परेशेनाऽर्पितो देहो मानवो मोक्षलब्धये ।
तं परेशं प्रविस्मृत्य वर्तते सा कृतघ्निका ॥५८॥

विवाहः कारितो येन विवाहिता च येन वा।
तयोर्गुणं न गृह्णाति दोषदा सा कृतघ्निका ॥५९॥
अध्यापिता शिक्षिता या तथाऽऽपत्तारिता तु या।
तद्गुणं नैव जानाति विरोधिनी कृतघ्निका ॥६०॥
धर्मार्थे मानुषो देहो धर्मं जानाति नैव या।
अधर्मार्थकृतध्याना सा तु धर्मकृतघ्निका ॥६१॥
धर्मार्थकाममोक्षेषु साहाय्यदास्तु ये मताः।
तेषामपकृतौ लग्ना या सा कृतघ्निका सदा ॥६२॥
कृतघ्नानां निरया वै भवन्ति दुःखदाः सदा।
याम्यलोके परत्रापि सर्वे तासां विहन्यते ॥६३॥
सुखं न लभते क्वापि कृतघ्ना पापपर्वता।
कृतज्ञा लभते पुण्यं स्वर्गं सुखं महोत्सवम् ॥६४॥
कृतं जानाति या कन्या नारी वृद्धा नरोऽपि वा।
उपकारं प्रकुर्याच्च सा स्यात् स्वर्गनिवासिनी ॥६५॥
अत्र पुत्रप्रपौत्राद्यैः शोभते वंशविस्तरैः।
धनधान्याम्बरसम्पत्स्वर्णाद्यैरभिवर्धते ॥६६॥
कृतघ्नाया विनाशं वै याति सर्वं समूलकम्।
पुत्रि त्वं मा कृतघ्ना स्या निरयान् मा प्रयाहि च ॥६७॥
मम सन्तोषदा भूत्वा प्रवर्धयाऽतिसम्पदा।
यशसा वंशवृद्ध्याऽपि स्वर्गेऽपि च ततोऽधिका ॥६८॥
इत्युक्ता कुथली कन्या सागरी बीजदोषतः।
न मेने सा मातृवाक्यं पापं या मनुते नहि ॥६९॥
न दोषं मनुते तत्र त्यजने चाश्रयान्तरे।
निषेकदोषभावेन चाऽवमत्य वचो हि तत् ॥७०॥
प्राह प्रतिवचस्तत्र मातरं मतिविभ्रमा।
मातः कृतघ्नताः सर्वा आकर्णिता मुखात्तव ॥७१॥
स्वार्थस्ते मयि कोऽस्त्यत्र सागर्या भिन्नयोषिति।
भिन्नवर्णोद्भवायां च भिन्नाचारादियोषिति ॥७२॥
न मे भिक्षुगृहे वृत्तिर्भिक्षुकी न भवाम्यहम्।
अहं सगरजातीया सागरं कंचिदाप्नुयाम् ॥७३॥
तत्र श्रेयो मम चास्ति न विप्रे स्वामिनि क्वचित्।
बालिकाश्चाप्यनाथाश्च सर्वैः पोष्यास्तु धर्मतः ॥७४॥
कृतोऽयं सर्वथा न्यायो वृद्धैश्चाऽप्रतिदानवत्।
बालानामुपकारो यः कर्तव्यं तत् समुच्यते ॥७५॥
तत्र नास्ति कृतघ्नत्वं कन्या धनं परार्थकम्।
मातः क्षमां विधेह्यत्र मज्जातौ तु प्रयाम्यहम् ॥७६॥
न भिक्षावारिबहुले विप्रे प्रयामि कर्हिचित्।
इत्युक्त्वा मातरं नत्वा ह्यवमत्य च तद्वचः ॥७७॥
प्रत्युत दूषणं दत्वा विप्राण्या पालनं कृतम्।
अविप्रायास्तु विप्राण्या पालनं तद्धि दूषणम् ॥७८॥
यद्वा परोपकर्तव्यं ममत्ववर्जितं वृषः।
कुतो भवत्या तत्राऽयं त्वाग्रहः पुत्रिकात्मकः ॥७९॥
कथं वै क्रियते साध्वि पूज्ये विमूलको मयि।
मृद् भूमौ वारि सलिले वह्निस्तेजसि वाऽनिले ॥८०॥
स्वस्वतत्त्वेषु विश्रामं लभन्ते नेतरे क्वचित्।
तथाऽहं सागरी कन्या सागरे शान्तिमेमि ह ॥८१॥
प्रयामि सागरं वंश्यं देहि वा न प्रदेहि माम्।
इत्युक्त्वा वन्द्रिके सा तु नत्वा तदात्मशेमुषीम् ॥८२॥
कुथली सम्परित्यज्य विप्रगृहं तु सात्त्विकम्।
राजसं सागरं वेश्यं स्वयं गत्वा समाश्रिता ॥८३॥
कृतघ्निकेति ब्राह्मण्या तदोक्ता सा तथाविधा।
पोषिकां मातरं त्यक्त्वा यतोऽन्यत्र स्वयंगता ॥८४॥
कृतघ्नात्वमहादोषं प्राप्ता सा कन्यका ततः।
किन्तु विप्रगृहे नित्यं देवप्रसादभोजिनी ॥८५॥
देवार्चनादिसेवाभिर्बहुपुण्यवती ह्यभूत्।
तस्याः पुण्यप्रतापेन कुथली प्राप्तयौवना ॥८६॥
विभावरीनगर्यास्तु राज्ञा नाम्ना विरामिणा।
अनाथा सा सगराय स्वभृत्याय समर्पिता ॥८७॥
नाम्ना धर्मकरेणाऽपि सगरेण विवाहिता।
राज्ञीसेवापरा जाता मान्या सम्पत्सुभोगिनी ॥८८॥
मोदते भोगसम्पत्त्या धर्मकरगृहे स्थिता।
चिरवर्षाणि सा भोगान् बुभुजे पुण्यनिर्मितान् ॥८९॥
विंशतिः पुत्रकाश्चास्याः कन्यकाः सप्त चाऽभवन्।
पुण्यस्तरोऽभवत्तस्याः सान्तः पापस्तरस्ततः ॥९०॥
सम्प्राप्तस्तु कृतघ्नात्वभोगो विप्राणिकोदितः।
रुग्णा सा त्वेकदा जाता शीतपीडान्विता ज्वरैः ॥९१॥
पीडिता सा रुरोदाऽपि मासोत्तरं विशक्तिका।
उपचाराः कृताः पुत्रैः स्वामिना तत्कुटुम्बिभिः ॥९२॥
तथापि न ज्वरशान्तिरभवत् सुखमाप न।
राजयक्ष्माऽभवत्तस्याः सर्वनाशकरोऽथ सा ॥९३॥
सस्मार ब्राह्मणीं तत्र मातरं पोषिकां सतीम्।
तदुक्तं तत् कृतघ्नात्वं तत्फलं चागतं मम ॥९४॥
कालेन भावि भाव्यं च भवितव्यं न लीयते।
पुत्रैः पुत्र्यादिभिः सा तु सेविता दूरतो भयात् ॥९५॥
राजयक्ष्मभयाच्चाऽन्ये पार्श्वे त्वायान्ति कर्हिचित्।
एवं सा वर्षदशकं पीडिता राजयक्ष्मणा ॥९६॥

कृतघ्नताफलं तस्याः प्राप्तं नाऽऽप्नोति चान्तताम् ।
पतिता शयने त्वास्ते पञ्जराभाऽभवद्धि सा ॥९७॥
अथ पुत्रं ज्येष्ठमेव प्राह सा विगताशया ।
यथा मोक्षो भवेन्मे च यथा मे मरणं भवेत् ॥९८॥
तथा कुरु मदर्थे वै कृतघ्नत्वनिवारणम् ।
पुत्रस्तस्या द्रुतं त्वायाल्लोमशस्याश्रमं प्रति ॥९९॥
प्रार्थयामास तं श्रेष्ठमहर्षिं मोक्षणं प्रति ।
यद्वा रोगस्य देहस्य चात्मशक्तिस्तु संभवेत् ॥१००॥
लोमशस्तं ज्येष्ठसुतं तिरश्चायनसंज्ञकम् ।
जगाद हितकृद्वाक्यं दयया पापनाशकम् ॥१०१॥
मन्त्रं गृहाण कृष्णस्य मात्रे देहि द्रुतं तथा ।
अश्वपट्टजले स्नात्वा तीर्थवारि प्रदेहि च ॥१०२॥
अनादिश्रीकृष्णनारायणपादजलं शुभम् ।
रोगाणां भवरोगाणां नाशकं संप्रदेहि च ॥१०३॥
इत्युक्त्वा प्रददौ मन्त्रं कृपया पापनाशकम् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥१०४॥
मन्त्रं प्राप्य सरो गत्वा स्नात्वा तीर्थजलं शुभम् ।
लब्ध्वाऽनादिकृष्णनारायणपादजलं दधे ॥१०५॥
'ओं श्रीकृष्णनारायणेति' जपार्थे तु मालिकाम् ।
लब्ध्वा श्रीबालकृष्णात् स ययौ स्वमातरं प्रति ॥१०६॥
मात्रेऽर्पितं जलं दिव्यं मन्त्रश्च मालिका रजः ।
विभावर्या कुथली सा समाप्ताऽघाऽभवद् द्रुतम् ॥१०७॥
पीडा नष्टाऽभवत्तस्या राजयक्ष्मा तु मूर्तिमान् ।
बहिर्निर्गत्य देहाच्चां कृतघ्नताक्रिया सह ॥१०८॥
हसन्त्वा ययौ शीघ्रं बर्बुरारण्यकं प्रति ।
कुथली रोगरहिता समाधौ संव्यलीयत ॥१०९॥
ददर्श तत्र देवेशं कृष्णनारायणं प्रभुम् ।
बालकृष्णं निकटस्थं दिव्यं राधारमापतिम् ॥११०॥
प्राणमत् साऽतिभावेन पपात कृष्णपादयोः ।
चुचुम्ब बहुधा कृष्णपादौ समाधिसंस्थिता ॥१११॥
कृतघ्नतायाः पापं ते विगतं कृपया मम ।
स्वस्थाऽसि भज गोविन्दं देहान्ते याहि चाऽक्षरम् ॥११२॥
इत्युक्त्वा प्रययौ कृष्णः स्वस्था सा बहिराययौ ।
उत्थाय सर्ववृत्तान्तं पुत्रादिभ्यो न्यवेदयत् ॥११३॥
ततः सर्वेऽनादिकृष्णभक्ता जाताः समन्ततः ।
लक्षवर्षाणि कुथली जीविता मोक्षणं गता ॥११४॥
एवं बद्रिप्रिये देवि कृतघ्न्याः पापनाशनम् ।
मोक्षणं च कृतं कृष्णनारायणेन योषितः ॥११५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने विभावरीपुरीस्थायाः कुथलीसागर्या मृतपितृबान्धवाया विप्रगृहे वर्धनं, स्वातन्त्र्येण कृतघ्नितादोषेण सागरपत्नीत्वं, कृतघ्नतायाः फलं राजयक्ष्मा, श्रीकृष्णनारायणाश्रयेण राजयक्ष्मरोगनाशः, मोक्षणं चेत्यादिनिरूपणनामा नवाधिकविंशतितमोऽध्यायः ॥ २९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां प्रतारिणीस्त्रियाः ।
कृष्णनारायणसंगान्मोक्षमार्गं तु सा गता ॥ १ ॥
आसीद् ग्रामे धवलारे सौराष्ट्रे चर्मंठाकुले ।
नाम्ना नारी विषलाणी प्रतारणपरायणा ॥ २ ॥
पुत्रपौत्रयुताऽप्येषा प्रतारणे कृतश्रमा ।
वञ्चने सर्वथा शास्त्री वञ्चयित्रीति विश्रुता ॥ ३ ॥
वञ्चयित्री विषलाणी यथा नाऽन्या तथा भुवि ।
सर्वान् सा वञ्चयत्येव कलया च छलेन च ॥ ४ ॥
सर्वा नार्यो विषलाण्या बिभ्यत्येव पुरेऽन्वहम् ।
यद्गृहं विषलाणी सा याति तत्र विशेषतः ॥ ५ ॥
यथाकथञ्चिद्धास्येन वार्तया वचनेन च ।
कृत्रिमार्थप्रदानाद्यैः सत्यभ्रान्तिकरैस्तथा ॥ ६ ॥
वस्तुभिर्बहुधा दृष्टिरोधैर्दृष्टिप्रवञ्चनैः ।
मोहनैर्भ्रामणैर्व्यतिक्रमैर्विनिमयैस्तथा ॥ ७ ॥
आदानप्रतिदानैश्च वञ्चयत्येव नित्यशः ।
विश्वासिन्यस्तु बह्व्यो वञ्चनां यान्ति तत्र ह ॥ ८ ॥
वञ्चनाख्यां कलां यस्मान्निसर्गजां प्रवेत्ति सा ।
यद्गृहे याति सा तत्र वञ्चयित्वा गृहाधिपाम् ॥ ९ ॥
प्रच्छन्नलाभं संगृह्य प्रयाति तु यथा सती ।
वस्तुहानौ वस्त्वलाभे गृहेशी शंकते तु ताम् ॥१०॥
तथा हृतं भवेद्वस्तु वञ्चयित्र्या गृहान्मम ।
एवं सा वञ्चनपरा ग्राम्यजनैर्विनिश्चिता ॥११॥
वञ्चनाचारमात्रज्ञा सर्वचातुर्यहारिणी ।
वञ्चनादोषयुक्ता सा दण्डपात्रं तु यद्यपि ॥१२॥
राज्ञा तथापि कलया यतः श्रेष्ठाऽनुमोदिता ।
मल्लानां च नटानां च खेलने बहुरूपिणाम् ॥१३॥
रङ्गमध्ये समागत्य वञ्चयत्येव तानपि ।
पराजयं प्रयान्त्येव जयं नैवोपयान्ति ते ॥१४॥
पारितोषिकदानाद्यं वञ्चयित्री प्रविन्दति ।
एवं सा वञ्चनपरा ह्येकदा गृहतो बहिः ॥१५॥

याता तया वीक्षितं वै साधूनां मण्डलं महत् ।
शतं ते साधवः साध्व्यो निर्वाणपदबोधिनः ॥१६॥
तस्या ग्रामे गोपुरान्ते प्राकारान्ते व्यधुः स्थितिम् ।
अथ ग्रामप्रजाः सर्वा मिलित्वा साधुभोजनम् ॥१७॥
ददुश्चापूपमौक्तिकदुग्धपाकप्रपोलिकाः ।
चणकाः श्रेष्ठशाकानि ददुर्भोजनमुत्तमम् ॥१८॥
साधवो बुभुजुः सर्वे दृष्ट्वा तद् भोजनोत्तमम् ।
रसास्वादपरा वञ्चयित्री चाऽचिन्तयद्धृदि ॥१९॥
केनोपायेन मिष्टान्नं मिलेत् तद् भक्षयाम्यपि ।
जना ग्राम्याः साधवश्च जानीयुर्न यथा तथा ॥२०॥
कृत्वाऽत्र वञ्चनं भुक्त्वा तृप्ता यास्यामि मे गृहम् ।
अथ सा निजकेशानां जटां बद्ध्वाऽकरोज्जटाम् ॥२१॥
भस्माढ्यां तां जटां नैजां तनूं चाप्यकरोत्तदा ।
धृत्वा काषायवस्त्राणि करे त्रिशूलमित्यपि ॥२२॥
योगिनी साध्विका भूत्वा साध्वीमण्डलमाविशत् ।
भुक्तवतीषु साध्वीषु साध्वीपंक्तौ स्थिताऽभवत् ॥२३॥
उपविष्टा तथा तत्र यथा न स्यात् परेक्षणम् ।
भुक्त्वा पीत्वा प्राप्य तृप्तिं शनैरुत्थाय प्रस्थिता ॥२४॥
न ज्ञाता खलु साध्वीभिर्ग्रामसाध्वीति सम्मता ।
न पृष्टा तर्किता काभिश्चिदियं ग्रामयोगिनी ॥२५॥
ग्रामजनैर्विकृता सा न यथार्थे समीक्षिता ।
एवं सा वञ्चनावेषं धृत्वा भुक्त्वा प्रसादकम् ॥२६॥
गृहं गत्वा पुनर्वेषं निजं धृत्वाऽस्वपत् सुखम् ।
एवं नित्यं प्रयात्येव भुक्त्वा पञ्चदिनानि सा ॥२७॥
आयाति स्वगृहं तस्या याथार्थ्यं न विदुर्जनाः ।
साधुसाध्वीकृष्णप्रासादिकं भुक्तवती तु सा ॥२८॥
पावनं सर्वपापानां क्षालकं तु प्रसादजम् ।
जलमन्नं दलं वापि फलं शाश्वतमुक्तिदम् ॥२९॥
पापिनो बहवः सन्ति पापात् प्रेता भवन्ति च ।
अधोयोनिगताश्चापि जायन्ते तु घसाशिनः ॥३०॥
विघसाशी सदा मुक्तो भवत्येवाऽघराशिभिः ।
हरेर्योगः सतां योगः साध्वीयोगो हि दुर्लभः ॥३१॥
सत्संगो दुर्लभश्चाति मिलेच्चेन्मोक्षणं द्रुतम् ।
महापापानि नश्यन्ति प्रसादान्नादिभोजनात् ॥३२॥
वञ्चनादिप्रपापानि दहन्ति श्रीप्रसादतः ।
आत्मा शुद्ध्यति सहसा मोक्षयोग्यो भवत्यपि ॥३३॥

श्रीबद्रीरमोवाच—

प्रतारणं तु यत्कर्म कतिधा छद्ममेव वा ।
येन स्यान्नरके वासस्तन्मे निगद केशव ॥३४॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि प्रतारणं तु नैकधा ।
येन देही नरकान् वै याति वञ्चनपापकृत् ॥३५॥
परमेशकृतं देहं प्राप्य देहेन सेवनम् ।
कुर्यान्न परमेशस्य वञ्चितस्तेन माधवः ॥३६॥
आत्ममोक्षप्रदं देहं प्राप्य मोक्षार्थसाधनम् ।
येनाऽर्जितं न वै तेन त्वात्मा वै वञ्चितो निजः ॥३७॥
साधूनां योगिनां चापि साध्वीनां मण्डलादिषु ।
बकभक्तो भवेद्यस्तु साध्वाद्यास्तेन वञ्चिताः ॥३८॥
धनस्त्रीत्यागवैराग्योपदेष्टा यस्तु मानवः ।
त्याजयित्वा स्वयं भुङ्क्ते प्रतारणं तु तन्महत् ॥३९॥
विश्वास्य बहुधा लाभं दर्शयित्वा विभिन्नकम् ।
स्नेहं कृत्वा कारयित्वा धनं हरति वञ्चनम् ॥४०॥
बालं नारीं बालिकां वा युवानं धनिनं तथा ।
युवतीं वस्तुमात्रं वा यत्र हरति वञ्चनम् ॥४१॥
सदृशं चोभयं वस्तु निर्मूल्यं बहुमूल्यकम् ।
दत्वा निर्मूल्यकं बहुमूल्यं हरति वञ्चनम् ॥४२॥
कार्ये पूर्णे कारयित्वा पश्चाद् यत्नफलं तु यः ।
न ददात्यल्पयत्येव छिनत्ति तद्धि वञ्चनम् ॥४३॥
कर्मणा मनसा वाचा लाभं लब्ध्वा ततः परम् ।
न कार्यं निष्पादयति वञ्चको लुञ्चकस्तु सः ॥४४॥
सति द्रव्ये धर्मकार्ये न करोति ददाति न ।
न भुंक्ते सा वञ्चना वै द्रव्यकृता तु नारकी ॥४५॥
त्यागी भूत्वा गृहस्थानां भोगान् भुंक्ते ददाति च ।
गृहस्थबंधकृत् स्याद् यः संसाररतेन वञ्चितः ॥४६॥
भक्त्या विश्वास्य लोकान् यश्चेन्द्रियाणां वशो भवेत् ।
प्रतारिता तेन भक्तिर्निरयाणां विधायिनी ॥४७॥
अभिचारादिकं कृत्वा स्वाधीनं प्रकरोति यः ।
पुनर्वशं कृतं भुंक्ते धर्मस्तेन प्रतारितः ॥४८॥
यानि कार्याणि यावन्ति सुदृढानि भवन्ति वै ।
तथा तेषां विधाता न पोलम्पोलविधायकः ॥४९॥
अपूर्णकार्यकर्ता च कनिष्ठवस्तुयोजकः ।
प्रच्छन्नलाभलोभाढ्यो वञ्चको निरयानुगः ॥५०॥
घृतस्थाने तु यत्तैलं जलं तक्रं पयस्तथा ।
प्रयुंक्ते च शुभेऽनिष्टं वञ्चको निरयामिगः ॥५१॥
हस्तिने यत्र करिणीं दर्शयित्वा तु गर्तके ।
पातयत्येव तद्वस्तुकर्ता प्रतारको मतः ॥५२॥
कन्यां सुरूपां युवतीं प्रदर्श्य मण्डपे तु ताम् ।
विहायाऽन्यां प्रदद्यात् स वञ्चको निरयानुगः ॥५३॥

दुग्धे पानीयमाक्षिप्य रसविक्रयकारकः ।
अन्ने तु कंकरान् धूलिं पिष्टे चूर्णं स वञ्चकः ॥५४॥
शिल्पकार्ये कलाकार्ये सौधकार्ये च सेतुषु ।
महोद्याने पत्तनादौ यन्त्रमार्गे महापथे ॥५५॥
क्षेत्रे कूपे तडागादौ प्राप्य द्रव्यं प्रपूर्णकम् ।
अर्धव्ययेन सर्वं तत् करोति चाद्दढं तथा ॥५६॥
निर्बलं दरगर्भं च वञ्चना नरकप्रदा ।
काकानां च शृगालानां वानराणां स्वभाववत् ॥५७॥
वर्तमानो नरो लोके वञ्चनाढ्यो भवेत् खलु ।
दृष्टिं ध्यानं मतिं सावधानतां प्रणिधानताम् ॥५८॥
प्रच्याव्य ताभ्यो हरति कुरुते जयते च वा ।
अन्याऽनिष्टं विधत्ते स वञ्चको निरयंगमः ॥५९॥
हस्तिदन्तसमं कार्यं बहिर्दर्शनमात्रकम् ।
अन्तस्त्वन्यच्चर्वणार्थदन्तवत् स्वार्थसाधकम् ॥६०॥
परहिंसाद्रोहकृच्च वञ्चना निरयप्रदा ।
एवमादीनि सर्वाणि वञ्चनानि भवन्ति वै ॥६१॥
शिष्यो भूत्वा गुरोः सेवां यो न करोति भावतः ।
वञ्चना सा महापापकरी वै निरयप्रदा ॥६२॥
पत्नी भूत्वा स्वामिनो या सेवां करोति नैव ह ।
पतिर्भूत्वा सतीं नैव पालयत्येव वंचना ॥६३॥
किंकरो न करोत्येव श्रेष्ठिकार्यं तु वञ्चना ।
गरदा वह्निदा नाशयोगदा वञ्चकास्तु ते ॥६४॥
स्तेनकर्मरताः सर्वे वञ्चका निरयंगमाः ।
एतादृशानामुद्धारः सतां समागमे भवेत् ॥६५॥
इन्द्रो भूत्वा गौतमाभोऽहल्यामवञ्चयद्धि सः ।
अहं जालन्धरो भूत्वा वृन्दामवञ्चयं पुरा ॥६६॥
एवंविधा वञ्चना वै बद्रिके दुःखदा मता ।
शापो वा दुःखमेवाऽपि निरयो वा भवेत्ततः ॥६७॥
यद्यप्यहं सर्वकर्ता सर्वपतिः परेश्वरः ।
निर्दोषः पावनो मायापावकः सर्वमोक्षकृत् ॥६८॥
सुरकार्यकृते भक्तकृते क्वचित्तु वञ्चनाम् ।
करोमि दैत्यनाशार्थं दोषो मे नैव विद्यते ॥६९॥
जीवानां कर्मभोगानां दोषस्तत्र प्रजायते ।
एवं सा छल्ना प्रोक्ता सतां संगेन नश्यति ॥७०॥
साधूनां संगमो बद्रि पावनः पापनाशकः ।
विषलाणी सतां संगाज्जाता पापादिवर्जिता ॥७१॥
साधूच्छिष्टादनात् कायकृतार्घं संविनश्यति ।
साधुस्पर्शादियोगेनेन्द्रियपापं विनश्यति ॥७२॥
साधुसेवाभावभक्त्या मनःपापं विनश्यति ।
साध्वर्पणेन जीवस्य सर्वं पापं विनश्यति ॥७३॥
साधुश्चाहमहं साधुः साधुः श्रीकृष्णमाधवः ।
माधवीशः स्वयं साधुः प्रभुःपतिः सतां पतिः ॥७४॥
एवं सा साधुपंक्तौ वै भोजनेन विपापिनी ।
शुद्धा जाता ततश्चास्या विवेकः समपद्यत ॥७५॥
अहोऽहं वञ्चनाकर्त्री सर्वथा पापकारिणी ।
यत्र पापानि नश्यन्ति तत्रापि वञ्चनापरा ॥७६॥
भोजनार्थं कृता प्रतारणा किं क्षुद्रकर्मणा ।
मोक्षकर्म करोम्यद्याऽधुना चोत्तरकालिकम् ॥७७॥
साधुसेवां सतीसेवां कृत्वाऽपराधनाशनम् ।
वन्दनं च सतां मोक्षं यास्ये वै परमं पदम् ॥७८॥
इति विचार्य सहसा लब्ध्वा धनाम्बराणि च ।
ययौ साधुनिवासं सा ददौ तेभ्यो धनाम्बरम् ॥७९॥
भोजनं प्रददौ चापि पादसंवाहनं व्यधात् ।
सतां पादजलं पीत्वा तुष्टाऽभवद् रजो न्यधात् ॥८०॥
शिरस्येव शरीरेऽपि वक्षसि श्रीहरिभिता ।
उवाच सत्तमं तत्र गुरुं भद्रायनं हि सा ॥८१॥
मोक्षो मे स्याद् यथा येन वञ्चनापापसंक्षयः ।
पुनर्जन्म भवेन्नैव तथा मे कुरु सद्गुरो ॥८२॥
श्रुत्वा भद्रायनः साधुर्वैष्णवोत्तम उक्तवान् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥८३॥
रट मन्त्रं सदा साध्वि काषायाम्बरधारिणी ।
जटायुक्ता भस्मयुक्ता नारायणपरायणा ॥८४॥
याहि श्रीकुंकुमवापीं यत्र श्रीकृष्णमापतिः ।
विराजते हि भगवान् साक्षात् सर्वान्तरः प्रभुः ॥८५॥
अवतारी चाक्षरेशो यत्रास्ते लोमशः ऋषिः ।
अश्वपट्टसरस्तीर्थे वर्तते पावनं परम् ॥८६॥
यत्र सन्ति च तीर्थानि महर्षयोऽप्यनेकशः ।
साध्व्यश्च साधवश्चापि मुक्ता मुक्तानिकास्तथा ॥८७॥
श्रीराधामाणिकीकृष्णारमाभूकमलादिकाः ।
कोट्यर्बुदाब्जसख्यश्च नारायणस्य पत्निकाः ॥८८॥
सुराः सुराण्यो योगिन्यो विद्यन्ते याहि तत्र ह ।
भुक्तिर्मुक्तिस्तव स्यातां पापानां नाशनं तथा ॥८९॥
यद्यप्यत्र हि साधूनां सेवया पापनाशनम् ।
जातं तव विशुद्धिश्च जाता मा खेदमावह ॥९०॥
तथापि भूतले कृष्णकान्तं प्राप्य सुखाश्रया ।
दिव्या भूत्वा याहि मोक्षं मा चिरं विषलाणिके ॥९१॥

इत्युक्त्वा विषलाणी सा बद्रिके द्रुतमेव हि ।
पद्भ्यामाक्रम्य मार्गेषु ययावश्वसरोवरम् ॥९२॥
स्नात्वाऽऽश्रमं लोमशस्य गत्वा पादाववन्दयत् ।
पादजलं ततः पीत्वा नत्वा महर्षिमण्डलम् ॥९३॥
आश्रमस्य रजो देहे सम्मृज्य कीर्तनं हरेः ।
गायमाना ययौ कृष्णनारायणं प्रभुं हरिम् ॥९४॥
अनादिश्रीकृष्णनारायणश्रीवल्लभम् प्रभुम् ।
प्रत्यक्षं शान्तियुगरूपं सुन्दरं पुरुषोत्तमम् ॥९५॥
दृष्ट्वा मुमोह सहसा मूर्तौ स्तब्धाऽभवत् क्षणम् ।
आसक्ता ध्यानमग्ना च कृष्णलीनेव साऽभवत् ॥९६॥
सेन्द्रियाऽन्तःकरणा सा सजीवा तन्मयी तदा ।
देहभानविहीना च जाता सा योगिनी यथा ॥९७॥
बद्रिके क्षणमात्रं चेन् मूर्तौ मे सर्वथा स्थितिम् ।
निश्चलां लभते कश्चित् पूतो मुक्तिमवाप्नुयात् ॥९८॥
अधैर्यप्रेरिया द्राक् सा कृष्णपार्श्वमुपागता ।
कृष्णनारायणं चांके कृत्वा चुचुम्ब भावुकी ॥९९॥
हरिस्तां चुम्बनं दत्वाऽपावयत् समतोषयत् ।
स्पर्शमात्रेण मुक्ता सा भवसागरबन्धनात् ॥१००॥
बद्रिके दिव्यदेहा सा राधेव समजायत ।
युवती सद्गुणैर्युक्ता वासनादोषवर्जिता ॥१०१॥
सर्वकर्मविहीना सा ब्राह्मी स्त्रीः समजायत ।
ज्ञानवती दिव्यदृष्टिमती श्रीवल्लभम् प्रभुम् ॥१०२॥
अस्तौत् साध्वी पादजलं पपौ हरेस्ततो द्रुतम् ।
विमानमागतं दिव्यं कृष्णनारायणेच्छया ॥१०३॥
आरुह्य त्वाज्ञया दिव्याक्षरं पदं ययौ हि सा ।
एवं प्रतारिणी नारी विषलाणी सतां हरेः ॥१०४॥
योगेन पावनी भूत्वा ययौ मोक्षपदं परम् ।
बद्रिके श्रवणादस्य वञ्चनाऽघं प्रणश्यति ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने वञ्चयित्र्या विषलाणीनामिकायाः सतां प्रासादिकाज-जलभोजनादिना विवेकोद्भवः, तीर्थेऽनादिकृष्ण-नारायणप्राप्त्या मोक्षणं चेत्यादिनिरूपण-नामा त्रिंशोऽध्यायः ॥ ३० ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि कटकर्त्र्याः कथामपि ।
भोजस्वतीतटे ग्रामे कालंजरे द्रुमान्विते ॥ १ ॥
कटकर्त्र्यभवच्छूद्री नाम्ना गंगाञ्जनीति वै ।
सा सौराष्ट्रे कटान् श्रेष्ठान् ग्रथित्वा वंशपात्रिकाः ॥ २ ॥
बृसीर्निर्माय च याति पत्तनं विक्रयार्थिनी ।
धर्मांगदपुरं गत्वा विक्रीणाति यथार्हणम् ॥ ३ ॥
सायं दामोदरं नत्वा प्रयाति निजपत्तनम् ।
प्राप्य धनं चान्नमपि वस्त्रं यद्वा ह्युपार्जितम् ॥ ४ ॥
नीत्वा याति निजं ग्रामं कालंजरं तु वै द्रुतम् ।
गत्वा गृहेऽन्नवस्त्रादि मञ्जूषायां निधाय सा ॥ ५ ॥
यथापेक्षं भोजनादि पाचयत्येव भामिनी ।
तस्याः पुत्र्यभवत्त्वेका दशवर्षा कुमारिका ॥ ६ ॥
पतिस्तु निधनं प्राप्तः कुटुम्बं विद्यतेऽपि न ।
विधवा कटकर्त्री सा गंगाञ्जनी सुधार्मिकी ॥ ७ ॥
रात्रौ भुक्त्वा करे कृत्वा मालामावर्तयत्यपि ।
कन्यका कुरुते गीतिं श्रीकृष्णरासरञ्जनीम् ॥ ८ ॥
विधवा शृणुते सम्यक् कृष्णसंलग्नमानसा ।
एवं गीत्युत्तरं निद्रां गृह्णीतो मातृपुत्रिके ॥ ९ ॥
नित्यमेवं हि कुरुतो भजनं श्रीहरेर्निशि ।
कदाचिद् रैवततीर्थे यातः कार्तिकमासि ते ॥१०॥
सतां च साध्विकानां च कुर्वाते सेवनं परम् ।
चमत्करान् गीयमानान् कृष्णनारायणस्य वै ॥११॥
शृणुतस्तेऽतिभावेन कुंकुमवापिकेशितुः ।
असंख्यानां तु भक्तानां स्त्रीणां दिव्यचमत्कृतीः ॥१२॥
शृणुतः श्रीरमाराधाकमलानां चमत्कृतीः ।
साधुसाध्वीभक्तवर्यगीतसद्गुणसत्क्रियाः ॥१३॥
चमत्कारान् परचौंश्च शृणुतो भक्तिभावतः ।
विक्रमान् दयया दीनानाथोद्धारादिकानपि ॥१४॥
शृणुतो बहुधा तत्र प्रदक्षिणपथे मुहुः ।
पुत्री रमाञ्जनी हर्षे प्राप्य पप्रच्छ मातरम् ॥१५॥
मातर्गुणान् प्रगायन्ति सहस्रशोऽपि साधवः ।
अनादिश्रीकृष्णनारायणस्य परमात्मनः ॥१६॥
स भवेत् क्व मिलेद् वा न प्रभुः राधारमापतिः ।
दर्शनार्थे मनो मेऽत्र तीर्थे तमनुधावति ॥१७॥
यत्र वा स्यात् प्रगन्तव्यं कुंकुमवापिकास्थलीम् ।
सार्थक्यं तु तदा मे स्याद् दर्शनं मे प्रकारय ॥१८॥
अथ माता मुक्ततुल्या सद्विचारं विभाव्य वै ।
सन्तं नाम्ना सुरदेवायनं पप्रच्छ सर्वथा ॥१९॥
क्वाऽऽस्ते श्रीभगवान् कृष्णनारायणोऽत्र गीयते ।
साधुभिः साध्विकाभिश्च यात्रिकैर्यः प्रकीर्त्यते ॥२०॥
यच्चरित्राणि शृण्वन्त्याः कन्याया मे मनो गतम् ।
तत्प्रभुं प्रति यात्रार्थे मया गन्तव्यमित्यपि ॥२१॥

वद मे तन्महिमानं कीदृशो भगवान् स वै ।
कथं देवैः साधुवर्यैर्गीयतेऽयं स्थले स्थले ॥२२॥
राधापतिं कमलेशं विहाय माणिकीपतिम् ।
कीर्तयन्ति कथं साध्व्यस्तैर्थिक्यश्चाऽप्यसंख्यकाः ॥२३॥
विष्णुं रुद्रं वामनं वा दत्तात्रेयं नृसिंहकम् ।
विहाय रामं तं कृष्णंवल्लभाऽऽर्ये रटन्ति ताः ॥२४॥

मन्ये वैशेष्यमेवाऽस्मिन् भवेत्तन्मे निवेदय ।
इत्युक्तो बद्रिके साधुः सुरदेवायनस्तु ताम् ॥२५॥
जगादोपासनासिद्ध्यै वस्तुस्थितिं गरीयसीम् ।
शृणु त्वं तस्य माहात्म्यं गंगाङ्गनि ! वदामि ते ॥२६॥
अत्र दामोदरो देवो राजते रैवताचले ।
वामनस्त्रिविक्रमः स बलिराजनिषेवितः ॥२७॥

भगवान् वर्तते तस्माच्छ्रेष्ठौ नरनरायणौ ।
बद्रिकाश्रमवासौ तौ बद्र्या सार्कं विराजितौ ॥२८॥
हिमालये सुरगंगातीरावासौ तु तापसौ ।
भगवन्तौ प्रजानां तु कल्याणार्थे विराजितौ ॥२९॥

ततोऽपि भगवान् श्रेष्ठः श्वेतद्वीपनिवासकृत् ।
नारायणः कमलायाः कान्तः श्रीदेवताधिपः ॥३०॥
ततोऽपि च प्रभुः श्रेष्ठः क्षीरसागरवासकृत् ।
शेषनारायणः श्रीशो वर्तते सिद्धसेवितः ॥३१॥
ततोऽपि भगवानास्ते श्रेष्ठो विष्णुः प्रभुः परः ।
जलावरणतश्चोर्ध्वे वैकुण्ठे तु तृतीयके ॥३२॥
ब्रह्माण्डानां रक्षकः स सर्वेषां दैत्यनाशकृत् ।
ततोऽपि च महाविष्णुर्वर्तते भगवान् महान् ॥३३॥
वैराजस्य पिता वृद्धो श्रीपुराणीश्वरो हरिः ।
महालक्ष्मीपतिर्हिरण्मयो राजाधिराजकः ॥३४॥
या सा तत्र महालक्ष्मीः सा स्थितौ कंभरासतौ ।
वर्तते कुंकुमवाप्यां माता श्रीपरमात्मनः ॥३५॥
महाविष्णुः पिता चास्ते गोपालकृष्णनामवान् ।
तद्गृहे श्रीहरिश्चास्तेऽवतारी परमेश्वरः ॥३६॥
महाविष्णोः परश्चास्ते भूमाख्यः पुरुषः परः ।
अव्याकृते शुभे धाम्नीश्वराणां न्यायदः प्रभुः ॥३७॥

ततः श्रेष्ठोऽस्ति भगवान् वासुदेवाऽभिधः प्रभुः ।
अमृताख्ये निजे धाम्नि रमानाथो विराजते ॥३८॥
ततः श्रेष्ठतमः श्रेष्ठे वैकुण्ठे भगवान् प्रभुः ।
लक्ष्मीनारायणश्चास्ते यन्नाम्ना संहिताऽस्ति च ॥३९॥
लक्ष्मीपतिः प्रभुः सोऽयं वर्तते भगवान् सदा ।
ततोऽपि च महानास्ते राधाकृष्णः परः प्रभुः ॥४०॥

असंख्यगोपिकाकान्तो गवां सेवापरायणः ।
गोलोके वंशिकाधृक् स भक्तकल्याणकृत् प्रभुः ॥४१॥
एवमन्यानि धामानि राजन्ते तत्र विंशतिः ।
द्वे चान्ये कोटिशश्चापि साकेतादीनि सन्त्यपि ॥४२॥
तत्र तत्र कृतवासा अवतारास्तु ये मताः ।
ततोऽप्यनन्ते चाऽपारे ब्रह्मलोकेऽक्षराभिधे ॥४३॥

धाम्नि संराजते व्याप्ते परब्रह्म स्वयं हरिः ।
अवतारी परमेशः सर्वेशः पुरुषोत्तमः ॥४४॥
अनादिश्रीकृष्णनारायणः श्रीपरमेश्वरः ।
सर्वावतारधर्ताऽसौ सर्वैश्वर्यसमन्वितः ॥४५॥
सर्वेषामवताराणां पतिर्मुक्तपतिः प्रभुः ।
मुक्तानिकापतिः सर्वश्रीपतिर्माणिकीपतिः ॥४६॥

सर्वस्वामी परब्रह्म यत्समो नाऽधिकोऽपरः ।
तस्याऽऽज्ञापालकाः सर्वेऽवताराः सन्ति धामसु ॥४७॥
ईश्वराणामीश्वरः सः प्रभूणां स प्रभूत्तमः ।
भगवतां स भगवान् हरीणां परमो हरिः ॥४८॥
कृष्णानां परमः कृष्णो रामाणां राम उत्तमः ।
नृसिंहानां नरसिंहः परमः स परेश्वरः ॥४९॥
सर्वात्मनां परमात्मा श्रीशानां श्रीश्वरेश्वरः ।
परमात्मा स सर्वेषां त्रिसृष्टिपरमात्मनाम् ॥५०॥
ब्रह्मणां स परब्रह्म परेषां ब्रह्मणामपि ।
परमो ब्रह्मराट् श्रीमत्कृष्णनारायणः स वै ॥५१॥
अनन्ताः सृष्टयस्तस्याऽवताराश्चाप्यनन्तकाः ।
अनन्ताः शक्तयस्तस्याऽसंख्यपत्न्यश्च तस्य वै ॥५२॥
सर्वं यस्य शरीरं वै भोग्यं जडं च चेतनम् ।
तस्याऽक्षरब्रह्मणः स भोक्ता नेता प्रभुः पतिः ॥५३॥
अक्षरातीत एवाऽसौ कार्ष्णीनां कान्त एकलः ।
जीवसृष्टिरीशसृष्टिर्ब्रह्मसृष्टिस्तु यत्कृता ॥५४॥
यन्निमिषे भवन्त्येव लीयन्ते निमिषाच्च वै ।
धामसृष्टय एवाऽस्य संकल्पाधीनविग्रहाः ॥५५॥
अवतारा भगवन्तश्चास्य संकल्पमूर्तयः ।
साध्व्यश्चास्य शक्तयश्च सर्वा वै पावनीस्त्रियः ॥५६॥
साधवस्तु समस्तान्यैश्वर्याण्यस्य भवन्ति वै ।
एतादृशोऽयं भगवान् सर्वेषां ब्रह्मणां पतिः ॥५७॥
अनादिश्रीकृष्णनारायणः श्रीकान्तवल्लभः ।
सौराष्ट्रे बालको भूत्वा बालकृष्णो हि वर्तते ॥५८॥
श्रीमद्गोपालकृष्णस्य गृहे श्रीकंभरात्मजः ।
यन्मूर्तेर्नेत्रजात्तेजःकिरणात् सर्वसृष्टयः ॥५९॥

तेजस्विन्यः प्रवर्तन्ते सूर्यचन्द्राग्निविद्युतः ।
यच्छ्वासाद् देहिनः सर्वे वर्तन्ते प्राणधारिणः ॥६०॥
यद्विधारणशक्त्या वै ब्रह्माण्डगोलकान्यपि ।
अम्बरे सम्प्रवर्तन्ते व्यवस्थितानि सर्वदा ॥६१॥
यदाज्ञप्ता महामाया त्रिगुणा सृष्टिवर्धिनी ।
सर्वेषां पूरिका सौख्यकर्त्री सदा प्रवर्तते ॥६२॥
यदिच्छया समुद्राश्च मेघा जलं ददत्यपि ।
यदिच्छया तु पृथिवी भूताधारा सदा मता ॥६३॥
यः स कृष्णपतिः कृष्णनारायणो हृदन्तरे ।
अन्तर्यामी तु सर्वेषां वर्तते साक्षिदर्शकः ॥६४॥
इन्द्रियेषु हरिश्चास्ते तथाऽन्तःकरणेष्वपि ।
देहेषु पञ्चभूतेषु स आस्ते पुरुषोत्तमः ॥६५॥
आत्मसु चेतनेष्वेव गुणेषु कर्मकोटिषु ।
भावनासु हरिः सोऽयमास्ते श्रीपुरुषोत्तमः ॥६६॥
नारीषु नरवर्गेषु नपुंसकेषु स प्रभुः ।
कन्यासु साधुसाध्वीषु वृद्धासु युवतीष्वपि ॥६७॥
विशेषु च विचित्रेषु पशुपक्षिद्रुमादिषु ।
देवदैत्यासुरवृन्दे चास्ते स पुरुषोत्तमः ॥६८॥
रैवताद्रौ स एवास्ते जनसंघेषु चापि सः ।
कुंकुमवापिकाक्षेत्रे चाश्वपट्टसरोवरे ॥६९॥
स एवास्ते परब्रह्म कोट्यर्बुदाब्जशक्तिपः ।
कृत्वा प्रदक्षिणं तत्र गमिष्यामो वयं तदा ॥७०॥
आगन्तव्यं त्वया मातः सहाऽस्माभिः सकन्यया ।
अनादिश्रीकृष्णनारायणस्य परमेशितुः ॥७१॥
प्रत्यक्षं दर्शनं सेवां करिष्यामः स्वयंप्रभोः ।
इत्युक्ता सा भागवती गंगाञ्जनी सतां पुरः ॥७२॥
दासीव वर्तमाना च किंकरीव व्यवर्तत ।
कार्तिकस्य पूर्णिमाया उत्तरं साधवश्च ते ॥७३॥
साध्व्यश्च जनसंघाश्च भक्ताश्च कोटिशोऽपि च ।
ययुश्चाश्वपट्टसरोऽक्षरक्षेत्रं तु पावनम् ॥७४॥
कुंकुमवापिकातीर्थे लोमशस्याश्रमं प्रति ।
अश्वपट्टसरोवारि पपुस्ते स्नानमाचरन् ॥७५॥
कृत्वा तीरस्थतीर्थानि लोमशस्याश्रमं ययुः ।
महर्षेर्दर्शनं कृत्वा पूजयित्वा ऋषीन् मुनीन् ॥७६॥
आपुर्विश्रान्तिमपि ते विशालवनराजिषु ।
लोमशेन प्रदत्तो वै मन्त्रस्तेभ्यो हि पावनः ॥७७॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
साधुभ्यश्चापि साध्वीभ्यः सेविकाभ्यस्तथा तदा ॥७८॥
पुंभ्यश्च यात्रिकेभ्यश्च ददौ मन्त्रं तु लोमशः ।
गंगाञ्जन्यै रमाञ्जन्यै ददौ मन्त्रं तदा ऋषिः ॥७९॥
ययुस्तेऽथ ततः श्रीमत्कृष्णनारायणालयम् ।
पूजनं दर्शनं चक्रुर्न्यधुश्च विविधोपदाः ॥८०॥
पुष्पचन्दनपत्राद्यैः फलैरम्बरभूषणैः ।
अक्षतैर्मणिरत्नाद्यैरर्हयामासुरच्युतम् ॥८१॥
बालकृष्णं रूपवन्तं परमेशं परात्परम् ।
विलोक्य मुमुहुस्तत्र ध्यानमग्नास्तदाऽभवन् ॥८२॥
आसक्तचित्ता नार्यश्च नरास्तु लग्नमानसाः ।
अभवन् श्रीपरमेशे जन्मसाफल्यमाप्नुवन् ॥८३॥
बहवस्तत्र देहांश्च विसृत्य दिव्यविग्रहान् ।
लब्ध्वा दिव्यविमानैश्च ययुः स्वर्गं तु शाश्वतम् ॥८४॥
परे ययुश्चाऽक्षरं च धाम मुक्ताः परात्परम् ।
नार्यः कृष्णे लग्नचित्ताः साध्व्यश्च दिव्यविग्रहाः ॥८५॥
आषोडशवत्सराढ्या ययुर्धामाऽक्षरं हरेः ।
गंगाञ्जनी दिव्यदेहा लीनजर्जरविग्रहा ॥८६॥
भूत्वा षोडशवर्षाढ्या ययौ धामाऽक्षरं प्रभोः ।
रमाञ्जनी सुता तस्या मात्राज्ञया हरेः पुरः ॥८७॥
कुंकुमवापिकाक्षेत्रे कृष्णनारायणगृहे ।
दासीव वर्तमाना सा किंकरीव सदाऽवसत् ॥८८॥
एवं बद्रीप्रिये कृष्णनारायणेन वै तदा ।
चमत्कारो दर्शितो वै नीताः सहस्रशोऽक्षरम् ॥८९॥
अपि साध्व्यः साधवश्च तथा कर्तुं हि पारगाः ।
तर्हि नारायणे कृष्णे किमु वक्तव्यमच्युते ॥९०॥
यत्र सन्तश्च साध्व्यश्च यत्र सर्वेश्वरः प्रभुः ।
तत्र माया समर्था न न कालो न च कर्म च ॥९१॥
नैव प्रभवो नियमा न शास्त्रं न नृपादयः ।
न देवा नाऽवताराश्च समर्थाः श्रीहरेः पुरः ॥९२॥
कर्तुं तथाप्यकर्तुं चान्यथाकर्तुं स्वयं हरिः ।
समर्थश्च स्वतन्त्रश्च नियामकोऽधिराजकः ॥९३॥
तत्कृतं नाऽन्यथाकर्तुं केनापि शक्यते क्वचित् ।
अन्यकृतं त्वन्यथाकर्तुं स समर्थ एकलः ॥९४॥
तमनादिकृष्णनारायणं कान्तमवाप्य सा ।
रमाञ्जनी रमातुल्या ब्रह्मप्रिया ततोऽभवत् ॥९५॥
दिव्या दिव्यस्वरूपाढ्या दिव्यदेहाऽतिसुन्दरी ।
चमत्कारपरा साध्वी ब्रह्मप्रिया हरेः प्रिया ॥९६॥
एवं बद्रीप्रिये ! लोके साक्षात्कृष्णसमागमात् ।
शौचहीना अपि नार्यो नित्यशुच्यो भवन्ति हि ॥९७॥

यस्य योगेन मायाऽपि दिव्या प्रजायते सदा ।
तदा किं मायिकानां तु देहानां गणना हरेः ॥९८॥
तेजोयोगेन सर्वं वै तेजोभावमुपैति हि ।
कृष्णयोगेन सर्वं वै कृष्णभावमुपैति हि ॥९९॥
गोप्यो गावो राधियान्यः प्राचीन्यः पर्यं इत्यपि ।
हारीतक्यस्तथाऽमर्यश्चाम्रिकान्यस्तथोष्णिजाः ॥१००॥
अन्या असंख्ययोगिन्यो जाताः कृष्णार्पिता रमाः ।
इत्येवं बद्रिके यान्ति दिव्यतां कटिनी यथा ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
कटकर्च्या मञ्जाञ्जन्याः सतां योगेन परमेश-
योगान्मोक्षणं रमाञ्जन्या रमात्वं चेत्यादि-
निरूपणनामैकत्रिंशोऽध्यायः ॥ ३१ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि फणाग्रामस्य वासिनीम् ।
कुलालीं कुंभकर्त्री वै भक्तां नाम्ना सुनारिणीम् ॥ १ ॥
भद्रातीरे फणाग्रामेऽवसत् सा कुंभकारिणी ।
मृत्तिकानां सुपात्राणि निर्माय पतिनोदिता ॥ २ ॥
विक्रीणाति गृहे नैजे न याति सा बहिः क्वचित् ।
पतिर्नाम्ना रणस्तम्बो धृत्वा पात्राणि वाहने ॥ ३ ॥
पक्वानि बहुधान्येव याति ग्रामान्तरं क्वचित् ।
विक्रयार्थं ततो मूल्यं चान्नं प्राप्य निजगृहम् ॥ ४ ॥
प्रयात्येव सदा स्वायद्रव्याद् भागं दशांशकम् ।
कृष्णार्थं साधुसाध्व्यर्थं व्ययत्येषो हि धार्मिकः ॥ ५ ॥
रटते श्रीकृष्णनारायणं श्रीपुरुषोत्तमम् ।
पात्रेषु कृष्णकृष्णेति लिखत्येषः शलाकया ॥ ६ ॥
गृहे तेन कृता मूर्तिः कृष्णनारायणस्य हि ।
बद्रिके पूजनं तस्याः करोति कुंभकृत् प्रगे ॥ ७ ॥
सुनारिणी च तत्पत्नी स्नात्वा करोति पूजनम् ।
रोटकं चापि तक्रं च नैवेद्ये प्रददाति वै ॥ ८ ॥
जलं दीपं मुखवासं पूगीफलं ददाति च ।
नत्वा करोति कार्याणि प्रत्यहं तदनन्तरम् ॥ ९ ॥
मध्याह्नेऽपि तथा तस्मै निवेद्य भोजनादिकम् ।
प्रासादिकं सदाऽश्नाति कुंभकारोऽपि वै ततः ॥१०॥
करोति याम्रिकाणां च सेवां सतां सुयोगिनाम् ।
साध्वीनां च यतीनां च भक्तिभावेन भोजनैः ॥११॥
पादसंवाहनाद्यैश्च जलपानादिभिस्तथा ।
आवासदानैः सततं शुश्रूषया मुहुर्मुहुः ॥१२॥
अपुत्रयोस्तयोरिच्छा पुत्रार्थिनी व्यवर्तत ।
साधूनामग्रतस्तौ तु पृच्छमानौ सुसाधुभिः ॥१३॥
अनपत्यौ जगदतुश्चाशीर्वादौस्तु साधवः ।
साऽपत्यौ पुत्रिकापुत्रवन्तौ भवतमित्यम् ॥१४॥
युञ्जन्त्येव सदा भक्त्या प्रसादिता महाशयाः ।
अथ कालान्तरे पुत्रोऽभवन्मानसरञ्जनः ॥१५॥
साधुधर्मा साधुवृत्तिः सर्वसम्पद्विवर्धनः ।
यस्य कण्ठेऽभवच्चिन्हं मालायाः शोभनं परम् ॥१६॥
दृष्ट्वा तु मुमुदे माता पिता चान्येऽपि दर्शकाः ।
साधवश्च तथा सत्यो वीक्ष्य मालां मुदं ययुः ॥१७॥
पुत्रोऽपि सततं ध्यानी नारायणेति वाङ्मयः ।
अनभ्यस्तोऽप्यत्र देहे पूर्वाभ्यासेन शिक्षितः ॥१८॥
नारायणेति वै नाम जग्राह काकलीगिरा ।
अहो भाग्यमहो भाग्यं यद्गृहे मालिकायुतः ॥१९॥
सुतो नारायणभक्तो व्यजायत सतां कृपा ।
सुतो व्यवर्धत भक्त्या वर्ष्मणा यशसा धिया ॥२०॥
आयान्ति विश्रुतं द्रष्टुं कीदृङ्मालायुतो हि सः ।
साधवो बहवः सत्यो यात्रालवोऽप्यनेकशः ॥२१॥
आयान्ति मानवाश्चापि ग्रामनगरवासिनः ।
देशगाश्चापि सौराष्ट्रनरनार्यः सकौतुकाः ॥२२॥
द्रष्टुमायान्ति तं बालं मालायुक्तं मनोहरम् ।
बालो नारायणं कृष्णं बालकृष्णं श्रियःपतिम् ॥२३॥
अनादिश्रीकृष्णनारायणं हरिं रटत्यति ।
श्रुत्वा दृष्ट्वा क्षणं स्थित्वा कृत्वा बालकवन्दनम् ॥२४॥
महाभक्तं तु देवांशं मत्वा कृष्णांशमेव वा ।
दत्वोपदा अन्नवस्त्रमुद्रास्वर्णफलानि च ॥२५॥
रत्नमाणिक्यपात्राणि प्रयान्ति कृतिपावनाः ।
कुंभकारगृहं पूर्णं समृद्ध्या जातं सुसम्पदा ॥२६॥
जनप्रवाहसंशोभं साधुवासैस्तु मन्दिरम् ।
पुत्रप्राप्त्या प्रसिद्धं च तीर्थं सर्वमनोहरम् ॥२७॥
अथैकदा ऋषिस्तत्र सारायणः समाययौ ।
सेवितः कुंभकाराभ्यां प्रसादितश्च भोजनैः ॥२८॥
वन्दितश्चापि पृष्टश्च पुत्रस्य मालिकां प्रति ।
कथं मालासमं चिन्हं कीदृशं भाग्यमस्य तु ॥२९॥
कीदृशोऽयं च किंकर्मा किमायुः किंविधो ह्ययम् ।
श्रुत्वा सारायणः साधुर्दृष्ट्वा रेखां ललाटजाम् ॥३०॥
भाग्यं क्षणेन वै ज्ञात्वा वीक्ष्य प्राग्भवजं तथा ।
उवाच कुंभकारं तं रणस्तम्बं हितावहम् ॥३१॥

रणस्तम्भ भवानास्ते भक्तराट् सह योषिता ।
कृष्णनारायणः साक्षाद् भगवान् सेव्यते त्वया ॥३२॥
मूर्तिरूपो गृहे नित्यं सेव्यन्ते साधवस्तथा ।
साध्व्यश्च तीर्थतुल्या वै सेव्यन्ते तीर्थयायिनः ॥३३॥
तव पात्राणि सर्वाणि मृज्जातानि तु यानि वै ।
तत्र त्वया कृष्णकृष्ण लिख्यते स्मर्यते हरिः ॥३४॥
पावनं हृदयं तेऽस्ति पत्नी ते पावनी सदा ।
भक्तानी वर्तते साध्वी यथा मुक्तानिका सती ॥३५॥
साधुसाध्वीयोगियतिजनाशीर्वादतस्तव ।
गृहे पुत्रोऽयमुत्पन्नो नक्षत्रेशो हि चन्द्रमाः ॥३६॥
पत्नी ते नित्यमेवाऽत्र प्रातः पूजनकारिणी ।
हरिं चार्थयते साध्वी पुत्रं चन्द्रनिभं शुभम् ॥३७॥
हरेः कृपया साधूनामाशीर्वादैस्तथा तव ।
नक्षत्रमालिकाकण्ठः पुत्रोऽयं समजायत ॥३८॥
देवता चन्द्रमाश्चास्ते पुत्रस्तेऽयं तु मानवः ।
अपि देवसमश्चास्ते कृष्यन्ते येन मानवाः ॥३९॥
चन्द्रांशं तं सुतं प्राप्य लभ स्वर्गसुखानि वै ।
भाविकाले सुतस्तेऽयं मानवानां महान् गुरुः ॥४०॥
वैष्णवः परमः श्रेष्ठो भविष्यति न संशयः ।
चन्द्रस्तम्भेति तन्नाम ख्यातं लोके भविष्यति ॥४१॥
पुत्रवान् धनवान् भूत्वा ततः साधुर्भविष्यति ।
पित्रोर्मुक्तिं कारयित्वा त्यागवान् स भविष्यति ॥४२॥
इत्युक्त्वा ऋषिराट् नारायणो ययौ तु रैवतम् ।
कुंभकारौ समाकर्ण्य प्रसन्नौ हृष्टमानसौ ॥४३॥
चन्द्रपितरौ स्वौ ज्ञात्वा मेनाते भाग्यमुत्तमम् ।
चन्द्रस्तम्भं देवरूपममन्येतां ततश्च तौ ॥४४॥
बालं सौभाग्यसम्पन्नं सिद्धिप्रसेवितं सुरम् ।
चन्द्रजन्मत आरभ्य कुंभकारगृहेऽनिशम् ॥४५॥
सम्पदो वै समायान्ति समायान्ति विभूतयः ।
अन्नसत्रं महत्तेन कुंभकारेण निर्मितम् ॥४६॥
यत्र नित्यं सहस्रं वै मानवानां तथाऽधिकम् ।
भुंक्ते मिष्टान्नमुत्कृष्टं राजाधिराजराज्यवत् ॥४७॥
रणस्तम्भश्चैकदा तु तीर्थयात्रामियेष ह ।
सुनारिणीं प्रियामाह यास्यामोऽक्षरतीर्थकम् ॥४८॥
गुरुर्नो लोमशो यत्र यत्र श्रीपुरुषोत्तमः ।
परब्रह्म स्वयं बालकृष्णः इष्टो विराजते ॥४९॥
पुत्रस्य मन्त्रलब्धिः स्याद् गुरोर्हरेश्च दर्शनम् ।
सतां ब्रह्मप्रियाणां च दर्शनं ब्रह्मवादिनाम् ॥५०॥
अश्वपट्टसरःस्नानं देवतीर्थादिदर्शनम् ।
भवेच्च पुत्रसाफल्यं सर्वसाफल्यमित्यपि ॥५१॥
इत्येवं बद्रिके कृत्वा निश्चयं पुत्रसार्थकौ ।
सुनारणीरणस्तम्भौ ययतुः कुंकुमस्थलीम् ॥५२॥
चन्द्रस्तम्भो नैकसंख्यमणिरत्नाजवत्रयुक् ।
पितृभ्यां सहितस्तद्वत् फणिप्रभाजनैः सह ॥५३॥
शकटीयानवाहाद्यैरश्ववृषक्रमेलकैः ।
सहस्रमानवैर्नारीनरैः सह ययौ तथा ॥५४॥
माघस्य पूर्णिमायां ते चाश्वपट्टसरोवरम् ।
प्रापुः श्रीकुंकुमवापीतीर्थवारि पपुर्मुदा ॥५५॥
अश्वपट्टसरोवारि पपुः स्नात्वा दिनान्तके ।
सायमारार्त्रिकं चक्रुः सरोवरस्य ते तदा ॥५६॥

श्रीबद्रीप्रियोवाच—

आरार्त्रिकफलं श्रीमन्नरनारायणप्रभो ।
लोकानां श्रेयसे मह्यं ब्रूहि मोक्षप्रदं परम् ॥५७॥

श्रीनरनारायण उवाच—

बद्रिके वर्तिकया त्वेकया घेनुघृताक्तया ।
आरार्त्रिकविधातुस्तु महेन्द्रपदमुत्तमम् ॥५८॥
तिसृभिर्वर्तिकाभिर्वै सूर्यपदमनुत्तमम् ।
पञ्चभिर्वर्तिकाभिस्तु बृहस्पतेः पदं भवेत् ॥५९॥
सप्तभिर्ब्रह्मणः स्थानं नवभिः शिवमन्दिरम् ।
एकादशभिर्वैराज्यं त्रयोदशभिर्हिरण्मयम् ॥६०॥
पञ्चदशभिर्महाभौमं भवेत् पदं परं ततः ।
एकपंचाशद्वर्तिकाभिर्वासुदेवधाम च ॥६१॥
एकशतवर्तिकाभिर्वैकुण्ठं वै भवेत्तथा ।
एकाधिकशतद्वयवर्तिकाभिर्निराजकः ॥६२॥
गोलोकं याति बदरि श्रीकृष्णं सेवते मुदा ।
एकाधिकपञ्चशतवर्तिकाभिर्निराजकः ॥६३॥
अक्षरं परमं धाम प्रयात्येव न संशयः ।
एकाधिकसहस्रवर्तिकाभिस्तु नीराजनम् ॥६४॥
यः करोति स वै तत्राऽक्षरे गत्वोत्तमोत्तमे ।
अनादिश्रीकृष्णनारायणस्य चरणद्वये ॥६५॥
दासो वा दासिका भूत्वा शाश्वतानन्दमश्नुते ।
तादात्म्ययोगमासाद्य सर्वस्वामित्वमश्नुते ॥६६॥
सर्वैश्वर्याधिकारित्वं सर्वाधिक्यं समश्नुते ।
ब्रह्मप्रियात्वं शश्वद्वै हरिप्रियात्वमित्यपि ॥६७॥

महामुक्तत्वमेवाऽपि महामुक्तानिकात्वकम् ।
अश्नुते सर्वकामाँश्च सह श्रीपरब्रह्मणा ॥६८॥
एवं फलं बद्रिकेऽश्वपट्टारार्त्रिकजं शुभम् ।
अश्वपट्टजले देवाः पितरः सिद्धकोटयः ॥६९॥
साधवो मुनयो योगिवर्या गणाश्च पार्षदाः ।
ब्रह्मव्रतास्तापसाश्च निवसन्ति च मातरः ॥७०॥
देव्यः सर्वा निवसन्ति तीर्थान्यपि वसन्ति च ।
रुद्रब्रह्महरयश्च वसन्ति चावतारकाः ॥७१॥
तदारार्त्रिककरणात् सृष्टित्रयनीराजनम् ।
कृतं भवति तत्पुण्यं सर्वे कर्तुः प्रजायते ॥७२॥
कृत्वा चारार्त्रिकं पश्चात् सान्ध्यं विधिं विधाय च ।
अनादिश्रीकृष्णनारायणस्य स्वर्णमन्दिरम् ॥७३॥
ययुर्हरेर्दर्शनार्थे श्रीपतेः परमात्मनः ।
दिव्यगजासने देवैर्देवीभिस्तु निराजितः ॥७४॥
पूजितः सिद्धसंघैश्च ब्रह्मप्रियाभिरर्चितः ।
मुक्तैर्भक्तैः शक्तिभिश्च तीर्थैरुपासितो द्विजैः ॥७५॥
सद्भिर्गीतो महर्ष्याद्यैर्वीक्षितस्तैः परेश्वरः ।
उपदाभिः पूजितश्च फणाग्रामजनादिभिः ॥७६॥
कुम्भकारैस्तथा रत्नमण्यादिभिश्च भूषणैः ।
सत्कृतः श्रीहरिर्बद्रि चन्द्रस्तम्बेन चार्चितः ॥७७॥
तदा चन्द्रोऽभवच्चन्द्रो मृगवाहन उज्ज्वलः ।
पश्यतां सर्वलोकानामोषधीनां पतिस्तु यः ॥७८॥
अमृतस्य घटं श्रीमत्कृष्णनारायणाय सः ।
प्रददावुपदारूपं चन्द्रकान्तमणिं तथा ॥७९॥
हरिर्जग्राह सहसा प्रसन्नस्तं मणिं घटम् ।
धारयामास कण्ठे तं मणिं घटं श्रियै ददौ ॥८०॥
नीराजनं व्यधुः कृष्णनारायणस्य ते ततः ।
हरिश्चापि ददौ तेभ्यः प्रासादिकं निजामृतम् ॥८१॥
अक्षरब्रह्मधामोत्थं पाययामास ताँस्तदा ।
तृप्तयामास तान् सर्वान् सत्कारं प्रचकार च ॥८२॥
कृतकृत्याश्च ते भूत्वा ययुः श्रीलोमशाश्रमम् ।
पूजयामासुरेनं ते ददुः फलादिकं शुभम् ॥८३॥
न्यूषुस्तत्राश्रमे रात्रौ विशाले सुखसागरे ।
भजनं कीर्तनं चक्रू रात्रौ श्रीपरमात्मनः ॥८४॥
प्रातर्मन्त्रं जगृहुश्च गुरोः श्रीलोमशान्मुनेः ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥८५॥
ततो न्यूषुः पक्षकालं अमायां निशि वै ततः ।
आश्चर्यं दर्शयामास चन्द्रस्तम्बो निशार्धके ॥८६॥
पूर्णचन्द्रः स्वयं भूत्वा कौमुदीं समवासृजत् ।
दुग्धायमानां पृथिवीमम्बरं च सरोवरम् ॥८७॥
कुंकुमवापिकाक्षेत्रं समन्ताद्धवलं व्यधात् ।
आप्रातस्तादृशो भूत्वा तेजस्तिरो व्यधात्ततः ॥८८॥
कुंभकारसुतो भूत्वा व्यराजत जनादिषु ।
एवं देवः स्वयं भक्तगृहे सौराष्ट्रके सदा ॥८९॥
भूत्वा तु मानवश्चास्ते लोककल्याणहेतवे ।
ततश्चान्तदिने श्रीमल्लोमशस्योपदेशनम् ॥९०॥
भुत्वा वैराग्यवेगेन सर्वे त्यक्त्वा गृहाश्रमम् ।
त्यागाश्रमं जगृहुश्च साध्व्यश्च साधवोऽभवन् ॥९१॥
चन्द्रस्तम्बायननामाऽभवच्चन्द्रो हि साधुराट् ।
रणस्तम्बायनसाधुः पिताऽभवत्तदैव हि ॥९२॥
सुनारिणी सती तत्राऽभवत् साध्वी नरायणी ।
अन्या अन्ये च तत्रैव तस्थुस्त्वाजीवनं मुदा ॥९३॥
फणाग्रामजनाश्चापि श्रीकृष्णहरियोगतः ।
मुक्तिमापुः समयेन महाक्षरपदं ययुः ॥९४॥
रणस्तम्बोऽपि कालेन सुनारण्या समं ततः ।
मुक्तिमवाप परमाऽक्षरधाम्नि पदे हरेः ॥९५॥
सेवां लेभे ततश्चन्द्रस्तम्बायनोऽपि मुक्तराट् ।
चन्द्रांशं दिवि चोत्सृज्य भूत्वा मुक्तस्वरूपकम् ॥९६॥
अनादिश्रीकृष्णनारायणेच्छयाऽक्षरं पदम् ।
ययौ मुक्तो महान् भूत्वा पादयोः परमात्मनः ॥९७॥
किमु ते महिमा बद्रि कथयामि हरेरिह ।
माणिकीस्वामिनः श्रीमत्कृष्णकान्तस्य चात्मनः ॥९८॥
फणाग्रामस्ततो जातश्चन्द्रग्रामेति विश्रुतः ।
अश्वपट्टसरोवारितीर्थे चान्द्रं च तत्र तु ॥९९॥
कौमुदीनामकं तीर्थं तत आरम्य गीयते ।
पठनाच्छ्रवणाचस्य बद्रिके तैजसं वपुः ॥१००॥
सम्प्राप्य मुक्ततां लब्ध्वा महामोक्षमवाप्नुयात् ।
नरो नारी महानीराजनपुण्यं लभेत च ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने सौराष्ट्रे फणाग्रामस्थस्य रणस्तम्बाख्यकुंभकारस्य गृहे सुनारिणीस्त्रीभक्त्या चन्द्रजन्म, चन्द्रस्तम्बादिकृता कुंकुमवापीयात्रा, तत्र सर्वेषां वासो मोक्षणं चेत्यादिनिरूपणनामा द्वात्रिंशोऽध्यायः ॥ ३२ ॥

श्रीनरनारायण उवाच—
शृणु बद्रीप्रिये देवि स्वर्णकारिणिकाकथाम् ।
मध्यदेशे नर्मदायास्तटे माणिक्यपत्तने ॥ १ ॥

स्वर्णकारकुटुम्बानि भूपालमानितानि वै।
अवसन् स्वर्णरूप्याणां कलाकौशल्यवन्ति हि ॥ २ ॥
पुत्राः पुत्र्यश्च दासाश्च वर्तन्ते स्वर्णकारिणाम्।
व्यापारान् कानकान् सर्वे कुर्वन्त्याभूषणानि च ॥ ३ ॥
विभिन्नान्यपि पात्राणि तथोपस्करणानि च।
प्रदर्शनानि रूपाणि रचयन्ति बहून्यपि ॥ ४ ॥
धातुजानि नैकधा संविक्रयादि दधत्यपि।
राजानो राज्यमान्याश्च राष्ट्रमान्याश्च वै प्रजाः ॥ ५ ॥
प्रजेश्वराः श्रेष्ठिनश्च क्रयं कुर्वन्ति चापणात्।
स्वर्णकाराः कलया वै सुवर्णे मेलनं मनाक् ॥ ६ ॥
बहु वा भिन्नधातूनां कृत्वा कुर्वन्ति भूषणम्।
शुद्धं तु कुन्दनं कश्चिद् भूषार्थं चार्पयत्यपि ॥ ७ ॥
तत्रापि धातुसम्मेलं कृत्वा निष्कासयन्ति तत्।
मिश्रे स्वर्णे विशेषेण मिश्रणं विदधत्यपि ॥ ८ ॥
स्तेनकर्म विधायैव रचयन्ति हि भूषणम्।
एवंविधाः स्वर्णकारा राज्यभूषाकरा अपि ॥ ९ ॥
भवन्ति स्म च लक्षाणां कोटीनां भूषणाकराः।
शृंगारकारिणश्चापि स्तैन्येन धनिनोऽभवन् ॥१०॥
स्तैन्यं तु बद्रिके नैव हितकृत् कस्यचित् क्वचित्।
प्राप्ते तु दशमे वर्षे समूलं हि विनश्यति ॥११॥
अथैकदा तु तद्देशेऽवग्रहश्चाऽभवन्मुहुः।
दुर्भिक्षपीडिता लोका लभन्तेऽन्नं न वै क्वचित् ॥१२॥
महाराष्ट्रेऽभवदन्नं त्वसंख्यं वृष्टियोगतः।
विना मूल्यं न चाप्येत धनं नाऽभूत् प्रजाकरे ॥१३॥
प्रजा निर्धनदारिद्र्यदुःखिता अन्नवर्जिताः।
उच्छृंखलास्ततो जाता लूटनं चारभन्त वै ॥१४॥
युद्धसैन्यसमान्येव प्रजानां मण्डलानि वै।
उद्वृत्तानि लूटकानि प्रासरत् पत्तनेऽभितः ॥१५॥
राजगृहे तथा श्रेष्ठिवसतौ स्वर्णकारिषु।
यत्र यत्राऽभवत् स्वर्णं रूप्यकं ताम्रजं धनम् ॥१६॥
अपहृत्य समस्तं तद् ययुरन्नार्थमुल्बणाः।
महाराष्ट्रप्रदेशेषु गत्वाऽन्नानि तु लेभिरे ॥१७॥
स्वर्णकारा धनहीना मूलधनैश्च वर्जिताः।
ततोऽन्नवर्जिताश्चापि बभूवुः क्षुत्प्रपीडिताः ॥१८॥
प्रजाबाला बालिकाद्याः पुत्राः पौत्रादयोऽवराः।
पीड्यन्ते त्वन्नविधुरा म्रियन्ते क्षुत्प्रपीडिताः ॥१९॥
विकरालस्वरूपं वै दुष्कालेन धृतं तदा।
प्रजा मृत्युमयाक्रन्दनामयन्नान् स्थले स्थले ॥२०॥
मण्डलानि मिलित्वाऽपि ग्रामे ग्रामे पुरे पुरे।
हरेर्नाम्नां कीर्तनानि कुर्वन्ति वृष्टिवाञ्छया ॥२१॥
पूजनानि प्रकुर्वन्ति शुष्कपत्रादिभिः प्रजाः।
भावद्रव्यैः पूजयन्ति चार्तनादैः स्तुवन्त्यपि ॥२२॥
मृतदेहानपर्यन्ति हरये सुतबान्धवान्।
एवं जाते हि दुष्काले शरण्यो नोपलभ्यते ॥२३॥
तत्र वृद्धा भक्तिमती स्वर्णकर्त्री तु पावनी।
आसीन्नाम्ना हेमसुधा संकल्पसिद्धिशालिनी ॥२४॥
या पूर्वं त्वाज्ञया पत्युः पितृभ्यां सहिता ययौ।
कुंकुमवापिकाक्षेत्रं तत्र श्रीलोमशं मुनिम् ॥२५॥
गुरुं चकार सा नारी मन्त्रं जग्राह तन्मुखात्।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥२६॥
जजाप सा नित्यमेव मन्त्रं सहस्रवारकम्।
अनादिश्रीकृष्णनारायणेति रटनं सदा ॥२७॥
बालकृष्णहरे कृष्णकान्तेति भजनं मुहुः।
चक्रे कर्मसु सर्वेषु वार्धक्येऽपि तु भावतः ॥२८॥
पूजां प्रातः करोत्येव मूर्तेः पुष्पजलादिभिः।
नैवेद्यं चारात्रिकं च शयनं कारयत्यपि ॥२९॥
मिलित्वा बहुधा नार्यस्तद्गृहे चोत्सवं हरेः।
कुर्वन्त्यपि साधवश्च सत्यश्चायान्ति तद्गृहम् ॥३०॥
सेवतेऽन्नबलवस्त्रैः पादसंवाहनादिभिः।
सतीः साधून् यथेष्टं च दानेन रञ्जयत्यपि ॥३१॥
आशीर्वादान् साधवस्ते दत्वा यान्ति स्थलान्तरम्।
एवं पुण्यवती साऽऽसीद् यद्गृहं तीर्थमुत्तमम् ॥३२॥
पावनं सर्वदा त्वासीत् सदा नारायणाश्रयम्।
सिद्धयाश्रयं तथाऽऽसीच्च दुष्कालेऽप्यन्नमक्षयम् ॥३३॥
यद्गृहे वर्तते कृष्णनारायणप्रतापतः।
वर्धन्ते दिव्यकणकाः कुसूले वर्धते घृतम् ॥३४॥
यदन्नं चेयमिच्छेद् वा प्रातर्नैवेद्यकारिणी।
तत् कुसूले लभ्यतेऽपि शाकपत्रादिकं तथा ॥३५॥
एवं सिद्धिमती साऽऽसीन्नान्ये जानन्ति तादृशीम्।
तथापि दुःखिता लोका मरन्ति तान् विलोक्य सा ॥३६॥
दयापराऽभवद् वृद्धा परोपकृतिशालिनी।
बालिकाभ्यश्च बालेभ्यो विधवाभ्यस्तथा दिने ॥३७॥
सगर्भाभ्योऽतिवृद्धाभ्यो दीनाऽनाथेभ्य इत्यपि।
मध्याह्ने स्वगृहं यातेभ्यो ददाति हि रोटकम् ॥३८॥
निष्कास्य स्वगृहचुल्लीपार्श्वस्थकोष्ठलात्ततः।
प्रेम्णा ददाति सा वृद्धा भुक्त्वा यान्ति क्षुधाकुलाः ॥३९॥

नैतद् विदितं सर्वेषां ततोऽन्ये मानवाः स्त्रियः ।
भक्ताया दुर्भिक्षकाले भक्तिं निन्दन्ति दुःखिताः ॥४०॥
अहो भक्तिर्न वै लोके रोटकं प्रददाति हि ।
न दुष्कालं मारकं च निवारयति चागतम् ॥४१॥
न भक्त्या पूर्यते स्थाली न मुखं नोदरं तथा ।
न भक्त्या क्षुन्निवृत्तिश्च तृषानाशोऽपि नैव च ॥४२॥
न भक्त्या कालनाशश्च न वा मृत्योर्निवारणम् ।
न भक्तिर्भोजनार्थं वै जायते कवलात्मिका ॥४३॥
किं भक्त्या शुष्कया त्वत्र साहाय्यं तु यया न वै ।
मृषा भक्तिर्हि देवानां मृषा नारायणस्य च ॥४४॥
एतादृशे महाकाले नाऽन्नं भक्तिर्ददाति वै ।
न भक्तीनां कवला वै भवन्ति सा मृषा ततः ॥४५॥
न वा कृष्णो न वा विष्णुर्दुष्कालेऽन्नं प्रयच्छति ।
बालाश्च बालिकाश्चापि म्रियन्ते तेषु निर्घृणः ॥४६॥
पश्यन्त्वियं महावृद्धा हेमसुधाऽत्र पत्तने ।
भक्तिमती विद्यतेऽपि दुःष्कालेऽन्नं ददाति न ॥४७॥
भक्तिस्तस्या निष्फलाऽस्ति जातं दुर्भिक्षकं कथम् ।
भक्तिर्नैव महाकालं निवारयति भाति नः ॥४८॥
धिक् तत्र साधवः साध्व्यः खादन्त्यायान्ति यान्ति तान् ।
न साहाय्यं प्रकुर्वन्ति दुष्काले हरिजीविनः ॥४९॥
एवमज्ञजनास्तस्या निन्दां कुर्वन्ति वै तदा ।
वद्रिके साधुसाध्वीनां भक्तेर्निन्दां हरेस्तथा ॥५०॥
बुभुक्षिता जना लोका मिथः कुर्वन्ति पीडिताः ।
सैषा वाणी कर्णपरम्परया वृद्धया श्रुता ॥५१॥
अथ कालं चमत्कारस्यैव विज्ञाय भामिनी ।
हरेः प्रतापमुत्कृष्टं दर्शयितुं तदा स्वयम् ॥५२॥
इयेष वृद्धा सहसा हेमसुधा हरिप्रिया ।
प्रातः सा स्थालिकां धृत्वा करे च दण्डिकां करे ॥५३॥
पीटयित्वा ध्वनयित्वा निर्जगाम तु पत्तने ।
महापथे विचिन्तेव श्रावयत्येव मानवान् ॥५४॥
येभ्यो वै भोजनं चास्त्यपेक्षणीयं गृहे मम ।
आगन्तव्यं हि मध्यान्हे दुर्भिक्षदुःखितैर्जनैः ॥५५॥
एवं सा नगरे कृत्वा प्रकाशाऽऽमन्त्रणं ततः ।
आयाता स्वगृहं तत्र सस्मार श्रीपतिं हरिम् ॥५६॥
अनादिश्रीकृष्णनारायणं लक्ष्मीं च लोमशम् ।
साक्षात् ते त्वाययुर्भक्त्या निषेदुः सत्कृता गृहे ॥५७॥
दिव्या दिव्यविभूषाढ्या रूपरूपानुयोगिनः ।
प्रसन्नवदनाः स्वेष्टदेवाः कल्याणकारिणः ॥५८॥
वन्दिताः पूजिता भक्त्या सत्कृता भोजितास्तथा ।
अर्थिताः प्रार्थिताः स्थातुं पूरयितुं निवेदिताः ॥५९॥
भक्तिवशास्ते वृद्धायास्तथैवेति समाचरन् ।
विष्णुश्चोत्पादकस्तत्र रोटकाणां तदाऽभवत् ॥६०॥
लक्ष्मीश्चाऽऽपूरिका तत्र भोजनानां तदाऽभवत् ।
लोमशश्चाऽभवत् तत्र दाता सततयत्नवान् ॥६१॥
हेमसुधा जलानां च प्रदात्री तु तदाऽभवत् ।
तावद्वै मानवा दीना अनाथा भिक्षुकाः स्त्रियः ॥६२॥
नरा नार्यः साधवश्च सत्यश्च क्षुत्प्रपीडिताः ।
अन्ये खलाश्च निन्दादिकर्तारोऽपि क्षुधान्विताः ॥६३॥
कुतूहलात्तु हास्यार्थं वीक्षितुं तत्र चागताः ।
वृद्धा जाता विचित्ता किं भानहीना मृषा च किम् ॥६४॥
किं सत्यं वर्तते तत्र भक्तिः किं फलिता कृता ।
ददाति चान्नं यद्वा सा दुष्कालपरिपीडिता ॥६५॥
आह्वयत्येव वै स्थाल्या वृथा मिथ्या श्रुतं च वा ।
इत्याश्चर्यपरा लोकाः सहस्रशः क्षुधान्विताः ॥६६॥
आयाता भावयुक्ता वा अभावसहिता अपि ।
अथ श्रीलोमशो देवः प्रारभत प्रदानकम् ॥६७॥
रोटकाणां सहस्राणां सहैवैकक्षणे क्षणे ।
मानवा व्योममार्गेण क्षिप्तान् सर्वान् हि रोटकान् ॥६८॥
गृह्णन्ति न भुवं यान्ति रोटकाः क्षुधितैर्धृताः ।
भुक्त्वा भुक्त्वा प्रयान्त्येव विशाले भूतले तदा ॥६९॥
सम्मर्दस्तु महाँस्तत्र जायतेऽपि न बाधकृत् ।
आसायं दत्तवान् चान्नं लोमशाख्यो गुरुस्तदा ॥७०॥
लक्ष्मीनारायणस्तत्र विराजेते विधायकौ ।
रोटका गोधूमजा वै मिष्टमिश्रा घृतान्विताः ॥७१॥
प्राप्यन्ते चापि भुज्यन्ते तृप्तिं यन्ति तु भोजिनः ।
एवं वै लक्षशो लोका भुक्त्वा प्रोक्त्वा जयं मुहुः ॥७२॥
प्रयान्ति स्वगृहं सायं चमत्कारोऽभवद् भुवि ।
रात्रौ हेमसुधयाऽन्नसत्रं चानर्गलं कृतम् ॥७३॥
देशग्रामादिभ्य ईयुर्मानवा भिक्षुका इति ।
तेभ्योऽन्नं ते ददू रात्रावाप्रभातं दिने यथा ॥७४॥
एवं दुर्भिक्षदुःखाढ्या नरा नार्यस्तु लक्षशः ।
आययुः परितः श्रुत्वाऽऽश्चर्यं वै दिनसप्तकम् ॥७५॥
रात्रिन्दिवं प्रवाहास्तु मानवानां समुद्भवाः ।
उद्वेला इव सञ्जाता भिक्षाश्चर्यप्रप्रेरिताः ॥७६॥
भिक्षुकास्ते प्रसादान्नं भुक्त्वा भुक्त्वा व्यघाः शुभाः ।
बभूवुः पावना भक्ताश्च कृष्ण भजनं हरेः ॥७७॥

प्रभोकृष्ण बालकृष्ण श्रीकृष्णमाधवीपते ।
वृद्धानार्या क्षुधा विनाशिता ते कृपयाऽधुना ॥७८॥
प्रशंसन्ति हरिं ते तु स्तुवन्ति नित्यतर्पिताः ।
एकवारं येन भुक्तः प्रसादः परमात्मनः ॥७९॥
मासं मासं न वै तेषां क्षुधामासीद्धि बद्रिके ।
एवंविधं चमत्कारं प्रापुस्ते मानवास्तदा ॥८०॥
आगत्यागत्य तु सर्वे जगृहुर्मन्त्रमुत्तमम् ।
वृद्धा तेभ्यो लोमशाद्वै दापयत्येव तन्मनुम् ॥८१॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
लक्षशो मानवास्तत्र वैष्णवाश्चाऽभवन् शुभाः ॥८२॥
वृद्धया चार्थितः कृष्णनारायणोऽपि वर्षणम् ।
प्रचकार ततो भूमौ तृप्तिदं शीतलैर्जलैः ॥८३॥
अरण्यानि च वाट्यश्च क्षेत्राणि च वनानि च ।
मानसानि चापणानि जातान्यौदार्यवन्ति च ॥८४॥
पश्चान्नफलपुष्पाद्यैः ऋद्धानि तानि चाऽभवन् ।
वृद्धा सा हेमसुधिका देवतावत् प्रपूज्यताम् ॥८५॥
अवाप कृष्णयोगेन तापसी लोकरक्षिणी ।
हेमसुधाऽन्नदा देवी त्वन्नपूर्णाऽभवद् भुवि ॥८६॥
ततः पूजां परां प्राप्य लक्ष्मीलोमशमाधवाः ।
तिरोऽभवन् ततः स्थानात् कुंकुमक्षेत्रमाययुः ॥८७॥
हेमसुधाऽन्नपूर्णा तु दिव्यदेहा व्यजायत ।
कथयित्वा हि सर्वेभ्यो गन्तुं कुंकुमवापिकाम् ॥८८॥
तिरोऽभवत् सहसा सा पश्यतां लक्षदेहिनाम् ।
कुंकुमवापिकाक्षेत्रमम्बरेण समाययौ ॥८९॥
हरेः सेवापरा नित्यं वर्तते चरणाम्बुजे ।
दिव्यदेहा दिव्यमुक्तानिका दासी तु पावनी ॥९०॥
षोडशाब्दा दिव्यमूर्तिर्नित्यं तस्थौ हरेः पुरः ।
अथ ते नार्मदक्षेत्रवासा माणिक्यवासिनः ॥९१॥
यात्रार्थं त्वाययुर्दिव्यं क्षेत्रं कुंकुमवापिकाम् ।
लक्षशो मानवा नार्यो नरा जन्ममहोत्सवे ॥९२॥
अष्टादशे कृष्णनारायणजयन्तिकोत्सवे ।
दर्शनार्थं पूजनार्थं कल्याणार्थं तथाऽऽययुः ॥९३॥
प्रददुश्चोपदाः सर्वे पुपूजुर्मणिरत्नकैः ।
चन्दनैरक्षतैः पौष्पहारमालाभिरच्युतम् ॥९४॥
अनादिश्रीकृष्णनारायणं श्रीमाणिकीपतिम् ।
लोमशं च तथा चाश्वसरो लक्ष्मीमपूजयन् ॥९५॥
तीर्थविधिं प्रचक्रुश्च न्यूषुर्मासचतुष्टयम् ।
माघस्नानं विधायैव कृतकृत्याश्च तेऽभवन् ॥९६॥
सहस्रशो नरा नार्यो लीनसंकल्पवासनाः ।
बालकृष्णप्रभावेण ययुर्धामाऽक्षरं हरेः ॥९७॥
अन्येऽभवन् साधवश्च साध्व्यश्चाऽप्यभवँस्तदा ।
अपरे वैष्णवाः सर्वे कृत्वा तीर्थं ययुर्गृहम् ॥९८॥
इत्येवं बद्रिके लोककल्याणकारिणी सती ।
सुवर्णकारप्रमदा जाताऽन्नपूर्णिका सुरी ॥९९॥
ततः कालान्तरे प्राप्ता पदं शाश्वतमक्षरम् ।
स्वर्णकारादिजातीनां प्रजानां पापनाशनम् ॥१००॥
हरेः प्रसादभोज्यादिदानेन सा चकार ह ।
भुक्तिमुक्तिप्रदा नारायणी सा च ततोऽभवत् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने माणिक्यपत्तनीयाया हेमसुधानाम्न्याः स्वर्णकारिण्या भक्त्या भगवताऽसंख्यमानवानां भोजनादि दुर्भिक्षेऽर्पितं मोक्षणं च कृतं सापि मुक्तिं नीतेत्यादिनिरूपणनामा त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि विष्टिनार्याः कथां शुभाम् ।
सौराष्ट्रे धनधृङ्नाम्नि नगरे चातिशोभने ॥ १ ॥
राज्ञो देवर्द्धिसिंहस्य शासने संप्रवर्धिते ।
विषयो बहवश्चासन् मनुष्यवाहकोत्तमाः ॥ २ ॥
यत्स्कन्धेषु स्थिताः स्त्रियो न कम्पं यान्ति वै मनाक् ।
शिबिकास्था न मन्यन्ते भेदं शिबीविमानयोः ॥ ३ ॥
विष्टयस्ते कृताभ्यासा वहन्ति नृपतिं गुरुम् ।
मातॄंश्च राजमातॄंश्च वधूजनान् सतीजनान् ॥ ४ ॥
निर्वहन्ते भ्रमवाहा वहनोद्भवसद्धनैः ।
राज्ञः कुटुम्बिनश्चापि परिचरन्ति दासवत् ॥ ५ ॥
यात्रालुमानवान्नारीवर्गान् वरान् विवाहितान् ।
श्रेष्ठिनश्च तथा राज्याधिकारिणो वहन्त्यपि ॥ ६ ॥
क्वचित् साधून् सतीः साध्वीर्वहन्ति त्वातपादिषु ।
तीर्थात् तीर्थान्तरं चापि प्रसेवन्ते तु वैष्णवान् ॥ ७ ॥
देवानामुत्सवेष्वेते वहन्ति देवतास्तथा ।
परिभ्रमन्ति नगरे देवमूर्तीः समूह्य वै ॥ ८ ॥
एवं सेवापराः सर्वे विष्टयो भोयिसंज्ञिनः ।
दासवर्गा नरा नार्यः प्रसेवन्ते महज्जनान् ॥ ९ ॥
सतां तन्नगरे त्वासीन्मण्डलं कृतमन्दिरम् ।
सदुत्तमोऽभवत्तत्र स्वामी श्रीराधिकायनः ॥१०॥

राधातुल्यो हरेर्भक्तो विरागवान् हरौ रतः ।
तत्राऽन्ये साधवश्चासन् पञ्चाशत् शिष्यशाखिनः ॥११॥
साध्व्यश्चासन् विंशतिश्च श्रीकृष्णप्रतिमाऽपि च ।
बालकृष्णप्रतिमा श्रीयुता तन्मन्दिरेऽभवत् ॥१२॥
कीर्तनानि भवन्त्येव विष्टीनां सद्भिरादरात् ।
सहितानां च साध्वीनां गीतिकाश्च भवन्ति वै ॥१३॥
पूजनं प्रोत्सवाश्चापि भवन्ति विष्टिभिः कृताः ।
विष्टयोऽपि सहस्रं ते राधिकायनसेविनः ॥१४॥
राधिकायनशिष्यास्ते ह्यासन् परमवैष्णवाः ।
प्रातः स्नानपरा ध्यानपरा नैवेद्यभोजनाः ॥ ५॥
तीर्थार्चनपराः साधुसेवापराश्च तेऽभवन् ।
नरा नार्यः समस्तास्ते बालाश्च बालिकास्तथा ॥१६॥
बालकृष्णातिभक्ताश्चाऽभवन् निःसंशयाऽनुगाः ।
देहेन मनसा द्रव्यैः साधुसेवापरायणाः ॥१७॥
येषां वै संशयो नाऽभूत् सतां क्रियासु सर्वथा ।
भोजने शयने स्नाने मर्दने चांगवाहने ॥१८॥
विहारे हसने दिव्ये चमत्कारे च लौकिके ।
विवस्त्रे वा सवस्त्रे वा विकारे निर्विकारिणि ॥१९॥
रमणे रामणे वापि भुवि दोलाधिरोहणे ।
गमने धावने वापि गायने कलहेऽपि च ॥२०॥
सर्वथा साधुचर्यासु संशयो नैव यद्धृदि ।
तादृशा विष्टयश्चासन् कृपापात्राणि ते सताम् ॥२१॥
राधायनसतः प्राप्तमन्त्राः श्रीपरमात्मनः ।
आत्मनिवेदिनः सर्वे सर्वस्वार्पणतत्पराः ॥२२॥
साधुं साध्वीं प्रमन्यन्ते नारायणं नरायणीम् ।
नारायणयोर्योगेन नारायणत्वमाप्यते ॥२३॥
एवंविधानां विष्टीनां विश्वासवशगो हरिः ।
अनादिश्रीकृष्णनारायणोऽपि वशगोऽभवत् ॥२४॥
तत्र विष्टिकृतां पूजां गृह्णाति नित्यमन्दिरे ।
गृहे गृहे हरिर्गत्वा गृह्णात्यर्हणमुत्तमम् ॥२५॥
प्रत्यक्षस्य श्रीहरेस्ते कुर्वन्ति पूजनं महत् ।
चन्दनैरक्षतैस्तैलैः सुगन्धिभिश्च कुंकुमैः ॥२६॥
हार्दैर्भावैस्तथा प्रेम्णा स्नेहेन हृदयार्पणैः ।
देहार्पणैस्तथा सर्वार्पणैर्नार्योऽर्चयन्त्यपि ॥२७॥
शृंगारयन्ति विष्टीनां कन्यका मुग्धमानसाः ।
बालकृष्णं प्रभुं कान्तं वीक्ष्य सर्वांगसुन्दरम् ॥२८॥
काचित् कृत्वा स्तनयोश्च चरणौ परमात्मनः ।
कण्ठे कृत्वा करौ तस्य सुखं भुंक्ते हि शाश्वतम् ॥२९॥

काचित् स्वस्या मुखे कृष्णमुखं चाकृष्य सर्वथा ।
स्वमुखं तन्मुखे युक्त्वा स्वादं भुंक्ते परात्मनः ॥३०॥
काचित् कृष्णं निजं कान्तं मत्वा शय्यागता सती ।
आसज्ज्य सर्वथा देहे कामसुखं समश्नुते ॥३१॥
काचित् कृष्णं निजदेहासने धृत्वा स्वपित्यति ।
काचित् स्पर्शं गण्डयोश्च सक्थ्नोश्च जंघयोस्तथा ॥३२॥
जघनस्योदरस्यापि करोति मोदते मुहुः ।
काचिद् धृत्वा कृष्णपादौ संवाहनं करोति च ॥३३॥
काचित् स्वोरसि कृत्वैव तादात्म्यं योगमेति च ।
काचित् प्रचुम्बते कृष्णं काचिदाश्लिष्य तिष्ठति ॥३४॥
नखान्नारायणं त्वन्या शिखापर्यन्तमेव तम् ।
सर्वांगं तृष्णया दिव्यं विलोकयति सुन्दरी ॥३५॥
अपरा श्रीहरये तु नैवेद्यं मिष्टमुत्तमम् ।
दुग्धसारादिकं कृत्वा संभोजयतिकन्यका ॥३६॥
इतरा शाकपत्रं पाचयित्वा स्वादगर्भितम् ।
पोलिकाभिः समं कान्तं प्रभोजयति कन्यका ॥३७॥
परा तु श्रीहरिं कण्ठे पादयोः करयोस्तथा ।
स्वर्णभूषा धारयति मुकुटादीनि सुन्दरी ॥३८॥
तथाऽन्या कज्जलं कृष्णनेत्रयोः प्रददात्यपि ।
चन्दनं भालफलके तलयोश्चाप्यलक्तकम् ॥३९॥
ओष्ठयो रञ्जनं देहे तैलं ददाति भावुकी ।
नखरञ्जनकार्ये च करोत्यन्याऽतिमोहिता ॥४०॥
कृष्णमेकान्तमालम्ब्य महानन्दं समश्नुते ।
दधि भक्तं सह भुंक्ते स्थाल्यां मुखे ददात्यपि ॥४१॥
जलं पाति च पिबति ताम्बूलं प्रददात्यपि ।
अतिस्नेहभरा कान्ता भुंक्ते ताम्बूलजं रसम् ॥४२॥
अन्या वृद्धा बालकृष्णं वीक्ष्य वीक्ष्य तु सुन्दरम् ।
अन्तःसुखं भुञ्जते वै ध्यायन्त्येकाग्रमानसाः ॥४३॥
सिंहासने सुखद्वायां शुभासने नरायणम् ।
उपावेश्य स्वयं चाग्रे ह्यासीना मोदते क्षणम् ॥४४॥
व्यजनेनाऽनिलं शीतं ददाति परमात्मने ।
पुष्पहारान् ग्रथित्वा तं शृंगारयति सर्वथा ॥४५॥
देहस्य मर्दनं चान्या द्रवैः कुर्वन्ति तत्क्षणे ।
स्नपयन्ति जलैर्गन्धैः स्नेहैर्द्रवार्पणैस्तथा ॥४६॥
शृंगारितस्य नाथस्याऽऽरार्त्रिकं ह्याचरन्ति च ।
अवस्थाप्योच्चपर्यंके पुरः स्थित्वा स्त्रियोऽपराः ॥४७॥
नृत्यन्ति चापि गायन्ति गीतिका मण्डलात्मिकाः ।
रासं कुर्वन्ति देहानामुत्क्षेपणाऽभिकर्षणैः ॥४८॥

कृष्णस्तासां मानसानि पूरयत्येव सादरः ।
नीत्वा भावभरां भावं पूर्णं करोति वै रहः ॥४९॥
उद्यानादौ वाटिकासु क्षेत्रेषु मन्दिरेष्वपि ।
वृक्षस्तम्बान्तरे नद्यां पुलीनेषु वनेष्वपि ॥५०॥
गृहेषु गोष्ठभागेषु गर्तेषु गह्वरेऽपि च ।
गृहकक्षास्वपि यथा यथेच्छावती तत्र ह ॥५१॥
नारायणो भाववशो याति तस्यां सुक्रीडति ।
भक्तमानसपूरोऽयं भक्ताऽऽनन्दप्रदायकः ॥५२॥
अनादिश्रीकृष्णनारायणः सुखं ददाति हि ।
बद्रिके त्वाबालवृद्धा विष्टिसुन्दर्य उत्सुकाः ॥५३॥
कृष्णं बुभुजिरेऽत्यर्थं देहेन्द्रियात्ममानसैः ।
एवं विष्टिजनाः कृष्णं सत्कारयन्ति तत्क्षणे ॥५४॥
राजाधिराजवद् वृद्धाः पूजयन्ति स्म माधवम् ।
युवानो युवभावाढ्यं रञ्जयन्ति सुसेवया ॥५५॥
कुमारास्तु सखायं तं प्रसादयन्ति खेलनैः ।
यथेष्टं स हरिर्विष्टिजनतोषणमावहत् ॥५६॥
सर्वविष्टिकुटुम्बानि पावितानि हि चक्रिणा ।
एवं भक्तिवशो नाथो बद्रिकेऽपावयत्तदा ॥५७॥
संक्षेपात् कथितं तेऽत्र प्रत्यहं पावयत्यपि ।
एतादृशानां भक्तानां कृष्णस्त्वेकान्ततां गतः ॥५८॥
न यमा न नियमा नाऽऽम्नायो नापि च शासनम् ।
न पद्धतिर्न चाचारः सर्वनाथे प्रवर्तते ॥५९॥
सर्वनाथेन ये भक्तिमन्तो जनास्तु नाथिताः ।
तादात्म्यस्वीकृतास्तेषु प्रवर्तन्ते न ते तथा ॥६०॥
कृष्णाचारस्तदा धर्मः कृष्णस्नेहश्च सत्कृतिः ।
कृष्णाप्तिः सत्फलं दिव्यं कृपा कृष्णस्य साधनम् ॥६१॥
कृष्णक्रिया महायज्ञः कृष्णार्थे पुरुषार्थकः ।
कृष्णभावो महायोगो विज्ञानं कृष्णदर्शनम् ॥६२॥
कृष्णस्य शयनं धाम मुक्तिस्तु कृष्णभोगिता ।
सिद्धयः श्रीकृष्णनारायणे साफल्यमुत्तमम् ॥६३॥
जीवनं श्रीकृष्णपार्श्वे वर्तनं हरिसन्निधौ ।
विहारोऽपि रहः कृष्णे निवृत्तिः कृष्णशान्तता ॥६४॥
प्रवृत्तिः श्रीकृष्णनारायणचेष्टानुवर्तनम् ।
कर्तव्यं च विधिश्चापि कृष्णप्रसादनार्थकम् ॥६५॥
रतिः प्रीतिश्च संकल्पः काम आनन्द उत्सवः ।
सर्वे तु ते हरौ चात्मनिवेदिनां तु बद्रिके ॥६६॥
नात्मनस्तत्र पार्थक्यं जानाति भक्तिदासिका ।
नापि कृष्णेतरं भुंक्ते लावण्यवर्जितं तु तत् ॥६७॥
सर्वे रसाः सर्वगन्धाः सर्वस्पर्शा नरायणे ।
सर्वाः भूतयः श्रीकृष्णे सर्वार्थदर्शनं हरौ ॥६८॥
आहाराश्च विहाराश्च येषां सर्वे हि माधवे ।
आनन्दाश्च प्रमोदाश्च नारायणे श्रियः पतौ ॥६९॥
भावा हासा विलासाश्च युगलत्वं हरौ तथा ।
वरत्वं स्वामिता कृष्णे नाथता च विवाहनम् ॥७०॥
लग्नग्रन्थिर्हरौ येषां तेषां मोक्षे न संशयः ।
जीवतां भुक्तिमोक्षाख्या महानन्दा हरेर्गृहे ॥७१॥
देहान्ते नित्यभोगा सा परानन्दाऽक्षरे पदे ।
सर्वथा मन्दिरे तस्य वासो भक्तिमतां शुभः ॥७२॥
निर्मितः कृष्णकान्तेन श्रीकृष्णात्मनिवेदिनाम् ।
बद्रिके विष्टयो भोगिभक्तास्त्वात्मनिवेदिनः ॥७३॥
घनधृग्वासिनः सर्वे वैष्णवाश्चाऽमर्वैस्तथा ।
यद्गृहेषु स्वयं कृष्णः साक्षात्तिष्ठन् प्रमोदते ॥७४॥
विष्टिकुलेऽभवन्नारी नाम्ना विद्रुमिणी सती ।
सा तु भक्त्या तुर्यभावे वर्तते कृष्णमोहिता ॥७५॥
शृणु त्वं बद्रिके लज्जां त्यक्त्वा त्यक्त्वा पतिं गृहम् ।
हित्वा च मानवीं रीतिमुद्वृत्तान्ता ततोऽभवत् ॥७६॥
कृष्णे त्वात्मा मनो बुद्धिरहं चित्तं जनार्दने ।
देहेन्द्रियाणि वै कृष्णे कृष्णरंगमयानि च ॥७७॥
यथा कृष्णस्तथा सापि दिव्यचेष्टा बभूव ह ।
आश्चर्यजनिका तत्र विष्टीनां सर्वतोऽभवत् ॥७८॥
यथा विचित्ता युवती यथोन्मत्ता च मादिनी ।
यथा मस्तानिका वापि प्रमदा प्रमदान्विता ॥७९॥
वर्तते कृष्णकृष्णेति गायत्यपि हसत्यपि ।
कृष्णनारायणं कान्तं रटत्यपि मिलत्यपि ॥८०॥
जनास्तां तादृशीं वीक्ष्य रुरुधुर्बद्धमन्दिरे ।
पिहितेऽपि कपाटे सा निर्ययौ दिव्यविग्रहा ॥८१॥
गृहे क्षिप्ता जले क्षिप्ता पेटायां पूरिताऽपि सा ।
निरावरणभावा तन्निर्यान्ति दिव्यविग्रहा ॥८२॥
गृहाद् गृहान्तरं निर्गच्छति भित्तिं विभिद्य सा ।
एवमदृश्यतां याति पश्यतां सर्वदेहिनाम् ॥८३॥
क्वचित् कन्या युवती वा वृद्धा वा सुन्दरी शुभा ।
सौम्यहास्यवती कान्ता क्वचिद् रुद्री भवत्यपि ॥८४॥
प्रभाकृष्णेति कृष्णेति स्वामिकृष्णेति गायति ।
एकान्ते तं स्वामिकृष्णं नीत्वा रहसि मोदते ॥८५॥
सा वै पश्यति कान्तेशं कान्ता कृष्णमनस्विनी ।
कृष्णध्यानपरा कृष्णचेष्टा कृष्णस्वरूपिणी ॥८६॥

कृष्णरूपा क्वचिद् राधारूपा क्वचित्तु माणिकी।
क्वचित् प्रिया तु ललिता पार्वती च जया क्वचित् ॥८७॥
एवंविधां तां जनता ज्ञानवत्येव सर्वथा।
दिव्येयं खलु सम्पन्ना महामुक्तानिका त्विति ॥८८॥
मत्वा तां सिद्धदेहां च महासाध्वीं तु राधिकाम्।
लोका नार्यो नरास्तस्याः पूजां चक्रुस्ततोऽर्हणाम् ॥८९॥
पादजलं पपुश्चापि भोजयामसुरुत्सुकाः।
प्रसादं फलपुष्पादि मिष्टान्नं जगृहुस्तथा ॥९०॥
साऽपि मायामयं स्पृष्ट्वा दिव्यं करोति तत्क्षणम्।
पापिजनान् पापिनारीः करोति पुण्यशालिनीः ॥९१॥
दर्शयित्वा हरिकृष्णं सम्प्रेषयति चाऽक्षरम्।
विमोचयति तृष्णां च प्रज्वालयति वासनाम् ॥९२॥
कृष्णप्राप्तिं कारयति प्रसंगमयत्यच्युतम्।
मोक्षमार्गं दिशत्येव प्रापयत्यूर्ध्वगं पदम् ॥९३॥
विद्रुमिण्याः प्रसंगेन नरा नार्यः सहस्रशः।
पशवः पक्षिणश्चापि परां मुक्तिमगुस्तदा ॥९४॥
सन्तः साध्व्यश्च तच्छिष्या बभूवुर्वै सहस्रशः।
जनाश्च लक्षशस्तस्या मुखान्मन्त्रौ प्रजगृहुः ॥९५॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा'।
'अनादिश्रीकृष्णनारायणः स्वामी पतिश्च मे' ॥९६॥
बालकृष्णो हरिकृष्णः श्रीपतिः पुरुषोत्तमः।
सदाऽवतु प्रभुश्चास्मान् स्तुतिं त्वेवं प्रचक्रिरे ॥९७॥
एवं श्रीबद्रिके विष्टिनारी विद्रुमिणी सती।
तेनैव वर्ष्मणा दिव्या राधासमा व्यजायत ॥९८॥
आययौ सा तीर्थवासं कर्तुं लक्षजनैः सह।
कुंकुमवापिकाक्षेत्रं चाश्वपट्टसरोवरम् ॥९९॥
तादात्म्ययोगमापन्ना बालकृष्णे तिरोऽभवत्।
ब्रह्मप्रियासु दिव्यासु वर्तमानाऽवसत् ततः ॥१००॥
नरा नार्यश्च बहुधा न्यूषुर्निरन्तरं ततः।
त्यागाश्रमं परिगृह्य सन्तः साध्व्यश्च तापसाः ॥१०१॥
योगिन्यस्तापसिन्यश्च भूत्वा च यतयस्तथा।
आश्वरे दिव्यसंवासे न्युषुश्चाऽश्वसरस्तटे ॥१०२॥
अनादिश्रीकृष्णनारायणस्य चरणाश्रये।
भजित्वा संप्रसेवित्वा प्रसाद्य परमेश्वरम् ॥१०३॥
ययुर्धामाऽक्षरं दिव्यं लक्षशो विषयोऽपि च।
विद्रुमिणी विमानेन ययौ धामाऽक्षरं प्रभोः ॥१०४॥
एवं बद्रीप्रिये देवि साऽभवद् राधिकासमा।
महामुक्तानिका यस्याः स्मरणान्मुच्यते त्वघी ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने धनधृक्पचनस्थाया विष्टिनार्या विद्रुमिण्याः प्रसत्संगेन लक्षाधिमानवानां दिव्यता मोक्षणं तस्याश्च मोक्षणमित्यादिनिरूपणनामा चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि शवहर्त्र्याः कथां शुभाम्।
सौराष्ट्रे माल्वग्रामे शवदाहकरी सदा ॥ १ ॥
आसीदेका श्वपची वै श्मशानाऽऽवासकारिणी।
पतिपुत्रसुतायुक्ता सम्बन्धिबान्धवान्विता ॥ २ ॥
करोति नित्यमेवेयं श्मशाने शवदाहनम्।
करं लब्ध्वा करोत्येव निजकर्म स्वभावजम् ॥ ३ ॥
नित्यं शवानां दाहेन वैराग्यं जायते शुभम्।
क्षणं वापि चिरं वापि मृतस्य दर्शनात् खलु ॥ ४ ॥
श्वपच्या माल्वान्यास्तु वैराग्यं वर्तते तथा।
नित्यं शोचति फेरूणां विषये मरणं स्वकम् ॥ ५ ॥
अहो नित्यं व्यसव्यो वै बाला युवति वृद्धिगा।
जायन्ते च नराश्चापि बाला युवान ऊर्ध्वगाः ॥ ६ ॥
तथाऽहं मरणं लप्स्येऽकस्मादेव न संशयः।
पितरौ मे मृतौ चापि श्वशुरौ मे मृतौ तथा ॥ ७ ॥
राजा वृद्धो मृतश्चापि म्रियन्ते देहिनोऽनिशम्।
विजेतारो मृताश्चापि वैमानिका मरन्ति च ॥ ८ ॥
सर्वे नाशं समायान्ति नाशमेष्याम्यहं तथा।
मृत्युकाले न कान्तोऽपि साहाय्यार्थं बली तदा ॥ ९ ॥
अन्येषां का कथा तत्र ततः साध्यः सहायदः।
धर्मः सहायकृल्लोके परलोकेऽपि पार्श्वदः ॥१०॥
सुखं धर्मात् प्रभवति यत्र प्राणी प्रजायते।
तत्र धर्मः समं याति पुण्याख्यः परमो गुरुः ॥११॥
पुण्यं त्वात्मसहायं स्याद् दानजं सेवनादिकम्।
गोदानं पृथिवीदानं वस्त्रान्नजलदानकम् ॥१२॥
छत्रोपानच्चामरादिप्रदानं प्रसहायदम्।
पुष्पपत्रफलदानं भक्ष्यभोज्यप्रदानकम् ॥१३॥
गृहदानं वस्तुदानं चोपकरणदानकम्।
देहदानं पुत्रदानं पुत्रीदानं सुखार्पणम् ॥१४॥
व्रतदानं चात्मदानं कटिदानं प्रमोददम्।
धनदानं भूषणाद्यर्पणं क्षेत्रप्रदानकम् ॥१५॥

एवंविधानि दानानि सर्वाण्येव महापथे ।
परलोके चाग्रगाणि चोपतिष्ठन्ति सर्वथा ॥१६॥
दत्तं तत् प्राप्यते त्वग्रे नाऽदत्तं प्राप्यते क्वचित् ।
तस्मान्मया श्वपच्या वै दातव्यं दानमुत्तमम् ॥१७॥
सत्पात्रं लभ्यते तस्मै दातव्यं श्रेयसे मम ।
विचार्येत्थं श्वपची सा फलान्याहृत्य वै वनात् ॥१८॥
बदराणि चामृतानि कदलानि यथर्तु च ।
कर्मदानि जम्बूफलान्याहृत्य सा ददाति वै ॥१९॥
कन्दान् पत्राणि पुष्पाणि मधु मिष्टेक्षुदण्डकान् ।
तथाऽन्यानि पवित्राणि योग्यानि प्रददाति सा ॥२०॥
दानं मार्गागतेभ्यो वै यतिभ्यः सन्त्वय इत्यपि ।
उपयुञ्जन्ति सन्तश्च प्रक्षाल्य तत्फलादिकम् ॥२१॥
काष्ठानि मृत्तिकाश्चापि समाहृत्य ददाति सा ।
एवं करोति दानानि वृक्षत्वचां तथा तु सा ॥२२॥
कटानामासनानां च पाषाणानां प्रमर्दिनाम् ।
ओषधीनां च वल्लीनां करोति दानमित्यपि ॥२३॥
अथैवं दानधर्मेण विख्याता मालवानिका ।
अभवन्मालवे ग्रामे दात्रीतिमालवानिका ॥२४॥
दानपुण्यप्रतापेन त्वेकदा धर्मदेवता ।
नारी साध्वी स्वयं भूत्वाऽऽययौ श्वपचीमन्दिरम् ॥२५॥
अस्नाताऽभून्मालवानी रजस्वला श्मशानगा ।
शवार्धदाहसम्पन्ना प्रातरेव मलान्विता ॥२६॥
मलिनाया गृहे साध्वी यात्रामार्गेण वै प्रगे ।
समायातैकला काचित् त्यागधर्मवती सती ॥२७॥
वीक्ष्य तां त्यागिनीं साध्वीं त्वेकलां श्रमयोजिताम् ।
सहसोत्थाय चण्डाली ननाम पादयोर्द्रुतम् ॥२८॥
उवाच स्वागतं देवि मातर्नमामि चादरात् ।
यथार्हे समये सेवां करिष्ये रोचते यथा ॥२९॥
अस्म्यहं श्वपची जात्या तत्राप्यस्मि रजस्वला ।
अस्नाता च मलस्यापि विसर्गोत्तरसंस्थिता ॥३०॥
शवार्धदाहसम्पन्ना श्मशानस्था भवामि च ।
किं करोमि पवित्रायाः सत्या अर्थे वदाऽत्र मे ॥३१॥
अभ्यागतायास्ते सेवा साध्वि यथा भवेन्मया ।
स्वागतार्थे कृपया ते यदहं तन्निवेदय ॥३२॥
प्रसन्ना भव मे साध्वि योग्यं करोमि सन्दिश ।
भक्ताऽस्मि भावयुक्ताऽस्मि सेविकाऽस्मि करोमि ते ॥३३॥
सेवनं योग्यमेवाऽत्र मतं तव करोमि तत् ।
धन्यं भाग्यं मम मातर्दिनं मे सफलं त्विह ॥३४॥
दर्शनादपि सञ्जातं सेवनात्तु विशेषतः ।
भवेदेव तथा मातर्ब्रूहि शीघ्रं करोमि ते ॥३५॥
इत्येवं प्रार्थितवती भावशुद्धा तु सा तदा ।
धर्मो धर्ममतिं वीक्ष्य प्रसन्नोऽभूत्तदा द्रुतम् ॥३६॥
उवाच तां तदा धर्मदेवता सात्त्विका सती ।
देहि मे त्वासनं तूर्णं पवित्रं तत्सदा मतम् ॥३७॥
देहि मे चापि पत्राणि तुलस्याः सन्ति ते यदि ।
देहि मे फलपुष्पाणि गृहे ते सन्ति वै यदि ॥३८॥
देहि मे काष्ठपत्राणि सन्ति ते यदि मन्दिरे ।
नैतान्यशुद्धभावानि कदाचित् सन्ति भूतले ॥३९॥
पावनानि सदा सन्ति देहि मे यदि सन्ति ते ।
तिलान् वै सन्ति चेद् देहि तण्डुलकान् प्रदेहि च ॥४०॥
सम्प्रोक्ष्याऽहं ग्रहीष्यामि पावनान् वै सदा भुवि ।
इत्युक्ता सा भावभिन्ना गत्वा निजं तु मन्दिरम् ॥४१॥
आनाय्य प्रददौ साध्व्यै साध्वी संप्रोक्ष्य जगृहे ।
वृक्षलये ययौ तत्राऽऽसनं निक्षिप्य चुल्लिकाम् ॥४२॥
कृत्वा संपच्य देवेभ्यो वैश्वदेवं बलिं ददौ ।
गवे बलिं ददौ भूतबलिं ददौ ततः परम् ॥४३॥
पितृबलिं ददौ चापि नारायणबलिं ददौ ।
ततो यावत् प्रभोक्तुं वै पत्रावलीप्रपूरणम् ॥४४॥
करोति तावदेवाऽत्र कश्चिदभ्यागतः शुभः ।
आययौ श्वपचो भूत्वाऽर्थयामास तु भोजनम् ॥४५॥
साध्वी तस्मै ददौ तृप्तिप्रदं भुक्त्वा ययौ स हि ।
ततश्चान्या जरठा चाभ्यागता तत्र चागता ॥४६॥
तस्यै साध्वी ददौ तृप्तिप्रदं सा बुभुजे सती ।
भुक्तवती निषसाद तरोश्छायाश्रये तले ॥४७॥
जपं विदधती कृष्णनारायणेति मालया ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥४८॥
उच्चारणं करोत्येषा मालाकरा तु सात्त्विका ।
भुक्त्वा तु पाचिका साध्वी तामपृच्छत् तदा द्रुतम् ॥४९॥
का त्वं किं जपसि श्रीमन्नारायणं हि मालया ।
किं तेन जायते पुण्यं फलं वाऽन्यद् वदाऽत्र मे ॥५०॥
अभ्यागता तदोवाच शृणु त्वं पाचिके सति ।
मन्त्रेणाऽनेन भगवान् कृष्णनारायणो मिलेत् ॥५१॥
श्वपच्यपि च चाण्डाली द्विजतुल्या प्रभासते ।
पावनी सर्ववर्णानां मन्त्रेणाऽनेन चक्रिणः ॥५२॥
मांसादाश्चापि मद्यादाः क्रव्यादाः कुणपाशनाः ।
पूयन्ते मनुना कृष्णदैवतेन न संशयः ॥५३॥

यः साक्षात् परमात्माऽस्ति धामेद्यः पुरुषोत्तमः ।
मलमासोऽपि यद्योगान्निर्मलः पावनोऽभवत् ॥५४॥
मलिना सर्वदा माया निर्मला राधिका तु सा ।
अजायत हि तद्योगात् तन्मन्त्रं प्रजपाम्यहम् ॥५५॥
प्रभोकृष्ण बालकृष्णाऽनादिकृष्णनरायण ।
माणिकीमाधवीलक्ष्मीराधारमापते प्रभो ॥५६॥
शुनि क्रोडे खले काके शवे चाण्डालके यमे ।
राक्षसे ध्वजिनि द्रोहिण्यपि यो वर्तते प्रभुः ॥५७॥
गवि मृगे सति हंसे जीवे द्विजे गुरौ सुरे ।
नृपे देवालये मित्रे वर्तते यो नरायणः ॥५८॥
पवित्रः पावकः कृष्णस्तमहं प्रजपामि वै ।
भक्ताऽस्मि पावनी जाता प्रसादभक्षणादिह ॥५९॥
नाम्नाऽस्मि शबलायोनिश्चाण्डाली वैष्णवी सदा ।
इत्युक्त्वा सा दिव्यरूपा दिव्यविमानगाऽभवत् ॥६०॥
पाचिका द्रुतमेवाऽस्याः सकाशान्मनुमार्थयत् ।
सापि विमानगा मन्त्रं श्रावयामास भावतः ॥६१॥
पाचिका तत्परं मन्त्रं जग्राह सत्वरं तदा ।
तावत् तत्राऽभवत् साक्षात् पूर्वमोक्ता नरस्तु यः ॥६२॥
सोऽप्ययाचत मन्त्रं तं विमानस्था ददौ मनुम् ।
तस्मै कृष्णस्य नामाऽपि दत्वा स्वर्गं गताऽभवत् ॥६३॥
अहो भाग्यं शबलाया धर्मदव्यर्पिताऽदनात् ।
स्वर्गं लेभे ततो धर्मदेवताऽपि ततो मनुम् ॥६४॥
लेभे लब्ध्वा ददौ तत्र चाण्डाल्यै श्रेयसे द्रुतम् ।
चाण्डाली तन्मनुं प्राप्य दिव्यतेजोमयी ह्यभूत् ॥६५॥
धर्मदेवीकराद् यस्तु जग्राह मानवः फलम् ।
भोज्यं स तु मनुश्चासीत् वैष्णवो मूर्तिमाँस्तदा ॥६६॥
धर्मदेव्याः पावनीत्वं प्रादर्शयन्मनुः स्वयम् ।
षोडशार्णः कृष्णनारायणस्वामिस्वदैवतः ॥६७॥
एवं वै कृपया तत्र पावनी धर्मदेवता ।
मन्त्रोऽपि पावनश्चापि चाण्डाली पावनी तथा ॥६८॥
कृष्णाऽर्पिताऽपि शबदायोनिर्वै पावनी तथा ।
कृष्णनारायणयोगान्निकृष्टयोनिजाऽपि यत् ॥६९॥
पावनी जायते यत्र कृष्णोऽस्ति पावनं तु तत् ।
बद्रिके धर्मदेव्याः सा संभुत्वा दासिका ततः ॥७०॥
आत्मनिवेदिनी जाता धर्मदेवी तिरोऽभवत् ।
एवंविधां धर्मदेवीं वीक्ष्य चण्डालनी द्रुतम् ॥७१॥
स्तुतिं चक्रे दर्शनार्थं पुनस्तत्राऽतिमोहिनी ।
नमो धर्मदेवतायै नारायण्यै नमो नमः ॥७२॥
नमश्चाण्डालिकाभक्त्या प्रसन्नायै च ते नमः ।
नमः शबलिकायोनिस्वरूपायै च ते नमः ॥७३॥
नमो मन्त्रस्वरूपायै महाधात्र्यै च ते नमः ।
नमोऽनादिकृष्णनारायणवाण्यै च ते नमः ॥७४॥
नमः शक्त्यै महाशक्त्यै पावयित्र्यै च ते नमः ।
नमः कल्याणकर्त्र्यै ते दिव्यमात्रे च ते नमः ॥७५॥
मालवान्या मेलदात्र्यै धर्मदात्र्यै च ते नमः ।
पुनर्मे दर्शनं देहि मातर्निःसंशयाय मे ॥७६॥
याऽहं पृष्ट्वा भवपारं यास्याम्येव न संशयः' ।
इत्यर्थिता धर्मदेवी प्रादृश्यते तदा पुनः ॥७७॥
मालवानी नमश्चक्रे पप्रच्छ मोक्षणं प्रति ।
कथं मोक्षं प्रपद्येऽहं कथं पारं प्रयामि च ॥७८॥
का त्वं मे वद कान्तेऽत्र किं कृत्वा त्वं प्रयास्यपि ।
किमर्थं त्वं समायता का मे भक्तिरनुत्तमा ॥७९॥
कथं वा भावि मे .भाग्यं वद मे गुरुयोगिनि ।
इत्येवं बद्रिके शिष्या पप्रच्छ धर्मदेवताम् ॥८०॥
धर्मदेवी समुवाच सर्वं तस्यै यथातथम् ।
आयाताऽहं परीक्षार्थं स्वागतार्थेऽतिभावुकीम् ॥८१॥
कीदृशीं त्वां तु तां ज्ञातुं त्वया भावोऽति दर्शितः ।
धर्मदेवोऽस्म्यहं देवीस्वरूपोऽत्र समागतः ॥८२॥
भावं हार्दं च ते भावं धर्मे ज्ञात्वाऽतिहर्षितः ।
स्वागतं भजनं ज्ञात्वा दास्यं ज्ञात्वाऽतिहर्षितः ॥८३॥
संप्राप्तं पाचितं त्वन्नं मया ते श्रेयसे त्विह ।
प्रसादस्य प्रदानाय तुष्टये ते तथा त्विह ॥८४॥
अथाऽहं ते मनुं दातुमिच्छां चकार शोभनाम् ।
तावन्मन्त्रः स्वयं कृष्णनारायणस्य पावनः ॥८५॥
षोडशार्णो नरो भूत्वा त्वत्कृपार्थं समागतः ।
पावनोऽपि मनुर्धर्मात् पावनतर इष्यते ॥८६॥
इत्येवं स मनुर्भिक्षां भुक्त्वा त्वत्राऽभ्यदर्शयत् ।
चाण्डाली शबलायोनिर्या सा माया प्रमादिनी ॥८७॥
सर्वजन्तुखनिरूपा चायाता कारणात्मिका ।
सर्वयोनिमयी माया सर्वथा मलिना इति ॥८८॥
सापि धर्माच्छुद्धरूपा कृष्णयोगात्तु सर्वथा ।
शुद्धैव जायते नारायणार्पिता हि मुक्तिदा ॥८९॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रास्तथाऽन्त्यजा अपि ।
चाण्डालाश्चेति सर्वा या भूतानां योनयो भुवि ॥९०॥
ताः सर्वाः श्रीकृष्णनारायणयोगेन दिव्यताम् ।
यान्ति सर्वार्पणभक्त्या चाण्डाली शुद्धिमेति च ॥९१॥

त्वं भक्ता संवीक्ष्य सर्वं जग्रहिथ मनूत्तमम् ।
मत्तोऽत्र तेन सहसा जातासि पावनी शुभा ॥९२॥
तव योगेन चान्यासां चाण्डालीनां प्रमोक्षणम् ।
भविष्यति न सन्देहस्त्वं जाताऽद्य नरायणी ॥९३॥
भक्त्या पूतासि चाण्डालि कृपया पाविता मया ।
मनुना पाविता सम्यग् विप्राण्यसि त्वितः परम् ॥९४॥
महामुक्तानिका चासि ब्रह्मधामनिवासिनी ।
तव सर्वं कुटुम्बं वै पावनं ब्रह्मगोत्रकम् ॥९५॥
अद्यतः खलु सञ्जातं भज श्रीवल्लभम्प्रभुम् ।
त्यज वै तामसं कर्म प्रसेवय तु सात्त्विकम् ॥९६॥
प्रभुंनारायणं कान्तं लब्ध्वा याह्यक्षरं पदम् ।
कुंकुमवापिकाक्षेत्रं प्रयाहि सकुटुम्बिनी ॥९७॥
साक्षात्कृष्णं बालकृष्णं लब्ध्वा याहि परं पदम् ।
इत्युक्त्वा बद्रिके धर्मदेवश्चादृश्यतां गतः ॥९८॥
मालवानी प्रसादं तु भुक्त्वा त्यक्त्वा निजक्रियाम् ।
कुटुम्बसहिता प्राप्ता क्षेत्रं कुंकुमवापिकाम् ॥९९॥
अश्वपट्टसरस्तीरे बले स्नात्वा पपौ जलम् ।
अनादिश्रीकृष्णनारायणं तत्र व्यलोकयत् ॥१००॥
कान्तं सुसुन्दरं विष्णुं चतुर्भुजं सुभूषणम् ।
सुतेजसं हरिं वीक्ष्य कुटुम्बेन समं द्रुतम् ॥१०१॥
मूर्छामवाप तत्रैव चाण्डाली मालवानिका ।
दिव्यं विमानं सुभगं त्वायातं तत्र शोभनम् ॥१०२॥
बालकृष्णं प्रभुं दृष्ट्वा विमानं चाऽप्यरूरुहत् ।
कुटुम्बसहिता दिव्या दिव्यदेहातिसुन्दरी ॥१०३॥
अनादिश्रीहरिं ध्यात्वा ययौ धामाऽक्षरं परम् ।
एवं बद्रीप्रिये ! भक्ता मालवानि हरिप्रिया ॥१०४॥
कुटुम्बेन सहिता साऽभूद् धर्मकृपया तदा ।
महाभागवतं धर्मं लब्धवती प्रभुम्पतिम् ॥१०५॥
काम्यधर्मेणापि साध्यधर्मः संप्राप्यते क्वचित् ।
पठनाच्छ्रवणादस्याऽवाप्यते धर्मजो वृषः ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने मालवान्याश्चाण्डाल्या धर्मबलेन सेवाबलेन धर्मदेवतादर्शनं मूर्तिमत्षोडशाक्षरमनुदर्शनं शबलिकायोनिपावनतादर्शनं ततः कुंकुमवापिकागमनोत्तरं सकुटुम्बाया मोक्षणं चेत्यादिनिरूपणनामा पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि रथ्यामार्जनिकाकथाम् ।
आसीत् श्रीकरलाग्रामे नाम्ना कारेलिका सती ॥ १ ॥
जात्या शूद्री ग्रामरथ्यामार्जनादिक्रियापरा ।
यत्पतिश्चापि कुरुते राजचत्वरमार्जनम् ॥ २ ॥
यत्पुत्राश्चाश्वपालित्वं कुर्वन्ति नृपतेः खलु ।
राजा तद्ग्रामशास्ताऽपि नाम्नाऽऽसीद् विषमंकरः ॥ ३ ॥
तस्य राज्ये सदा सार्थं कथां करोति भूसुरः ।
लक्ष्मीनारायणसंहिताया नाम्ना हिताञ्जलिः ॥ ४ ॥
तत्र गत्वा ग्रामजनाः सार्थं शृण्वन्ति तत्कथाः ।
कारेलिकाऽपि च तस्याः पुत्राद्याश्च पतिस्तथा ॥ ५ ॥
पुत्र्यश्चापि कथाः श्रेष्ठा नित्यं शृण्वन्ति सादराः ।
श्रुतं कथायां मोहोऽस्ति जीवानां बन्धकृत् त्विति ॥ ६ ॥
मोहरूपं स्थूला चास्मि नामजात्यादिशोभना ।
रूपरंगगुणैराढ्या बाल्ययौवनगर्विता ॥ ७ ॥
ममेदं बालबालाद्यं गृहं क्षेत्रं धनादिकम् ।
एवं नैजास्मिताबुद्धिर्मोहस्तत्र भृतोऽनया ॥ ८ ॥
तत्त्यागो मोहशून्यत्वं नाऽस्मि देहादिभिन्नता ।
आत्मा ब्रह्मस्वरूपाऽस्मि ब्राह्मयहं मोहवर्जिता ॥ ९ ॥
न मे नेत्रे न मे कर्णौ रूपशब्दादयो न मे ।
न मे नासा न मे त्वक् च गन्धस्पर्शादयो न मे ॥१०॥
नाऽहं जिव्हा न वा वाङ् मे न मे वाणी न भोभवा ।
नाऽहं हस्तौ च पादौ च नाऽऽदानं मे न वा गतिः ॥११॥
नाऽहं योनिर्नवा शिश्नं न मे गेहो न तद्रतिः ।
नाऽहं गुदा न मे प्राणादयो नापि विसर्जनम् ॥१२॥
नाऽहं देहो न मे दैहं जाग्रत् स्वप्नं सुषुप्तकम् ।
नाऽहं वर्ष्म न मे बाल्यं यौवनं वृद्धतादिकम् ॥१३॥
नाहं नारी न पुमान् वा नपुंसकं न चास्म्यहम् ।
न मे माया न मे सत्त्वं रजस्तमो न मे गुणाः ॥१४॥
न मे दुःखं न मे चाद्यं न मे पुण्यं सुखं न च ।
न मे कर्म न मे यत्नो न मे भोगो न मे कलिः ॥१५॥
न मे क्षेत्रं गृहं स्वामी पत्नी पुत्राः सुता सुहृत् ।
न मे धनं नैव लोकः कुटुम्बं मे न चापि वै ॥१६॥
ततो मे सूतकं नापि न हर्षो रोदनं न मे ।
सर्वं त्वज्ञानसंक्लृप्तं ह्यात्माऽस्मि ज्ञानवानहम् ॥१७॥
अहन्ता विमला मेऽस्ति ममता परमात्मनि ।
यद्यदुक्तं समस्तं मे वर्तते श्रीपतौ हरौ ॥१८॥

निर्गुणं चापि निर्बन्धं दिव्यं मोक्षप्रदं सदा ।
नैष्कर्म्यं सर्वथा कृष्णनारायणेऽस्ति मे शुभम् ॥१९॥
भजनं भोजनं चापि भाजनं भगवान्मम ।
बन्धो मोक्षो हरिर्मेऽस्ति भावनावासनाश्रयः ॥२०॥
रतिर्विरामः कृष्णो मे महानन्दो हरौ मम ।
तृप्तिर्मे सर्वदा कृष्णः शान्तिर्विश्रान्तिरच्युतः ॥२१॥
गोचरो मे हरिश्चास्ति साक्षात् स्वप्ने सुषुप्तके ।
अहंभावोऽन्तरे तस्मिन् कृष्णनारायणेऽस्ति मे ॥२२॥
व्यवहारः स्फुरणं मे नित्ये श्रीपरमात्मनि ।
निद्रा तुर्या मूर्छना मे प्रभौकान्तेऽन्तरात्मनि ॥२३॥
एवं श्रुता कथा तेन बद्रिके संहितागता ।
विचारिता तथा सा च निजात्मनि स्थिरीकृता ॥२४॥
नित्यं पुत्रसुतास्वामिष्वपि तद्वत् कथाऽमृतम् ।
पच्यते निशि मननात् सत्संगात् स्वगृहेऽनिशम् ॥२५॥
तेन सर्वं कुटुम्बं वै मार्जयित्र्या विमोहकम् ।
हर्षशोकविहीनं वै मायापाशविवर्जितम् ॥२६॥
वर्तते श्रीकृष्णकान्तमहानन्दपरिप्लुतम् ।
मोहो नास्ति न रागोऽस्ति नाऽविद्या द्वेषणं न च ॥२७॥
न भयं विद्यते चापि नाऽऽत्मारामस्य बन्धनम् ।
निर्मोहिनी ततो जाता सिद्धा कारेलिका भुवि ॥२८॥
यथा माता तथा पुत्राः पुत्र्यः पतिस्तथाविधः ।
निर्मोहि तत्कुटुम्बं वै कृष्णमोहनमात्रकम् ॥२९॥
हिताञ्जलिमुनिर्नारायणं भजन् कथामृतम् ।
पाययत्येव लोकाँश्च मन्त्रान् ददाति मोक्षदान् ॥३०॥
निर्मोहकारकं मुमुक्षुभ्यो देहिभ्य आदरात् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥३१॥
'कालमायापापकर्मशत्रुयाम्यकुहृद्भयात् ।
शूलमीनध्वजधनुश्चक्रस्वस्तिकवानव' ॥३२॥
'शरणं श्रीकृष्णनारायणोऽस्तु मम सर्वदा' ।
'ब्रह्माऽहं श्रीकृष्णनारायणभक्तोऽस्मि शाश्वतः ॥३३॥
अनादिश्रीकृष्णनारायणः स्वामी पतिश्च मे' ।
'बालकृष्णः परब्रह्म मम वै शाश्वतः पतिः ॥३४॥
पिता बन्धुः सुहृन्मित्रं रक्षकः पालकोऽस्तु सः' ।
'ओं मां श्रीबालकृष्णाय समर्पयामि ओं नमः' ॥३५॥
'ओं श्रीलक्ष्म्यै महालक्ष्म्यै दुःखभंक्त्र्यै श्रियै नमः' ।
'कृष्णस्य वल्लभोक्तोऽहं श्रीहरिः शरणं मम' ॥३६॥
'श्रीकृष्णोवल्लभश्चार्यः श्रीस्वामी शरणं मम' ।
'श्रीकृष्णोवल्लभःस्वामी श्रीहरिः शरणं मम' ॥३७॥
'प्रभुःकृष्णो मालतीनारायणः शरणं मम' ।
हिताञ्जलिमुनिर्बद्रि मन्त्रानेवंविधान् बहून् ॥३८॥
मुमुक्षुभ्योऽर्पयत्येव करोति बन्धवर्जितान् ।
महाभागवतान् लोकान् कृत्वा ददाति मोक्षणम् ॥३९॥
बहवो मोहशून्या वै भक्ता भागवता भुवि ।
नरा नार्योऽभवँस्तस्य कथाभिश्च समागमैः ॥४०॥
कारेलिका त्वात्मवेत्त्री मोक्षमार्गपरायणा ।
कुटुम्बसहिता साध्वी मन्त्रान् जग्राह वैष्णवी ॥४१॥
मोहशून्या हरिस्थैर्या श्रीकृष्णानन्दिनी सती ।
अजायत महामुक्तानिका कृष्णपरायणा ॥४२॥
यत्प्रसंगेनापि चान्याः स्त्रियो मुक्तिं प्रपेदिरे ।
जन्तवश्चापि मार्जन्या यस्याः स्पर्शमुपागताः ॥४३॥
सर्वे ते कर्मभिर्हीना भूत्वा प्रमोक्षणं गताः ।
कृष्णकृष्णेतिकृष्णेति साध्वी सा भजते प्रभुम् ॥४४॥
स्नात्वा सम्पूज्य राधेशं शृंगारभूषणादिभिः ।
आरात्रिकं सुनैवेद्यं फलं ताम्बूलकं तथा ॥४५॥
जलं पुष्पाञ्जलिं कृष्णकान्तायाऽऽर्प्य प्रसादिकम् ।
भुंक्ते सा सकुटुम्बैव महाभागवती सती ॥४६॥
मार्जने चापि रथ्यादौ वीक्ष्य जन्तून् ततस्तु सा ।
श्रावयत्येव नामानि तेभ्यः कृष्णहरे प्रभो ॥४७॥
अज्ञातमृत्युभावेऽपि जन्तूनां मोक्षणं भवेत् ।
श्रूयते श्रीकृष्णनाम यत्र श्रीबद्रिके स्थले ॥४८॥
तत्र दहन्ति कर्माणि याम्या दूता न यान्ति च ।
वासनाश्च क्षयं यान्ति श्रोतारो यान्ति मोक्षणम् ॥४९॥
निर्मोहिनां प्रसङ्गेन यान्ति निर्मोहतां जनाः ।
पशवः पक्षिणश्चापि जन्तवः पादपा अपि ॥५०॥
प्राणमात्रधराश्चापि निर्मोहतां व्रजन्ति वै ।
का कथा वैष्णवीनां वै समागमे हि मोक्षणे ॥५१॥
वैष्णवीनां बालका वै मुक्ता एव भवन्त्यपि ।
वैष्णवीनां जलमन्नं गृहमम्बरमित्यपि ॥५२॥
पावनं पापहं बद्रि जायते जीवमोक्षकृत् ।
परोक्षेऽपि प्रसादश्चेद् वैष्णवीनां प्रलभ्यते ॥५३॥
प्राणप्रयाणसमये याता मोक्षं प्रयाति हि ।
वैष्णवीनां दर्शनं च स्पर्शनं च समागमः ॥५४॥
सत्सङ्ग आशीर्वादाश्च भवन्ति मोक्षदाः सदा ।
वैष्णव्यो यत्र वर्तन्ते भूमिः सा हरिमन्दिरम् ॥५५॥
कुटुम्बं श्रीहरेस्तत्र बद्रिके तिष्ठते सदा ।
वैष्णवी कमला राधा रमा लक्ष्मीश्च पार्वती ॥५६॥

वैष्णवी ललिता वाणी प्रज्ञा श्रीर्माणिकी जया ।
सन्तुष्टा वैष्णवी ब्राह्मी कृष्णा नारायणी मता ॥५७॥
ताभिः सन्धार्यते कृष्णोवल्लभः प्राप्यते हरिः ।
ताभिः संसेव्यते कृष्णस्ताभिः कृष्णः प्रकाश्यते ॥५८॥
कृष्णं विनाऽन्यत्र यासां मोहः प्रीतिः रतिर्न वै ।
परब्रह्मनिवासो वै वैष्णव्यां श्रीस्थितिस्तथा ॥५९॥
वैष्णवीनां हरौ नित्यं तादात्म्यं चापि तत्तथा ।
अतो वै पावनी देवी वैष्णवी प्रमदा परा ॥६०॥
कार्ष्णी सा बद्रिके नारायणी सा पुरुषोत्तमी ।
वासुदेवी तथा बद्रीनारायणी हि सा मता ॥६१॥
गङ्गा सा यमुना सरस्वती ब्रह्महृदात्मिका ।
अश्वपट्टसरःस्था च शाऽस्ति कुंकुमवापिका ॥६२॥
वैष्णवी सर्वथा तीर्थोत्तमा सर्वविचारिणी ।
सर्वपुण्यप्रदा मोक्षप्रदा मोहविखण्डिनी ॥६३॥
एतादृशी मोहशून्या कारेलिकाऽभवत् सती ।
सायं श्रीकृष्णशरणे कीर्तनं प्रकरोति सा ॥६४॥
ततो वै शयनं याति क्रोडे कृत्वा नरायणम् ।
प्रातश्चैवं हरिं स्मृत्वा भजते नित्यवत् सती ॥६५॥
अथैकदा तु वै तस्याः पुत्र्यः पञ्चाऽतिशोभनाः ।
मार्गशीर्षे क्षुद्रबद्रीफलान्याहर्तुमुत्सुकाः ॥६६॥
सीम्नि क्षेत्रेषु खिडेषु ययुर्वनेषु शाखिषु ।
तत्रर्षिर्नामतो बद्रिकायनो बद्रिकातले ॥६७॥
बद्रिकाषण्डमध्यस्थस्तापसः शशबिन्दुना ।
महर्षिणा समं दृष्टः कन्याभिः पञ्चभिस्तदा ॥६८॥
शशबिन्दुः कन्यकास्ता दृष्ट्वा क्षेत्रान्तरं ययौ ।
ध्यानस्थस्तु ऋषिर्बद्रिकायनः प्रबुबोध ह ॥६९॥
अपश्यत् कन्यकाः पञ्च बद्रीफलाभिचायने ।
दत्तध्यानास्ततः सोऽपि पप्रच्छ यूयमत्र काः ॥७०॥
कथं सीम्नि बद्रिकाणां षण्डे भ्रमथ किंफलाः ।
कन्यकास्तु महाश्चर्यं दृष्ट्वा प्राप्ता मुनीश्वरम् ॥७१॥
तापसं जटिलं सौम्यं शुष्कं दृष्ट्वा शनैर्मुनिम् ।
नत्वा प्राहुर्वयं शूद्रस्य निर्मोहिवंशजाः सुताः ॥७२॥
कारेलिकायाः पुत्र्यः स्मो नमस्ते भगवन्निह ।
श्रुत्वेत्थं निर्मोहिजास्ताः परीक्षितुमियेष सः ॥७३॥
रूपं त्विन्द्रसमं तूर्णं चकार कामगर्वहम् ।
सूर्यवत् तैजसं स्वर्णसमं चक्षुर्मनोहरम् ॥७४॥
चन्द्रवच्छीतलं लक्ष्मीकान्तवत् कान्तिसंभृतम् ।
सर्वमरुणलीगम्यशृंगारमन्मथान्वितम् ॥७५॥
मोहनार्थं कन्यकानां चञ्चलेन्द्रियगर्भितम् ।
मन्दसुगन्धशीतलानिलकृतातिमोदकृत् ॥७६॥
षोडशोत्तरवर्षं वै पुष्टं वीर्यभृतं दृढम् ।
मन्दहास्यमयं दृष्टिकटाक्षभावगर्भितम् ॥७७॥
प्रेमवर्षान्वितनेत्रं चाह्वानोष्ठक्रियापरम् ।
आकारयत् सर्वभावैरिङ्गितैरनिवर्तिभिः ॥७८॥
रूपातिरूपसौन्दर्यमार्दवस्निग्धताभृतम् ।
चमत्कृतिभृतं रम्यं नेत्रचित्तात्मवेशितम् ॥७९॥
त्यक्तमानमपि त्यागं नैव प्राप्तं विलोकितम् ।
कृष्णवत् सुन्दरं सर्वकामपूरमुपस्थितम् ॥८०॥
एतादृशं परं रूपं दधार मुनिराट् स तु ।
किन्तु ताः कन्यका मत्वा महापुरुषमुत्तमम् ॥८१॥
सत्त्वभावनया मानदृष्ट्या चक्रुर्नतिं मुहुः ।
पुत्तलं मायिकं मत्वा जहुर्दृष्टिं तु वैकृतिम् ॥८२॥
न क्षोभं नापि चाञ्चल्यमवापुस्तत्र पुत्तले ।
नवद्वारनरकाढ्ये नश्वरेऽशुचिसंग्रहे ॥८३॥
स्वदेहवद् वर्तमाने गर्भविकृतिसंभृते ।
असत्ये चात्मपृथग्भूते जडे कर्दमिते कृतौ ॥८४॥
सर्वमलक्षरणाढ्ये दुर्गन्धे बहिरुज्ज्वले ।
मोहमात्रां मनाक् तास्तु नाऽऽपुः सुन्दरसुभंगे ॥८५॥
तदा ताः कन्यकाः सर्वा निर्विकारा विलोक्य सः ।
बद्रिकायनऋषिराडुवाच मोहकृद्वचः ॥८६॥
भवतीनां स्वागतं वै करोम्यत्र वनान्तरे ।
युवतीनां कन्यकानाम् ऋषिश्चाहं प्ररक्षकः ॥८७॥
समर्थोऽस्मि याबदर्थपूरणे सिद्धिमानिह ।
अनन्यपूर्वाश्चेत् प्राप्तयौवना भवथ प्रियाः ॥८८॥
मां संवृणुत सुन्दर्यो दैवात् प्राप्तं तु सुन्दरम् ।
वरं त्वनन्यसदृशं स्वानुरूपं स्पृहायुतम् ॥८९॥
इन्द्रश्चन्द्रो रविः शंभुः शिष्या मे सन्ति देवताः ।
तं मां त्रिलोकनाथाभं पतिं वृणुत चार्थिनम् ॥९०॥
श्रुत्वा ताः कन्यका बद्रि प्राहुर्मोहविवर्जिताः ।
स्वागतं ब्रह्मणो विद्म सर्वान्तर्यामिणोऽस्तु वै ॥९१॥
न स्वागतं तु नारीणां ऋषिकल्याणकृत् क्वचित् ।
युवतीनां रक्षकोऽस्ति चान्तरात्मा जनार्दनः ॥९२॥
योऽस्ति नित्यं वने त्वत्र ऋषेश्चापि प्ररक्षकः ।
न देहे रक्षयितृत्वं रक्ष्ये भवति वास्तवम् ॥९३॥
आवयोः सर्वथा साम्यं रक्ष्ये देहे न रक्षिता ।
यावदर्थाः सकामानां सतृष्णानां प्रपूरणे ॥९४॥

वाञ्छिताः संभवन्त्येव निष्कामानां निरर्थिता ।
सामर्थ्ये सिद्धयश्चापि तुष्टिमतां तु देहिनाम् ॥९५॥
मोहिनां संभवन्त्येव निर्मोहिनां न सिद्धयः ।
अनन्यपूर्वो जीवात्मा शाश्वतः सर्वदा प्रियः ॥९६॥
परमात्मा कृष्णनारायणः प्रियतमोऽस्ति नः ।
आत्माऽऽत्मनां प्रियतमो न नारीवर्ष्म तत्तथा ॥९७॥
दुर्गन्धं पौरुषं वर्ष्म नारीवर्ष्माऽपि तत्तथा ।
किं प्रियत्वं तत्र चास्ते ह्यप्रिये रागवर्जिते ॥९८॥
अशाश्वती प्रियता वै नश्वरा न हिताय सा ।
इन्द्रवारुणिकायास्तु फलवद् वर्ष्म सुन्दरम् ॥९९॥
बहिः रूपचमत्कारकरं मोहितचक्षुषाम् ।
अन्तर्नेत्रवतां दुष्टं सर्वथा मलसंभृतम् ॥१००॥
सुन्दरी सुन्दरो वापि मलानां वाचकोऽस्ति सः ।
कफपित्तादिधातूनां खनौ सौन्दर्यमत्र किम् ॥१०१॥
यौवनं वासनाढ्यं वै निर्वासना तु वृद्धता ।
शान्तिर्जीवनमुक्तिश्च ब्रह्मानन्दोऽतिमुक्तता ॥१०२॥
वरो नारायणः कृष्णस्तदन्ये त्ववरा मताः ।
स्पृहा यत्रास्ति किं तस्य वरत्वं निरयार्थिनः ॥१०३॥
योनिर्लोभो हि नरकं मूत्राकांक्षा यमालयः ।
स्वानुरूपा मतिस्तेऽत्र रजोकेदारके यदि ॥१०४॥
तदा नरकवाञ्छा ते निवृत्ता नैव सर्वथा ।
आर्षत्वं ते शोभते न यदात्मब्रह्मभावितम् ॥१०५॥
तस्माद् याहि यथेष्टं त्वं महावनान्तरं स्थितः ।
आशा हि नरकं प्रोक्तं तत्रापि स्त्री ततोऽधिकम् ॥१०६॥
स्त्रीयोगी पुरुषस्तस्मादत्यधिको हि नारकी ।
नरकाणां मोहकर्ता तेषु पातयिता तथा ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कारेलिकाभिधायाः शूद्र्याः कथाश्रवणेन निर्मोहित्वं तस्याः पञ्चपुत्रीणामपि निर्मोहित्वम्, हिताञ्जलिमुनिद्वारा प्राप्तबोधत्वम्, बद्रिकायनर्षिकृतं तासां परीक्षणं चेत्यादिनिरूपणनामा षट्त्रिंशोऽध्यायः ॥ ३६ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि श्रुत्वा तत्कन्यकावचः ।
बद्रिकायनमुनिराट् कन्यका मोहवर्जिताः ॥ १ ॥
निश्चिकाय तिरोभूय ययौ तासां गृहं प्रति ।
यत्र तासां भ्रातरस्तु रथ्यामार्जनकर्मिणः ॥ २ ॥
कुर्वन्ति मार्जनं तत्र गत्वा रुरोद वै ऋषिः ।
दृष्ट्वा तं संरुदन्तं ते पप्रच्छुः कारणं तदा ॥ ३ ॥
उवाचर्षिर्महादुःखभृतः श्वासं मनाग् चरन् ।
अहोहो बहुनिष्टं वै ममाश्रमस्य सन्निधौ ॥ ४ ॥
सञ्जातं त्वद्य बच्म्यत्र श्रोतव्याई न विद्यते ।
राक्षसाः पञ्च चायाता मम कुट्याः समीपतः ॥ ५ ॥
कृत्रिमौज्ज्वल्यसम्पन्ना महामोहकराः खलाः ।
कारेलिकायाः पञ्चापि कन्यका वव्रिरे तु तान् ॥ ६ ॥
राक्षसास्ता द्रुतं नीत्वा ययुश्चाञ्चितलालयम् ।
अहोऽनिष्टं परं जातं भक्तायाश्चातिदुःखकृत् ॥ ७ ॥
शश्याकाऽहं न तत्सोढुं ज्ञापनार्थमुपागतः ।
भूत्वैतत् पञ्च सबलाः सहोदराः सहायिनः ॥ ८ ॥
कारयन्तु कन्यकानां स्वसॄणां मोक्षणं ततः ।
अहो मोहः कन्यकानां श्वपादानां स्त्रियोऽभवन् ॥ ९ ॥
इत्युक्त्वा बहुधा साधुः शुशोच भ्रातृसन्निधौ ।
भ्रातरस्ते वीक्ष्य चैतद् ऋषिं प्राहुस्तदोत्तरम् ॥१०॥
ऋषे ते दर्शनादद्य जन्मसाफल्यमेव नः ।
स्वसॄणां जन्मसाफल्यं यद् भवदाश्रमान्तिके ॥११॥
भवतो दर्शनं कृत्वा पतिप्राप्तिं गतास्तु ताः ।
भवता वीक्षिताश्चापि शोचिता मुक्तयेऽपि च ॥१२॥
राक्षसा अपि ऋषिराड् भवता तु निभालिताः ।
भवत्प्रतापतस्तेऽपि भविष्यन्ति महर्षयः ॥१३॥
कन्यकाः पञ्च एवापि वैष्णव्यः सन्ति धार्मिजाः ।
धर्मवत्यश्च पावन्यः पापिनां मोक्षदा अपि ॥१४॥
रक्षसामपि तासां संप्रसङ्गेन प्रमोक्षणम् ।
भविष्यति न सन्देहस्तत्र शोको न विद्यते ॥१५॥
कन्यारत्नं प्रदातव्यं यस्मै कस्मै तु कर्मिणे ।
कर्मकर्त्तेन जायन्ते पत्न्यश्च पतयस्त्विह ॥१६॥
तासां भाग्येषु पुरुषा राक्षसा लिखिता यदि ।
पतयस्ते प्रजाता वै तत्र का परिवेदना ॥१७॥
कन्याधनं परकीयं पुंसापेक्ष्यं सदा मतम् ।
तज्जातं समये तासां तत्र का परिवेदना ॥१८॥
शरीराणि समस्तानि समविकृतिवन्ति वै ।
भौतिकानि भवन्त्येव तत्र का परिवेदना ॥१९॥
पुमान् वा यदि वा नारी मूत्रमलादिविकृतिः ।
सर्वत्र सदृशी वेदी तत्र का परिवेदना ॥२०॥
यदि नारायणं कृष्णं भजते नहि मानवः ।
विप्रोऽपि राक्षसो ज्ञेयस्तत्र का परिवेदना ॥२१॥

राक्षसोऽपि हरेर्योगं भक्तयोगं च विन्दति।
विप्रः स एव भक्त्याढ्यस्तत्र का परिवेदना ॥२२॥
सर्वे भक्तिं विना देवा मानवाश्च महर्षयः।
वर्ष्मभोहपरा वर्ष्मभोक्तारो राक्षसा मताः ॥२३॥
देहेन्द्रियाणां भोगांस्तु त्यक्त्वाऽऽत्मवेदिनस्तु ये।
अन्तरात्मपरासक्तास्त एव ऋषयो मताः ॥२४॥
येषां सर्वमिदं कृष्णमयं कृष्णशरीरकम्।
कृष्णान्वितं समस्तं वै तेषां दैवित्वमुच्यते ॥२५॥
येषां रूपे रसे स्वादे कामे देहे च वासना।
भेददृष्टिर्वर्ततेऽपि ते नरा राक्षसास्त्विह ॥२६॥
भक्तिमत्यः कन्यकास्ता आत्मनिवेदनान्विताः।
सन्ति महाभागवत्यस्तासां संगं गतास्तु ये ॥२७॥
तासु भावपरा ये च तासु रक्ताश्च ये नराः।
तासु स्नेहपरा जाता देवास्ते न तु राक्षसाः ॥२८॥
परकीयं धनं सर्वे परहस्ते गतं भवेत्।
सहसा वाऽर्पितं वापि प्रसह्याऽपि गतं भवेत् ॥२९॥
गतं काले यथारेखं तत्र का परिवेदना।
संसारस्य गतिश्चेयं कन्याऽन्यस्मै प्रदीयते ॥३०॥
तारतम्यं ततः स्नेहे दम्पत्योर्व्यज्यते ह्यनु।
मिथः स्नेहे विवृद्धे तु सुखं तयोः प्रजायते ॥३१॥
स्वर्गो देवाधिवासार्हं तद्गृहं प्रोच्यते तयोः।
यदि स्नेहो मिथो नैव जायते नैव वर्धते ॥३२॥
वैमनस्यं कलहश्च नरकं तत् सदा त्विह।
स्थितिश्चैतादृशी यत्र रक्षोधर्मास्तु तत्र वै ॥३३॥
प्रायशः खलु सृष्टौ वै रक्षोधर्मा भवन्ति हि।
एकत्रोत्पद्यते सर्वं पोषणं चैति भौतिकैः ॥३४॥
भुज्यते त्वपरेणैतत् फलकन्याधनादिकम्।
स्वसृमातृव्यवहाराः सापेक्षा निर्मितास्त्विह ॥३५॥
कन्या चेद् राक्षसं भक्त्या वृणुते तन्मनस्विनी।
तां तु निवारयितुं न शक्तः कश्चिद् भवेदिह ॥३६॥
कन्या चेत् विमना देवे दत्तापि न सुरैषिणी।
प्रेषयितुं न तां शक्तः कश्चिद् भवेत् स्वयंवराम् ॥३७॥
यत्र मनो गतं लग्नं यस्याः स एव तत्पतिः।
अलग्नं तु मनो यत्र तत्र स्वामित्वमेव न ॥३८॥
एवं स्थितेऽत्र संसारे नः काऽत्र परिवेदना।
महर्षे त्वं वृथा शोकं कुरुषे विषमे वृषे ॥३९॥
भोग्यं भोक्ता भुनक्त्येव भोग्यं भोक्तारमृच्छति।
तत्र कः शोकः को मोहः का तत्र वेदनाऽपि च ॥४०॥
स्वागतं तेऽर्हणं ब्रह्मन् गृहाण भोजनादिकम्।
मधुपर्कं गृहीत्वाऽपि पायथित्वा च नस्त्विह ॥४१॥
मघ्वाशीर्भिर्नः प्रयुज्य याहि विद्वन् यथागतम्।
मा मोहं च शुचं विद्वन् याहि निसर्गसर्जने ॥४२॥
करिष्यामो यथायोग्यं तत्र का परिवेदना।
इत्युक्तो बद्रिके भ्रातृभिश्चर्षिर्विस्मयं गतः ॥४३॥
निर्मोहा भ्रातरः सर्वे निश्चिकाय शमं ययौ।
अथर्षिर्मातरं गत्वा कन्यकानां जगाद ताम् ॥४४॥
अहो पुत्रा निर्दयास्ते निर्घृणा स्वसृशत्रवः।
स्वसॄणां चापहरणे राक्षसैर्विहितेऽपि ते ॥४५॥
प्रबोधिता मया चापि साहाय्यार्थे न यान्ति वै।
प्रत्युत ज्ञानवन्तस्ते निवारयन्ति मामपि ॥४६॥
स्वसृभावं मनाङ् नैव विज्ञापयन्ति लौकिकम्।
शुष्कहृदयभावास्ते शृण्वन्ति नापदं तव ॥४७॥
शृणु मातर्महानिष्टं संभूतं मत्पदाश्रये।
राक्षसैस्ते कन्यकानां प्रसह्य हरणं कृतम् ॥४८॥
अत्यनिष्टं हि तज्जातं मातर्मोचय पुत्रिकाः।
शोचाम्यहं तदर्थं वै सन्निधौ ते समागतः ॥४९॥
विना तु रक्षणं तासां नाशो वा स्यात्तु राक्षसैः।
भोगं वा प्रमदानां ते करिष्यन्ति स्वकीयवत् ॥५०॥
यद्वा मुग्धाः स्वपत्नीत्वं करिष्यन्ति न संशयः।
याहि शीघ्रं रक्षणार्थं सह चायाम्यहं द्रुतम् ॥५१॥
इत्युक्ता बद्रिके माता कारेलिका मुनीश्वरम्।
शोचन्तं फुत्कारयुक्तं शिरोहस्तद्वयं तदा ॥५२॥
प्राह मुने कथं कन्याकृते शोकं करोषि वै।
न ते कन्या न ते योगः सम्बन्धस्ते न विद्यते ॥५३॥
संसारोत्तीर्ण एवासि कथं संसरसि क्षये।
अविनाशं निजात्मानं स्मर संसारवर्जितम् ॥५४॥
अस्मादृशीनां संसारः सोऽपि यावन्निजार्थकः।
भवादृशानां संसारश्चाऽसारः सर्वदा मतः ॥५५॥
तत् कथं मुनिराट् चिन्तयसि स्त्रीजनचेष्टनम्।
कन्यका यास्तु ताः कालान्तरे यास्यन्ति भोग्यताम् ॥५६॥
पत्नीत्वं परकीयात्वं परे तु मानवाः सुराः।
यद्वा दैत्या राक्षसा वा नरा वै पतयो मताः ॥५७॥
यथा भाग्यं तथा जातं जायतेऽपि तथैव हि।
पूर्वसञ्चितवेगेन जायन्ते गृहमेधिनः ॥५८॥
यदर्थं निर्मिता कन्या पतिः स एव तिष्ठति।
अनिर्मितो न वै स्वामी कदाचिदपि जायते ॥५९॥

राक्षसाः पतयस्तासां निर्मिता यदि सन्ति चेत् ।
लब्धवन्तः कन्यकास्तास्तत्र का परिवेदना ॥६०॥
याहि विद्वन् ब्रह्ममार्गे भ्रममार्गे तु मा वह ।
मोहं मा कुरु पारक्ये दैहिके वाऽप्यदैहिके ॥६१॥
प्ररक्षितं गृहे द्रव्यं परकीयं भवेद् यदि ।
पारक्यं परहस्ते तद् यथाभाग्यं गमिष्यति ॥६२॥
परित्यक्तं वने द्रव्यं स्वकीयं चेद् भवेद् यदि ।
स्वत्ववर्जितहस्ते तत् प्रसह्यैवागमिष्यति ॥६३॥
अब्ध्युद्भवा घनाश्चापि रत्नानि मौक्तिकान्यपि ।
भाग्यवतां गृहे राष्ट्रे प्रयान्त्यम्बरमार्गतः ॥६४॥
गृहोद्भवाः कुमारा वा कुमार्यो यतिधर्मगाः ।
भाग्यवशात् प्रयान्त्येव वनारण्यगुहादिकम् ॥६५॥
नारिकेलफले वारि प्रच्छन्नमपि रोहति ।
दीयमानमपि वारि कमले नाधिरोहति ॥६६॥
तस्मात् पूर्वकृता योगा भवन्ति नरयोषिताम् ।
तथा जाताः कन्यकानां तत्र का परिदेवना ॥६७॥
मया सृष्टाः कन्यकास्ता बद्रीफलार्थमुत्सुकाः ।
स्वयं यात्रा धृतास्तत्र परैः का परिवेदना ॥६८॥
कन्यकात्वं ध्रुवं नास्ति मातृगृहं ध्रुवं न च ।
परगृहं सुतरां न ततः का परिवेदना ॥६९॥
ईक्षणं न ध्रुवं चास्ते परीक्षा न ध्रुवा तथा ।
परीक्षको ध्रुवो नास्ति ततः का परिवेदना ॥७०॥
याहि विद्वन् कुटीं नैजां मा मोहं याहि तत्कृते ।
करिष्ये कारयिष्ये वा योग्यं मत्कन्यकाकृते ॥७१॥
इत्येवं बोधितो विप्रो महाश्चर्यपरोऽभवत् ।
कन्यकावद् भ्रातरश्च माताऽपि मोहवर्जिता ॥७२॥
अथ यामि पितरं वै कथयामि नियोजितम् ।
विचार्येत्थं शुष्कमनाः शोकोद्गारपराहतः ॥७३॥
निस्तेजा इव संभूत्वा कन्यानां जनकं ययौ ।
पीडयामास हस्ताभ्यां कपोलौ भालगण्डकौ ॥७४॥
मुमोचाऽश्रूणि बहूनि परं शोकं त्वदर्शयत् ।
आश्वासितो दयायुक्तैर्वाक्यैर्धैर्यं प्रदापितः ॥७५॥
पित्रा शनैश्च संपृष्टः कारणं प्रति भूसुरः ।
उवाच हिक्कासहितः कम्पयन् मस्तकं निजम् ॥७६॥
अहो दुःखमहो कष्टमहो न्यायविवर्जितम् ।
मया दृष्टं निर्घृणाढ्यं कन्यकानां मदन्तिके ॥७७॥
ममाश्रमे पञ्चभिश्च रक्षोभिः प्रबलैर्द्रुतम् ।
कृतं त्वपहरणं वै निर्बलानां प्रसह्य तु ॥७८॥
रक्षणार्थे द्रुतं तासां समागच्छ विभञ्जन ! ।
त्वं पिता रक्षकस्तासां शीघ्रं कुरु मया सह ॥७९॥
विभञ्जनाभिधो रथ्यामार्जकः प्राह तं मुनिम् ।
स्वागतं मुनिराट् तेऽस्तु धन्यवादं ददामि ते ॥८०॥
वैराग्यमार्गवासस्य रागचेष्टाविधायिनः ।
त्यक्तकुटुम्बयोगस्य परार्थयोगशोकिनः ॥८१॥
वृथा मोहगतस्याऽत्र चात्मारामस्य रोगिणः ।
किं ते गतं कन्यकानां गमने राक्षसैः सह ॥८२॥
कन्याहस्तग्रहाः सर्वे राक्षसा मानवा भुवि ।
नरहस्तग्रहा नार्यो राक्षस्यस्तास्तथा भुवि ॥८३॥
त्यक्तलज्जाधर्मकर्माणो ये ते राक्षसा मताः ।
पत्न्यश्च पतयस्तद्वज्जना वै राक्षसाः सदा ॥८४॥
कुणपे स्नेहवन्तो ये मूत्रगोलकलुब्धकाः ।
मिथो युज्यन्त उद्वृत्ताः प्रच्छन्ना राक्षसास्तु ते ॥८५॥
देहोऽयं राक्षसः प्रोक्तः परदेहस्य भक्षकः ।
मुने संसारवेलातो बहिश्चासि प्रयाहि वै ॥८६॥
स्वखेदं कुरु विप्रेन्द्र राक्षसत्वविमुक्तये ।
परखेदपरत्वे तु विशेषो राक्षसात्तु कः ॥८७॥
कर्मणा योगमासाद्य वियोगं यान्ति कर्मभिः ।
कर्मसम्बन्धिसंसारे का ते मे परिवेदना ॥८८॥
पूजां गृहाण विप्रेन्द्र भोजनं कुरु भावतः ।
वासं विधेहि विश्रान्तिं शान्तिं गृहाण मा शुचः ॥८९॥
सर्वं कालवशं लोके जायते चोपतिष्ठति ।
काले गते पुनस्तद्वै वियुज्यते न तिष्ठति ॥९०॥
यथायोग्यं तु सत्कारं लब्ध्वा याहि निजालयम् ।
त्यक्ताऽहंममताभावे कथं शोकस्त्वयि स्थितः ॥९१॥
देहोऽयं भोग्य एवाऽस्ति भोगस्थानं सदाऽऽत्मनः ।
आत्मा भुंक्ते निजं मत्वा देहं देहान्तरं च वा ॥९२॥
भोगो मोहः परः प्रोक्तो निर्भोगो मोहवर्जिता ।
सुखदुःखैकसाक्षात्कारस्तु भोगो हि मन्यते ॥९३॥
मुने मा तेऽस्तु मुक्तस्य मा मां योजय तत्र च ।
निरञ्जनोऽस्मि ना चास्मि मोहभञ्जनकोऽस्मि च ॥९४॥
कन्यकानां न मे मोहस्ते कथं वर्तते त्विह ।
अलभ्ये मोहनं ते मे विज्ञापयति कृत्रिमम् ॥९५॥
शोकं सन्दर्शयसेऽत्र याहि योगिन् यथागतम् ।
विधास्ये रक्षणं योग्यं स्वस्ति ते मेऽस्तु सर्वथा ॥९६॥
इत्युक्त्वा भञ्जनः शूद्रो भोजनादि समार्पयत् ।
तावत् ताः कन्यकास्तत्र पक्वबद्रीफलानि तु ॥९७॥

संगृह्य त्वागतास्तूर्णं सर्वाः प्रसन्नमानसाः ।
पृष्टास्ता भ्रातृभिर्मात्रा पित्रा तथाऽन्यमानवैः ॥९८॥
राक्षसोपद्रवे तास्तु श्रुत्वा तं बद्रिकायनम् ।
असत्प्रलापिनं ज्ञात्वा मुनिधर्मच्युतं तथा ॥९९॥
अस्थानकृतजिज्ञासं शेपुर्मूको भवाऽधुना ।
इत्युक्ते मूकतां साधुरव्रजद् वाग्विदूषणैः ॥१००॥
प्रार्थयामास मनसा निर्मोहिकन्यकास्तथा ।
मातरं पितरं भ्रातॄनर्थयामास भाषणम् ॥१०१॥
दयापरा धर्मधर्म्यः कृष्णकान्तपरायणाः ।
कुटुम्बिनः समस्तास्ते चक्रुर्निर्मूकतां मुनेः ॥१०२॥
मुनिर्विवेद सर्वेषां निर्मोहित्वं महत्तमम् ।
जिज्ञासायाः स्वयं मोहं त्यक्त्वा नत्वा पुनः पुनः ॥१०३॥
मानं हित्वा ययौ पूजां प्राप्य दण्डभयाद् द्रुतम् ।
एवं बद्रीप्रिये देवि कन्यका भ्रातरः पिता ॥१०४॥
माता च मोहशून्यास्तेऽभवन् कृष्णपरायणाः ।
निरञ्जनश्च निर्वाणो निर्मोहोऽपि निरीहकः ॥१०५॥
निराशयश्च ते पञ्च भ्रातरो नामतः स्मृताः ।
निःस्वरूपा निरभिधा निरन्तरा निरागसा ॥१०६॥
निजानन्दा च पञ्चैताः पुत्रिका नामतस्तु ताः ।
सर्वेऽनादिकृष्णनारायणस्य परमात्मनः ॥१०७॥
जन्मजयन्त्युत्सवे चैकोनविंशे ययुस्ततः ।
प्रभुं कृष्णं प्रभुं लब्ध्वा पूर्णाशाः पूर्णकामनाः ॥१०८॥
बभूवुर्दिव्यरूपाश्च श्रीकृष्णस्य प्रसादतः ।
हरिं प्रपूज्य भावेन चाऽवतार्य निजान्तरे ॥१०९॥
आगतेन विमानेन चाश्वपट्टसरस्तटे ।
बालकृष्णेच्छया तूर्णं ययुश्चाक्षरमुत्तमम् ॥११०॥
एवं बद्रीप्रिये देवि कारेलिकाकुटुम्बिनः ।
बालकृष्णस्य वै भक्त्या बद्रिकायनयोगतः ॥१११॥
दिव्यभावं समवाप्य निर्मोहतां प्रगम्य च ।
परं मोक्षं ययुः सर्वे कृष्णकान्तस्य भक्तितः ॥११२॥
पठनाच्छ्रवणाच्चास्य मननाच्छ्रवणादपि ।
भुक्तिमुक्त्यौ भवेतां वै कृष्णकान्तकृपालवात् ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कारेलिकाशूद्राण्या मार्जयित्र्या निर्मोहित्वपरीक्षायां बद्रिकायनर्षेर्मूकत्वं, शापनिवृत्तिः, पञ्चकन्यकानां पञ्चपुत्राणां पत्युश्च मोक्षणमित्यादिनिरूपणनामा सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि यन्त्रकर्त्र्याः कथां तथा ।
कृष्णानाम्नीनदीतीरे द्विजवाटीतिपत्तने ॥ १ ॥
यन्त्रकर्त्री सती नारी कुटुम्बिनी पुराऽभवत् ।
पतिपुत्रवती पुत्रीसुहृद्बन्धुमती तथा ॥ २ ॥
धनधान्यवती सम्पत्प्रपूरितसुमन्दिरा ।
हरौ भक्तिमती धर्मे निष्ठावती सुयोगिनी ॥ ३ ॥
सर्वसौभाग्यसम्पन्ना सतां सेवापरायणा ।
हिंसादिवर्जिता शीलधर्माढ्या सत्यमाश्रिता ॥ ४ ॥
देवाऽर्हणपराऽतिथिसत्कारादिप्रमोदिनी ।
आत्मसाधनसंरक्ता मायामायिकनिस्पृहा ॥ ५ ॥
भजते भगवन्तं सा श्रीकृष्णपुरुषोत्तमम् ।
कृष्णायां प्रत्यहं प्रातः स्नात्वा देवार्हणं शुभम् ॥ ६ ॥
कृत्वा वृद्धानमस्कृत्य पतिं सम्पूज्य भावतः ।
पत्युः पादजलं धृत्वा मुखे शिरसि वर्ष्मणि ॥ ७ ॥
देवप्रसादतुलसीपत्रं न्यस्य मुखे ततः ।
पुत्राद्यर्थं पयःपानं सम्पादयति भामिनी ॥ ८ ॥
नाम्ना तु गोमतीदेवी गवां सेवापरायणा ।
पतिस्तस्या नयराजाभिधः परमवैष्णवः ॥ ९ ॥
पुत्राः पुत्र्यो बान्धवाद्याः सर्वेऽपि वैष्णवोत्तमाः ।
भजन्ते परमात्मानं सेवन्ते साधुमण्डलम् ॥१०॥
विहाय बन्धनीं मायां कुर्वन्ति त्वात्मनां हितम् ।
वर्तन्ते धर्मकार्येषु नारायणपरायणाः ॥११॥
किन्तु ते जीविकार्थं वै लोहयन्त्राणि यान्यपि ।
इक्षुरसोपयुक्तानि तैलनिष्कासनानि च ॥१२॥
एवंविधानि त्वन्यानि रचयन्ति स्म वृत्तितः ।
तेषां क्रयेण लब्धं यद्धनं तेन तु जीविकाम् ॥१३॥
निर्वहन्त्येव ते सर्वे महाभागवता जनाः ।
लोहरसद्रवार्थं ते भ्राष्ट्रीं कुर्वन्ति वै यदा ॥१४॥
जीवास्तत्रापि दह्यन्ति पातकं तत् प्रजायते ।
यन्त्रैरिक्षुसमूहाश्च पीड्यन्ते रसलब्धये ॥१५॥
तत्रेक्षुदण्डकीटाद्याः पीड्यन्ते रसमिश्रिताः ।
तिलानां पीडने भूमिफलीनां पीडनादिषु ॥१६॥
जन्तवोऽपि प्रपीड्यन्ते कार्पासयन्त्रकेऽपि च ।
म्रियन्तेऽसंख्यकीटाद्यास्तत्पापं हिंसनात्मकम् ॥१७॥
पीडकानां यन्त्रवाहकानां कणप्रदायिनाम् ।
यन्त्ररचनाकर्तॄणां यन्त्राणां स्वामिनां तथा ॥१८॥

भृत्यानां जायते हिंसा तथैव कर्मचारिणाम् ।
एवं यन्त्रकृतां बद्रि पापभागः प्रजायते ॥१९॥
तेन पापेन लिप्यन्ते निरयान् यान्ति दारुणान् ।
महाभागवताश्चैते जातिकर्मपरायणाः ॥२०॥
अपि पुण्यमयाः सर्वे तथापि पापभागिनः ।
असंख्यानां तु कीटानां हिंसनं नित्यदा भवेत् ॥२१॥
यन्त्रेषु यन्त्रकर्तृणां पापं त्वसंख्यकं सदा ।
आयात्येव ततस्तेषां मुक्तिस्तु सार्गला भवेत् ॥२२॥
आततायिमहापापं सर्वनाशकरं मतम् ।
यन्त्रकारा यन्त्रपापैर्लिप्यन्ते त्वाततायिवत् ॥२३॥
पापैर्वंशविनाशश्च स्मृद्धिनाशोऽपि जायते ।
प्रेता भवन्ति मृत्वा ते बान्धवान् पीडयन्त्यपि ॥२४॥
एवं बद्रीप्रिये यन्त्रकाराणां कालपर्यये ।
नयराजप्रभृतीनां कुटुम्बे राजयक्ष्मकः ॥२५॥
वासं चकार रोगोऽयं क्षीणतामनयज्जनान् ।
गोमती तु विचार्येत्थं भक्तानां रुग्णता कथम् ॥२६॥
कथं वा भगवद्भक्तौ क्षयवासः प्रवर्तते ।
आबालवृद्धयोषाद्याः कथं रोगाभिसंप्लुताः ॥२७॥
प्रष्टव्यं वेदविदुषे भाग्यज्ञाय तु सर्वथा ।
विचार्येत्थं ययौ विप्रं नाम्ना प्रभातबोधिनम् ॥२८॥
पप्रच्छ तं तदा देवी गोमती रोगकारणम् ।
प्रश्नकालं वीक्ष्य विप्रो जगाद यन्त्रजं फलम् ॥२९॥
यन्त्रजा जीवहिंसा या साऽपि कर्तरि भागतः ।
संक्रमते तथा निर्मातरि योजयितर्यपि ॥३०॥
वाहयितरि पत्यौ च स्वामिनी क्रिययाऽन्विते ।
निरीक्षके संक्रमते तथा सञ्चालकेऽपि च ॥३१॥
गोमति त्वत्कुटुम्बं वै यन्त्रनिर्माणकर्तृ यत् ।
ततः पापं तु कीटादिहिंसायाः क्रमते सदा ॥३२॥
निस्तारोऽस्य प्रकर्तव्योऽन्यथा वंशविनाशनम् ।
भविष्यति न सन्देहो यथेष्टं कुरु मामिनी ॥३३॥
श्रुत्वा सा बद्रिके प्राह विप्रं प्रभातबोधिनम् ।
प्रायश्चित्तं देहि नोऽत्र निस्तारो येन जायते ॥३४॥
प्रभातबोधस्तां प्राह प्रथमं त्वघरोधनम् ।
प्रायश्चित्तं ततो दत्तं फलं करोति नान्यथा ॥३५॥
यन्त्राणां रचनां त्यक्त्वा लोहादीनां तु विक्रयम् ।
क्रयं वा प्राणयात्रार्थं खनिखातं करोत्वपि ॥३६॥
अतो यन्त्रनिर्मितेस्तु पापभागो हि रुद्ध्यते ।
नवं पापं जायते न जातस्य निष्कृतिं कुरु ॥३७॥
कुटुम्बेन सहिता त्वं तीर्थयात्रां विधेहि वै ।
गोदावरीं नर्मदां च तापीं साभ्रमतीं तथा ॥३८॥
शत्रुञ्जयां च हरिणीं भद्रां च गोमतीं ततः ।
स्वर्णलेखां च कुंकुमवापीमश्वसरोवरम् ॥३९॥
पुष्करं सारसं तीर्थं यमीं गंगां च पावनीम् ।
सरयूं गण्डकीं ब्रह्मपुत्रां तथेन्द्रद्युम्नकम् ॥४०॥
ताम्रपर्णीं च कावेरीं पम्पासरश्च सागरम् ।
कृत्वा क्रमेण तीर्थानि निष्पापा भव मामिनी ॥४१॥
पापक्षयो रोगनाशो भविष्यति न संशयः ।
श्रुत्वा तु गोमतीदेवी विचारमकरोत्तदा ॥४२॥
रोगिणां शक्यमेवैतन्नास्ति तीर्थप्रवासनम् ।
दुर्लभं भ्रमणं दीर्घं चिरकालाभिनिर्वहम् ॥४३॥
तस्मादन्यत् पापनाशकरं दर्शय बुद्धिमत् ।
यस्मिन्ननुष्ठिते सर्वतीर्थफलं भवेदपि ॥४४॥
प्रायश्चित्तं प्रजायेत राजयक्ष्मविनाशनम् ।
सुखं भवेत् कुटुम्बस्य श्रीनाशो न भवेदपि ॥४५॥
श्रुत्वा विप्रोऽतिसरलां भूयःफलां तु निष्कृतिम् ।
जगाद तत्र वै योग्यां सतां सेवां महौषधिम् ॥४६॥
गोमति त्वं यथाशक्त्या यथा विकृतितत्परा ।
यथाऽसि वैष्णवी तद्वद् दर्शयामि तु निष्कृतिम् ॥४७॥
अद्यारम्य तु सततं करोतु साधुसेवनम् ।
सकुटुम्बा भावयुक्ता सस्नेहा संशयोज्झिता ॥४८॥
दिव्यबुद्ध्या दिव्यदृष्ट्या दिव्यसेवां तु यावतीम् ।
प्रकरोतु यथा सन्तः प्रसन्नाः स्युस्त्वयोपरि ॥४९॥
देहेन मनसा वाचा कर्मणा चेन्द्रियैरपि ।
सम्पदा धनरत्नाद्यैरन्नवस्त्रार्पणैरपि ॥५०॥
शय्यार्पणोपकरणैर्दासीवद् दासवत्तथा ।
प्रकाशे वा रहश्चापि पादसंवाहनादिभिः ॥५१॥
पुत्रीभिश्च सुतैश्चापि बालैर्वृद्धैः कुटुम्बिभिः ।
वधूभिर्गृहदानैश्च गोभिः स्वात्मार्पणैरपि ॥५२॥
सेवां सतां प्रकुर्वन्तु साध्वीनामपि सर्वथा ।
आत्मनिवेदनाद्यैश्च साधुसेवा हि भेषजम् ॥५३॥
सेवया चानुवृत्त्या च निरावरणयाऽन्वहम् ।
कृतया निःसंशयया प्रसीदन्ति हि साधवः ॥५४॥
प्रसादप्रेरिता आशीर्वादान् ददति साधवः ।
"धनवान् पुत्रवानारोग्यवान् सम्पत्समेधितः ॥५५॥
सुखवान् मोदवान् सर्वोत्सववान् भव सर्वदा ।
विघ्ना यान्तु तव दूरं शत्रवो यान्तु संक्षयम् ॥५६॥

पापानां प्रलयस्तेऽस्तु पुण्याद्रिस्ते भवत्वपि ।
श्रीर्वर्चस्वं महापुण्यमाधिव्याधिविनाशनम् ॥५७॥
इष्टानां सङ्गमश्चाप्यनिष्टानां संक्षयोऽस्तु ते ।
सतां सेवाफलं दिव्यं सुखं चाऽत्र परत्र च ॥५८॥
अनादिश्रीकृष्णनारायणे भक्तिश्च शाश्वती ।
सर्वनाथे प्रभौकृष्णे चात्मनिवेदिताऽस्तु ते ॥५९॥
गृहे ते साधवः सन्तु वाटिकायां च साधवः ।
सन्तस्ते हृदये सन्तु जीवात्मन्यपि साधवः ॥६०॥
देहेन्द्रियेषु सन्तस्ते पृष्ठेऽग्रे सन्तु साधवः ।
अधो वोर्ध्वे पार्श्वभागे सदा ते सन्तु साधवः ॥६१॥
जाग्रद्भावे प्रस्वपने सुषुप्तौ सन्तु साधवः ।
याने प्रवासने वासे चासने शयने स्थितौ ॥६२॥
जृंभणे क्षुवने प्रमोदने च मोदनेऽपि च ।
क्रियायां क्रीडने शोके सहगाः सन्तु साधवः ॥६३॥
सहाया रक्षकाः सन्तो बान्धवाः सन्तु चान्विताः ।
याम्यदुःखहराः सन्तो दैवदुःखहरास्तथा ॥६४॥
कर्मनाशकराः सन्तः सन्तु ते सुखकारिणः ।
आधिभौतिकपीडानां नाशकाः सन्तु साधवः ॥६५॥
प्राणानां रक्षकाः सन्तु सन्तस्ते भगवत्पराः ।
इह यात्राकराः सन्तः परयात्राकरा अपि ॥६६॥
महायात्राकराः सन्तः सन्तु ते सर्वतोऽन्विताः" ।
एवं द्वादशसंश्लोकं स्तोत्रं दास्यन्ति साधवः ॥६७॥
यत्पाठेन तथा सेवाभिश्च रक्षा भविष्यति ।
शीघ्रमद्यसमारभ्य साधुशालां सुशोभनाम् ॥६८॥
मन्दिरं श्रीबालकृष्णमूर्तेः प्रकारयत्वपि ।
मा चिरं तेन विघ्नास्ते विनंक्ष्यन्ति न संशयः ॥६९॥
यद्यपि त्वं महाभक्ता कुटुम्बं ते च भक्तिमत् ।
तथापि साधुसेवाभिः सर्वोत्कृष्टं भविष्यति ॥७०॥
यथेन्द्रो नैव रुद्रोऽपि न यमो न च विश्वसृट् ।
न विष्णुर्नैव कालोऽपि न धर्मो न व्रतं तपः ॥७१॥
नैव नारायणश्चापि कर्तुं शक्नोति कुर्वहम् ।
तत्कर्तुं शक्नुवन्त्येव कृष्णाधिका हि साधवः ॥७२॥
साधुसंकल्पितं सर्वं कर्तव्यं परमात्मनः ।
कृष्णसंकल्पितं यत्र तत् स्यात् साधुप्रकल्पितम् ॥७३॥
साधूनां सेवनं पुण्यं साधुसङ्गो हि पुण्यदः ।
साधूनां दर्शनं पुण्यं पुण्याद्रयो हि साधवः ॥७४॥
आनखादाशिखं सन्तः पावना दिव्यविग्रहाः ।
रजो रजोऽणुमात्रं वै पावनं साधुविग्रहे ॥७५॥
अथ पत्यौ यथा पत्न्यां यथा पुत्रे धनेऽपि च ।
यथा बन्ध्वां यथा पित्रोर्यथा गुरौ हरौ यथा ॥७६॥
तथा स्नेहः सदा कार्यः सत्सु साध्वीषु भावतः ।
श्रद्धया सेवनं कार्यं सर्वार्थसाधकं तु तत् ॥७७॥
भोजनीयाः पूजनीयास्तर्पणीया हि साधवः ।
मोदनीयाः सेवनीयाः प्रसादनीयाः साधवः ॥७८॥
माननीया रक्षणीयास्तोषणीया हि साधवः ।
दर्शनीयाः स्पर्शनीया नमनीया हि साधवः ॥७९॥
चयनीया धारणीया ध्यातव्याः साधवः सदा ।
साधूनां त्विह सत्संगात् स्वर्गो मोक्षश्च शाश्वतः ॥८०॥
साधवः सुप्रसन्नाश्च चिन्तामणय एव ते ।
कल्पद्रुमा अक्षयभाजनानि साधवः सदा ॥८१॥
कामगावः साधवो वै कृष्णरूपा हि साधवः ।
तेषां समागमो मोक्षः सत्संगो भवपारकृत् ॥८२॥
तं समाचर सत्संगं रोगनाशं प्रयाहि च ।
स्वस्ति तेऽस्तु नीरुग्णत्वं दीर्घायुष्टं च तेऽस्त्वपि ॥८३॥
इत्युक्त्वा बद्रिके देवीगोमती विप्रमुत्तमम् ।
प्रपूज्य स्वगृहं गत्वा श्रावयामास सर्वशः ॥८४॥
पतिं पुमान् कुटुम्बं च ततः सर्वे समाहिताः ।
गृहमेकं साधुशालात्मकं पृथक् प्रचक्रिरे ॥८५॥
तत्र सन्तः समायान्ति तान् सेवन्तेऽतिभावतः ।
गोमत्याद्या अन्नवस्त्रधनार्पणोपवस्तुभिः ॥८६॥
नारायणस्वरूपान् वै साधून् मत्वा प्रपावनान् ।
सेवन्ते स्म कुटुम्बाद्या यथोक्तभावकर्मभिः ॥८७॥
अथाऽऽशीर्वादमालभ्या सतां ते पावनास्तथा ।
प्रभवन्ति शनै रोगविनाशारम्भरोहिताः ॥८८॥
सतां हृदये भगवाननादिनिधनः प्रभुः ।
ज्ञात्वा सेवां परं भावं कृष्णनारायणः स्वयम् ॥८९॥
कृष्णायनाभिधानः स साधुर्भूत्वा तथा प्रियम् ।
साध्वीं कृत्वा ययौ तस्या नगरं च गृहं ततः ॥९०॥
साधुशालास्थले गत्वा गोमत्यादिभिरादृतः ।
कृष्णायनः कृतपूजास्वागतः समुवास ह ॥९१॥
तयोः सेवा बहुधा वै कुटुम्बेन कृता तदा ।
धनैर्मित्रैर्वस्त्रैर्भूषाभिश्च भोजनाद्यैः समर्चनैः ॥९२॥
यथा यथा हरिश्चैच्छत् तथा तथा ददुस्तु ते ।
प्रसन्नो भगवान् जातः सेवया नरयोषिताम् ॥९३॥
शयने भोजने याने सर्वथा सेवितः प्रभुः ।
वरदानाय तां नारीं प्रैरयत् सापि तत्क्षणम् ॥९४॥

निरोगार्थे सम्पदर्थे मोक्षार्थं समयाचत ।
सतां सेवार्थमेवापि हरेर्योगार्थमित्यपि ॥९५॥
हरिः प्राह तथास्त्वेवं सर्वे ते सम्प्रजायताम् ।
हरेः पादाऽङ्गुष्ठवारि पीत्वा सर्वे हि पावनाः ॥९६॥
तदा जाता अथ रोगो राजयक्ष्मा तु मूर्तिमान् ।
निर्गतः सहसा श्रीमद्बालकृष्णाज्ञया द्रुतम् ॥९७॥
नत्वा ययौ स कैलासं कुटुम्बं रोगवर्जितम् ।
जातं प्रफुल्लहृदयं मोदाननं शुभाश्रयम् ॥९८॥
अथ कृष्णायनः कृष्णस्तेभ्यो मन्त्रं ददौ निजम् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥९९॥
मूर्तिं निजां ददौ कार्ष्णायनीकृष्णायनात्मिकाम् ।
दर्शनं प्रददौ दिव्यं चतुर्भुजं नरायणम् ॥१००॥
वीक्ष्य श्रीकान्तदेवेशं परमात्मानमच्युतम् ।
प्रसन्नास्ते कृतकृत्या जाता गोमतिकाजनाः ॥१०१॥
निष्पापाः पुण्यपुञ्जास्ते दिव्या मोक्षाभियोगिनः ।
सर्वे नेमुः पुपूजुश्च हरेः पादजलं पपुः ॥१०२॥
प्रसादं भक्षयामासुरर्चयामासुरच्युतम् ।
भियाः साध्व्यः कन्यकाद्याः सर्वाः स्त्रियोऽर्हणां व्यधुः ॥१०३॥
एवं बद्रीप्रिये तेषां नीरोगित्वं विधाय सः ।
अनादिश्रीकृष्णनारायणो द्रुतं तिरोऽभवत् ॥१०४॥
अथ तेऽपि च संभूय तीर्थार्थे निर्गतास्ततः ।
विरोऽनादिकृष्णनारायणजयन्तिकोत्सवे ॥१०५॥
आययुस्तीर्थयात्रायामब्जपद्मसरोवरम् ।
कुंकुमवापिकाक्षेत्रं लोमशस्याश्रयं शुभम् ॥१०६॥
स्नात्वा तीर्थविधिं कृत्वा श्रीकृष्णवल्लभम् प्रियम् ।
कृष्णायनं बालकृष्णं वीक्ष्य प्रपूज्य माधवम् ॥१०७॥
अनादिश्रीकृष्णनारायणं प्रसेव्य भावतः ।
न्यूषुस्तत्रैवाक्षराख्ये क्षेत्रे त्वाजीवनं ततः ॥१०८॥
हरेः पदाश्रये सर्वे यन्त्रकारा हरिप्रियाः ।
दिव्यदेहा अभवँश्च जीवन्मुक्ताः प्रभुप्रियाः ॥१०९॥
हरिकृष्णस्य वचने स्थिताः सर्वे सदा ततः ।
हर्याज्ञया ययुर्धामाऽक्षरं विमानसंस्थिताः ॥११०॥
सर्वे सतां विमानैर्वै प्रापुः कृष्णपरास्पदम् ।
इत्येवं बद्रिके देवि भगवाँस्तानतारयत् ॥१११॥
पठनाच्छ्रवणादस्य चिन्तनात् पापनाशनम् ।
स्वर्गो मोक्षो भवेदेव प्रभुकृष्णबलाद् द्रुतम् ॥११२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने यन्त्रकर्म्या गोमतीनाम्न्या शूद्रायाः सकुटुम्बायाः क्षयरोगः सतां सेवया साधुरूपेण भवत्प्राप्त्या रोगनाशो मोक्षणं चेत्यादिनिरूपणनामा-ऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि कथां धूर्ताविमोक्षिणीम् ।
धुतारपुरवास्तव्या चामठाजातिका अपि ॥ १ ॥
नारायणपरा नारी नाम्नाऽभूत् कनकांगदा ।
पतिपुत्रवती पुत्रीमती भ्रातृकुटुम्बिनी ॥ २ ॥
नगराभ्याशवासा च शकटच्छायवर्तिनी ।
वृषभाणां च वत्सानां क्रयविक्रयकारिणी ॥ ३ ॥
जीर्णोपकरणानां च संस्कारोद्धारतत्परा ।
क्रयविक्रयकार्याढ्या तथा निर्वाहयोगिनी ॥ ४ ॥
हरेर्भक्ताऽपि वै जातिस्वभावा धूर्तताऽन्विता ।
अनृतकपटाऽसत्यशाठ्याद्युक्ता हि वर्तते ॥ ५ ॥
वाण्यां क्रियायां मनसि प्रतारणपरायणा ।
यथाकथञ्चिद् व्यामोह्य प्रदर्श्याऽपि फलं बहु ॥ ६ ॥
विश्वासं बहुधोत्पाद्य करोति वञ्चनां ततः ।
लब्धं वञ्चनया यत्तद्धनं रौप्यं च काञ्चनम् ॥ ७ ॥
शीघ्रं नीत्वा प्रयात्येव ग्रामान्तरमनोयुता ।
अनसा सीमभागेषु क्षेत्रेषु वाटिकास्वपि ॥ ८ ॥
अजानां हरणं चौर्यं करोति कर्मसन्धिनी ।
एवंविधाऽपि मार्गेषु चतुःसंगेषु वै निशि ॥ ९ ॥
शकटच्छायया कालं निर्यापयति सीमनि ।
तत्र कश्चित् समायाचेद् भिक्षुको भिक्षुकी तु वा ॥१०॥
तस्मै दत्वा यथायोग्यं भक्ष्यं भुंक्ते ततस्तु सा ।
एवमभ्यागतपरा भिक्षुके कृष्णमानिनी ॥११॥
नारायणं भिक्षुकं तु मत्वाऽर्हणां करोत्यपि ।
पादसंवाहनं रात्रौ दिवा देहप्रसेवनम् ॥१२॥
जलपुष्पाद्यर्पणं च कृत्वा भुंक्ते ततः परम् ।
एवं सेवापरा चास्ते नियमे भिक्षुकार्चने ॥१३॥
वर्तमाना भिक्षुकाय निर्दम्भा धूर्ततां निजाम् ।
निवेदयति विज्ञा सा निष्पापत्वाय सर्वथा ॥१४॥
सा तु जानाति गुरुतो नाम्ना चार्वकराधनात् ।
साधवे निजकृत्यं वै निवेदनीयमादरात् ॥१५॥
सत्यं वाच्यं यत्र तत्र गुह्यं वापि प्रकाशजम् ।
अन्याय्यं वा न्याययुक्तं पापं पुण्यं प्रतारणम् ॥१६॥

धूर्तता शुभता चाप्यनिष्टता क्लेशता तथा ।
चौर्यं चापहरणं च वाच्यं श्रीगुरवे सदा ॥१७॥
गर्हितं वा प्रशस्तं वा वाच्यं चाऽवाच्यमित्यपि ।
सर्वं श्रीगुरवे निवेदनीयं शुद्धिहेतवे ॥१८॥
इत्येवं जायते कर्तुर्निष्पापत्वं पवित्रता ।
बन्धनं जायते नैव पापफलं न जायते ॥१९॥
उपार्जितात् तथा न्यायाऽन्यायाभ्यामपि सर्वदा ।
दातव्यं गुरवे चाभ्यागताय भिक्षुकाय च ॥२०॥
निर्दोषत्वं जायते च तेन पापं व्यपोहति ।
अनिवेदितभोक्तैव पापेन परिलिप्यते ॥२१॥
निवेदितान्नभोक्ता तु पापेन नोपलिप्यते ।
उदरार्थे कुटुम्बार्थे दस्यूनां दस्युकर्मसु ॥२२॥
दूषणं जायते नैव जातं चेद् गुरवेऽर्पणात् ।
निर्दोषं जायते तस्माद् गुरुः सेव्यः प्रमोक्षदः ॥२३॥
गुरुरेव परब्रह्म गुरुरेव जनार्दनः ।
गुरुरेव विधाता च गुरुरेव परागतिः ॥२४॥
गुरुरेवाऽनलः सूर्यो गुरुरेव प्रकाशदः ।
गुरुरेव परं पुण्यं गुरुर्धर्मः सुखं धनम् ॥२५॥
गुरुः स्वर्गो गुरुर्विष्णुर्गुरुः शंभुर्गुरुर्मतम् ।
गुर्वर्पणं परं पुण्यं तस्माच्छ्रीगुरवेऽर्पयेत् ॥२६॥
अन्यत्र वै कृतं पापं गुर्वग्रे संविनश्यति ।
गुरौ पापं न कर्तव्यं गुरुर्वै परमा गतिः ॥२७॥
न वै नारायणो भूमौ शङ्खधारी मिलत्यपि ।
गुरुर्नारायणः सत्यधारी मिलति भूतले ॥२८॥
सतां समागमात् तेन निष्पापता प्रजायते ।
सन्तः श्रीगुरवस्तस्मात् सेवनीया विशुद्धये ॥२९॥
अशुद्धः खलुः संसारः शुद्धस्तत्र गुरुर्हरिः ।
अशुद्धिर्लीयते सर्वा गुरोर्योगेन दैहिकी ॥३०॥
मानसी लीयते चाप्यशुद्धिर्भक्त्या गुरोः सदा ।
गुरोर्नामस्मरणेन चात्मा पावनतां व्रजेत् ॥३१॥
गुरवे त्वर्पणात् सर्ववस्तूनां स्यात् पवित्रता ।
नरा नार्यः प्रशुद्ध्यन्ति गुरुयोगेन भूतले ॥३२॥
गुरोर्मूर्तिर्हरेर्मूर्तिः पावनी पापिनामिह ।
तस्मात् सत्संगतिः कार्या पापिभिः पापहानये ॥३३॥
एवंविधं परं ज्ञानं गुरुतः सा ह्यवाप तु ।
तेन साधुजनसेवां करोति दंभवर्जिता ॥३४॥
समस्तं तत्कुटुम्बं वै सतां करोति सेवनम् ।
चार्वेकराधनः साधुर्ददौ तस्यै मनुं हरेः ॥३५॥

'ॐ नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
ददौ मूर्तिं ददौ ज्ञानं गुरुसेवात्मकं तथा ॥३६॥
एवं गुर्वाज्ञया नित्यं वर्तते कनकांगदा ।
गुरुसेवापरा श्रीमद्बालकृष्णपराऽन्वहम् ॥३७॥
धूर्ततापापनाशार्थं सेवते श्रीहरिं गुरुम् ।
भावेन नित्यमेवैषा क्षुधां तृषां च सेवते ॥३८॥
अकृत्वा सा गुरोः पूजां चाऽनिवेद्याऽन्नमित्यपि ।
वारि पुष्पं फलं शाकं न भुंक्ते सा क्वचित् खलु ॥३९॥
एवं नियममासाद्य वर्तते गुरुतत्परा ।
अथैकदा तु सप्ताहं गुरुर्वनान्तरं ययौ ॥४०॥
अभ्यागतश्च वा साधुः कश्चिद् गृहं च नागतः ।
हरिं प्रपूज्य सा साध्वी वाटं पश्यति चोत्सुका ॥४१॥
क्षुधिना तृषिता रात्रिन्दिवं पश्यति वाटिनम् ।
सप्ताहं नागतः साधुरभ्यागतोऽपि नागतः ॥४२॥
अदत्त्वा साधवे साध्वी न भुंक्तेऽन्नं प्रसादजम् ।
अन्यान्यस्य तु का वार्ता बद्रिके दृढभक्तिगा ॥४३॥
नापि पपौ च सा वारि त्वनिवेद्य हि साधवे ।
तदाऽनादिकृष्णनारायणः श्रीकृष्णगोपजः ॥४४॥
अन्तर्यामी सर्वविज्ञः साधुर्भूत्वा समाययौ ।
धृतकाषायवसनो धृतकन्थाकमण्डलुः ॥४५॥
धृतपावटिकाकुक्षिर्धृतभस्मादिझोलिकः ।
नारायणहरे विष्णो कृष्णश्रीभगवानिति ॥४६॥
रटन्नुच्चैर्वदद् श्रीमद्बालकृष्णो जयत्यपि ।
हरे कृष्ण प्रभोकृष्ण पद्मावतीपते प्रभो ॥४७॥
धर्मिनियमिरक्षक त्वं भक्तरक्षकरप्रभो ।
एवं नारायणकृष्णं जपन् शकटीमाययौ ॥४८॥
आसनं पावटीं झोलीं न्यस्य भूमौ हरे हरे ।
कथयित्वा निषसाद जयो भवतु चक्रिणः ॥४९॥
सुखिनी स्याः कानकांगि चार्वेकराधनोऽपि च ।
सुखिनस्ते कुटुम्बं च पुत्राः पुत्र्यो भवन्त्वपि ॥५०॥
इत्येवं समचित्तश्च ह्याशीर्वादपरायणः ।
साधुरयं दैवयोगादागतो मद्गृहं त्विति ॥५१॥
मत्वोत्थाय द्रुतं साध्वी कनकांगी शुभासनम् ।
ददौ नत्वा जलं शुद्धं ददौ फलानि वै तदा ॥५२॥
अन्नं नवं ददौ तस्मै पवनं व्यजनेन च ।
पुष्पाणि तुलसीपत्राण्यपि ददौ तु भावतः ॥५३॥
भोजनं कुरु साधो त्वं मधुपर्कं गृहाण च ।
स्नानमाचमनं भक्ष्यं भोज्यं वारि गृहाण च ॥५४॥

आशीर्वादं देहि साधो पापं मे नाशमाप्नुयात् ।
मम भाग्यवशात् प्राप्तो नारायणस्वरूपवान् ॥५५॥
वासं गृहे मम साधो कुरु सेवां गृहाण च ।
'ओं नमोऽनादिश्रीकृष्णनारायणाय साधवे ॥५६॥
योगिने सर्वविज्ञाय भक्तरक्षाकराय च ।
अधमोद्धारणकर्त्रे दीनानाथदयालवे ॥५७॥
नमः साधुस्वरूपाय बालकृष्णाय ते नमः ।
कंभरानन्दबालाय गोपालबालकाय ते ॥५८॥
नमो राधाविहाराय कमलापतये नमः ।
नमोऽन्तर्यामिणे भक्तभावुकाय सते नमः ॥५९॥
अन्तरात्मा परमात्मा प्रसन्नो भव सर्वदा ।
साधुसेवा तव सेवा नारायण गृहाण ताम् ॥६०॥
इत्येवं भावभिक्षा सा ददौ तत् कनकांगदा ।
पुत्राः पुत्र्यः समस्तास्ता ददुर्यथेष्टवस्तुकम् ॥६१॥
चार्वेकराधनश्चापि साधुसेवां तदाऽकरोत् ।
मिष्टवाण्या चरणयोः संवाहनं व्यधान्मुदा ॥६२॥
एवं सर्वं कुटुम्बं वै चामठाजातिजं तदा ।
सेवापरायणं जातं सत्ताहाऽनशनान्वितम् ॥६३॥
साधुं संभोजयित्वैव पाययित्वा जलं तथा ।
सेवयित्वा यथायोग्यमाज्ञया च ततः परम् ॥६४॥
प्रसादान्नं जलं सर्वे जगृहुर्भावतः खलु ।
शयने चापि सर्वे ते चक्रुः साधोः प्रसेवनम् ॥६५॥
आप्रातः सेवनं चक्रुः पादसंवाहनादिकम् ।
प्रातः साधुस्ततः प्राह वरं वृणुत चामठाः ! ॥६६॥
प्रसन्नोऽस्मि नियमेन भक्त्या सतां प्रसेवया ।
भावेनाऽहं प्रसन्नोऽस्मि गणयामि न दूषणम् ॥६७॥
महापापातिपापानि शाठ्यानि विविधान्यपि ।
प्रतारणानि सर्वाणि नाशयामि कृपावशः ॥६८॥
धूर्ततां सर्वथा चापि विश्वासघातनं ह्यपि ।
चौर्यपापं तथा द्रव्यापहरणोद्भवं त्वघम् ॥६९॥
सर्वं प्रसन्नभावोऽहं नाशयामि कृपावशः ।
उक्त्वेत्थं साधुरूपोऽपि मूर्तिरूपोऽभवत् क्षणम् ॥७०॥
नारायणस्वरूपश्च चतुर्भुजोऽभवत् क्षणम् ।
अनादिश्रीकृष्णनारायणश्रीकान्तवल्लभः ॥७१॥
श्रीप्रियामाधवीराधामाणिकीललितापतिः ।
अभवत्पूर्णमेवाऽसौ सर्वदिव्यविभूषणः ॥७२॥
दिव्यतेजोऽमिसंव्याप्तो दिव्यसौन्दर्यभाजनः ।
अथ तूर्णं सम्प्रदर्श्य रूपं दिव्यमनोहरम् ॥७३॥
तिरोऽभवत्ततो मूर्तौ ततः साधुस्वरूपवान् ।
व्यहरवत स्वयं कृष्णनारायणः कृपावशः ॥७४॥
अथ सर्वे क्षणं मुग्धा निष्पापा दिव्यहृदयः ।
जाता भक्तिवशाः कृष्णवशा गद्गदसुस्वराः ॥७५॥
भवपारं समस्तास्ते ह्ययाचन् दुःखनाशनम् ।
श्रीहरेः शरणं मुक्तिमयाचन् त्वक्षरे पदे ॥७६॥
धूर्तपापानि सर्वाणि क्षमापयेति चार्थयन् ।
पापजातेः समुद्धारं कुरु कृष्णेति चार्थयन् ॥७७॥
अथ बद्रीप्रिये स्वामी स्वयं श्रीहरिवल्लभः ।
पादजलं पाययित्वा दिव्यदेहान् व्यधाद्धि तान् ॥७८॥
विमानं त्वागतं तत्र दिव्यं वैकुण्ठवासिनाम् ।
पार्षदानां तत्र सर्वेऽध्यरोहन् प्रमुदान्विताः ॥७९॥
ययुर्धामाऽक्षरं ते वै प्राप्य वैकुण्ठमुत्तमम् ।
श्रीहरेः पादवासं ते प्रापुर्भक्त्याऽतिभावया ॥८०॥
साधुरूपो हरिस्तत्र तूर्णं तिरोभवत् क्षणात् ।
एवं श्रीबद्रिके भक्ता कनकांगी तु चामठी ॥८१॥
सकुटुम्बा ययौ मोक्षं धूर्ताऽपि भक्तिपावना ।
श्रवणात्पठनादस्य भुक्तिर्मुक्तिर्भवेत्तथा ॥८२॥
पापनाशो भवेच्चापि स्वर्गर्द्धिः संभवेदपि ।
साधुसेवाफलं साक्षात् कृष्णप्राप्तिर्भवेदपि ॥८३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने चामठीजातीयायाः कनकांगदायाः सकुटुम्बायाः साधुसमागमेन परमभक्त्या साधुरूपेण भगवत्प्राप्ति-मोक्षणं चेत्यादिनिरूपणनामा नवाऽधिक-त्रिंशोऽध्यायः ॥ ३९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि तथैव पावनीं कथाम् ।
द्यूतकारस्त्रिया नाम्ना भाणवाणीतियोषितः ॥ १ ॥
सिन्धुनद्यास्तटे रम्ये शर्करापत्तने पुरा ।
द्यूतकवंशजा लोका न्यवसन् वै नराः स्त्रियः ॥ २ ॥
द्यूतं जानन्ति बहुधा शंकारनगरे तथा ।
द्यूते प्रायो विजयं वै स्त्रियो यान्ति न संशयः ॥ ३ ॥
एवंविधाः प्रजाः सिन्धे देशे द्यूतपरायणाः ।
राजाऽपि राजलोकाश्च राजभृत्यास्तथाविधाः ॥ ४ ॥
आसन् द्यूतकलाविज्ञाः प्रजाश्च प्रायशस्तथा ।
निर्धना धनवन्तश्च द्यूते सीदन्ति वै मुहुः ॥ ५ ॥
राजा सिन्धुप्रदेशानां नाम्ना रायहरोति वै ।
द्यूतोत्सवान् प्रतिवर्षं करोत्यामन्त्रितैर्नृपैः ॥ ६ ॥
आयान्ति द्यूतविज्ञाश्च नृपा राष्ट्रान्तरोद्भवाः ।
दीव्यन्ति बहुरत्नाद्यैर्हरन्ति हारयन्त्यपि ॥ ७ ॥

जयन्ति प्रचुरं लाभं राज्यं तदाऽऽप्नुवन्ति च ।
अराष्ट्राश्च प्रजायन्ते राष्ट्राधिपास्तदा नृपाः ॥ ८ ॥
विपरीताश्च जायन्ते द्यूतकर्माभिभूतिनः ।
द्यूतशेषु तदा काले भाणवाणीतिभामिनी ॥ ९ ॥
प्रसिद्धाऽभूज्जये ध्रौव्ये यन्त्रथा तत्र वै जयः ।
यस्यार्थे सा प्रतिनिधिर्भूत्वा द्यूते निषीदति ॥१०॥
तस्य जयो भवत्येव पाशैः समनुकूलगैः ।
बहूनां द्यूतसमये करोति धनहीनताम् ॥११॥
शर्करानगरेशस्तां भाणवाणीं ररक्ष ह ।
निजालये सदा द्यूतदेवनार्थं तु मानवः ॥१२॥
सौधभोजनपानाद्यैर्वस्त्रालंकारभूषणैः ।
उद्यानयानवाहाद्यैर्दासदासीभिराहताम् ॥१३॥
राज्ञीमिव नृपो नित्यं मन्यते तां कृतादराम् ।
जात्या च क्षत्रियां निम्नक्षत्रगृहोद्भवामपि ॥१४॥
साजात्येन च लाभेन राज्ञीमिव स मन्यते ।
साऽपि मानं विहायैव दासीव नृपतिं प्रति ॥१५॥
प्रति राज्ञीं किंकरीव वर्तते गुणशालिनी ।
अतः प्रसादपात्रं सा राज्ञ्या राज्ञश्च भामिनी ॥१६॥
राजशय्यां सेवतेऽपि पतिपुत्रादिमत्यपि ।
रायहरिर्नृपस्तस्या गुणं लाभं विचार्य च ॥१७॥
स्वीयां मत्वा सेवतेऽपि भुजिष्यामुत्तमामिव ।
एवं राजाश्रयं प्राप्यैधिता कीर्त्या च सम्पदा ॥१८॥
सकुटुम्बा नृपसौधे ततो वासं व्यधान्मुदा ।
राज्यलाभं प्रगृह्णाति भुंक्ते सुखं नवं नवम् ॥१९॥
अथैकदा रायहरिर्नृपः श्रीशर्कराधिपः ।
आह्वयामास राजानं हयोदराधिपं शुभम् ॥२०॥
कोटिरायाऽभिधं द्यूते देवनार्थं निजालये ।
कोटिरायोऽपि सहसा श्रुत्वा द्यूताद्यमन्त्रणम् ॥२१॥
सहर्षं त्वाजगामापि रायहरिप्रमन्दिरम् ।
द्यूतदेवनमेवाऽपि समाजे सर्वशोभने ॥२२॥
योजयामास नृपतिः रायहरिः समुत्सुकः ।
रायहरेः प्रतिनिधिर्भाणवाणी तदाऽभवत् ॥२३॥
देवने सा स्थिता पूर्वं पाशान् जग्राह भामिनी ।
तदाऽन्येऽपि च राजन्या अमात्याः श्रेष्ठिनोऽपि च ॥२४॥
महासनानि सदसि भेजिरे द्यूतवीक्षकाः ।
प्रावर्तत ततो द्यूतं परस्परापहारकम् ॥२५॥
कोटिरायस्ततः प्राह हारोऽयं मणिशोभितः ।
कानकः कण्ठभूषा मे धनं पणेऽत्र योजितम् ॥२६॥
कस्तेऽत्र सदृशः प्रतिपणोऽस्ति पद्धके कुरु ।
रायहरिस्तदोवाच मण्यो मेऽत्र सन्ति ये ॥२७॥
हाराश्चापि धनं चापि योजितं विजयस्व तत् ।
ततः साऽक्षान् प्रचिक्षेप भाणवाणी दुरोदरे ॥२८॥
कोटिराय ! जितं त्वेतत् प्रसह्य सत्यमाषत ।
कोटिरायस्तदा तत्र निष्कसहस्रशोभनाम् ॥२९॥
मञ्जूषां स्थापयामास प्राह जयस्व मे धनम् ।
कोटिराय ! जितं त्वेतद् भाणवाणी ह्यभाषत ॥३०॥
अथ लक्षं सुवर्णानां रौप्याणां दशलक्षकम् ।
स्थापयामास च कोटिरायः प्रसन्नमानसः ॥३१॥
भाणवाणी प्रचिक्षेप पाशान् जितमभाषत ।
अथ रत्नान्युत्तमानि मौक्तिकान्युत्तमान्यपि ॥३२॥
पणे मुमोच च कोटिरायः कोटिसमानि वै ।
कोटिमूल्यान् हीरकांश्च पणे मुमोच स नृपः ॥३३॥
भाणवाणी न्यस्य पाशान् जितमित्यभ्यभाषत ।
अथ राजा कोटिरायः स्वभूषाः स्वर्णनिर्मिताः ॥३४॥
रत्नहीरकनद्धाश्च कोट्यर्बुदादिमूल्यकाः ।
अस्थापयत् पणे तत्र मणीनसंख्यमूल्यकान् ॥३५॥
भाणवाण्याः प्रसंक्षिप्ताः पाशा देवात् पराङ्मुखाः ।
कोटिरायजयार्थं वै पतिता हर्षमुत्तमम् ॥३६॥
सभाया जनयामासुर्महाश्चर्यमतर्कितम् ।
भाणवाणी गता पराजयं कलावती ह्यपि ॥३७॥
राजा रायहरिर्याविजितवान् धनमुत्तमम् ।
तत् सर्वं च स्वीयमन्यत् सर्वं पणे तु मण्डितम् ॥३८॥
पराजितवान् संशोकं प्राप्तवान् क्षणमित्यपि ।
ततः स निजरत्नानि मणींश्च मौक्तिकान्यपि ॥३९॥
हीरकान् स्वर्णभूषाश्च मञ्जूषा रत्ननिर्मिताः ।
रथं स्वर्णमयं दिव्यं चतुर्हस्तिसमन्वितम् ॥४०॥
ग्लहे संस्थाप्य चोवाच दीव्यम्यनेन वै त्वया ।
श्रुत्वा कोटिरयश्चापि पणे साम्यधनं दधौ ॥४१॥
कोटिरयस्ततः पाशान् मुमोच विजयं गतः ।
अथ रायहरिस्तत्र शतं दासीः सुरूपिणीः ॥४२॥
सर्वाभरणसंशोभाः पणोऽमण्डयदुत्सुकः ।
कोटिरयो न्यस्य पाशान् जिता इत्यभ्यभाषत ॥४३॥
अथ रायहरिस्तत्र सहस्रं दास्यकर्मिणः ।
सर्वाभरणयुक्तांश्च ग्लहेऽमण्डयदुत्सुकः ॥४४॥
कोटिरयो न्यस्य पाशान् जिता इत्यभ्यभाषत ।
अथ रायहरिर्नागान् सहस्रसंख्यकोत्तमान् ॥४५॥

स्वर्णकुथाऽम्बालिकाढ्यान् हेममालान् सुदन्तिनः ।
पणेऽन्यसत्तथा हस्तिनिकासहस्रमित्यपि ॥४६॥
कोटिरायो न्यस्य पाशान् जिता इत्यभ्यभाषत ।
अथ रायहरिः स्वर्णरथान् सहस्रसंख्यकान् ॥४७॥
स्वर्णदण्डान् स्वर्णरत्नमण्याढ्यान् दन्तियोजितान् ।
ग्लहेऽमण्डयदेवापि सोत्साहः स्वर्णचक्रकान् ॥४८॥
कोटिरायो न्यस्य पाशान् जिता इत्यभ्यभाषत ।
अथ रायहरिस्तत्र वाजिनश्चित्रचर्मिणः ॥४९॥
लक्षं वै सैन्धवाँस्तत्र ग्लहेऽमण्डयदुत्सुकः ।
कोटिरायो न्यस्य पाशान् जिता इत्यभ्यभाषत ॥५०॥
अथ रायहरिस्तत्र नरवाहनकान्यपि ।
कानकानि शिबिकाश्च स्वर्णहीरकनिर्मिताः ॥५१॥
लक्षं ग्लहेऽमण्डयद्वै छत्रचामरशोभिताः ।
कोटिरायो न्यस्य पाशान् जितमित्यभ्यभाषत ॥५२॥
अथ रायहरिस्तत्र दशसाहस्रसंख्यकान् ।
योद्धॄन् शस्त्रान्वितान् स्वर्णवर्मवेषसमन्वितान् ॥५३॥
ग्लहेऽमण्डयदेवापि सर्वाभरणभूषितान् ।
कोटिरायो न्यस्य पाशान् जिता इत्यभ्यभाषत ॥५४॥
अथ रायहरिस्तत्र कोशान् दश सुवर्णकैः ।
संभृतान् राज्यसर्वस्वानमण्डयदपव्ययः ॥५५॥
कोटिरायो न्यस्य पाशान् जिता इत्यभ्यभाषत ।
अथ रायहरिः राज्यमन्दिराणि महान्ति च ॥५६॥
सौधान् शशांकधवलान् ग्लहेऽभ्यमण्डयत्तदा ।
कोटिरायो न्यस्य पाशान् जितानीत्यभ्यभाषत ॥५७॥
अथ रायहरिः राज्यं समस्तं चाप्यमण्डयत् ।
अनेन मम राज्येन दीव्याम्यद्य त्वया सह ॥५८॥
त्वया प्रतिग्लहे किं वा न्यस्यते वद मे द्रुतम् ।
इत्युक्तः सहसा कोटिरायो राज्यममण्डयत् ॥५९॥
अथ पाशान् मुमोचापि परावृत्तिं तदा ययुः ।
पराजयं दत्तवन्तः पाशाः कोटिरयाय वै ॥६०॥
रायहरिर्जयं लब्ध्वा सभावन्द्यो बभूव ह ।
अस्थापयद् ग्लहे तत्र भार्यां निजां दिनेश्वरीम् ॥६१॥
कोटिरायं तथा प्राह ग्लहे किं स्थाप्यते त्वया ।
कोटिरायो निजां पत्नीं चन्द्रेश्वरीममण्डयत् ॥६२॥
भाणवाणी ततः पाशान् प्रचिक्षेप कलान्विता ।
निकृत्याऽऽह जिता राज्ञी श्रीरायहरिणा त्विह ॥६३॥
सभायां प्रासरत् शोकः कोटिरायो विभार्यकः ।
राज्यहीनः कृतश्चात्र भाणवाण्या ग्लहेऽन्तिमे ॥६४॥

चन्द्रेश्वरी तदा पातिव्रत्यधर्मपरायणा ।
भाणवाणीं शशापैव परहस्ताऽघदुःखिता ॥६५॥
गलत्कुष्ठा भवशीघ्रं विचित्ता दुर्भगा तथा ।
क्षयरोगवती चापि योनिरुग्णा सदा भव ॥६६॥
उन्मत्ता शूकरीतुल्या भव विष्ठादनी सदा ।
अनेन वर्ष्मणा दुष्टे राज्ञा समं तु राक्षसी ॥६७॥
भव रायहरिणेव साकं दुष्टवनेऽनिशम् ।
एवं शप्ता द्रुतं तत्र सभायां भाणवाणिका ॥६८॥
राजा रायहरिश्चापि तथाभावमवापतुः ।
उत्थायोत्थाय सहसाऽकूर्दयतामुभौ तदा ॥६९॥
नग्नौ भूत्वा निजदन्तानदर्शयतामुद्भ्रतौ ।
एवं दृष्ट्वा समाजस्तौ शोकपरोऽभवत् तदा ॥७०॥
राज्यजयेऽपि तु बुद्धेः पराजये नु किं कृतम् ।
द्रव्यजयेऽपि लज्जाया विगमेऽपि नु किं कृतम् ॥७१॥
सर्वजयेऽपि तु दुःखाऽजये तत्र नु किं कृतम् ।
नारीजयेऽपि तद्वाक्याऽजये तत्र नु किं कृतम् ॥७२॥
अर्थजयेऽपि धर्मस्याऽजये तत्र नु किं कृतम् ।
एवं तत्र समाजो वै तयोः कृते त्वभाषत ॥७३॥
पतिव्रतायाः शापोऽत्र भाणवाण्या जितो नहि ।
जितो राजा जिता राज्ञी जितं राज्यं धनं गृहम् ॥७४॥
राज्ञ्यात्मा न जितस्तत्र सर्वं जितं तु निष्फलम् ।
दिनेश्वरी तदा राज्ञी प्रार्थयच्चन्द्रिकेश्वरीम् ॥७५॥
मातः ! राज्यं धनं सर्वं यद् ग्लहेऽत्र प्रमण्डितम् ।
स्वामिना ते तवैवाऽस्तु पतिर्मे स्वस्थतामियात् ॥७६॥
भाणवाणी स्वस्थचित्ता भवत्वत्र सुखान्विता ।
कृपां कुरु महाराज्ञि दास्यहं ते वदामि वै ॥७७॥
इत्युक्त्वा चरणौ धृत्वा सा रुरोद क्षणं तदा ।
सती चन्द्रेश्वरो प्राह शृणु त्वं हितमुत्तमम् ॥७८॥
दुरोदरं त्वस्य नाम दुष्टं फलं तदात्मनाम् ।
अन्यतरस्य वा त्वन्यतमस्य सर्वनाशकम् ॥७९॥
आयतिं साम्प्रतभावं विनाशयति चोभयम् ।
अक्षाः क्षयकरा लोके मुमूर्षूणां निपातिनः ॥८०॥
सतृष्णाश्च मदान्धाश्च ह्यपरिश्रमसम्पदः ।
राजानो नैव जानन्ति कां दशां प्राप्नुमो ग्लहे ॥८१॥
आत्मलाभः परो लाभो लाभश्च परमात्मनः ।
अलाभो राज्यलाभादिश्चाऽस्थिरः सर्वदुःखकृत् ॥८२॥
भाणवाणी द्यूतपाणिः परनाशविनाशिनी ।
स्वस्या नाशकरी चापि राज्ञो नाशविधायिनी ॥८३॥

अक्षैरनक्षितुल्यैः सा सर्वस्वं हरते सदा।
सर्वस्वजीविकाहन्त्री महापापप्रयोगिणी ॥८४॥
भुंक्ते पापफलं त्वद्य शापो निमित्तमात्रकम्।
राजाऽपि द्यूतिनीसङ्गी फलं भुंक्ते स्वकर्मजम् ॥८५॥
शापो मे न निवृत्तः स्यात् किन्तु राज्यं पतिर्मम।
सर्वे कुर्याच्छनैः स्वास्थ्यं पत्युस्ते संभविष्यति ॥८६॥
राज्यं ततोऽर्धभागेन स्वामिनस्ते भविष्यति।
त्वं स्वसा मे न वै दासी प्रसन्नाऽस्मि सुखं भवेत् ॥८७॥
इत्युक्ता सा तथा मेने सर्वं राज्यं सतीकरे।
ददौ दीनेश्वरी देवी पत्युर्हिताय सर्वथा ॥८८॥
चन्द्रेश्वरी सती दिनेश्वरीं मेनेऽतिभावतः।
चन्द्रेश्वर्याः पतिः कोटिरायो मेने नृपं बहु ॥८९॥
बहुभावेन सततं कुर्वन् राज्यं समस्तकम्।
रायहरिं समैच्छत् स शीघ्रं तु सुखिनं सदा ॥९०॥
शापनिवारणं स्वास्थ्यं त्वरितं तु यथा भवेत्।
तथोपायान् समपृच्छद् दैविम्यस्तेऽवदंस्ततः ॥९१॥
सतां सेवासमं नास्ति साधनं दुःखवारकम्।
साधवः खलु संपूज्याः स्मर्तव्या विपदां हराः ॥९२॥
तोषणीयाः सर्वदानैर्विघ्नानां नाशकारिणः।
सर्वसौभाग्यदाश्चापि भाग्योत्तमत्वकारिणः ॥९३॥
सत्संगः सर्वदा कार्यः साधुसंगप्रदः शुभः।
लक्ष्मीनारायणसंहिता या दिव्याऽस्ति भूतले ॥९४॥
तत्कथावाचनं वर्षपर्यन्तं योजयत्विह।
तत्राऽऽमन्त्रणमासाद्य त्वायास्यन्ति हि साधवः ॥९५॥
साध्व्योऽपि योगिनश्चापि महाशीर्वादयोजिनः।
तेषां कृपांऽशतः सर्वे स्वास्थ्यं सुष्ठु भविष्यति ॥९६॥
इति दैविजनैरुक्ते कोटिरायो नृपस्ततः।
कारयामास वै श्रेष्ठं सभामण्डपमुत्तमम् ॥९७॥
विष्णुमूर्तिं श्रिया युक्तां स्वर्णमयीं सुशोभनाम्।
वेदिकां होमलाभार्थं कारयामास चोत्तमाम् ॥९८॥
रसशाला वासशालाः कथाशालां व्यधात्तदा।
समाह्वयत् संहिताज्ञान् त्वश्वपट्टसरोवरात् ॥९९॥
विमानेनाऽऽययुः सन्तः संहिताज्ञास्तु वैष्णवाः।
सौराष्ट्रतीर्थरूपास्ते पावनाः पावका इव ॥१००॥
अवतेरुर्मण्डपाग्रे दिव्यदृष्ट्या विमानिनः।
जयकारं प्रकुर्वन्तः श्रीपतेः परमात्मनः ॥१०१॥
सिन्धुतुल्या संहिताऽपि लक्ष्मीनारायणाऽभिधा।
पञ्चविंशतिसहस्राऽधिकलक्षमितसंख्यया ॥१०२॥
श्लोकानां राजमाना सा साधुभिः सह चाययौ।
लक्ष्मीतुल्या स्वरूपेणात्मना सरस्वतीसमा ॥१०३॥
विज्ञानेन समा वैदेश्चमत्कारे रमासमा।
मोक्षणे श्रीकृष्णनारायणतुल्या सुशोभना ॥१०४॥
श्वैत्ये प्रभान्विता त्यागे पार्वतीशासमा शुभा।
सर्वाभरणशोभाढ्या पुरुषार्थसमन्विता ॥१०५॥
आययौ सा विमानेन श्रेयसे सर्वदेहिनाम्।
बद्रिके यत्र सन्तो मे तत्राऽहं साधुवल्लभः ॥१०६॥
तत्र लक्ष्मीः संहिता च ललिता मंजुला जया।
सुगुणा हंसिका राधा विराजन्ते न संशयः ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने सिन्धुनदीप्रदेशानां नृपयोर्द्यूतखेलने सर्वस्वापहरणे पतिव्रतायाः शापेन उन्मत्ततां गतयोर्भाणबाणोरायहरिनृपयोः श्रेयसे श्रीलक्ष्मीनारायणसंहितायाः कथाप्रस्तावेऽश्वपट्टसरोवरात् साधूनामागमनमित्यादिनिरूपणनामा चत्वारिंशोऽध्यायः ॥ ४० ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये तत्र शर्कराख्ये सुपत्तने।
रायहरेर्मन्दिरे तु महोद्यानसुमण्डिते ॥ १ ॥
कथाशालास्थले पारायणं वत्सरवर्तनम्।
कोटिरायो नृपो रायहरेः श्रेयोऽभिलब्धये ॥ २ ॥
योजयामास वै मासे त्वाषाढैकादशीदिने।
आदितश्चाह्वयामास दूतैः साधूंश्च भूसुरान् ॥ ३ ॥
व्यासान् प्रपाठकांश्चापि जापकांश्च सहस्रशः।
आययुः सर्वतः सन्तो विप्राः साध्व्यश्च वैष्णवाः ॥ ४ ॥
स्वप्रकाशो हि भगवान् मुख्यवक्ताऽभवत्तदा।
लोमशश्च मुनिस्तत्र गुरुः पूजाकरोऽभवत् ॥ ५ ॥
अन्ये सौराष्ट्रदेशीया आजनाभाश्च पूर्वजाः।
प्राचीनब्रह्मभूमिस्था राशियानोद्भवास्तथा ॥ ६ ॥
परीप्रदेशजाश्चापि तथाऽमरीप्रदेशजाः।
अम्रिकादिप्रदेशोत्थाः सन्तो विप्राः समाययुः ॥ ७ ॥
उष्ट्रप्रदेशजाताश्चाप्यारात्रिकोत्थाश्च साधवः।
द्वीपोपद्वीपजाश्चाद्रिवनारण्यसमुद्भवाः ॥ ८ ॥
संहितारसवेत्तारः सन्तस्तत्र समाययुः।
साध्व्यश्च सांख्ययोगिन्यो मुक्तानिकाः समाययुः ॥ ९ ॥

ऋषयो मुनयो विप्रा विद्वांसस्तत्र चाययुः ।
आमन्त्रिताः सर्वभुवां वैष्णवा लक्षकोटयः ॥१०॥
चातुर्मास्ये व्रते पारायणे तथा विशेषतः ।
वार्षिके वृषनिष्पाद्ये चाययुर्ब्रह्मवित्तमाः ॥११॥
तेषां कृते समस्तानां राज्यप्रासादभूतयः ।
अर्पिताः स्वागतसौख्यभोगवासार्थमुत्तमाः ॥१२॥
यथा राजर्द्धयो राजभोग्यास्तथा तु भूसुरैः ।
अविशेषेण भोग्या वै ह्यासन् बद्रीप्रिये तदा ॥१३॥
घृतकुल्या दधिकुल्या रसकुल्याः सशर्कराः ।
मधुकुल्याः पयःकुल्याः पानकुल्याः सहस्रशः ॥१४॥
सिन्धुसरित्तटे तत्र निर्मिता दीर्घवाहिकाः ।
विशाला भोज्यशालाश्च दिवानिशं प्रवर्तिताः ॥१५॥
पानभोजनदायिन्यो दास्यो दासाश्च लक्षशः ।
यावद्द्रव्याणि तु पणे न्यस्तानि विजितान्यपि ॥१६॥
उभाभ्यां तु नृपाभ्यां वै तानि यज्ञार्थमेव ह ।
अर्पितानि व्ययार्थं वै कोटिरायेण सर्वथा ॥१७॥
महासौधे पूरितोऽस्ति रायहरिर्नृपस्तदा ।
उन्मत्तो राक्षसो यद्वद् भाणवाणी तथाविधा ॥१८॥
सर्वे पश्यन्ति राजानं श्वापदघ्नं विचित्तकम् ।
भाणवाणीं सर्वनाशकरीं क्षुरोदरोदराम् ॥१९॥
श्वापदघ्नां तयोन्मत्तां व्यपश्यन्ति जनास्तदा ।
एतयोः श्रेयसे पारायणं प्रजायते त्विति ॥२०॥
वदन्ति दर्शकास्तत्र शंसन्ति चन्द्रिकेश्वरीम् ।
पतिव्रतां महासाध्वीं पश्यन्ति च नमन्ति ताम् ॥२१॥
महाश्चर्यपरा लोकाः कोटिशो वैष्णवास्तदा ।
स्नानपाननिवासस्वागताद्यैः परितोषिताः ॥२२॥
आषाढैकादशीप्रातःकाले सभास्थले ययुः ।
मण्डपं तु विशालं योजितं स्वर्णसुरूपिणम् ॥२३॥
व्यपश्यन् चाऽपरं स्वर्गे सुधर्मां वा सभामिव ।
विमानमिव तत्राऽऽसीद् व्यासासनं महत्तमम् ॥२४॥
स्वर्णहीरकसन्नद्धं स्वर्णतोरणमण्डितम् ।
वितानचन्द्रमास्वच्छ बहुमौक्तिकसंभृतम् ॥२५॥
पुष्पहारादिभिः श्रृंगारितं हंसादिराजितम् ।
पताकिकाध्वजव्याप्तं हारतोरणकोज्ज्वलम् ॥२६॥
मृदुगेन्दुकपार्श्वप्रपृष्ठआदिसमन्वितम् ।
दर्पणाद्यैश्चित्रहरं स्वर्णवस्त्रादिभूषितम् ॥२७॥
स्वर्णकदलीसंस्तम्भं संहितापट्टकान्वितम् ॥२८॥
पूजासामग्रिपात्रसर्वोपचारसंहितम् ।
छत्रचामरवेणाद्यैरलंकृतजनैर्युतम् ॥२९॥

विप्रैः सद्भिश्चाक्षताद्यैः पुष्पहारैः प्रवर्धितम् ।
व्यासासने तत्र विप्रः स्वप्रकाशपरायणः ॥३०॥
संहितायां मुख्यवक्ता निषसाद शुभे क्षणे ।
तदा वाद्यान्यवाद्यन्त जयशब्दास्तथाऽभवन् ॥३१॥
संहिता पट्टके न्यस्ता पूजिता पारमेश्वरी ।
लोमशेन महामुक्तवर्येण बद्रिके तदा ॥३२॥
लक्ष्मीदेवी स्वयं साक्षात् संहितायां व्यदृश्यत ।
दिव्या प्रसन्नवदना सर्वतेजोभिवर्धिता ॥३३॥
सर्वालंकारश्रृंगारशोभाढ्या सुमनोहरा ।
नारायणं हृदये स्वे दधाना ज्ञानसागरा ॥३४॥
अथ नारायणकृष्णस्तदा तस्मिँस्तु वक्तरि ।
व्यदृश्यत चतुर्बाहुः स्वप्रकाशपरायने ॥३५॥
सर्वशोभाकरः कृष्णनारायणः प्रमेश्वरः ।
माणिकीललितारााधारमाश्रीमाधवीप्रियाः ॥३६॥
सर्वास्तदाऽभवन् पार्श्वे पूजापात्रादिधारिकाः ।
मुक्ता मुक्तानिकाश्चासँस्तदा तत्सन्निधौ शुभाः ॥३७॥
विप्राश्च मुनयः सन्तः साधवश्च महर्षयः ।
सुरा देव्यश्च तीर्थानि तत्र त्वासन्नुपस्थिताः ॥३८॥
पौरुषेण तु सूक्तेन श्रीसूक्तेन तथा तदा ।
नारायणेन सूक्तेन देवीसूक्तेन वैदिकैः ॥३९॥
मन्त्रैः पूजां संहितायास्तथा व्यासस्य लोमशः ।
अकरोद् विधिना तत्राऽऽरात्रिकं कोटिराजकः ॥४०॥
अकरोच्चन्दनपुष्पाक्षताम्बरसुवर्णकैः ।
धनैस्तथोपचारैश्च गन्धिसारादिभिः फलैः ॥४१॥
मङ्गलं वाचयामास महाशीर्वादपूर्वकम् ।
संकल्पं कारयामास लोमशः श्रेयसे तयोः ॥४२॥
कथाश्रवणमग्नाश्चोपतस्थिरे क्षणेऽत्र च ।
सभा पूर्णाऽभवल्लक्षलक्षलक्षाधिमानवैः ॥४३॥
स्वप्रकाशोऽपि भगवान् शिष्यः श्रीपरमात्मनः ।
अनादिश्रीकृष्णनारायणस्य मङ्गलं व्यधात् ॥४४॥

श्रीमद्ब्रह्मपुराधिपोऽक्षरपतिः सर्वावतारेश्वरो,
मुक्तब्रह्मनिषेविताऽङ्घ्रियुगलो राधारमेशेश्वरः ।
यश्चाऽसंख्यनरायणाधिवसतिः श्रीकृष्णकृष्णेश्वरः,
सोऽयं कृष्णनरायणोऽस्तु सुखदः सौराष्ट्रधामेश्वरः ॥४५॥
यः पृथ्व्यां विचरन् पुरा क्षितिभृतां मोक्षप्रमोदावहो,
दैत्यानां विलयंकरोऽर्बुदसतीसाध्वीभुजाधारकः ।
जीवानां नरयोषितामघहरः श्रेयोविधाताऽऽत्मनां,
सोऽयं कुंकुमवापिकाऽक्षररविः श्रीसंहितादैवतम् ॥४६॥

नत्वा तं परमात्मानं लक्ष्मीनारायणात्मकम् ।
तद्विज्ञानमयं शास्त्रं श्रावयिष्यामि मोक्षदम् ॥४७॥
अनादिश्रीकृष्णनारायणोऽस्तु हृदये सदा ।
कथासु जायमानासु मोक्षदो भक्तवल्लभः ॥४८॥
परब्रह्म नमस्कृत्य कृष्णनारायणं हरिम् ।
कंभराश्रीं च गोपालं नत्वा जयं समुच्चरेत् ॥४९॥
स्मरामि परमात्मानं नमामि वल्लभप्रभुम् ।
निर्दिशामि हरेर्भक्तिं शंसामि सेवनं सताम् ॥५०॥
इत्येवं बद्रिके कृत्वा मंगलं बीजसंभृतम् ।
लक्ष्मीनारायणसंहितायाः कथामवाचयत् ॥५१॥
तदा देवा मानवाश्च परेऽपि देहिनः खलु ।
अनादिश्रीकृष्णनारायणध्यानार्थिनोऽभवन् ॥५२॥
कृष्णमूर्तौ कथामूर्तौ दत्तध्यानास्तदाऽभवन् ।
कथासारं पपुस्तत्र संक्षेपाद् विस्तरादपि ॥५३॥
प्रत्यहं तु कथान्ते ते कुर्वन्ति परमात्मनः ।
'हरेकृष्ण बालकृष्ण हरिनारायण प्रभो ॥५४॥
अनादिश्रीकृष्णनारायण मोक्षप्रदप्रभो' ।
नामसंकीर्तनं त्वेवं समस्ता वाद्यसंगताः ॥५५॥
तालिकाभिर्नृत्यगीतैर्भजनं चक्रिरे मुदा ।
कथान्ते जायते त्वारार्त्रिकं नैवेद्यमुत्तमम् ॥५६॥
पूजा व्यासस्य तत्रैव जायते प्रत्यहं शुभा ।
जापका भूसुराद्याश्च जयन्ति परमेश्वरम् ॥५७॥
सायं होमः सदा तत्र प्रज्वायतेऽनलप्रभौ ।
प्राघूणिकाननेष्वत्र मिष्टहोमा भवन्ति च ॥५८॥
दुग्धापानानि देवानां हवनानि भवन्ति च ।
भूसुराणां सतां भोज्यं दुग्धसारादि चामृतम् ॥५९॥
सर्वेषां देहिनां तत्र भेदभावो न विद्यते ।
यद्देवानां नृपाणां चर्षीणां तत् सर्वदेहिनाम् ॥६०॥
प्रत्यहं भक्ष्यभोज्यादि खानपानादि सद्वसम् ।
कथा प्रजायते प्रातस्तथा सायं तु सर्वदा ॥६१॥
आरार्त्रिकं समासौ च प्रत्यहं पूजनादिकम् ।
अनादिश्रीकृष्णनामधुन्यं प्रजायतेऽनिशम् ॥६२॥
वितरणं प्रसादानां भोजनानां प्रदानकम् ।
सुवर्णादिप्रदानानां चार्पणं प्रत्यहं तदा ॥६३॥
एवं समुत्सवो जातो बद्रिके संहितात्मकः ।
लक्षशो मानवा ज्ञानामृतं पीत्वा तु पावनाः ॥६४॥
भूत्वा भूत्वा महाभागवता भवन्ति तत्र वै ।
ओंनमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥६५॥
इतिमन्त्रप्रदानं च करोति लोमशो मुनिः ।
आश्चर्याणि कथायां तु विचित्राणि भवन्त्यपि ॥६६॥
विमानानि सुराणां वै श्रवणार्थे तदाऽम्बरे ।
समागत्याऽवतिष्ठन्ति पुष्पचन्दनवर्षणम् ॥६७॥
कृत्वा प्रयान्ति सततं स्वर्गे स्वर्गागतानि वै ।
अदृश्या दिव्यदेहाश्च तीर्थर्षियोगिनस्तदा ॥६८॥
आगत्याऽऽकर्ण्य खे स्थित्वा नीत्वा यान्ति प्रसादकम् ।
वाद्यानि देवलोकानां गन्धर्वाणां च गीतयः ॥६९॥
अप्सरसां गीतिकाश्च नर्तनं वारयोषितम् ।
साध्वीनां भजनं घोषा विप्रवेदोद्भवास्तदा ॥७०॥
उत्सवान्ते प्रजायन्ते प्रत्यहं व्याससेवनम् ।
गुरूणां सेवनं साधुवर्गाणां पूजनादिकम् ॥७१॥
स्वागतं त्वागतानां विगतानां मानपूजनम् ।
मधुपर्को नूतनानां प्राचीनानां तु दक्षिणाः ॥७२॥
दीयन्ते प्रत्यहं तत्राऽनाथादीनां यथेष्टकम् ।
प्रेता आगत्य शृण्वन्ति कथां परमपावनीम् ॥७३॥
प्रसादं संप्रगृह्णन्ति यान्ति मोक्षपदं ततः ।
विमानैस्ते प्रयान्त्येव कथयित्वा ह्युदन्तकम् ॥७४॥
अहं भोग्यं सिन्धुजानां तदा श्रीबद्रिके परम् ।
महाभागवताः सन्तो राजन्ते यत्र वैष्णवाः ॥७५॥
लक्ष्मीनारायणसंहितायाः कथा भवन्ति च ।
प्रवर्तन्ते हरेर्लीलाज्ञानधर्मयुताः कथाः ॥७६॥
संहितातीर्थमत्रेदं ख्यातं तदभवत्ततः ।
भाणवाणी रायहरिः शृणुतः प्रत्यहं कथाः ॥७७॥
भुंजाते च प्रसादौ तौ पिबतश्च जलामृतम् ।
पापप्रक्षालनं प्रजायते शनैः कथामृतैः ॥७८॥
कथाश्रवणयोगेन जायते त्वात्मशोधनम् ।
सतामाशीर्वादलाभैर्जायते शापमोक्षणम् ॥७९॥
एवं शुद्धिः शनैर्जाता चातुर्मास्ये विशेषतः ।
व्रतदानफलानां चार्पणं कृतं कुटुम्बिभिः ॥८०॥
तत्पुण्येन तयोः स्वास्थ्यं शनैः शनैरुदैच्छुभम् ।
कथायां वर्तमानायामूर्जमासः समाययौ ॥८१॥
कृष्णाष्टम्यां बालकृष्णजन्मजयन्तिकोत्सवम् ।
चक्रुर्नृपाः प्रजाश्चापि महीमाना नराः स्त्रियः ॥८२॥
महर्षयस्तथा देवा मानवाः साधवस्तथा ।
साध्वो विप्रा वैदिकाश्च प्रचक्रुस्ते महोत्सवम् ॥८३॥
षष्ठ्यां नृपः कोटिरायः परिमेयपुरःसरः ।
प्राप्य पत्रं लोमशर्षेः श्रीकृष्णाऽऽनयनाय सः ॥८४॥

अनादिश्रीकृष्णनारायणं श्रीपरमेश्वरम् ।
कुंकुमवापिकातीर्थे सौराष्ट्रे व्योमवर्त्मना ॥८५॥
विमानेनाऽऽययौ कृष्णनारायणालयान्तिकम् ।
अवातरन्मन्दिराग्रे बालकृष्णं विलोकितुम् ॥८६॥
पूजयितुं तथाऽऽमन्त्रयितुं कृष्णाऽग्रतोऽभवत् ।
कृताञ्जलिः कृतपूजः स्वागतं प्राप्य दर्शनम् ॥८७॥
मोदं प्राप्य श्रीहरये हृदयं प्रसमर्प्य च ।
सर्वं निवेदयामास प्रार्थयामास कारणम् ॥८८॥
जन्मजयन्ती भगवन्नेकविंशतिका शुभा ।
आगत्य सिन्धुजान् देशान् शर्करानगरान्तिके ॥८९॥
संहितामण्डपे कार्या स्वयं भगवता प्रभो ।
कृपया नेतुमायातः श्वो गतिस्तत्र रोचते ॥९०॥
सप्तम्यां शर्कराभूमौ मध्यन्दिने समागमः ।
कर्तव्यो भवता तत्र महास्वागतमुत्तमम् ॥९१॥
भविता भगवँस्तस्मादागन्तव्यं कृपालुना ।
हरिः प्राह शुभं भूयादागन्ता ओमिति द्रुतम् ॥९२॥
राजा रात्रौ तु विश्रामं जग्राह तिर्थमाचरन् ।
प्रातः सज्जो बभूवाऽपि कृष्णनारायणाज्ञया ॥९३॥
माता पिता ऋषयश्च सन्तः सज्जास्ततोऽभवन् ।
विधाय स्वं द्विधा रूपं विमानं चारुरोह वै ॥९४॥
विमानस्थाः समस्तास्ते द्वेधा कृताः परात्मना ।
विमानं प्रययौ तूर्णं चाम्बरेण तु बद्रिके ॥९५॥
सिन्धुदेशं समप्रापच्छ्रीमत्कृष्णनरायणः ।
द्वितीयेन स्वरूपेण कुंकुमवापिकास्थितः ॥९६॥
जन्माऽहोत्सवलाभार्थं स्वगृहे श्रीहरिः स्वयम् ।
आगतानां मनस्तुष्ट्यै कुंकुमवापिकास्थितः ॥९७॥
सिन्धुजानां मनस्तुष्ट्यै सिन्धुदेशं गतोऽपि च ।
एवं श्रीमद्बालकृष्णः सिन्धुतीरमवातरत् ॥९८॥
सूर्यभास्वद्विमानं तत् पूजितं प्रथमं जनैः ।
हरिर्नियेत् विमानाच्च जयशब्दैः प्रपूजितः ॥९९॥
नेत्रार्पणैर्हर्षनादैरक्षतैः कुसुमैः शुभैः ।
पूजितश्चन्दनाद्यैश्च पुष्पहारैः प्रपूजितः ॥१००॥
लाजाभिर्वर्धितश्चापि कराञ्जलिभिरर्चितः ।
हार्दैर्मौक्तिकैरिङ्गितैश्च निजनाथीकृतो जनैः ॥१०१॥
प्रतिकृतिसहस्रात्मा छायामूर्तिः कृतो हरिः ।
नारीभिश्च नरैः कृष्णः प्रतिबिम्बित आत्मसु ॥१०२॥
अथ कृष्णो ययौ कोटिरायदर्शितमन्दिरम् ।
लोमशाद्याः प्रणेमुस्तं पुपूजुः स्वागतादिभिः ॥१०३॥
जलपानं ददुश्चापि चन्द्रेश्वरी महासती ।
चन्द्रकं कौंकुमं चाप्यक्षतैर्युक्तं चकार सा ॥१०४॥
पुष्पमालां ददौ कण्ठे कृष्णस्य चन्द्रिकेश्वरी ।
दिनेश्वरी हरेस्तत्र पादप्रक्षालनादिभिः ॥१०५॥
सम्मानमाचरत् पूजां व्यधाद् भावभरा तदा ।
अन्येऽपि श्रीहरेर्लोका देवाः प्रजाजना अपि ॥१०६॥
महर्षयश्च ऋषयो व्यधुः पूजां हरेस्तदा ।
ययुः सर्वे कुशलं वै पृष्ट्वाः स्वस्वनिकेतनम् ॥१०७॥
कृष्णनारायणस्तत्र विश्रान्तिमाप वै क्षणम् ।
बद्रिके सर्वतस्तत्र परानन्दो व्यवर्तत ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने शर्करानगरे संहिताकथारम्भे सर्वलोकवासिनां तथा जन्मजयन्त्यां श्रीकृष्णनारायणस्य चागमः स्वागतादिकं चेत्यादिनिरूपण-नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि ततस्तत्र महोत्सवे ।
सप्तम्यां श्रीहरेर्दर्शनार्थे संसन्महत्यभूत् ॥ १ ॥
दिव्ये गजासने रम्ये स्वर्णरत्नादिभास्वति ।
उच्चैरुच्चतमे कृष्णो न्यषीदद् दिव्यविग्रहः ॥ २ ॥
लक्षलक्षातिलक्षाणां मानवानां हि गोचरः ।
महासनेऽभवत् कृष्णनारायणोऽर्कवत्तदा ॥ ३ ॥
दिव्यतेजोऽम्बारयुक्तो दिव्यैश्वर्यप्रतापवान् ।
असीमाऽनवधिप्रागल्भ्यौदार्योज्ज्वल्यमण्डितः ॥ ४ ॥
तादृक्सौष्ठवमाधुर्यलावण्यहास्यशोभितः ।
तादृक्सौन्दर्यसाद्रूप्याऽऽकर्षणाऽऽनन्दपूरितः ॥ ५ ॥
तादृग्यौवनगाम्भीर्यवीर्यबलविराजितः ।
तादृक्कृपादयास्नेहप्रेमाऽनुग्रहवर्षकः ॥ ६ ॥
कोटिकामप्रमोहाढ्यसौष्ठवघट्टनात्मकः ।
व्यद्योतताऽक्षरधाम्ना तेजसा मूर्छनाकरः ॥ ७ ॥
नरनारीहृदयस्थोऽन्तरात्मा नेत्रगोचरः ।
सर्वावतारभगवान् तदानीं कृपयाऽभवत् ॥ ८ ॥
पूजितो वन्दितः सर्वैः स्वागतं तु नवं नवम् ।
कृतं लोकैर्भक्तवर्गैराद्यं परमात्मनः ॥ ९ ॥
हरिश्चोपादिदेशापि कृपात्मकं तु संसदि ।
निजार्थकृतसर्वस्वभक्तेभ्योऽनुग्रहेण वै ॥१०॥

सर्वे भवन्तु सुखिनो दर्शनान्मम देहिनः ।
भवतां सुखलाभार्थं समागतोऽस्म्यनुग्रहात् ॥११॥
परे धाम्न्यक्षरे लोके दिव्योऽहं प्रभवामि यः ।
सर्वावतारधर्ता श्रीपतिः श्रीपुरुषोत्तमः ॥१२॥
सर्वेश्वरनियन्ता च सर्वशक्तिपतिः प्रभुः ।
सर्वसिद्धर्षिपितॄणां सुराणां दैवतं परम् ॥१३॥
अन्तरात्मा कालमायामहापुरुषशासकः ।
सोऽहमेव भवाम्यत्र बालकृष्णो भवादृशः ॥१४॥
मम योगं गता ये ये ते धामाऽक्षरं ययुः ।
वासुदेवा असंख्याता नारायणा ह्यसीमकाः ॥१५॥
श्रीकृष्णाश्चाप्यसंख्याता विष्णवोऽसंख्यमूर्तयः ।
रामा नरेश्वराः सिद्धेश्वराश्चाप्यतिसंख्यकाः ॥१६॥
मम योगेन जायन्ते व्यक्ता वांऽशोद्भवा मम ।
मत्स्वरूपा मत्तादात्म्या मदभिन्ना भवन्ति ते ॥१७॥
मामाश्रित्य समस्तासु सृष्टिषु पारमेश्वराः ।
निष्पद्यन्तेऽनन्तशक्तिधरा मत्कृपया हि ते ॥१८॥
सोऽहं समस्तसृष्टीनां कृपाकटाक्षपावनः ।
गोचरोऽस्मि भवतां चाऽवतारी पुरुषोत्तमः ॥१९॥
संहितायाः कथां येऽत्र शृण्वन्ति संस्मरन्त्यपि ।
तेषामहं समुद्धर्ता मायासंसारवारिधेः ॥२०॥
ये मां श्रीमत्कृष्णनारायणेति संभजन्ति वै ।
तान् मत्वाऽहं निजान् भक्तान् तारयिष्यामि मोहतः ॥२१॥
नरा नार्यश्च षण्ढाश्च ये भजिष्यन्ति मां त्विह ।
सेविष्यन्ते च सर्वस्वार्पणैस्ते धामिनो मम ॥२२॥
सर्वेषां देहिनां कर्मतुल्यं फलं ददाम्यहम् ।
नीतिरेषा तु संसारे कृपा मे त्वतिरेकिणी ॥२३॥
कृपायां नियमो नास्ति फलकर्माभिबन्धकः ।
उद्धरामि जगत्सर्वं प्रसादेन न संशयः ॥२४॥
वह्नेर्योगात् समस्तं वै पावनं जायते यथा ।
मम योगेन सर्वं वै पावनं जायते तथा ॥२५॥
यथाऽहं पावनश्चाऽस्मि तथैव मम मूर्तयः ।
सन्तो मे पावनाः सर्वे वाणी मे पावनी सदा ॥२६॥
संहितेयं मम वाणी पावनी सर्वदेहिनाम् ।
लक्ष्मीश्चाऽहमहं लक्ष्मीश्चैकं तत्त्वं द्विधा कृतम् ॥२७॥
लक्ष्मीनारायणश्चाहं संहिता मे सरस्वती ।
तस्याः श्रवणमात्रेण मदक्षरमवाप्यते ॥२८॥
शब्दमूर्तिः साधुमूर्तिर्धातुमूर्तिर्मदात्मिका ।
अहं त्रिमूर्तिकश्चाऽस्मि साध्वीमूर्तिस्त्रिधा मम ॥२९॥
भक्तिमूर्तिस्तथोपास्तिमूर्तिर्दीक्षात्ममूर्तिकः ।
षण्मूर्तोऽहं सदा चास्मि मिलामि तत्र तत्र ह ॥३०॥
साक्षादहं विराजेऽत्र सिन्धुतीरे भवन्मठे ।
कल्याणार्थं भवतां वै कृपया मनुजाकृतिः ॥३१॥
नार्यश्चोपासते मां तु पतिरूपेण नित्यदा ।
उपासते पतयो मां धातुरूपेण नित्यदा ॥३२॥
षण्ढाः संकल्परूपेणोपासते मां फलोज्झिताः ।
वृक्षा रसप्रदं मां तूपासते पृथिवीभुजः ॥३३॥
पक्षिणश्चाम्बरात्मानं पशवश्चौषधिप्रजम् ।
देवाः सुधां दैत्यवर्या बलं क्लेदं तु जन्तवः ॥३४॥
उपासते यथायोग्यस्वभावानुगुणं तु माम् ।
चक्षुष्मन्तः सुरूपं मां विनेत्रा रूपवर्जितम् ॥३५॥
सेन्द्रियाः सेन्द्रियं निरिन्द्रिया मां तु निरिन्द्रियम् ।
सतत्त्वा मां तत्त्वयुक्तं निस्तत्त्वा तत्त्ववर्जितम् ॥३६॥
सगुणा गुणवन्तं मां निर्गुणा गुणवर्जितम् ।
सस्नेहा मां स्निग्धमूर्तिं निस्स्नेहा रूक्षमव्ययम् ॥३७॥
सत्यश्चानन्ददातारं सन्तः शान्तिखनीश्वरम् ।
उपासते यथायोग्यं फलं तथा ददाम्यहम् ॥३८॥
देहिनो देहवन्तं मां विदेहा देहवर्जितम् ।
स्वार्थाः परार्थधातारं निस्स्वार्थाश्चाऽपरिग्रहम् ॥३९॥
ज्ञानिनः स्वप्रकाशं मां जडा भूतात्मवर्तिनम् ।
विपन्नास्त्राणकर्तारं सम्पन्नाः सम्पदात्मकम् ॥४०॥
श्रान्ता उद्यमरूपं मां व्यापृता यत्नरूपिणम् ।
उपासतेऽलसाः फलोज्झितं मां रागिणः सुखम् ॥४१॥
तेषामुपास्तिमालम्ब्य ददामीष्टफलं सदा ।
अहं वै कृपया लभ्यो मन्त्रलभ्यो भवामि च ॥४२॥
भक्तिलभ्यः स्नेहलभ्यः समाधिलभ्य इत्यपि ।
अलभ्यः सुलभश्चास्मि संहितापाठिनां त्विह ॥४३॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
इतिमन्त्रप्रजपतस्तु सुलभोऽहं निरन्तरम् ॥४४॥
गुरोः सेवाफलं कृष्णनारायणाप्तिरुत्तमा ।
साक्षादत्र भवेच्चेति तथा प्राप्तोऽस्मि वस्त्विह ॥४५॥
यो मां स्मरति नमति चष्टे ध्यायति सेवते ।
तस्याऽहं हृदये नित्यं विशेषेण पुरोऽपि च ॥४६॥
यः पत्न्यां श्रियमीक्षेत पत्यौ नारायणं तु वा ।
अपत्ये पार्षदान्मे च तद्गृहं मेऽक्षरं पदम् ॥४७॥
यः प्रवृत्तौ ममाऽऽज्ञां वै निवृत्तौ च मयि स्थितिम् ।
जीवने मम तादात्म्यं दधाति स प्रयाति माम् ॥४८॥

यस्येन्द्रियाणि सर्वाणि कृष्णार्थानि मनोऽपि च ।
आत्माऽपि श्रीकृष्णनारायणार्थः स पुमर्थवान् ॥४९॥
अपि लोके दुराचारो योऽनन्याश्रयवान् मयि ।
मन्नर्चिं कुरुते नित्यं स साधुर्मोक्षसाधनः ॥५०॥
अपि धर्मविरागाढ्यो निष्परिग्रह आत्मवान् ।
विहाय मां वर्तमानस्तस्य हानिर्महत्तमा ॥५१॥
असाधुः स तु मन्तव्यो यो न भजते मां प्रभुम् ।
न वा साधून् सेवतेऽपि नष्टार्थः स तु सर्वथा ॥५२॥
अपीन्द्रधिष्ण्यमापन्नो धर्मराजप्रतापवान् ।
सूर्यतेजोऽभिसम्पन्नो भक्तिहीनस्तु नारकी ॥५३॥
अपि भौतिकतत्त्वेशः सिद्ध्यैश्वर्यैकशेवधिः ।
ब्रह्माण्डानां नियन्ता चेद् भक्तिहीनः स नारकी ॥५४॥
बुद्धेः पारं गतश्चापि मायापारं गतोऽपि च ।
ब्रह्मभावं गतश्चापि भक्तिहीनस्तु नोत्तमः ॥५५॥
प्रजापालनशक्तोऽपि सर्वाचारपरायणः ।
सतां सेवाविहीनो यः स फल्गुजन्मवानिह ॥५६॥
सर्वविद्याधरश्चापि सर्वशासनवीर्यवान् ।
सतां सेवाविहीनश्चेत् फल्गुजीवनवानिह ॥५७॥
देवकोटिं गतश्चापि महर्षितां गतोऽपि चेत् ।
मम सतां कृपाशून्यस्तस्य सर्वं निरर्थकम् ॥५८॥
कामधेनुर्गृहे यस्य कल्पद्रुमश्च मन्दिरे ।
यस्य गृहे न वै सन्तस्तद्गृहं फेरुराजवत् ॥५९॥
दृष्टिर्यस्याऽतिदिव्याऽपि सत्त्वं चान्तःस्थितं तथा ।
सतां दर्शनहीनश्चेत् सदाऽन्धः स तु नारकी ॥६०॥
पूजाभिः पूजितश्चापि कीर्त्या प्रकाशमानपि ।
सतां दर्शनहीनश्चेत् सदाऽन्धो दीनकिंकरः ॥६१॥
चतुर्दशसु लोकेषु गतिमानपि सर्वथा ।
साधून् प्रति गतिहीनो दुर्गतिः स तु नारकी ॥६२॥
आरण्यको मुनिश्चापि त्यागवैराग्यशीलवान् ।
साधुसत्संगहीनश्चेत् स स्यादारण्यकः पशुः ॥६३॥
मायापाशात् पशुत्वं वै जीवानां विद्यते सदा ।
माया तु वासना बोध्या भक्त्यन्तरायकारिणी ॥६४॥
सा तु प्रक्षालनीया वै सतां हरेश्च सेवया ।
आत्मार्पणं हरौ कार्यं सर्वार्पणं तु सत्स्वपि ॥६५॥
मयि न्यस्य क्रियाः सर्वा भाव्यं ब्रह्मात्मना त्विह ।
संहिताश्रवणं कृत्वा भाव्यं मदात्मना ततः ॥६६॥
मम भावयुतो यः स्यात्तमुद्धरामि सर्वथा ।
तस्मात्स्यद्य भवतां श्रेष्ठं साक्षान्मम प्रसादतः ॥६७॥

इत्युक्त्वा श्रीकृष्णनारायणस्तत्र तु बद्रिके ।
विरराम ततः श्रीमान् लोमशास्तान् मनुं परम् ॥६८॥
श्रावयामास च सर्वान् वैष्णवान् परमान् व्यधात् ।
सभाविरामः सञ्जातो हरिः प्रपूजितो जनैः ॥६९॥
विश्रामार्थं ययौ नैजं स्थानं तत्र नृपादिभिः ।
आरार्त्रिकं च नैवेद्यं श्रीहरेर्विहितं शुभम् ॥७०॥
अन्येषां भोजनपानासनसत्कारपूजनम् ।
यथायोग्यं नृपाद्यैश्च कृतं निशामुखे तदा ॥७१॥
रात्रौ नार्यो नरा राज्ञ्यो राजानो लोमशं मुनिम् ।
स्वप्रकाशायनकं ते वक्तारं समसेवयन् ॥७२॥
साधून् सिषेविरे चापि पादसंवाहनादिभिः ।
अतोषयन् श्रेयसे तान् दिव्यभावनया युताः ॥७३॥
रात्रौ तत्र तु देवानां गन्धर्वाणां च गीतयः ।
अप्सरसां नर्तनानि गायनानि च योषिताम् ॥७४॥
कवीनां प्राचीनकथालहर्यश्चाभवँस्ततः ।
नाटकानां दर्शनानि चरित्राणां हरेस्तथा ॥७५॥
इन्द्रजालान्यनेकानि कलाविदां तदाऽभवन् ।
भजनानि सतीनां च साधूनां कीर्तनानि च ॥७६॥
समाधयो योगविदां तदाऽभवँस्तु बद्रिके ।
सेवा श्रेष्ठा मुमुक्षूणां तादात्म्यं तु निजात्मनाम् ॥७७॥
सर्वार्पणं प्रभक्तानां तदाऽभवँस्तु बद्रिके ।
द्रवीभावश्चात्मविदां स्नेहिनां परमात्मनि ॥७८॥
ज्ञानिनां त्वेकतानत्वं प्रत्ययानां तदाऽभवत् ।
प्रमोदामोदपरमानन्दा अभवन् देहिनाम् ॥७९॥
क्षेत्राणां पुलको जातः स्वेदस्तु सरितां तदा ।
प्रवाहाणां पावनत्वं जातं श्रीकृष्णयोगतः ॥८०॥
सतां प्रकाशनं तत्र महर्षीणां विनोदनम् ।
प्रजानां धान्यसंस्कारास्तदाऽभवन् हि बद्रिके ॥८१॥
पशूनां तु पवित्रत्वं पक्षिणां यादसामपि ।
जन्तूनां जीवनोत्कर्षो भावी जातो हि बद्रिके ॥८२॥
वल्लीनां पादपानां च वृक्षाणां तृणशाखिनाम् ।
कन्दानां भूतले तत्र यज्ञाऽर्हत्वं तदाऽभवत् ॥८३॥
सार्थक्यं तत्र वायूनां वन्हीनां खस्य चाऽभवत् ।
वारीणां तद्विकाराणां सार्थक्यं कृष्णयोगतः ॥८४॥
शय्यानां मन्दिराणां च वस्तूनां कृष्णसञ्जुषाम् ।
पावनत्वं सदा जातं मोक्षदायित्वमुत्तमम् ॥८५॥
बद्रिके का कथा तेषां येषां कर्णे तु संहिता ।
येषां भूमौ बालकृष्णो येषां दृष्टौ तु साधवः ॥८६॥

सुरेश्वराः समागत्य रात्रौ श्रीशं श्रीवल्लभप्रभुम् ।
दिव्यद्रवैः पूजयित्वा प्रसादं प्राप्य संययुः ॥८७॥
तीर्थानि भूव्योमगानि समागत्य रहस्ततः ।
हरेः पादस्पृष्टजलं पीत्वा ययुर्निजस्थलीम् ॥८८॥
सिद्धजना अद्रिवासा आगत्य योगवर्ष्मभिः ।
सेवयित्वा बालकृष्णं ययुर्नैजं तु गह्वरम् ॥८९॥
द्यौः स्वयं युवती भूत्वा सिषेवे द्युपतिं हरिम् ।
कृतकृत्या ययौ नैजं निवासं त्वम्बरे ततः ॥९०॥
श्वेतद्वीपादिवासाश्च मुक्ता मुक्तानिकास्तथा ।
क्षीरवासा बद्रिकास्थाः सिषेविरे नरायणम् ॥९१॥
राधारमाद्याः सकलाः शक्तयः प्राणरक्षकम् ।
कान्तं सिषेविरे कान्ता दिव्यमूर्तय एव ताः ॥९२॥
नैकरूपधरः कृष्णोवल्लभाऽऽर्यो निशान्तरे ।
जगृहे त्वर्पितां सेवां नराणां योषितामपि ॥९३॥
निशान्ते स क्षणं निद्रां योगनिद्रां निजप्रियाम् ।
जग्राह घटिकामात्रं समुत्तस्थौ ततः प्रभुः ॥९४॥
अनादि श्रीकृष्णनारायणात्मकं परात्परम् ।
दध्यौ नैजं मूलरूपं समुत्थाय क्षणं प्रभुः ॥९५॥
तदावताराः सर्वेऽपि सर्वावतारशक्तयः ।
ईश्वरा ईश्वराण्यश्च दिव्याऽदृश्यस्वरूपकैः ॥९६॥
जयन्तीपूजनलाभं रहस्तत्र प्रलेभिरे ।
मुक्ताः समाधिनिष्ठाश्च धामधामनिवासिनः ॥९७॥
पार्षदा अपि कृष्णस्य पूजालाभं प्रपेदिरे ।
पार्षदान्यो गोपिकाश्च पूजासेवां प्रचक्रिरे ॥९८॥
गजो गरुडः शेषश्च वाजी वाहास्तमास्तदा ।
आगत्याऽदृश्यरूपैस्ते रहःपूजां व्यधुर्हरेः ॥९९॥
बद्रिके त्वं मया साकं नरेण तनुना सह ।
महर्षिभिः रहःपूजालाभं प्राप्तवती तदा ॥१००॥
एवं श्रीमत्कृष्णनारायणोर्जाष्टमिकाप्रगे ।
जयन्तीमिषमालम्ब्य दिव्या देवमपूजयन् ॥१०१॥
लेभिरे प्रथमं लाभं चाऽप्रकाशं परात्मनः ।
ततो ब्राह्ममुहूर्तार्धविगमोऽभवदेव ह ॥१०२॥
जनागार हरिर्लोकव्यवहारेण वै ततः ।
जनागरुर्देहिनश्च मिष्टवाद्यस्वरध्वैः ॥१०३॥
ऊर्जकृष्णाष्टमीप्रातर्जयन्तीदेवता मुदा ।
भूत्वा कुमारिका दिव्या सर्वभूषाविभूषिता ॥१०४॥
आययौ दिव्यदेहेनाऽपूजयच्छ्रीपतिं पतिम् ।
अदृश्या न्यवसत् कृष्णे ततोऽखिलदिनं सती ॥१०५॥
एवं बद्रीप्रिये जातो महोत्सवस्तु देहिनाम् ।
पूजनार्थं जनाः सज्जा भवन्ति सर्वतस्तदा ॥१०६॥
दिव्यचिन्तामणिकल्प्याः सामग्रीः सर्वजातिकाः ।
सह नित्वाऽऽययुः पूजाकरणार्थं तदन्तिकम् ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने शर्करापत्तनमण्डपे सायं सभायां श्रीहरिकृतोपदेशो हरेः पूजनं निश्युत्सवाः प्रातर्देवादिकृतरहःपूजनं चेत्यादि-निरूपणनामा द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि श्रीकृष्णस्य महोत्सवम् ।
एकविंशतिके जन्मदिने कृष्णे तु कार्तिके ॥ १ ॥
प्रातरेव हरिं राज्ञ्यः स्नपयित्वा जनार्दनम् ।
सर्वकामप्रदं कान्तं कृष्णनारायणं प्रभुम् ॥ २ ॥
चन्दनैर्गन्धसारैश्च महौषधिरसान्वितैः ।
जलैस्तीर्थाहृतैस्तैलमिश्रितैः कैसरं रसैः ॥ ३ ॥
उपसंप्रसुमृज्याऽभिषिञ्च्य मार्जनमाचरन् ।
वस्त्रधारणशृंगारभूषापुष्पाद्यधारयन् ॥ ४ ॥
मुकुटं कटके स्वर्णजाते हारांश्च कानकान् ।
रत्नमाणिक्यहीरकमौक्तिकस्फटिकान्वितान् ॥ ५ ॥
अधारयन् हरेः कण्ठे तिलकं चन्द्रकं व्यधुः ।
भाले कैसरचन्द्रं च कज्जलं नेत्रयोस्तथा ॥ ६ ॥
कर्णावतंसकौ रम्यौ कर्णपूरौ न्यधारयन् ।
रशनां कानकीं कट्यां नूपुरे पादयोस्तथा ॥ ७ ॥
प्रकोष्ठयोः शृङ्खले चाऽङ्गुल्यादावूर्मिकादिकम् ।
चूडामणिं कुण्डले च ग्रैवेयकीयमालिकाः ॥ ८ ॥
कटके च मणीन् न्यधारयन् सुवर्णपादुके ।
कोट्यर्बुदाब्जमूल्याधिमहामणीनधारयन् ॥ ९ ॥
यत्प्रकाशस्तु सर्वत्र मध्यन्दिनभ्रमावहः ।
पादहस्ततलयोश्चालक्तकादि न्यधारयन् ॥१०॥
सौवर्णचूर्णसंव्याप्तगात्राण्यपि ह्यकारयन् ।
सैन्धवाश्वनिभे स्वर्णासने श्रीस्वामिवल्लभम् ॥११॥
न्यषादयँस्तदा राज्ञ्यः सिन्धुजानां तु भूभुजाम् ।
प्रथमं ता मंगलानि कृत्वा कृष्णमपूपुजन् ॥१२॥
धृत्वोपदाः स्वर्णरूप्यमणिहारमयीः पुरः ।
न्यधुस्ते पादयोर्वारि प्रक्षालितं पपुः पयः ॥१३॥
आरार्त्रिकं व्यधू राज्ञ्यः पुष्पाक्षतादिवर्षितम् ।
दुःखहान्यञ्जलीन् कृष्णशिरस्यवतारयन् ॥१४॥

प्रदक्षिणं दण्डवच्च क्षमां ययाचिरे दयाम् ।
दिनेश्वरी भाणवाण्या रायहरेर्विचित्तताम् ॥१५॥
निवेद्याऽयाचत स्वास्थ्यं सुखं च शाश्वतं ततः ।
हरिस्तां समुवाचाऽपि स्वास्थ्यमत्रैव शोभनम् ॥१६॥
भविष्यत्येव मा चिन्तां कुरु राज्ञि सुखं भवेत् ।
क्षणान्ते कोटिरायोऽपि रायहरिं नृपं त्विह ॥१७॥
नीत्वा त्वायास्पति पूजां कर्तुं मे स्वस्थमानसम् ।
भाणवार्णीं पुरो मेऽत्र समानय दिनेश्वरि ॥१८॥
इत्युक्ता बद्रिके दिनेश्वरी राज्ञी द्रुतं तदा ।
भाणवार्णीं विचित्तां श्रीकृष्णनारायणान्तिके ॥१९॥
दिनेश्वर्यानयत् कृष्णो भाणवार्णीं तु मस्तके ।
पस्पर्श पाणिना मीनध्वजशूलधनुष्मता ॥२०॥
तावत् सा स्वस्थितिमती पावनी ज्ञानयोगिनी ।
निरामया च निर्व्याधिः पण्डितेवाऽभवद् द्रुतम् ॥२१॥
वैचित्र्यं विगतं तस्याः सुबुद्धात्वं समागतम् ।
पतिता पादयोः कृष्णनारायणस्य सा ततः ॥२२॥
पूजां कृत्वा श्रीहरेश्चोपदा ददौ रमाजुषे ।
आरार्त्रिकं विधायाऽपि कृष्णपादजलं पपौ ॥२३॥
अर्थयामास मोक्षं सा सर्वपापविनाशनम् ।
बन्धनानां वासनानां मूलनाशं समार्थयत् ॥२४॥
द्यूतपापविनाशं च व्यवायपापनाशनम् ।
मुक्तानिकास्थितिं साऽपि प्रार्थयत् परमात्मतः ॥२५॥
तथाऽस्त्विति हरिः प्राह तावत् सा दिव्यतां गता ।
दिव्यदेहा देवतावद् दिव्यैश्वर्या बभूव ह ॥२६॥
कृपालेशेन कृष्णस्य निर्वाणिकाऽभवत् सती ।
जीवन्मुक्ताऽभवत्तूर्णं देहावरणवर्जिता ॥२७॥
अहो कृपा हरेर्जाता यत्नशून्येऽपि विग्रहे ।
सयत्नानां तु वै सिद्धिः पूर्वभावं न संगता ॥२८॥
अथ तत्र महाश्चर्यं वीक्ष्य कन्याः सहस्रशः ।
सौभाग्यवत्यो नार्यश्च सधवा विधवा अपि ॥२९॥
बालिकाश्चापि वृद्धाश्च पुपूजुः परमेश्वरम् ।
भाणवार्णीं दिव्यदेहां व्यधात् कृष्णेति मोहिताः ॥३०॥
ताः सर्वा भावनायुक्ता यथाभावास्तथाऽभवन् ।
दिव्यगुणा दिव्यदेहा दिव्यक्रियाः सुदेवताः ॥३१॥
दिव्यनेत्रा दिव्यभावा राधारमासमास्तदा ।
अनादिश्रीकृष्णनारायणस्पर्शेन योषितः ॥३२॥
ब्रह्मप्रिया अभवँश्च हरिप्रियाः सहस्रशः ।
मन्त्रं ता बगृहुः कृष्णमुखात् कार्ष्णीमवेच्छया ॥३३॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
बह्व्यस्तत्राऽभवन् रुग्णास्तद्रोगान् स न्यवारयत् ॥३४॥
बह्वीनां त्वनपत्यत्वं कृष्णस्तत् सन्न्यवारयत् ।
अन्यासां क्लेशवत्त्वादि क्लेशाँस्तासां न्यवारयत् ॥३५॥
तथाऽन्यासां निर्धनत्वं दारिद्र्यं स न्यवारयत् ।
अन्यासां तु पतिप्राप्तिमत्त्वं स कृपयाऽकरोत् ॥३६॥
सौभाग्यवत्त्वमन्यासां सम्पद्वत्त्वं समुत्तमम् ।
चकार श्रीकृष्णनारायणः सर्वसुखार्पणम् ॥३७॥
राज्ञीनां पूजनकार्ये समाप्तं च प्रजास्त्रियः ।
अपूजयन् हरिं सर्वा लक्षशः कोटिशः स्त्रियः ॥३८॥
कोटिरूपधरः कृष्णनारायणो व्यजायत ।
तत्तन्नारीपुरःस्थित्वा कान्तः पूजामवालभत् ॥३९॥
आशीर्वादाँस्ता अगृह्णन् शुभाशिषो ददौ हरिः ।
सर्वासां हृदये कृष्णो दिव्यवासं सदा व्यधात् ॥४०॥
एवं घटिकामात्रं वै महाश्चर्यचमत्कृतिम् ।
प्रदर्श्य तु ततस्तिरोभूयैकरूपतां ययौ ॥४१॥
नारीवर्गे न चाऽप्येका कृष्णयोगेऽवशिष्यते ।
दयां कृत्वा तथा कृष्णः पूजां जग्राह सर्वधृक् ॥४२॥
अथ तृप्तिं गता नार्यो दृष्ट्वा स्पृष्ट्वा प्रपूज्य तम् ।
प्राप्य प्रासादिकं भोज्यं फलं पुष्पं दलं जलम् ॥४३॥
स्नेहं नेत्रकटाक्षं च सौम्यहास्यं मनस्तथा ।
कृतकृत्या अभवँस्ता दिव्यभौतिकविग्रहाः ॥४४॥
एवं हरिः प्राप्य पूजां नारीणां दिव्यभावनाम् ।
दिव्यैश्वर्ययुतां चापि तिरोभावं गतोऽच्युतः ॥४५॥
ततः सर्वाः स्थिरवृत्त्या श्रीकृष्णं विलुलोकिरे ।
परब्रह्म पुनः कश्चिन्नारायणं श्रियः पतिम् ॥४६॥
श्रीकृष्णं राधिकाकान्तं ललितास्वामिनं हरिम् ।
स्वामिनाथं तु माणिक्याः पद्मावत्याः पतिं तथा ॥४७॥
काश्चित्तु बद्रिकानाथं काश्चिच्छ्रीभूपतिं तथा ।
काश्चित्तु कमलानाथं प्रभेशं विलुलोकिरे ॥४८॥
ततः श्रीकुंकुमवापीनाथं तं विलुलोकिरे ।
एवं वीक्ष्य महानन्दं सर्वानन्दाँश्च लेभिरे ॥४९॥
सैन्धव्यः श्रीहरिं प्राप्य धामिन्यः संबभूविरे ।
वैष्णव्यः परमा जाताः पुण्यानां सरितो यथा ॥५०॥
कृष्णनारायणस्वामिन्वल्लभाऽऽयेति ता जगुः ।
दध्युः श्रीपरमात्मानं चाऽन्तरस्थं बहिःस्थितम् ॥५१॥
एवं बद्रीप्रिये प्रातर्नारीपूजनमुत्तमम् ।
निवृत्तं च ततो राजा कोटिरायः समाययौ ॥५२॥

बहुभिर्नृपशार्दूलै राजन्यै राजयोगिभिः ।
राज्यपालै राष्ट्रपालैः सैन्यपालैः सहाऽऽययौ ॥५३॥
राजोपचारैः सकलैः पूजयामास माधवम् ।
कोटिमूल्यमणिरत्नाढ्यं मुकुटं कानकम् ॥५४॥
कुण्डले रत्नखचिते कण्ठहारान् सुवर्णजान् ।
कर्णपूरान् कटकांश्चांगदान् सुवर्णशृंखलाः ॥५५॥
ऊर्मिका रत्नानां रत्नाढ्यां हारान् सुवर्णजान् ।
मणिमाला मणिकलिंग मणिमञ्जीरनूपुरान् ॥५६॥
आर्पयद्धरये भाले कृत्वा चान्दनचन्द्रकम् ।
सुगन्धमर्पयामास पुष्पहारान् सुमालिकाः ॥५७॥
भूषाशृंगारवस्त्राणि बहुमूल्यानि चार्पयत् ।
स्वर्णपात्राणि रम्याणि स्वर्णहेतीन् सुसुन्दरान् ॥५८॥
सौवर्णखेलकांश्चापि श्रीकृष्णाय तदाऽऽर्पयत् ।
धूपदीपाऽक्षतवारिनैवेद्याऽऽरार्त्रिकादिभिः ॥५९॥
अमूल्यरत्नमणिभिर्भृतैः स्थालैः सुवर्णजैः ।
स्वर्णाढ्योपकरणाद्यैश्छत्रचामरवेत्रकैः ॥६०॥
पूजयित्वा हरिंकृष्णं तोषयामास भूपतिः ।
तिलकं सुभगं भाले कृष्णस्य नृपमाचरत् ॥६१॥
नृपाश्चान्ये च राजन्याः कुमारा राजयोगिनः ।
राजसम्बन्धिनः श्रेष्ठिवर्या राज्याधिकारिणः ॥६२॥
कस्तूरीकेसरगन्धसारकुंकुमकर्दमैः ।
पुष्पाऽक्षतजलवृन्दापत्रयवांकुरादिभिः ॥६३॥
प्रपूज्य माधवींकृष्णं नत्वा पीत्वा पदाऽमृतम् ।
आरार्त्रिकं व्यधुश्चाशीर्वादान् ददुः शुभावहान् ॥६४॥
कोटिरायस्तदा रायहरिं स्वस्थस्थितिं गतम् ।
प्रैरयत् परमेशस्य पूजार्थं तत्र सोत्सुकम् ॥६५॥
निरामयो गतशापः सर्वभानप्रबोधवान् ।
श्रीकृष्णंवल्लभंचाऽऽर्य पुपूज परमादरात् ॥६६॥
अथ सर्वप्रजाः कृष्णं जन्मजयन्तिकोत्सवे ।
उत्सुकाः पूजयामासुरीशेश्वरेश्वरेश्वरम् ॥६७॥
तदाऽनादिकृष्णनारायणदिव्यस्वरूपकम् ।
व्यद्योतताऽक्षरधामाश्रितं यद्वत् परात्परम् ॥६८॥
लोमशाद्या मुनयोऽपि महर्षयश्च देवताः ।
सिद्धाः सत्यः साधवश्चाऽऽनर्चुः श्रीबालकृष्णकम् ॥६९॥
आशीर्वादान् ददुश्चापि सूतमागधचारणाः ।
बन्दिनः कवयो भट्टा ववन्दिरे शुभाशयाः ॥७०॥
एवं मध्याह्नवेलान्तं जन्मजयन्तिकोत्सवः ।
समभवत्तदा वह्नि भोजनानि ततोऽभवन् ॥७१॥

सायं सभाऽभवद् रम्या लक्षाधिमानवाऽऽश्रिता ।
स्वप्रकाशो हि भगवान्नुपादिदेश तत्र ह ॥७२॥
मानवे खलु लोकेऽत्र श्रेष्ठं मानं परेश्वरः ।
परमेशकृतमाना मानिता नेतरे क्वचित् ॥७३॥
श्रीकृष्णश्रीपतिनारायणाऽनादिपुमुत्तमः ।
विराजतेऽत्र भगवान् भवतां मानकारकः ॥७४॥
भवद्भिर्मानितः कृष्णो भवन्तो मानितास्ततः ।
येषां मानं हरेरग्रे तेषां सर्वत्र मानिता ॥७५॥
यद्गृहे भगवानास्ते सर्वे दिव्या हि ते मताः ।
गृहस्थोऽपि हरिं नैजे गृहे यः स्थापयेत् सदा ॥७६॥
साधुरेव गृहस्थः स यद्गृहं माधवात्मकम् ।
नारी नारायणपूजाकरी साध्वी तु सा मता ॥७७॥
राजाऽपि राजते यत्र श्रीकृष्णेन परात्मना ।
स राजा साधुरेवाऽस्ति यद्गृहे श्रीनरायणः ॥७८॥
राज्ञी निर्मानदासीव सेवते परमेश्वरम् ।
सा राज्ञी सर्वदा साध्वी यतो नारायणश्रिता ॥७९॥
राष्ट्रीयास्तु प्रजा या याः सेवन्ते माधवीश्वरम् ।
सर्वाः साध्व्यो हि मन्तव्या यद्गृहे भगवानिति ॥८०॥
धनवन्तो हरिं ये तु सेवन्ते साधवोऽपि ते ।
धनं नारायणो येषां ते सन्तः साधुभूषणाः ॥८१॥
सन् वै नारायणस्तं ये चान्ते धरन्ति सर्वथा ।
तरन्ति तेन चान्यांश्च तारयन्ति भवार्णवात् ॥८२॥
सन्तस्ते त्वत्र संसारे साध्नुवन्ति पुमर्थकम् ।
व्यापारस्तु भवेद् येषां कृष्णार्थं साधवस्तु ते ॥८३॥
व्यवसायो भवेद् येषां कृष्णात्मा साधवोऽपि ते ।
यतयो यत्नवन्तो ये हरौ ते सन्त ईरिताः ॥८४॥
संन्यासिनो हरौ ये ते सन्तो मोक्षपरायणाः ।
वने वासकराः कृष्णे मग्नास्ते साधवो मताः ॥८५॥
योगं कृष्णे प्रयुञ्जानाः साधवस्तेऽपि योगिनः ।
तपः कृष्णपरं येषां तापसाः साधवस्तु ते ॥८६॥
व्रतं येषां परे कृष्णे साधवो व्रतिनश्च ते ।
यज्ञा येषां हरौ कृष्णे साधवो यज्ञिनस्तु ते ॥८७॥
जीवनं श्रीहरौ येषां जीवन्मुक्ता हि साधवः ।
रागोऽर्पितो हरौ कृष्णे वीतरागा हि साधवः ॥८८॥
इन्द्रियार्थाः कृताः कृष्णे साधकाः साधवस्तु ते ।
प्रवृत्तिं परमेशे ये कुर्वन्ति साधवोऽपि ते ॥८९॥
ब्रह्म श्रीपरमात्मैव तत्र चरन्ति मुक्तये ।
ये ते ब्रह्मचराः प्रोक्ता ब्रह्मचारिण एव ते ॥९०॥

मननं श्रीहरेर्येषां मुनयः साधवो हि ते ।
आर्षं ज्ञानं हरेर्येषाम् ऋषयः साधवस्तु ते ॥९१॥
दिव्यभावो हरौ येषां देवता अपि साधवः ।
कर्म सर्वं परे येषां परार्थाः साधवोऽपि ते ॥९२॥
वृत्तयः सर्वथा कृष्णे येषां ते ध्यानिसाधवः ।
समाधानं हरौ येषां समाधिस्था हि साधवः ॥९३॥
कुटुम्बं यस्य कृष्णार्थं सन्तः कुटुम्बिनस्तु ते ।
संख्याः सर्वा हरौ येषां सांख्यास्ते साधवो मताः ॥९४॥
अज्ञानात् प्रथमं जन्म ततो ज्ञाने द्वितीयकम् ।
द्विजास्ते साधवो बोध्या मोक्षज्ञानपरायणाः ॥९५॥
देहात्तु प्रथमं जन्म दीक्षया तु द्वितीयकम् ।
नारायणे दीक्षिता ये द्विजास्ते साधवो मताः ॥९६॥
संसारः प्रथमं जन्म मोक्षो जन्म द्वितीयकम् ।
मोक्षद्विजाः साधवस्ते सर्वेषां तारका भुवि ॥९७॥
मायायां साधनं त्याज्यं ततः साधुषु साधनम् ।
त एते त्यागिनः सन्तः सर्वमायाविवर्जिताः ॥९८॥
पतियोगं प्रपन्नापि प्रपन्ना या नरायणम् ।
सा पत्नी स्त्री भवेत् साध्वी नारायणी सतीश्वरी ॥९९॥
उदासीना गृहे या तु नारायणे तु या स्थिता ।
साधुसेवापरा साध्वी भवेत् सा ब्रह्मचारिणी ॥१००॥
आत्मसाधनसत्कारा मोक्षसाधनतत्पराः ।
सत्क्रियास्ते साधवो वै कृष्णकर्मपरायणाः ॥१०१॥
कृष्णे शौचं सदा येषां शुचयः साधवस्तु ते ।
कीर्तनं सर्वदा कृष्णे स्वाध्यायसाधवस्तु ते ॥१०२॥
हरेः पुरो भवेद् यस्याऽऽसनं साधुः सदासनः ।
प्राणे प्राणे हरिर्यस्य साधुः प्राणासनः स हि ॥१०३॥
आहारे भगवान् यस्य साधुराहारनामवान् ।
शान्तिर्हरौ भवेद् यस्य शान्तः साधुः स वै मतः ॥१०४॥
योगिना श्रीहरौ कृष्णे भवितव्यं तु देहिना ।
सहनीयं कष्टमात्रं क्षमा कार्याऽपराधिषु ॥१०५॥
न कष्टं सम्प्रदातव्यं कस्यचिदपि कर्मणा ।
मनसा वापि देहेन वचसापि कदाचन ॥१०६॥
सत्यं सम्पालनीयं च स्तैन्यं त्याज्यं तु योगिना ।
सन्तोषः सर्वथा रक्ष्यो भाव्यं पाषाणकल्पिना ॥१०७॥
स्वादस्तु सर्वथा ग्राह्यो योगिना परमात्मनि ।
रतिः प्रीतिर्हरौ देया योगिना ब्रह्मचारिणा ॥१०८॥
आचारोऽपि हरौ पाल्यः साधुना कृष्णयोगिना ।
भावार्थं श्रीहरौ कुर्याच्छ्रौतः साधुः स योगिराट् ॥१०९॥
स्मृतार्थं सर्वथा कृष्णे युञ्ज्यात् साधुः स योजकः ।
बाल्यं वा यौवनं वापि वार्धक्यं परमेश्वरे ॥११०॥
नरत्वं प्रमदात्वं चार्पणीयं परमेश्वरे ।
त एते साधवः सन्ति साधनाच्छ्रीपतेर्हृदि ॥१११॥
भूत्वा साधव एवात्र कृष्णं कृत्वा निजं पतिम् ।
प्रयान्तु वै नरा नार्यो धामाऽक्षरं परं प्रभोः ॥११२॥
अद्यजन्मजयन्त्यस्ति ह्यनादिपरमात्मनः ।
वर्धिता सा भवद्भिर्वै महोत्सवेन योजिता ॥११३॥
भवतां सिन्धुलोकानां करोत्वभ्युदयं परम् ।
परं निःश्रेयसं चापि कल्याणं परमं तथा ॥११४॥
शाश्वतं च महानन्दं करोतु श्रीहरेः पदे ।
एनं त्वनादिनिधनं श्रीपतिं पुरुषोत्तमम् ॥११५॥
सदा ध्यायन्तु हृदये सन्तो भवन्तु साधवः ।
सर्वविधानि स्वर्गाणि भवन्तु भवतामिह ॥११६॥
अनादिश्रीकृष्णनारायणप्रसादतस्त्विह ।
प्रसन्नो भगवानस्ति बालकृष्णः परः प्रभुः ॥११७॥
स्वस्ति वोऽस्तु कुशलं वो महास्वर्गं सदाऽस्तु वः ।
महावंशादिविस्तारो वैष्णवोऽस्तु सदा तु वः ॥११८॥
भवतां च गृहे क्षेत्रे साधुवासोऽस्तु मोक्षदः ।
अनादिश्रीकृष्णनारायणवासो भवत्तु च ॥११९॥
इत्याशीर्वचनान्युक्त्वा प्रस्वप्रकाशः ईश्वरः ।
उपरराम युगपज्जयनादास्ततोऽभवन् ॥१२०॥
जयत्वनादिभगवान् बालकृष्णो जयत्विह ।
सर्वान्तर्गतिः कृष्णनारायणो जयत्विह ॥१२१॥
इत्येवं जयनादैश्च तूर्यनादैः सुरादिभिः ।
कृताभिवादनादैश्च सभा समाप्तिमागमत् ॥१२२॥
हरिर्ययौ निजावासं ययुः सर्वे निजालयान् ।
कोटिरायो रायहरिं नत्वा कृष्णालयं ययौ ॥१२३॥
उवाच परमात्मानं यदर्थं भगवानिह ।
आहूतः सर्वमेवात्र सम्पन्नं नृपमोक्षणम् ॥१२४॥
शापमोक्षोऽत्र सञ्जातः परो मोक्षोऽपि वर्तते ।
करे गतो भगवतो वीक्षणेन हि देहिनाम् ॥१२५॥
अथ कृष्णाज्ञया राज्यं सिन्धुदेशप्रदेशजम् ।
अर्धमर्धं चक्रतुस्तौ शायौदर्यं च शार्करम् ॥१२६॥
कृष्णनारायणं ध्यात्वा लेभाते शाश्वतं सुखम् ।
रात्रौ भोजनपानादि कृत्वा कृष्णनरायणः ॥१२७॥
विश्रान्तिं परमां लेभे सिषेविरे जनास्तु तम् ।
बद्रिके श्रीहरिर्निद्रामवाप दिव्यविग्राहाम् ॥१२८॥

एवं सिद्धिं परां दिव्यां ददौ तेभ्यो हरिः स्वयम् ।
हरेः कृपा सतां यद्वा मोक्षदा सर्वशान्तिदा ॥१२९॥
लक्ष्मीनारायणसंहिता तु साध्वी हि मोक्षदा ।
सर्वसिद्धिमयी विद्या परब्रह्मप्रसङ्गिनी ॥१३०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने जन्मजयन्त्युत्सवे नारीणां नराणां पूजाग्रहणं भाणवाणीरायहर्योर्निरामयताकरणं, सभा, साधुत्वविवेचनं विश्रान्तिश्चेत्यादिनिरूपणनामा त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

**श्रीबद्रीप्रियादेवी उवाच—**

कुंकुमवापिकाक्षेत्रे नरनारायणप्रभो ।
बालकृष्णभगवतो जन्मजयन्तिकोत्सवः ॥ १ ॥
कीदृशोऽप्यभवत् तत्र द्वितीयरूपयोगिनः ।
संक्षेपाच्छ्रोतुमिच्छामि कथां श्रीपरमात्मनः ॥ २ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि दिव्यरूपो हरिस्तदा ।
कुंकुमवापिकाक्षेत्रे बहुरूपाण्यधारयत् ॥ ३ ॥
अनादिश्रीकृष्णनारायणरूपः स्वयंप्रभुः ।
लोमशोऽप्यभवत् सर्वमहर्षिरूपवाँस्तथा ॥ ४ ॥
स्वयंप्रकाशस्वरूपश्च दासदासीस्वरूपवान् ।
भक्तभक्तानिकारूपधरः कृष्णस्तदाऽभवत् ॥ ५ ॥
ये ये सिन्धुं गतास्तेषां मूर्तिधृग् वेषधृक् प्रभुः ।
सर्वचिह्नोपकरणधृक्प्रभुस्तु तदाऽभवत् ॥ ६ ॥
विश्वकर्मा समाहूतो नारायणेन तत्र च ।
ब्रह्मा विष्णुर्महेशश्च महेन्द्रवरुणादयः ॥ ७ ॥
सिद्धा महर्षयो मुक्ता मुक्तानिकास्तथेश्वराः ।
देवा देव्यश्च भूदेवाश्चैकविंशतिकोत्सवे ॥ ८ ॥
आययुः श्रीहरेः पूजाकरणार्थे प्रगे तदा ।
अष्टम्यां कार्तिकेकृष्णे विप्राश्चापि समाययुः ॥ ९ ॥
सुराः सुराण्यो देवाश्च लोकपालाः समाययुः ।
सौराष्ट्रवासिनश्चान्ये क्षितिद्वीपनिवासिनः ॥१०॥
जन्मजयन्तिकामहोत्सवं कर्तुं समाययुः ।
तदा ब्रह्मप्रियाः सर्वा हरिप्रियाश्च देवताः ॥११॥
शृंगारं श्रीपतिकृष्णस्वामिनः संव्यधुर्मुदा ।
अभिषेकोत्तरं वेषं भूषाद्योमां प्रचक्रिरे ॥१२॥
तिलकं चन्द्रकं भाले कुंकुमाऽक्षतकर्दमैः ।
केसरैः कस्तूरिकैश्च सुगन्धिसारसद्द्रवैः ॥१३॥
प्रपूज्याऽऽरार्त्रिकं चक्रुः पुष्पदीपप्रदानकैः ।
आशीर्भिर्वर्धयामासुः प्रशेशं माधवीपतिम् ॥१४॥
लक्ष्मीनारायणं कृष्णं विकुण्ठापरमेश्वरम् ।
उपदाभिर्विविधाभिस्तोषणं तस्य संव्यधुः ॥१५॥
दिव्यज्ञाना देववर्या आश्चर्यं परमं ययुः ।
सिन्धुतीरे हरिस्त्वास्ते तथाऽऽस्तेऽश्वसरस्तटे ॥१६॥
निजजन्मजयन्त्या उत्सवार्थं कृपया द्विधा ।
ब्रह्मा नीराजनं चक्रे लोकपालाः प्रचक्रिरे ॥१७॥
विप्रा मन्त्रैर्द्रव्यवर्यैः पूजां चक्रुः परात्मनः ।
एवं प्रातर्महाञ्जात उत्सवोऽश्वसरस्तटे ॥१८॥
भोजनान्यभवँश्चापि सायं सभाऽभवच्छुभा ।
लोमशो दिव्यरूपेण सभाकार्यं तदा व्यधात् ॥१९॥
उपादिदेश बहुधा सौराष्ट्रीयप्रजाजनान् ।
उत्सवे चागताँल्लोकान् सर्वभूमिनिवासिनः ॥२०॥
लोककल्याणकर्ताऽयं भगवान् पुरुषोत्तमः ।
एकधा बहुधा चास्ते सर्वश्रेयःकृपावशः ॥२१॥
सिन्धुदेशे वर्ततेऽद्य सौराष्ट्रे चात्र वर्तते ।
अक्षरे परमे धाम्नि वर्तते हृदयेषु नः ॥२२॥
क्षीराख्ये सागरे चास्ते श्वेतद्वीपेऽपि वर्तते ।
श्रीबदर्याश्रमे चास्ते क्षेत्रे च पौरुषोत्तमे ॥२३॥
मूलद्वारवतीपूर्यां तथा मेरौ विराजते ।
भृगोर्गृहे स एवास्ते धर्मदेवगृहेऽपि च ॥२४॥
वह्नौ सूर्ये तथा चन्द्रे सत्यलोके विराजते ।
वैकुण्ठे श्रीपुरे चास्तेऽव्याकृते चामृते पदे ॥२५॥
गोलोके स हरिश्चास्ते तथाऽक्षरे परे पदे ।
सर्वधामसु सर्वेशः स एवास्ते हरिः स्वयम् ॥२६॥
हरेर्जन्मोत्सवश्चाद्यैकविंशतिगुणात्मकः ।
सर्वलोकेषु सर्वत्र महीयते स्थले स्थले ॥२७॥
तत्र तत्रान्यरूपेण वर्तते भगवानयम् ।
भक्तिवशो हि भगवान् भजतामेति भक्तताम् ॥२८॥
त्रिगुणो निर्गुणो वापि भक्तः प्रियः परात्मनः ।
दुराचारो ऽनाचारो भक्तः प्रियः परात्मनः ॥२९॥
अज्ञः सुज्ञश्च विज्ञो वा भक्तः प्रियः परात्मनः ।
निर्मलो वा विमलो वा भक्तः प्रियः परात्मनः ॥३०॥
नारी षण्ढो नरो वापि भक्तः प्रियः परात्मनः ।
देवो दैत्यो राक्षसो वा नागो वा चञ्चुमानपि ॥३१॥

सखुरो वा सपुच्छो वा भक्तः प्रियः परात्मनः ।
अपि मायामयो देही मायायोगपरायणः ॥३२॥

चेत् स भक्तोऽनन्यभक्तः स प्रियः परमात्मनः ।
कृष्णस्य साधनात् साधुः प्रियः श्रीपरमात्मनः ॥३३॥

वृद्धश्चाऽलोलुपश्चापि तथाऽऽत्मवान्नदाम्भिकः ।
सम्यग्विनीतः सरलः प्रिय आचार्य ईशितुः ॥३४॥

दयावतां भजनेषु स्थितानां सुतपस्विनाम् ।
मयि न्यासवतां स्नेहवतां च वशगात्मनाम् ॥३५॥

विरक्तानां शानिजां च दान्तानां दानिनां तथा ।
सत्यस्थानामलुब्धानां ब्रह्मात्मभावदर्शिनाम् ॥३६॥

कृष्णभक्त्यविरुद्धानां प्रसीदति परेश्वरः ।
यस्यालस्यं न वै भक्तौ प्रमादो नास्ति सर्वथा ॥३७॥

श्रद्धा च वर्तते कृष्णे तस्मिन् कृष्णः प्रसीदति ।
दौर्मनस्यं च नास्तिक्यं यस्मिन्नेवाऽस्ति सर्वथा ॥३८॥

स्वार्थबुद्धिर्न यस्याऽस्ति भक्तौ मानं न विद्यते ।
संशयो यस्य नैवाऽस्ति तस्मिन् कृष्णः प्रसीदति ॥३९॥

उत्साहसहिते नित्यं संस्मर्तरि परात्मनः ।
सेवापरायणे भक्ते दासे कृष्णः प्रसीदति ॥४०॥

सर्वश्रवे सर्वदर्शिन्यर्थबोधयुतेऽनिशम् ।
सर्वस्पर्शविदि भक्तियुते कृष्णः प्रसीदति ॥४१॥

सर्वास्वादवति दिव्यगन्धमात्रादिरुविदि ।
सैश्वर्येऽनावरणाढ्ये भक्ते कृष्णः प्रसीदति ॥४२॥

जलवासेऽनलवासे भूवासे गह्वरस्थिते ।
अप्याकाशनिवासेऽपि भक्ते कृष्णः प्रसीदति ॥४३॥

मेघधारेऽद्रिधारे च स्वर्गधारे धराधरे ।
अपि भक्तिधरे कृष्णः प्रसीदत्येव नान्यथा ॥४४॥

देहादग्निविनिर्माणशक्ते तापभयोज्झिते ।
दाहवारणशक्तेऽपि भक्ते कृष्णः प्रसीदति ॥४५॥

जलमध्येऽनलरक्षाकरेऽनले जलग्रहे ।
भस्मीभूतेऽपि निर्माणे शक्ते भक्ते प्रसीदति ॥४६॥

परकायप्रवेशादौ शक्ते पर्वतधारणे ।
पाणिभ्यां वायुरोधे च शक्ते भक्ते प्रसीदति ॥४७॥

अंगुल्यग्रनिघातेन भूकम्पे शक्तिशालिनि ।
सहस्ररूपधारेऽपि भक्ते कृष्णः प्रसीदति ॥४८॥

आकाशगमने शक्ते सर्वशब्दावगाहने ।
यथाकामोपलम्भे च शक्ते भक्ते प्रसीदति ॥४९॥

छेदने ताडने बन्धे संसारपरिवर्तने ।
मृत्योर्जये प्रलयेऽपि शक्ते भक्ते प्रसीदति ॥५०॥

वैतृष्ण्ये वर्तमानोऽपि कृष्णलीलापरो न चेत् ।
कृष्णभक्तिविहीनश्चेत् कृष्णो नात्र प्रसीदति ॥५१॥

आकाशे क्रीडते यश्च सूक्ष्मानर्थान् समृच्छति ।
सर्वरुतज्ञतां याति भक्तिं चेन्न करोति सः ॥५२॥

तस्मिन् शुष्के जने कृष्णः कदापि न प्रसीदति ।
तेजोरूपाणि सर्वाणि यस्तु यद्यपि पश्यति ॥५३॥

देवबिम्बान्यनेकानि विमानान्यपि पश्यति ।
पश्यति ब्रह्मविष्ण्विन्द्रयमाग्निवरुणेश्वरान् ॥५४॥

ग्रहनक्षत्रताराश्च पातालभुवनान्यपि ।
यद्यात्मानं परात्मानं स्नेहभक्त्या न पश्यति ॥५५॥

आत्मविद्याविहीनश्चेत् कृष्णसेवोज्झितस्तथा ।
सत्त्वप्रसादहीनश्च कृष्णकृपामृतोज्झितः ॥५६॥

साधुसेवाविहीनश्चेत् तस्य सर्वं निरर्थकम् ।
अशाश्वतं कालभोज्यं तस्याऽन्ते वै निरर्थकम् ॥५७॥

अनैश्वर्यं तथाऽज्ञानं ह्यधर्मो राग इत्यमी ।
यत्र स्युः सोऽपि भक्तश्चेत् तस्मिन् कृष्णः प्रसीदति ॥५८॥

भक्त्या तुष्यति सर्वेशो भक्तिहीने न तुष्यति ।
साधुसेवापरे कृष्णो विशेषेण प्रतुष्यति ॥५९॥

साध्वीसेवापरायां तु नार्यो नारायणः सदा !
सन्तुष्टो भवति प्रभाकृष्णो दयालुरच्युतः ॥६०॥

पैशाचं बन्धनं कामो राक्षसं बन्धनं स्त्रियः ।
याक्षं तु बन्धनं द्रव्यं तत्त्यागे तुष्यति प्रभुः ॥६१॥

गान्धर्वं बन्धनं नाट्यं माहेन्द्रं मन्दिराणि वै ।
सौम्यं तु बन्धनं कीर्तिस्तत्त्यागे तुष्यति प्रभुः ॥६२॥

सौरं तु बन्धनं सत्ता प्राजापत्यं तु वंशजाः ।
वैधसं बन्धनं धिष्ण्यं तत्त्यागे तुष्यति प्रभुः ॥६३॥

पतिस्तु बन्धनं रौद्रं सम्पदो वैष्णवं तु तत् ।
वासना बन्धनं याम्यं तत्त्यागे तुष्यति प्रभुः ॥६४॥

दानवं बन्धनं लोभो तृष्णा दैतेयबन्धनम् ।
विषया बन्धनं सार्पं तत्त्यागे तुष्यति प्रभुः ॥६५॥

आग्नेयं बन्धनं वैरं द्वेषो नैर्ऋतमुच्यते ।
बन्धनं नारकं शैश्नं यौनं गर्भे तु बन्धनम् ॥६६॥

प्रतिष्ठा बन्धनं दौर्गं गौरवं तत्तु रौरवम् ।
गार्वं तु बन्धनं भौतं तत्त्यागे तुष्यति प्रभुः ॥६७॥

विच्छिद्य शिथिलीकृत्य जीर्णीकृत्य विनाश्य च ।
बन्धनानि विनिर्बन्धो यस्तस्मिँस्तुष्यति प्रभुः ॥६८॥

पुण्यं तु बन्धनं वार्षं सामर्थ्यं तत्तु दैवतम् ।
ब्राह्मं सत्त्वोत्कर्षरूपं तत्त्यागे तुष्यति प्रभुः ॥६९॥

निर्गुणं बन्धनं कार्ष्णे भक्तिर्निर्वाणबन्धनम् ।
बन्धनं सत् साधुसेवा तद्ग्रहे तुष्यति प्रभुः ॥७०॥
कर्मणा मनसा द्रव्यैः सेवनीया हि साधवः ।
साध्व्यः सर्वार्पणैः सेव्या मोक्षदा हि प्रसादिताः ॥७१॥
हरिः सत्सु च साध्वीषु वर्तते मूर्तिमानपि ।
सर्वकामप्रपूरो नः सेवनीयः स तद्गतः ॥७२॥
'ओंनमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
जपनीयः सदा चैवं मन्त्रात्मा परमेश्वरः ॥७३॥
हृदये रक्षणीयोऽयं सर्वकामफलप्रदः ।
मोक्षाऽमृतमहानन्दप्रदाता कृष्णयोगकृत् ॥७४॥
कृष्णः स्वामी ममादस्तीति स्मर्तव्यः सर्वदा हरिः ।
सर्ववाञ्छितदाताऽयं साक्षाद् भवति सर्वथा ॥७५॥
दानं देयं हरये वै व्रतं कार्यं हरेः कृते ।
तपस्तप्यं तु कृष्णार्थं योगः साध्यो हरेः कृते ॥७६॥
मखः कार्यस्तु कृष्णार्थे तीर्थं कार्यं हरेः कृते ।
जपः कार्यस्तु कृष्णार्थे स्नेहः कार्यो हरेः कृते ॥७७॥
सत्कर्माणि समस्तानि कर्तव्यानि हरेः कृते ।
आत्मसंशोधनं कार्यं श्रीकृष्णार्थे सदा शुभम् ॥७८॥
दिव्यभावो ग्रहीतव्यो मोक्षार्थे हरिमन्दिरे ।
सेवा सतां स्वात्मवत्तु कर्तव्या कृष्णतुष्टये ॥७९॥
आक्षरं परमं क्षेत्रं सेवनीयं विमुक्तये ।
कुंकुमवापिका सेव्याऽनादिकृष्णस्य लब्धये ॥८०॥
रक्तं तु कुंकुमक्षेत्रं श्वेतं चाश्वसरोवरम् ।
कृष्णक्षेत्रमनादिश्रीकृष्णनारायणो हरिः ॥८१॥
त्रयं सेव्यं सदा भक्त्या प्रीत्या सत्त्वेन श्रद्धया ।
प्रीतिर्वै कौंकुमं क्षेत्रं सत्त्वं त्वश्वसरोवरम् ॥८२॥
श्रद्धा कृष्णमयो बंध्या त्र्यात्मकं मोक्षसाधनम् ।
प्रीतिः कृष्णे सदासक्तिः सत्त्वं कृष्णे निजस्थितिः ॥८३॥
श्रद्धा कृष्णेऽर्पणं नैजं त्र्यात्मकं मोक्षसाधनम् ।
रक्तता कुंकुमं कृष्णे श्वेतता च रतो हरौ ॥८४॥
कृष्णता कर्षणं कृष्णे त्र्यात्मकं मोक्षसाधनम् ।
मयि क्षेत्रे हरौ रक्तो मयि सारे हृतो हरिः ॥८५॥
मयि कृष्यां हरिर्वासस्ततोऽहं हरिरेव हि ।
तादात्म्यं हरिणा साकं हर्यात्माऽहं समभुवे ॥८६॥
कृष्णनारायणस्वामिसर्वानन्दभृतप्रभुम् ।
एवं नारायणे कृष्णे कर्तव्यो योग उत्तमः ॥८७॥
भवपारेऽतिसंसारतारके परमेश्वरे ।
स्वस्ति वोऽस्तु स्वागतं वो विदायं वो भवत्वपि ॥८८॥
क्षमापनीयो भगवान् सम्माने लौकिके कृते ।
इत्युक्त्वा लोमशः सायं सभान्तं प्राकरोत् तदा ॥८९॥
भुक्त्वा पीत्वा च हर्याशां नीत्वा ययुर्निजालयान् ।
रात्रौ सम्मानिताः सम्यग् भोजिताः पूजिता अपि ॥९०॥
सेविता निद्रिता महीमानाः प्रातर्ययुस्ततः ।
प्रशंसन्तो हरेर्नाम लोमशस्योपदेशनम् ॥९१॥
श्रीमद्गोपालकृष्णं च कम्भराश्रीं च मातरम् ।
कुंकुमवापिकाक्षेत्रं तथा चाश्वसरोवरम् ॥९२॥
प्रशंसन्तो हरिं स्वर्गादिकं ययुः सुरेश्वराः ।
इत्येवं बद्रिके तत्र जन्मजयन्तिकोत्सवः ॥९३॥
द्वितीयेन स्वरूपेण श्रीकृष्णपरमात्मना ।
कृतो मनोहरः श्रेष्ठो लोमशेन महर्षिणा ॥९४॥
ब्रह्माद्या देवतास्तूर्णं सायं विमानतस्ततः ।
सौराष्ट्रं सम्परित्यज्याऽऽययुः सिन्धुप्रदेशकान् ॥९५॥
यत्राऽनादिकृष्णनारायणश्चास्ते तु शार्करे ।
नगरे सिन्धुजे देशे यत्रास्ते लोमशो मुनिः ॥९६॥
स्वप्रकाशोऽपि यत्रास्ते संहितावाचको मुनिः ।
यत्र लक्ष्मीशसंहितापारायणं भवत्यपि ॥९७॥
यत्र यशो वर्तते च ऋषयः सन्ति संहिताः ।
तत्राऽऽगत्य हरिं नेमुः पुपूजुः श्रुतिवल्लभम् ॥९८॥
जयशब्दान् प्रचक्रुश्च जयन्तीमह आचारन् ।
उपदाश्च न्यधुः कृष्णपादयोः पुनरित्यपि ॥९९॥
आरार्त्रिकं व्यधू रात्रौ सेवां चक्रुः सुखप्रदाम् ।
रात्रिं निन्युर्मानितास्ते भोजिताः स्वागतादिभिः ॥१००॥
तोषिताः श्रीकृष्णनारायणेन सर्वदेवताः ।
प्रातर्गन्तुं प्रसन्नाः संग्रह्याऽऽज्ञां परमात्मनः ॥१०१॥
आशीर्वादान्नृपादींश्च प्रयुज्य प्रययुर्दिवम् ।
प्रातः श्रीकृष्णभगवान् स्नानविधिं समाचरन् ॥१०२॥
उत्सवा गीतयः कीर्तनानि वाद्यनिनादनम् ।
भाट्चारणबन्दीनां स्तुतयः परितोऽभवन् ॥१०३॥
इत्येवं बद्रिके सर्वे कृष्णनारायणात्मकम् ।
आक्षरं तु यथा क्षेत्रं सैन्धवं तत्तथाऽभवत् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कुंकुमवापिकाक्षेत्रेऽपि द्वितीयरूपेणैकविंशतितमजन्मजयन्तीदिनोत्सवे श्रीकृष्णनारायणस्योपस्थितिर्लोमशस्योपदेशो देवादीनां महोत्सवविनिर्वर्तनमित्यादिनिरूपणनामा चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

श्रीबद्रीप्रियोवाच—

भगवन् करुणासिन्धो सिन्धुदेशे ततः परम् ।
किंकिं चकार भगवान् वद मे सर्वमञ्जसा ॥ १ ॥

श्रीनरनारायण उवाच—

प्रातरुत्थाय भगवान् नवम्यां स्नानमाचरत् ।
वेषं भूषाश्च शृंगारं योग्यं सर्वे दधार ह ॥ २ ॥
तदा तूर्याण्यवाद्यन्त स्त्रीणां च गीतयोऽभवन् ।
स्तावकानां गिरश्चाप्यभूयन्त मङ्गलोदिताः ॥ ३ ॥
वैदिकानां मन्त्रघोषा अभवन् मण्डपान्तिके ।
यन्त्रशब्दा अभवँश्च कृष्णप्रबोधसूचकाः ॥ ४ ॥
ऋषयो मुनयः सन्तः पूजार्थे तत्र चाययुः ।
अपूजयन् परमेशं यथालब्धोपचारकैः ॥ ५ ॥
अथ नार्यो राजपत्न्यः पूजार्थे तत्र चाययुः ।
अपूजयन् हरिंकृष्णं मूर्ति तां हृदये न्यधुः ॥ ६ ॥
अथ राजादयस्तत्र पूजनार्थं समाययुः ।
बहुमूल्योपचारैस्तं प्रापूजयन् महीश्वराः ॥ ७ ॥
प्रजा नार्यो नरास्तत्राऽऽययुर्विप्राश्च देवताः ।
पूजनार्थं भगवन्तमपूजयन् विधानतः ॥ ८ ॥
सर्वलोका हरिं पूजयित्वा कृतार्थिनोऽभवन् ।
ततः प्रावर्तत दुग्धपानं च भोजनादिकम् ॥ ९ ॥
ताम्बूलार्पणमेवाऽन्ते विदायं च ततोऽभवत् ।
कोटिरायो रायहरिः प्राघुर्णिकेभ्य आदरात् ॥१०॥
पारितोषिकमुत्कृष्टं पृथग् ददतुरुत्सुकौ ।
महीमाना यदुनैजान् देशान् विमानकैस्ततः ॥११॥
संहिताया वाचनार्थं कृष्ण आदिश्य सेवकम् ।
स्वप्रकाशं च सहसाऽऽरात्रिकं संविधाय च ॥१२॥
लक्ष्मीनारायणसंहितायाः कृत्वा च पूजनम् ।
सज्जोऽभवन्निजं क्षेत्रं गन्तुं श्रीकुंकुमाक्षरम् ॥१३॥
तावत्तत्र समायातो राजा कच्छप्रदेशजः ।
नाम्ना माधवरायेति प्रार्थयत् परमेश्वरम् ॥१४॥
नारायणसरस्तीरं पावयितुं च कच्छकम् ।
भुजंगनगरं पावयितुं चार्थयदीश्वरम् ॥१५॥
तथा महर्षयो नारायणसरोनिवासिनः ।
धर्ममोक्षायनाद्याश्च प्रार्थयन् परमेश्वरम् ॥१६॥
हरिस्तथाऽस्त्विति प्राह प्रस्थितस्तैः समं तदा ।
सर्वैः प्रस्थापितः सिन्धुभूभृद्भिः स्वीयसज्जनैः ॥१७॥
स्वकीयेन विमानेन विदायमानमानितः ।
अम्बरेण यथा तूर्णमाययौ कच्छभूतलम् ॥१८॥
नारायणसरस्तीरेऽवातरत् स विमानतः ।
सस्नौ कृत्वा परं तीर्थं पावनं परमेश्वरः ॥१९॥
तीर्थतीरे निषसाद यावत्तावत्तु शंकरः ।
आययौ पार्वतीयुक्तो भ्रमन् कच्छे तु पश्चिमात् ॥२०॥
श्वेतरूपं धरन् शिष्यैश्चतुर्भिः सह मानसैः ।
सनन्देन नन्दनेन विश्वनन्दनकेन च ॥२१॥
उपनन्देन सहितः सद्योजाताऽभिधो हरः ।
अनादिश्रीकृष्णनारायणश्रीपुरुषोत्तमम् ॥२२॥
पुपूज दण्डवत्तत्र प्रणनाम मुहुर्मुहुः ।
तुष्टाव परमात्मानं मोक्षदं लोकरक्षकम् ॥२३॥
नारायणहरे कृष्ण पावितं श्रीसरोवरम् ।
तव नाम्ना परां ख्यातिं यथा गच्छेत् तथा कुरु ॥२४॥
हरिर्जगाद विश्वेशं शंभो नारायणं सरः ।
श्रीसरश्चेति यत् पूर्वं नारायणसरोऽधुना ॥२५॥
ख्यातिं यास्यति चैतद्धै पुरोर्वश्या तु पावितम् ।
ऊर्वशीतीर्थमेतच्च चटकातीर्थमित्यपि ॥२६॥
श्रीतीर्थं च तथा सद्योजाततीर्थं प्रमुक्तिदम् ।
नारायणमहातीर्थं भविष्यति न संशयः ॥२७॥
वासोऽत्र ते महादेवसद्योजात भवत्विति ।
सद्योजातमहातीर्थं तव नाम्ना भविष्यति ॥२८॥
कालान्तरे च ते नामान्यपराणि शुभानि वै ।
भविष्यन्तीति तीर्थं तत् कोटीश्वरं भविष्यति ॥२९॥
इत्युक्त्वा भगवान् शंभुं निवासाय सरस्तटे ।
आज्ञां चकार तत्रैव शंभुर्वासं सदाऽकरोत् ॥३०॥
तावत्तत्र समायाता दिव्या गौः श्वेतलोहिता ।
चतुःशृंगी चतुर्वक्त्रा चतुष्पादा चतुर्मुखी ॥३१॥
चतुर्हस्ता चतुर्नेत्रा चतुर्दंष्ट्रा चतुःस्तनी ।
ननाम पादयोस्तूर्णं व्योम्ना चागत्य वै पुरः ॥३२॥
कृष्णनारायणपादतले लिलेह जिह्वया ।
हरिर्वारि ददौ तस्यै जिह्वायां सा पपौ द्रुतम् ॥३३॥
कुमारी साऽभवत्तत्र विश्वरूपा सरस्वती ।
तुष्टाव परमात्मानं श्रीपतिंवल्लभंनिजम् ॥३४॥
नमोऽनादिकृष्णकान्त रमाकान्त च ते नमः ।
नमः श्रीमाणिकीकान्त लक्ष्मीकान्त च ते नमः ॥३५॥
नमः सरस्वतीकान्त राधाकान्त च ते नमः ।
दुग्धदाश्रीकान्त पद्मावतीकान्त च ते नमः ॥३६॥
अहं शक्तिर्भवान् शक्तः कृष्णाऽहं कृष्ण ते नमः ।
अहं भगवती भार्या भगवाँस्त्वं पतिः प्रभुः ॥३७॥

तपस्तप्तुं समायाता गोलोकात्तु तवाऽऽज्ञया ।
पावनीं मां समाज्ञाप्य स्थापयाऽत्र सरस्तटे ॥३८॥
तीर्थं त्वत्र हरे कृष्ण मन्नाम्नाऽपि विधेहि च ।
तथाऽस्त्विति हरिः प्राह बद्रिके तां सरस्वतीम् ॥३९॥
अस्थापयत् सरस्तीरे महाधेनुं सरस्वतीम् ।
नारायणसरस्तीरे तीर्थं सारस्वतं शुभम् ॥४०॥
पावनं सर्वलोकानामभवत् स्नानमात्रतः ।
ज्ञानदं चात्मबोधादिप्रदं ब्रह्मावबोधदम् ॥४१॥
तस्या नामानि भगवांश्चकार पावनान्यपि ।
गोपी माया च विद्या च कृष्णा हैमवती सती ॥४२॥
प्रधाना श्रीः प्रकृतिश्च विश्वमाता नरायणी ।
महेश्वरी श्वेतरक्ता द्वादशेति शुभानि वै ॥४३॥
एवं नामानि सम्प्राप्य तीरे साऽपि तिरोऽभवत् ।
तावत्तत्रापि पुरुषः स्वर्णवर्णः समाययौ ॥४४॥
सहस्रशीर्षा विश्वात्मा सहस्राक्षः सहस्रपात् ।
सहस्रबाहुः सर्वज्ञः सर्वदेवमयः प्रभुः॥४५॥
सकौस्तुभः शंखचक्रगदापद्मादिहेतिमान् ।
तुष्टाव दण्डवत् कृत्वाऽनादिकृष्णनरायणम् ॥४६॥
नमोऽनन्तस्वरूपाय सर्वकारणचारिणे ।
परेशाय परकृष्णस्वरूपाय च ते नमः ॥४७॥
परब्रह्मणे कृष्णाय परमेशाय ते नमः ।
वासुदेवेश कृष्णेश नारायणेश ते नमः ॥४८॥
ब्रह्मेशसर्वमुक्तेशाऽक्षरेश ते नमो नमः ।
सर्वधामाधिपतये नमस्ते परमात्मने ॥४९॥
मादृशा विष्णवोऽनन्ता उद्भवन्ति मदंशतः ।
तं वन्दे परमेशेशेश्वरेश्वरेश्वरेश्वरम् ॥५०॥
भगवन् सर्वदेवेश कालमायेश सर्वदा ।
तीर्थे नारायणसरोवरे त्वत्पादपाविते ॥५१॥
सद्योजातेन देवेन स्थातुमिच्छामि सर्वदा ।
मामत्र स्थापय कृष्ण लोककल्याणहेतवे ॥५२॥
तथाऽस्त्वेवं हरिः प्राह विष्णुर्वासं सदाऽकरोत् ।
कृष्णनारायणस्तस्मै स्थापयामास पिप्पले ॥५३॥
सहस्रशीर्षप्लक्षाख्यं तीर्थं तत्परमं ह्यभूत् ।
तीरोऽभवत् प्लक्षवृक्षे विष्णुः सनातनः प्रभुः ॥५४॥
अथाऽऽययौ व्योमदेशात् स्मभुजः पुष्टरूपवान् ।
हिरण्यगर्भः सर्वात्मा सर्वसृष्टिप्रबीजवान् ॥५५॥
भर्ता हर्ता जगत्कर्ता ब्रह्मा सर्वाण्डसर्जकः ।
नेमे नारायणकृष्णं पपात पादयोस्तथा ॥५६॥

तुष्टाव स्वागतं प्राप्तः श्रीपतिंकृष्णकेशवम् ।
हरिकृष्ण हरिविष्णो कृष्णनारायणप्रभो ॥५७॥
सर्वस्वामिन् सर्वधामिन् सर्वशक्तिप्रदायक ।
सर्वरक्षाविधातस्त्वं नारायणोऽत्र चागतः ॥५८॥
कल्याणार्थं तु लोकानां तीर्थानां पावनाय च ।
नारायणे सरस्यत्र शंभुर्विष्णुः सरस्वती ॥५९॥
यथा वासं व्यधुस्तद्वद् वासं मे रोचतेऽपि च ।
आज्ञापय प्रतिष्ठां मे कुर्वत्र भगवन्निह ॥६०॥
तथाऽस्त्वेवं हरिः प्राह बद्रिके परमेष्ठिनम् ।
ब्रह्मा तत्र पलाशे तु द्रुमे वासं तदाऽकरोत् ॥६१॥
रक्तवल्कोऽभवद् वृक्षो रक्तपुष्पावशोभितः ।
पावनः सर्वलोकानां यज्ञानामुपकारकृत् ॥६२॥
एवं देवा अवसन् वै लोककल्याणकारिणः ।
बद्रिके च ततस्तत्राश्चर्यं परममद्भुतम् ॥६३॥
अभवद्व तत् दिव्यरूपं समाकर्णय शोभनम् ।
शबलाश्वाश्चहर्यश्वाः पुत्रा वै वेधसः पुरा ॥६४॥
नारदस्योपदेशेन वैराग्यं समुपाश्रिताः ।
सप्तदशसहस्राणि तपोऽर्थे तत्र ये स्थिताः ॥६५॥
सर्वे नारायणंकृष्णं प्राप्य तत्र पुरोऽभवन् ।
तापसा जटिलाः शुष्काः करमालाविराजिनः ॥६६॥
कृष्णनारायणस्वामिनारायणजपान्विताः ।
प्रसन्नमानसा दिव्यतेजःपरिधिशोभनाः ॥६७॥
प्रत्याहृतेन्द्रियवेगा ब्रह्मचर्यपरायणाः ।
शान्ता निर्गुणराधेशस्मरणे धृतमानसाः ॥६८॥
बालस्वरूपिणश्चापि पुष्टा यौवनशालिनः ।
संकीर्तनं प्रकुर्वन्तः कूर्दयन्तोऽतिहर्षिताः ॥६९॥
करतालैः कृष्णनारायणस्वामीतिवादिनः ।
अहो अहो हरे कृष्ण कृष्णनारायण प्रभो ॥७०॥
कल्याणकृन्महाकृष्णनारायण विभो प्रभो ।
एवं रटन्तः श्रीकृष्णनारायणं ह्युपस्थिताः ॥७१॥
प्रणेमुर्दण्डवद्भक्त्या धूलीं ते शिरसि न्यधुः ।
धूल्यामालोटयन्तस्ते कृष्णपादजलं पपुः ॥७२॥
तुष्टुवुः श्रीहरिं तत्र पूजयन् हृदयार्पणैः ।
नारायणहरे कृष्ण मोक्षार्थं वयमागताः ॥७३॥
भवान् मोक्षप्रदश्चास्ते देहि मोक्षं भवार्णवात् ।
वयं सर्वे ब्रह्मपुत्राः शिष्या नारदयोगिनः ॥७४॥
प्रतीक्षमाणाः श्रीकृष्णं वसामोऽत्र जपान्विताः ।
दैवाद् वा कृपया कृष्णनारायण भवानिह ॥७५॥

नो मोक्षार्थे समायातो देहि मोक्षपदं परम् ।
श्रुत्वा प्राह हरिस्तांस्तु मोक्षं ददामि शाश्वतम् ॥७६॥
ब्रह्मतुल्याः समर्थाः स्थ नैकरूपधराः पराः ।
तापसा मन्नियोगेन मूलरूपैस्तु सर्वथा ॥७७॥
दिव्यतां मुक्ततां प्राप्य यान्तु धामाऽक्षरं मम ।
द्वितीयैस्तु स्वरूपैर्वै तिष्ठन्तु चांशतस्त्विह ॥७८॥
नारायणपरा नित्यं देवसेवापरायणाः ।
तीर्थस्य मुनयो भूत्वा तिष्ठन्त्वत्र सदा स्थिराः ॥७९॥
इत्युक्ता बद्रिके ते तु द्वेधारूपास्तदाऽभवन् ।
अंशतो मुनिरूपास्ते मूलतो मुक्तरूपिणः ॥८०॥
मुनिरूपा न्यवसँस्ते नारायणसरस्तटे ।
मुक्तरूपा दिव्यरूपा चागते सुविमानके ॥८१॥
पार्षदैर्दिव्यदेहैस्ते निषद्याऽक्षरधाम मे ।
प्रययुर्मुक्ततां प्राप्ताः शाश्वतानन्दभोजिनः ॥८२॥
कृपया मे समस्तास्ते जाता मत्समशक्तयः ।
एवं हि बद्रिके कृष्णनारायणो नरायणान् ॥८३॥
मादृशान् सर्वथा कृत्वा ततस्तीर्थस्थितान् जनान् ।
पावयित्वा प्रदायाऽपि दानवस्तु यथेष्टकम् ॥८४॥
तीर्थोत्तमं सरः कृत्वा निषद्य स्वविमानके ।
भुजंगनगरे सायं प्राययौ राजवाटिकाम् ॥८५॥
अवातरद् विमानं तु तदा वै राजवाटिका ।
श्रृंगारिताऽभवत् तूर्यनिनादैरभिगर्जिता ॥८६॥
सम्मानकरलोकैश्च तथा राजकुटुम्बिभिः ।
प्रजाभिः स्वागतार्थे सा वाटिका संकुला ह्यभूत् ॥८७॥
हरिर्विमानतस्तत्र यदा वै बहिराययौ ।
लक्षशो वै जना नार्यो नराश्चन्दनपुष्पकैः ॥८८॥
कुंकुमाऽक्षतवर्षाभिर्वर्धयामासुरच्युतम् ।
जयशब्दैर्महाहर्षकृतैर्नारायणाभिधैः ॥८९॥
स्वागतं श्रीहरेश्चक्रुर्बद्रिके राष्ट्रमानवाः ।
घटिकामात्रमेवादौ स्थितो विमानकाग्रके ॥९०॥
दत्वा स्वदर्शनं कृष्णो विवेश नृपमन्दिरम् ।
राजा माधवरायश्च राज्ञी कल्याणिका सती ॥९१॥
पुपूजतुः परेशं तं पपतुः पादवार्यपि ।
पूजयित्वोपचारैश्च मुकुटाद्यैश्च भूषणैः ॥९२॥
वेषैश्चातिप्रमूल्यैश्च स्वर्णरत्नादिहीरकैः ।
मणिभिः स्वर्णमुद्राभिः प्रपूज्याऽऽरार्त्रिकं ततः ॥९३॥
व्यधातां भावभिन्नौ तौ राज्यवर्गास्ततः परम् ।
पुपूजुः परमात्मानं यथार्हभूषणादिभिः ॥९४॥
आरार्त्रिकं प्रचक्रुस्ते तुष्टुवुः परमेश्वरम् ।
संसाराद् भगवन् कृष्ण जीवान्नस्तारयप्रभो ॥९५॥
साक्षात्तव प्रसंगेन यदि दिव्या वयं नहि ।
तदा केषां प्रसंगेन वयं दिव्या भवेमहि ॥९६॥
श्रुत्वा हरिस्तु तान्प्राह सतां संगेन दिव्यता ।
भविष्यति न सन्देहो मोक्षो वश्च भविष्यति ॥९७॥
मया नारायणतीर्थे रक्षिताः शबलाश्वकाः ।
हर्यश्वका ब्रह्मपुत्राः साधवस्ते मदाश्रयाः ॥९८॥
मत्तो मन्त्रं च सम्प्राप्ता भजन्ते मां निरन्तरम् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥९९॥
एवंविधं तु मे मन्त्रं दास्यन्ति वो विधानतः ।
तत्र यूयं प्राप्य तीर्थे प्रयास्यथ परं पदम् ॥१००॥
सज्जा भूत्वा तीर्थविधिं कृत्वा नत्वा च तान् सतः ।
सेवित्वा तान् भजनेन प्रयास्यथ परं पदम् ॥१०१॥
ये सज्जास्तैः प्रगन्तव्यं मोक्षार्थे चानिवर्तिनम् ।
इत्युक्त्वा बद्रिके कृष्ण उषित्वैकनिशां सुखम् ॥१०२॥
भोजनं पूजनं लब्ध्वा राज्ञे राज्ञ्यै मनुं निजम् ।
दत्वा सेवां परां प्राप्य प्रातरुत्थाय माधवः ॥१०३॥
नैजं विमानमारुह्य ययौ कुंकुमवापिकाम् ।
विश्रान्तिं परमां प्राप्तो नारायणपरेश्वरः ॥१०४॥
सिन्धुवार्तां कच्छवार्तां चकार जनसंसदि ।
स्नानपूजाभोजनादि चक्रे शान्तिमवाप ह ॥१०५॥
इत्येवं बद्रिके कृष्णनारायणः श्रियाः पतिः ।
दिव्यं चरित्रं सुभगं मोक्षदं प्रचकार ह ॥१०६॥
सर्वं ते कथितं रम्यं स्वर्गमोक्षप्रदं शुभम् ।
पठनाच्छ्रवणादस्य स्मरणान्मुक्तिभाग् भवेत् ॥१०७॥
अपि पापो विचित्तश्च धर्मवर्जित इत्यपि ।
श्रुत्वा लब्ध्वा गुणं यच्छेत् स्वर्गं दिव्ययुगायुतम् ॥१०८॥
का कथा तु तदाऽन्यस्य सेविनो भक्तियोगिनः ।
यथेष्टं श्रीकृष्णनारायणो दद्यात् कृपाकरः ॥१०९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कच्छनृपतिर्माधवरायो हरिं कच्छमानियाय, हरिर्नारायणसरसि शिवविष्णुवेधःसरस्वतीनां तीर्थानि कृतवान्, शबलाश्वहर्यश्वानां द्वेधा रूपाणि कारयित्वा तीर्थे वासं मोक्षणं च दत्तवान्, भुजंगनगरे माधवरायनृपतिकुटुम्बं पावयित्वा कुंकुमवापीमाययौ चेतिनिरूपणनामा पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कुसारजातियोषितः ।
सत्कथां पावनीं तत्र मोक्षदां भक्तिसंभृताम् ॥ १ ॥
सिन्धुदेशे तु ये भक्ताः कृष्णनारायणाश्रिताः ।
अभवँस्ते मिलित्वा वै केचित् संघात्मकास्ततः ॥ २ ॥
लक्ष्मीनारायणसंहितायाः पारायणे शुभे ।
कार्तिके शुक्लपक्षे वै प्रातश्चैकादशीदिने ॥ ३ ॥
पूजनार्थं संहितायाः आययुश्चोपदाकराः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा दासाश्च दासिकाः ॥ ४ ॥
यावन्तः पुष्पहाराद्यैः कुंकुमाऽक्षतचन्दनैः ।
धूपदीपसुनैवेद्यैरानर्चुः संहिताश्रियम् ॥ ५ ॥
आरार्त्रिकफलपुष्पाञ्जलिस्वर्णार्पणैस्तथा ।
मणिरत्नहीरकाद्यैः स्वर्णभूषाम्बरादिभिः ॥ ६ ॥
ते स्वप्रकाशं व्यासं चाऽऽनर्चुः सर्वे तथाविधैः ।
दिव्योत्तमैरुपचारैस्ततः श्रीकृष्णकीर्तनम् ॥ ७ ॥
चक्रुर्वाद्यविशेषाढ्यं तालिकानादगर्भितम् ।
'हरे कृष्ण बालकृष्ण कृष्णनारायण प्रभो ॥ ८ ॥
अनादिश्रीकृष्णनारायण श्रीकान्त सद्विभो' ।
एवं धून्ये प्रभवति मग्नानां सर्वदेहिनाम् ॥ ९ ॥
एकाग्रमानसानां वै तदाऽऽश्चर्यं महद्द्व्यभूत् ।
विमानमागतं दिव्यं कोटिसूर्यसमप्रभम् ॥१०॥
तत्रैका द्योतिकानाम्नी कंसारी दिव्यविग्रहा ।
भूत्वाऽऽरुह्य विमाने सा ययौ धामाऽक्षरं परम् ॥११॥

श्रीबद्रीप्रियोवाच—

का सा वै द्योतिकानाम्नी कथं सा दिव्यविग्रहा ।
केन पुण्येन सा याता धामाऽक्षरं तु तद्वद ॥१२॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि साऽऽसीद् वै कर्मचारिणी ।
भृत्या दासी वेतनेन रायहरेर्नृपस्य वै ॥१३॥
जात्या शूद्रा हि कंसारी पात्रमञ्जनकारिणी ।
मार्जनादिपरा तत्र नृपराज्ञ्यास्तु किंकरी ॥१४॥
भक्ताऽऽसीत् पूजने कार्ष्णे कंसारी तु कुसारिणी ।
नित्यं सा शृणुते लक्ष्मीसंहितां नियमान्विता ॥१५॥
राज्ञीकार्याणि निर्वर्त्य गेहकार्याणि सर्वथा ।
राज्ञ्यालयसमस्तानि कार्याणि प्रविधाय सा ॥१६॥
कृतस्नानजपपूजा कृतदास्यसमस्तिका ।
कृतादरा भक्तिनिष्ठा कथायामुपतिष्ठते ॥१७॥
पुष्पहारेण सहितां पुष्पहारेण वाचकम् ।
कुंकुमाऽक्षतमुद्राभिः समर्चयति नित्यशः ॥१८॥
करमाला स्थिरचित्ता नत्वा व्यासं सभां ततः ।
श्रवणार्था सभायां सा निषीदति ह्यतन्द्रिता ॥१९॥
तस्याः पतिः कुसारोऽपि कृष्णसाराऽभिधः सदा ।
कथां श्रोतुं समायाति शीघ्रं याति च कर्मणे ॥२०॥
राजसेवापरः पत्न्याः कार्यं शेषं करोति सः ।
पत्नी भावप्रपूर्णा सा कथाः शृणोति सर्वथा ॥२१॥
श्रुत्वा सन्धार्य रात्रौ स्वस्वामिने कथयत्यपि ।
एवंविधाऽऽदरपरा कथाश्रवणमात्रतः ॥२२॥
पावनी सा तु संभूता सर्वपापविवर्जिता ।
तया मन्त्रो हरेस्तत्र गृहीतो व्यासतः शुभः ॥२३॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
नित्यं मन्त्रं जपति सा तथा करोति कीर्तनम् ॥२४॥
'हरेकृष्ण कृष्णनारायण श्रीपरमेश्वर ।
अनादिश्रीकृष्णनारायण श्रीपुरुषोत्तम' ॥२५॥
एवं करोति भजनं भोजनं चैकवारकम् ।
प्रसादं वा फलाद्यं वा गृह्णात्येव न चापरम् ॥२६॥
एवं वै वर्तमानयाः कंसार्याः पापमोचनम् ।
पुण्यानामुदयः कृष्णनारायणप्रसन्नता ॥२७॥
सर्वं जातं स्वभावेन गुरोः करोति सेवनम् ।
स्वपनं गात्रसंवाहं वस्त्रक्षालनकादिकम् ॥२८॥
व्याससेवाप्रपुण्येन भक्तिबले प्रवर्धिता ।
व्यासासनादिक्लृप्त्या च सभास्थलादिमार्जनात् ॥२९॥
महापुण्यप्रतापेन कर्मक्षयो व्यजायत ।
देहत्यागसमयोऽस्याः प्राप्तस्तदा हरिः स्वयम् ॥३०॥
विमानं दिव्यमारुह्य स्वयं नेतुं समाययौ ।
दिव्यदृशां गोचरो वै कृष्णनारायणः प्रभुः ॥३१॥
किरीटी कुण्डली चक्री वासस्वी श्रीसमन्वितः ।
प्रभासयन् दिशाः सर्वा आगत्य तु कथास्थले ॥३२॥
अवतीर्य विमानात् स तां जग्राह करे हरिः ।
सापि देहं भौतिकं वै त्यक्त्वा नत्वा सभां तथा ॥३३॥
स्वतःप्रकाशं दिव्यं स्वं सद्गुरुं विष्णुरूपिणम् ।
लोमशं च मुनिं साधून्न्यान्नत्वा पुनः पुनः ॥३४॥
याचित्वा च क्षमां दिव्यदेहा मुक्तानिका शुभा ।
दिव्या कार्ष्णी कृष्णतुल्या राधातुल्या मनोहरा ॥३५॥

भूत्वा विमानमारुह्य कृष्णनारायणान्विता ।
ययौ धामाऽक्षरं दिव्यं पश्यतां दिव्यचक्षुषाम् ॥३६॥
आश्चर्यं परमं तद्वै कथाश्रवणसत्फलम् ।
अभवद्वै तथा बद्रि महामोक्षप्रदं परम् ॥३७॥
कुसारिणी द्योतिका सा कंसारी कृष्णसारिणी ।
प्रसञ्जाता यथा लक्ष्मीर्दिव्ये धाम्नि व्यराजत ॥३८॥
एवं तदा बहवो वै नरा नार्यश्च पावनाः ।
कथां श्रुत्वाऽभवन् लोके जीवन्मुक्ता हरेः प्रियाः ॥३९॥
अमृतं भेषजं बद्रि करोत्येव निरामयम् ।
कृष्णामृतं तु मायानां रोगान्नाशयति द्रुतम् ॥४०॥
सतां सेवा गुरोः सेवा भक्तिश्च भजनं हरेः ।
आत्मनो दिव्यतां श्रेष्ठां कुर्वन्त्येव प्रमोक्षणम् ॥४१॥
शृणु बद्रीप्रिये देवि सायं त्वेकादशीतिथौ ।
ऊर्जे तत्र महाश्चर्यमपरं संव्यजायत ॥४२॥
कुलालस्य कुटुम्बं वै सेवायां सर्वथाऽभवत् ।
कुंभकारो नरराजस्तथा भार्याऽस्य रञ्जिका ॥४३॥
पुत्राः पुत्र्यः समस्ता वै पारायणपरायणाः ।
सर्वं कुटुम्बं नित्यं वै सेवते तत्सभास्थलम् ॥४४॥
क्षणे क्षणे जलपानं ददात्यतीव शीतलम् ।
पात्राणां भञ्जनं वायोर्व्यजनैः सुप्रदानकम् ॥४५॥
आस्तरणास्तरणादि रजसां मार्जनादिकम् ।
कथान्ते रिक्तभावे त्वास्तरणानां प्रमोडनम् ॥४६॥
रक्षणं च स्थले योग्ये कचरादिर्निकासनम् ।
कथायाः श्रवणं चापि पूजनं दर्शनादिकम् ॥४७॥
कुलालस्य कुटुम्बं वै सर्वं प्रसेवते सभाम् ।
कथां शृणुते नित्यं तद् भजते पार्वतीपतिम् ॥४८॥
एवं ध्वस्ताऽघमेवाऽतो मन्त्रं जग्राह सद्गुरोः ।
व्यासात् प्राप्त्वा हरेर्नाममाहात्म्यं च ततः परम् ॥४९॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
मन्त्रं जेपुः कुलालास्ते भजनं चक्रिरे मुदा ॥५०॥
'हरेकृष्ण प्रभोकृष्ण बालनारायण प्रभो ।
अनादिश्रीकृष्णनारायण पारं कुरु प्रभो' ॥५१॥
मालावर्तनमाचक्रुः कृष्णनारायणेति च ।
सेवां चक्रुः समायास्ते व्यासस्याऽमिततेजसः ॥५२॥
तेन दग्धानि पापानि तेषां च वासनाक्षयः ।
जन्ममृत्युप्रवाहस्याऽधिकारो नाशतां गतः ॥५३॥
सायं कथान्ते धुन्याऽन्ते भजनान्ते हरेः पुरः ।
सभान्तिके कुटुम्बं तत् समस्तं दिव्यमावनम् ॥५४॥
श्रीहरेः कृपया दिव्यदेहं जातं द्रुतं तदा ।
तावत् तत्र समायातं विमानं व्योममार्गतः ॥५५॥
यत्र नारायणकृष्णो राधायुक्तोऽभवत् प्रभुः ।
प्रकाशयन् दिशः सर्वा विमानात् समवातरत् ॥५६॥
भूमौ तत्र कुलालाग्रे पश्यतां दिव्यचक्षुषाम् ।
सर्वान् विधाय भगवान् कुलालान् दिव्यविग्रहान् ॥५७॥
विमाने स्वे ह्यवस्थाप्य पराश्चर्यं प्रसारयन् ।
ययौ धामाक्षरं दिव्यं कृपालुर्भक्तवत्सलः ॥५८॥
कुलालानां स्थूलदेहा नाऽदृश्यन्त तदा भुवि ।
स्थूलास्ते दिव्यतां प्राप्ताः सेवया श्रीगुरोः सताम् ॥५९॥
वैष्णवानां सेवया च कथायाः सेवनात्तथा ।
भक्त्या ध्यानेन कृष्णस्य कार्ष्णतां ते ययुस्तदा ॥६०॥
लक्षशो वै जनास्तत्राश्चर्यमप्रास्ततोऽभवन् ।
अहो कथाया माहात्म्यं बद्रिके दिव्यमोक्षकृत् ॥६१॥
शृणु रात्रौ ततो जातं महाश्चर्यं वदामि ते ।
रात्र्यारम्भे कीर्तनं वै चक्रिरे सर्ववैष्णवाः ॥६२॥
एकादश्या जागरणे ययुः कृष्णैकताननताम् ।
वाद्ययुक्ते कीर्तने वै प्रेममग्नास्तदाऽभवन् ॥६३॥
तत्रैका स्वर्णकारस्त्री धातुध्मस्त्री तथाऽपरा ।
सुम्बालिकाऽभिधा चाद्या परा नाम्ना विनोदिनी ॥६४॥
कीर्तयन्त्यौ सहसैव तन्मय्यौ चित्तरोधताम् ।
प्राप्यैकताननतां लब्ध्वा समाधिं भेजतुर्द्रुतम् ॥६५॥
तयोरग्रेऽभवत्तेजोमयी मूर्तिः सनातनी ।
अनादिश्रीकृष्णनारायणस्य यौवनान्विता ॥६६॥
रमणीया सूर्यचन्द्रवह्निविद्युत्समप्रभा ।
देदीप्यमाना सुभगा पुष्टा सर्वांगसुन्दरी ॥६७॥
विमानं दिव्यतेजोमच्छोभनं परमाद्भुतम् ।
तत्राऽदृश्यत वै रात्रौ भूतले हरिसन्निधौ ॥६८॥
पार्षदैर्बहुभिर्युक्तं मुक्तानिकामिशोभितम् ।
चक्षुष्मतां दर्शनार्हं सर्वेषां दृष्टिगोचरम् ॥६९॥
कृष्णनारायणो विष्णुः पश्यतां सर्वदेहिनाम् ।
परस्पर्शं ते स्त्रियौ दक्षकरेण यावदेव हि ॥७०॥
तावद्विद्युत्समे श्वेते चोज्ज्वले ते बभूवतुः ।
दिव्यरूपे दिव्यभूषाधरे दिव्यसुविग्रहे ॥७१॥
तयोर्देहौ भौतिकौ तु तत्रैवाऽदृश्यतां गतौ ।
दिव्यदेहौ सुनिष्पन्नौ शुभौ राधारमासमौ ॥७२॥
युवत्यौ ते हरिं नत्वाऽऽरुरुहतुर्विमानकम् ।
अनादिश्रीकृष्णनारायणो द्रुतं हसन् हरिः ॥७३॥

स्वं विमानमधिरुह्य नीत्वा ते मुक्तयोषितौ ।
ययौ धामाऽक्षरं तूर्णं दिव्येनाऽम्बरवर्त्मना ॥७४॥
एवं तत्राश्चर्यमेतच्चमत्कारमयं ह्यभूत् ।
कथायाः कीर्तनादेश्च फलं मोक्षप्रदं शुभम् ॥७५॥
बद्रिके द्वादशीप्रातःकाले ब्राह्मे मुहूर्तके ।
आश्चर्यं परमं जातं शृणु त्वं संवदामि ते ॥७६॥
नाट्यकारोऽभवत्तत्र नाम्ना रञ्जनकोविदः ।
स कृत्वा जागरं स्नात्वा ब्राह्मे मुहूर्तके प्रगे ॥७७॥
नीत्वा पुष्पाणि च मालां चन्दनं कुंकुमं फलम् ।
अक्षतान् दर्भपत्राणि तिलान् गूडं च शर्कराः ॥७८॥
गोधूमान् श्वेतधोत्रं च स्वर्णमुद्रां च कम्बलम् ।
पूजार्थं संहितायाः स समाययौ तु मण्डपम् ॥७९॥
यां संहितां स्त्रीजनः प्रदक्षिणं करोति वै ।
नरा नत्वा पूजयित्वा यान्ति गुर्वर्चनाय च ॥८०॥
तत्र गायन् पूजनार्थं प्राप्तो रञ्जनकोविदः ।
नेमे चानर्च तां संहितां पुष्पादिभिरादरात् ॥८१॥
प्रदक्षिणं चकाराऽपि ततश्चारात्रिकं व्यधात् ।
तत्क्षणे रुद्धचित्तोऽसौ तुर्यावस्थां विवेश ह ॥८२॥
भानहीनः पपाताऽस्य देहस्तत्रैव भूतले ।
तावद् दिव्यं समायातं विमानं प्रोज्ज्वलं शुभम् ॥८३॥
अम्बरात् सहसा भूमाववातरत् तडिद् यथा ।
तत्र नारायणकृष्णो दिव्यमूर्तिरदृश्यत ॥८४॥
सर्वेषां गोचरः साक्षाद् रमाराधापतिः प्रभुः ।
मायामुक्तं दिव्यदेहं हरिः रञ्जनकोविदम् ॥८५॥
मुक्तात्मानं विमाने स्वे नीत्वा धामाऽक्षरं ययौ ।
महाश्चर्यमभूत्तत्र बद्रिके प्रातरेव तत् ॥८६॥
तावत् कश्चित् समायातः कदर्यस्तत्र भूसुरः ।
पत्रपुष्पजलयुक्तः संहितापूजनाय वै ॥८७॥
श्लोकमुच्चारयन् तस्थौ सम्मर्दे योषितां तथा ।
'नमः संहितारूपाय माधवीस्वामिने नमः ॥८८॥
निर्मलानां हृदिस्थाय मोक्षदाय च ते नमः ।
नमो राधारमालक्ष्मीश्रीरूपायै मुहुर्मुहुः ॥८९॥
मोक्षदात्र्यै दिव्यमात्रे ज्ञानदायै च ते नमः ।
नमः श्रीकृष्णकान्तायै माणिक्यायै च ते नमः ॥९०॥
ब्रह्मविद्यास्वरूपायै धामशक्त्यै च ते नमः ।
नमः श्रीबदरीदेव्यै जयादेव्यै च ते नमः ॥९१॥
नमः प्रियायै दिव्यायै पारंगत्यै च ते नमः ।
नमो मात्रे महालक्ष्म्यै ललितायै च ते नमः ॥९२॥
ब्रह्मदात्र्यै परब्रह्मयोगदात्र्यै च ते नमः' ।
इत्येवं स हरिकृष्णं तुष्टाव संहिताश्रियम् ॥९३॥
तावन्नार्यो ददुस्तस्मै पूजावसरमुत्तमम् ।
पुपूज परमात्मानं कदर्यो विप्रराट् तु सः ॥९४॥
संहितां पूजयामास कूर्दनं नर्तनं तथा ।
तालिकावादनं गालवादनं सक्थिशब्दनम् ॥९५॥
घुर्घुरावादनं चाऽऽस्ये चकार कीर्तनं तथा ।
क्षणं स्तब्धा दर्शका वै मानवास्तु तदाऽभवन् ॥९६॥
अथैवं कीर्तने मग्नश्चैकचित्तोऽतिरोधकृत् ।
मूर्तौ त्वेकात्मतां प्राप्तो ब्रह्मरन्ध्रे विवेश ह ॥९७॥
ब्रह्मरन्ध्रात् तस्य तेजः सहस्रसूर्यसदृशम् ।
निर्यातं सहसा तत्र ह्यन्धीकुर्वज्जगत्त्रयम् ॥९८॥
नेत्रमूर्छां गताः सर्वे नरा नार्यश्च बद्रिके ।
तावच्छान्तं चन्द्रसमं शनैर्दृश्यं हि चाऽभवत् ॥९९॥
तत्राऽनादिकृष्णनारायणः स्वामी व्यदृश्यत ।
करे गृह्णन् कदर्यं तं नाम्ना श्रीरामसुन्दरम् ॥१००॥
तावत्तत्र विमानं वै समायातं महाम्बरात् ।
कृष्णनारायणस्तत्र नीत्वा श्रीरामसुन्दरम् ॥१०१॥
दिव्यदेहं ययौ धामाऽक्षरं तूर्णं श्रियः पतिः ।
आश्चर्यं परमं सर्वयोषितां कृष्णदर्शनात् ॥१०२॥
अभवद् वै नराणां च प्रोत्साहः परमोऽभवत् ।
कदर्यस्य शरीरं तत् तत्रैव लीनतां गतम् ॥१०३॥
एतद्वै तन्महाश्चर्यं प्राप्ता दृष्ट्वा जनाः पुनः ।
कथायाः श्रवणादेतन्मोक्षणं पूजनात्तथा ॥१०४॥
सञ्जातं श्रीकदर्यस्य दिव्यदेहेन चाक्षरम् ।
निवासाय सदा जातं धाम यच्छाश्वतं प्रभोः ॥१०५॥
इत्येवं बद्रिके सिन्धुदेशे पारायणक्षणे ।
नित्यं नित्यं प्रजायन्ते देहिनां मोक्षणानि वै ॥१०६॥
पठनाच्छ्रवणादस्य चमत्कारस्य कीर्तनात् ।
भुक्तिर्मुक्तिर्भवेच्चापि दिव्या गतिः परं पदम् ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने संहितायाः श्रवणेन पूजनेन च विद्योतानाम्न्याः कंसारिण्याः, कुंभकारस्य नरराजस्य कुटुम्बस्य, स्वर्णकारस्त्रिया अम्बालिकायाः, धातुघ्मस्त्रिया विनोदिन्याः, नाट्यकारस्य रञ्जनकोविदस्य, कदर्यस्य श्रीरामसुन्दरस्य, च श्रीकृष्णनारायणेन मोक्षणं कृतमित्यादिनिरूपणनामा षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां परमपावनीम् ।
सिन्धुदेशे संहितायाः कथां श्रोतुं तु नित्यशः ॥ १ ॥
विमानेन समायाति क्षारपुरक्षितीश्वरः ।
नाम्ना क्षीरोदवीराख्यस्तथा राज्ञी रुहारणिः ॥ २ ॥
उभौ शृणुत सदसि पूजयित्वा तु वाचकम् ।
संहितां पूजयित्वाऽपि प्रणम्यर्षीन् मुनीन् गुरून् ॥ ३ ॥
समासीनौ राजवर्गासनयोः कृष्णमानसौ ।
श्रवणेन ततो जातौ पावनौ तौ नृपीनृपौ ॥ ४ ॥
जगृहतुर्मनुं व्यासात् स्वीयप्रकाशकाद्धि तौ ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥ ५ ॥
प्रियकृष्ण बालकृष्ण कृष्णनारायणेति च ।
जेपतुर्मालिकाद्वारा नामसंकीर्तनं हरेः ॥ ६ ॥
चक्रतुस्तौ सतां सेवां कृष्णभक्तिपरायणौ ।
प्रियकृष्ण हरिकृष्ण कृष्णनारायणेति तौ ॥ ७ ॥
ऊचतुः सततं चेति प्रातः पूजां प्रचक्रतुः ।
नैवेद्यं हरये धूपं दीपं ताम्बूलकं जलम् ॥ ८ ॥
अर्पयामासतुर्ध्यानं चक्रतुः मालतीपतेः ।
महाभागवतौ त्वेवं जातौ दिव्यगुणान्वितौ ॥ ९ ॥
निर्मानौ दासवन्नित्यं वर्तमानौ सभास्थले ।
कथामूर्तिं कृष्णमूर्तिं धारयामासतुः सदा ॥१०॥
तयोः प्रजाजनाश्चापि समायान्ति कथार्थिनः ।
नरा नार्यः पवित्राश्च जायन्ते श्रवणादिभिः ॥११॥
बहवस्ते हरेर्मन्त्रं जगृहुः शरणागताः ।
कार्तिके धवले पक्षे द्वादश्यां तु कथास्थले ॥१२॥
क्षीरोदवीरो नृपतिः रुहारण्या समं तथा ।
प्रजाजनैः समं तत्र कथायां समतिष्ठत ॥१३॥
श्रुत्वा कथां संहिताया आरार्त्रिकं व्यधात्तदा ।
प्रसादं श्रीहरेः प्राप्य भुक्त्वाऽऽस्वाद्यजलामृतम् ॥१४॥
सभायां तत्र लोकानां पश्यतां समुपाविशत् ।
राज्ञी चापि तदा तत्र सन्निधौ समुपाविशत् ॥१५॥
तावत्तत्र समायातं विमानं दिव्यतैजसम् ।
अनादिश्रीकृष्णनारायणाधिष्ठितमुज्ज्वलम् ॥१६॥
अवातरत् सभापार्श्वे तस्मान्नारायणप्रभुः ।
निःसचार क्षितावेत्य कृत्वा तौ दिव्यविग्रहौ ॥१७॥
नृपीनृपौ विमाने तु नीत्वा श्रीपुरुषोत्तमः ।
सर्वेषां पश्यतां धामाऽक्षरं ययौ तदा प्रभुः ॥१८॥
आश्चर्यं परमं वीक्ष्य लोका मोदमुपाययुः ।
न देहौ भौतिकौ तत्र तयोः स्तश्चेति तन्महत् ॥१९॥
सामर्थ्यं वीक्ष्य नृपयोः कृपां नारायणस्य च ।
अनेनैव तु देहेन मोक्षं नयति माधवः ॥२०॥
विचार्येत्थं तु बहवो नरा नार्यः समुत्सुकाः ।
गन्तुं धामाऽक्षरं सज्जा *बभूवुस्तत्र बद्रिके ॥२१॥
तत्र सहस्रशः सन्तो महर्षयः सहस्रशः ।
वृद्धाः सहस्रशश्चापि स्त्रियोऽनाथाः सहस्रशः ॥२२॥
पापा यद्वा च निष्पापाः कथाश्रवणकारिणः ।
कृष्णनारायणधामाऽक्षरं गन्तुं सुतत्पराः ॥२३॥
अभवन् द्वादशीसायं कथानीराजनोत्तरम् ।
कीर्तनान्ते हरिर्ज्ञात्वा भक्तानां वाञ्छितं शुभम् ॥२४॥
कथाश्रवणधौताघान् शरणागतिसंप्लुतान् ।
त्यक्तेषणान् भक्तिमतो नेतुं कृष्णः समाययौ ॥२५॥
लब्धमन्त्रान् समस्तान् वै नरान्नारीस्तदा हरिः ।
कृत्वा सर्वान् दिव्यदेहान् तच्छरीरामृतान् हि तान् ॥२६॥
विमाने सुविशाले वै धृत्वा धामाऽक्षरं ययौ ।
आश्चर्यं परमं बद्रि कृष्णेनैतत् तदा कृतम् ॥२७॥
अमन्त्राश्चाऽगुरवो ये ते तु नैवाऽधिकारिणः ।
अवशिष्टाश्चाऽधृताश्च स्थितास्तत्रैव ते तदा ॥२८॥
तेऽपि कथाश्रवणान्ते लोमशात् तत्र वै मनुम् ।
जगृहुः पावनाः सर्वे सज्जास्ततोऽभवन् खलु ॥२९॥
अथाऽऽययौ भगवान् श्रीपतिर्नेतुं समन्त्रकान् ।
रात्रौ विमानकं धृत्वा दिव्यदेहान् प्रसज्जितान् ॥३०॥
निन्येऽनादिकृष्णनारायणो धामाऽक्षरं निजम् ।
सहस्रशो नरा नार्यो वृद्धा वा वासनोज्झिताः ॥३१॥
कृष्णनारायणमूर्तौ प्रेमस्नेहपरायणाः ।
विषवत्कृतसंसारास्त्यक्तलोकैषणास्तथा ॥३२॥
निरुद्धवृत्तयः कृष्णे प्रपत्तिं परमां गताः ।
कृपया चेच्छया विष्णोर्ययुर्धामाक्षरं हरेः ॥३३॥
अहो भाग्यं हि बलवद् बलिष्ठा च कृपा हरेः ।
कोटिकल्पतपोलभ्यं लब्धवन्तोऽक्षरं यया ॥३४॥
नर्षयो यत्पदं श्रेष्ठं यं हरिं वाऽर्जयन्त्यपि ।
तपोभिरल्पबहुलैस्तं हरिं ते प्रपेदिरे ॥३५॥
यदर्थं भूभृतः भूमिं राज्यं त्यक्त्वा तपन्त्यपि ।
तथापि नाऽऽप्नुवन्त्येनं तं प्राप्ताः कृपया प्रभोः ॥३६॥
दुर्लभः सुलभो जातो धामेशो भूतले त्विह ।
अदृश्यो दृश्यतां प्राप्तः कृपया सर्वदेहिनाम् ॥३७॥

कष्टसाध्यो हरिस्त्वद्य कृपासाध्योऽस्ति सर्वथा।
कथमन्यथा पापानां चक्षुषोर्गोचरो हरिः ॥३८॥

जना ऊचुः—

अहो भाग्यं शुभं श्रेष्ठमस्माकं यद्धरिस्त्विह।
निजे गृहे स्वयमेत्य ददाति दर्शनं निजम् ॥३९॥
एवंविधं तु सुलभं प्राप्याऽपि न भजन्ति ये।
त एव कर्महीना वै दुर्भाग्या मानवा अपि ॥४०॥
पशुवज्जीवनं तेषां गतं भवति मोक्षदम्।
न पुनर्मानवो देहोऽवाप्स्यतेऽतो भजन्तु तम् ॥४१॥
गृह्णन्तु श्रीहरेर्मन्त्रं शरणं यान्तु सर्वथा।
तन्वा लक्ष्म्या धिया कृष्णं प्रसेवन्तां कृतादराः ॥४२॥
गृहं वाटी सुता नारी पतिः पुत्राश्च वाजिनः।
सम्पदश्चञ्चलाः सर्वास्ताभिः कृष्णं लभन्त्विह ॥४३॥
एवं बद्रीप्रिये तत्र जनाः प्रोचुः परस्परम्।
जगृहुः कृष्णमन्त्रांश्च बभूवुर्वैष्णवास्तदा ॥४४॥
भेजिरे श्रीकृष्णनारायणं साधून् सिषेविरे।
नरा नार्यः परां पवित्रतां प्राप्य ततः सदा ॥४५॥
महाभागवता भूत्वा प्रतीक्षन्ते स्म माधवम्।
कदा नारायणकृष्णो धामाऽस्मान्नेष्यति प्रभुः ॥४६॥
कदा साक्षान्निजान् कृत्वा ग्रहीष्यति करं प्रभुः।
आतुरा एवमर्थास्ते नारायणपरायणाः ॥४७॥
आबालवृद्धा अभवन् विवेकभक्तितत्पराः।
बद्रिके सिन्धुजा देशाः कथाप्रभावतस्ततः ॥४८॥
प्रायो भागवतैर्भक्तैः सम्पन्ना दिव्यतां गताः।
स्थले स्थले बालकृष्णो विमानेन स्वदर्शनम् ॥४९॥
दत्वा भक्तं च भक्तां च नयत्यक्षरधाम सः।
एवमाश्चर्यमनिशं प्रत्यहं तत्र वर्तते ॥५०॥
बद्रिके परितो देशे राष्ट्रे ग्रामे च पत्तने।
वार्तेयं सम्प्रवृत्ता यत् परायणं हि मुक्तिदम् ॥५१॥
यन्ति मुक्तिं भावनास्तु श्रुत्वा पारायणं प्रभोः।
कृत्वा तु दर्शनं साक्षाद् यान्ति धाम विमानगाः ॥५२॥
न पापं भगवान् कृष्णो गणयत्यत्र पापिनः।
पावयित्वा कृपयैव नयत्यूर्ध्वाऽक्षरं पदम् ॥५३॥
श्रुत्वाऽन्येऽपि महापापाः पापसन्त्रस्तमानसाः।
आगत्य बद्रिके श्रुत्वा कथां यन्ति परं पदम् ॥५४॥
एवंविधं चमत्कारं बहुमानवकीर्तितम्।
श्रुत्वा पापा महापापा आययुः संहितास्थलम् ॥५५॥
हिंसका घातकाश्चौराः कृतघ्नाश्च प्रतारकाः।
विश्वासघातका मद्यपाना मांसादना अपि ॥५६॥
मुमुक्षाप्रेरितास्ताः कर्मभिः स्वकृतैस्तदा।
निष्ठाश्रद्धाप्रपत्तिविश्वासधर्मास्तु ते हरेः ॥५७॥
कथां श्रुत्वा नरा नार्यो लेभिरेऽतिपवित्रताम्।
शृणु श्रीबद्रिके तत्र महापापास्त्रियाः कथाम् ॥५८॥
अन्ततः पावनीं सर्वपापघ्नां कृष्णयोगदाम्।
अभवल्लोमिकानाम्नी गणिका पञ्च तत्सुताः ॥५९॥
मांसादिन्यो मद्यपास्ता जीवहिंसापरायणाः।
सर्वादिन्यः कुक्कुटादिपालिन्यश्चाऽण्डभक्षिकाः ॥६०॥
पुत्र्यश्च गणिका चापि सर्वास्ता वारयोषितः।
मिथुनकुट्टवास्तव्या बीजसांकर्यगर्भजाः ॥६१॥
श्रुत्वा लोकमुख्येभ्यो वै महिमानं हरेः परम्।
कथाश्रवणजं चापि मोक्षलाभं प्रकर्ण्यं च ॥६२॥
जातपापप्रणाशेच्छाः स्वज्ञात्युद्धारहेतवे।
प्रथमं ताः पञ्चपुत्र्यो माता च शर्करापुरम् ॥६३॥
संहितायाः कथां श्रोतुमाययुः साधनान्विताः।
लोमशं ताः प्रणम्यैव चक्रुर्निवेदनं निजम् ॥६४॥
दयालुर्लोमशस्ताभ्यो ददौ कृपाऽमृतं जलम्।
हरेः प्रसादजं वारि पुष्पं पत्रं फलं ददौ ॥६५॥
एकाशनं व्रतं नित्यं स्नानं सिन्धौ प्रपूजनम्।
अनादिश्रीकृष्णनारायणमूर्तेः सुचिन्तनम् ॥६६॥
मद्यमांसादिसन्त्यागं साधुसेवनमन्वहम्।
कृष्णनारायणजापं ददौ ताभ्यस्तु लोमशः ॥६७॥
बद्रिके तास्तथैवाऽऽसन् सर्वा गुरोर्वचःस्थिताः।
मासमेवं व्रतस्थास्ताः शुश्रुवुः संहिताकथाः ॥६८॥
पापनाशोऽभवत्तासां धर्मशुद्धिस्तथाऽभवत्।
देहशुद्धिश्च सञ्जाता प्रसादाजफलाशनात् ॥६९॥
ततो मन्त्रं ददौ ताभ्यो लोमशः पारमेश्वरम्।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥७०॥
कृष्णनारायणस्वामिकृष्णनारायणं जपम्।
ददौ ताभ्यस्ततः सर्वाः शुद्धात्मदिव्यभावनाः।
कार्तिकस्य तु पूर्णाया आरभ्य मासमेव ताः ॥७१॥
मार्गशीर्षपूर्णिमापर्यन्तं पारायणे स्थिताः।
शुश्रुवुः परमात्मानं लक्ष्मीकान्तं हृदि स्थितम् ॥७२॥
जेपुर्नारायणस्वामिप्रभुंकृष्णं निशामुखे।
अपश्यन् परमात्मानं हसन्तं द्राक् पुरःस्थितम् ॥७३॥
गुरोः कृपया मन्त्रस्य जपेन साधुसेवया।
कथायाः श्रवणेनापि भक्त्या ध्यानेन निष्ठया ॥७४॥

पुण्योदयेन भगवान् श्रीकृष्णो दर्शनं ददौ ।
कोटिकामातिसौन्दर्यलावण्ययौवनान्वितः ॥७५॥
सर्वाभरणभूषाढ्यः सर्वशृंगारशोभनः ।
सर्वस्नेहप्रमोदाढ्यो महानन्दप्रदो हरिः ॥७६॥
तेजसा परितो भागान् प्रद्योतयन् हसन् हरिः ।
षट् ताः प्राह वरार्थं वै ताश्च कृष्णं प्रवव्रिरे ॥७७॥

**वाराङ्गन्य ऊचुः—**

वरदानं कृष्णनारायणोऽस्तु परमो वरः ।
आक्षरं च पदं स्थानं निवासार्थं सदाऽस्तु नः ॥७८॥
सर्वपापविनाशोऽत्र भक्त्या ते नो प्रजायत ।
शुद्धा मुक्तानिका दिव्याः कृत्वा नय परं पदम् ॥७९॥
इत्येवं बद्रिके तास्तु वव्रिरे श्रीहरेस्तदा ।
तथाऽस्त्वेवं हरिः प्राह तावद्विमानमागतम् ॥८०॥
दिव्यं सुवर्णवर्णं वै सर्वसम्पद्धरं शुभम् ।
अनादिश्रीकृष्णनारायणस्तत्राऽभवद्धि हरिः ॥८१॥
राधालक्ष्मीयुतः सोऽयं चावातरद् विमानतः ।
सभायाः पुरतः स्थित्वा पस्पर्श ताश्च पाणिना ॥८२॥
तावत्तासां भौतिकास्तु देहास्ते न्यपतन् क्षितौ ।
दिव्यदेहाः कमलासदृश्यस्ता वै तदाऽभवन् ॥८३॥
सर्वेषां पश्यतां कृष्णाऽऽज्ञयाऽऽरुरुहुरुत्सुकाः ।
विमानं सहसा बालकृष्णेन सह तद्द्रुतम् ॥८४॥
अम्बरे त्वभवद् यानं ययौ धामाऽक्षरं प्रति ।
जयनादास्तदा ह्यासन् महाश्चर्यमभूत्तु तत् ॥८५॥
अहो पापसमाचारमय्योऽपि श्रवणाद्धरिम् ।
पतिं प्राप्य ययुर्धामाऽक्षरं भक्तेर्हि गौरवम् ॥८६॥
कृपालुः श्रीकृष्णनारायणः श्रीस्वामिवल्लभः ।
महापापातिपापाढ्यान् विशोध्य नयति ध्रुवम् ॥८७॥
परं पदं शाश्वतं वै नात्र कार्या विचारणा ।
एवं श्रुत्वा बद्रिके वै चमत्कारं तदाऽपराः ॥८८॥
मिथः प्राहुरहो ह्याल्यो नो ग्रामाद् गणिका कथाम् ।
श्रोतुं पञ्चसुताभिः सोमिकानाम्नी ययौ तु या ॥८९॥
सा प्रययौ विमानेन हरेर्धाम परं पदम् ।
सा धन्या सोमिका चापि धन्या पुत्र्यश्च पञ्च ताः ॥९०॥
अरुणानी पाटलानी धवलानी मृणालिनी ।
किञ्जल्कानी पञ्च पुत्र्यो देव्यो भूत्वाऽक्षरं ययुः ॥९१॥
अहो वयं प्रयास्यामः श्रीकृष्णशरणं शुभम् ।
आत्मोद्धारं करिष्यामः साक्षात्प्राप्य पतिं हरिम् ॥९२॥
इत्येवं वारसुन्दर्यो मिथो मिथुनकुट्टगाः ।
निश्चित्य ताः कथां श्रोतुमाययुर्वै सहस्रशः ॥९३॥
बद्रिके तीर्थयानेऽपि पदे पदेऽश्वमेधजम् ।
फलं सञ्जायते श्राद्धवतां तासां तथाऽभवत् ॥९४॥
पापान्यासां विनष्टानि तीर्थाभिगमनात्तदा ।
स्नात्वा स्थित्वा कथां श्रुत्वा मन्त्रं प्रापुर्हि लोमशात् ॥९५॥
पौषकृष्णैकादश्यां ताः कथान्ते प्रातरेव ह ।
विमानं त्वम्बरात्प्राप्तं व्यलोकयन् सुवर्णजम् ॥९६॥
अनादिश्रीकृष्णनारायणयुक्तं महायतम् ।
हरिश्चावाऽतरत् तस्मात् कथाशालान्तिकं तदा ॥९७॥
विमानादानीतवारिप्रोक्षणं स मुहुर्मुहुः ।
कृतवान् श्रीकृष्णनारायणो वारांगनागणे ॥९८॥
तास्तु प्राप्य कर्णांस्तूर्णं त्यक्तभौतिकपुत्तलाः ।
दिव्यमुक्तानिका भूत्वा तस्थुः कृष्णस्य सन्निधौ ॥९९॥
पश्यतां सर्वलोकानां नीत्वा कृष्णो विमानके ।
सहस्रवारमुक्ताभिः सहितश्चाक्षरं ययौ ॥१००॥
ताश्च शुद्धा ब्रह्महदे स्नात्वा श्रीकमलासमाः ।
धाममुक्तानिका जाताः कथाकृष्णप्रसादतः ॥१०१॥
श्रद्धया फलमाप्नोति भक्त्या प्रसन्नतां तथा ।
सेवयाऽऽत्मानमाप्नोति कृपया परमेश्वरम् ॥१०२॥
बद्रिके सर्वलोकेषु संहितायाः कथाबलम् ।
प्रासरत् सहसा मोक्षप्रदं पापनिवासकम् ॥१०३॥
संघशो वै नरा नार्यो मोक्षार्थं कृतनिश्चयाः ।
कथायाः श्रवणार्थं ते समायान्ति समन्ततः ॥१०४॥
कीर्तनानि प्रजायन्ते भजनानि स्थले स्थले ।
सतां सेवाः प्रवर्तन्ते भक्ष्यभोज्यप्रदानकैः ॥१०५॥
चमत्काराः प्रजायन्ते तत्र तत्र दिने दिने ।
श्रुत्वा श्रुत्वा नरा नार्यो हर्षिताः संभवन्ति वै ॥१०६॥
भजन्ते श्रीबालकृष्णं साक्षाद्धृद्ब्रदयस्थितम् ।
लभन्ते परमं लाभं ज्ञानं शुद्धिं परां गतिम् ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणेन क्षीरोदवीरनृपतेः रुहारिणीराज्ञीयुतस्य, सहस्राधिप्रजानां, पञ्चपुत्रीसहितायाः सोमिकानाम्नीगणिकायाः, तथा मिथुनकुट्टवासिनीगणिकानां, संहिताकथाश्रवणेन मोक्षणं चेत्यादिनिरूपणनामा सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि मद्यपाया कथां तथा।
बिल्वपत्तनवासाया लियारीनामयोषितः ॥ १ ॥
बिल्वाख्ये पत्तने मर्कटानदेशे तदाऽभवत्।
मदिराव्यवसायाढ्यं कुटुम्बं मद्यकर्तृ तत् ॥ २ ॥
ध्वजी तत्राऽभवन्मुख्यो नाम्ना मिष्टासवध्वजी।
तस्य पत्नी लीयार्याख्या पुत्रपुत्रीसमन्विता ॥ ३ ॥
शुश्राव लोकमुखतः कथायाः परमं बलम्।
शर्करानगरे कृष्णसंहितायाः कथां ततः ॥ ४ ॥
श्रोतुमैच्छत् प्रमदा सा स्वामिने प्रार्थयत्ततः।
पतिर्मिष्टासवः पत्नीं प्राह दूरे कथास्थलम् ॥ ५ ॥
वर्तते दीर्घमार्गश्च गन्तव्यं सभयं पथि।
वयं धनविहीनाश्च दारिद्र्यदुःखपीडिताः ॥ ६ ॥
यास्यामो वै कथं मार्गे वर्तन्ते लुण्टका जनाः।
पत्नी प्राह पतिं श्रुत्वा नाशो देहस्य विद्यते ॥ ७ ॥
यद्वाकदाचिल्लोकेऽत्र मर्तव्यं सर्वथा जनैः।
अद्य वा बहुवर्षान्ते ध्रुवं तु निधनं मतम् ॥ ८ ॥
येन केन निमित्तेन मरणं संभविष्यति।
वयं पापाः पापकर्माणश्च पापपरायणाः ॥ ९ ॥
पापिनां मरणं पापे जायते तत्तु शोकदम्।
अपापे पुण्यकार्ये वा जायते मरणं यदि ॥१०॥
कष्टं वा जायते तादृक् प्रशस्तं लाभदं तु तत्।
पुण्यसंकल्पकर्तारस्तीर्थयात्रेच्छवोऽपि च ॥११॥
अकृतकार्या अपि ते मृताः स्वर्गे प्रयान्ति हि।
वयं मद्यपिबाः सर्वे सदा महातिपापिनः ॥१२॥
तीर्थयात्रानिमित्तेन मृताश्चेत् स्वर्गभागिनः।
लुण्टकैर्लुण्टिता मार्गे यदि चेद् भिक्षया ततः ॥१३॥
उत्पाद्य भोजनं चापि गमिष्यामः कथास्थलम्।
पापानां नाशनं तेन भाग्यानामुदयो भवेत् ॥१४॥
यद्वा प्रमोक्षणं लोकादस्मात् स्यान्नात्र संशयः।
सर्वथा लाभ एवाऽस्ति हानिस्तत्र न विद्यते ॥१५॥
तस्मात्तीर्थे प्रकर्तव्यं गन्तव्यं च कथास्थले।
इत्युक्तस्तु तया पत्न्या कुटुम्बसहितो ध्वजी ॥१६॥
सूनी शून्यं गृहं कृत्वा प्रतस्थे शर्करायुतम्।
यथा तु चिन्तितं पूर्वं तथैवाऽस्याऽभवत् पथि ॥१७॥
लुण्टका मिलिता मार्गे हृतं तैर्भोजनादिकम्।
पाथेयं गर्दभं भारवाहं च वृषभं खरम् ॥१८॥
वस्त्राणि चापि पात्राणि लुण्टकाः समपाहरन्।
ते तु मत्वा महत्कष्टं किन्तु तीर्थनिमित्तकम् ॥१९॥
पूर्वं विचारितं चापि नातिकष्टं तु मेनिरे।
हृतसर्वस्वकाः सर्वे पुत्राश्चैकादशापि च ॥२०॥
पुत्र्यः सप्तदश कन्याः पिता माता च ते ततः।
शनैः शनैः कृष्णपरायणाः सायं सरस्तटे ॥२१॥
द्रुमाढ्ये भूतले रात्रिनिर्गमाय कृतादराः।
कृतावासा जलं पीत्वा सस्मरुः परमेश्वरम् ॥२२॥
कष्टं प्राप्तं परं मार्गे सर्वं हृतं तु लुण्टकैः।
अद्य रात्रिर्गता स्यात्तु श्वः कष्टं क्षुधया भवेत् ॥२३॥
मर्तव्यं वा भिक्षितव्यं चाऽत्तव्यं दलपत्रकम्।
तथापि तत्कथास्थानं गन्तव्यं नात्र संशयः ॥२४॥
निश्चित्यैवं समिधश्चाहृत्य वह्निमचेतयन्।
तदाधाराः स्थिताः सर्वे कीर्तनं संप्रचक्रिरे ॥२५॥
'प्रियाकृष्णहरेकृष्णपावननारायणप्रभो।
श्रीपतिललिताकृष्णबालकृष्णप्रभो विभो' ॥२६॥
एवं प्रचक्रिरे धुन्यं तालीवादनपूर्वकम्।
रात्र्यर्धे विगतं यावत्तावत् क्रमेलकस्थितः ॥२७॥
दशोष्ट्रसहितः कश्चिच्छ्रेष्ठी भोजनवस्त्रवान्।
आययौ तेन मार्गेण जलं पातुं सरस्तटे ॥२८॥
सोऽपि वह्निं शुभं वीक्ष्य मानवाँस्तत्र संस्थितान्।
जलं पीत्वा पाययित्वा विश्रामार्थं समाययौ ॥२९॥
जय नारायणकृष्णेत्युक्त्वा ह्यवातरत् स्थले।
उष्ट्रान् वृक्षस्तम्बमूले बद्ध्वा वह्निस्थलं शुभम् ॥३०॥
गत्वा पप्रच्छ तान् सर्वान् वृत्तान्तं क्वागमादिकम्।
मिष्टासवो विनीतो वै भूत्वा यात्रां जगाद तम् ॥३१॥
लुण्टकैर्लुण्टितं सर्वं तदप्येनं जगाद ह।
अथ श्रेष्ठी परं श्रुत्वा कष्टं दयापरोऽभवत् ॥३२॥
ददौ वै भोजनं तेभ्यः खर्जुरादिकमुत्तमम्।
वस्त्राण्यपि ददौ तेभ्योऽभयदानं ददौ ततः ॥३३॥
उवाच तेभ्यो मुदभृद् याम्यहं चापि तत्स्थलम्।
कथां श्रोतुं ततो यूयमारोहध्वं ममोष्ट्रकान् ॥३४॥
प्रयास्यामोऽनेन पथा प्राप्स्यामः श्वः प्रगे स्थलीम्।
उष्ट्रा मार्गविदः सन्ति पन्थानं वेद्मि चाप्यहम् ॥३५॥
जयं मे विद्यते नैवाऽऽरोहयध्वं ममोष्ट्रकान्।
इत्युक्ता बद्रिके सर्वे त्वारुरुहुः क्रमेलकान् ॥३६॥
वेगवन्तो दीर्घकण्ठा उष्ट्रा दीर्घपदक्रमाः।
वेगवद्धावनमग्ना अक्रामन्नोदिताः पथः ॥३७॥

यथा वा गरुडा हंसा विमानं वा गजा इव ।
मार्गमुल्लंघयामासुर्यथाऽम्बरविहारिणः ॥३८॥
दिनद्वयस्य मार्गं ते रात्र्यर्धे निर्ययुर्जवात् ।
प्रातर्जातं सुखदश्यं तावत्तु शर्करापुरम् ॥३९॥
ते त्वपश्यन् पुरः श्वेतसौधालिकाप्रशोभितम् ।
कथामण्डपसंशोभद्व्योमकलशराजितम् ॥४०॥
बहुभिर्मुनिभिः सद्भिर्वैष्णवैः प्रमदानरैः ।
विहरद्भिः स्नानपूजाद्यर्थे सञ्चारिभिः प्रगे ॥४१॥
होमधूम्रैः सूचयद्वै कथास्थानं च घोषणैः ।
ब्राह्मणानां मुखमन्त्रोच्चारणानां समुच्छ्रितैः ॥४२॥
'नारायणप्रभोकृष्णनारायण जगत्प्रभो ।
बालकृष्णहरिकृष्णमाधवीरमणप्रभो' ॥४३॥
एवं संकीर्तनैर्व्याप्तैर्ध्वनिव्याप्तं तु पावनम् ।
शर्करानगरं वीक्ष्याश्चर्यं परमं लेभिरे ॥४४॥
सिन्धुतीरे द्रुतं गत्वा श्रेष्ठी सस्नौ जले मुहुः ।
अवतार्य समस्तांस्तान् प्रदर्श्य मार्गमुत्तमम् ॥४५॥
कथास्थलस्य वै ख्यातं स्वयमुष्ट्रान् समस्तकान् ।
मिष्टं जलं पाययित्वा द्रुतं त्वदृश्यतां ययौ ॥४६॥
वीक्ष्यैतत् स ध्वजी सूनी महाश्चर्यपरोऽभवत् ।
अहोऽयं को भवेद् रक्षाकरोऽस्माकं वनान्तरे ॥४७॥
महामार्गे सुखदाता प्रापकः सुकथान्तिके ।
नूनं नारायणो यद्वा भवेत् कश्चित् सुरेश्वरः ॥४८॥
अन्यथा न भवेदेवमदृश्यवर्तनं क्वचित् ।
लियारी सा कृष्णनारायणं सस्मार तत्र ह ॥४९॥
आकाशवाण्या भगवानाह तां भगवानहम् ।
उष्ट्रानादाय भक्तानां रक्षार्थं त्वागतोऽभवम् ॥५०॥
यात श्रोतुं कथां दिव्यां सेवन्तां लोमशं मुनिम् ।
स्वतःप्रकाशं सेवन्तां गतिः श्रेष्ठा भविष्यति ॥५१॥
इत्युक्ता बद्रिके सर्वे तुष्टा आनन्दमोदिताः ।
ययुः कथास्थलं नीत्वा कुसुमान्यतिभावतः ॥५२॥
नेमुस्ते दूरतः स्थित्वा सभायां सम्प्रविश्य ते ।
संहितायाः पूजनं वै चक्रुः पुष्पादिभिस्ततः ॥५३॥
निषेदुः श्रवणार्थं ते यावत् कथाप्रवाचनम् ।
कथान्ते लोमशं गत्वा नेमुः पादजलं पपुः ॥५४॥
वृत्तान्तं कथयामासुर्मार्गे कृष्णकृतावनम् ।
सम्भाषीदुष्ट्रश्रेष्ठी वै स तु कृष्णनरायणः ॥५५॥
भगवान् श्रीहरिरस्मान् कथास्थानं समानयत् ।
तत्प्रपत्तिं समिच्छामो देहि मन्त्रं सुपावनम् ॥५६॥
इत्यर्थितो लोमशस्तान् श्रावयामास सन्मनुम् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥५७॥
तथा तत्रैव धुन्याऽर्थे ददौ नाम हरेस्तदा ।
'कृष्णनारायणकृष्णनारायणपरेश्वर ॥५८॥
बालकृष्णाऽनादिकृष्णनारायण रमेश्वर' ।
व्रतं ददौ मद्यहीनं जीवनं तेभ्य इत्यथ ॥५९॥
भोजनादिव्यवस्थां च तेषां श्रीलोमशो मुनिः ।
राजमहानसाच्चक्रे नित्यं कुर्व्यां निवासनम् ॥६०॥
एवं ते बद्रिके तत्र समूषुः सर्वदा सुखम् ।
सेवां चक्रुः सतां तत्र पात्रादिमञ्जनं तथा ॥६१॥
मार्जनं क्षालनं वस्त्वानयनं च कथास्थले ।
महीमानादिदेहानां संवाहनं प्रचक्रिरे ॥६२॥
श्रुत्वा कथां सेवयित्वा साधूनाशीर्वचोऽमृतैः ।
विधूय सर्वपापानि कृष्णप्रसादभोजनैः ॥६३॥
निर्मलास्ते समस्ता वै जाताः कृष्णपरायणाः ।
पुण्यात्मानः परा भक्ता आत्मनिवेदिनो यथा ॥६४॥
संस्मरन्त्युष्ट्रपालं तं श्रीकृष्णं वल्लभात्मकम् ।
जगत्स्वप्नसुषुप्त्यादावुष्ट्रपालो विलोक्यते ॥६५॥
तच्चित्तास्तद्ध्यानमग्नास्तस्मिन्निन्द्रियवृत्तयः ।
तद्योगस्थास्तत्स्मरास्ते तन्मया दिव्यभावनाः ॥६६॥
अभवन् स्वल्पकालेन महाभागवतोत्तमाः ।
कृष्णनारायणस्तेभ्यो बद्रिके स्वप्नगोचरः ॥६७॥
भूत्वोष्ट्रपालकः साक्षान्नारायणः प्रियःपतिः ।
शंखचक्रगदापद्मधारी भवति तत्क्षणे ॥६८॥
एवं ददाति नित्यं वै दर्शनं भक्तिबन्धनः ।
स्नेहपाशधृतः कृष्णस्तान्नेतुं समुपाययौ ॥६९॥
दिव्यविमानमारुह्य दिव्यप्रभायुतः प्रभुः ।
अवातरद् विमानात्स पौषस्यैकादशीदिने ॥७०॥
शुक्लपक्षे पश्यतां यावतां वै भक्तदेहिनाम् ।
मिष्टासवस्तथा भार्या लियारी पुत्रपुत्रिकाः ॥७१॥
विलोक्य त्वागतं कृष्णं वल्लभं परमेश्वरम् ।
सहसोत्थाय चरणौ नत्वा चक्रुर्हि दण्डवत् ॥७२॥
लिलिहुश्चरणौ तस्य जिह्वयाऽऽधारयन् रजः ।
शरीरेषु ततः कृष्णमार्थयन् मोक्षसिद्धये ॥७३॥
कृपालुर्भगवानाह सज्जा भवन्तु वै द्रुतम् ।
नयामि दिव्यदेहान् वै युष्मान् धामाऽक्षरं मम ॥७४॥
इत्युक्तमात्रास्ते सर्वेऽर्पिताः कृष्णस्य पादयोः ।
अभवन् पश्यतां सर्वलोकानां न्यपतन् क्षितौ ॥७५॥

मौतिकानि शरीराणि त्यक्त्वा भूत्वा हरीच्छया ।
दिव्या मुक्तस्वरूपास्ते कृष्णतुल्यशरीरिणः ॥७६॥
कृष्णाज्ञया निषेदुस्ते द्रुतं दिव्यविमानकम् ।
भजन्तः श्रीकृष्णनारायणं नत्वा सभां शुभाम् ॥७७॥
जयशब्दोच्चारयुक्ता विमानेनाऽक्षरं पदम् ।
श्रीकृष्णेन समं बद्रि ययुर्मुक्तस्वरूपिणः ॥७८॥
बभूवुः कन्यकास्तास्तु माता मुक्तानिकास्तथा ।
पुत्राः पिता च मुक्तास्ते ययुर्धामाऽक्षरं हरेः ॥७९॥
इत्येवं बद्रिके कृष्णनारायणो जगद्गुरुः ।
दीनाऽनाथदरिद्राणामुद्धारकोऽस्ति सर्वदा ॥८०॥
शरणागतरक्षायां तत्परोस्ति सदा प्रभुः ।
अनवेक्ष्य तु पापानि पापिनां दुर्गुणांस्तथा ॥८१॥
शरण्यः शरणायातान् कथाश्रवणपावनान् ।
अनुग्रहेण कृपया तान्नयत्यक्षरं पदम् ॥८२॥
मद्यपानरतांस्तांश्च नरान्नारीः समस्तकान् ।
पावयित्वा प्रभुर्निन्ये कृपया स्वाऽक्षरं पदम् ॥८३॥
गणयत्येव नैवाऽयं करुणासागरः प्रभुः ।
पापानि पापिनां लोके नयत्यव्ययमक्षरम् ॥८४॥
आश्चर्यं परमं प्राप्ता लोका वीक्ष्य चमत्कृतिम् ।
दीनबन्धुरहो कृष्णः स्वयमुद्धारयत्यपि ॥८५॥
ददाति दर्शनं नैजं ददाति वस्तु वाञ्छितम् ।
कृत्वा शुद्धान् याम्यदुःखं विनाश्य शरणागतान् ॥८६॥
स्वयं नयति दिव्येन विमानेन निजं पदम् ।
अहो भाग्यमहो भाग्यं कथाश्रवणकारिणाम् ॥८७॥
मासमात्रेण मुक्तिं स करोति भवपाशतः ।
संहिता श्रीकृष्णरूपा लक्ष्मीरूपाऽस्ति शाब्दिकी ॥८८॥
प्रतिमा तां सेवयित्वा स्वर्गं मोक्षं च विन्दति ।
पठनाच्छ्रवणादस्य मुक्तो भवेन्न संशयः ॥८९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणेन मद्यपस्य मिष्टासवध्वजिकुटुम्बस्य मार्गे लुण्टकप्राप्तकष्टस्य श्रीहरिणा मार्गे श्रेष्ठिरूपेण रक्षितस्य मोक्षणं कृतमित्यादिनिरूपणनामा-ऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि चक्रिण्याः शोभनां कथाम् ।
आसीत् कालान्तके राष्ट्रे गण्डवाताभिधा सती ॥ १ ॥
भार्या सा यास्कवादस्य चक्रिणो यन्त्रकारिणः ।
पुत्रपुत्रीयुता चापि कुटुम्बिनी सुविश्रुता ॥ २ ॥
यस्या गृहे लोहयन्त्राण्युत्पद्यन्ते सहस्रशः ।
इक्षुपेषणयन्त्राणि तिलपेषणकानि च ॥ ३ ॥
बीजपेषणयन्त्राणि रसोत्पादनकान्यपि ।
एवंविधानि लौहानि धातुजानि भवन्ति च ॥ ४ ॥
कलाभिर्धातुरसजान्यपि प्रढालकानि च ।
यन्त्राणां विक्रयं सा तु करोति नित्यमेव ह ॥५॥
क्रयं करोति बीजानां तैलार्थं सर्वतस्तथा ।
निजगृहेऽपि यन्त्राणि चलन्ति विंशतिस्तदा ॥ ६ ॥
भ्रमन्ति तैलपेषाणि चेक्षुपेषाणि विंशतिः ।
चक्राणां विक्रयं नित्यं भग्नानां योजनं पुनः ॥ ७ ॥
सन्धानं खण्डितानां च कारयत्यपि सा सती ।
यस्या वशे कर्मचाराः सहस्रशो भवन्ति वै ॥ ८ ॥
सहस्रशः कर्मचारिण्योऽपि कुर्वन्ति तत्क्रियाः ।
प्रवर्तन्ते तु यन्त्राणि महिषोष्ट्रखरादिभिः ॥ ९ ॥
नाणकानि प्रलभ्यन्ते सहस्राणि दशाऽन्वहम् ।
एवंविधा महाराज्ञी यथा तथा तु सा सती ॥१०॥
द्रव्याढ्या मानवाढ्या च सत्ताढ्या पशुपालिनी ।
चक्रिणी सा दीर्घराष्ट्रे प्रसिद्धाऽऽसीत् कलावती ॥११॥
बद्रिके सा प्रशुश्राव माहात्म्यं जनवर्णितम् ।
संहितायाः कथाजन्यं प्रतापं मोक्षदं परम् ॥१२॥
सा जानाति महाचक्रपेषणैः पापसञ्चयम् ।
बीजादौ जीवजन्तूनां पेषणादिसमुद्भवम् ॥१३॥
सूनानां च फलं याम्यपुर्यां कष्टप्रभोगिताम् ।
नारकीं च गतिं निम्नां जानात्येवातिकष्टदाम् ॥१४॥
तत्पापानां प्रशान्त्यर्थं जिज्ञासाप्रेरिता तु सा ।
कथाश्रवणे श्रद्धाढ्या कृतबुद्धिर्व्यजायत ॥१५॥
प्राह स्वस्वामिनं साध्वी पारायणं प्रजायते ।
शर्करानगरे स्वामिन् सर्वपापप्रणाशनम् ॥१६॥
चमत्काराश्च बहवः श्रूयन्ते पापनाशकाः ।
मोक्षदो भगवांस्तत्र दृश्यते कृपयाऽधुना ॥१७॥
वयं तु पापिनो नित्यं चक्रिणः चक्रपेषणाः ।
पापिनां न गतिः श्रेष्ठा नारकी गतिरीरिता ॥१८॥
राज्यं राष्ट्रं समस्तं वा यद्गृहे वर्तते ह्यपि ।
देहान्ते निरये वासश्चेत् सर्वं तन्निरर्थकम् ॥१९॥
धनं चाक्षयकोशात्म दासा दास्योऽयुतान्यपि ।
देहान्ते नरके वासश्चेत्तत्सर्वं निरर्थकम् ॥२०॥
वाटीक्षेत्राणि चारामा उद्यानानि गृहाण्यपि ।
देहान्ते नरके वासश्चेत्तत्सर्वं निरर्थकम् ॥२१॥

प्रासादाः स्वर्णकलशा ध्वजारोपसुशोभनाः ।
सम्पदः क्षयहीनाश्चाऽसंख्याता अपि सर्वथा ॥२२॥
देहान्ते नरके वासश्चेत्तत्सर्वं निरर्थकम् ।
महिषीगोगजवाजिक्रमेलककरेणुकाः ॥२३॥
हंसगरुडमेनाद्याः शुकसारसचातकाः ।
देहान्ते नरके वासश्चेत्तत्सर्वं निरर्थकम् ॥२४॥
पत्न्यो बह्वयस्तथा पुत्राः पुत्र्यो वंशे च पौत्रकाः ।
स्वसारो भ्रातरो वृद्धा बान्धवा मातरः स्त्रियः ॥२५॥
पतयो दासवर्गाश्च दास्यश्चापि सहस्रशः ।
अप्यन्ते नरके वासस्तदा सर्वं निरर्थकम् ॥२६॥
व्यापारा बहवश्चापि शकटीनां सहस्रकम् ।
यन्त्राणामयुतं चापि वाहनानां सहस्रकम् ॥२७॥
आनन्त्यं चापि भोगानां कीर्तीनामुत्सवास्तथा ।
विद्यन्तेऽपि च देहान्ते नारकी चेन्निरर्थकाः ॥२८॥
तस्मात् स्वामिन्नात्मकल्याणार्थं विचिन्तयाम्यहम् ।
पापानां नाशनं दानैः सतां सेवादिभिस्तथा ॥२९॥
कथानां श्रवणैः स्याच्च पुण्योदयो भवेदपि ।
नैषा समृद्धिः पुण्यदाऽस्ति हिंसात्मिका तु चक्रिणी ॥३०॥
सा समृद्धिः पुण्यकार्यार्थं योजनीयेति मे मतिः ।
लक्षाधिकं नाणकं वै लब्ध्वा यामः कथास्थलीम् ॥३१॥
श्रोष्यामः सत्कथां नित्यं दास्यामो नाणकादिकम् ।
करिष्यामश्चात्मशुद्धिं लप्स्यामश्चात्मनो हितम् ॥३२॥
द्रक्ष्यामः श्रीपतिं कृष्णं प्राप्स्यामः परमं पदम् ।
प्रधानस्याऽग्रभृत्यस्य कृत्वाऽऽत्मसात् समस्तकम् ॥३३॥
असंख्यं वा धनं नीत्वा गच्छामो वै कथास्थलीम् ।
जीवने निश्चयो नास्ति नेदं सहाऽऽगमिष्यति ॥३४॥
धर्मकर्म महादानं सतां प्रसन्नता मतम् ।
कृष्णभक्तिः कथापुण्यं परलोके सहायदाः ॥३५॥
तत्कृत्वाऽक्षयपुण्यात्मधनं समर्ज्य सर्वथा ।
मोक्षमार्गे गमिष्यामो मा वृथाक्लेशमावह ॥३६॥
इत्युक्तः स्वपतिर्नार्या मुमुक्षुश्चात्मवानपि ।
सम्मतिं प्रददौ तस्यै यात्रार्थं मुक्तिहेतवे ॥३७॥
प्रसन्ना गन्धवाता सा सज्जाऽभवत्ततो द्रुतम् ।
शतपुत्रसुतायुक्ता शतदासीसमन्विता ॥३८॥
शतदासैर्युता पौत्रैर्द्विशताभ्यां समन्विता ।
स्नुषाभिः सहिता बालैर्बालिकाभिर्युता तथा ॥३९॥
वृद्धाभिः सहिता रक्षाकृद्भिश्च सन्नद्धैर्युता ।
द्विशते शकटानां च वाजिनां द्विशते तथा ॥४०॥

उष्ट्राणां विंशतिं चापि वृषभाणां शतं तथा ।
भारवाहार्थमेवैषा पयोदानां गवां शतम् ॥४१॥
भोजनानामपारं च वस्त्राणां चाप्यनन्तकम् ।
पात्राणामप्यसंख्यत्वं नीत्वा सज्जाऽभवत्तदा ॥४२॥
यास्कवादोऽपि मुदितो यात्रार्थं मोक्षहेतवे ।
सज्जो बभूव नृपवत् कोटिस्वर्णसमन्वितः ॥४३॥
सर्वोपस्करणैर्युक्तः श्रेष्ठविमानमास्थितः ।
पत्न्या सार्कं विमानेन नत्वा गणेशमीश्वरम् ॥४४॥
व्योम्ना तु शर्कराभूमिं ययौ कुटुम्बिभिः सह ।
सार्थवाहाश्च भृत्याश्च गोधनं सम्पदोऽपि च ॥४५॥
भूमार्गेण समायातं सार्थं तु शर्करापुरम् ।
तत्रोद्याने सिन्धुतटे नैजे व्यापारयोगिनि ॥४६॥
उवास सर्वसम्पन्नो यास्कवादः कुटुम्बिभिः ।
व्यवस्थाप्य समस्तं स्वं सैन्यं स्नात्वा ततश्च सः ॥४७॥
पत्न्या युतो ययौ श्रीमल्लोमशं द्रष्टुमुत्सुकः ।
गत्वा नेमे पुपूजापि हार्दं न्यवेदयत्तथा ॥४८॥
लोमशोऽपि शुभाशीर्भिः प्रोत्साहं प्रददौ तदा ।
ददौ कृष्णामृतवारि प्रसादं प्रददौ तथा ॥४९॥
संहितायाः स्थलं नीत्वा कारयामास दर्शनम् ।
चक्री व्यासासनं व्यासं पूजयामास सद्धनैः ॥५०॥
बहुभिश्चोपचारैश्च व्रतं जग्राह तत्र च ।
सभार्यो नित्यमेवाऽन्नं ग्रहीष्याम्येकभक्तकम् ॥५१॥
साधुसेवां करिष्यामि कथाश्रवणमन्वहम् ।
नित्यं सतां भोजनानि दास्ये यथेष्टकान्यपि ॥५२॥
नित्यं सुवर्णदानानि वस्त्रदानानि नित्यशः ।
नित्यं प्रसादवार्यादिपानं च नेतरद्ग्रहम् ॥५३॥
स्वतःप्रकाशव्यासस्य पयःपनादि सर्वथा ।
मत्सकाशाद्भवेत्त्वेति जग्राह नियमान् स तु ॥५४॥
नित्यं मालाशतावर्तप्रदक्षिणशतादिकम् ।
दण्डवन्मन्त्रजपनं सहस्रवारमुत्तमम् ॥५५॥
एवंविधांस्तु नियमान् तेभ्यो ददौ हि लोमशः ।
ददौ मन्त्रं च मालाश्च नाम जपार्थमार्पयत् ॥५६॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'कृष्णनारायणस्वामिप्रभोनारायणेश्वर ॥५७॥
अनादिश्रीकृष्णनारायणश्रीमाधवेश्वर' ।
एवं दत्वा नियमांश्च लोमशः स्वाश्रमं ययौ ॥५८॥
यास्कवादादयः सर्वे निवासं स्वं ययुस्ततः ।
यथानियममेवैते वर्तन्ते स्म सुखस्थिताः ॥५९॥

कथायाः श्रवणं नित्यं प्रकुर्वन्ति समुत्सुकाः ।
साधूनां सेवनं सर्वे प्रकुर्वन्ति कृतादराः ॥६०॥
निःसंशयां देहसेवां साक्षात् कुर्वन्ति वै सताम् ।
एवंविधानां सहसा ध्वस्तान्यघानि चक्रिणाम् ॥६१॥
नरा नार्यः समस्तास्ते निष्पापा ह्यभवन् द्रुतम् ।
अन्तःकपाटं निर्भिन्नं ज्ञानवन्तोऽभवन् द्रुतम् ॥६२॥
यास्कवादो भोजनानि साधुभ्यश्चान्वहं ददौ ।
वस्त्रदानानि बहूनि फलदानानि सन्ददौ ॥६३॥
इष्टदानानि सर्वाणि गोदानानि ददौ तथा ।
दुग्धदधिघृतदानं हव्यदानानि सन्ददौ ॥६४॥
कम्बलानां प्रदानानि पत्रदानानि वै ददौ ।
शृंगारवस्तुदानानि पूजायां मूर्तये ददौ ॥६५॥
यानवाहनदानि छत्रचामरदानकम् ।
उपानदुष्णीषवर्मदानं भूषार्पणं व्यधात् ॥६६॥
शय्यादानं चान्नदानं धान्यदानं ददौ तथा ।
स्वर्णरूप्यकमुद्रादिदानं रत्नार्पणं व्यधात् ॥६७॥
वाचकाय ददौ वेषाम्बराणि कानकं घटम् ।
विभूषणानि सर्वाणि स्वर्णाम्बराणि वै तथा ॥६८॥
अथ भार्या गण्डवाता प्रसन्नमानसा तदा ।
विप्राणीभ्यो ददौ स्वर्णं रूप्यकं भूषणानि च ॥६९॥
मौक्तिकानि सुरत्नानि हीरकान् शाटिका ददौ ।
कुर्चभ्रीं च कुचभ्रीं च कचलीं चोलिकां ददौ ॥७०॥
सुरवालीं घर्घरीं च कुचलीं कम्बलीं ददौ ।
रशनां वालपाशीं च ललाटिकां च कर्णिकाम् ॥७१॥
ऊर्मिकांऽगुलीयकानि कंकणवलयान् ददौ ।
कण्ठिकां चांगदे स्वर्णमालाश्च मुद्रमालिकाः ॥७२॥
नत्थीं बिन्द्वीं कुण्डले च सौवर्णीः शृंखला ददौ ।
वातगण्डा ददौवेवं मिष्टान्नापि जलान्यपि ॥७३॥
कुंकुमाऽक्षतपुष्पाणि शृंगाराणि ददौ तथा ।
तस्याः पुत्राश्च पुत्र्यश्च गोदानानि प्रचक्रिरे ॥७४॥
वाजिदानोष्ट्रदानानि वृषदानानि वै तदा ।
चक्रुस्तत्र सुपात्रेषु महादानानि वै तदा ॥७५॥
अनसामपि दानानि औषदानानि भावतः ।
तुलसीवृक्षदानानि हव्यदानानि सन्दधुः ॥७६॥
संहितापुस्तकदानं सर्वदानानि सन्दधुः ।
सर्वास्तत्र सह नीताः सम्पदो जडचेतनाः ॥७७॥
ददुर्दाने हरेर्भक्त्या विदित्वाऽवसरं शुभम् ।
यानवाहनदानानि दासीदासप्रदानकम् ॥७८॥
प्रचक्रिरे यथायोग्यं मोक्षार्थे कृष्णमानसाः ।
गते पक्षे समये तु कथाज्ञानपरिप्लुताः ॥७९॥
दिव्यभावा व्यजायन्त सर्वे ते चक्रिणस्तदा ।
दासा दास्यो भृत्यवर्गा बान्धवाश्च कुटुम्बिनः ॥८०॥
आबालवृद्धाः श्रीकृष्णनारायणस्य दर्शनम् ।
आतुराः कर्तुमेवाऽऽसन् मोक्षमार्गपरायणाः ॥८१॥
माघकादशिकासायं कृष्णपक्षेऽहर्णोत्तरम् ।
आरार्त्रिकं विनिष्पाद्य यावत् कीर्तनकोविदाः ॥८२॥
कुर्वन्ति कीर्तनं तावत् कृष्णनारायणप्रभुः ।
भासयंस्तेजसा व्योम दिशश्चावातरद् भुवि ॥८३॥
कानकेन विमानेन प्रियालक्ष्मीयुतो हरिः ।
विमानाद् बहिरागत्य दर्शनं स्वं ददौ तदा ॥८४॥
आश्चर्यं परमं प्राप्ताः श्रोतारो लक्षशो जनाः ।
नरा नार्यः क्षणं स्तब्धास्तेभ्योऽभिमवहृदयः ॥८५॥
अभवँश्च ततः कृष्णं संहृतातिप्रभं शुभम् ।
अपश्यँस्ते मुहुः रम्यं सुन्दरं गोपिकापतिम् ॥८६॥
गण्डवाताऽभवन्मुग्धा श्रीकृष्णे माधवीपतौ ।
तत्पुत्र्यश्चाभवन् मुग्धाश्चातीव परमात्मनि ॥८७॥
त्यक्तभाना अभवँस्ताः कृष्णाकृष्टात्मवृत्तयः ।
श्रीकृष्णाय निजदानं तदैव समचिन्तयन् ॥८८॥
दास्यश्च कन्यकाश्चापि या युवत्योऽभवँस्तदा ।
सर्वा मुग्धा निजदानं तदा नारायणे व्यधुः ॥८९॥
एवं नराश्च ये भृत्याः पुत्रा दासाश्च कर्मिणः ।
कृष्णाऽऽकृष्टात्मदेहास्ते मोक्षणं वव्रिरे हरेः ॥९०॥
ज्ञात्वा तेषामभिप्रायं श्रीकृष्णपरमेश्वरः ।
तूर्णं विधाय दिव्यांस्तान् समस्तान् दिव्यविग्रहान् ॥९१॥
धृत्वा नैजे विमाने तु कृत्वा मुक्तान् सुरूपिणः ।
विवृत्तदेहान् पुरुषान् नारीर्मुक्तानिकास्तथा ॥९२॥
कृत्वा शेषानवस्थाप्य बालवर्गान् कुटुम्बिनः ।
पोषकान् रक्षकाँश्चापि युगलान् वरयोषितः ॥९३॥
अवस्थाप्य क्षितौ तत्र तेभ्यो दत्वा शुभाशिषः ।
नेतुं योग्यान्नरान्नारीर्निन्ये धामाऽक्षरं निजम् ॥९४॥
सहस्रशो नरानार्यस्तदा तद्देहधारिणः ।
दिव्यदेहाः प्रभूत्वैव ययुर्धामाऽक्षरं हरेः ॥९५॥
अहो वै चक्रिणां भाग्यं बल्हिके नरयोषिताम् ।
सर्वस्वार्पणकर्तृणां येषां नेता नरायणः ॥९६॥
अहो कालस्य कवला अपि देहा हि भौतिकाः ।
कृष्णेच्छया विना पातं दिव्या भूत्वा ययुः सह ॥९७॥

अन्यथाकर्तृसामर्थ्यं त्वेतद्धि परमात्मनः ।
जडं तु चेतनं कृत्वा क्रीडत्येव च तैः सह ॥९८॥
शेषाः सहस्रशश्चापि नरा नार्यस्तदा तु ये ।
कथां श्रुत्वा विनिष्पापा दर्शनादमवँस्तथा ॥९९॥
गण्डवाताकुटुम्बं तद् यास्कवादस्य वंशिनः ।
वैष्णवास्ते तु मासान्ते ययुर्निजं गृहं ततः ॥१००॥
स्वदेशे तन्महाश्चर्यं जगदुः सर्वतः शुभम् ।
मुक्ति प्राप्ताश्चक्रधारा वृद्धा मध्याश्च भावुकाः ॥१०१॥
अन्ये तथैव भजनं बद्रिके स्वालये व्यधुः ।
एवं महाँश्चमत्कारस्तदा ख्यातोऽभवद् भुवि ॥१०२॥
पठनाच्छ्रवणादस्य स्मरणात्पापनाशनम् ।
भुक्तिर्मुक्तिर्भवेच्चापि सर्वेच्छापूरणं भवेत् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणेन चक्रिणो यास्कवादस्य तत्पत्न्या गण्डवातायाश्च कथाश्रवणेन सहस्राधिनरनारीभिः सहितायाः श्रीकृष्णनारायणेन मोक्षणं कृतमित्यादिनिरूपणनामा नवाधिकचत्वारिंशोऽध्यायः ॥ ४९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां निन्दकयोषितः ।
वाल्वने पुरे त्वासीन्नास्तिका द्वेषकारिणी ॥ १ ॥
द्विर्वदन्तीतिनाम्न्येव प्रसिद्धा शूद्रभामिनी ।
अनपत्या रुग्णपतिभार्या सर्वस्य निन्दिका ॥ २ ॥
यस्य कस्यापि श्रेष्ठ्यं वाऽभ्युदयं सा शृणोति चत् ।
खण्डयत्येव सामर्षा स्वभावाज्ज्वलनात्मिका ॥ ३ ॥
तेजोद्वेषकरी चाप्यसहमानाऽन्यगौरवम् ।
निन्दत्येव सतो लोकान् सज्जनाँश्च सतीस्तथा ॥ ४ ॥
विप्रं गुरुं पितरौ च वृद्धान् कुटुम्बिनोऽपि च ।
नृपं राज्ञीं सतीं साध्वीं साधून्निन्दति वै वृथा ॥ ५ ॥
एतादृश्यास्तु निन्दायाः पापं तस्या महद्धयभूत् ।
अनपत्या ततश्चास्ते रुग्णश्चास्याः पतिस्तथा ॥ ६ ॥
निन्दनं शमनं प्रोक्तं भाग्यस्य वंशजस्य च ।
वंशाल्पोच्छेदनं तेन पापेन जायते ततः ॥ ७ ॥
नरके वसतिः स्याच्च निर्वंशस्य मृतस्य वै ।
पुण्यनाशो निन्दया स्याद् धर्मनाशोऽपि निन्दया ॥ ८ ॥
यशोहानिर्निन्दया चाऽनृतं सर्वं हि निन्दया ।
मृषा कोपो निन्दया स्यादनर्थो निन्दया भवेत् ॥ ९ ॥
अपराधो निन्दया स्याद् देवधर्मादिखण्डनम् ।
निन्दया शास्त्रनास्तिक्यं व्रतोत्सवादिखण्डनम् ॥१०॥
एवमादीनि पापानि प्रजायन्ते हि निन्दया ।
निन्दास्वभाविनी नारी निन्दति स्वपतिं ह्यपि ॥११॥
मातरं पितरं श्वश्रूं श्वशुरं निन्दति ह्यपि ।
योगिनं च महात्मानं गुरुं पूज्यं परेश्वरम् ॥१२॥
लक्ष्मीं राधां माणिकीं च ललितां चापि निन्दति ।
मुक्तान् मुक्तानिकाश्चापि मन्दिराणि हरेस्तथा ॥१३॥
देवालयान् दैविजनान् सत्पुरुषान् विनिन्दति ।
कथां मोक्षकरीं मोक्षं स्वगृहं च परगृहम् ॥१४॥
निन्दत्येषा चरित्राणि श्रीकृष्णस्यापि सर्वथा ।
पावनानि च कार्याणि तीर्थान्यपि च निन्दति ॥१५॥
यशयागादिकं चेष्टापूर्ते चापि विनिन्दति ।
निन्दकः सर्वथा द्वेष्यकारणकः प्रजायते ॥१६॥
तस्मान्निन्दा महापापं कुष्ठनिरयसद्मम् ।
अधोनिरयदा निन्दा महारौरवदायिनी ॥१७॥
वंशनाशकरी निन्दा बद्रिकेऽर्थविनाशिनी ।
एवंपापाभिसंव्याप्ता द्विर्वदन्ती तु शूद्रिका ॥१८॥
शुश्राव लोकमुखतो माहात्म्यं पापनाशकम् ।
संहितायाः कथाया वै कृष्णनारायणस्य च ॥१९॥
द्विर्वदन्ती पतिं प्राह नाम्ना द्विर्गर्जनं तदा ।
शर्करानगरे कृष्णनारायणस्य गौरवम् ॥२०॥
श्रूयते च चमत्कारः प्रत्यक्षदर्शनं तथा ।
कथायाः श्रवणं चापि सर्वपापविनाशनम् ॥२१॥
गच्छन्ति तीर्थयात्रार्थं मानवास्तत्र संघशः ।
न मन्येऽहं तादृशं वै माहात्म्यं तीर्थभूमिजम् ॥२२॥
तीर्थे व्रतं कथा यात्रा दानं सर्वं मृषा सदा ।
किं तीर्थेन कथया वा वृथा यान्ति जनाः खलाः ॥२३॥
गतानुगतिको लोको लुण्टको मिषमात्रकृत् ।
वृथा गायन्ति माहात्म्यं लोकाः कृष्णस्य तत्र वै ॥२४॥
स्वामिन् किं तद्भवेत् सत्यं मयाऽनृतं तु मन्यते ।
कपटं सर्वमेवैतज्जनानां तत् प्रतारणम् ॥२५॥
इत्युक्तः स पतिर्नाम्ना द्विर्गर्जनो जगाद ताम् ।
मैवं मैवमवोचस्त्वत् सत्यमेवाऽनृतं नहि ॥२६॥
सत्यो नारायणः कृष्णः सत्या कथाऽघहारिणी ।
सत्यः सर्वश्चमत्कारो माहात्म्यं च व्रतं हरेः ॥२७॥
तीर्थे व्रतं कथा यात्रा दानं सर्वमृतं प्रिये ।
तीर्थेन कथयाऽघानां नाशनं जायते प्रिये ॥२८॥

न लोको लुण्टकः पन्थि न गतानुगतोऽपि च ।
यत्र श्रीभगवद्वार्तायज्ञो भवति सर्वथा ॥२९॥
वार्षिकः स महायज्ञस्तत्रोद्धरन्ति पापिनः ।
निन्दिका नास्तिका त्वं तु पापा पापमयी सदा ॥३०॥
पापमेवं कल्पयसि निन्दनं प्रकरोषि च ।
किं त्वया निन्दया भार्ये प्राप्यते दुष्टवादिनि ॥३१॥
मैवं पुनरवोचो मां न श्रोष्यामि हि निन्दनम् ।
निन्दाफलं महाघोरं भुज्यते त्वनपत्यता ॥३२॥
पुनर्निन्दाफलेन त्वं प्रयास्यसि यमालयम् ।
इत्युक्ता सा द्विर्वदन्ती प्राहाऽनृतो यमालयः ॥३३॥
न यमा न यमावासो बालानां भयमेव तत् ।
असत्या वै यमाः सर्वे यमाख्योऽनृतालयः ॥३४॥
एवमाह तदा तां च पतिः प्राह हितावहम् ।
दुष्टे ! वीक्ष्य चमत्कारं सत्यं सर्वमवाप्स्यसि ॥३५॥
पापफलं भवत्येव कृष्णनिन्दोत्थमुल्बणम् ।
तदा ज्ञास्यसि सत्यं तद् यमालयं यमानपि ॥३६॥
विरराम पतिस्तूक्त्वा सापि नास्तिक्यभावतः ।
निन्दत्येव हरिं धर्मं कथां साधून् यमादिकान् ॥३७॥
तावदेवाम्बरात्तत्र यमदूतो विनिर्ययौ ।
श्रुत्वा वाक्यं द्विर्वदन्त्याः सर्वेषां दर्शनं गतः ॥३८॥
अदृश्यत करालोऽति पर्वतप्रायदेहवान् ।
दंष्ट्राकरालः कृष्णश्च कज्जलाभो भयावहः ॥३९॥
ऊर्ध्वरोमा बहिर्दन्तो रक्तस्फारितनेत्रकः ।
महामुद्गरहेतिश्च ललज्जिह्वो विवक्त्रकः ॥४०॥
वज्रकाठिन्यपुष्टश्च महाकपर्दिमालिकः ।
शंकुकर्णो द्विशृंगश्च दीर्घपाशाढ्यहस्तकः ॥४१॥
लोष्ठशृंखलास्कन्धश्च बद्धाऽयोमेखलाकटिः ।
लोहदण्डं सशूलं च करे दधन् सरोषकः ॥४२॥
उद्यम्य मुद्गरं वेगात् क्रुद्धस्ताडयितुं च ताम् ।
अभ्यायौ द्विर्वदन्तीं गर्जयन् सर्वतो दिशः ॥४३॥
तावत् सा तं विलोक्यैवाऽभवत् त्रस्ता सवेपथुः ।
शैथिल्यदेहबन्धाश्च त्यक्तविण्मूत्रमूर्छिता ॥४४॥
आक्रोशं दुःश्रवं कृत्वा पपात तत्र भूतले ।
रक्षां रक्षां करोत्वेवं वदमाना पपात सा ॥४५॥
प्रसारिताऽङ्घ्रिहस्ता चोत्ताना व्यात्ताननाऽभवत् ।
स्वेदक्लिन्नाऽभवत् तावद् यमदूतेन वै क्रुधा ॥४६॥
ताडिता मुद्गरेणैव शिक्षार्थे द्विर्वदन्तिका ।
महाकष्टं च लेभे सा द्रुतं भग्नाऽस्थिकाऽभवत् ॥४७॥
चूर्णदेहा महामारमापन्ना मरणोन्मुखी ।
सञ्जाता सा तदा दूतः पस्पर्श तां करेण वै ॥४८॥
सम्पन्नदेहा सञ्जाता यथापूर्वशरीरिणी ।
पुनः सा गदया वज्रि ताडिता शिक्षणाय वै ॥४९॥
भग्नवंशा भग्नदेहा प्रभग्नमस्तकाऽभवत् ।
विह्वला चूर्णितदेहा स्रवद्रक्ताऽभितोऽभवत् ॥५०॥
तथापि सा स्थिरप्राणा महाकष्टमवाप ह ।
पुनः करेण दूतस्तं पस्पर्श सा समन्ततः ॥५१॥
यथापूर्वशरीरा साऽभवत् तावद् यमानुगः ।
लोहदण्डेन तां पृष्ठे मारयामास वै बलात् ॥५२॥
प्रफुल्लपृष्ठभागा सा महामारप्रपीडिता ।
आक्रन्दनं महच्चक्रे मुक्तकण्ठाऽतिताडिता ॥५३॥
पाशेनाऽऽबध्य तां दूतस्तस्थौ नम्रां विधाय वै ।
प्रकाशं व्यक्तरूपोऽभूद् गोचरः सर्वदेहिनाम् ॥५४॥
आक्रन्दनं महच्छ्रुत्वा पतिः पार्श्वनिवासिनः ।
नरा नार्यः प्रपश्यन्तो महात्रासाऽतिविह्वलाः ॥५५॥
दूरे एव स्थितास्तत्ता नाऽऽययुः सन्निधौ भयात् ।
दूतदर्शनमात्रेण निर्बला विविशुर्गृहम् ॥५६॥
दूतस्तु तां महापापां सर्वेषां शृण्वतां तदा ।
गर्जयन् दिग्विभागांश्च जगाद मर्मभेदकम् ॥५७॥
रण्डे दुष्टे पापकर्त्रि निन्दिके नास्तिकि खले ।
कथं निन्दसि धर्मं त्वं व्रतं पुण्यं हरिं कथाम् ॥५८॥
कस्मान्निन्दसि साधूँस्त्वं वंशविनाशकारिणि ।
जिह्वां ते कर्तयिष्यामि कर्णौ च नासिकां तथा ॥५९॥
भेदयिष्यामि वक्षोजौ नाशयिष्यामि मस्तकम् ।
मूर्धजान् कर्तयिष्यामि पाटयिष्येऽथ वर्ष्म ते ॥६०॥
त्वचं चोत्कर्तयिष्यामि पातयिष्यामि दन्तकान् ।
उदरं त्रोटयिष्यामि वह्निं दास्यामि गुह्यके ॥६१॥
लौहेन शंकुना देहं भेदयिष्यामि पापिनि ।
कथं त्वं निन्दसि सर्वान् मृषावादान् प्रकल्पसे ॥६२॥
यमदूतान् यमं नैव गणयस्यतिनास्तिके ।
जीवतो मारयिष्यामि पुनर्नैवं कृथा यथा ॥६३॥
वदन्नेवं ममारैनां पाशबद्धां बधंमताम् ।
स्पर्शेन सज्वरां चापि कुर्वन्मुहुर्गतज्वराम् ॥६४॥
हाहाकारो महान् जातो नगरे तत्र सर्वशः ।
रक्षको नहि तत्राऽऽसीद् बलवान् हरिमन्तरा ॥६५॥
सा तदाऽतिमहादुःखा ताड्यमाना निराश्रया ।
अनाथा नास्तिका स्वार्थरक्षार्थे त्वास्तिकाऽभवत् ॥६६॥

तस्मार श्रीकृष्णनारायणं त्रातारमच्युतम् ।
हृदये प्राञ्जलिर्भूत्वा दध्यौ श्रीपार्श्वगंप्रभुम् ॥६७॥
तावद् दूतो निबद्धेतीन् धृत्वा मारान्न्यवर्तत ।
तदा ज्ञातवती दुष्टा कृष्णस्मृतेर्बलं महत् ॥६८॥
अथ कष्टाऽतिमग्ना सा व्याजहार हरे हरे ।
कृष्णनारायणस्वामिन्नारायणनरायण ॥६९॥
तावद् दूतः स्थलं त्यक्त्वा दुद्राव दूरतो ययौ ।
अदृश्यतां गतो व्योम्नि दुर्वदन्ती सुखं गता ॥७०॥
स्वास्थ्यमासाद्य चोत्थाय धृत्वा वस्त्राणि वर्त्मनि ।
गलितगर्वा लोकेन धिक्कृता च तिरस्कृता ॥७१॥
विवेश लज्जिता तूर्णं स्वं गृहं चाप्यधोमुखी ।
विवेद कृष्णमाहात्म्यं माहात्म्यं कृष्णसंस्मृतेः ॥७२॥
कृष्णनाम्नां च माहात्म्यं विवेद याम्यमारतः ।
अथ सा स्वपतिं प्राह श्रेयसे पापनुत्तये ॥७३॥
संहितायाः कथास्थानं गन्तव्यं तीर्थरूपि यत् ।
यत्र पारायणं मोक्षप्रदं पापघ्नमुत्तमम् ॥७४॥
अनादिश्रीकृष्णनारायणस्यास्ति कथामृतम् ।
तत्पानार्थं च साधूनां सेवार्थं गम्यमेव तत् ॥७५॥
याम्यदुःखविनाशार्थं गन्तव्यं तत्र सर्वथा ।
इत्युक्तः स्वपतिस्त्वाह तथास्त्वेवं कुरु प्रिये ॥७६॥
मयापि श्रेयसे तत्राऽऽगन्तव्यं मोक्षदे स्थले ।
इत्येवं बद्रिके कृत्वा निश्चयं तौ तु दम्पती ॥७७॥
सज्जावभवतां तूर्णं पद्भ्यां मार्गेण निर्गतौ ।
प्राप्य वै शर्कराभूमिं स्नात्वा सिन्धुजले ततः ॥७८॥
संहिताया मण्डपौ तौ गत्वा वृत्तान्तमात्मनोः ।
निवेदयामासतुर्वै लोमशाय महात्मने ॥७९॥
लोमशस्तत्समये च ददौ कृष्णपदामृतम् ।
वारि प्रसादं मिष्टं च व्रतं ददौ ततः परम् ॥८०॥
एकभुक्तं नित्यकथाश्रवणं साधुसेवनम् ।
प्रसादभोजनं चापि सभास्थानादिमार्जनम् ॥८१॥
वैष्णवानां देहसंवाहनादिकं च प्रत्यहम् ।
सेवाव्रतं ददौ ताभ्यां तथा मन्त्रं सुखप्रदम् ॥८२॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'कृष्णनारायणस्वामिन्नारायणनरायण ॥८३॥
अनादिश्रीकृष्णनारायणभक्तपरायण' ।
एवं धुन्यं सदा कर्तुं शिक्षयामास नाम च ॥८४॥
तौ ततः पावनौ नित्यं धुन्यं विदधतः शुभम् ।
नष्टपापौ गतक्लेशौ कथाश्रवणपावितौ ॥८५॥
साधुसेवादिभिर्नष्टवासनौ संबभूवतुः ।
मासमात्रं श्रुतवन्तौ पारायणकथामृतम् ॥८६॥
दिवारात्रं सतां सेवां चक्रतुश्च यथोचिताम् ।
सर्वस्वार्पणभावौ तौ साधुप्रसादभोजिनौ ॥८७॥
भक्तिमन्तौ स्नेहवन्तौ बभूवतुर्नरायणे ।
कृतध्यानौ निमग्नौ च हरेर्मूर्तौ बभूवतुः ॥८८॥
निन्दापापं समस्तं तत् सत्सेवया लयं गतम् ।
महिमा साधुषु कृष्णनारायणे व्यवर्धत ॥८९॥
अथाऽऽयुःपूर्णतां प्राप्तौ गतसंसारबन्धनौ ।
द्विर्गर्जनो द्विर्वदन्ती शुभौ पारायणस्थले ॥९०॥
माघे वसन्तपञ्चम्यां वसन्तोत्सवनोत्तरम् ।
प्राप्तमूर्छौ द्रुतं त्यक्त्वा देहौ दिव्यौ बभूवतुः ॥९१॥
देहाभ्यां षोडशवर्षौ दिव्याभ्यां तैजसान्वितौ ।
पश्यतां सर्वलोकानां गोचरौ सुन्दरौ शुभौ ॥९२॥
दिव्यभूषणमालाढ्यौ दिव्यगन्धानुगन्धितौ ।
दिव्यवेषाभिसम्पन्नौ मुक्तौ तौ सम्बभूवतुः ॥९३॥
तावत्तत्र समायातं विमानं भास्वरं शुभम् ।
सौवर्णं तेजसा व्याप्तं व्योममार्गादवातरत् ॥९४॥
यत्र नारायणस्वामी कृष्णनारायणो हरिः ।
श्रिया साकं विमाने श्रीमाणिक्यया युतोऽभवत् ॥९५॥
दिव्यमालाम्बरभूषादिव्यशृंगारशोभनः ।
दिव्याभिश्च समस्ताभिः शक्तिभिः परिसेवितः ॥९६॥
हसन् प्रसादं जनयन् पश्यतां सर्वदेहिनाम् ।
तौ द्वौ मुक्तौ विमाने स्वे नीत्वा धामाऽक्षरं ययौ ॥९७॥
जयशब्दा जयनादास्तदाऽभवन् समन्ततः ।
एवं श्रीबद्रिके कृष्णनारायणः प्रियेश्वरः ॥९८॥
कथाश्रवणपुण्येन सतां सेवाफलेन च ।
निनाय तौ महाभक्तौ कृपया स्वाऽक्षरं पदम् ॥९९॥
शरणागतभक्तानां गणयत्येव नैव सः ।
दूषणान्यपराधान् श्रीकृष्णनारायणप्रभुः ॥१००॥
दयालुः स दयां कृत्वा शरणागतरक्षकः ।
आपद्दुःखं वारयति नयत्यक्षरमुत्तमम् ॥१०१॥
पठनाच्छ्रवणादस्य स्मरणाच्चिन्तनादपि ।
भुक्तिः स्वर्गो बद्रि मुक्तिः कृष्णस्य कृपया भवेत् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने सर्वनिन्दापरायणयोः द्विर्वदन्तीद्विर्गर्जनयोर्यमदूतदर्शनोत्तरं संहिताश्रवणार्थंगतयोः कृपालुर्भगवान् परममुक्तिं कृतवानित्यादिनिरूपणनामा पञ्चाश-त्तमोऽध्यायः ॥ ५० ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां गुरुघ्नमोक्षदाम् ।
आसीत् खनिपुरे विप्रो नाम्ना सुरप्रसादकः ॥ १ ॥
मातापितरौ वार्धक्ये सुतमेकमवापतुः ।
बुद्ध्या युक्तं च वात्सल्यपात्रं स्नेहास्पदं परम् ॥ २ ॥
लालयामासतुः सम्यक् पालयामासतुर्बहु ।
वर्धयामासतुः खानपानादिभिः समाहितौ ॥ ३ ॥
मोदयामासतुः पुत्रं वस्त्रभूषादिभिस्तथा ।
पाठयामासतुश्चापि विप्रविद्यां च वैदिकीम् ॥ ४ ॥
तथापि बद्रिके भाग्यं यादृशं रेखयोत्थितम् ।
तादृशं भुज्यते काले भोगार्थे समुपस्थितम् ॥ ५ ॥
यदि पूर्वकृतं पुण्यं पुत्रजन्मप्रदं भवेत् ।
तदा पुत्रो जायतेऽस्य ऋणाऽपाकरणाय सः ॥ ६ ॥
यदि पुण्यं न दीर्घं स्याज्जीवनार्थं तथा सुतः ।
उत्पद्य मरणं चैति दैवं तादृक् हि निर्मितम् ॥ ७ ॥
यदि पुण्यं दशवर्षायुष्यप्रदं भवेत्तदा ।
तावन्मात्रं गृहे स्थित्वा परलोकाय याति सः ॥ ८ ॥
यदि सेवाऽर्थकं पुण्यं पित्रोः पुत्रस्य चार्जितम् ।
भवेत्तदा सुतः सेवां पित्रोः करोति वै ध्रुवाम् ॥ ९ ॥
यदि पुण्यं न सेवार्थे पितृभ्यां पालितोऽपि सः ।
तदा पितरौ सन्त्यज्य परदेशं परगृहम् ॥१०॥
पराऽङ्कं वा परवशं परपुत्रत्वमेत्यपि ।
सेवते न सुतो नैजः पितरावप्यपुण्यतः ॥११॥
परपुत्रः सेवतेऽप्यपितरौ पुण्ययोगतः ।
कर्मबन्धो हि संसारो यत्रर्णं तत्र पद्यते ॥१२॥
अनृणं न पशुश्चापि समेति मानवः कुतः ।
बद्रिके यद् यददृष्टजन्यं तद् दूरमित्यपि ॥१३॥
साक्षात्परम्परया वा तदर्थमुपयाति तम् ।
कन्या गौर्गजहंसाद्या जायन्ते परभूमिषु ॥१४॥
प्रपद्यन्तेऽदृष्टवन्तं स्वामिनं परभूस्थितम् ।
अन्नं पत्रं फलं पुष्पं क्षारं सलिलमौषधम् ॥१५॥
प्रजायन्तेऽन्यत्र भाग्यवन्तोऽन्यत्राऽऽप्नुवन्ति तान् ।
तापः शैत्यं पयो मुद्राऽम्बरं भूषा च हीरकः ॥१६॥
खन्यन्तरोद्भवाश्चापि प्राप्नुवन्ति परं जनम् ।
एवं वै बद्रिके लोके कर्मसम्बन्धयोजितम् ॥१७॥
प्रवर्तते महाचक्रमगम्ययोगदायकम् ।
यदर्थे यतते लोकस्तल्लोकार्थे न तिष्ठति ॥१८॥
यदर्थे न यतते तत् प्रसह्याऽऽगत्य तिष्ठति ।
एवंविधेऽत्र लोके वै ज्ञानिनां रागशून्यता ॥१९॥
अपरिग्रहता चापि विशोकता विरक्तता ।
आत्मारामसुखिता च ब्रह्मानन्दपदस्थितिः ॥२०॥
जायन्ते निर्गुणत्वं च मायाशून्यत्वमित्यपि ।
मोक्षणं ते प्राप्नुवन्ति विवेकिनो हि भक्तितः ॥२१॥
अन्यथा तु सुयोगे स्यात् सुखं दुःखं वियोगके ।
कर्मबद्धं सुखं दुःखं योजनं च वियोजनम् ॥२२॥
कर्मशून्यस्य मोक्षः स्याद् दुर्भाग्यस्य न मोक्षणम् ।
सर्वेऽर्थाः सन्ति लोकेऽत्र दुर्भाग्या नाप्नुवन्ति हि ॥२३॥
वार्धक्ये पुत्रवत्तापि दौर्भाग्ये सुखदा न हि ।
तथा सुरप्रसादस्य पितरावतिवत्सलौ ॥२४॥
प्रेषयामासतुः पुत्रमध्ययनार्थमुत्सुकौ ।
प्रभावरपुरं विद्वद्विप्रगृहे हितावहौ ॥२५॥
बहुविद्यादिलाभार्थे ययौ सुरप्रसादकः ।
अध्येतुमधिकां विद्यामाशा हि बलवत्तरा ॥२६॥
सोऽपि विद्येच्छया त्यक्त्वा मातरं देवनन्दिनीम् ।
पितरं देवशर्माणं ययौ गुरोर्गृहं द्रुतम् ॥२७॥
नत्वा गुरुं भर्गचात्वालकं वृत्तान्तमाह तम् ।
गुरुः प्रसन्नचित्तश्चाध्यापयामास तं मुदा ॥२८॥
उवास बहुवर्षाणि गुरोर्गृहे निरामयः ।
निश्चिन्तो नित्यपाठी च महोद्यमपरायणः ॥२९॥
दैवज्ञतां तत्त्ववित्त्वमात्मविद्यां समार्जयत् ।
विद्वान् कीर्तिपरिपूर्णो जातो विद्याप्रभाववान् ॥३०॥
बद्रिके स तु विद्याप्तिपुण्यवानपि सर्वथा ।
पित्रोः सेवापुण्यहीनः तयोः सेवां न लब्धवान् ॥३१॥
अधित्याऽपि गृहं नैव ययौ विद्याभिमानवान् ।
कदर्यस्य गृहं यद्वन्नैजं गृहं न रोचते ॥३२॥
अतो नैव ययौ पित्रोः सेवालाभं न चाप्तवान् ।
स लाभस्तु गतश्चाऽस्य तावद्वृद्धौ तु तद्गृहे ॥३३॥
वार्धक्येनाऽऽमयव्याप्तावभूतां ज्वरपीडितौ ।
सस्मरतुः सुतं त्वेकं विद्वांसं दूरवासिनम् ॥३४॥
अधित्वा नाऽऽगतं प्रेष्ठं तत्यजतुश्च जीवनम् ।
पुत्रपुत्रेतिपुत्रेति वदन्तौ मरणं गतौ ॥३५॥
बद्रिके बहुपुण्येन पित्रोः सेवा तु लभ्यते ।
मरणस्य क्षणे पुत्राऽऽस्यप्रदर्शनमित्यपि ॥३६॥
बहुपुण्येन भवति न भवेत् कर्महीनयोः ।
एवं पापं तु पुत्रस्य जातं तदा तु बद्रिके ॥३७॥

पित्रसेवाकृतं सर्वं मृत्युर्निःश्वासकारितम् ।
विद्याधनं न वै श्रेष्ठं पितृसेवादिसन्निधौ ॥३८॥
पितृसेवा चातिपुण्यतमा श्रेष्ठा च पुण्यदा ।
मोक्षदा स्वर्गदा सर्वपापध्वंसविधायिनी ॥३९॥
सर्वापन्नाशिनी बद्रि पितृसेवोत्तमोत्तमा ।
सा न लब्धा सुतैश्चेत् सा परा हानिः प्रजन्मिनाम् ॥४०॥
सर्वं विनाशितं तेन पितृनिःश्वासभस्मितम् ।
अन्यन्याशीःसहस्राणि दहन्ति पितृशापतः ॥४१॥
अन्यशापसहस्राणि नश्यन्ति तत्प्रसादतः ।
बद्रिके पुण्यहीनस्य सुरप्रसादकस्य ह ॥४२॥
पित्रसेवोद्भवं पापं हानिदं समजायत ।
विद्याध्यापयितुर्द्वेषं तत आरभत द्विजः ॥४३॥
भर्गचात्वालको विद्यागुरुः ख्यातोऽभवद्यति ।
सहते न स तां ख्यातिं दुष्टभावोऽतिमानवान् ॥४४॥
गुरुं स निन्दति नित्यं विद्यायां गौरवं गतः ।
गुरोः कीर्तिं खण्डयति गतोऽन्यत्र सभादिषु ॥४५॥
एवं पापेन लिप्तः स विशेषेणाऽप्यजायत ।
दुष्टा बुद्धिरुत्थिताऽस्य विद्वानहं न चाऽपरः ॥४६॥
गुरुर्मया समो नास्ति तदाऽन्यस्य तु का कथा ।
एवं स्वं गौरवं वक्ति चिन्तयत्येव तादृशम् ॥४७॥
मनसा वचसा निन्दां द्वेषं करोति सद्गुरोः ।
कर्मणाऽपि क्रतौ श्रेष्ठ्यं नैजं विज्ञापयत्यपि ॥४८॥
कर्मकाण्डे च विज्ञाने गर्वं करोति चोर्ध्वगम् ।
बद्रिके नाशमायाति पुण्यं सर्वं गुरुद्विषः ॥४९॥
विद्या भाग्यं सम्पदश्च यशो नाशं प्रयान्ति च ।
पापं भ्रमो विचित्तत्वमुन्मत्तता भवन्ति च ॥५०॥
औन्मत्येन तु दोषेण सहितोऽपि गुरोर्गृहे ।
वसत्येव स तं द्वेष्टि गुरुं चेद् दृष्टिगोचरम् ॥५१॥
पुत्रवत् पालितं शिष्यं दयालुर्गुरुदेवता ।
न निष्कासयति स्थानाद् वात्सल्यं हि निरोधकृत् ॥५२॥
उन्मत्तोऽपि महाविद्वान्मध्यवस्थो विवेकवान् ।
पापाभिभूतहृदयः पापनष्टविचारवान् ॥५३॥
एकदा स्वगुरुं सुप्तं गत्वा हस्तकुठारकः ।
चिच्छेद मस्तकं रात्रौ ननर्त चित्तवर्जितः ॥५४॥
नृत्यघोषं समाकर्ण्य तत्र भार्या गुरोस्तदा ।
तथा शिष्या अपरे च समाययुस्तदन्तिके ॥५५॥
तावत् कुठारहस्तं तं वीक्ष्य भासं प्रपेदिरे ।
वीक्ष्य हतं गुरुं सर्वे रुरुदुर्मुक्तकण्ठिनः ॥५६॥

हाहाकारो महान् जातश्चाश्रमेषु द्विजातिषु ।
विचित्तस्याऽतिदुष्टत्वं ज्ञात्वा शापान्ददुस्तदा ॥५७॥
अहो हत्या कृताऽनेन दुष्टेन गृहवासिना ।
महाचाण्डालतुल्येन सोऽपि हतोऽस्तु तत्तथा ॥५८॥
गुरोर्हत्या महाहत्या शतस्त्रीहत्यया समा ।
स्त्रीहत्या तु शतभ्रूणहत्यातुल्या निगद्यते ॥५९॥
भ्रूणहत्या शतमत्स्यहत्यासमा निगद्यते ।
मत्स्यहत्या शतवृक्षहत्यासमा भवत्यपि ॥६०॥
वृक्षहत्या शतस्तम्बनाशसमा प्रकीर्त्यते ।
पिता बीजप्रदः श्रेष्ठो माता गर्भस्य रक्षिणी ॥६१॥
गुरुर्ज्ञानप्रदानेन मुक्तिदो हि तयोः परः ।
संसारार्णवमग्नानामुद्धारकृद्गुरुर्हरिः ॥६२॥
मोक्षं करोति जीवानां पापानि क्षालयत्यपि ।
कृष्णवद्रक्षणं मायापाशात् करोति सद्गुरुः ॥६३॥
स वै श्रेष्ठतमश्चाऽऽस्तेऽसंख्यप्राणिप्रमोक्षकृत् ।
नारायणस्य विज्ञानं परिचयं ददात्यपि ॥६४॥
नयत्यग्रे गतिं गच्छन्नाकर्षयन् प्रपन्नकम् ।
साक्षी यो धर्मकर्मादौ याम्यकष्टनिवारकः ॥६५॥
ब्रह्मानन्दप्रदाता च गुरुः श्रेष्ठतमोऽधिकः ।
गुरोर्मुखे चतुर्वेदा जिह्वायां शारदा सती ॥६६॥
गायत्री चौष्ठयोस्तस्य सावित्री कण्ठवर्तिनी ।
मस्तके ब्रह्मनिर्वाणं भाले रुद्रस्थली गुरोः ॥६७॥
भ्रूमध्ये तु भवश्चास्ते ब्रह्मा भ्रूकुटिमध्यगः ।
विष्णुर्गुरोस्तु हृदये सूर्यचन्द्रौ तु नेत्रयोः ॥६८॥
कर्णयोर्वर्तते शब्दब्रह्म शाश्वतमक्षरम् ।
हस्तयोरिन्द्रदेवाद्या नासायामश्विनीसुतः ॥६९॥
गोलोकश्चापि वैकुण्ठस्तनयोर्वर्तते गुरोः ।
उदये त्वमृतं धाम नाभावव्याकृतं पदम् ॥७०॥
जघने सत्यलोकं च गुह्ये ब्रह्मव्रतं गुरोः ।
कट्यां हिरण्यगर्भोऽस्ति पृष्ठे मेरुः सुरालयः ॥७१॥
नितम्बयोर्महापृथ्वी प्रकृतिर्गह्वरेऽस्ति च ।
सक्थ्नोः श्वेतद्वीपदुग्धोदधी स्तः श्रीगुरोः सदा ॥७२॥
जान्वोः सुतलवासाश्च जंघयोर्दिव्यशक्तयः ।
पादयोः श्रीगुरोः सर्वतीर्थान्यभिवसन्ति वै ॥७३॥
पितरश्चाऽस्य केशेषु सिद्धाश्चाऽस्य त्वचि स्थिताः ।
प्राणे पुण्यानि सर्वाणि मोक्षो गुरोः करे स्थितः ॥७४॥
गुरोः प्रसादे स्वर्गाणि संकल्पे सम्पदः स्थिताः ।
गुरोः क्रियायां वै चिन्तामणयः कामधेनवः ॥७५॥

सेवायां कल्पवृक्षाश्च वचने कल्पवल्लयः ।
इच्छायामक्षयपात्रं गुरोः स्नेहे हरिः स्वयम् ॥७६॥
गुरोः शरणे मुक्तिश्च गुर्वासने श्रियः पुरम् ।
गुरोर्मूर्तिः परब्रह्म वासुदेवो गुरौ स्थितः ॥७७॥
श्रीकृष्णोऽस्ति गुरुतादात्म्यतां प्राप्तः परेश्वरः ।
सर्वकामप्रपूरः श्रीसद्गुरुर्बद्रिके भुवि ॥७८॥
विना गुरुं न निस्तारो भवार्णवरणस्य वै ।
अगुरूणां देहिनां तु गतिः कुत्रापि नास्ति वै ॥७९॥
तस्माद् गुरुं श्रयेद् भक्त्या सर्वस्वार्पणसेवया ।
गुरुघ्नः सर्वविद्याघ्नः सर्वविद्याघ्नः सर्वदेवादिनाशकः ॥८०॥
स्वर्गमोक्षर्द्धिसम्पद्घ्नश्चात्मघ्नो ब्रह्महा मतः ।
सर्वपुमर्थहाः प्रोक्तः सर्वशक्तिविघातकः ॥८१॥
गतिर्नास्ति स्थितिर्नास्ति स्थानं नास्ति गुरोर्हनः ।
यशो नास्ति सुखं नास्ति सर्वथा धिग् गुरोर्हनः ॥८२॥
सर्वपापानि लोकानां नश्यन्ति गुरुसन्निधौ ।
गुरोर्द्वेषात्मकं पापं कृष्णाग्रेऽपि न नश्यति ॥८३॥
श्रीकृष्णो गुर्वधीनोऽस्ति राधालक्ष्म्यादिका अपि ।
गुर्वधीना देवताश्च सर्वातिवाहिकीप्रभाः ॥८४॥
गुरुस्त्वनर्गलं दिव्यं कपाटं परमोक्षिणाम् ।
गुरुर्विद्युत्प्रकाशोऽस्ति महादीपोऽन्तरप्रभः ॥८५॥
तद्घाते सर्वघातानां जायन्तेऽघानि घातिनाम् ।
तत्सेवने सर्वसेवाफलान्यभिमिलन्ति च ॥८६॥
तत्प्रसादे सर्वप्रसन्नता भवन्ति सेविनः ।
गुरोर्लाभे सर्वलाभा गुरोर्हाने लयो महान् ॥८७॥
गुरोर्मूर्तिः सदा दिव्या त्वाशिखानखमद्भुता ।
नारायणः पृथङ् नास्ति गुरोर्मूर्तेः कदाचन ॥८८॥
पूजया सद्गुरोः कृष्णनारायणः प्रपूज्यते ।
भोजनेन गुरोः कृष्णनारायणो भुनक्ति च ॥८९॥
जलपानेन च गुरोः कृष्णस्तृप्तो पिबत्यपः ।
गुरोर्देहस्य सेवाभिः सेव्यते परमेश्वरः ॥९०॥
गुरोर्नाशेन यावत्यः सेवा नष्टा भवन्ति वै ।
एवं तेन द्विजेनापि गुरोर्हत्या कृता यतः ॥९१॥
सर्वं तस्याऽभवद् बद्रि विनष्टं शुभसंज्ञितम् ।
विच्चित्तो जडवन्मूर्खं उन्मत्तो बुद्धिवर्जितः ॥९२॥
भ्रमन् मार्गे वनेऽरण्ये निर्ययौ स गुरोर्गृहात् ।
शर्करानगरं प्राप्तो दैवात्पूर्वानुकर्मतः ॥९३॥
कथास्थानं ययौ विद्वाँस्तस्थौ क्षणं मुदं ययौ ।
संहितायाः कथां श्रुत्वा पीत्वाऽमृतं हरेस्तदा ॥९४॥
प्रसादान्नं महापंक्तौ बुभुजे च कथामखे ।
सतां महर्षिवर्याणां दर्शनं प्राप्तवान् मुदा ॥९५॥
गुरुहत्याकृतं पापं शनैः शनैर्न्यवर्तत ।
मनसः स्वस्थता जाता देहभानं व्यवर्तत ॥९६॥
उन्मादोऽस्य लयं प्राप्तो विचित्तता सुचित्तता ।
जाता ततः सशोकेन लोमशं शरणं ययौ ॥९७॥
न्यवेदयत् समस्तं तत् पापं दुःखं विशोधनम् ।
लोमशो ब्रह्मकूर्चाख्यं व्रतं तस्मै ददौ तदा ॥९८॥
मासं चक्रे पलाशादिपत्राणां वह्निना कृतम् ।
गव्यानां क्वथितं वारि पपौ शुद्धिं जगाम सः ॥९९॥
कथायाः श्रवणेनाऽसौ निष्पापः साधुसेवया ।
विप्रो जातस्ततो मन्त्रमस्मै श्रीलोमशो ददौ ॥१००॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
कृष्णनारायणस्वामिन् श्रीहरेवल्लभ प्रभो ॥१०१॥
अनादि श्रीकृष्णनारायण पद्मावतीप्रभो ।
एवं स भजनं चक्रे ध्याननिष्ठो हरौ स्थितः ॥१०२॥
तीव्रसंवेगमापन्नः स्मृत्वा हत्यां गुरोः स्वयम् ।
पितृत्यागं तथा स्मृत्वा महाशोकमगात्तथा ॥१०३॥
रात्रिन्दिवं भजनं स चकार पारमेश्वरम् ।
विरागभावमापन्नः प्रातिलोम्यमवाप सः ॥१०४॥
सर्वा वृत्तीः परावृत्य प्रत्याहारं परं गतः ।
धारयामास सततं प्रभुं कृष्णं महाप्रभुम् ॥१०५॥
दध्यौ कृष्णं रमाकान्तं गोपालबालकं हृदि ।
समाधौ श्रीपतिं बद्रि साक्षात् प्रापाऽतिवेगवान् ॥१०६॥
माघशुक्लैकादश्यां स प्रातः स्नात्वा कथास्थलम् ।
भजन्नाम रटन् प्राप तस्थौ व्यासं व्यलोकयन् ॥१०७॥
पुपूज मन्त्रसहितो व्यासं च संहितां तथा ।
शुश्राव च समासंस्थः कथान्ते कीर्तनोत्तरम् ॥१०८॥
शीघ्रं समाधिमापन्नः प्राणाः संकुचिता द्रुतम् ।
पपात देहो भूमौ वै श्रोतॄणां पश्यतां सताम् ॥१०९॥
विमानमम्बराद् दिव्यमवातरत् समुज्ज्वलम् ।
कृष्णनारायणस्तस्माद् बहिरागत्य तं द्विजम् ॥११०॥
दिव्यरूपं सुमुक्तं च विधाय दिव्यविग्रहम् ।
नीत्वा विमानके तूर्णं हसन् धामाऽक्षरं ययौ ॥१११॥
आश्चर्यं परमं जातं कथाश्रवणकारिणाम् ।
अहो गुरुघ्नविप्रस्य शरण्यो भगवान् प्रभुः ॥११२॥
शरणागतरक्षाकृत् पापं विधूय सर्वथा ।
विप्रं भक्तं निजं धाम निन्ये देहिषु वत्सलः ॥११३॥

एतादृशी कृपा तस्य घटते परमात्मनः ।
जीवास्तु सर्वथा पापाः सन्ति वै पापकारिणः ॥११४॥
कृपालुर्भगवानस्ति कृपालवश्च साधवः ।
विना विनिमयं वा च करमूणं विना खलान् ॥११५॥
दुष्टान् पापान् पावयित्वा प्रेषयन्त्यक्षरं पदम् ।
एवं वै बद्रिके कृष्णो मोक्षं ददाति सेविने ॥११६॥
पठनाच्छ्रवणादस्य स्मरणाच्चिन्तनादपि ।
भुक्तिर्मुक्तिः शुभं स्वर्गं भवेदेव न संशयः ॥११७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गुरुप्रसादनामकविप्रस्य मातापितृसेवाविहीनस्य विद्याप्रदगुरुहत्याविधायिनोऽपि श्रीलक्ष्मीनारायणसंहिताकथाश्रवणेन सतां सेवया पापनाशो मुक्तिश्चेत्यादिनिरूपणनामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥

श्रीनरनारायण उवाच—
शृणु बद्रीप्रिये देवि देवद्रोहिकथां तथा ।
विक्रमाख्ये पुरे त्वासीत् क्षत्रियो नागविक्रमः ॥ १ ॥
पूर्वकर्मानुरोधेन बाल्ये चास्तिक उत्तमः ।
देवपूजां साधुसेवां करोति भावतः सदा ॥ २ ॥
द्रव्येच्छया भूपतित्वेच्छया राज्येच्छया तथा ।
यत्र यत्र भवन्त्येव सन्तो वा दैवपूरुषाः ॥ ३ ॥
तत्र तत्र सकामोऽयं प्रयात्याशीर्ग्रहेच्छया ।
यौवने सर्वथा क्षात्रधर्ममाश्रित्य योधने ॥ ४ ॥
तत्परो वर्तते नित्यं राज्येच्छया परैः सह ।
यत्र यत्र गतश्चायं योधनार्थे जयार्थकः ॥ ५ ॥
तत्र तत्राऽभवत्तस्य पराभवो जयो न तु ।
ततः स देवतानां तु मानताः कृतवान् मुहुः ॥ ६ ॥
तत्रापि निष्फलत्वं स प्राप्तवान् विजयं न तु ।
एवं कृते मुहुः पश्चान्नास्तिक्यं त्वाप्तवान् स तु ॥ ७ ॥
पूजाया निन्दनं देवमूर्तेश्च निन्दनं तथा ।
खण्डनं धर्मशास्त्राणां धर्माणां खण्डनं तथा ॥ ८ ॥
साधूनां खण्डनं चापि व्रतानां खण्डनं तथा ।
दानानां खण्डनं सर्वसत्कर्मणां तु खण्डनम् ॥ ९ ॥
करोति सर्वथा वक्ति देवा मृषा हि मूर्तयः ।
सन्तो मृषा मानताश्च मृषा भवन्ति निष्फलाः ॥१०॥
पराक्रमं कृतं सत्यं दैवं दैवं तु निष्फलम् ।
पराक्रमं परं दैवं पुष्कलं दैवमेव न ॥११॥
तस्मात् पराक्रमं कार्यं तेन सर्वमवाप्यते ।
पराक्रमेण राजानो भवन्ति राज्यभोगिनः ॥१२॥
देवा मूर्तिमयाः सर्वे वञ्चनार्थं प्रकल्पिताः ।
न तत्र जायते चेच्छापूर्तिर्वा लाभ उत्तमः ॥१३॥
न ते वदन्ति ददति पूरयन्ति न वाञ्छितम् ।
तस्मान्मूर्तिर्मृषा बोध्या केवला काजनैः कृता ॥१४॥
जीविकार्थं कृता तत्र पाषाणे काऽर्थना भवेत् ।
फलं चेतनवृक्षाद्वै लभ्यते न तु भित्तितः ॥१५॥
गवादिभ्यः पयोलाभो न पाषाणगवादितः ।
मक्षिकागृहतः क्षौद्रं लभ्यते न तु शून्यतः ॥१६॥
चेतनाल्लभ्यते सौख्यं शवान्नैव तु लभ्यते ।
राज्ञेऽर्पितं फलत्येव बहुधा न शवाय तत् ॥१७॥
तस्माच्छवात्मकं काष्ठपाषाणाद्युत्थपुत्तलम् ।
देवता नास्ति सा साक्षाच्छिला प्रतारणार्थिका ॥१८॥
राजवेषधरो नाट्यकारो राजा न वै क्वचित् ।
देववेषधरा मूर्तिः शिला न देवता क्वचित् ॥१९॥
तादृशी या शिला मूर्तिः खण्डनीया हि सर्वशः ।
एवं नास्तिक्यमापन्नो निन्दत्येव तु देवताम् ॥२०॥
देवालयान् देवतायतनानि देवभूमिकाः ।
खण्डयत्येव सर्वत्र क्षत्रियो नागविक्रमः ॥२१॥
तथा विशेषतश्चापि देवद्रोहपरोऽभवत् ।
शंकरः सर्वदा कामी विष्णुर्हिंसापरायणः ॥२२॥
इन्द्रचन्द्रादयश्चापि कामवासनया हताः ।
कथं कल्याणदास्ते स्युः स्वयं दोषैः प्रपूरिताः ॥२३॥
साधवो भोजनासक्ता रसास्वादपरायणाः ।
विप्रा विवाहकर्माणो नारीमन्तो गृहाश्रमाः ॥२४॥
लोभाढ्यास्ते दोषवन्तः श्रेयसे स्युर्न सर्वथा ।
गुरवो मानिनः सर्वे पूज्यतालालसान्विताः ॥२५॥
एवं तृष्णामयी सृष्टिः श्रेयसे स्यात् कथं त्विह ।
ये तरन्ति तारयन्ति निमज्जन्ति न वै क्वचित् ॥२६॥
निमज्जन्त्येव ये ते न तारयन्ति कथंचन ।
तस्मात् सर्वं मृषा लोकेऽद्भुतं मूर्तिर्गुरुः सुरः ॥२७॥
पराक्रमं परं सत्यं यस्य तात्कालिकं फलम् ।
पराक्रमः सदा कार्यः श्रेयसे सर्वथा जनैः ॥२८॥
भाव्यं शूरेण वीरेण न षण्ढेन कदाचन ।
पराक्रमविहीनस्य दैवाशा षण्ढता मता ॥२९॥
न षण्ढाज्जायते गर्भो न दैवाल्लभ्यते फलम् ।
एवं श्रीबद्रिके नागपराक्रमो हि खण्डनम् ॥३०॥

देवद्रोहं करोत्येव तिष्ठन् गच्छन् जनव्रजे ।
अथैकदा विचार्येत्थं ययौ युद्धार्थमेव सः ॥३१॥
स्वसदृशान् क्षत्रियान् विंशतिं श्रेष्ठान् बलान्वितान् ।
संघे कृत्वा शस्त्रसज्जान् द्रव्यार्थं निर्ययौ बहिः ॥३२॥
स्वग्रामाद् योजनषट्के ग्रामं फलोदयं तु यत् ।
युद्धपुरमहाराज्यशासने वर्तते तु तत् ॥३३॥
तत्र योद्धुं गतः सर्वशूरैः सह सहेतिभिः ।
पर्णपत्रं लिखित्वैव प्राहिणोत् पत्रमुत्सुकः ॥३४॥
दूतेन शार्दूलविक्रमाख्यं ग्रामेश्वरं प्रति ।
ग्रामाध्यक्षो द्रुतं युद्धपुरेशस्य भटेश्वरम् ॥३५॥
न्यवेदयद् व्यवसायं नागविक्रमनामिनः ।
युद्धपुरमहाराजो ज्ञात्वा वृत्तान्तमुल्बणम् ॥३६॥
सैन्यं सम्प्रेषयामास गजैर्विमानकैस्तथा ।
धर्मयुद्धं तदा बद्रि तूर्णं तत्र व्यजायत ॥३७॥
नाराचैस्तोमरैः खड्गैर्भल्लैः शिलिमुखैः शरैः ।
गोल्कैः करवालैश्च भिन्दिपालैश्च मुद्गरैः ॥३८॥
दिव्यादिव्यायुधैश्चापि युद्धमर्धदिनं ह्यभूत् ।
युद्धराजमहाराजसैन्येनाऽभिजितास्तु तं ॥३९॥
क्षताश्चार्धजनाश्चार्धजनाश्च प्राणतो हताः ।
नागपराक्रमाद्याश्च दशकारागृहे तदा ॥४०॥
क्षिप्ता निगडपादास्तेऽभवन् कष्टप्रपीडिताः ।
क्षतपीडान्विताश्चापि पुनस्ते रोगपीडिताः ॥४१॥
कारागारेऽभवन् सर्वे देवद्रोहविधायिनः ।
देहांऽगघातभुग्नाऽस्थिमहापीडाऽतिपीडिताः ॥४२॥
नाऽऽप्नुवँस्ते मनाक् शान्तिं निद्रां निगडपातिताः ।
देवद्रोहफलं तेषां तृष्णया योजनात्तदा ॥४३॥
बद्रिके त्वागतं तूर्णं मोहाद्गर्वाद्बलात्तथा ।
अवलेपात् सुनास्तिक्यान्मृषा व्यापारयोजनात् ॥४४॥
प्राप्तं फलं समस्तं तद्भूमौ युद्धमिषेण वै ।
युद्धपुराधिपो भक्तोऽभवद् राजा नरायणे ॥४५॥
देवद्रोहकरं दुष्टं क्षत्रं ज्ञात्वाऽप्यपीडयत् ।
दण्डं ददौ महाघोरं देवद्राग्भ्ये विशेषतः ॥४६॥
द्रोहजन्यफलं नागप्राक्रमस्याऽभवच्छृणु ।
बद्रिके मूकतां प्राप्तो मूकतां खञ्जतां च सः ॥४७॥
बाधिर्यं कुष्ठितां लिङ्गक्षयतां चाऽन्धतां गतः ।
अन्ये साहाय्यकर्तारश्चापि योद्धार एव ये ॥४८॥
तेऽपि दण्डगृहे व्यंगा न्यूनाऽधिकतयाऽभवन् ।
भग्नगर्वा महाकष्टाः कदर्या इव तेऽभवन् ॥४९॥
बद्रिके मुग्धसंसारे लोका विवेकवर्जिताः ।
स्वबलैर्गर्वमापन्ना वृथा गर्जन्ति मेघवत् ॥५०॥
क्षणान्ते स्वविनाशं स्वसर्वस्वापगमं च ते ।
कालकृतं न जानन्ति गर्ववायुप्रपेरिताः ॥५१॥
यौवनं न स्थिरं चास्ते बलं नैव स्थिरं क्वचित् ।
अच्छेद्यं न शरीरं च मृषा द्रुह्यन्ति मोहिताः ॥५२॥
स्वं विनाशं चाह्वयन्ति बलिनां द्रोहकारिणः ।
देवद्रोहो बलिद्रोहश्चात्मद्रोहो विनाशकृत् ॥५३॥
देवानां द्रोहकरणाद् देवा निर्यान्ति देहतः ।
अन्धा मूकाः कुष्ठिनश्च पङ्गवस्ते भवन्त्यतः ॥५४॥
मनुष्याणां द्रोहभावाच्छापान् संप्रेरयन्ति ते ।
शापदग्धा विनश्यन्ति वंशैर्धनैश्च सम्पदा ॥५५॥
देवद्रोग्धुरकस्मात् स्यात् दैवं कष्टं प्रभूतकम् ।
दुःप्रधर्ष्यं प्रयोगैश्चाऽनिवर्त्यं जीवनान्तकृत् ॥५६॥
सर्वद्रोहात्परो द्रोहो देवद्रोहोऽधिको मतः ।
प्रतिकारोऽन्यद्रोहाणां देवद्रोहस्य नास्ति सः ॥५७॥
अपि स्वर्गगतं देवद्रोहो निपातयेद् द्रुतम् ।
अपि मोक्षगतं देवद्रोहस्तस्मान्निपातयेत् ॥५८॥
अद्रोग्धुः सर्वदा शान्तिर्द्रोग्धुर्वै सर्वदा भयम् ।
तस्माद् गर्वं परित्यज्य शान्तिं यच्छेज्ज वै भयम् ॥५९॥
मानुषाणां भये प्राप्ते दैवी शान्तिः प्रयुज्यते ।
दैवे भयेऽपि शान्तिः सा दैवी भयनिवर्तिनी ॥६०॥
किन्तु देवद्रोहजे तु भये सा निर्बला वृथा ।
अन्यक्षेत्रकृतो द्रोहो देवक्षेत्रे निवर्तते ॥६१॥
देवक्षेत्रकृतो द्रोहो वज्रलेपायते सदा ।
देवरोषे प्रलयो वै फलं नान्यत् फलं क्वचित् ॥६२॥
तस्माद् देवास्तोषणीयाः साक्षाद्वा दूरतोऽपि वा ।
गोचरा वाप्यविषयास्तोषणीयाः सुराः सदा ॥६३॥
मूर्त्यात्मकाश्च वा चैत्यवृक्षात्मकाः स्थलात्मकाः ।
प्रेतात्मकाश्च वा देवास्तोषणीयाः क्षणे क्षणे ॥६४॥
तुष्टा देवाः सुखं समृद्धिं कुर्वन्ति तोषणं सदा ।
रुष्टा देवा रुषं हानिं कुर्वन्ति कष्टमुल्बणम् ॥६५॥
गृहदेवा ग्रामदेवाः कुलदेवाः स्वदेवताः ।
इष्टदेवाः स्वर्गदेवास्तोषणीया विधानतः ॥६६॥
ऋतुदेवा यज्ञदेवा भूदेवा वायुदेवताः ।
इन्द्रियाणां देवताश्च तोषणीया विधानतः ॥६७॥
देहदेवा गुरौ देवा गोदेवाः साधुदेवताः ।
नारीदेवाः सतीदेवास्तोषणीया विधानतः ॥६८॥

अद्रिदेवाः सरिद्देवा वनदेवाः पयः सुराः ।
गोत्रदेवाः सर्वदेवास्तोषणीया विधानतः ॥६९॥
वास्तुदेवा यज्ञदेवा दिव्याः प्रासाददेवताः ।
यन्त्रमन्त्रतन्त्रदेवास्तोषणीया विधानतः ॥७०॥
सीमदेवा गर्भदेवाः गृहदेवा प्रजेश्वराः ।
शालामण्डपदेवाद्यास्तोषणीया विधानतः ॥७१॥
बलदेवा वह्निदेवा विश्वेदेवाः सभासुराः ।
शक्तयो देवताः सर्वास्तोषणीया विधानतः ॥७२॥

वृद्धदेवाः सिद्धदेवाः पितृदेवाश्च भिक्षुकाः ।
ब्राह्मदेवाः पूज्यदेवास्तोषणीया विधानतः ॥७३॥
ग्रहदेवा राजसा वा तामसाः सात्त्विकास्तथा ।
आभिचारिकदेवाश्च तोषणीया विधानतः ॥७४॥
स्वप्नदेवा दिवादेवा रात्रिदेवास्तदाश्रिताः ।
देववाहनभृत्याद्यास्तोषणीया विधानतः ॥७५॥
विघ्नदेवाः क्रूरदेवा भूतदेवा विरोधिनः ।
आशापाशहता देवास्तोषणीया विशेषतः ॥७६॥

आशां कुर्वन्ति देवाश्च पितरोऽपि तथाविधाः ।
आशया ये तु वल्गन्ति सर्वे ते भिक्षुका यतः ॥७७॥
तोषणीयास्तदिष्टानां प्रदानैः सर्वभिक्षुकाः ।
प्रसन्नास्ते प्रकुर्वन्ति योगं क्षेमं सुखं सवम् ॥७८॥
कराशाः सर्वराजानः पूजाशाः सर्वदेवताः ।
मानाशाः श्रेष्ठिनः सर्वे सत्काराशास्तु पण्डिताः ॥७९॥
दानाशा भिक्षुकाः सर्वे श्राद्धाशाः पितरः सदा ।
भिक्षाशा भिक्षुकाः सर्वे ब्रह्माशाः साधवः सदा ॥८०॥

पुत्राशा दम्पतीवर्गा द्रव्याशा निर्धनाः सदा ।
विवेकिनो निराशाश्च सन्तुष्टा देवतोत्तमाः ॥८१॥
एवंविधाऽस्ति वै सृष्टिस्तोषणीया हि देवताः ।
तोषणं सुखसंस्थानं तोषणं मोक्षणं तृषः ॥८२॥

तोषणं परमं स्वर्गो तुष्टोऽत्र ब्रह्मसद्मगः ।
तृप्तिर्धर्मो हि साधूनां तृप्तिर्धर्मोऽस्ति मोक्षणे ॥८३॥
सदा तृप्तिर्हरावस्ति तृप्तिः सम्पत् परा मता ।
वासनाविलये तृप्तिः सदाऽऽत्मनां प्रजायते ॥८४॥

सा मुक्तिः सा परा शान्तिः परो मोदः प्रमोदनम् ।
तृप्तानां तु करे नित्यं ब्रह्मानन्दप्रवाहणम् ॥८५॥
बद्रिके दुःखमापन्नश्चाऽतृप्तोऽपि निवर्तते ।
दुःखं कष्टं गुरुस्तस्य येन दुःखी निवर्तते ॥८६॥
तथा दुःखं परं प्राप्तः कारागारे परश्रितः ।
नागपराक्रमश्चान्येऽन्ततस्तस्य सहस्थिताः ॥८७॥

सर्वे ते मनसा दध्युर्देवं नारायणं प्रभुम् ।
अनादिश्रीकृष्णनारायणं भूतं प्रियेश्वरम् ॥८८॥
बालकृष्णं कृष्णनारायणं श्रीमाधवीपतिम् ।
ध्यात्वा स्मृत्वा च शरणं ययुः कारालये हृदि ॥८९॥
कृष्णनारायणस्वामिन्नारायणेति सद्गुरुः ।
भक्तिं च भजनं ज्ञात्वा युद्धपुरनराधिपः ॥९०॥
प्रसन्नमानसो भूत्वा दोषक्षमां ततोऽकरोत् ।
कारागारविनिर्मुक्तान् प्रचकार दयापि तान् ॥९१॥

ते तूर्णं श्रीहरेः सर्वं माहात्म्यं परमं शुभम् ।
जानन्तो द्रोहशान्त्यर्थे पापनाशाय सर्वथा ॥९२॥
शर्करापत्तनं पारायणस्य मण्डपं ययुः ।
नत्वा देवं लोमशं च गुरुं धर्मप्रकाशकम् ॥९३॥
सभां नत्वा क्षमां तत्र ययाचिरे हरेः पुनः ।
कथाव्यासासने व्यासः क्षमयामास तत्कृतम् ॥९४॥
पाययामास तेभ्यश्च प्रसादाऽमृतवारि च ।
प्रसादान्नं तत्र तावद् भोजयामास ताँस्तदा ॥९५॥

ददौ मन्त्रं ततस्तेभ्योऽभयदानं तदा ददौ ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥९६॥
प्रभोनारायण श्रीमाधवीनारायण प्रभो ।
राधाकृष्ण बालकृष्ण ललिताकृष्ण सद्विभो ॥९७॥
एवं तेभ्यो ददौ नाम तेऽपि चक्रुश्च कीर्तनम् ।
मासे गते तु माघस्य पूर्णायां सायमेव ह ॥९८॥
कथोत्तरक्षणे व्योम्नश्चागतं सुविमानकम् ।
अनादिश्रीकृष्णनारायणो यत्र विराजते ॥९९॥

श्रीवल्लभो द्रुतं तस्मादवातरद् भुवः स्थले ।
पस्पर्श पाणिना ताँश्च सर्वे मृतास्तदाऽभवन् ॥१००॥
दिव्यदेहा अमराँश्च विमाने तेऽभवन् स्थिताः ।
कृष्णनारायणो निन्ये तान् सर्वानक्षरं पदम् ॥१०१॥

एवं श्रीबद्रिके तत्र महाश्चर्यमभूत्तदा ।
पश्यतां सर्वलोकानां ययुस्ते परमं पदम् ॥१०२॥
इहैव भोगमापन्ना द्रोहस्य मोक्षणं ततः ।
श्रीकृष्णकृपया जातं कथायाः श्रवणेन च ॥१०३॥

कृष्णनारायणनामजपेन साधुसेवया ।
प्रसादाशनेनापि मोक्षणं जातमुत्तमम् ॥१०४॥
सर्वद्रोहप्रणाशोऽपि श्रीकृष्णस्य कृपावशात् ।
तेषां जातो बन्धनाशो मोक्षश्चाऽपुनरागमः ॥१०५॥
बद्रिके श्रीकृष्णनारायणो गोपालबालकः ।
कम्भराश्रीसुतः सर्वान् मुक्तान् करोति भक्तिमान् ॥१०६॥

दोषांश्चैव तथाऽघानि नैव पश्यति देहिनाम् ।
कृपयैव महामोक्षं करोति शरणार्थिनाम् ॥१०७॥
पठनाच्छ्रवणाच्चाऽस्य स्मरणात् प्रविचिन्तनात् ।
भुक्तिर्मुक्तिः परं स्वर्गो लभ्यते श्रीहरेः पदम् ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने नागविक्रमस्य क्षत्रियस्य सर्वद्रोहिणो देवद्रोहिणश्च तत्सहायिनां च व्यंगत्वादिमहाकष्टं कारागारवासस्ततः संहिताकथाश्रवणेन नवद्रोहिसहितस्य पापनाशो मोक्षणं चेत्यादिनिरूपणनामा द्वापञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि राजाऽऽसीत् शालमित्रकः ।
क्षत्रियो धर्मनिष्ठश्च प्रजापालनतत्परः ॥ १ ॥
दानधर्मरतो नित्यं गोविप्रसाधुपूजकः ।
अन्नसत्रं गृहे यस्य वस्त्रसत्रं महत्तथा ।
धनसत्रं तथा यस्य कोशेऽभूद् दीनरक्षकम् ॥ २ ॥
यस्य ग्रामे दिव्यदेवालयाः सन्ति सुशोभिताः ।
विप्राश्च साधवः साध्व्यो देवसेवापरायणाः ॥ ३ ॥
वर्तन्ते यस्य नगरे राष्ट्रग्रामेषु वै तथा ।
जीविकाजीवनाः सर्वे राज्ञा दत्तार्थवृत्तिकाः ॥ ४ ॥
प्रतिदेवालयं क्षेत्रं सस्यानां जनकं महत् ।
महती वाटिका चापि गोधनं दासदासिकाः ॥ ५ ॥
अन्नवस्त्रप्रदानं च प्रतिवर्षं पृथक् तथा ।
धनदानं पृथक् चापि जीविका प्रतिमन्दिरम् ॥ ६ ॥
एवं राज्ये सर्वतोऽस्य धर्मशालास्तथाऽभवन् ।
वृक्षच्छायाश्च मार्गेषु तथोद्यानानि मन्दिरे ॥ ७ ॥
वर्तन्ते देवपुण्यार्थं जलकूपाः प्रतिस्थलम् ।
देवपूजाप्रवाहाश्च चन्दनाक्षतकुंकुमम् ॥ ८ ॥
धूपदीपसुनैवेद्यफलताम्बूलकानि च ।
राजकोशात् प्रपद्यन्ते प्रतिदेवालयं सदा ॥ ९ ॥
एवं पूर्वैः पूर्वतरैः पूर्वतमैः सुजीविकाः ।
कृता देवार्पणार्थं वै सर्वथा पूर्वजीविकाः ॥१०॥
अथ राजा वर्तमानः शालमित्रस्तदा स्वयम् ।
भक्तो भूत्वा परीक्षार्थं पूजाकालेऽन्वहं द्रुतम् ॥११॥
प्रत्येकं मन्दिरं याति यात्रार्थीभिक्षुको यथा ।
विलोकयति बद्धां तां व्यवस्थां पूजकैः कृताम् ॥१२॥
पूजका नैव कुर्वन्ति पूजां पूर्वैर्यथाऽर्पिताम् ।
यथाकालतां न कुर्वन्ति सेवानैवेद्यकं अपि ॥१३॥
आरार्त्रिकं न कुर्वन्ति क्वचित् क्वचिन्न वन्दनम् ।
कुत्रचिद्धूपनं नैव कुत्रचिन्नैव दीपनम् ॥१४॥
कुत्रचिच्चन्दनं नैव कुत्रचिन्नैव तुलसी ।
कुत्रचिन्न महादेवे स्नानपुष्पाम्बरादिकम् ॥१५॥
कुत्रचिन्न हरौ कृष्णे भूषाम्बरनिवेदनम् ।
कुत्रचिन्न रवौ देव्यां पूजाशृंगारतर्पणम् ॥१६॥
कुत्रचिन्न नरे नारायणे नैवेद्यकार्पणम् ।
कुत्रचिन्नैव पूजाऽस्ति नीराजनं न जायते ॥१७॥
पूजकेषु व्यसनानि प्रत्यक्षं स व्यलोकयत् ।
नरानार्यो धर्महीना वर्तन्ते मन्दिरादिषु ॥१८॥
स्नानसत्कर्महीनाश्च पूजका मलिनास्तथा ।
स्वार्थमात्रपरा नैजोदरंभरा वसन्ति च ॥१९॥
क्वचित्तु मन्दिरे भ्रष्टाचारा मद्यपरायणाः ।
वर्तन्ते पूजकाश्चेति प्रत्यक्षं स व्यलोकयत् ॥२०॥
वीक्ष्यैवं निजराज्ये वै मन्दिरेषु घृणास्थितिम् ।
विचारमकरोद् राजा बुद्ध्या विवेकमिश्रया ॥२१॥
मम ये पूर्वजा दत्तवन्तो दानानि जीविकाः ।
धर्मार्थं देवपूजार्थं दैवकार्यार्थमन्वहम् ॥२२॥
मन्दिरेषु पूजका ये पूजिका याश्च सन्ति वै ।
न कुर्वन्ति यथार्थं ते पूजनं देवतार्चनम् ॥२३॥
वृथा खादन्ति ते सर्वे धनाशिनो वृषोज्झिताः ।
येन ध्येयेन तेभ्यो वा देवेभ्यो दत्तजीविकाः ॥२४॥
तद्ध्येयं जायते नैव देवपूजा न जायते ।
व्यसनानि पूजकास्ते समाचरन्ति सर्वथा ॥२५॥
न तेजो विद्यते तेषामाननेषु मनागपि ।
निस्तेजसो विलोक्यन्ते पूजका मन्दिरेषु वै ॥२६॥
भ्रष्टाचारा भ्रष्टधर्माः कदर्या इव धूम्रणः ।
यत्र पूजाकरा भ्रष्टाचाराः स्वोदरपूर्तिकाः ॥२७॥
व्यसनाभिभूतचित्ता देवास्तत्र वसन्ति न ।
यत्र वै पूजकाः स्नानहीनाश्च मलिनान्तराः ॥२८॥
मलिवस्त्रा मलिदेहा देवास्तत्र वसन्ति न ।
यत्र वै पूजकाः कामिक्रोधिलोभिप्रतारिणः ॥२९॥
असत्याऽनृतमिथ्याढ्या देवास्तत्र वसन्ति न ।
सतृष्णाः पूजका यत्र प्रमादाऽऽलस्यसंभराः ॥३०॥
निस्त्रपाः स्वाध्यायहीना देवास्तत्र वसन्ति न ।
पूजकाः स्नेहहीनाश्च भक्तिसेवोज्झिताः खलाः ॥३१॥

देवगौरवहीनाश्च देवास्तत्र वसन्ति न।
यत्राऽर्चका व्रतहीना नास्तिक्याडम्बरान्विताः ॥३२॥
मृषावादा मृषाकार्या देवोत्सवादिवर्जिताः।
पूजाप्रकारशून्याश्च देवास्तत्र वसन्ति न ॥३३॥
यत्र गन्धः सुगन्धो न धूपो दीपो न विद्यते।
यत्र नीराजनं नास्ति देवास्तत्र वसन्ति न ॥३४॥
यत्र शुद्धिर्न पात्राणां जलशुद्धिर्न विद्यते।
नैवेद्यस्य न वै शुद्धिर्देवास्तत्र वसन्ति न ॥३५॥
देवगृहस्य शुद्धिर्न शुद्धिः सिंहासनस्य न।
देवशय्यादिशुद्धिर्न देवास्तत्र वसन्ति न ॥३६॥
मन्दिरे मार्जनं नास्ति प्रक्षालनं न वा क्वचित्।
धूलिनिष्कासनं नास्ति देवास्तत्र वसन्ति न ॥३७॥
निर्माल्यदूरता नास्ति नूत्नपुष्पार्पणं न च।
नूत्नशृंगारभूषा न देवास्तत्र वसन्ति न ॥३८॥
नूत्नवेषार्पणं नास्ति नूत्नजलार्पणं न च।
नूत्नचन्दनचर्चा न देवास्तत्र वसन्ति न ॥३९॥
नूतनाऽक्षतकुंकुमतुलसीफलशर्कराः।
मध्वाज्यादि नूतनं न देवास्तत्र वसन्ति न ॥४०॥
यत्रोपकरणौज्ज्वल्यं वस्त्रौज्ज्वल्यं न विद्यते।
भूषौज्ज्वल्यं बिम्बौज्ज्वल्यं देवास्तत्र वसन्ति न ॥४१॥
अन्धकारो यत्र शैत्यं महौष्ण्यं दुष्टवायवः।
क्लेशाः कलहा यत्स्थाने देवास्तत्र वसन्ति न ॥४२॥
पूजको ब्रह्मचारी न पाचकः शुद्धिवर्जितः।
स्नापको भावशून्यश्च देवास्तत्र वसन्ति न ॥४३॥
यद्देवाऽग्रे सोपानत्का मानवा यान्ति सन्निधौ।
सशस्त्रा गर्वयुक्ताश्च देवास्तत्र वसन्ति न ॥४४॥
मद्यमांसाशनं यत्र दुर्गन्धिभक्षणादिकम्।
दुष्टपानादिकं यत्र देवास्तत्र वसन्ति न ॥४५॥
निषिद्धाचरणं यत्र विहितत्यजनं तथा।
पूजाकालनियमो न देवास्तत्र वसन्ति न ॥४६॥
देववाद्यानि पात्राणि चामरादीनि सन्ति न।
मन्त्रा यत्र न विद्यन्ते देवास्तत्र वसन्ति न ॥४७॥
मानवा मन्दिरे देवगृहे स्वपन्ति यत्र च।
गृहनिवासनं नित्यं देवास्तत्र वसन्ति न ॥४८॥
देवानां गौरवं यत्र पाल्यते मानवैर्नहि।
पृष्ठे देवा मनुष्याणां देवास्तत्र वसन्ति न ॥४९॥
श्वानश्च शूकरा यत्र गृहे भ्रमन्ति वानराः।
भ्रष्टजीवा यत्र सन्ति देवास्तत्र वसन्ति न ॥५०॥

पापिनां पादसञ्चारः स्पर्शो देवस्य सर्वदा।
भ्रष्टवस्त्वर्पणं यत्र देवास्तत्र वसन्ति न ॥५१॥
आदरो भावना नास्ति प्रेम स्नेहो न विद्यते।
पूजकस्यां न चाऽऽस्तिक्यं देवास्तत्र वसन्ति न ॥५२॥
यद्देवाग्रे ग्राम्यवार्ता देहकार्याणि यत्पुरः।
यदग्रे चित्तमालिन्यं देवास्तत्र वसन्ति न ॥५३॥
विधिहीना प्रतिष्ठा चाऽजलपुष्पं प्रपूजनम्।
स्तुतिहीनः प्रवेशश्च देवास्तत्र वसन्ति न ॥५४॥
पूजकस्य तपो यत्र पूजा श्रेष्ठा प्रजायते।
आभिरूप्यं यत्र मूर्तेर्देवास्तत्र वसन्ति वै ॥५५॥
साधवः पूजका यत्र ब्रह्मचर्यपरायणाः।
साध्व्यो वा दीक्षिताः शीलव्रतास्तत्र हि देवताः ॥५६॥
आत्मशुद्धिर्भावशुद्धिर्द्रव्यशुद्धिः समस्तिका।
पूजाशुद्धिर्भक्तशुद्धिर्देवास्तत्र वसन्ति वै ॥५७॥
विद्यमानासु सर्वासु जीविकास्वपि ये नराः।
पूजोत्सवान्न कुर्वन्ति देवास्तत्र वसन्ति न ॥५८॥
अपूजा वा न्यूनपूजा भ्रष्टपूजास्तु देवताः।
रुष्टा खनन्ति वंशान् वै स्थापकस्य नृपस्य च ॥५९॥
विलोक्यन्ते मया सर्वदेवालयेषु राष्ट्रके।
पूजका भ्रष्टपूजास्ते दोषं कुर्वन्ति मन्दिरे ॥६०॥
दोषभागो भवेऽन्यस्मिन् नृपतेः शासकस्य च।
तस्मात्ते शिक्षणीया वै राजाज्ञया मयाऽधुना ॥६१॥
विचार्येत्थं नवं कृत्वा नियमं सप्रकाशकम्।
श्रावयामास सर्वत्र देवार्चनार्थमन्वहम् ॥६२॥
'अद्याऽऽरभ्य तु देवानां पूजनं विधिना तु ये।
सर्वथा न करिष्यन्ति राजा वृत्तिं हरिष्यति' ॥६३॥
इत्येवं निजराष्ट्रे वै श्रावयामास सर्वथा।
श्रुत्वा श्रीबद्रिके वृत्तिहानेर्भयात्तु केचन ॥६४॥
विधिवत् पूजनं चारेभिरे भक्तियुता नराः।
ये खलाश्च शठाश्चासन् प्रमादमोहगर्विताः ॥६५॥
नास्तिक्यमिथ्यावादाश्च मृषादेवादिवादिनः।
ते तु चित्तं ददुर्नैव पूजादौ परमात्मनः ॥६६॥
राज्ञा निरीक्षकेनैषां वृत्तयः संहृतास्ततः।
दण्डिताः केचन दुष्टा निष्कासिताश्च केचन ॥६७॥
उत्थापिता भग्नबिम्बा अपहृताश्च जीविकाः।
जीर्णदेवालयास्तेन नीता वै शून्यतां तदा ॥६८॥
एवं बलवता राज्ञा वृत्तिहर्तृत्वपातकम्।
पूजकानां कुटुम्बानां निश्वासाः शापानि च ॥६९॥

उत्पादितानि भागेन भागेन पुण्यमर्जितम् ।
शापस्तु सहसा हन्ति पुण्यं चिरेण रक्षति ॥७०॥
जीविकाहरणे पापं जायते सर्वनाशकम् ।
जीर्णस्य जीविका नैव हर्तव्या वै कदाचन ॥७१॥
जीर्णोद्धारः प्रकर्तव्यः कर्तव्या रिक्तता न तु ।
शून्यतायाः फलं शून्यं कर्तुस्तत्र प्रजायते ॥७२॥
बद्रिके तस्य भूपस्य जीविकाहरणस्य वै ।
पापं शापस्य चायातं तूर्णं दुःखप्रदं तदा ॥७३॥
राजा रोगेण संव्याप्तो जलोदरेण सर्वथा ।
अजीर्णेन च रोगेण ह्यतिसारेण वै रुजा ॥७४॥
अभिभूतोऽभवन्मन्दाग्निना जाठरवर्तिना ।
भोजनं नाऽस्य पचति वमनं वै प्रजायते ॥७५॥
जलोदरं वर्धते च रक्तं जले विवर्तते ।
शुष्कायन्तेऽस्य मांसानि रक्तोत्सर्गो भवत्यपि ॥७६॥
उदरं गर्भिणीतुल्यं गलितौ पादहस्तकौ ।
पिंगताऽस्याऽभवद्देहे शक्तिह्रासोऽभवत्तथा ॥७७॥
अपाचनं महारोगो बद्रिके मरणान्तकः ।
शालमित्रो भूपतिस्तु श्रेष्ठौषधान्यकारयत् ॥७८॥
तथापि दैवरोषेण शापेनाऽऽसा हि रुग्णता ।
मनागपि न नष्टा सा वृद्धिं गता दिने दिने ॥७९॥
जीविकाहरणं सर्वपापाधिकं हि पातकम् ।
अत्रैव भुज्यते बद्रि हर्तव्या नैव जीविका ॥८०॥
राज्ञः पत्नी जयालक्ष्मीर्नाम्ना सापि तथा रुजा ।
रक्तस्रावती नित्यं जाता च दुर्बला सती ॥८१॥
राजा शोकं समापन्नश्चौषधं न गुणायते ।
शुश्राव संहितावार्ताचमत्कारं तदा क्षणे ॥८२॥
जना ये तीर्थयात्रार्थं यान्ति वै शर्करापुरम् ।
संहितायाश्चमत्कारं वर्णयन्ति तु ते कथाम् ॥८३॥
पापिनां मोक्षणं चापि साक्षाच्च दर्शनं हरेः ।
शुश्राव वर्णितं सर्वं जनैर्माहात्म्यमुत्तमम् ॥८४॥
तूर्णं सज्जोऽभवद् गन्तुं संहिताश्रवणाय सः ।
परिमेयाऽनुगो राज्ञ्या समं श्रोतुं कथां ययौ ॥८५॥
बहुभिर्दक्षिणाभिश्चोपदाभिर्वाचकं मुनिम् ।
पूजयामास नृपतिर्गत्वा कथास्थलं द्रुतम् ॥८६॥
आशीर्वादान् समगृह्य राज्ञ्या समं च लोमशम् ।
पुपूज भावतो राजा लोमशो वीक्ष्य दुर्बलम् ॥८७॥
नीरुग्णो भव नृपते नीरुग्णा पत्निका तव ।
पापघ्नत्वादुभौ भूत्वा यातं कार्ष्णं परं पदम् ॥८८॥
असारः खलु संसारः सारस्तस्मात्तु मोक्षणम् ।
जीवनं सर्वथा पापं पुण्यं संसारमोक्षणम् ॥८९॥
एवमाशीर्वचनैस्तौ द्रुतं दुरितवर्जितौ ।
सञ्जातौ तद्धर्म्मणोश्च रोगौ तत्रैव निर्गतौ ॥९०॥
मूर्तिमन्तौ जगदतुर्जीविकाहरणोत्थितौ ।
आवां रोगौ चातिसारौ प्राणहरौ द्वयोरपि ॥९१॥
स्वस्ततोऽद्य युवयोरायुष्यं शेषं न विद्यते ।
लोमशस्य संहिताया वाचकस्य हरेर्बलात् ॥९२॥
निर्गतौ युवयोर्देहाभ्यां तथापि मृतिर्ध्रुवा ।
ततो दानानि सर्वाणि दत्वा लब्ध्वा मनुं हरेः ॥९३॥
भक्तिं कृत्वा यातमेवाऽक्षरं पदं प्रभोर्हरेः ।
इत्युक्त्वा ययतू रोगौ राजा राज्ञी द्रुतं तदा ॥९४॥
राज्यार्पणं कुमारे च कृत्वा पत्रेण वै तदा ।
दत्वा दानानि सर्वाणि प्रदत्वा जीविकाः पुनः ॥९५॥
नैष्कर्म्यं सर्वथा कृत्वा प्राप्य मन्त्रं तु लोमशात् ।
भक्तिं कृत्वा मासमात्रमुषित्वा तौ कथान्तिके ॥९६॥
शोषयित्वा निजात्मानौ साधून् संसेव्य भावतः ।
'ॐ नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥९७॥
'प्रभोनारायण श्रीशवेदीनारायण प्रभो ।
अनादिश्रीकृष्णनारायण श्रीकान्त सद्विभो' ॥९८॥
एवं मन्त्रं च भजनं चक्रतुर्भृत्यसंघिनौ ।
एकाग्रमानसौ भूत्वा क्षपयित्वा तु वासनाः ॥९९॥
हरेः प्रासादिकं जग्ध्वा पावयित्वा समस्तकम् ।
सज्जौ बभूवतुर्गन्तुं मोक्षे धामाऽक्षरं हरेः ॥१००॥
फाल्गुनस्याऽसिते पक्षे त्वेकादश्यां कथोत्तरम् ।
प्रगे दिव्यं विमानं वै सौवर्णं परमात्मनः ॥१०१॥
व्योम्नश्चावातरत् तत्र सर्वेषां पश्यतां शुभम् ।
बद्रिके श्रीकृष्णनारायणस्तस्माद्विनिर्ययौ ॥१०२॥
परस्पर्श तौ पाणिना च विमुच्य देहतः पृथक् ।
दिव्यमुक्तौ दिव्यदेहौ विधाय सहसा प्रभुः ॥१०३॥
निधाय स्वविमाने तौ ययौ धामाऽक्षरं निजम् ।
एवं तौ वृत्तिहर्तारौ तथापि पुण्यकारिणौ ॥१०४॥
देवार्थे कृतसर्वस्वौ पावयित्वा प्रभुः पुनः ।
श्रावयित्वा कथां नैजां निन्ये मोक्षदं निजम् ॥१०५॥
बद्रिके जयकारोऽभूत्तदा सर्वत्र भूतले ।
राजा राज्ञी गतौ मोक्षं संहितायाः कथाबलात् ॥१०६॥
कथां श्रोतुं समायान्ति समन्ततोऽयुताऽयुतम् ।
मनुष्याः कृष्णचित्तास्ते लभन्ते स्वेष्टमुत्तमम् ॥१०७॥

पठनाच्छ्रवणादस्य स्मरणादपि बद्रिके ।
भुक्तिर्मुक्तिश्चेष्टसिद्धिः स्वर्गे दीर्घं च लभ्यते ॥१०८॥
वासनानां क्षयश्चापि शुद्धिर्निजात्मनस्तथा ।
धाम्न्यक्षरे गतिः स्थानं शाश्वतं सुखमाप्यते ॥१०९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने शालमित्रनृपतेर्देवजीविकाऽपहरणेन तद्राज्ञ्याश्च महातिसारुग्णताऽऽयुर्नाशश्चेतिवेदनोत्तरं संहिताकथाश्रवणार्थं गतयोस्तत्र मुक्तिरित्यादिनिरूपणनामा त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि कन्याघ्नस्य कथां तथा ।
युद्धपुरमहाराज्ये युद्धराजोऽभवन्नृपः ॥ १ ॥
दानधर्मरतः पुण्यकरः साधुप्रपूजकः ।
प्रजारक्षाकरश्चापि गर्वमानभरोऽभवत् ॥ २ ॥
तत्र प्रथाऽभवद् बद्रि कन्याहिंसामयी पुरा ।
कन्याया जन्म जायेत क्षत्रियस्य गृहे यदि ॥ ३ ॥
कन्याभ्राता कस्यचित्तु शालकः स्याद् भविष्यति ।
कन्यापिता श्वशुरः स्यात् तदनिष्टं परं यतः ॥ ४ ॥
क्षत्रियः शालको न स्याज्जामातृश्वशुरो न च ।
स्नुषाश्वशुरः स्यादेव कुत्रचित् सा प्रथाऽभवत् ॥ ५ ॥
अतः कन्या प्रहन्तव्या क्षत्रियेण तु जन्मतः ।
मानिनो युद्धराजस्य राज्ञ्यां कन्या त्वजायत ॥ ६ ॥
राज्ञीप्रसूतिकालेऽपि दास्यां पुत्रोऽप्यजायत ।
राज्ञीस्नेहेन सा दासी कन्यानाशभयेन च ॥ ७ ॥
कन्यां जग्राह दत्वा स्वं पुत्रं राज्ञ्यै सुसुन्दरम् ।
पुत्रोऽभवन्नृपतेस्तु प्रकाशेऽप्रसरच्छुभम् ॥ ८ ॥
अतिहर्षेण राज्ञा वै कृतः पुत्रोत्सवः शुभः ।
कन्याकुमारौ सहजौ वृद्धिमासौ शनैः शनैः ॥ ९ ॥
कन्यामानं तु सा दासी राजकन्यावदाचरत् ।
राज्ञी चापि तथा मानं राजकन्यावदाचरत् ॥१०॥
न तादृक्षं कुमारस्य प्रकृतिर्हि बलीयसी ।
कुमारोऽपि महान् जातो दासीं स्वमातरं प्रति ॥११॥
दासीं कृत्वा वर्तते सः किंकरीं मानवर्जिताम् ।
अथैकदा स्नेहमग्ना दासी रहः स्वपुत्रकम् ॥१२॥
अधीरा प्राह वृत्तान्तं सर्वं जातं यथातथम् ।
राजकन्याप्ररक्षार्थे विनिमयस्तु जन्मतः ॥१३॥
कृत एव मया पुत्र कन्या राज्ञ्याः सुतोऽसि मे ।
अतो मां मातरं गर्भधारिणीं जन्मदायिनीम् ॥१४॥
विद्धि वत्स प्रकाशं मां कुरु स्वं कुशलं कुरु ।
कन्यायाः कुशलं चापि प्रकाशे सति नैव ह ॥१५॥
अतो गोप्यं समस्तं तन्मां विद्धि तव मातरम् ।
बद्रिके स्त्रीहृदयं निष्ठुरं भिन्नकपाटकम् ॥१६॥
कदाचिद्भिद्यते क्रोधात् कदाचित् स्नेहतो ध्रुवम् ।
तेनाऽनिर्धारितं स्याद्वै व्यसनं दुःसहं ततः ॥१७॥
स्त्रीतो गोप्यं गोपनीयं प्रकाश्यं न स्त्रियाः पुरः ।
अथैवं राजमातुश्च पुत्र्यां स्नेहोऽतिवर्तते ॥१८॥
पुत्री विवाहयोग्या सा जाता राज्ञीसमा शुभा ।
तदा पुत्री प्रदेया क्व कस्मै चेति व्यचिन्तयत् ॥१९॥
राज्ञी स्वयं चातिचिन्तापराऽभवत् सुताकृते ।
न दासाय प्रदातव्या देया कुमारकाय वै ॥२०॥
राजपुत्राय दातव्या नो चेद् रक्ष्या कुमारिका ।
एवं व्यचिन्तयद् राज्ञी कन्या वरं प्रतीक्षते ॥२१॥
कदा मे स्याद् विवाहो वै माता कथं न वक्ति तत् ।
इत्येवं चिन्तयाना सा पप्रच्छ मातरं त्विदम् ॥२२॥
कथं मातर्विवाहं मे नैव चिन्तयसि क्वचित् ।
तदा माता दासिका सा प्राह राज्ञी निषेधनम् ॥२३॥
करोत्येव सदा पुत्रि ततोऽहं न वदामि तत् ।
अथैकदा सुता राज्ञ्या देहसेवापरायणा ॥२४॥
रहः पप्रच्छ तां राज्ञीं मातर्नमामि ते मुहुः ।
पृच्छाम्यहं हृदयस्थं मा दोषं मयि कल्पय ॥२५॥
मद्रहस्यं तु पृच्छामि यथावद् वक्तुमर्हसि ।
कथं विवाहयोग्याया विवाहं मे शुभप्रदम् ॥२६॥
कर्तुं न मन्यसे निषिध्यसे कथं समुच्यताम् ।
श्रुत्वा माता राजमाता निजां पुत्रीं तु दासिकाम् ॥२७॥
आकृष्य बहुधा धृत्वा वक्षस्यश्रूण्यवासृजत् ।
ततो धैर्यं समालम्ब्य जगाद पुत्रिकां हितम् ॥२८॥
वत्से मत्कुक्षिजा चास्से नृपस्यासि सुता शुभा ।
किन्तु निकृष्टभाग्या त्वं दास्यै मया पुराऽर्पिता ॥२९॥
दासीपुत्रो मया प्राप्तः त्वत्समक्षणजन्मवान् ।
करोम्येवं न चेद् राजा निहन्यात् त्वां तु जीवनः ॥३०॥
राजा कस्यापि न स्याद्वै शालकः श्वशुरोऽथवा ।
भ्राता ते त्वग्रजश्चान्यो वर्तते राजदायभाग् ॥३१॥
राज्याधिकारवाँश्चापि शालकः स कथं भवेत् ।
पिता ते च श्वशुरो वा कथं स्यात् कस्यचित् खलु ॥३२॥

त्वं कन्या मे यदा जाता मया गुप्ता कृता न चेत् ।
अथाक्कत्वरक्षार्थं चाऽश्वशुरत्वगुप्तये ॥३३॥
राजा त्वां नाशयेत्तूर्णं स्यां पुत्री रहिता त्वहम् ।
मया प्राप्ता त्वेकपुत्री मुखदर्शनदायिनी ॥३४॥
मारयितुं कथं दद्यां गतैः प्राणशतैरपि ।
वत्से तदा मया सम्यग् चिन्तितं श्रेयसे तव ॥३५॥
प्रसूतश्चाऽभवद् दास्यां पुत्रोऽयं यः कुमारकः ।
स मया स्नेहबद्धाया दास्याः प्राप्तो द्रुतं गृहे ॥३६॥
तस्यै त्वं चार्पिता वत्से प्राणरक्षणहेतवे ।
सा त्वं मत्कुक्षिजा पुत्रि वर्तसे मम सन्निधौ ॥३७॥
तां त्वां राजकुमारीं वै श्रेष्ठां मदंगसंभवाम् ।
यस्मै कस्मै तु दासाय दातुं कथं समुत्सहे ॥३८॥
ततः पुत्रि मया दासी निषिध्यते प्रदानके ।
दासे दानं निकृष्टं यद् राजपुत्रे प्रशस्तकम् ॥३९॥
वद वत्से रहः प्रोक्तं त्वत्कृतं किं करोम्यहम् ।
त्वया पृष्टं ततः सर्वं मयोक्तं मम पुत्रिके ॥४०॥
विना राजकुमारं तु कौमार्ये ते वरं सदा ।
तथाप्यहं यतिष्ये वै पुत्रिके यच्छुभं भवेत् ॥४१॥
मा प्रकाशय वृत्तान्तं हानिस्तेन भविष्यति ।
मम नाशस्तव नाशो राजद्वारा भविष्यति ॥४२॥
इत्येवं शयने राज्ञी जगाद निजबालिकाम् ।
पुत्री ज्ञात्वा समस्तं तन्मातृसेवापरायणा ॥४३॥
विशेषतः प्रजाता वै कुमारोऽपि प्रसूं प्रति ।
एवं स्वाभाविकस्नेहे विनिमयोऽप्यजायत ॥४४॥
वचने हृदये देहे क्रियास्वपि समन्ततः ।
स्वस्वमातृस्नेहभावो व्यवर्धत तयोस्तदा ॥४५॥
अथैकदा नृपो नैजे शयने निद्रितोऽभवत् ।
मध्यरात्रौ नृपनिद्रा नष्टा जागरितो नृपः ॥४६॥
राज्ञी नृपस्य शय्यायां सुप्ताऽऽसीत् स्वप्ननिद्रिता ।
स्वप्ने जजल्प नृपतेः शृण्वतो दैवनोदिता ॥४७॥
अहो पुत्रि मम पुत्रि मा राज्ञे त्वं निवेदय ।
राज्ञीपुत्रीति चैवाऽसि कुमारो दासिकासुतः ॥४८॥
अहो दासि अहो दासि मा कस्मैचिन्निवेदय ।
कुमारो दासिकापुत्रः कुमारी नृपपुत्रिका ॥४९॥
राजा श्रुत्वा महाश्चर्यं गतः सत्यार्थविस्मितः ।
मोहितो वाक्यबोधेन श्रुतार्थं समचिन्तयत् ॥५०॥

निर्णयार्थं त्वेकदा तु दास्यै सौवर्णशृंखलाम् ।
ददौ पप्रच्छ दासीं स वद चान्यदभीप्सितम् ॥५१॥
प्रसन्नोऽस्मि सेवया ते किं ददाम्यपरं धनम् ।
प्रासादं वाटिकां क्षेत्रं ग्रामं वा किं ददामि ते ॥५२॥
दासी प्रसन्नवदना बद्रिके ह्रस्वबुद्धितः ।
ययाचे नैव वाटीं वा क्षेत्रं ग्रामं धनं गृहम् ॥५३॥
न मे सर्वं रोचते वै राजँस्तृप्तास्मि सर्वथा ।
यदि देयो वरो मह्यं ययाचे तु कुमारयोः ॥५४॥
द्वितीयाय कुमाराय राज्यं देहि समस्तकम् ।
यद्वाऽर्धं देहि नृपते ज्येष्ठायाऽर्धं प्रदेह्यपि ॥५५॥
राजा श्रुत्वा पक्षवाक्यं पप्रच्छ कारणं तदा ।
प्रलोभ्य बहुरत्नाद्यैर्दासी जगाद कारणम् ॥५६॥
पुत्रो मद्गर्भसंभूतो वर्तते स कुमारकः ।
पुत्री त्वत्पत्निकाजन्या वर्तते सा कुमारिका ॥५७॥
देहि राज्यं चार्धमपि राजन् पुत्राय मे शुभम् ।
बद्रिके साऽभवद् दासी क्षत्रिया भृत्यकर्मिणी ॥५८॥
नाम्ना प्रभावती देवी पुत्रस्तस्यास्तु भूपजः ।
क्षत्रियोऽभूद् द्वितीयः सः साऽतो राज्यमयाचत ॥५९॥
अकथ्यं कथितं सर्वं लोभवृत्त्या भुजिष्यया ।
स्नेहवृत्त्या सुते नैजे कथितं रह उत्तमम् ॥६०॥
अथ राजा विदित्वैव कुमारं दासिकासुतम् ।
कुमारीं निजपुत्रीं च ख्यातां तां दासिकासुताम् ॥६१॥
किंकर्तव्यप्रमूढोऽतिविह्वलः सोऽभवत् सदा ।
शालकेन न वै भाव्यं ज्येष्ठकुमारकेण वै ॥६२॥
श्वशुरेण न वै भाव्यं मया चान्यनृपस्य वै ।
वार्ता प्रसिद्धिमापन्नाऽवश्यं प्रकाशमेष्यति ॥६३॥
राज्याधिकारी ज्येष्ठोऽस्ति चार्धस्य यावतोऽपि वा ।
दासीपुत्राय दास्ये चेद् राज्येऽनिष्टं भविष्यति ॥६४॥
ममाऽनिष्टं भवेच्चापि ततस्तत् कार्यमेव न ।
कन्याकुमारयोः प्राणप्रलयोऽत्र शुभो मतः ॥६५॥
विषादिसंप्रयोगेण तूर्णं द्वयोः परेतता ।
भविष्यति न सन्देहः कर्तव्यं श्रेष्ठमत्र तत् ॥६६॥
विचार्येत्थं युद्धराजो विषं मारकमुल्बणम् ।
दापयामास कन्यायै कुमाराय च गुप्तितः ॥६७॥
गुप्तिस्तत्राऽभवन्नाम्ना घटमालाऽभिधाऽनुगा ।
दासी राज्ञः कर्मकर्त्री समजातिसमुद्भवा ॥६८॥

तथा भोजनवेलायां विषं प्रयोजितं तयोः ।
राज्ञी दासी मातरौ ते जानीतो न विषार्पणम् ॥६९॥
मरणं यन्निमित्तेन लिखितं तद्भवत्यपि ।
जीवनं यन्निमित्तेन लिखितं तद्भवत्यपि ॥७०॥
भुक्तवन्तौ सुतापुत्रौ भोजनं विषमिश्रितम् ।
व्यसू जातौ च तौ तत्र तावदभ्यागतो द्विजः ॥७१॥
साधुर्यतिश्चमत्कारी विषहौषधिबोधवान् ।
तदौषधिरसगूटीयुतो भ्रमन् समाययौ ॥७२॥
दैवेन प्रेरितो नाम्ना जीवनायनसंज्ञकः ।
अतिथिर्भोजनमात्रवाञ्छया तत्र चागतः ॥७३॥
तावत् स श्रुतवान् राज्ये प्रकाशं मरणं द्वयोः ।
राजा तूर्णं दहनाय प्रेषयामास तौ तदा ॥७४॥
तथा जाते यतिः साधुर्ज्ञात्वा मृतौ सुतासुतौ ।
राजश्मशानपार्श्वेण निर्गतोऽयं तु वैष्णवः ॥७५॥
ज्ञात्वा देहौ नीलवर्णौ तूर्णमोषधगूटिकाम् ।
निष्कास्य सन्ददौ तयोरोष्ठयोश्च जलं ददौ ॥७६॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
मन्त्रमेनं ददौ ताभ्यां श्मशाने तावदेव तु ॥७७॥
उत्थितौ शान्तगरलौ स्वस्थौ रोगविवर्जितौ ।
'प्रभोनारायणस्वामिन् कृष्णनारायण प्रभो ॥७८॥
नामधुन्यं ददौ ताभ्यामाजीवयद् दयानिधिः ।
अथ राज्ञः क्रूरकर्म ज्ञात्वा ययौ नृपं प्रति ॥७९॥
राजन्नैतत् त्वया दुष्टं क्रूरं कृतं तु पापकम् ।
कन्याहत्या कुमारस्य हत्या प्रकारिता त्वया ॥८०॥
यतिश्चाहं विनिर्भीकस्त्वां दण्डयितुमीश्वरः ।
हाहाकारो वर्ततेऽद्य राज्ञा विषेण मारितौ ॥८१॥
किं राज्येन तव राजन् पापातिपापकारिणः ।
योग्यो नाऽसि सदा राजन् तवाऽऽयुः क्षीणतां गतम् ॥८२॥
याम्यलोके तव वासश्चिरं कष्टो भविष्यति ।
पश्य कन्याकुमाराभ्यां दत्तं शापं तु गोचरम् ॥८३॥
म्रियतां युवराजोऽयं मारको नौ विषेण वै ।
शापोऽयं मूर्तिमानास्ते तव प्राणहरस्त्विह ॥८४॥
इदानीं ते गतिर्नास्ति विना मृत्युं परा भुवि ।
हत्यापापं तव जातं मृत्युस्तेऽयमुपागतः ॥८५॥
इत्युक्ते तत्र चायातो यमदूतो भयंकरः ।
पाशहस्तो विकरालो वह्निं समुद्गिरन् मुखात् ॥८६॥
यतिं तं वैष्णवं नत्वा कन्याकुमाररक्षकम् ।
पाशेन पापिनं दुष्टं बबन्ध नृपतिं तु सः ॥८७॥
राजा पराधीनदेहो व्यजायत तदाऽबुधः ।
मूर्छामवाप सहसाऽऽक्रुशन् मुद्गरमारितः ॥८८॥
विषपाशैर्निबद्धश्च वियोजयितुं वर्ष्मणः ।
तावद्राजा हृदयेन यतिं तं शरणं गतः ॥८९॥
नारायणं तथा स्मृत्वा श्रीकृष्णशरणं गतः ।
क्षमामयाचत तत्र मूर्छितोऽपि निजात्मनि ॥९०॥
शोकं चकार बहुधा याम्यबद्धो वशंगतः ।
लोकैर्दृष्टस्तथा दूतो विकरालोऽद्रिसन्निभः ॥९१॥
प्रजाश्च राजवर्गाश्च संहितास्तत्र वै द्रुतम् ।
श्रुत्वा ज्ञात्वा परं कष्टं कन्याकुमारभूभृताम् ॥९२॥
अनिष्टं परमं ज्ञात्वा शोकं सर्वे प्रचक्रिरे ।
साधुमैश्वर्ययुक्तं तं ज्ञात्वा राज्ञी तु पादयोः ॥९३॥
नाम्ना नारायणीदेवी तुष्टाव साधुमीश्वरम् ।
'कृपानाथ कृपामूर्ते दयालो हितकृत् सदा ॥९४॥
हरितुल्य महायोगिन् मत्पतिं स्वस्थमावह ।
पुत्रिका रक्षिता चापि कुमारो रक्षितस्त्वया ॥९५॥
कृपयैनं पतिं मेऽपि प्ररक्षयाऽपि पापिनम् ।
पापाः पापं प्रकुर्वन्ति पुण्याः पुण्यं ददत्यपि ॥९६॥
पापं मत्स्वामिनश्चात्राऽगणयित्वाऽवनं कुरु ।
पापनाशो भवेद्येन मोक्षणं च तथा भवेत् ॥९७॥
तथा त्वं भगवन्नत्र कुर्वस्माकं हितावहम्' ।
एषाऽहं तव दास्यस्मि वाक्यं मे प्रतिपालय ॥९८॥
इत्युक्त्वा चरणौ धृत्वा साधोः राज्ञी जडाऽभवत् ।
जीवनायनसाधुः स कृत्वा हस्ते जलं तदा ॥९९॥
राज्ञ्या मुखे ददौ राज्ञी स्वस्थाऽभवत् सुखस्थिता ।
ततो गत्वा नृपस्यापि मुखे जलं ददौ स हि ॥१००॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
प्रभोनारायण श्रीश्वरीनारायण प्रभो ॥१०१॥
अनादिश्रीकृष्णनारायण श्रीकान्त सद्विभो ।
एवं मन्त्रं नामधुन्यं ददौ वारियुतं तदा ॥१०२॥
याम्यदूतश्च तं तूर्णं नृपं त्यक्त्वा ययौ ततः ।
राजा बुबोध सहसा यतिं नेमे तु रक्षकम् ॥१०३॥
कन्याघ्नं च कुमारघ्नं साधुर्याम्याद् ररक्ष तम् ।
बद्रिके च तदा सर्वे शोकं विहाय सर्वथा ॥१०४॥
प्रसन्नमानसा जाता जगृहिरे मनुं सतः ।
नामधुन्यं जगृहिरे सहस्रशो नराः स्त्रियः ॥१०५॥

वार्ता सा युद्धनगरे प्रासरद् वायुवेगिनी ।
हाहाकारसमा शान्तिस्तदा पुनरजायत ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने युद्धपतनराज्ञो युद्धराजस्य विषप्रयोगात् कन्याकुमारयोर्म्यृतत्वेऽपि जीवनायनसाधुयोगेन पुनर्जीवितता, शापेन युद्धराजस्याऽऽयुर्विनाशेन याम्यदूतागमो मृत्युश्च पापफलं, साधुकृतं रक्षणं चेत्यादिनिरूपणनामा चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

श्रीबद्रीप्रियोवाच—

ततस्तत्र तु किं जातं कन्याकुमारभूभृताम् ।
साधुना किं कृतं कृष्णनरनारायणप्रभो ॥ १ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि मानवास्तु सहस्रशः ।
लक्षशो नृपतेर्मृत्युं श्रुत्वा च जीवनं पुनः ॥ २ ॥
समाययुर्लोकितुं वै साधुं नृपं चमत्कृतिम् ।
विलोक्य जीवितं भूपं कुमारं च कुमारिकाम् ॥ ३ ॥
साधुजीवं कुमारं तं नाम्ना लोकास्ततोऽवदन् ।
साधुजीवनीं कन्यां तां लोकास्तत्रैव चाऽवदन् ॥ ४ ॥
ज्येष्ठं कुमारकं लोका निर्विषादं जगुस्तदा ।
तत्तन्नाम्ना प्रसिद्धास्तेऽभवन् प्रजासु वै द्रुतम् ॥ ५ ॥
या याः प्रजा नरा नार्यश्चाययुस्तत्र तें द्रुतम् ।
वीक्ष्य साधोश्चमत्कारं तदाश्रयं प्रचक्रिरे ॥ ६ ॥
सञ्जीवनायनः साधुः प्रजाभ्यो मन्त्रदीक्षणम् ।
प्रददौ नामभजनं कृष्णनारायणस्य च ॥ ७ ॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'कृष्णनारायण कृष्णनारायण नरायण ॥ ८ ॥
बालकृष्णाऽनादिकृष्णनारायण नरायण' ।
एवं मन्त्रं नामसंकीर्तनं ताभ्यो ददौ मुनिः ॥ ९ ॥
प्रजास्ता युद्धनगरे गृहे गृहे स्थले वने ।
उद्याने वाटिकायां च क्षेत्रेऽरण्ये च गोपुरे ॥१०॥
चत्वरे राजमार्गे च रथ्यायामापणेष्वपि ।
'कृष्णनारायण कृष्णनारायण नरायण ॥११॥
बालकृष्णाऽनादिकृष्णनारायण नरायण' ।
इत्येवं भजनं चक्रुः सन्महिमाढ्यमानसाः ॥१२॥
वैष्णवा लक्षशो जाता युद्धराज्ये नराः स्त्रियः ।
पुपूजुः स्वगुरुं सन्तं यतिं सञ्जीवनायनम् ॥१३॥
चन्दनैः पुष्पनिवहैः फलैः पत्रैस्तथाऽम्बरैः ।
भोजनैर्विविधैः पाथेयकैरहो प्रचक्रिरे ॥१४॥
सिषेविरे गुरुं श्रेष्ठं पापनाशं प्रलेभिरे ।
महापुण्यं च पावित्र्यमर्जयामासुरुत्तमम् ॥१५॥
सञ्जीवनायनः साधुरुपादिदेश तान् हितम् ।
संसारोऽयमसारोऽस्ति रागद्वेषमयो जनाः ॥१६॥
देहार्थे देहपुष्ट्यर्थे रागा द्वेषा भवन्ति हि ।
हिंसनं नाशनं चान्यदेहिनां कुरुते जनः ॥१७॥
अज्ञानेनैव रागेण द्वेषेण योजितेन वा ।
कालोऽस्ति श्रीपरब्रह्मयोजितः सृष्टिहारकः ॥१८॥
कालः करोति सकलं कालः कलयते सदा ।
कालेन तस्य चैवेह जगत् सर्वं प्रवाह्यते ॥१९॥
कालपाशं विहायैव चेद्गन्तुमिष्यतेऽक्षरे ।
कालकालं परेशानं भजन्तां मानवाः सदा ॥२०॥
संसारहेतु त्वज्ञानं संसारं वासनात्मकम् ।
विचार्य सम्परित्यज्याऽर्जयन्तु मोक्षकारणम् ॥२१॥
ज्ञानं भक्तिं सतां सेवां स्नेहपूर्वां शुभाश्रयाम् ।
निर्वृत्तिं परमां शान्तिं लभन्तां शाश्वतीं त्विह ॥२२॥
इन्द्रे चन्द्रे रवौ वन्हौ विघ्नेशे च नरायणे ।
परब्रह्ममयं ध्यानं चरन्तां पारमेश्वरम् ॥२३॥
चराचरं जगत्सर्वं त्यजन्तु बन्धकृद्धि तत् ।
चराचराणां चालयितारं गृह्णन्तु तद्व्रतम् ॥२४॥
आभ्यन्तरस्थितं कृष्णनारायणं श्रियः पतिम् ।
अर्चयन्तु सदा श्रीमन्नारायणं तदाश्रितान् ॥२५॥
नारायणे दत्तचित्तान् नारायणपरायणान् ।
साधून् संसेव्य दिव्येन पथा यान्त्वक्षरं पदम् ॥२६॥
आभ्यन्तरार्चकाः पूज्याः सेव्या दिव्यक्रियापराः ।
विरूपा विकृताश्चापि न निन्द्या ब्रह्मधामिनः ॥२७॥
आभ्यन्तरार्चकाः सर्वे न परीक्ष्याः कदाचन ।
तन्निन्दकास्तु दुःखार्ता भवन्त्येवाऽल्पजीवनाः ॥२८॥
ब्रह्मविदस्तोषणीयाः सेवया चाऽविशङ्कया ।
वर्णाश्रमविनिर्मुक्ता वर्णाश्रमसुसंस्थितैः ॥२९॥
सत्संगः सर्वथा दिव्यो मोक्षदः पापनाशकः ।
हत्यापापादिशान्त्यर्थं कर्तव्यो वै विजानता ॥३०॥
अधुना दिव्यसत्संगो विद्यते शार्करापुरे ।
लक्ष्मीनारायणसंहितायाः पारायणात्मकः ॥३१॥
तत्र नारायणः साक्षात् स्वतःप्रकाशरूपधृक् ।
श्रौतं सर्वं हि विज्ञानं भावयत्यद्य मोक्षदम् ॥३२॥
परं ब्रह्म परां लक्ष्मीं परं मोक्षं परं सुखम् ।
परं धर्मं परं ज्ञानं भावयत्येव शाश्वतम् ॥३३॥

प्रयाम्यहं तु तत्स्थानं मोक्षलाभाय चात्मनः ।
स लाभो न पुनर्भूमौ लोकानां संभविष्यति ॥३४॥
तत्र सन्तो मुनयश्च सिद्धाश्च चारणाः सुराः ।
गन्धर्वा यतयो विद्याधराश्च किन्नरा जनाः ॥३५॥
किंपुरुषा भूदेवाश्च महर्षयो नराः स्त्रियः ।
ब्रह्मचर्यपरा देवा दिव्या मुक्ताः समागताः ॥३६॥
येषां तु दर्शनात् पापध्वंसो भवति सर्वथा ।
येषां च सेवनात् सर्ववासनादग्धता भवेत् ॥३७॥
येषां प्रसादलाभेन दिव्यता दिव्यभाग्यता ।
येषां सत्संगमात्रेण मुक्तता परमा भवेत् ॥३८॥
येषां स्नेहेन सततं ब्रह्मानन्दार्जनं भवेत् ।
येषां समाश्रयेणैव ब्रह्मधामगतिर्भवेत् ॥३९॥
ये भजन्ति सदा कृष्णनारायणपरेश्वरम् ।
स्तुवन्ति प्रत्यहं श्रीमद्बालकृष्णं प्रभुम्पतिम् ॥४०॥
'कृष्णनारायण कृष्णनारायण नरायण ।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥४१॥
एवं रटन्ति नित्यं तं परमेशं हि साधवः ।
तेषां सत्संगलाभेन पुरुषार्थचतुष्टयम् ॥४२॥
नमस्तेभ्यः समस्तेभ्यः साधुभ्योऽस्तु मुहुर्मुहुः ।
नमः साधुस्वरूपाय श्रीकृष्णस्वामिने नमः ॥४३॥
नमः सर्वाधिपतये सर्वपूर्वाय चक्रिणे ।
नमोऽवतारपूज्याय सृष्टीनां प्रभवे नमः ॥४४॥
ज्ञानानां प्रभवे तस्मै कर्मणां प्रभवे नमः ।
ईश्वराणां प्रधाम्ने च देवानां प्रभवे नमः ॥४५॥
ऋषीणां च ग्रहाणां च नक्षत्राणां प्रभवे नमः ।
विद्युतां तैजसानां च मेघानां प्रभवे नमः ॥४६॥
वर्षाणां च भूधराणां नदीनां प्रभवे नमः ।
सर्वौषधीनां भक्ष्याणां तृप्तीनां प्रभवे नमः ॥४७॥
नमो धर्मादिरूपाणां जनयित्रे परात्मने ।
तस्मै रसानां प्रभवे रत्नानां प्रभवे नमः ॥४८॥
कल्पादीनां प्रभवे च वार्तानां प्रभवे नमः ।
शिल्पानां प्रभवे सर्वविद्यानां प्रभवे नमः ॥४९॥
व्रतानां प्रभवे तस्मै मन्त्राणां प्रभवे नमः ।
सिद्धीनां प्रभवे सर्वौजसां च प्रभवे नमः ॥५०॥
लक्ष्मीनां पतये तस्मै श्रीस्वामिने नमो नमः ।
नमस्तस्मै वरदाय प्रजेशाय महात्मने ॥५१॥
अणवे महते तस्मै सर्वगाय नमो नमः ।
नमो यज्ञस्वरूपाय नमः पूजात्मकाय च ॥५२॥
नमः यज्ञाधाराय माधवीष्टाय ते नमः ।
नमस्तीर्थाय देवाय वेदिशीलाय ते नमः ॥५३॥
नमो वीर्याय कामाय सदानन्दाय ते नमः ।
नमः श्रीबालकृष्णायाऽभयदानाय ते नमः ॥५४॥
वरदाय वरेण्याय नमस्तेऽप्रतिमाय च ।
हव्यकव्यादिरूपाय मेध्याय विष्णवे नमः ॥५५॥
पंक्तिपावनरूपाय नारायणाय ते नमः ।
नमः शुद्धाय बुद्धाय सर्वनेत्राय ते नमः ॥५६॥
ह्रस्वाह्रस्वस्वरूपाय दम्पतीरूपिणे नमः ।
त्यागिने च सुवर्णाय सौम्यरूपाय ते नमः ॥५७॥
नमः कान्ताय श्रीशाय वल्लभार्याय ते नमः ।
वत्सलायोपजीव्याय मृत्युघ्नाय च ते नमः ॥५८॥
अप्रमेयाय बृहते कृपालाय नमो नमः ।
रक्षोघ्नाय विषघ्नाय भक्तवेद्याय ते नमः ॥५९॥
निर्विशेषाय हृद्याय मोक्षदाय च ते नमः ।
नमो गोपालबालाय कंभराश्रीभवाय च ॥६०॥
कामदाय च युवतीसेविताय नमो नमः ।
नमो वृद्धातिवृद्धाय पुराणाय च ते नमः ॥६१॥
लोकधात्री त्वियं भूमिर्मूर्तिर्दिव्या हि ते मता ।
द्यौः सर्वं मस्तकं यस्य पातालं पादसंस्थितम् ॥६२॥
सृष्टयश्चोदरे यस्य तस्मै कृष्णाय ते नमः ।
अनादिश्रीकृष्णनारायणाय परमात्मने ॥६३॥
कुंकुमवापिकाक्षेत्रवासबालाय ते नमः ।
सर्वहृत्सु निवासायाऽन्तर्यामिणे च ते नमः ॥६४॥
नारायणस्तवेनैवं ये स्तुवन्त्यात्मनां पतिम् ।
शृण्वन्ति स्तवनं चैवं तेषां भाग्योदयो भवेत् ॥६५॥
भजनीयो रटनीयः सेवनीयः प्रियेश्वरः ।
सर्वकर्मसु विश्वात्मा स्नेहनीयः प्रियः पतिः ॥६६॥
प्राणपतिः पालनीयो रक्षणीयो गुहान्तरे ।
न कदाचिन्मोचनीयः शाश्वतानन्दलिप्सुभिः ॥६७॥
'ॐ नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
इत्युक्त्वा बद्रिके साधुर्जीवनायन एकलः ॥६८॥
शर्करानगरं गन्तुं समियेष तदा जनाः ।
नृपादयः सह यातुं सज्जाः प्रजास्तदाऽभवन् ॥६९॥
नरा नार्यो बालबाला वृद्धा युवान इत्यपि ।
संहिताश्रवणार्थं ते सज्जा विनिर्ययुर्द्रुतम् ॥७०॥
संघयात्रा चातिदीर्घा लक्षाधिमानवात्मिका ।
अभवच्छ्रीबद्रिके वै श्रीकृष्णलग्नमानसा ॥७१॥

कन्या साधुजीवनी सा कुमारः साधुजीवनः ।
निर्विषादः कुमारो यो ज्येष्ठो यो नागविक्रमः ॥७२॥
युद्धराजः स्वयं चापि राज्ञी नारायणी सती ।
दासी प्रभावतीदेवी घटमालाभिधाऽपरा ॥७३॥
दासा दास्यः सहस्रं च प्रजास्तु लक्षशो जनाः ।
निर्ययुः संहितां श्रोतुं मुक्त्यर्थं च समुत्सुकाः ॥७४॥
'कृष्णनारायण कृष्णनारायण नरायण ।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥७५॥
नरा नार्यो वृद्धबालाः कुर्वन्तो धुन्यकीर्तनम् ।
मार्गे यान्ति बद्रिके ते सर्वे ब्रह्मपरायणाः ॥७६॥
सिन्धुघाटं समासाद्य सस्नुस्तीर्थे पपुर्जलम् ।
संहितायाः मण्डपं ते ययुः कीर्तनघोषिणः ॥७७॥
नेमुश्च दण्डवद्वक्तारं तं स्वतःप्रकाशकम् ।
जगृहुस्ते प्रसादस्य वारि कृष्णपदामृतम् ॥७८॥
उपदा निदधुश्चाग्रे पुपूजुः संहिताहरिम् ।
जगृहुस्तत्र मन्त्रं च परब्रह्मसमीपतः ॥७९॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
कथाश्रवणं चक्रुश्च पुपूजुर्लोमशं मुनिम् ॥८०॥
सतां सेवां सतीनां च सेवां चक्रुर्निःसंशयाः ।
मासमेवं कथासेवां चक्रुस्तावत् समाहिताः ॥८१॥
युद्धराजस्य पापं वै विषदानस्य यद्ध्यभूत् ।
कन्याकुमारघातस्य समूलं तद्व्यपोहितम् ॥८२॥
अन्येषामपि पापानि प्रज्वलितानि सर्वशः ।
विशुद्धाः पावनाः सर्वे जाता नृपप्रजादयः ॥८३॥
वासनाः श्रीकथावार्ताश्रवणाद् विलयंगता ।
साधूनां सेवनाद् दिव्यभावाः सर्वेऽभवँस्तदा ॥८४॥
प्रतीक्षन्ते विरागस्था मुक्तिं श्रीपारमेश्वरीम् ।
राजा धारणया ध्यानं लब्धवान् परमात्मनि ॥८५॥
राज्ञी चापि तथा ध्यानं लब्धवती प्रियेश्वरे ।
दासी लब्धवती ध्यानं त्रायणे माधवीपतौ ॥८६॥
वृद्धाश्चान्ये नरा नार्यो बभूवुर्ध्यानयोगिनः ।
फाल्गुनशुक्लैकादश्यां मुक्तीक्षका हि तत्पराः ॥८७॥
आसन् गन्तुं महामुक्तिं तदा राजाऽग्रजन्मने ।
ज्येष्ठकुमारकायैव नागविक्रमनामिने ॥८८॥
लिखित्वा समुकुटं वै राज्यधिष्ण्यं तदा ददौ ।
कारयित्वा महायज्ञसंकल्पं सार्वमेधिकम् ॥८९॥
अथ कन्या कुमारौ द्वौ साध्वी साधू बभूवतुः ।
त्यागिनौ सर्वदा शिष्यौ स्वतःप्रकाशयोगिनः ॥९०॥
अन्ये नार्यो नराश्चापि जगृहुस्त्यागिदीक्षणम् ।
सहस्रशोऽपरे भक्तास्त्यागाश्रमं च जगृहुः ॥९१॥
शृणु बद्रीप्रिये तत्राऽऽश्चर्यं जातं परं महत् ।
विमानानि कानकान्यागतानि व्योममार्गतः ॥९२॥
पद्मालक्ष्मीरमाराधामाणिक्यामाधवीस्त्रियः ।
मुक्तमुक्तानिकापार्षदाश्च तिष्ठन्ति येषु वै ॥९३॥
प्रत्येकं राजते कृष्णनारायणोऽपि सुन्दरः ।
तदा व्योम ब्रह्मधामतुल्यं तैस्तु ह्यजायत ॥९४॥
कृत्वा कृष्णो दिव्यदेहान् नेतुं योग्यान्निजाश्रितान् ।
विमानेषु स्थापयित्वा सहस्राधिकमानवान् ॥९५॥
ययौ धामाऽक्षरं नैजं पश्यतां सर्वदेहिनाम् ।
एकं वापि न वै वर्ष्म तदाऽभूच्छवरूपकम् ॥९६॥
भौतिका अपि देहास्ते दिव्यरूपास्तदाऽभवन् ।
तैरेव वर्ष्मभिः सर्वे ययुर्विमानसंस्थिताः ॥९७॥
अहो लीला हरेर्बद्रि ह्यगम्या तर्कवर्जिता ।
मायां कुर्यान्निजं धाम तदा का वार्तिकाऽपरा ॥९८॥
अथाऽन्ये ये नरा नार्यो बालाश्च बालिकाश्च वै ।
त्यागाश्रमे स्थिताः सर्वे तदन्ये तु गृहाश्रमाः ॥९९॥
ययुर्नैजान् शुभान् देशान् युद्धराज्यनिवासिनः ।
एवं बद्रीप्रिये तत्र चमत्कारोऽभवन्महान् ॥१००॥
नागविक्रमराजाऽपि ददौ दानान्यनेकशः ।
भोजनानि विचित्राणि भूषाम्बराणि वै तदा ॥१०१॥
कृत्वा श्रीसंहितापूजां नत्वा गुरुमृषिं तथा ।
सतो नत्वाऽऽज्ञया राज्यं निजं समाययौ सुखम् ॥१०२॥
कन्याघ्नस्य कृता मुक्तिः शरणे पतितस्य वै ।
साधोः सेवारतस्यापि कुमारघ्नस्य बद्रिके ॥१०३॥
अनादिश्रीकृष्णनारायणेन परमात्मना ।
दयालुना कृता मुक्तिर्मुनिना जीवनेन च ॥१०४॥
पठनाच्छ्रवणादस्य स्मरणाच्चिन्तनादपि ।
गुणग्राहाद् भुक्तिमुक्ती भवेतां नात्र संशयः ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीजीवनायनेन युद्धराजेन च समं राष्ट्रीयप्रजादीनां संहितास्थानगमनं कथाश्रवणं, युद्धराजादीनां मोक्षणम्, कन्यकादीनां त्यागित्वम्, इतरेषां युवराजेन समं राष्ट्रं प्रत्यागमनमित्यादिनिरूपणनामा पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथामन्यां सुपावनीम् ।
शर्करानगरे तत्र त्वेकाऽऽसीत् कुट्टनी सखी ॥ १ ॥
वारांगनानां मैत्र्याद्या व्यवायिनां नियोजिनी ।
योषितां युवतीनां कन्यकानां शीलनाशिनी ॥ २ ॥
नाम्ना साऽनङ्गवल्लीति शूद्रा सा निर्धना ह्यति ।
व्यवाययोगलब्धेन निर्वाहं प्रकरोति सा ॥ ३ ॥
पापिनी पापरूपा सा जानाति ह्यौषधान्यपि ।
ज्वरनाशकरं चौष्ण्यनाशकृद् रोगनाशकृत् ॥ ४ ॥
गुप्तेन्द्रियादिरोगाणां त्वौषधं वेत्ति सा सखी ।
गर्भस्रावौषधं भ्रूणघातौषधं च वेत्त्यपि ॥ ५ ॥
अत एव व्यवायादौ निर्भया योगदायिनी ।
पापज्ञानविहीनाऽऽसीज्जडा कामातिकामिनी ॥ ६ ॥
स्वयं दुष्टा परा दुष्टाः सम्पादयति कर्मणा ।
एवं तया तु बह्वीनामधवानां समुद्भवाः ॥ ७ ॥
गर्भा निपातिता बीजनाशाश्चापि कृता मुहुः ।
पक्वबाला जन्मयोग्या औषधैर्मारिता ह्यपि ॥ ८ ॥
एवं सा बालहत्याऽघा शुश्राव संहिताकथाम् ।
तया ज्ञातवती पापं बालहत्यादिजं महत् ॥ ९ ॥
दुःखं ज्ञानवती चापि याम्यजं दुःसहं सखी ।
स्वस्या अपि प्रतिगर्भे पतनं दण्डमुल्बणम् ॥१०॥
ज्ञात्वा शुशोच बहुधा पापान्यवर्तताऽपि सा ।
प्रायश्चित्तस्य जिज्ञासां चकार सद्गुरोस्ततः ॥११॥
एकदा श्रीलोमशाऽग्रे निवेदयितुं सा ययौ ।
कथान्ते लोमशं गत्वा पूजयित्वा तु दीनवत् ॥१२॥
कृत्वा तु दण्डवद्योग्यं जग्राह चरणौ मुनेः ।
पादप्रक्षालनं कृत्वा लोमशस्य महात्मनः ॥१३॥
पपौ पादामृतं सर्वं शिरो धृत्वा तु पादयोः ।
जगाद कृत्यं पापादि सर्वं कपटवर्जितम् ॥१४॥
कृपालुर्लोमशः श्रुत्वा ब्रह्मकूर्चव्रतं ददौ ।
पलाशपत्रप्रभृतिक्वाथं च पञ्चगव्यकम् ॥१५॥
पातुमाज्ञां ददौ तस्यै सा चकार यथोदितम् ।
मासान्ते सा शुद्धदेहा मन्त्रं जग्राह लोमशात् ॥१६॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'कृष्णनारायण कृष्णनारायण नरायण ॥१७॥
बालकृष्णाऽनादिकृष्णनारायण रमायण' ।
मन्त्रमेवं भजनं च जग्राह लोमशान्मुनेः ॥१८॥
मालाशतं कृष्णनारायणनाम्नाऽप्यवर्तयत् ।
नित्यं स्नात्वा सिन्धुनद्या जले पाति पदामृतम् ॥१९॥
नित्यं कृष्णप्रसादं च भक्षयत्येव भावतः ।
साधूनां पात्रशेषं च भक्षयत्यपि पावनम् ॥२०॥
साधुवासेषु नित्यं सा मार्जनं पात्रमञ्जनम् ।
करोति सेवनं गत्वा गात्रसंवाहनं सताम् ॥२१॥
धूलिभिर्मार्जिताभिश्चोद्धूलनं निजवर्ष्मणि ।
करोति भावतोऽनङ्गवल्लिका पापनुत्तये ॥२२॥
धुन्यं च कीर्तनं नित्यं करोति सदसि स्थिता ।
ददाति फलपुष्पादि संहितावाचकाय च ॥२३॥
श्रीकृष्णाय सतीसद्मयो लोमशाय महात्मने ।
धनं तु टब्बुकमात्रं नित्यं ददाति चक्रिणे ॥२४॥
अक्षतानां नित्यमुष्टिं वाचकाय ददाति सा ।
एवं कृतवती नित्यं भक्त्या साऽनङ्गवल्लिका ॥२५॥
कथां शुश्राव बहुधा सर्वपापविशोधिनीम् ।
सर्वाऽज्ञानहरां दीर्घतमोघ्नीं ज्ञानदायिनीम् ॥२६॥
मासश्चास्या व्यतीयाय कथासेवादिकर्मभिः ।
सा ददर्श ततः स्वप्ने प्रभुं कृष्णं समागतम् ॥२७॥
स्पृशन्तं स्वां हसन्तं स्वां हासयन्तं श्रियः पतिम् ।
वदन्तं स्वां विशुद्धाऽसि नयन्तं स्वां निजं प्रति ॥२८॥
क्षणमेवं प्रदर्श्यैव भगवान् माधवीपतिः ।
अदृश्यतां ययौ साऽपि जजागार समुत्सुका ॥२९॥
उत्थाय सहसा ब्राह्मे मुहूर्ते तु निजालये ।
तूर्णं सा परितः कृष्णं मार्गयामास भामिनी ॥३०॥
प्रेमविह्वलतां प्राप्ता यदा लब्धवती न तम् ।
तदा मुग्धा द्रुतं स्नात्वा पूजां कृत्वा परात्मनः ॥३१॥
ययौ तूर्णं संहितायाः पूजार्थं कुंकुमाऽक्षतैः ।
ब्राह्मे मुहूर्ते नारीणां प्रवाहस्तुमुलः प्रगे ॥३२॥
सततं संहितायास्तु पूजने वर्तते सदा ।
तन्मध्ये सा गता शीघ्रं ध्यात्वा स्वाप्नं प्रियं प्रभुम् ॥३३॥
पूजयित्वा ततस्तूर्णं समुत्सुका तु लोमशम् ।
गत्वा जगाद सर्वं तत् प्रसन्नमानसा सखी ॥३४॥
श्रुत्वा श्रीलोमशः प्राह शुद्धा त्वं भक्तियोगिनी ।
कृष्णप्रसन्नतां प्राप्ता वर्तसेऽद्य रमा यथा ॥३५॥
भव सज्जा धाम गन्तुं मोक्षो तेऽत्र भविष्यति ।
सर्वं पापं गतं तेऽद्य कृष्णो यद्गोचरोऽभवत् ॥३६॥
ततः सापि जगादैनं गुरुं श्रीबद्रिके द्रुतम् ।
सज्जाऽस्मि किन्तु भगवन्नास्ते मे हृदि चिन्तनम् ॥३७॥

मम योगेन या नार्यो युवत्यो धववर्जिताः।
गर्भपातादिदोषाढ्या भ्रूणहत्यान्वितास्तथा ॥३८॥
तासां कल्याणमिच्छामि पापनाशनपूर्वकम्।
कृपा तेऽस्ति तथा चाज्ञा कृपालोस्ते गुरोरिह ॥३९॥
ताः सर्वास्त्वच्छरणं चानयामीह प्रमुक्तये।
विना नारायणं कृष्णं विना च सद्गुरुं क्वचित् ॥४०॥
पापानां नैव निस्तारो योषितां स्यात् कदाचन।
विना वैष्णवभक्तानां शरणं नैव रक्षणम् ॥४१॥
विना श्रीकृष्णभक्तानां सेवनं नाऽघमर्षणम्।
विना सतां प्रसादं न पापिनां वासनाक्षयः ॥४२॥
विना चेतनतीर्थे न पापात्मनां विशोधनम्।
नारीणां दुर्लभा शुद्धिर्गुरो लोकेऽत्र मायिके ॥४३॥
कामक्षेत्रे तु निष्कामिसतां सेवा हि शुद्धिदा।
या नारी वाञ्छति शुद्धिं मुक्तिं ब्राह्मीं परं पदम् ॥४४॥
तया सेव्या हरेः सन्तो निष्कामाः कृष्णमूर्तयः।
सतां प्रसेवया कामक्रोधलोभादिनाशनम् ॥४५॥
वासनानां विनाशश्च भवेन्मे वै यथाऽभवत्।
तस्माद् गुरो समिच्छामि मत्सखीनां विशोधनम् ॥४६॥
प्राप्ते कृष्णे गुरौ दिव्ये त्वात्ममोक्षः पुरो मतः।
कृष्णगुर्वोः कृपया तु चात्मीयानां मतोऽपि सः ॥४७॥
आत्मनस्तारणे पुण्यं ततोऽयुतं परस्य तु।
योषितां तारणे तत्र पुण्यं कोटिगुणं मतम् ॥४८॥
अनाथानां तारणे तु ब्रह्माण्डोद्धारजं हि तत्।
अनाथा योषितो यास्ता मत्पाशे पतिता गुरो ॥४९॥
यावत्तासां तु नोद्धारस्तावन्मे नरकं भवेत्।
पातितस्योदयं कृत्वा क्षन्त्वाऽपराधमस्य च ॥५०॥
निर्ऋणं तु निजं कृत्वा ततो गम्यं दिवं सुखम्।
इत्येवं मे गुरो चास्ते मतिर्नारीप्रमोक्षिणी ॥५१॥
ताः सर्वास्तमसि स्थाप्य कथं मे मोक्षणं भवेत्।
सखीत्वं तु तदेवाऽत्र समलाभो यदात्मनोः ॥५२॥
स्वार्थमात्रस्तु लाभादिर्नरकं कपटान्वितम्।
तन्मया सर्वथा तासां कर्तव्यं मोक्षणं प्रभो ॥५३॥
पुनः क्षणो दिव्यगतिर्नागमिष्यति सद्गुरो।
इत्युक्त्वा सा विरराम बद्रिकेऽनङ्गवल्लरी ॥५४॥
लोमशोऽपि शुभं मत्वा कृपया तां जगाद ह।
योग्यं वदसि कल्याणि श्रेष्ठं विचार्यते त्वया ॥५५॥
स्वार्थस्य साधकः प्राणी नारकी नात्र संशयः।
स एव काकः सर्पश्च सूकरः स्वार्थसाधकः ॥५६॥

त्वं परार्थपरा साध्वी द्वयोः कल्याणकारिणी।
परकल्याणकर्त्र्यास्तु स्वं कल्याणं प्रजायते ॥५७॥
अवश्यं परलोकौस्त्वं जिताऽसि चोपकारिणी।
यथेष्टं वर्तमाना या चापि पापातिपापिनी ॥५८॥
परोपकारधर्मा चेत् स्वर्गं विन्दति सा सती।
परोपकारः पुण्यार्थः परपीडा तु पापदा ॥५९॥
परपीडानाशयित्री मुच्यते दुःखबन्धनात्।
परेषां सुखदो लोकः स्वर्गे लोके महीयते ॥६०॥
अवश्यं चानङ्गवल्लि! समानय सखीजनान्।
ताभ्यो मन्त्रं प्रदास्येऽत्र दास्ये नामजपं तथा ॥६१॥
व्रतं दास्ये ब्रह्मकूर्चं करिष्ये पापनाशनम्।
पावनास्ताः करिष्येऽहं मोक्षभागा विशुद्धिगाः ॥६२॥
इत्येवं बद्रिके प्रोक्ता लोमशेन महर्षिणा।
शर्करानगरं तूर्णं गत्वा यत्र च यत्र च ॥६३॥
युवत्यो धवहीनाश्च व्यवायव्यवसायिकाः।
गर्भपातभ्रूणहत्यादोषवत्योऽभवन् पुरे ॥६४॥
अनङ्गवल्लीसंगिन्यस्तास्ताः साऽनङ्गवल्लरी।
बोधयामास पापानां नुत्तये श्रेयसे तथा ॥६५॥
ताश्च विश्वासमापन्ना अनङ्गवल्लिकायुताः।
स्नात्वा पूजोपसामग्रीर्नीत्वा गुर्वग्रमागताः ॥६६॥
युवत्यस्ताः शतं बद्रि विधवा गर्भपातिकाः।
कन्यकाश्च शतं गर्भहन्त्र्योऽपि यौवनान्विताः ॥६७॥
आगताः श्रीलोमशाग्रे पापभयेन शोकिताः।
सलज्जाः स्वसखीवाक्यविश्वस्ता आययुर्मुनिम् ॥६८॥
पादजलं पपुः सर्वा लोमशस्य ततः कथाम्।
शुश्रुवुस्तास्ततो ब्रह्मकूर्चं व्रतं च जगृहुः ॥६९॥
पूजां ताः संहितायाश्च प्रचक्रुर्वाचकस्य वै।
प्रदक्षिणं स्तुतिं चक्रुः क्षमां ययाचिरे ततः ॥७०॥
मन्त्रं जगृहुर्मुनितो नामधुन्यं प्रजगृहुः।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥७१॥
'कृष्णनारायण कृष्णनारायण नरायण।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥७२॥
एवं मन्त्रं च भजनं प्राप्य तथा समाचरन्।
स्नात्वा तीर्थे सदा ताश्च शुश्रुवुः संहिताकथाम् ॥७३॥
एवं तासु समस्तासु वर्तमानासु बद्रिके।
पूतासु जायमानासु सतां सेवापरासु च ॥७४॥
आज्ञापरासु सर्वासु लोमशस्य प्रसन्नता।
अभवल्लोमशस्ताभ्यो ददौ कृष्णप्रसादजम् ॥७५॥

स्वभुक्तं फलमेवाऽपि मिष्टान्नं निजपात्रजम् ।
साधुप्रसादमासाद्य बुभुजिरेऽतिभावतः ॥७६॥
तावत्तासां शरीरेभ्यः कृष्णाः काका विनिर्ययुः ।
सर्वे ते गर्भहत्याख्या भ्रूणहत्यास्तथाऽभवन् ॥७७॥
उड्डीयोड्डीय चाकाशे निपेतुः सिन्धुसागरे ।
विनाशं सहसा प्रापुः काकात्मकान्यघानि वै ॥७८॥
स्त्रियस्ताः शुद्धतां प्राप्ता भजन्ति स्म नरायणम् ।
पारायणं भावभिन्नाः शृण्वन्त्वेकाग्रमानसाः ॥७९॥
तावदनंगवल्लीं तु नेतुं कृष्णः समाययौ ।
फाल्गुनस्य तु पूर्णायां तिथौ कृष्णनरायणः ॥८०॥
विमानेनाऽऽस्थितो भूमावनंगवल्लिकापुरः ।
प्राह तां तु समागन्तुं मोक्षार्थे तु विमानके ॥८१॥
तावत् सा दयया प्राह कृष्णनारायणप्रभो ।
द्वे शते मम संगिन्यश्चैताः स्त्रियोऽघभावनाः ॥८२॥
कथालोमश्रयोगेन निष्पापा यदि सन्ति चेत् ।
नेतव्यास्तास्तव धामाऽक्षरं दिव्या विधाय ताः ॥८३॥
नान्यथाऽहं कृष्णकान्त मोक्षमिच्छामि चैकला ।
उद्धर ताः समस्ता वै ततश्चोद्धर मामपि ॥८४॥
श्रुत्वा चातिप्रसन्नोऽभूद् बालकृष्णः प्रभेश्वरः ।
कृपालुर्भगवानाहाऽनंगवल्लि शुभं तव ॥८५॥
याः सर्वा विधवास्तास्तु नेष्ये मेऽक्षरमुत्तमम् ।
त्वया साकं विमानेन करिष्ये कमलासमाः ॥८६॥
यास्तु सन्ति कन्यका वै तासां मोक्षोऽधुना नहि ।
ताः सर्वाः स्वजनकस्य गृहे वसन्तु निर्भयाः ॥८७॥
पूता निष्पापदेहास्ताः कृपया भाविता मया ।
विवाह्य ताश्च गार्हस्थ्यमनुभूय ततः परम् ॥८८॥
आयुषोऽन्ते मम धाम चायास्यन्ति न संशयः ।
इत्युक्त्वा श्रीकृष्णनारायणः पस्पर्श पाणिना ॥८९॥
सर्वास्तास्तत्र तत्काले संहिताश्रवणाऽऽस्थिताः ।
पावयित्वा समस्तास्ता विधवास्तु शतं तदा ॥९०॥
दिव्यदेहा विधायैव विमाने स्वेऽध्यरोहयत् ।
कन्यकास्तु समाज्ञाप्य स्थातुं पितृगृहे तदा ॥९१॥
विमानेन ययौ कृष्णो धामाक्षरं निजं महत् ।
सर्वेषां पश्यतां बद्रि साऽनंगवल्लिका अपि ॥९२॥
दिव्यदेहाऽभवत्तूर्णं दिव्या दिव्यविभूषिता ।
विमानं समधिरुह्य ययौ धामाऽक्षरं हरेः ॥९३॥
जयकारो महानासीत् पुष्पवृष्टिरभूत्तदा ।
अधमोद्धारके कृष्णे माहात्म्यमतुलं ह्यभूत् ॥९४॥
बद्रिके गर्भघातिन्यः कथाश्रवणमात्रतः ।
पूततां ता गताः सर्वा गुरोर्बलात्प्रमोचिताः ॥९५॥
अहो बलं गुरोः श्रेष्ठतमं श्रीभगवानपि ।
यदग्रे निर्बलो भूत्वा करोति सद्गुरोर्वचः ॥९६॥
वीक्ष्य श्रुत्वा तु माहात्म्यं व्यवायदोषनाशकम् ।
अन्या अपि तदा नार्यः कृष्णाश्रयं व्यधुर्मुदा ॥९७॥
स्वदोषान् क्षपयामासुरनन्यभक्तितत्पराः ।
मन्त्रं ता रटयामासुर्नामकीर्तनमाव्यधुः ॥९८॥
सतां सेवां प्रचक्रुश्च दानपुण्यं प्रचक्रिरे ।
प्रपत्तिं जगृहुश्चापि पवित्रत्वं प्रपेदिरे ॥९९॥
दिव्यभावाः शीलपरा धर्मदार्ढ्यास्ततोऽभवन् ।
अनादिश्रीकृष्णनारायणभक्तियुताः सदा ॥१००॥
एवं श्रीबद्रिके देवि प्रभुःकृष्णो हरिः स्वयम् ।
चकार मोक्षणं तासां प्राप्तकाले दयानिधिः ॥१०१॥
पठनाच्छ्रवणादस्य स्मरणाच्चिन्तनादपि ।
गुणग्राहाद् वर्तनाच्च स्वर्गो मोक्षो भवेद् ध्रुवः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने शर्करापुरवासिन्याः व्यवायकारयित्र्या गर्भभ्रूणबालघातिन्या अनंगवल्ल्याः तत्सखीशतद्वयस्यापि च संहिताश्रवणादिना मन्त्रव्रतसेवाभिश्च पापनिर्मुक्तिर्मोक्षणं चेत्यादिनिरूपणनामा षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

श्रीनरनारायण उवाच—

शृणु बद्रिप्रिये देवि कथां षण्ढव्रजस्य तु ।
षण्ढव्रजाभिधः षण्ढोऽभवच्छ्रीशर्करापुरे ॥ १ ॥
शतषण्ढगुरुः सोऽयं बहुचरात्तदीक्षणः ।
नारीवेषधरो नैव स्त्रीलिङ्गो न पुल्लिङ्गकः ॥ २ ॥
कामधातुविहीनोऽपि वासनाकामसंभृतः ।
वर्तते दीक्षितः षण्ढो षाण्ढीदीक्षान्वितः सदा ॥ ३ ॥
भिक्षया जीवनं नैजं राजवृत्त्या तु सर्वथा ।
तथाऽन्यक्लिष्टवृत्त्याऽपि निर्वहत्येव सर्वदा ॥ ४ ॥
माहात्म्यं तैः श्रुतं तत्र कथाया मोक्षदं शुभम् ।
जनेभ्यो मानवेभ्यश्च सर्वपापविनाशकम् ॥ ५ ॥
पुनर्जन्माऽदर्शनं च कथाश्रवणतो भवेत् ।
पूर्वपापानि सर्वाणि नश्यन्त्येव न संशयः ॥ ६ ॥
भस्मीभवन्ति चान्यानि ह्येतजन्मार्जितान्यपि ।
अपि मानवजन्मा यः कथां नैव शृणोति च ॥ ७ ॥

आत्ममोक्षं नाऽऽर्जयति स षण्ढः पशुरेव सः ।
अपि राजा धनी श्रेष्ठी प्रजापालः प्रजाग्रगः ॥ ८ ॥
तथाप्यात्मकृते मोक्षं कुर्यान्न स तु गोखरः ।
अपि षण्ढः पशुः पक्षी नारी प्रमत्त इत्यपि ॥ ९ ॥
आत्मश्रेयःकरः श्रेष्ठः श्वपचोऽपि शठोऽपि च ।
मोक्षः साध्यः परंश्रेयः पुरुषार्थः परः स वै ॥१०॥
साधनेषु समस्तेषु सत्सु सत्सु स्थितेषु च ।
मोक्षो न साधितो येन स कीटः सूकरोऽपि सः ॥११॥
धर्मार्थकाममोक्षा वै पुरुषार्था भवन्ति हि ।
धर्ममर्थं च कामं च प्रपाल्याऽपि यथोचितान् ॥१२॥
अन्ते त्यक्त्वा बन्धकृतो मोक्षमिच्छन्ति मानवाः ।
महर्षयः पूर्वजास्ते तथा कुर्वन्ति नान्यथा ॥१३॥
अन्येऽपि चात्मवेत्तारः प्रवर्तन्ते क्रमात्तथा ।
सन्यासिनस्तु तांस्त्यक्त्वा मोक्षमिच्छन्ति साधवः ॥१४॥
राजानोऽपि वनं प्राप्य कामं दग्ध्वा तपःपराः ।
निष्कामाः सम्प्रजायन्ते मोक्षं प्रयान्ति वै ततः ॥१५॥
धातुदोषमयश्चास्ते वासनानां प्रवर्तकः ।
स चेन्नैव भवत्येव देहे सा तु कृपा प्रभोः ॥१६॥
एवं मत्वा हरिं श्रित्वा साधुं नत्वा प्रमोक्षणम् ।
प्रसेव्य सत्पुरुषांश्च गुरुं भक्त्या प्रसाद्य च ॥१७॥
अर्पयित्वा समस्तं स्वं चात्मानं गुरवेऽपि च ।
कृत्वा मायापाशहीनं निर्मलं वासनोज्झितम् ॥१८॥
दिव्यभावं दिव्यदृष्टिं दिव्यं कृत्वा समस्तकम् ।
कृष्णविमानमारुह्य गन्तव्यं परमं पदम् ॥१९॥
दासो भूत्वा हरेर्दासी वैकुण्ठे कृष्णवर्तिनी ।
गोलोके चाऽमृते चाव्याकृते ब्रह्मनिवासने ॥२०॥
श्रीपुरे भगवद्धाम्नि त्वास्वादयेद्धरेः रसम् ।
अश्नुवीत सदा कृष्णनारायणप्रसादकम् ॥२१॥
स एवं प्राप्तकैवल्यो नरो वा योषिदेव वा ।
षण्ढो वा तिर्यगेवापि स एव पुरुषो मतः ॥२२॥
पुरुषार्थो महान् मोक्षो यस्तेन प्रसाधितः ।
अर्थवान् पुरुषो लोके पुरुषस्याऽर्थ इत्यपि ॥२३॥
मिथो वै वर्तते संसर्गस्तयोः सार्थकः सदा ।
एवं नैव विजानाति पुमर्थान्न तनोत्यपि ॥२४॥
वृथा पुरुषगर्वाढ्यः षण्ढः स नैव संशयः ।
षण्ढता सा सदा त्याज्या मायया निर्मिता पुरा ॥२५॥
जीवानां मोक्षमार्गादै पातिनी चात्मघातिनी ।
सेव्याः सन्तः कथाः श्रव्याः प्रासव्यः श्रीपतीश्वरः ॥२६॥
परिहार्यं पुनर्जन्म षण्ढाख्यं तरुषण्डवत् ।
पुत्रपौत्रादिसम्पन्नो यदि मोक्षं प्रविन्दति ॥२७॥
वृक्षषण्डस्वरूपः सः साण्डोऽपि षण्ढ एव सः ।
विचार्येत्थं बद्रिके ते षण्ढा गुरुसमन्विताः ॥२८॥
षण्ढव्रजं पुरस्कृत्य कल्याणार्थमुपस्थिताः ।
आययुः श्रीकथास्थानं भक्तिभावसमन्विताः ॥२९॥
उपदाश्च करे कृत्वा पूजोपसाधनान्यपि ।
कृतस्नानाः शुद्धिमन्तो भवन्तः कृष्णमुत्तमम् ॥३०॥
कीर्तयन्तः स्वामिकृष्णमाधवीश्रीनरायण ।
नारीश्वरनरावासबहुचराधिपायण ॥३१॥
एवं सतालिकं गीतं गायन्तस्ते कथास्थलम् ।
ययुः षण्ढाः समस्ता वै दूराजेमुर्हि मण्डपम् ॥३२॥
वर्तुलं ते तदा क्लृप्त्वा रासलीलां प्रचक्रिरे ।
रासं सतालकं सर्वे नारीवेषधरास्तथा ॥३३॥
सकूर्दनं सगीतं च सभ्रमणं प्रचक्रिरे ।
सवाद्यं सविलासं च सुनर्माढ्यं प्रचक्रिरे ॥३४॥
एकः कृष्णोऽभवन्मध्ये वंशीधरो नरायणः ।
अन्याः सर्वा योषितश्च गोपिका रासमुत्तमम् ॥३५॥
वर्तुलस्थाश्च खेलादि दर्शयन्त्यो व्यधुः शुभम् ।
सभ्या रासं तु षण्ढानां वीक्ष्याऽऽश्चर्ये परं गताः ॥३६॥
ऋषयो मुनयश्चापि प्रजा राजा नराः स्त्रियः ।
प्रसन्नाश्चाऽभवँस्तत्र फाल्गुनस्य सिते दले ॥३७॥
पूर्णिमायां तदा सायं कथान्ते सर्ववैष्णवाः ।
प्रसन्नो लोमशो जातः स्वतःप्रकाशकोऽपि च ॥३८॥
षण्ढास्ते लोमशं नत्वा नत्वा श्रीसंहितां तथा ।
ब्रह्मप्रकाशं नत्वा च पूजां चक्रुस्तदोत्तमाम् ॥३९॥
हारान् हैमान् रत्नबद्धान् शुभवेषान् ददुस्तदा ।
स्वर्णरूप्यादिमुद्राश्च वस्त्रपात्रादि सन्ददुः ॥४०॥
कुंकुमाक्षतपुष्पाद्यैः पुपूजुः संहितां तथा ।
व्यासं च लोमशं चापि पुपूजुस्ते नपुंसकाः ॥४१॥
आरार्त्रिकं प्रचक्रुश्च तालीवादनपूर्वकम् ।
मृदंगकांस्यवाद्याढ्यं घुर्घुरानृत्यशोभितम् ॥४२॥
नैवेद्यं च न्यधुः श्रेष्ठं पक्वान्नानि फलानि च ।
ब्रह्मप्रकाशव्यासेन हरये तत्समर्पितम् ॥४३॥
प्रसादश्च सलिलं च तथा ताम्बूलकान्यपि ।
तेभ्यो भक्ष्यार्थमेवाऽपि दत्तानि पावनानि वै ॥४४॥
ते षण्ढाः प्राप्य रसिकं प्रसादं च जलामृतम् ।
फलं च भक्षयामासुः पपुः पादामृतं तथा ॥४५॥

ततस्ते प्रार्थयामासुर्लोमशं पावनं मुनिम् ।
षण्ढतापापनाशार्थे षण्ढताजन्मनुत्तये ॥४६॥
षण्ढताया निवृत्त्यर्थे मोक्षार्थे शुद्धयेऽपि च ।
ददौ तेभ्यो लोमशस्तु मन्त्रं च भजनं तथा ॥४७॥
'ॐ नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'कृष्णनारायण कृष्णनारायण नरायण ॥४८॥
बालकृष्णाऽनादिकृष्णनारायण रमायण' ।
लब्ध्वा मात्रं नामधुन्यं पावनास्ते तदाऽभवन् ॥४९॥
न्यूषुस्तत्रैव ते रात्रौ रासगानं प्रचक्रिरे ।
फाल्गुनस्याऽसिते चाद्यदिने पुष्पावदोलनम् ॥५०॥
उत्सवं परमं चक्रुस्ते सर्वे तु कथोत्तरम् ।
लक्षशो मानवाश्चापि पुष्पदोलामहोत्सवम् ॥५१॥
प्रचक्रुः रंगनिक्षेपैः कृष्णं दोलास्थितं हरिम् ।
स्नपयामासुरत्यर्थं रेमुश्च लक्षशो जनाः ॥५२॥
नरा नार्यः पृथग्भूताश्चक्रुः रंगप्रखेलनम् ।
एवं ते वैष्णवा बद्रि षण्ढाः सर्वेऽभवँस्ततः ॥५३॥
नित्यं कथां प्रशृण्वन्ति कीर्तयन्ति नरायणम् ।
मन्त्रं जेपुश्च मालाभिः सेवन्ते च सतो जनान् ॥५४॥
तीव्रसंवेगभक्तानां गोचरो भगवान् द्रुतम् ।
जायतेऽथ तु षण्ढानां शीघ्रं प्रसन्नतां गतः ॥५५॥
चैत्रे कृष्णे तु ते षण्ढा एकादश्या व्रतं व्यधुः ।
चक्रुर्जागरणं सर्वे प्रातः स्नात्वा कथामृतम् ॥५६॥
पपुस्ते नित्यवत् प्रातस्ततो मध्यान्हके तु ते ।
भुक्त्वा सभास्थले गत्वा निषेदुः सुखितास्तदा ॥५७॥
ध्यानं चक्रुर्हरेस्तत्र तावत् कृष्णनरायणः ।
आययौ दिव्यरूपेण. विमानस्थः प्रियेश्वरः ॥५८॥
उवाच तान् यथेष्टं वै भवन्त्विष्टसुरूपिणः ।
मुक्तरूपं तथा मुक्तानिकारूपं यथेष्टकम् ॥५९॥
येषां यासां यदिष्टं तन्मदिच्छयाऽत्र जायताम् ।
बद्रिके एवमुक्ते तु नारीषण्ढस्तु योऽभवत् ॥६०॥
मुक्तानिकादिव्यरूपं प्राप्तवान् सर्वथा पृथक् ।
नरषण्ढस्तु यस्तेषु स चाप्तो मुक्तरूपताम् ॥६१॥
एवं दिव्यस्वरूपा वै मुक्ता मुक्तानिकाः शुभाः ।
अभवँस्तत्र सहसा सर्वाभरणभूषिताः ॥६२॥
ततस्तानवदत्तत्र षण्ढत्वोऽप्रमानवान् ।
भूत्वा दिव्यस्वरूपश्च बोधयामास मानवान् ॥६३॥
षण्ढत्वं जायते नार्या विघ्नकर्त्र्या रतिक्षणे ।
सपत्न्या विघ्नकर्त्र्याश्च दम्पत्योर्विघ्नयोषितः ॥६४॥
स्वपत्युर्विघ्नकर्त्र्याश्च पशूनां पक्षिणां तथा ।
युगलानां विघ्नकर्त्र्याः षण्ढात्वं समजायते ॥६५॥
पतिं त्यक्त्वाऽन्यसक्तायाः षण्ढात्वं संप्रजायते ।
रतिं चाऽसहमानाया विद्वेषिण्याः स्त्रियास्तथा ॥६६॥
आभिचारिकवेश्याश्च भगवन्धकयोषितः ।
लिंगपातनवेश्याश्च ऋतुभङ्गकयोषितः ॥६७॥
षण्ढात्वं जायते तस्या जन्मान्तरे च जन्मनि ।
नरस्यापि तथा तस्य पत्न्यकामप्रदस्य तु ॥६८॥
वियोनिवर्तमानस्य परभार्यारतस्य च ।
विघ्नकर्तुर्युगलयोः कन्यादिदूषकस्य च ॥६९॥
अगम्यागमकस्यापि वृषणोच्छेदकस्य च ।
लिंगादिनाशकस्यापि देहिनां पशुपक्षिणाम् ॥७०॥
षण्ढत्वं जायते गर्भहन्तुर्धातुक्षयस्य च ।
कुकर्मकारिणां प्रायः षढत्वं जायते भुवि ॥७१॥
महापापं हि तत्प्रोक्तं मानवे जन्मनि क्षति ।
पुंस्त्वस्त्रीत्वविहीनत्वं नरकस्यैव रूपणम् ॥७२॥
तद्गतं कृपया चाद्य कथायाः श्रवणेन नः ।
मुक्तात्वं चापि मुक्तत्वं लब्धमस्माभिरुत्तमम् ॥७३॥
पतिर्लब्धः परब्रह्मनारायणः प्रियेश्वरः ।
अमोघवीर्यो भगवान् ब्रह्मानन्दप्रदः प्रभुः ॥७४॥
मा कुर्वन्तु स्त्रियो पुंसो लोकेऽत्र कामदूषणम् ।
कामविघ्नकृतानां वै नरकं गोचरं त्विह ॥७५॥
येषामुद्धरणं न स्याद् विना श्रीवल्लभंहरिम् ।
तं भजन्तां महाभागा नरा नार्यो भयार्दिताः ॥७६॥
स्वस्वकुकर्मजालानि स्मृत्वा स्मृत्वा नरायणम् ।
यान्तु शरणं श्रीकृष्णं भवन्तु दिव्यविग्रहाः ॥७७॥
शाश्वतानन्दमग्नाश्च प्रजायन्तां तदङ्गगाः ।
वयं स्नात्वा तीर्थजले पीत्वा कथामृतं मुहुः ॥७८॥
भुक्त्वा कृष्णप्रसादं च प्राप्य प्रसन्नतां गुरोः ।
भक्त्या लब्ध्वा पतिं कृष्णं यामोऽक्षरं परं पदम् ॥७९॥
भूत्वा दिव्यस्वरूपाः श्रीकृष्णायोग्याः सुखाश्रयाः ।
शाश्वतानन्दसंमग्ना भवामो राधिकासमाः ॥८०॥
इत्युक्त्वा बद्रिके सर्वे मुक्तरूपा नराः स्त्रियः ।
कृष्णाज्ञया स्वर्णयाने निषेदुश्चाऽक्षरं ययुः ॥८१॥
तेनैव खलु देहेन स्वेन स्वेन नपुंसकाः ।
विवर्तमानकायास्ते मुक्ता दिव्यास्तदाऽभवन् ॥८२॥
अभूत्तेषां देहपातः कायाकल्पो व्यजायत् ।
श्रीकृष्णस्पर्शनेनैव मुक्ता जाता नपुंसकाः ॥८३॥

सर्वे षोडशवर्षा वै नरा नार्यः सुतैजसाः।
मुक्ता मुक्तानिकाः सर्वे कृष्णराधारमासमाः ॥८४॥
अन्यथाकर्तुरीशेशेशस्य नारायणस्य तत्।
सामर्थ्यं चाऽप्रतिहतं प्राकाम्यं प्रकटीभवत् ॥८५॥
व्यराजत मनुष्याणां हृदये तु कृतास्पदम्।
चमत्कारो महानेषः कथायां कृष्णदर्शितः ॥८६॥
जडं सचेतनं कुर्याद् विदध्याच्चेतनं जडम्।
नारीं नरं विदध्यात् स नरं नारीं विधापयेत् ॥८७॥
नरं स्त्रियं च वा कुर्यादुभयं तु नपुंसकम्।
नपुंसकं विदध्याद्वा नरं नारीं च पार्षदम् ॥८८॥
मुक्तं मुक्तानिकां वापि जडं दिव्यं विधापयेत्।
मायां कुर्यादक्षरं सोऽक्षरं कुर्यात्तु प्रकृतिम् ॥८९॥
कुर्यात्तत्त्वान्यतत्त्वानि शून्यं तत्त्वात्मकं क्रियात्।
तत्त्वात् तत्त्वान्तरं कुर्यादेतास्तु शक्तयो हरेः ॥९०॥
अनन्तशक्तियुक्तस्य विमानं दुर्गमं सदा।
आश्चर्यं तत्र नास्त्येव सर्वं यदात्मकं यतः ॥९१॥
बद्रिके च ततः श्रुत्वा षण्ढानां दिव्यदेहताम्।
गुप्तषण्ढाः स्त्रियश्चापि गुप्तषण्ढा नरा अपि ॥९२॥
संहितायाः स्थलं गत्वा शरणागतिमाप्नुवन्।
मन्त्रं च भजनं धुन्यं लोमशाज्जगृहुर्मुदा ॥९३॥
पद्यं पद्यं च ते कृत्वा भजनं श्रवणं तथा।
ध्यानं सेवां पूजनं च प्रसादभोजनाशनम् ॥९४॥
भूत्वा पापविहीनाश्च शुद्धात्मानो वृषान्विताः।
सुपुण्याद्व्यागुप्तप्राप्तेन्द्रियास्ते तास्ततोऽभवन् ॥९५॥
केचन श्रीहरिं ध्यात्वा मुक्ता भूत्वाऽक्षरं ययुः।
एवं षण्ढाः कृष्णनारायणस्य कृपया क्षितौ ॥९६॥
सत्यनराः सत्यनार्यः सत्यमुक्तास्तथाऽभवन्।
सत्यमुक्तानिकाश्चाप्यभवन् शाश्वतविग्रहाः ॥९७॥
अहो किमत्र दुष्प्रापं यत्र कृष्णकृपालवः।
अहो कथाया माहात्म्यं बद्रिके पारमेश्वरम् ॥९८॥
सर्वं निष्पापतां प्राप्तं यथा मोक्षात्मकं जगत्।
सर्वे विदेहमुक्ता वा जीवन्मुक्तास्तथाऽथवा ॥९९॥
शर्करापत्तने जाताः श्रीसंहिताकथाभवात्।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिः करे भवेत् ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने शर्करापुरवासिनां षण्ढब्रह्मादिषण्ढानां संहिताश्रवणेन पापनिर्मुक्तिः, श्रीकृष्णनारायणदर्शनेन तैरेव देहैर्दिव्यमुक्तानिकात्मकैश्वरपदस्य प्राप्तिश्च, तथाऽन्यगुप्तनपुंसकानां शरणागत्या पुंस्त्वस्त्रीत्वाद्यभिव्यञ्जकता, चेत्यादिनिरूपणनामा सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां पापविनाशिनीम्।
कराञ्चनीपुरे त्वब्धितटे सिन्धुमुखे पुरा ॥ १ ॥
यवसन्धाभिधः कश्चिद् धेनुखादकघातकी।
न्यवसन्मांसमदिरामत्स्यादनोऽतिहिंसकः ॥ २ ॥
शशान् कपीन् वराहाँश्च हरिणान् वनपक्षिणः।
यादांसि चापि हिंसित्वा गवयाऽजोरणानपि ॥ ३ ॥
सकुटुम्बः पाचयित्वा विक्रीणाति च खादति।
एवं पापसमाचारः सदा पापपरायणः ॥ ४ ॥
कुक्कुटादः कुक्कुटाण्डरसभक्षणकारकः।
भ्रष्टदेहो भ्रष्टकर्मा यवसन्धीयजातिजः ॥ ५ ॥
यवसन्धाभिधो वार्तां शुश्राव नाविकाननात्।
शर्करानगरे तत्र संहितायाः कथा शुभा ॥ ६ ॥
जायते मोक्षदा सर्वपापानां क्षालिनी त्विति।
जायन्ते दिव्यदेहाश्च श्रोतारो ब्रह्मलोकगाः ॥ ७ ॥
सर्वपापानि भगवान् शरण्यो भक्तवत्सलः।
शरणागतभक्तस्य क्षमतेऽर्पयते दिवम् ॥ ८ ॥
हिंसका बहवस्तेन तारिताः स्त्रीनरा अपि।
तत्रास्ते लोमशर्षिश्च स्वतःप्रकाश ईशिता ॥ ९ ॥
तथा सन्तः साधवश्च साध्व्यो विप्रर्षयोऽपि च।
येषां वै दर्शनात् प्रसेवनात् प्रसादनात्तथा ॥१०॥
शाश्वती जायते मुक्तिर्विमानेन गतिः परा।
नैतादृशो हि समयः पुनरस्मान् मिलिष्यति ॥११॥
पापनाशकरः शुद्धोऽनायासमोक्षणप्रदः।
यवसन्धो बद्रिके संशुश्रावैतां गिरं शुभाम् ॥१२॥
मुमुक्षाऽस्याऽभवत्तूर्णं पापनाशाय तत्क्षणम्।
मया पापान्यनन्तानि कृतानि घातनानि वै ॥१३॥
तेषां न स्याद्धि निस्तारो विना दिव्यजनाश्रयम्।
एते नौकाधराः सर्वे वदन्ति ऋतमेव तत् ॥ १४॥
प्रयामि शर्करापुर्यामघानि क्षपयामि च।
यदि पापविनाशो मे बहुहत्याघनाशनम् ॥१५॥
तदा तस्मादुत्तमं मे किमत्र परिशिष्यते।
कर्मणां चेत् कृतानां तु भूमावत्र निवर्तनम् ॥१६॥
किमस्मादपरं साध्यं कर्तव्यं मेऽवशिष्यते।
अवश्यं तत्र गन्तव्यं प्राणमात्रं तु यत्र वै ॥१७॥
अवश्यं तत्र वस्तव्यं यत्र स्याच्छान्तिरात्मनः।
अवश्यं तत्र दातव्यं यत्रोप्तं फलदं भवेत् ॥१८॥
अवश्यं तत्र सुप्तव्यं यत्र निर्भीकता भवेत्।
अवश्यं तत्र मर्तव्यं यत्रानन्दस्तु शाश्वतः ॥१९॥

यदि गच्छामि तत्रैव संहितायाः कथार्थकः ।
पापनाशो भवेन्मे चेद् गन्तव्यं मोक्षमेव ह ॥२०॥
पुनरावर्तनं नैव कराञ्चनीपुरं प्रति ।
रोचते मे पापकर्म नैव नैव च नैव च ॥२१॥
कुटुम्बसहितो यास्ये शर्करानगरं प्रति ।
महत्या नौकया यन्त्रगन्त्र्या यास्यामि सत्वरम् ॥२२॥
विचार्येत्थं यवसन्धः पत्नीं नाम्ना मजावलीम् ।
जगाद मानसं सर्वं संकल्पितं शुभावहम् ॥२३॥
सापि धन्यं निजभाग्यं मेने देशावलोकनम् ।
पुण्यावलोकनं चापि महोत्सवप्रलोकनम् ॥२४॥
मोक्षावलोकनं मेने श्रेष्ठं हिंसाद्यपेक्षया ।
बद्रिके सा सम्मताऽभूत् पुत्राः पुत्र्यस्तथाविधाः ॥२५॥
एकविंशतिसंख्यास्ते कुटुम्बिनो द्रुतं ततः ।
धनं द्रव्यं भूषणान्यम्बराणि भोजनान्यपि ॥२६॥
गृहयोग्यान्यौषधानि वेषवाराणि यान्यपि ।
देहादिसाधनकानि पात्राण्यावश्यकानि च ॥२७॥
पेटिकां चोपकरणं शय्याद्यं ते समुत्सुकाः ।
निन्यिरे सर्वमेवापि योग्यं यात्रादि यद्धितम् ॥२८॥
नौकया यन्त्रवेगाभिगमयित्र्याब्धितीरके ।
ययुरग्रे सिन्धुमुखे ततो नद्यां तु नौकया ॥२९॥
तथैव सहसा सर्वे प्रतिपूरं ययुर्मुदा ।
प्रापुः श्रीशर्कराभूमिं ज्ञात्वा सिन्धुजले तु ते ॥३०॥
नीत्वोपदाः प्रजग्मुस्ते कथामण्डपमुत्तमम् ।
शुश्रुवुस्ते कथां रम्यां सर्वपातकनाशिनीम् ॥३१॥
कथान्ते वाचकं सर्वे पुपूजुर्वस्तुभिः शुभैः ।
लोमशं च तथा साधून् प्रणेमुस्ते ततः परम् ॥३२॥
प्रार्थनां चक्रिरे पापमोक्षार्थिनीं शुभावहाम् ।
लोमशश्च तदा तेभ्यो ददौ श्रीब्रह्मकूर्चकम् ॥३३॥
व्रतं च पञ्चगव्यं च तथा श्रीकृष्णनाम च ।
मन्त्रं धुन्यं भजनं च ददौ पादामृतं तथा ॥३४॥
प्रसादान्नं ददौ तेभ्यः पापनाशनहेतवे ।
तेऽपि सर्वेऽतिभावेन चखादुरन्नमुत्तमम् ॥३५॥
पपुर्वारि व्रतं चक्रुः कथाश्रवणमाचरन् ।
मासान्ते पावना जाताः सर्वे विगतकल्मषाः ॥३६॥
भावनानुकूल एषामायुष्यान्तोऽभवत्तथा ।
द्वादश्यां चैत्रकृष्णस्य मध्याह्ने कृतभोजनाः ॥३७॥
सर्वे ते तु निषेदुर्वै वासगृहांगणे तदा ।
अकस्मादागतं दिव्यं विमानमम्बरात् ततः ॥३८॥
विमानतेजसा स्पृष्टाः सर्वे मूर्छां प्रपेदिरे ।
चतुर्भुजो हरिस्तेषां गोचरोऽपि तदाऽभवत् ॥३९॥
अनादिश्रीकृष्णनारायणः श्रीमाधवीश्वरः ।
तान् कृत्वा दिव्यदेहांश्च त्याजयित्वा शवानि ह ॥४०॥
निन्ये विमानगान् कृत्वा नैजं धामाऽक्षरं शुभम् ।
आश्चर्यं परमं दृष्ट्वा महर्षयोऽपि वै तदा ॥४१॥
प्रशशंसुः प्रियंकृष्णंनारायणं दयानिधिम् ।
प्रशशंसुश्च तान् सर्वान् शरणागतमानवान् ॥४२॥
महापापान् पापघ्न्यान् शशंसुर्भक्तिसंभृतान् ।
अहोऽसंख्याऽघकर्तॄणामपि श्रीभगवान्हरिः ॥४३॥
कृपया चाऽनिवर्तिन्या करोति मोक्षणं परम् ।
धन्यो नारायणः कृष्णो धन्यास्ते मोक्षभागिनः ॥४४॥
धन्यं शार्करनगरं कथा धन्या प्रमुक्तिदा ।
बद्रिके एवमेवाऽन्ये मुक्तिं तत्र हि लेभिरे ॥४५॥
पठनाच्छ्रवणादस्य चिन्तनादघमोक्षणम् ।
भुक्तिर्मुक्तिर्भवेच्चापि तथा स्याच्छाश्वती गतिः ॥४६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कराञ्चनीपुरीस्थस्य सदाहत्याकरस्य यवसन्धस्य सकुटुम्बस्य संहिताकथाश्रवणेन मोक्षणमित्यादिनिरूपणनामाऽष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां माण्डस्य मोक्षदाम् ।
द्वारामृते तु नगरेऽभवद् भाण्डः कुटुम्बवान् ॥ १ ॥
शातिवृद्धोऽतिमतिमान् हास्यनर्मादिपण्डितः ।
राजोत्सवेषु सर्वेषु प्रजोत्सवेषु चापि सः ॥ २ ॥
आमन्त्रितः प्रयात्याशु रात्रौ खेलं करोति च ।
गायनं नर्मपद्यानि नर्मकर्माणि वै तदा ॥ ३ ॥
कृत्वा प्रदर्श्य नृपतीन् हासयत्येव तत्प्रजाः ।
एवं स कुशलश्चास्ते प्राप्नोति पारितोषिकम् ॥ ४ ॥
प्रसिद्धः सोऽभवद्भूमौ नाम्ना तु भण्डशीलकः ।
जनेभ्यः सोऽपि शुश्राव पारायणमहोत्सवम् ॥ ५ ॥
लक्षातिलक्षलोकानां समाजो यत्र जायते ।
कथा दिव्या भवन्त्येव विनोदाश्च नवा नवाः ॥ ६ ॥
खेलनानि भवन्त्येव नूत्नप्रदर्शनान्यपि ।
पापनाशो भवत्येव कथाश्रवणतोऽपि च ॥ ७ ॥
सतां समागमश्चापि दर्शनं परमात्मनः ।
प्रजायते प्रभक्तानां चमत्कारो भवत्यपि ॥ ८ ॥

विमानं श्रीहरेस्तत्र समायातिसुशोभनम् ।
मुक्ता भूत्वा जना यान्ति परमेशपदं परम् ॥ ९ ॥
नरा नार्यः प्रयान्त्येव धामाऽक्षरं हरेरिह ।
पापानां मोक्षणं तत्र कार्यते परमात्मना ॥१०॥
एवं भाण्डान् समस्तान् वै कथयित्वा हरेर्बलम् ।
स्वयं समस्तभाण्डैश्च नरनारीसमन्वितः ॥११॥
बालिकाबाल्युक्तश्च वृद्धपूज्यसमन्वितः ।
अनोभिः सहितः सर्वैः पाथेयवस्तुभिः सह ॥१२॥
पश्वादिवाहनैर्युक्तः सज्जो भूत्वा समुत्सुकः ।
प्रतस्थे श्रीहरिं ध्यात्वा नत्वा ग्रामस्य देवताम् ॥१३॥
धनं दानार्थकं चापि भूषावस्त्राम्बराण्यपि ।
इष्टोपकरणाद्यं च नीत्वा ययौ कथां प्रति ॥१४॥
शार्करानगराभ्याशे स्नात्वा सिन्धुजले स तु ।
सर्वकुटुम्बसहितो मानवैस्त्रिशतैर्युतः ॥१५॥
राजोद्याने विधायैव वसतिं स्वास्थ्यमासवान् ।
पूजासामग्रिकायुक्तो वृद्धमानवसंयुतः ॥१६॥
कथामण्डपमभ्यागाद् व्यासपूजनहेतवे ।
संहितायाः स्थलं गत्वा नत्वा समाजनानपि ॥१७॥
जयमोक्षप्रदकृष्ण व्यासजीव चिरं जय ।
ऋषयो वृद्धपूज्याश्च जयताऽत्र कृपाकराः ॥१८॥
जयन्त्विमे साधवश्च श्रोतारोऽपि जयन्त्विह ।
यात्रालवस्तीर्थवासा जयन्तु सर्वदा भुवि ॥१९॥
विप्राः साध्व्यः साधवश्च जयन्तु मोक्षकारिणः ।
अज्ञानपापहर्तारो जयन्तु वैष्णवा जनाः ॥२०॥
इत्येवं ते वदन्तो वै चक्रिरे दण्डवन्मुहुः ।
धूलिं समास्थलस्यापि दध्युः शिरस्सु वर्ष्मसु ॥२१॥
अथाऽऽज्ञां व्यासदेवस्य लब्ध्वा पूजार्थमाययुः ।
उपदा विविधा न्यस्य पुष्पहारांस्तिलाऽक्षतान् ॥२२॥
फलानि ताम्बूलकानि न्यधुस्ते संहितापुरः ।
व्यासस्य चन्दनाद्यैश्च पूजां प्रचक्रिरे ततः ॥२३॥
नीराजनं व्यधुश्चापि चक्रुस्तस्य प्रदक्षिणम् ।
नर्तनं गायनं चक्रुर्भाण्डाः सर्वे सुभाषिणः ॥२४॥
सुभाषया हासयन्तो जनान्नत्वा समान्तरे ।
प्रसादं च जलं पीत्वा निषेदुः श्रवणार्थिनः ॥२५॥
कथां श्रुत्वा जगृहुस्ते मन्त्रं श्रीलोमशान्मुनेः ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥२६॥
'कृष्णनारायण कृष्णनारायण नरायण ।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥२७॥
एवं धुन्यं ददौ तेभ्यो नामसंकीर्तनाय वै ।
ततस्ते स्वनिवासं वै गताः स्वस्था हरिश्रिताः ॥२८॥
नित्यं कथां प्रशृण्वन्ति गायन्ति गीतिका हरेः ।
आबालवृद्धाः सर्वे ते सेवन्ते साधुयोगिनः ॥२९॥
एवं नित्यं तु सत्संगं कृत्वा मासो गतो द्रुतम् ।
चैत्रकृष्णैकादशिकारात्रौ जागरणं व्यधुः ॥३०॥
द्वादश्यां ते कृतस्नानाः कथाश्रवणतः परम् ।
सभायामेव सहसा व्यासासनेऽति भासुरम् ॥३१॥
कृष्णनारायणं श्रीशं हसन्तं विलुलोकिरे ।
पश्यतां तु सदस्यानां व्यासे प्रकाशके प्रभो ॥३२॥
तिरोऽभवद्धरिस्तूर्णं संहितायां रमाऽऽविशत् ।
आश्चर्यं परमं तत्र दृष्ट्वा श्रीलोमशो मुनिः ॥३३॥
भाग्योदयं तु .भाण्डानामवोचत्तत्र संसदि ।
त्रयोदश्यां पुनश्चैवं कथोत्तरं प्रकाशनम् ॥३४॥
प्रसञ्जातं चतुर्दश्यां तथैव पारमेश्वरम् ।
अमायां तु प्रगे भाण्डाः स्वाप्नं श्रेष्ठं व्यलोकयन् ॥३५॥
विमानेनाऽक्षरं धाम प्रयान्तीत्यभ्यलोकयन् ।
ततः प्रसन्नचित्तास्ते ब्राह्मे प्रोत्थाय सत्वरम् ॥३६॥
स्नात्वा सज्जा बहवोऽपि भूत्वा कथास्थलं ययुः ।
कथान्ते तु प्रकाशं ते व्याजह्रुः स्वप्नगोचरम् ॥३७॥
लोमशस्तु समाकर्ण्य प्राहाऽद्य मोक्षणं तु वः ।
सायं कथान्ते भाव्यं वै सज्जा भवत मुक्तये ॥३८॥
भाण्डास्तेऽपि यथायोग्यं सज्जा गन्तुं ततोऽभवन् ।
सायं कथान्ते भगवान् स्वामीकृष्णनरायणः ॥३९॥
विमानेनाऽऽययौ नेतुं कानकेन सुवर्चसा ।
सज्जान् निष्कास्य देहेभ्यो दिव्यदेहान् विधाय च ॥४०॥
लब्ध्वा दिव्ये विमाने तान् ययौ धामाक्षरं निजम् ।
सार्धशतं ययुर्मुक्ता मुक्तानिकास्तु भाण्डकाः ॥४१॥
ब्रह्माण्डभाण्डं निर्भिद्य ब्रह्मभाण्डं प्रपेदिरे ।
अहो दया विचित्रा वै श्रीमाधवपरात्मनः ॥४२॥
भाण्डान्नीत्वा ययौ कृष्णो लक्ष्मीपद्मावतीपतिः ।
अथाऽन्ये बद्रिके शिष्टा भाण्डास्तदूर्ध्वदैहिकम् ॥४३॥
चक्रिरे सिन्धुतीरे वै भूत्वा ते वैष्णवाः पराः ।
कथायाः श्रवणार्थं ते वसतिं तत्र चक्रिरे ॥४४॥
तेऽपि सेवां सतां नित्यं साधूनां चक्रिरे मुदा ।
सतीनां ब्रह्मचाराणां यतीनां सेवनं व्यधुः ॥४५॥
निष्पापाः समजायन्त सेवापूजनदर्शनैः ।
महाभागवता जाता येषां वंशाश्च पावनाः ॥४६॥

नरा नार्यः साधुभक्ताः साधुतुल्यास्ततोऽभवन् ।
सर्वार्पणविधानेऽपि निःसंशयात्मवेदिनः ॥४७॥
बद्रिके तेषु चायुष्यक्षयो येषां व्यजायत ।
तेऽपि दिव्येन यानेन शनैर्धामाऽक्षरं ययुः ॥४८॥
अन्ये बाला युवानश्च युवत्यो भेजिरे हरिम् ।
आजीवनं कृष्णकान्तं श्रीप्रभुं माधवीपतिम् ॥४९॥
तेषां योगेन बहवो ज्ञातिबन्धव इत्यपि ।
श्रीकृष्णकान्तभक्ताश्च जाता याताः परं पदम् ॥५०॥

बद्रिके तत्र चान्यत्तु महाश्चर्यमभूच्छृणु ।
त्रिगालवकुटुम्बानि संघशस्तत्र फाल्गुने ॥५१॥
आसन् समागतान्येव मूलतन्तुकपत्तनात् ।
भवायनोऽभवत्तेषामग्रेसरः कलाविदाम् ॥५२॥
वेषाणां धारणे चानुकरणे कुशलः कृतौ ।
शिक्षाप्रदोऽभवत्तेषां गुरुर्भवायनः स्वयम् ॥५३॥
भवायनस्य या शाला शुभा नाट्यकलाविदः ।
तस्यामासन् शिक्षणीयाः शिष्याः पञ्चशतानि वै ॥५४॥

तैः सर्वैः सहितः श्रुत्वा महिमानं हरेः स च ।
आगतोऽभूत् कथायां वै श्रवणार्थे तथाऽपरम् ॥५५॥
श्रुतमाश्चर्यमेवाऽपि परीक्षितुं विलोकितुम् ।
सिन्धुतीरे वने रम्ये आरामवत्समस्थिते ॥५६॥
वसतिं कृतवान् श्रेष्ठां भवायनकलापिनः ।
अथैकदा कथां श्रुत्वा रात्रौ खेलं प्रचक्रिरे ॥५७॥
तत्र ते दर्शयामासुः शृणु तद् वर्णयामि ते ।
ब्रह्मणस्तु पुरा जातः कुमारः क्षुतसंभवः ॥५८॥
क्षुपनामाऽकरोत्तस्य ब्रह्मा स्वयं तु विश्वसृट् ।
तस्य मित्रं दधीचाख्यो महर्षिश्च्यवनात्मजः ॥५९॥
स प्रोवाच प्रसंगेन द्वयोः श्रैष्ठ्ये विचारिते ।
विप्रः श्रेष्ठ इति श्रुत्वा नृपः प्राह तु बाहुजः ॥६०॥
यतो राज्ञि निवसन्ति दिक्पाला अष्टसंख्यकाः ।
ततो वै क्षत्रियः श्रेष्ठो मूर्धाभिषिक्तदैवतः ॥६१॥
श्रुत्वैतद्रोषमापन्नो दधीचो वामहस्तजाम् ।
मुष्टिं दृढां प्राहरद्वै नृपस्योरसि निर्भयः ॥६२॥

राजा रुषा तु खड्गेन शिरश्चिच्छेद तत्क्षणम् ।
ततो हत्या ब्रह्महत्या प्रादुर्भूता भयंकरी ॥६३॥
क्षुपं ववल्ग सहसा मारयामीत्युवाच तम् ।
यद्वा जीवय विप्रेन्द्रं सञ्जीवन्या सुखी भव ॥६४॥
श्रुत्वा राजा प्रसस्मार शुक्राचार्यं स आययौ ।
सञ्जीवन्या भार्गवः स शिरःसन्धानमाचरत् ॥६५॥

दधीचो जीवनं लब्धवान् सा हत्या व्यलीयत ।
अथ विप्रस्तपश्चक्रे शंकरस्योपरि ध्रुवम् ॥६६॥
शंभुः साक्षात् समायातो ददौ तत्र वरद्वयम् ।
अवध्यत्वमजेयत्वं त्वां ते दधीच सर्वदा ॥६७॥
दधीचश्चाधिकं वव्रे वज्रास्थित्वं तृतीयकम् ।
तथास्त्विति हर उक्त्वाऽन्तर्धामं प्रजगाम ह ॥६८॥
अतः कालान्तरे विप्रक्षत्रयोर्मित्रयोः पुनः ।
श्रैष्ठ्यवादे प्रजाते स्वं दधीचः श्रेष्ठमाह वै ॥६९॥

राजा श्रैष्ठ्यं निजं प्राह तदा विप्रो रुषा ज्वलन् ।
वामपादेन नृपतेर्मूर्ध्नि दृढमताडयत् ॥७०॥
अथ राजा पुरा कृत्वा भक्तिमिन्द्रात् कुलीशकम् ।
प्राप्तवान् यत् प्रजहार तेन विप्रस्य वक्षसि ॥७१॥
वज्रं स्पृष्ट्वा पपातैव न प्रावर्तत मृत्यवे ।
व्यर्थं वज्रं विलोक्यैव राजा रोषमवाप्तवान् ॥७२॥
उत्थाय प्रययौ पूजागृहं विष्णुमतोषयत् ।
प्रत्यक्षं त्वागतं विष्णुं राजा प्राह वरार्थकः ॥७३॥

विष्णो सुदर्शनं चक्रं देहि मे विजयप्रदम् ।
विष्णुस्तस्मै प्रदायैव ययौ वैकुण्ठमच्युतः ॥७४॥
अथ राजा रोषयुक्तो मुमोचाऽस्य सुदर्शनम् ।
दधीचस्य गले यावत्तावद् दधीच उल्बणम् ॥७५॥
फुत्कारं जनयामास सुदर्शनायुधोपरि ।
सहस्रधाराः सर्वास्ताः फुत्कारवह्निना तदा ॥७६॥
रसभावं द्रवभावं गताश्चक्रं प्रकुण्ठितम् ।
पपात सहसा भूमौ निष्फलं लोहपिण्डकम् ॥७७॥
तदा क्षुपो विवेदापि बलं विप्रस्य वै महत् ।
अथापि रोषमापन्नो विष्णुं चाराधयत्पुनः ॥७८॥
विष्णुः समाययौ राजा विष्णुं प्राह कृताञ्जलिः ।
दधीचस्य विनाशं त्वं कुरु गर्वहरं प्रभो ॥७९॥
विष्णुस्तं प्रत्युवाचाऽपि विप्रहत्या भयावहा ।
न कर्तव्या कदाचिद्वै राजन् स्वार्थहितैषिणा ॥८०॥
किन्तु तं संकथयामि विवदस्व नृपेण मा ।
इति विष्णुर्दधीचं तु शिक्षादानाय चाययौ ॥८१॥
दधीचस्तं प्रभुं नत्वा रुषा नोवाच किञ्चन ।
अथ विष्णुर्निजे देहे दर्शयामास वै जगत् ॥८२॥
स्थावरं जंगमं रुद्रं दधीचं स्थिरजंगमम् ।
तदा दधीचो हरये दर्शयामास योगिराट् ॥८३॥
स्थावरं जंगमं सर्वं विष्णुं नृपं स्ववर्ष्मणि ।
उवाच विष्णुं च ततो मा मायां मे प्रदर्शय ॥८४॥

नाऽहं तथाऽपि मुग्धोऽस्मि सदा विप्रः समुत्तमः।
श्रेष्ठो विप्रः सदा चास्ति न क्षत्रं गर्वसंभृतम् ॥८५॥
याहि विष्णो निजं स्थानं लभ जन्म पुनः पुनः।
क्षत्रपक्षगतो यस्मात् फलं भुंक्ष्व मयोदितम् ॥८६॥
सुदर्शनं ते गलितं पुनः प्राप्नुहि तत्तथा।
दैत्यनाशार्थमेवापि न विप्रस्य विच्छित्तये ॥८७॥
एवं ग्रस्तो हरिस्तेन दधीचेन महात्मना।
ततो विप्रे तु बाणेन जयं करोति माधवः ॥८८॥
अवतारेषु सर्वेषु दैत्ये सुदर्शनेन च।
अथ क्षुपोऽभवद् भक्तो दीक्षावान् साधुरुत्तमः ॥८९॥
सन्न्यासयोगमापन्नो वैष्णवोत्तम उत्तमः।
तदा दधीचो विप्रोऽपि साधुं नेमे पुनः पुनः ॥९०॥
उवाच विष्णुरूपोऽसि साधो श्रेष्ठतमोऽधुना।
ऋभुः सनत्कुमारश्च कपिलो दत्तवामनौ ॥९१॥
परशुरामश्च सर्वे ते वैष्णवाः साधवः पराः।
परब्रह्मस्वरूपास्ते विप्राणां गुरवोऽमलाः ॥९२॥
विप्राणां साधवः श्रेष्ठाः पूज्यास्ते ब्रह्मगोत्रिणः।
वर्णानां गुरवो विप्रा विप्राणां तु गुरुर्यतिः ॥९३॥
साधवः सर्ववर्णानां गुरवः श्रेष्ठयोगिनः।
अनादिश्रीकृष्णनारायणः साधून् समर्हति ॥९४॥
एवं बद्रीप्रिये तत्र कृष्णनारायणः प्रभुः।
समाययौ दिव्यरूपः पुपूज व्यासरूपिणम् ॥९५॥
साधुं निजप्रकाशं वै महाविष्णुस्वरूपिणम्।
दधीचोऽपि क्षुपायनाऽभिधं सन्तं पुपूज ह ॥९६॥
एवं साधौ हरिश्चास्ते साधुरूपः स्वयं हरिः।
निजप्रकाशे तत्रैव प्रभुःकृष्णस्तिरोऽभवत् ॥९७॥
इत्येवं नाटकं सर्वे दर्शयामासुरुत्सुकाः।
भवायनस्य शिष्यास्ते लक्षजना व्यलोकयन् ॥९८॥
दर्शकाः सर्व एवैते प्रसन्नाः ऋषयोऽमलाः।
मानवाश्च नरा नार्यः प्रसन्ना वीक्ष्य नाटकम् ॥९९॥
सन्तश्च मुनयः सर्वे साध्व्यश्च साधवोऽपि च।
लोमशोऽपि तथा व्यासः प्रसन्नास्तेऽभवँस्तदा ॥१००॥
वरदानाय तानाहुस्ते सर्वे वरदानकम्।
पापनाशं मोक्षणं च ययाचिरे तु वाचकात् ॥१०१॥
सदा लोके च नः स्याद्वै नाटकं तु यशःप्रदम्।
एवं तद्वंशजानां तु कृते ययाचिरेऽपि च ॥१०२॥
तथाऽस्त्विति प्राह तत्र व्यासः प्रकाशकृत् स्वयम्।
ऋषयोऽपि तथा प्राहुर्जयकारोऽभवत्तदा ॥१०३॥
प्रशशंसुर्नरा नार्यः कृष्णार्थकृतखेलनान्।
मोक्षार्थवरयाचितॄन् कृतकृत्यान् प्रभुप्रियान् ॥१०४॥
श्रीलोमशाज्जगृहुस्ते मन्त्रं च नामधुन्यकम्।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥१०५॥
'कृष्णनारायण कृष्णनारायण नरायण।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥१०६॥
धुन्यं प्रचक्रिरे प्रेम्णा साधुसेवां प्रचक्रिरे।
ततः पापानि नष्टानि वासना विलयं गता ॥१०७॥
चैत्रकृष्णामावास्यायां सायंकाले हरिः स्वयम्।
दिव्यरूपो बालकृष्णो विमानेन समाययौ ॥१०८॥
भवायनं तथा वृद्धान् कृत्वा तु दिव्यविग्रहान्।
निन्ये धामाऽक्षरं नैजं कृष्णनारायणः प्रभुः ॥१०९॥
भवायनस्य शिष्या वै परे गृहस्थरूपिणः।
नरा नार्यश्च ते सर्वे भावायना भुवि श्रुताः ॥११०॥
अभवन् पावना लोकरञ्जका खेलकोविदाः।
वैष्णवास्तेऽभवन् सर्वेऽवशिष्टाः शर्करापुरे ॥१११॥
कथान्ते ते ययुर्नैजं मूलतन्तुकपत्तनम्।
त्रिगालवास्ते सर्वे वै बद्रिके च ततः परम् ॥११२॥
भक्त्या नारायणरता यास्यन्ति परमं पदम्।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिर्भवेदपि ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने भण्डशीलाख्यं भाण्डं सार्धशतभाण्डसहितं तथा भवायनत्रिगालवं क्षुपदधीचनाट्यकारिणं बहुभिः सहितं च कथाश्रवणतो हरिर्मुक्ति-स्थानमनयदित्यादिनिरूपणनामा नव-पञ्चाशत्तमोऽध्यायः ॥ ५९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां मल्लप्रमोक्षिणीम्।
श्रीकारनगरे त्वासन् मल्लास्तद्युद्धकोविदाः ॥ १ ॥
पञ्चाशत्संख्यकाः श्रेष्ठाः कृताभ्यासा दृढास्थिनः।
अन्येऽपि मल्लवर्गस्य कुटुम्बिनोऽभवँस्तथा ॥ २ ॥
नरा नार्यश्च ते यान्ति नित्यं कथाश्रवाय वै।
श्रुत्वा नित्यं समायान्ति गृहाणि वर्णयन्ति च ॥ ३ ॥
गृहस्थेभ्यः कथां दिव्यां श्रुतां यां मोक्षकारिणीम्।
तथा वदन्ति दृष्टं यं चमत्कारं विमानजम् ॥ ४ ॥
ये ये मोक्षं प्रयान्त्येव तां तां वार्तां वदन्त्यपि।
ततो मल्लाः प्रसन्नाश्च कथास्थलीं ययुर्दृढाः ॥ ५ ॥

बहुभिः स्वजनैः साकं मण्डपान्तमुपस्थिताः ।
कथान्ते ते मल्लयुद्धं महाश्चर्यकरं व्यधुः ॥ ६ ॥
लोमशस्तु प्रसन्नः सन् मन्त्रं तेभ्यो ददौ मुदा ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥ ७ ॥
नामसंकीर्तनार्थं च भजनं प्रददौ तदा ।
'प्रभोनारायणस्वामिनारायण नरायण ॥ ८ ॥
अनादिमाधवीकृष्णनारायण रमायण' ।
मल्लास्ते सकुटुम्बा वै भजनं चक्रिरे सदा ॥ ९ ॥
कथाश्रवणमेवापि नित्यं नित्यं प्रचक्रिरे ।
सतां सेवां व्यधुः प्रेम्णा पूजनं वाचकस्य च ॥१०॥
आरार्त्रिकं संहितायाश्चक्रिरे धर्ममानसाः ।
दानानि स्वर्णरत्नानां भूषापात्रान्नवाससाम् ॥११॥
चक्रिरे मुद्रिकाणां च गवां दानानि चक्रिरे ।
भेजुः श्रीपरमात्मानं शुश्रुवुः संहिताकथाम् ॥१२॥
पवित्रास्ते प्रजाता वै निष्पापा वासनोज्झिताः ।
मुक्तियोग्यास्तु ये जाता वृद्धा नार्यो नरा अपि ॥१३॥
तेषामग्रेसरा नाम्ना हरिवर्यो गजक्रमः ।
शतवाजः सिंहमर्दः शरभार्दः कसेरुकः ॥१४॥
द्रुमभञ्जो वंशवारः शिलादो लोहपेषणः ।
इत्येवमाद्याश्चान्येऽपि कृतकृत्या निराशयाः ॥१५॥
प्रदग्धवासना जाता नार्योऽपि वृद्धयोषितः ।
प्रतीक्षन्ते तु मुक्त्यर्थं सविमानागमं हरेः ॥१६॥
सायं चैत्रामावास्यायां कथान्ते कृतपूजनाः ।
सज्जा ये चाऽभवन् ताँस्तु नेतुं कृष्ण उपाययौ ॥१७॥
दिव्यविमानसहितो दिव्याभरणभूषितः ।
श्रिया लक्ष्म्या पद्मया च रमया सह तेजसा ॥१८॥
प्रकाशयन् दिशो हरिर्हसन् मल्लानुवाच ह ।
मोक्षयोग्या भवन्तो वै मोक्षपुण्याभिभागिनः ॥१९॥
विहाय भौतिकान्देहानारोहन्तु विमानकम् ।
इत्युक्ता मल्लभक्तास्ते ये सज्जा गन्तुमक्षरम् ॥२०॥
नरा नार्यश्च ते देहान् विहाय दिव्यमूर्तयः ।
भूत्वा कृष्णेच्छया तूर्णमारुरुहुर्विमानकम् ॥२१॥
सर्वा मुक्तानिका मुक्ता दिव्यात्मानः सुरूपिणः ।
भूत्वा श्रीकृष्णदासाश्च जयशब्दान् प्रचक्रिरे ॥२२॥
तान्नीत्वा श्रीकृष्णनारायणो बद्रीश्वरि निजम् ।
धामाऽक्षरं ययौ व्योम्ना सर्वेषां पश्यतां सताम् ॥२३॥
तेषां देहानपरे तु शिष्टा मल्लकुटुम्बिनः ।
नीत्वा प्रदाहयामासुश्चौर्ध्वदैहिकमाचरन् ॥२४॥
चमत्कारो महाँश्चार्य प्रससाराऽतिवेगतः ।
देशे ग्रामेषु मल्लानां मोक्षात्मकोऽतिमानवः ॥२५॥
शृणु बद्रीप्रिये देवि चमत्कारं तथाऽपरम् ।
वार्धूषिकाश्च गोधादा लूणीनगरवासिनः ॥२६॥
दन्तधावनविक्रेतारश्च कुटुम्बिनस्तदा ।
श्रुतवन्तो मानुषेभ्यः प्रशंसां परमात्मनः ॥२७॥
कथायाश्च चमत्कारं पापिनां पापनाशनम् ।
मोक्षं दिव्यविमानेन यानं श्रीकृष्णदर्शनम् ॥२८॥
तेन प्रजातजिज्ञासा नरा नार्यश्च संहिताम् ।
श्रोतुं कृतादराः सज्जा बभूवुर्वृद्धसंहिताः ॥२९॥
बालाश्च बालिकाश्चापि शतं ते मानवाः सुखम् ।
वृषभैर्निजसामग्रीर्नीयमानाः शनैः शनैः ॥३०॥
वाग्धरयः श्रीकृष्णं श्रीनारायणं परेश्वरम् ।
स्मरन्तः प्रययुः सिन्धुजले सस्नुस्ततो द्रुतम् ॥३१॥
भक्षयित्वा तु पाथेयं प्रययुर्मण्डपान्तिकम् ।
उद्याने वृषभाऽऽवासं चक्रिरे तरुषण्डके ॥३२॥
ततः श्रोतुं कथां नीत्वा पूजासामग्रिकाः शुभाः ।
व्यासासनं कथास्थानं ययुर्भावभराश्च ते ॥३३॥
पुपूजुः परया भक्त्या भावप्रकाशवाचकम् ।
लक्ष्मीनारायणसंहितां पुपूजुः समाहिताः ॥३४॥
उपदाः फलपुष्पाणि स्वर्णमुद्राः पुरो न्यधुः ।
वस्त्रभूषामालिकाश्च मणिहारान् ददुस्तथा ॥३५॥
गुञ्जाहारान् पुष्पहारानक्षतान् निदधुः पुरः ।
धूपं दीपं च नैवेद्यं कुंकुमाऽगुरुचन्दनम् ॥३६॥
समर्प्याऽऽरार्त्रिकं चक्रुः सर्वे चक्रुश्च दण्डवत् ।
दक्षिणां रूप्यमुद्राश्च पुरो न्यधुस्ततः कथाम् ॥३७॥
शुश्रुवुर्भावतश्चापि पुपूजुर्लोमशं मुनिम् ।
सतां सेवामाश्रमेषु गत्वा चक्रुरहर्निशम् ॥३८॥
एवं वार्धूषिकाः सर्वे कथासेवाविधानतः ।
गतपापा विशुद्धाश्चाऽभवन् तेभ्यस्तु लोमशः ॥३९॥
मन्त्रं संश्रावयामास नामधुन्यं ददौ तथा ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥४०॥
'प्रभोनारायणस्वामिन्मालतीनारायणप्रभो ।
जयाकृष्णललितानारायणराधापते विभो' ॥४१॥
प्राप्य मन्त्रं नामधुन्यं जेपुश्चक्रुः सदा प्रगे ।
सायं त्वेवं कथां श्रुत्वा जेपुश्चक्रुः समागताः ॥४२॥
नित्यं स्नानाद्य ददति दन्तधावनकान्यपि ।
बर्बुरादिद्रुमाणां वा क्षीरवतां सुशाखिनाम् ॥४३॥

तनुशाखान्तलभ्यानि मृदूनि सुरसानि च ।
एवं गत्वा पार्श्ववने त्वानयन्ति मधून्यपि ॥४४॥
समर्पयन्ति साधुभ्यो वाचकाय महर्षये ।
कृष्णनारायणस्यापि पूजार्थमर्पयन्त्यपि ॥४५॥
आनयन्ति च समिधः काष्ठानि धुनिहेतवे ।
मृत्तिकां चानयन्त्यत्र सेवन्ते साधुयोगिनः ॥४६॥
एवं सर्वे क्रोष्टृव्याधा वैष्णवाः सेवयाऽभवन् ।
पावनाः पापहीनाश्च कथाश्रुतेर्विवासनाः ॥४७॥
मासान्ते श्रीप्रभुर्नारायणः श्रीमाधवीश्वरः ।
कृष्णः प्रसन्नस्तेषां वै स्वप्ने साक्षात्तदाऽभवत् ॥४८॥
चतुर्भुजः श्रीसहितः कृतसेवादिवस्तुयुक् ।
हसन् दिव्यस्वरूपश्च सहस्रसूर्यभायुतः ॥४९॥
क्षणात्तिरोऽभवच्चापि ततस्ते प्रातरेव ह ।
उत्थाय तूर्णं संस्नात्वा प्रसन्ना लोमशं ययुः ॥५०॥
पूजयित्वा तु वृत्तान्तं स्वाप्नं न्यवेदयन्मुदा ।
लोमशोऽपि समाकर्ण्य प्राह क्रोष्टृहणः शुभम् ॥५१॥
युष्माकं पातकं नष्टं पुण्यमभ्युदितं बहु ।
देवानां दुर्लभं कृष्णदर्शनं व उपस्थितम् ॥५२॥
यूयं योग्या मोक्षपदे नेतुं वित्त हि सर्वथा ।
भगवान् श्रीकृष्णनारायणो नेष्यति वस्तुतः ॥५३॥
सज्जा भवत वृद्धाद्या ये वाञ्छन्त्यक्षरं पदम् ।
नारायणः स्वयं लक्ष्मीपतिः समागमिष्यति ॥५४॥
इत्युक्तास्ते वाध्वरयोऽभवन् सज्जास्तु मुक्तये ।
वृद्धा नार्यो नराश्चापि प्रतीक्षन्ते तदागमम् ॥५५॥
चैत्रकृष्णामावास्याया रात्र्यन्ते प्रतिपद्दिने ।
प्रातरेव समायातः श्रीकृष्णः पुरुषोत्तमः ॥५६॥
चैत्रशुक्लाऽऽद्यदिवसे शुक्लातिशुक्लरूपवान् ।
उज्ज्वलः श्रीसहितः श्रीकृष्णनारायणः स्वयम् ॥५७॥
सर्वभूषाप्रभूषितः सर्वथा सौम्य ईशिता ।
विमानेन द्रुतं चाऽवातरत् पृथ्व्यां पुरःक्षितौ ॥५८॥
आश्चर्यं परमं जातं समुज्ज्वलं तदाऽम्बरम् ।
जयनादाः सुराणां च पुष्पवृष्टिर्दिवौकसाम् ॥५९॥
अभवन् परितस्तत्र क्रोष्टृहन्तॄनुवाच सः ।
आयात संप्रसन्नोऽस्मि भक्त्या कथाश्रवेण च ॥६०॥
साधूनां सेवया चापि मन्नामकीर्तनेन च ।
पावनाः स्थः समायात विमानं मोक्षनेतृ मे ॥६१॥
श्रुत्वा तु वद्रिके ये ये सज्जा गन्तुं परं पदम् ।
अभवँस्ते द्रुतं देहाँस्त्यक्त्वा तत्र हि भौतिकान् ॥६२॥

विमानं ते दिव्यदेहा भूत्वाऽऽरुरुहुरुत्सुकाः ।
हर्षलालादिनामानो नत्वा श्रीपतिमीश्वरम् ॥६३॥
श्रियं नत्वा नरा नार्यो मुक्ता मुक्तानिकास्तदा ।
श्रीकृष्णेन प्रणीतास्ते ययुर्ब्रह्माऽक्षरं पदम् ॥६४॥
सर्वेषां पश्यतां वद्रि परं मोक्षं ययुर्हि ते ।
कृपया श्रीकृष्णनारायणस्य च कथाबलात् ॥६५॥
अथाऽन्यत्ते कथयामि महाश्चर्यं तदा तथा ।
शृणु वद्रीप्रिये देवि शृण्वतां पापनाशकम् ॥६६॥
कश्चिन्मृगयुरभवत् सिन्धुवने कुटुम्बवान् ।
दृष्टवानम्बरे तेजः प्रातरेव विमानकम् ॥६७॥
मुमुदे वीक्ष्य सहसा कुटुम्बेन समन्वितः ।
तस्याऽभवत्ततो बुद्धिः शुद्धा मोक्षाभिगामिनी ॥६८॥
हिंसां विहाय पापानां नाशार्थं सकुटुम्बकः ।
कथास्थलं ययौ तत्र पुपूज लोमशं मुनिम् ॥६९॥
न्यवेदयत् स्ववृत्तान्तं पापनाशनहेतुकम् ।
कथां श्रोतुं तथा मन्त्रं चाप्तुं गन्तुं परं पदम् ॥७०॥
लोमशस्तं कीरवणं मृगयुं प्राह वै व्रतम् ।
स्नानं प्रपूजनं मालावर्तनं सेवनं सताम् ॥७१॥
नित्यं कथायाः श्रवणं कीर्तनं कमलापतेः ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥७२॥
ददौ मन्त्रं हरेः पादवार्यमृतं ददौ तथा ।
प्रसादं च ददौ ब्रह्मकूर्चं व्रतं ददौ ततः ॥७३॥
कीरवणादयः सर्वे कुटुम्बिनो व्यधुर्व्रतम् ।
भजनं सेवनं कथाश्रवणं रटनं सदा ॥७४॥
एवं मासे गते साक्षात् कृष्णनारायणः प्रभुः ।
आययौ साधुरूपो वै द्रुतं कीरवणं प्रति ॥७५॥
भिक्षां ययाचे सहसा फलपुष्पादिभोजनाम् ।
पात्राम्बरादिरूपां च नार्यर्पणात्मिकामपि ॥७६॥
प्रसन्नः स कीरवणो वीक्ष्य साधुं समुज्ज्वलम् ।
नारायणं विचिन्त्यैव ददौ नारीं फलादिकम् ॥७७॥
निःसंशयं निजं भक्तं भक्तां परीक्ष्य माधवः ।
साधुरूपादाविरास विष्णुरूपश्चतुर्भुजः ॥७८॥
प्राप्त्वा फलं प्रपस्पर्श नारीं नरं कुटुम्बकम् ।
दक्षकरेण भगवान् तावत् कीरवणादयः ॥७९॥
दिव्यदेहा द्रुतं जाता दिव्यरूपाद्यमूर्तयः ।
विष्णुर्नारायणस्तांश्च सर्वस्वदानकारिणः ॥८०॥
शरणागतभक्तान् वै विमानेन सुवर्चसा ।
अनयद् ब्रह्मलोकं वै पश्यतां देहधारिणाम् ॥८१॥

बद्रिके सा कृपा स्वामिकृष्णनारायणस्य वै ।
मृगयुं त्वनयत् कृष्णो यन्निजं धाम चाक्षरम् ॥८२॥

**श्रीबद्रीप्रियोवाच—**

कथं वै भगवन्नारायण विष्णो जगत्पते ।
हिंसकस्याऽभवद् व्योम्नि विमानस्याऽस्य दर्शनम् ॥८३॥

**श्रीनरनारायण उवाच—**

बद्रीप्रिये वने नित्यं साधुसेवापरः स हि ।
फलपुष्पादिभिश्चापि विश्रान्तिसंप्रदानकः ॥८४॥
सतां पादादिसंवाहसेवाकृत् सकुटुम्बकः ।
नारायणप्रभुं कृष्णं जपन् सत्संगकारकः ॥८५॥
तेन योगेन देवेशि निर्मलात्मा सुपुण्यवान् ।
त्यक्तमृगयाधर्मः स पश्चकालादवर्तत ॥८६॥
एवमासीत् पुण्यशाली साधुभक्तोऽतिभाववान् ।
ततोऽस्य श्रीविमानस्य दर्शनं त्वभवत्तदा ॥८७॥
बद्रिके ये भागवतास्ते तु कृष्णप्रतापिनः ।
दिव्यदृष्टयः पश्यन्ति दिव्यं कृष्णं विमानकम् ॥८८॥
ये पापा दोषभृद्देहा दोषात्मानश्च दोषिणः ।
नास्तिका भक्तिहीनाश्च सतां विद्वेषिणस्तथा ॥८९॥
तेषां नैवाऽस्ति निस्तारस्तेषां न दिव्यदर्शनम् ।
तेषां न योगः सुभगो मोक्षदः स्वर्गदोऽपि वा ॥९०॥
अपि सत्संगपार्श्वे ये वसन्तोऽपि तु नास्तिकाः ।
तेषां सत्संगलाभो न न पुण्यं नैव मोक्षणम् ॥९१॥
अपि दूरे वसन्तो ये स्नेहवन्तो हरौ सति ।
सत्सु तादात्म्यहृदयास्तेषां पुण्यं च मोक्षणम् ॥९२॥
बद्रिके बाह्यसन्निधिश्च सहाऽऽन्तरिकसाधवः ।
मेलनीयाः प्रयत्नेन तदा मुक्तिः करे स्थिता ॥९३॥
बाह्यतो न सतां योगश्चान्तरे विषयान्वितः ।
तादृक् सत्संगहीनस्य न स्वर्गं न परा गतिः ॥९४॥
बद्रिके वै जगत् सर्वं मायाविकृतिशोभनम् ।
अन्तर्नग्नं बहिश्छन्नं गार्हस्थ्यं सुतरां तथा ॥९५॥
सदा विषयचित्तात्म सदा भोगपरायणम् ।
बहिः सुवेषमपि तन्नग्नं न याति मोक्षणम् ॥९६॥
बद्रिके साधवः शान्ता जितेन्द्रिया हरौ स्थिराः ।
अन्तर्विषयहीनाश्च बहिर्दिग्वाससोऽपि च ॥९७॥
ब्रह्मगुणैर्दिव्यवस्त्रैश्छन्ना विभूषितास्तु ते ।
अविकृता अकामाश्च वासनाविषवर्जिताः ॥९८॥
स्त्रीपुंमानविहीनास्ते सुवेषाः साधवो मताः ।
तेषां योगेन पापानां विनाशो ब्रह्मदर्शनम् ॥९९॥
आत्मनां दिव्यताप्राप्तिरैश्वर्याणां समर्जनम् ।
मोक्षप्राप्तिर्हरेः प्राप्तिः सतां योगेन जायते ॥१००॥
कालनाशस्तथा मायानाशः कर्मविनाशनम् ।
बन्धनाशो वासनानां क्षयः सद्योगतो भवेत् ॥१०१॥
एवं मृगयुश्चारण्ये साधुसेवापरायणः ।
जीवन्नलवान् कृष्णस्य विमानं समलोकयत् ॥१०२॥
पठनाच्छ्रवणादस्य स्वर्गो मुक्तिर्भवेदपि ।
भुक्तिः स्यात्तु सकामानां साधुसंगाद्धि मोक्षणम् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने हरिवीर्यादिमल्लानां, हर्षलालादिमृगयूणां, कीरवणादिव्याधानां, च कथाश्रवणादितो मोक्षणमित्यादिनिरूपणनामा षष्टितमोऽध्यायः ॥ ६० ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि लीनक्षारनिवासिनः ।
नागादस्य कथां चापि पापतापप्रणाशिनीम् ॥ १ ॥
लीनक्षारे तु नगरे नागखेलकरः सदा ।
सर्पपालोऽभवद् वादी नागादनामकः खलु ॥ २ ॥
वादिकुटुम्बकं तत्र वर्तते सर्पपालकम् ।
नकुलानां च सर्पाणां शीलानां युद्धदर्शकम् ॥ ३ ॥
आरण्यकपशूनां च सरीसृपाणां पालकम् ।
वानराणां च ऋक्षाणां कुक्कुटानां च पालकम् ॥ ४ ॥
पशूनादाय राष्ट्रेषु राष्ट्रान्तरेषु याति हि ।
पशुपक्षिसरीसृपखेलनैर्जीवनवृत्तिकाम् ॥ ५ ॥
उत्पाद्य निर्वहत्येव ग्रामे ग्रामे भ्रमत्यपि ।
पक्षिपशून् भक्षयति पशुवद् वर्ततेऽपि च ॥ ६ ॥
पोषणार्थं भ्रमत्तद्वै कुटुम्बं शर्करापुरम् ।
आययौ तत् सिन्धुतटे वृक्षषण्डे समीपतः ॥ ७ ॥
मण्डपान्नातिदूरे च कथाशब्दाभिसारिणि ।
स्थले वासं विधायैव तस्थौ जीवनहेतवे ॥ ८ ॥
मानवानां तु सम्मर्दे खेलं दर्शयति प्रगे ।
मध्यान्हे च तथा सायं जना ददति भोजनम् ॥ ९ ॥
अन्नं वस्त्रं च पिष्टं चाऽक्षतान् वस्त्राणि दुग्धकम् ।
शर्करां च गुडं शाकं पात्रं फलं दलादिकम् ॥१०॥
घृतं तैलं चेक्षुदण्डं घासं कणान् सुपोलिकाः ।
रोटकान् चणकान् भक्ष्यं ददत्येव दयावशाः ॥११॥

नागादनादयस्तेऽपि वादिटाः सर्पकीशयोः ।
सर्पनकुलयोश्चापि प्रदर्श्य खेलनं मुहुः ॥१२॥
लोकान् प्ररञ्जयन्त्येव वृत्तिनिर्वाहहेतवे ।
अथैवं खेलनं कृत्वा यथाकाले कथार्थिनः ॥१३॥
वादिटास्ते कथां श्रोतुं सायमायान्ति नित्यशः ।
पूजनं व्यासदेवस्य संहितायाश्च पूजनम् ॥१४॥
साधूनां लोमशादेश्च कुर्वन्ति पूजनं शुभम् ।
उपदाश्चार्पयन्त्येव फलपुष्पाम्बरादिकम् ॥१५॥
एकदा स्वपशूनां ते सभारञ्जनहेतवे ।
व्यधुः खेलं सभारंगे सतां प्रसन्नतात्मये ॥१६॥
भल्लुकानां च ऋक्षाणां कीशानां वृश्चिकस्य च ।
कुक्कुटानां भोगिनां च नकुलानां च मेषयोः ॥१७॥
रञ्जिताः खेलनैः सन्तः प्रसादं ते ददुस्तदा ।
मिष्टान्नानि भोजनानि फलानि पिष्टकानि च ॥१८॥
शर्कराश्च पयः सूपौदनानि भाजिकास्तथा ।
पोलिकाः पूरिकाश्चापि शष्कुलीर्लड्डुकानपि ॥१९॥
पायसान्नमपूपान् शाकान्युच्चावचानि च ।
रन्धितान्नानि चणकान् संस्कृतान् पाचितान् शृतान् ॥२०॥
चटनीं दधिदुग्धानि तक्राणि कृसराणि च ।
महाभोज्यानि सर्वाणि वादिटेभ्यस्तु साधवः ॥२१॥
ददुः प्रसादरूपाणि पशुभ्योऽपि शुभानि च ।
प्रसादान्नानि सर्वाणि ददुः पयांसि यानि च ॥२२॥
हरेः पादामृतं वारि ददुस्तेभ्यो दयान्विताः ।
बुभुजुस्ते हृष्टचित्ता वादिटाः सर्वशस्तदा ॥२३॥
पशवोऽपि प्रसादेन तृप्ताः किं वादिटाः पुनः ।
पावनाः पापशून्यास्तेऽभवन् प्रसादभोजनात् ॥२४॥
कथानां श्रवणैश्चापि सत्त्वचित्तास्ततोऽभवन् ।
मोक्षार्थमर्थयामासुर्लोमशं श्रेयसे मुहुः ॥२५॥
लोमशः प्रददौ तेभ्यो मन्त्रं नाम हरेरपि ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥२६॥
प्रभोनारायणस्वामिन्माधवीनारायणप्रभो ।
जयाकृष्णललितानारायणराधापते विभो ॥२७॥
अथैवं प्राप्य मन्त्रं ते नामधुन्यं प्रमुक्तिदम् ।
वैष्णवाः परमा जाताश्चक्रुस्ते भजनं हरेः ॥२८॥
मासान्ते पावनानां वै प्रसन्नः श्रीनरायणः ।
चैत्रस्यैव श्वेतपक्षे तृतीयायां श्रियः पतिः ॥२९॥
भगवानाययौ तेषां श्रेयसे सविमानकः ।
अनादिश्रीकृष्णस्वामी वल्लभो हि महाप्रभुः ॥३०॥
विमानात् सहसा सायं चावातरत् सभास्थले ।
कथोत्तरं स्वयं कृष्णो जगाद वादिटान् हितम् ॥३१॥
आयात वादिटा यूयं मोक्षार्थं मद्विमानके ।
ये सन्नास्त्विह मोक्षार्थं तेषां करोमि मोक्षणम् ॥३२॥
कृपया चागतस्त्वत्र वो ददामि कथाफलम् ।
इत्युक्ता मोहमापन्नाः स्वामिनिकृष्णमाधवे ॥३३॥
वादिटाश्चाबालवृद्धाः पञ्चाशन्नरयोषितः ।
शतेन सहिताः पक्षिपशुवृश्चिकभोगिनाम् ॥३४॥
अन्यैश्च पशुभिः सर्वैः सहिताः श्रेय आर्थयन् ।
प्राहुः श्रीपरमात्मानं पश्वाद्या बालका हि नः ॥३५॥
तान् विहाय कथं कृष्ण यास्यामः श्रेयसे वयम् ।
तान् समुद्धर भगवन् शरणागतवत्सल ॥३६॥
एतेषां न भवेन्मुक्तिः प्रत्यक्षं मापतिं विना ।
तिर्यग्योनिगतानां वै ततस्त्वं तान् समुद्धर ॥३७॥
इत्यर्थितो हि भगवाननादिश्रीनरायणः ।
वादिटैः सह पश्वादीन् जलेन प्रोक्ष्य तत्क्षणम् ॥३८॥
दिव्यदेहान् विधायैव मुक्तरूपान् चतुर्भुजान् ।
देवाकृतीन् समस्तांस्तान् विमाने न्यस्य यावतः ॥३९॥
सर्वेषां पश्यतां निन्ये धामाऽक्षरं निजं हरिः ।
नागादनादयः सर्वे कृपया सेवया श्रुतेः ॥४०॥
ययुर्धामाऽक्षरं वह्रि भक्त्या प्रपत्तिरूपया ।
जयकारोऽभवत्तत्र महोत्सवो व्यवर्तत ॥४१॥
अथाऽन्यं च चमत्कारं शृणु बद्रीप्रिये तथा ।
आम्रफलाख्यनगराच्छ्रुत्वा कथामहोत्सवम् ॥४२॥
आययुर्ग्यायामखेलकुशला द्वे शते नराः ।
नार्यश्चापि च खेलिन्यः सिंहाद्याः पशवो गजाः ॥४३॥
वाजिनः शरभा भल्लुका द्विपा गवयाः खराः ।
सारहास्यविदः सर्वे व्योमरज्ज्वादिदोलिनः ॥४४॥
वक्रकार्यविदो निरालम्बोड्डयनवेदिनः ।
महाबला नरा नार्यो देहकौशल्यदर्शिनः ॥४५॥
उद्याने ते निवासं वै चक्रुः खेलपरायणाः ।
नित्यं रात्रौ सुखेलानि कुर्वन्ति कारयन्त्यपि ॥४६॥
एकदा ते विना मूल्यं खेलनानि व्यधुर्निशि ।
सतां कथार्थिनां चापि मानवानां प्रहृष्टये ॥४७॥
रंगस्तत्र हि भक्तानां प्रभक्तानां महानभूत् ।
लक्षशो मानवा द्रष्टुं समायातास्तदा निशि ॥४८॥
गजानां वाजिनां चापि सिंहानां खेलनान्यपि ।
कृतवन्तश्च ते सारहास्यमण्डलिका नराः ॥४९॥

नारीणां गीतकार्याणि नर्तनानि व्यधुः स्त्रियः ।
पशूनां पक्षिणां यानि खेलनानि व्यधुश्च ते ॥५०॥
व्योमोड्डयनरूपाणि वह्निकार्याणि यान्यपि ।
यन्त्रखेलानि हृद्यानि चक्रिरे मानवादयः ॥५१॥
प्रसन्नास्तानि संवीक्ष्य वैष्णवाः साधवोऽपरे ।
नरा नार्यः प्रसन्नाश्च सञ्जाताः खेललोकनैः ॥५२॥
उपदाः खेलकेभ्यश्च ददुः श्रीवैष्णवा जनाः ।
नृपाः प्रजाः श्रेष्ठिनश्च धनानि बहुधा ददुः ॥५३॥
खेलान्ते साधवस्तेभ्यो मोक्षाशिषो ददुः शुभाः ।
स्वतःप्रकाशो भगवान् प्रसादं बहुशोभनम् ॥५४॥
भोजनं प्रददौ तेभ्यो मिष्टान्नं चरणामृतम् ।
भुक्त्वा ते पावना जाता मानवाः पशुपक्षिणः ॥५५॥
प्रातः स्नात्वा च ते नद्या जले श्रीलोमशं ययुः ।
कथास्थानं पूजनार्थे व्यासस्य पुस्तकस्य च ॥५६॥
प्रातः प्रपूजनं चक्रुर्बहुभिर्वस्तुभिश्च ते ।
उपदाश्च पुरो धृत्वा चन्दनाद्यैरपूजयन् ॥५७॥
प्रार्थयन् श्रेयसे तेऽपि कथाश्रवणपाविताः ।
लोमशस्तत्र सर्वेभ्यो मनुं नाम ददौ मुदा ॥५८॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'प्रभोनारायणस्वामिन्माधवीन्नारायणप्रभो ॥५९॥
जयाकृष्णललितान्नारायणराधापते विभो' ।
एवं मन्त्रं नामधुन्यं ददौ श्रीलोमशो मुनिः ॥६०॥
ते सर्वे सारहासस्था जेपुर्मन्त्रं विधानवत् ।
नामधुन्यं प्रचक्रुश्च मोक्षार्थे कृतनिश्चयाः ॥६१॥
सेवां सतां वैष्णवानां साध्वीनां चक्रिरे मुदा ।
कथां नित्यं शुश्रुवुस्ते दानधर्मपरायणाः ॥६२॥
नित्यं ते भजनं चक्रुः कृष्णनारायणप्रभोः ।
मासान्ते पावनानां तु मोक्षदाता नरायणः ॥६३॥
महाविमानमादाय सूर्यभासं सुवर्णजम् ।
लक्ष्म्या श्रिया प्रजया पद्मया मुक्तैर्युतं शुभम् ॥६४॥
आययौ मण्डपोद्यानमध्यदेशे ह्यवातरत् ।
विमानं तत्सूर्यतुल्यं व्यलोकयन् प्रजाजनाः ॥६५॥
सायाह्ने वै चैत्रशुक्लतृतीयायां द्रुतं जनाः ।
महाश्चर्यपरास्तत्र कथान्तेऽमित आययुः ॥६६॥
चक्रुस्ते दर्शनं स्वामिकृष्णनारायणस्य वै ।
सर्वेषां पश्यतां कृष्णः सारहासस्य मानवान् ॥६७॥
नरान्नारीः प्रावदद्वै त्वायान्त्वत्र विमानके ।
भवन्मोक्षायाऽऽजातोऽस्मि समारोहन्तु सत्वरम् ॥६८॥
ये वाञ्छन्ति परं मोक्षं ते त्वायान्तु विमानके ।
इत्युक्ता बद्रिके सारहासमण्डलिनो जनाः ॥६९॥
नरा नार्यो बालिकाश्च बाला वृद्धास्तथाऽपरे ।
युवानश्च विमला ये गतमोहा निरञ्जनाः ॥७०॥
निर्दग्धवासना ये च कथाश्रवणपाविताः ।
सज्जा गन्तुमभवन् ये वैराग्यवेगशालिनः ॥७१॥
ते सर्वे त्वरिताश्चासन् समुत्सुका हि मुक्तये ।
चक्रुर्हलहलाशब्दान् विमानं प्रति दुद्रुवुः ॥७२॥
पार्वणेन कृष्णनारायणपादजलेन तान् ।
संप्रोक्ष्य दिव्यदेहान् वै कृत्वा तत्रैव तत्क्षणम् ॥७३॥
दिव्योड्डयनशक्तीँश्च कृत्वा धृत्वा विमानके ।
देहैस्तैरेव षोडशवर्षान् विधाय माधवः ॥७४॥
मानवानां शतं चापि नीत्वा धामाऽक्षरं ययौ ।
शतं तत्राऽवशिष्टाश्च पशुपक्षिसमन्विताः ॥७५॥
महाश्चर्यपरास्तेऽपि भजनं चक्रुरादरात् ।
तेऽपि पश्चाज्जातवेगा मोक्षार्थे निश्चयं व्यधुः ॥७६॥
कीर्तनं नित्यमेवैते चक्रुर्वै भक्तिभावतः ।
दध्युर्नारायणंकृष्णं तन्मानसाश्च तत्पराः ॥७७॥
सतां सेवां प्रचक्रुश्च विशेषतः समर्पिताः ।
कथाश्रवणं चक्रुश्च नित्यं नित्यमतन्द्रिताः ॥७८॥
प्रार्थनां तेऽपि मोक्षार्थे चक्रुः श्रीलोमशाग्रतः ।
तथास्त्विति प्राह ऋषिश्चाशीर्वादान् ददौ ततः ॥७९॥
चैत्रस्य शुक्लैकादश्यां प्रातस्तेषां जनार्दनः ।
कृष्णनारायणो विष्णुर्मोक्षार्थे समुपागतः ॥८०॥
बद्रिके ते कृतस्नानाः कृतार्हणाः सभास्थलम् ।
आयायुस्तत्र वै श्रुत्वा कथां तिष्ठन्ति यावता ॥८१॥
तावद्विमानमाकाशादवातरत् सुवर्णजम् ।
दिव्यं श्रीबालकृष्णेन वाहितं सुविशालकम् ॥८२॥
सर्वेषां गोचरं रम्यं तस्मात् कृष्णो बहिर्मुदा ।
आगत्य सारहासस्थानवशिष्टान् हि मानवान् ॥८३॥
हरिः प्राह समायान्तु मोक्षपदं नयाम्यहम् ।
सारहासस्थाऽग्रनेता नाम्ना मार्तण्डमण्डलः ॥८४॥
यो वै मोक्षं गतः पूर्वं तस्य पुत्रोऽर्कमण्डलः ।
तूर्णं करे जलं धृत्वा संकल्पं प्र व्यधान्मुदा ॥८५॥
यद्धनं चोपकरणान्युच्चावचानि यानि च ।
वाहनानि च यानानि वस्त्रभूषासमृद्धयः ॥८६॥
सारहासीयकं सर्वं धनादि विविधर्द्धिकम् ।
अत्र स्थितं त्वर्पयामि पारायणार्थमत्र यत् ॥८७॥

जीवत्पशून् पक्षिगणान् सरीसृपादिकानपि ।
अस्माभिः सह श्रीकृष्णनारायणो नयत्वपि ॥८८॥
मोक्षपदं प्रयान्त्वेव पश्वाद्या अपि येऽत्र ह ।
मानवाश्च नरा नार्यो बालाश्च बालिका अपि ॥८९॥
दिव्यदेहा विमानेन प्रयान्त्वक्षरधाम ते ।
शृण्वतां वै सदस्यानां जलं मुमोच वै क्षितौ ॥९०॥
तावच्छ्रीकृष्णभगवान् जलं चिक्षेप तेषु तु ।
जलस्पर्शेन सहसा दिव्यदेहाः समुज्ज्वलाः ॥९१॥
सारहासजना आसन् दिव्याश्च दिव्यविग्रहाः ।
पश्वाद्याश्च स्थिता वासे मृतास्ते पशुविग्रहाः ॥९२॥
दिव्यदेहा अभवँश्च देवतुल्याः समस्ततः ।
आरुरुहुर्विमानं ते सर्वे वै मुक्तविग्रहाः ॥९३॥
नरा नार्यश्च पश्वाद्याः सारहासगतास्तु ये ।
सर्वे विमानमारूढाः श्रीकृष्णाज्ञावशास्तदा ॥९४॥
जयशब्दं नामधुन्यं विमाने ते प्रचक्रिरे ।
कृष्णनारायणनीता ययुर्धामाऽक्षरं हरेः ॥९५॥
बद्रिके जयशब्दाश्च तदाऽऽसन् सर्वतो ह्यति ।
पुष्पाणां वृष्टयस्तत्र दिव्यानामभवन् शुभाः ॥९६॥
चन्दनानां वृष्टयश्चाऽभवन् मेघपथश्च्युताः ।
सतां सेवाफलं मन्त्रनामजापफलं तथा ॥९७॥
कथाश्रवणजन्यं च फलं श्रद्धासमन्वितम् ।
बद्रिके सारहासस्य मण्डलस्य प्रजीविनाम् ॥९८॥
प्राप्तं कृपात्मकं चापि कृष्णनारायणस्य ह ।
कृष्णस्य कृपया सर्वे मुक्तिं ययुः पराक्षरे ॥९९॥
पठनाच्छ्रवणादस्य स्मरणादपि मोक्षभाग् ।
सर्वेष्टसिद्धिरत्यर्था सम्मुखी सम्प्रपद्यते ॥१००॥
संकल्पितं समस्तं वै लभ्येत श्रवणादपि ।
भुक्तिर्मुक्तिर्महास्वर्गे सर्वं करगतं भवेत् ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने बादित्स्य नागादननामकस्य सकुटुम्बस्य, सारहासमण्डलस्थानां मार्तण्डमण्डलादीनां समस्तानां च, कथाश्रवणसाधुसेवनभक्त्यादिभिर्मोक्षणमित्यादिनिरूपणनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि लुब्धादस्य कथामपि ।
काञ्चनानपुरे विप्रोऽभवत् प्रधानधिष्ण्यपः ॥ १ ॥
नाम्ना विलासदेवः स राष्ट्रे प्रधानकार्यकृत् ।
शर्करान्नृपतेराज्ञाकरो विवादमध्यगः ॥ २ ॥
न्यायकर्ताऽभवच्चापि धर्मशास्त्रानुसारतः ।
कुटुम्बसहितश्चापि राज्यसत्ताधिकारवान् ॥ ३ ॥
प्रजानां वादविषये श्रेयस्कृत् सुविचारवान् ।
कुशलो राज्यकरणे किन्तु लोभपरायणः ॥ ४ ॥
द्वयोर्विवादे प्रच्छन्नां लुञ्चां गृह्णाति वै द्वयोः ।
द्वयोः कार्याणि योग्यानि निस्तारयति न्यायतः ॥ ५ ॥
एवं जाते बहुकाले प्रतिष्ठामाप्तवानति ।
लुञ्चाधनैस्तु बहुलैः श्रेष्ठी धनपतिः स वै ॥ ६ ॥
जातस्तथापि लोभाढ्यो दानं पुण्यं करोति न ।
न तीर्थं न मखं दानं साधुभ्यो वा करोत्यपि ॥ ७ ॥
नाऽतिथीन् सतीः साध्वीर्न देवान् पूजयत्यपि ।
नोत्सवान् च वा श्राद्धं करोति कारयत्यपि ॥ ८ ॥
न व्रतानि न भजनं श्रेयः किञ्चित् करोत्यपि ।
आत्महितं नाऽऽचरति बद्रिके स द्विजो ह्यपि ॥ ९ ॥
नारकीव सदा चास्ते समृद्धोऽपि दरिद्रवत् ।
दीयते न न भुज्यते तत् तृतीयां विन्दते गतिम् ॥१०॥
एवमस्य भूदेवस्य विलासदेवनामिनः ।
धनं सञ्चयमापन्नं भूमौ चञ्चलतां गतम् ॥११॥
लुञ्चाजन्यं धनं सर्वं रक्तवृश्चिकतां गतम् ।
भूत्वा वृश्चिकरूपं तन्निर्गतं भूमिगर्ततः ॥१२॥
कोटिशो वृश्चिका रक्ता भवने निर्गता निशि ।
भयमासाद्य तत्पत्नी पुत्राः पुत्र्यश्च दासिकाः ॥१३॥
निर्ययुर्विह्वलाः सर्वे गृहाद्बहिर्द्रुतं तदा ।
विलासदेवो विप्रोऽपि परां विह्वलतां गतः ॥१४॥
शास्त्रदृष्ट्या विवेदाऽपि धनं वृश्चिकतां गतम् ।
शुशोच बहुधा तत्र भावयन् स्वकुटुम्बिनः ॥१५॥
अहो भार्ये सुताः पुत्र्यो धनं सर्वं गतं हि नः ।
दुर्भाग्यस्याऽर्जितं चापि प्रयाति वृश्चिकात्मकम् ॥१६॥
पश्यन्त्विमान् ताम्रकुंभान् रिक्तान् पूर्वप्रपूरितान् ।
लक्ष्मीर्मयाऽर्जिता सा न योजिता सत्सु कर्मसु ॥१७॥
नात्मार्थे नापि देवार्थे कुटुम्बार्थे न योजिता ।
रक्षिता सर्वदा गर्ते मूर्छिता सा गता स्वयम् ॥१८॥
कदर्यस्य धनं लक्ष्मीर्भोगशून्या विशीर्यति ।
अभोक्तारं विहायाऽन्यं याति षण्ढवधूरिव ॥१९॥
भोगात्मकं फलं नैव प्राप्तं मया कदाचन ।
प्रत्युताऽघं महत् प्राप्तं लुञ्चाजन्यं प्रलोभिना ॥२०॥

मोक्तव्यं परलोके तत्लुञ्चाकर्मफलं मया ।
उभयोर्लोकयोः कष्टं प्रत्यक्षं मम वर्तते ॥२१॥
पापमेतद्ब्राह्मणस्य ततोऽन्यच्चापि मेऽभवत् ।
द्रव्यार्जने प्रसक्तस्य सन्ध्याकर्मादिहीनता ॥२२॥
सत्यं शौचं क्षमा शान्तिस्तृप्तिर्व्रतं सुरार्चनम् ।
सन्तोषश्चात्मवेदित्वं स्वाभाविकं द्विजस्य यत् ॥२३॥
मया तद्विहितं सर्वं लोभात्मना तु पापिना ।
पापस्य लोके पापानां मूलं लोभो निगद्यते ॥२४॥

अधर्मपुत्रो लोभोऽस्त्यधर्मो लोभात् प्रवर्धते ।
लक्ष्मीः रुष्टा हरेः पत्नी ममाऽधर्मस्थितस्य वै ॥२५॥
जडाऽपि सा गता चैत्या भूत्वा वृश्चिकरूपिणी ।
तस्याः प्रसन्नतार्थे तु साधनं हरिसेवनम् ॥२६॥
विना प्रसन्नतां लक्ष्म्या वैकुण्ठे वसतिर्न हि ।
तस्मात् प्रसादनीया सा नारायणस्य सेवनात् ॥२७॥
इत्येवं स शुशोचापि निर्धनः स्वजनैः सह ।
विचित्ततां गतश्चापि लुञ्चाधनलयात्तथा ॥२८॥
कुटुम्बं दुःखमापन्नं सुखशून्यं ततोऽभवत् ।
पदं प्रधानं कष्टाख्यं सर्वं तस्याऽप्यभासत ॥२९॥

अन्यायोपार्जितं द्रव्यं मूल्मादाय निर्गतम् ।
तस्मात् प्रधानता दुष्टा लोभक्रोधादिसंभृता ॥३०॥
स्वर्गमोक्षादिहन्त्र्येव विप्रस्य तु विशेषतः ।
विप्रस्य योग्यता दैवे सुखदा न तु राजके ॥३१॥
सदा क्लेशमयं राज्यं सत्ता पापान्विता सदा ।
प्रधानता शाठ्ययुक्ता कथं विप्रस्य मोक्षणम् ॥३२॥

गायत्रीजापकालेऽपि राज्यकार्यविचिन्तनम् ।
श्रीकृष्णध्यानकालेऽपि शत्र्वादिध्यानमर्षणम् ॥३३॥
पूजाकाले महीमानसम्मानादिविधापनम् ।
देवदर्शनकालेऽपि चौरदुष्टादिचिन्तनम् ॥३४॥
आत्मसाधनकालेऽपि मायासाधनमन्वहम् ।
मोक्षसाधनसमये बन्धसाधनमुल्बणम् ॥३५॥
पुण्यसाधनसमये पापसाधनमायतम् ।
अहो कष्टपदं नित्यं प्रधानपदमीदृशम् ॥३६॥

तस्मात् त्याज्यं प्रधानत्वं सुखनिद्रा न यत्र वै ।
शाश्वतश्च न कोशोऽस्ति सा वै त्याज्या प्रधानता ॥३७॥
भाग्यरेखा दरिद्रस्य दारिद्र्यमातनोति वै ।
यतमानस्य यत्नोऽपि निर्बलो रेखया कृतः ॥३८॥
जन्मरेखा बलवती चान्ते स्वस्यां नयत्यपि ।
तथा ममापि सम्पन्ना स्थितिः पूर्वेव तापसी ॥३९॥

तस्मात् त्यक्त्वा प्रधानत्वं यामि त्वन्यत्र यत् सुखम् ।
श्रूयते तु मया नित्यं शुभं लोकमुखादपि ॥४०॥
लक्ष्मीनारायणसंहितायाः पारायणं परम् ।
वार्षिकं वर्तते नातिदूरे वै शर्करापुरे ॥४१॥
विप्रास्तत्र समायाता राजानो राजयोगिनः ।
ऋषयः साधवो भक्ता वैष्णवा बहवो जनाः ॥४२॥
श्रेष्ठिनश्च नरा नार्यो लक्षाधिमानवाः सदा ।
शृण्वन्ति तु कथा दिव्याः पावनास्ते भवन्त्यपि ॥४३॥

लक्ष्मीः प्रसन्ना भवति प्रसन्नश्च नरायणः ।
पापिनां चाऽनीक्ष्य दोषान् करोति पावनांस्तु तान् ॥४४॥
कृपयैव प्रभुः कृष्णो नारायणः परेश्वरः ।
आगत्य दर्शनं दत्वाऽक्षरं धाम नयत्यपि ॥४५॥
विप्रोऽहं पापसम्पन्नो मे गतिर्नान्यथा शुभा ।
गत्वा तत्र कथां श्रुत्वा कृत्वा पापविधूननम् ॥४६॥

ब्रह्मगतिं प्रयास्यामि स्यात् साफल्यं जनेर्मम ।
असारः खलु संसारः कृतोऽप्यकृत एव सः ॥४७॥
विवेकेन तु तं त्यक्त्वा यास्यामि परमां गतिम् ।
यद्वा तद्वा कथां श्रुत्वा सद्गतिर्मे भविष्यति ॥४८॥

कुटुम्बेन सहितोऽहं ततो याम्यधुना कथाम् ।
धर्मकृत्ये चिरता वै विघ्नदा न तु साधिका ॥४९॥
धर्मकार्यं त्वात्मकार्यं प्रकुर्वीत द्रुतं मुदा ।
प्रातः कालो निवर्तेत न चागच्छेत् पुनः शुभः ॥५०॥
विचार्येत्थं बद्रिके स विप्रो बिल्वसदेवकः ।
सज्जो भूत्वा कुटुम्बेन सहितः सुविचारवान् ॥५१॥

त्यक्त्वा प्रजासमक्षं वै पदं प्राधानिकं तु तत् ।
विरामं तु समासाद्य परिहारं विधाय च ॥५२॥
निर्ययौ नगरात्तस्माच्छर्करापुरमाययौ ।
महोद्याने निजावासं सभामण्डपसन्निधौ ॥५३॥
अकरोद्भगवत्प्राप्त्यै मनो दधेऽतिशान्तये ।
सस्नौ तीर्थजलैश्चाप्यादायोपदास्ततः स्वयम् ॥५४॥
कुटुम्बसहितो विप्रः कथामण्डपमाययौ ।
बद्रिके हृदये शान्तिर्विप्रस्य बहुधाऽभवत् ॥५५॥

मुक्तागौरी तु तत्पत्नी परां शान्तिमवाप ह ।
मण्डपदर्शनं कृत्वा पुत्र्यः पञ्च सुतास्त्रयः ॥५६॥
सर्वे शान्तिमगुस्तत्र कृत्वा व्यासस्य दर्शनम् ।
संहितायाः दर्शनं च लोमशस्यापि दर्शनम् ॥५७॥
कृत्वा सतां दर्शनं च साध्वीनां दर्शनं तथा ।
वैष्णवानामृषीणां च भक्तानां दर्शनं ह्यपि ॥५८॥

एवं तेषां दर्शनेन संकल्पा विलयं गताः ।
हृदयान्यमलान्येव जातानि मानसान्यपि ॥५९॥
उद्वेगा विलयं प्राप्ताश्चिन्ता चित्तान्यवर्तत ।
दुःखं व्याधिराध्युपाधी सर्वं तद् विलयं गतम् ॥६०॥
ब्रह्मसुखं यथा स्याद्वा तथा कृष्णसुखं भवेत् ।
मुक्तिसुखं यथा वा स्यात् तथा शान्तिर्व्यवर्तत ॥६१॥
अहो स्थानस्य माहात्म्यं मायाजालं लयं गतम् ।
अहो दर्शनमाहात्म्यं मनोमलमलीयत ॥६२॥
अहो सतां प्रमाहात्म्यं वासना विलयं गता ।
दर्शनादेव विप्रस्य तापास्तत्र लयं गताः ॥६३॥
तत्र चागत्य पुरतो व्यासस्याऽर्हणमाचरत् ।
संहितायाः पूजनं च लोमशस्यापि पूजनम् ॥६४॥
सतां प्रपूजनं चापि नीराजनं व्यधादपि ।
धूपं दीपं दण्डवच्च नैवेद्यं च फलार्पणम् ॥६५॥
जलं पयः शर्करां च न्यधाच्छुभाऽक्षतानपि ।
तुलसीपत्रहारांश्च कुन्दकुसुमहारकान् ॥६६॥
चन्दनं केसरं चापि न्यधात् स संहितान्तिके ।
कम्बलान् दिव्यवस्त्राणि भूषाः सौवर्णजा न्यधात् ॥६७॥
वेषोपवेषान् रम्यांश्च राजार्हकटकानपि ।
न्यधात् कथायाः पुरतो दिव्यरत्नोपदास्तथा ॥६८॥
प्रदक्षिणं ततः कृत्वा नत्वा नारायणं हरिम् ।
व्यासं सभां ततः कुटुम्बान्वितो मण्डपे द्विजः ॥६९॥
निषसाद पुरःस्थाने सभ्यसम्मानितो हि सः ।
तत्पत्नीपुत्रिकापुत्राः पुपूजुर्व्यासमुत्सुकाः ॥७०॥
नत्वा धृत्वा प्रसादाम्बु मुखे च मस्तकोपरि ।
निषेदुश्च सभायां वै श्रोतुं कथां हि पावनीम् ॥७१॥
भुक्त्वा जग्मुर्निजावासं त्वेवं नित्यमतन्द्रिताः ।
कथां शृण्वन्ति सेवन्ते साधून् महर्षिपुंगवान् ॥७२॥
कथाश्रवणतस्तेषां वैराग्यं समपद्यत ।
दीक्षां प्राप्तुं समीहाऽपि समजायत वै द्रुतम् ॥७३॥
मासान्ते श्रीलोमशो वै मन्त्रं तेभ्यो ददौ पुरा ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥७४॥
प्रभोनारायणस्वामिन् माधवीन्नारायणप्रभो ।
जयाकृष्णललितान्नारायणराधापते विभो ॥७५॥
एवं नामभजनं च ददौ तेभ्यो मुदाऽथ ते ।
चक्रुस्तन्नामभजनं नित्यं श्रीकृष्णवैष्णवाः ॥७६॥
अथ त्यागाश्रमे स्थातुं समैच्छन् ते कुटुम्बिनः ।
प्रार्थयन् वाचकं व्यासं स्वतःप्रकाशकायनम् ॥७७॥

व्यासस्तथास्त्विति प्राह चैत्रान्तैकादशीतिथौ ।
धवले पक्षके प्रातः प्रायश्चित्तमकारयत् ॥७८॥
पापविशोधनं श्राद्धं पितृकार्यमकारयत् ।
ऋणापाकरणं चापि ग्रहापाकरणं तथा ॥७९॥
कारयित्वा तीर्थविधिं रक्षामन्त्रं ददौ ततः ।
'कालमायापापकर्मशत्रुयाम्यकुहृद्भयात् ॥८०॥
शूलमीनध्वजधनुश्चक्रस्वस्तिकवानव' ।
रक्षामन्त्रमिति दत्वा प्रपत्तिं प्रददौ ततः ॥८१॥
'शरणं श्रीकृष्णनारायणोऽस्तु मम सर्वदा' ।
एवं शरणमन्त्रं च दत्वा ब्रह्ममनुं ददौ ॥८२॥
'ब्रह्माऽहं श्रीकृष्णनारायणभक्तोऽस्मि शाश्वतः ।
अनादिश्रीकृष्णनारायणः स्वामी पतिश्च मे' ॥८३॥
ब्रह्मभावमनुं दत्वा चात्मनिवेदनं ददौ ।
'बालकृष्णः परब्रह्म मम वै शाश्वतः पतिः ॥८४॥
पिता बन्धुः सुहृन्मित्रं रक्षकः पालकोऽस्तु सः' ।
'ओं श्रीलक्ष्म्यै महालक्ष्म्यै दुःखमन्त्र्यै श्रियै नमः ॥८५॥
ओं मां श्रीबालकृष्णाय समर्पयामि ओं नमः' ।
एवं समर्पणं दत्वा काषायाम्बरधोत्रकम् ॥८६॥
उत्तरीयं शिरस्त्राणं तथा चाप्यंगरक्षकम् ।
गात्ररक्षकमेवापि काषायाम्बरमार्पयत् ॥८७॥
यज्ञोपवीतकं कण्ठीं तौलसीं चन्दनं तथा ।
मालिकां श्रीकृष्णनारायणमूर्तिं ददौ ततः ॥८८॥
एवं नरेभ्यो दत्वा श्रीकृष्णनारायणेति च ।
नामजपात्मकं दत्वा नारीभ्यो दीक्षणं ददौ ॥८९॥
मन्त्रान् दत्वा च काषायाम्बरशाटीं नवां शुभाम् ।
काषायघर्घरीं चापि काषायचोलिकां ददौ ॥९०॥
काषायकुचरक्षां च काषायमूर्धकेशलीम् ।
यज्ञोपवीतकं कण्ठीं तौलसीं कुंकुमं तथा ॥९१॥
मालिकां श्रीकृष्णनारायणमूर्तिं ततो ददौ ।
ज्ञानं विस्तारतश्चापि ददौ सर्वार्पणात्मकम् ॥९२॥
देहेन्द्रियाऽन्तःकरणैश्चात्मना गुणकर्मभिः ।
अर्पणं श्रीकृष्णनारायणे दानात्मकं हि तत् ॥९३॥
उपवासस्तपः श्रेष्ठं ब्रह्मचर्यं तपः परम् ।
कृष्णचर्या परा भक्तिः पराऽक्षरप्रदा मता ॥९४॥
उपवासेन नश्येद् वै कायेन्द्रियाऽघजातकम् ।
आन्तराणां भवेच्छुद्धिर्दोषाणां क्षपणं तथा ॥९५॥
ब्रह्मचर्येण कामानां निरोधो दोषनाशनम् ।
वासनाविलयश्चापि नारकित्वप्रमोक्षणम् ॥९६॥

श्रीकृष्णचर्यया सर्वे नैष्कर्म्यमभिजायते।
श्रीकृष्णानुग्रहश्चापि श्रीकृष्णार्थसमस्तता ॥९७॥
तद्भक्त्या तद्धामगतिस्तन्मूर्तावभिवासिता।
तदानन्दाशनमात्रं कृष्णतादात्म्यमित्यपि ॥९८॥
एवं समुपदिश्यैव प्रसादाञ्जलामृतम्।
ददौ तेभ्यश्च ते भक्ता महाभागवतोत्तमाः ॥९९॥
त्यागिसन्तो भावभक्त्या पुपूजुर्व्यासवद्गुरुम्।
एवं बद्रीप्रिये! क्षुम्नादनोऽपि द्विजपुंगवः ॥१००॥
कुटुम्बसहितो जातः साधुः प्रधानतां जहौ।
दीक्षानामाऽभवत्तस्य दिव्यप्रकाशकायनः ॥१०१॥
त्रिपुत्राणां तु नामानि सुरप्रकाशकायनः।
मुनिप्रकाशायनकः कृष्णप्रकाशकायनः ॥१०२॥
पत्नी साध्वी दधे नाम गौरीमुक्तायनीति वै।
पञ्च पुत्र्यो नाम दध्युः—मौक्तिकायनिका तथा ॥१०३॥
श्रीसत्यायनिका चेति ब्रह्मधामायनी तथा।
कृष्णकान्तायनी चापि विष्णुकान्तायनीति च ॥१०४॥
एवं बद्रीप्रिये त्यागाश्रमे तस्थुः सदा तु ते।
कालान्तरे कृपां प्राप्य ययुर्धामाऽक्षरं हरेः ॥१०५॥
दीक्षां वीक्ष्य तदा नार्यो नराश्चापि सहस्रशः।
जगृहुर्वैष्णवीं दीक्षां तत्र त्यागमयीं दिने ॥१०६॥
आतुरदीक्षितास्तत्र बहवोऽपि नराः स्त्रियः।
चैत्रशुक्लैकादश्यां ते द्वादश्यामपि केचन ॥१०७॥
त्रयोदश्यां चतुर्दश्यां पूर्णायामपि केचन।
दिव्यदेहा अभवंश्च तान्नेतुं श्रीनरायणः ॥१०८॥
विमानसहितस्तत्राऽऽययौ निनाय चाक्षरम्।
एवं चाक्षरधाम्नस्तु मार्गं उद्घाटितस्तदा ॥१०९॥
अनादिश्रीकृष्णनारायणकान्तेन बद्रिके।
सहस्रशश्चैत्रशुक्ले ययुर्धामाऽक्षरं हरेः ॥११०॥
पठनाच्छ्रवणादस्य चमत्काराऽवबोधनात्।
भुक्तिर्मुक्तिर्भवेच्चापि कृपया श्रीपतेः प्रभोः ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने क्षुम्नादनस्य विलासदेवविप्रस्य सकुटुम्बस्य राज्य-प्रधानस्य कथाश्रवणेन साधुदीक्षाग्रहणमित्यादि-निरूपणनामा द्वाषष्टितमोऽध्यायः ॥ ६२ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीश्वरि देवि सर्वादस्य कथां तथा।
महीरायपुरे त्वासीद् दुरितघोषनामकः ॥ १ ॥
प्रधानपदभाग् विप्रः सर्वभक्षी यथा जनः।
सर्वादनः सर्वभोजी सर्वहारीति विश्रुतः ॥ २ ॥
सर्वाऽऽदानपरः पापी पापाचारोऽतिदूषितः।
प्रसह्य वा प्रसादेन सर्वं गृह्णाति सर्वतः ॥ ३ ॥
नाऽग्राह्यं नाऽभक्ष्यमस्य किमप्यासीच्च कस्यचित्।
म्लेच्छधर्माऽभवत् पापात् पापिसंगात् पशुर्यथा ॥ ४ ॥
पूर्वं सुधर्मकर्माऽपि पश्चात् प्रधानतां गतः।
सर्वधर्मविहीनोऽभून्नास्तिको निन्दकः खलः ॥ ५ ॥
राज्यद्रव्यं तथा पापं मतिभेदकरं हि तत्।
पापमिश्रं प्रजानां तद् धनमन्नं करादिकम् ॥ ६ ॥
दण्डद्रव्यं निकृष्टं च चौरधनं ततोऽप्यधः।
घातकान्नं गणिकान्नं यथाऽधोनाणकं तथा ॥ ७ ॥
तत्प्रयोगेण जठरा मलिना मलिनं मनः।
बुद्धेर्मालिन्यमेवापि धर्मे नास्तिक्यमेव तत् ॥ ८ ॥
सत्कर्मणां परित्यागो दुष्टकर्मानुवर्तनम्।
देवपूजापरित्यागो मोक्षमार्गादिवर्जनम् ॥ ९ ॥
अभक्ष्ये च ततस्तस्य प्रवर्तना प्रजायते।
सर्वाशनो भवेत् पश्चाद् विप्रोऽपि राक्षसो यथा ॥१०॥
एवं दुरितघोषोऽपि बद्रिके मानवोऽपि सन्।
विप्रोऽपि धिष्ण्यसंस्थोऽपि धिक्कृतिं समुपागतः ॥११॥
मिलित्वाऽथ समस्ताभिः प्रजाभिः स निराकृतः।
विमानितो निजग्रामान्निष्कासितः कुटुम्बयुक् ॥१२॥
ततः शोकं जगामाऽपि धर्मत्यागे हि धिक्कृतिः।
अवमानं प्रजाभ्यश्च देवेभ्योऽपि सदा तथा ॥१३॥
धिक्कृतो मानवैर्नैव परलोकाय कल्प्यते।
न गतिः सुभगा तस्य दग्धभाग्यश्च काचन ॥१४॥
रुदन्ति पितरश्चाऽस्य कुलदेवा रुषन्ति च।
धर्मो रुठति लक्ष्मीश्च नादौ कृत्वा निवर्तते ॥१५॥
सम्मानः स्वागतश्चेति श्रीपुत्रौ विप्रकर्षगौ।
सम्पदो विविधा रम्या विलीयन्ते ह्यधर्मिणः ॥१६॥
विघ्नाः कार्येषु जायन्ते स्खलनं च पदे पदे।
पराजयः समग्रेषु नैष्फल्यं चेष्टकर्मसु ॥१७॥
आरब्धेषु क्षतिश्चापि प्रारब्धेषु शिलाहतिः।
दुर्भिक्षत्वं फलदेषु निष्फलेषु प्रवर्तना ॥१८॥
गृहे कुटुम्बवर्गेऽपि कलिस्तस्य पदे धृते।
नारीपुत्राद्यमानं च श्वशूचिवत्तु जीवनम् ॥१९॥
ग्रामे सूकरवद्वृत्तिः प्रकाशोऽप्यन्धताऽस्य च।
हृदयेऽपि पापपुञ्जाद् वह्निज्वलनमन्वहम् ॥२०॥

आपत्तयः परितश्चागत्यैनं त्वर्दयन्त्यपि ।
हरेर्भक्तिं सतां सेवां गुरोः प्राप्तिं हरन्ति च ॥२१॥
दानं व्रतं तीर्थयात्रां विरुन्धन्ति क्षणे क्षणे ।
अभ्युदयं परं श्रेयः कल्याणं नाशयन्त्यपि ॥२२॥
किं बहुना बद्रिकेऽस्य पुरुषार्था वियन्ति च ।
निरर्थका हि सर्वे ते ततो यात्यधमां गतिम् ॥२३॥
एवं विचार्य बहुधा कल्याणमार्गणं व्यधात् ।
शुश्राव जनमुखतः पारायणमहोत्सवम् ॥२४॥
चमत्कारान् हरेश्चापि पापिनां पापनाशकान् ।
मोक्षदान् दिव्यताऽऽधानान् शुश्राव सकुटुम्बकः ॥२५॥
तत्र गन्तुं तदा बुद्धिमकरोत् स निराश्रयः ।
सज्जोऽभवद् द्रुतं चाश्वशकट्योष्ट्राऽनसा तथा ॥२६॥
योग्यवस्तून्युपकरणानि चादाय सत्वरम् ।
प्रतस्थे सकुटुम्बः स स्मरन्नारायणं हरिम् ॥२७॥
शर्करानगरं प्राप्य गत्या सभासुमण्डपम् ।
महोद्याने कृतावासः कृतस्नानविधिस्ततः ॥२८॥
धृतोपदः सकुटुम्बो ययौ व्यासासनं मुदा ।
साथं पूजां प्रचकार संहिताव्यासयोर्मुदा ॥२९॥
लोमशादेस्ततः पूजां कृत्वा नत्वा सतो जनान् ।
सभायां श्रवणार्थं स उपाविवेश मानितः ॥३०॥
कथान्ते स प्रचक्रे नीराजनं भावपूर्वकम् ।
कृष्णपादामृतं चापि पपौ प्रसादमाश च ॥३१॥
पूतात्मा सहसा जातो मन्त्रं जग्राह लोमशात् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥३२॥
'प्रभोनारायणश्रीमन्माधवीन्नायण प्रभो ।
जयाकृष्णललिताश्रीकृष्णराधापते विभो' ॥३३॥
एवं श्रीकृष्णधुन्यं च जग्राह लोमशादपि ।
नित्यं चक्रे नामधुन्यं सतां सेवनमन्वहम् ॥३४॥
कथायाः श्रवणं चापि पापक्षयोऽभवत्ततः ।
लोमशस्योपदेशेन ब्रह्मकूर्चव्रतं व्यधात् ॥३५॥
मासान्ते तस्य मनसि व्यजायत शुभेषणा ।
त्यागिदीक्षाग्रहणेच्छा प्रबला संव्यजायत ॥३६॥
प्रार्थयत् स व्यासदेवं सोऽपि दीक्षां ददौ ततः ।
प्रायश्चित्तोत्तरं श्राद्धं कारयित्वा विधानतः ॥३७॥
हवनादि ततः कृत्वा कृष्णनारायणार्हणम् ।
पञ्चगव्यं ततः प्राशयित्वा यज्ञोपवीतकम् ॥३८॥
ददौ मन्त्रान् शरणं तु प्रथमं रक्षणं ततः ।
ब्रह्ममन्त्रं तत आत्मनिवेदनं ततः परम् ॥३९॥
सर्वसमर्पणं चापि ददौ काषायवस्त्रकम् ।
समस्तवेषं प्रददौ विप्राय तत्स्त्रियै तथा ॥४०॥
पुत्रेभ्यश्च चतुर्भ्योऽपि सप्तपुत्रीभ्य इत्यपि ।
दीक्षां कण्ठीं तौलसीं च मूर्तिं पूजार्थमित्यपि ॥४१॥
कृष्णनारायणमूर्तिं श्रीयुतां प्रददौ तदा ।
नामजपं महादीक्षामादाय ते प्रचक्रिरे ॥४२॥
जयकारोऽभवत्तेषां सर्वमन्यच्छुभं तथा ।
अभवद्वै महादानादिकं तत्र तु दीक्षणे ॥४३॥
एवं त्यागाश्रमे तस्थुर्नाम्ना सद्घोषणायनः ।
पत्नी नाम्ना महासत्यायनी भागवतोत्तमा ॥४४॥
पुत्रा नाम्ना तु वैराग्यायनः शंम्बायनस्तथा ।
योगायनस्तथा ज्ञानायनश्चेत्यभवँस्तथा ॥४५॥
पुत्र्यः साध्व्यः सप्त नाम्ना प्रज्ञायनी कृतायनी ।
सेवायनी तथा सत्त्वायनी रामायणी तथा ॥४६॥
बोधायनी च प्रतिभायनीति वैष्णवीतमाः ।
सर्वे ते चाभजन् कृष्णनारायणं परमेश्वरम् ॥४७॥
कालेन ते ययुर्धामाऽक्षरं श्रीपरमात्मनः ।
एवंप्रतापा बदरि संहितायाः कथा परा ॥४८॥
पापिनां पापलयदा महापुण्यप्रदा तथा ।
अन्ते मोक्षप्रदा दिव्या शाश्वतानन्ददायिनी ॥४९॥
अनादिश्रीकृष्णनारायणप्राप्तिप्रदा शुभा ।
स्वर्गमुक्तिप्रदा सम्पत्प्रदा सर्वर्द्धिसम्प्रदा ॥५०॥
शृणु बद्रीप्रिये देवि कथां चान्यां सुपावनीम् ।
दर्दुराख्ये पुरे त्वासीद् विप्रोऽमात्योऽतिबुद्धिमान् ॥५१॥
नाम्ना धर्मभटो राष्ट्रयोगक्षेमकरः सदा ।
स शुश्राव मनुष्येभ्यो माहात्म्यं बहुलं यतः ॥५२॥
कथायाः श्रवणे तेन वाञ्छा तस्य व्यजायत ।
सपत्नीको ययौ त्वेकहस्तिना वाहनेन सः ॥५३॥
परिमेयाऽनुगो नीत्वा धनं तु स्वर्णरूप्यकम् ।
स्नात्वा तीर्थजले गत्वा कथामण्डपमुत्तमम् ॥५४॥
पूजां चक्रे संहिताया व्यासस्य लोमशस्य च ।
सतां सतीनां साधूनां पूजां चक्रे स योगिनाम् ॥५५॥
उपदाश्च न्यधात्तत्र स्वप्रकाशस्य सन्निधौ ।
स्वर्णं रूप्यं रत्नमणीन् मौक्तिकानुत्तमानपि ॥५६॥
पत्नी पुपूज वै तत्र संहितां वाचकं गुरुम् ।
साध्वीश्च पूजयामास ददौ ताभ्योऽम्बराणि च ॥५७॥
धनानि फलपुष्पाणि भोजनानि ददावपि ।
नीराजनं प्रचक्राते ह्युभौ स्वर्णस्य दक्षिणाम् ॥५८॥

न्यधातां स्थालिकायां च चक्रतुर्दण्डवन्मुदा ।
निषेदतुः सभायां तौ मानितौ च महर्षिभिः ॥५९॥
शुश्रुवतुः कथां दिव्यां मनोनिःसंगकारिणीम् ।
वैराग्योत्पादिकां साधुसेवामाहात्म्यबोधिनीम् ॥६०॥
भक्तिशिक्षाप्रदां कृष्णे स्नेहदां दास्यदायिनीम् ।
कथान्ते तु महोद्याने सौधे तौ ययतुर्मुदा ॥६१॥
एवं प्रशान्तहृदयावृषतुर्दिनपञ्चकम् ।
तावत् सतां सतीनां च चक्राते सेवनं मुदा ॥६२॥
पावनौ तौ सेवया च पावितौ पुनरेव ह ।
प्रपावितौ च कथया भक्त्या नीतौ च दिव्यताम् ॥६३॥
अपश्यतां निशायां तौ निद्रायां माधवीश्वरम् ।
अनादिश्रीकृष्णनारायणं श्रीकृष्णचन्द्रकम् ॥६४॥
क्षणेनाऽदृश्यतां प्राप्तं दिव्यं श्रिया युतं हरिम् ।
अथ तौ सुज्ञातकृष्णमहिमानौ प्रगे द्रुतम् ॥६५॥
उत्थाय दर्शनं स्वाप्नं परस्परं मुदाऽऽहतुः ।
प्रसन्नौ तौ मिथः श्रुत्वा कृष्णदर्शनमुत्तमम् ॥६६॥
मेने धर्मभटो भाग्यं धन्यं नैजं तदा खलु ।
पत्नी नाम्ना शीलयानी मेने भाग्यं परं निजम् ॥६७॥
स्नात्वा सम्पूज्य देवेशं ययतुस्तौ कथास्थलम् ।
तत्र कथाऽन्तिकेऽमात्यसन्निधौ शीलयानिका ॥६८॥
गत्वा प्रपूज्य तं व्यासं दृष्ट्वा श्रीकृष्णसन्निभम् ।
नारायणसमं व्यासं स्वप्रकाशं समुत्तमम् ॥६९॥
देववस्त्रोज्ज्वलं योग्यमुपावेष्टुं गजासने ।
संकल्पं विदधे तत्र तावद् राजाऽपि तद्विधम् ॥७०॥
संकल्पं विदधे व्यासं गजस्थं लोकितुं मुदा ।
प्रकाशं प्राहतुस्तौ च स्वप्रकाशं समुत्सुकौ ॥७१॥
व्यासस्तथास्त्विति प्राह कथान्ते तौ मुदा तदा ।
गजं शृंगारितं स्वर्णाम्बालिकासहितं शुभम् ॥७२॥
आनयामासतुर्दिव्यं पिशंगं लम्बदन्तिनम् ।
ततस्तौ श्रीव्यासदेवं निषाद्य वारणोपरि ॥७३॥
ऋषिं च लोमशं चापि निषाद्य तत्र वारणे ।
धर्मभटो दधे स्वर्णचामरं लोमशोपरि ॥७४॥
शीलयानी दधे स्वर्णचामरं वाचकोपरि ।
वाद्यनादैर्जयनादैः साध्वीसाधुसुकीर्तनैः ॥७५॥
वन्दितौ पूजितौ मार्गे भक्ताभिवर्धितौ सुमैः ।
सिन्धुतटं ययतुस्तौ गजेनाऽमात्यवाञ्छया ॥७६॥
जलपानादिकं कृत्वा स्नात्वाऽमात्यालयं ततः ।
ययतुस्तत्र तौ पत्नीपती पुपूजतुर्गुरू ॥७७॥
आरार्त्रिकं न्यधातां च स्वर्णपात्रे धनानि च ।
कम्बलानि विचित्राणि कौशेयान्यम्बराणि च ॥७८॥
मणिरत्नादिहारांश्च हीरकाद्यविभूषणम् ।
बहुधा सुविभूषाश्च फलपुष्पादि सम्पदः ॥७९॥
ददतुस्तौ ततः पादार्चनं श्रीचन्दनादिभिः ।
चक्रतुर्भावतश्चारार्त्रिकं स्तुतिं च दण्डवत् ॥८०॥
प्रणामान् चक्रतुश्चाथ ततो मन्त्रं तु वाचकात् ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥८१॥
जगृहतुस्तथा नाम श्रीकृष्णचन्द्रकेति च ।
प्रभोनारायण श्रीमाधवीनारायणप्रभो ॥८२॥
जयाकृष्णललिताब्रायण राधापते विभो ।
नामधुन्यं जगृहतुस्ततो पादबलं शुभम् ॥८३॥
प्रसादं जगृहतुश्च निषाद्य वारणोपरि ।
महोत्सवयुतौ व्यासगुरू चामरराजितौ ॥८४॥
प्रापयामासतुः स्थानं संहितामण्डपं पुनः ।
एवं श्रीकृष्णचन्द्रस्य स्वरूपं व्यासमन्वहम् ॥८५॥
भावभक्त्या सिषेवाते तौ द्वौ तल्लग्नमानसौ ।
शृणु बद्रीप्रिये देवि चमत्कारं हरेस्ततः ॥८६॥
विद्यमाने वारणेऽपि त्वादाय दिव्यवारणम् ।
तमेव वारणं कृष्णश्चारुह्य श्रीसमन्वितः ॥८७॥
तथैव दिव्यकानकयाऽम्बालिकया विराजितम् ।
तौ द्वौ धर्मभटं शीलयानीं नेतुं हरिः स्वयम् ॥८८॥
समाययौ व्योमसृत्या घण्टानादेन नादयन् ।
अम्बरं तेजसा सर्वं धवलयन् कृपानिधिः ॥८९॥
चैत्रकृष्णद्वादश्यां वै पश्यतां दिव्यचक्षुषाम् ।
कथोत्तरं तु मध्यान्हे त्वाययौ भगवान् प्रभुः ॥९०॥
उवाच प्रहसन् धर्मभट ! एहि परं पदम् ।
शीलयानि समायाहि मुक्तिपदं परं पदम् ॥९१॥
श्रुत्वा श्रीभगवद्वाक्यं त्यक्तसंसारबन्धनौ ।
उभौ सज्जावभवतां तूर्णं धृत्वा करे जलम् ॥९२॥
हस्तिदानादि सर्वं श्रीव्यासदेवाय वै तदा ।
धर्मभटः शीलयानी ददतुश्च धनादिकम् ॥९३॥
अनादिश्रीकृष्णनारायणेच्छया तु बद्रिके ।
दिव्यदेहौ मुक्तरूपावजायतां मनोहरौ ॥९४॥
वारणं चारुरुहतुः पुष्पवृष्टिस्तदाऽभवत् ।
पश्यतां सर्वलोकानां गजेन व्योमगामिना ॥९५॥
हरिर्निनाय तौ तूर्णं निजं धामाऽक्षरं शुभम् ।
जयकारस्तदा सर्वलोकेषु प्राभवन्मुहुः ॥९६॥

चमत्कारं समाकर्ण्य जना विस्मयमाप्नुवन् ।
मन्त्रोऽमात्यो ययौ धामाऽक्षरं धन्यजनुर्भुवि ॥९७॥
धन्या सा शीलयानी च पत्या सार्धं ययौ दिवम् ।
इत्येवं प्रशशंसुर्वै मानवाः सर्वतः स्थिताः ॥९८॥
बद्रिके संहितायास्तु श्रवणेन प्रमोक्षणम् ।
नूनं प्रजायते सर्वपापानां चात्मनां तथा ॥९९॥
पठनाच्छ्रवणादस्य चिन्तनादपि मोक्षणम् ।
इष्टसिद्धिः समस्ता च भुक्तिर्मुक्तिस्तथा भवेत् ॥१००॥
यत्र क्षणे यदा कृष्णो यद्देशे चाभियाति वै ।
गन्तव्यं तेन साकं वै मायां त्यक्त्वाऽतिबन्धिनीम् ॥१०१॥
कर्तव्यं तु तदेवाऽस्ति यन्मायामोक्षणं व्रतैः ।
भक्त्या धामाऽक्षरप्राप्तिस्तत्र श्रीहरिसेवनम् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने दुरितघोषनामकस्य प्रधानस्य सकुटुम्बस्य कथाश्रवणेन त्यागिदीक्षाग्रहणं, धर्मभटनामकाऽमात्यस्य शीलयानी-पत्नीसहितस्य कथाश्रवणेन मोक्षणं चेत्यादि-निरूपणनामा त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां दुरितनाशिनीम् ।
न्यायाधीशस्य ते वच्मि परमोक्षप्रदायिनीम् ॥ १ ॥
प्रसेवनाख्यनगरे न्यायाधीशोऽभवद् द्विजः ।
नाम्ना मुकुन्दसाविप्रो धर्माध्यक्षोऽतिबुद्धिमान् ॥ २ ॥
समस्तन्यायनिष्णातो वादविवादशान्तिकृत् ।
निर्णयं प्रददात्येव न्यायालयकृतासनः ॥ ३ ॥
प्रजानां हितकृच्चापि स वादिप्रतिवादिनोः ।
लुञ्चां प्राप्योभययोश्चोभयलाभं तु निर्णये ॥ ४ ॥
प्रदर्श्य वादशान्तिं स करोत्येव विसंशयाम् ।
किन्त्वेवं बहुधा लुञ्चाधनं संप्राप्तवान् परम् ॥ ५ ॥
पापेन पक्षघातेन रोगेणाभिभवं गतः ।
खट्वायां स सदा शेते वामांगशून्यभागवान् ॥ ६ ॥
पराधीनो ह्यति जातः पत्नीभृत्यकृतक्रियः ।
दुःखमाप्नोति हृदये शुश्राव भृत्यवर्गतः ॥ ७ ॥
दुःखनाशकरं वाक्यं कथामाहात्म्यमुत्तमम् ।
ये प्रयान्ति कथायां वै रुग्णाः पापा अधर्मिणः ॥ ८ ॥
शुद्धाः श्रुत्वा कथां यान्ति ब्रह्मधामाऽक्षरं हरेः ।
रोगहीनाः प्रजायन्ते पुण्यभाजो भवन्त्यपि ॥ ९ ॥

श्रुत्वैवं स सतीं पत्नीं प्राह मे मोक्षणं च वा ।
रोगनाशो यथा स्याद्वै तथा विधेहि मत्कृते ॥१०॥
सापि श्रुत्वा स्वामिवाक्यं स्वामिश्रेयःपरा सती ।
प्रजाजनानां वृद्धानां सम्मतिं जगृहे सती ॥११॥
कथं पत्युः रोगनाशः पापनाशश्च मोक्षणम् ।
तत् कर्तव्यं मया तूर्णं पप्रच्छेति महाजनान् ॥१२॥
महाजना गुणग्राह्याः श्रेयसे न्यायदायिनः ।
प्राहुरस्य वरं श्रेयः संहिताश्रवणं मतम् ॥१३॥
चमत्कारा नित्यनवाः श्रूयन्ते तु कथास्थले ।
कल्याणं देहिनां तत्र करोति कृपया हरिः ॥१४॥
तमेनं न्यायकर्तारं नय तत्र कथास्थलीम् ।
कथां श्रुत्वा सतो दृष्ट्वा नत्वा सभां समन्ततः ॥१५॥
प्रपूज्य परमात्मानं तवेष्टं संभविष्यति ।
पत्युस्ते सर्वथा चेष्टं भविष्यति न संशयः ॥१६॥
इत्युक्ता सा सती भार्या नाम्ना न्यायाक्षिणी ययौ ।
द्रव्यं भृत्यान् पतिं नीत्वा नरयानैः कथास्थलीम् ॥१७॥
महोद्यानं स्थलीवासं कृत्वा स्नात्वा शुभोमना ।
पतिं नीत्वा नरयाने कथामण्डपमाययौ ॥१८॥
पक्षघाताऽभिभूतोऽपि पतिर्नेमे सभाजनान् ।
संहितां वाचकं कृष्णमूर्तिं नेमे च लोमशम् ॥१९॥
ऋषीन् साधून् प्रणेमे च सुतोऽपि नरयानके ।
तूर्णं लब्ध्वा मुखे पापक्षमां सद्भ्योऽप्ययाचत ॥२०॥
सन्तो दयालवस्तस्मै ददुः पादजलानि च ।
प्रसादं प्रददुस्तत्र सोऽपि चखाद सत्वरम् ॥२१॥
बद्रिके तावता तस्य देहे शक्तिर्व्यवर्धत ।
पक्षं वामं सुशक्तं संजातं जाड्यविहीनकम् ॥२२॥
शून्यभावं विहायैव चैतन्यसंभृतं त्वभूत् ।
उत्थाय सहसा खट्वामध्यतः स सभां प्रति ॥२३॥
चकार दण्डवद्भूमौ विदन् माहात्म्यमुत्तमम् ।
नीरुग्णत्वं दर्शनात्तु तत्कालं समजायत ॥२४॥
ततः पूजां चकारापि धनरत्नादिभिस्तदा ।
व्यासपूजां कथामूर्तिपूजां लोमशपूजनम् ॥२५॥
संहितापूजनं साधुसाध्वीप्रपूजनं तथा ।
द्विजर्षिपूजनं चक्रे भूरिदानादिदक्षिणम् ॥२६॥
कथां शुश्राव च ततश्चैवं नित्यं चकार ह ।
महिमानं विवेदापि कथाया नवजीवने ॥२७॥
मृत्योर्मुखान्महारोगान्मुक्तिः कथाप्रभावतः ।
सतामाशीर्वचनैश्च विवेद स्त्रीयुतो हि सः ॥२८॥

न्यायाश्रिणी तथा न्यायाधीशः साधुनिषेवणम् ।
नित्यं प्रचक्रतुस्तत्र निजावासे मुहुर्मुहुः ॥२९॥
अकुर्वातां विचारं च मरणाद् रक्षणं त्विह ।
जातं तस्माज्जीवनं वै दातव्यं कृष्णलब्धये ॥३०॥
न गन्तव्यं गृहे चेतः स्यातव्यं साधुमण्डले ।
श्रोतव्या श्रीसंहितायाः कथा सर्वार्थदायिनी ॥३१॥
सेवनीयाः साधवश्च तोषणीया महर्षयः ।
तारणीयो निजात्मा च प्राप्तव्यं परमं पदम् ॥३२॥
अपि न्यायो हि जगतां कृतोऽपि कोटिलक्षधा ।
आत्मन्यायः कृतश्चेन्न कृतं किमपि तेन न ॥३३॥
तोषिता वादविवदाः कलिप्राया जना अपि ।
अपि कृष्णस्तोषितो न कृतं सर्वं निरर्थकम् ॥३४॥
रञ्जिताः कलिकर्तारः शमिता मायिका जनाः ।
सन्तश्चेद् रञ्जिता नैव कृतं सर्वं निरर्थकम् ॥३५॥
अर्जितं नाणकं कोटिः वर्धिताः सम्पदो जडाः ।
अर्जितं नाऽऽत्मकल्याणं कृतं सर्वं निरर्थकम् ॥३६॥
सेविताः स्त्रीमहीमानाः सत्कृताश्च कुटुम्बिनः ।
सेविताश्चेत् साधवो न कृतं सर्वं निरर्थकम् ॥३७॥
वन्दिता द्रव्यदातारो भोजिता लम्पटा जनाः ।
नाऽतिथयः पूजिताश्चेत् कृतं सर्वं निरर्थकम् ॥३८॥
स्मृता नित्यं कलहिणः वितण्डा उदिताः सदा ।
नारायणो नेरितश्चेत् कृतं सर्वं निरर्थकम् ॥३९॥
पोषितो निजदेहश्च संस्कृता मूर्धजाः सदा ।
संस्कृतं न हृदयं चेत् कृतं सर्वं निरर्थकम् ॥४०॥
आपत्तं बाह्यविज्ञानं विस्तारिताश्च कल्पनाः ।
कृष्णध्यानं न चापत्तं कृतं सर्वं निरर्थकम् ॥४१॥
निर्णया लौकिका दत्ताः सत्ताः भुक्ता तु मायिकी ।
आत्ममोक्षो निश्चितो न कृतं सर्वं निरर्थकम् ॥४२॥
श्रद्धा मृषा विवादेषु कृता नैजे च गौरवे ।
कृष्णनारायणे चेन्न कृता सर्वा निरर्थिका ॥४३॥
सम्मानं बहुधा लब्धं स्वागतं चाति वीक्षितम् ।
मानितश्चेन्न कृष्णेन मानं चान्यन्निरर्थकम् ॥४४॥
ताडिता दण्डिता दुष्टाः कारागारे निपातिताः ।
कामादयो दण्डिता न दण्डश्चान्यो निरर्थकः ॥४५॥
मोचिताः पीडिता लोका विपदो विनिवारिताः ।
स्वस्य याम्यं वारितं न कृतं सर्वं निरर्थकम् ॥४६॥
गतयो बहुधा क्लृप्ता मार्गाश्चान्येऽवधारिताः ।
ब्रह्ममार्गो धृतश्चेन्न कृतं सर्वं निरर्थकम् ॥४७॥

दत्तं बहुभ्यो लोकेभ्यो न दत्तं परमात्मने ।
भक्तेभ्यो न न यज्ञेभ्यो दत्तमन्यन्निरर्थकम् ॥४८॥
अर्जिता बहुधा ऋद्धिः कीर्तिः ख्यातिः प्रतिष्ठिका ।
न त्वर्जिता कृपा कार्ष्णी तदर्जितं निरर्थकम् ॥४९॥
कोशे सुरक्षितं स्वर्णं रजतं पेटिकासु च ।
हृदि कृष्णो न निहितो रक्षितं तन्निरर्थकम् ॥५०॥
आरोहितानि यानानि वाहनान्याहृतानि च ।
श्रीकृष्णस्य विमानं नाऽऽहृतं सर्वं निरर्थकम् ॥५१॥
राज्यं प्रपालितं सम्यक् प्रजाः सम्यङ्निभालिताः ।
दृष्टो नारायणश्चेन्न दृष्टं सर्वं निरर्थकम् ॥५२॥
श्रुतं संश्रावितं सर्वं मतं मृषाभिवर्धितम् ।
न श्रुता न मता कृष्णकथा सर्वं निरर्थकम् ॥५३॥
दीनाऽनाथा आश्रयिता भृत्याद्याः स्वाश्रयीकृताः ।
भक्ता नाश्वासिता दिव्या आश्रयादि निरर्थकम् ॥५४॥
व्याख्यातान्यन्यतत्त्वानि भौतिकानि क्षणे क्षणे ।
कृष्णतत्त्वं न चाख्यातं गतं सर्वं निरर्थकम् ॥५५॥
लिखिता राजपदका योजिता पाशवी कला ।
नात्मा संयोजितः कृष्णे योजना सा निरर्थिका ॥५६॥
अप्यब्धयः क्षालिताश्चाऽऽलोडिता न्यायकोटयः ।
वासना ज्वालिता नैव श्रमः सर्वो निरर्थकः ॥५७॥
शत्रवः सज्जिताश्चापि बलिष्ठाश्च विरोधिनः ।
कामना न जिता येन जयस्तस्य निरर्थकाः ॥५८॥
सर्वं त्वधीतमेवापि वाचितं पुष्कलं सदा ।
नाऽधीतं श्रीहरेर्नाम रटना सा निरर्थिका ॥५९॥
प्रेषितानि तु पत्राणि लग्नानि योजितान्यपि ।
कृष्णलग्नं न चापन्नं सर्वमन्यन्निरर्थकम् ॥६०॥
स्त्रियो विवाहिता बह्व्यः प्रवाहिताश्च दक्षिणाः ।
संवाहिता गजा हंसा नाऽऽहिताः कृष्णवैष्णवाः ॥६१॥
कृष्णनारायणो नैव धृतो वक्षसि केशवः ।
तदा निरर्थकं सर्वं भाररूपं हि वाहितम् ॥६२॥
अपि वेषा धृता रम्या धृता भूषाः सुशोभिताः ।
कृष्णकण्ठी धृता नैव धृतं सर्वं निरर्थकम् ॥६३॥
पीतं भुक्तं बहु मिष्टमास्वादिता रसा पराः ।
प्रसादो न हरेर्भुक्तो भुक्तं सर्वं तु पापकृत् ॥६४॥
सुगन्धादि समस्तं संयोजितं वर्ष्महेतवे ।
कृष्णार्थं योजितं नैव तत् सर्वं पापदं कृतम् ॥६५॥
उत्सवा विहिताश्चान्ये देवोत्सवाः कृता नहि ।
सतां महोत्सवास्त्यक्तास्तस्य सर्वं निरर्थकम् ॥६६॥

स्वजन्माहानि सततं पालितान्यपराण्यपि ।
कृष्णजन्मदिनं चेन्न पालितं तेन किं कृतम् ॥६७॥
आयुः संक्षपितं सर्वं देहः कर्मसु धर्षितः ।
रागो न धर्षितो द्वेषो न धर्षितो वृथाश्रमः ॥६८॥
विभाजिता निजा सम्पत् पुत्राद्याश्च विभाजिताः ।
भजितो न हरिकृष्णो भक्तं सर्वं विडम्बनम् ॥६९॥
आवृतं नगरं सर्वमावृतानीन्द्रियाण्यपि ।
नाऽऽवृतं हृत् श्रीकृष्णेन सर्वमावृतमावृतम् ॥७०॥
अनुगृहीता बहवो मोचिता विपदां मुखात् ।
निजात्मा मोचितो नैव मोचनं तन्निरर्थकम् ॥७१॥
माता पिता सुहृद् बन्धुः पूजिताः सेवितास्तथा ।
साधवः सेविताश्चेन्न मोक्षमार्गोऽस्य दुर्घटः ॥७२॥
पितरस्तर्पिता दीना भोजिता वन्दिताः सुराः ।
नोपासितः कृष्णनारायणो गुर्वी तु सा क्षतिः ॥७३॥
आसादितानि धिष्ण्यानि मानपत्राणि शोभनाः ।
पदव्यश्चापि संलब्धा नाप्तं कृष्णपदाम्बुजम् ॥७४॥
नाप्यासमासनं कृष्णपादासनसमीपगम् ।
तदा नाप्तं त्वन्ततस्तु किञ्चित् शून्यमिवाऽभवत् ॥७५॥
सर्वं शून्ये गतं तस्य कृष्णहीनस्य देहिनः ।
अतः कृष्णः प्रापणीयः सर्वमन्यन्निरर्थकम् ॥७६॥
अत्रैव सर्वदा कृष्णकथालाभार्थमुत्तमा ।
वसतिः रोचते तस्माद्वसितव्यमिहाऽधुना ॥७७॥
विचार्येत्थं मिथः पत्नीपती तत्र निवासनम् ।
चक्रतुर्बद्रिके कृष्णनारायणार्पितात्मकौ ॥७८॥
जगृहतुश्च तौ मन्त्रं नामधुन्यं तदा मुदा ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥७९॥
'प्रमोनारायणश्रीमाधवीनारायणप्रभो ।
जयाकृष्णललितान्नायणराधापते विभो ॥८०॥
स्वप्रकाशो हि भगवान् मन्त्रं दत्वा च तौलसीम् ।
ददौ कण्ठौं भजनार्थं मालिकां प्रतिमां ददौ ॥८१॥
ततस्तौ कृष्णचित्तौ वै प्रतीक्षेते प्रमोक्षणम् ।
मासान्ते श्रीकृष्णनारायणो विमानमास्थितः ॥८२॥
नेतुं समाययौ तौ तु चैत्रस्याऽमादिने हरिः ।
उज्ज्वलः श्वेतवसनः स्वर्णभूषाविभूषितः ॥८३॥
उवाच तौ समायातं धामाऽक्षरं परं मम ।
उक्तमात्रौ दम्पती तौ स्वर्णरूप्यादिदानकम् ॥८४॥
चक्रतुर्यानदानं तावच्चारोढुं विमानकम् ।
कृतक्रमौ च यावत्तु तावद् विमूर्छितौ द्रुतम् ॥८५॥
त्यक्तदेहौ लब्धदिव्यस्वरूपौ संबभूवतुः ।
सर्वेषां पश्यतां बद्रि विमानमध्यतिष्ठताम् ॥८६॥
पुष्पवृष्टिर्व्योममार्गाज्जयशब्दा जनव्रजात् ।
अभवन् बहुलास्तत्र तावद् विमानमम्बरे ॥८७॥
ऊर्ध्वं जगाम सहसा दिव्यं धामाऽक्षरं प्रति ।
तिरोऽभवद् विप्रकृष्टं महाश्चर्यमभूद्धि तत् ॥८८॥
एवं श्रीबद्रिके भक्तौ त्यक्तसर्वप्रवर्तनौ ।
स्नेहभक्त्या ययतुः श्रीकृष्णनारायणालयम् ॥८९॥
तयोर्भृत्यजनास्तत्र तयोश्चक्रुः प्रदाहनम् ।
ततस्तेऽपि हरेर्भक्तिं नाम मन्त्रं च जगृहुः ॥९०॥
भेजुः श्रीपरमात्मानं कृष्णनारायणं प्रभुम् ।
क्षपिताघा गतक्लेशा निर्मलाः साधुसेविनः ॥९१॥
अभवँस्ते कृपापात्राण्यन्वहं श्रीकथापराः ।
प्राप्तवैराग्यवेगाश्च ध्यानभजनयोगिनः ॥९२॥
वैष्णवाः परमा भूत्वा लब्ध्वाऽऽशीर्वादमुत्तमम् ।
ययुर्गृहाणि नैजानि स्मरन्तः परमेश्वरम् ॥९३॥
पक्वकालेन ते सर्वे सत्संगिनः शुभाशयाः ।
क्षीणवासनाः संलग्नाः श्रीहरौ मोक्षसन्मुखाः ॥९४॥
प्रतीक्षन्ते स्म देवेशं प्रभुं कृष्णं नरायणम् ।
तावत् तेषां श्रेयसे वै विमानं त्वागतं दिवः ॥९५॥
ययुस्तेऽपि हरेर्धाम कृष्णविमानवाहिताः ।
प्रसेवने पुरे सर्वे व्यपश्यन् स्वविमानकम् ॥९६॥
दिव्यं दिव्यश्रीहर्याढ्यं दिव्यमुक्ताधिवासितम् ।
दर्शका निजभाग्यानि मेनिरे मोक्षभाञ्जि ह ॥९७॥
भजनं ते व्यधुः स्वामिन् कृष्णनारायणप्रभो ।
कालेन क्षीणपापाश्च प्रयातास्ते परं पदम् ॥९८॥
एवं बद्रीप्रिये मोक्षं गतौ न्यायाधिकारिणौ ।
न्यायाक्षिणी च मुकुन्दसावित्रः सत्कथाश्रवात् ॥९९॥
पठनाच्छ्रवणादस्य स्मरणात् सेवनात् सताम् ।
भुक्तिर्मुक्तिर्भवेद् बद्रि स्वर्गे स्वेष्टं भवेदपि ॥१००॥
सर्वदिव्यगुणाश्चापि दिव्याः सम्पद्वरा अपि ।
दिव्यधामनिवासश्च दिव्यश्रीकृष्णयोगिता ॥ ०१॥
दिव्यता सर्वथा स्याच्छ्रीसंहिताश्रवणादिह ।
प्राप्तव्यं सर्वमाप्येत न न्यूनं तस्य विद्यते ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने न्यायकर्तृमुकुन्दसावित्रविप्रस्य न्यायाक्षिण्यास्तत्पत्न्याश्च कथाश्रवणादिभिर्मोक्षणमित्यादिनिरूपणनामा चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथामन्यां च पावनीम् ।
लेखकश्चाऽभवत् ताडपत्रेषु पट्टकेष्वपि ॥ १ ॥
धातुपत्रेषु च काष्ठफालेषु चाम्बरेष्वपि ।
नाम्ना विशालरेखो वै वैश्यः सुकरदे पुरे ॥ २ ॥
लेखोत्पन्नेन सततं जीविकां समवर्तयन् ।
कुटुम्बपोषणं तुष्टया करोति धर्मवृत्तिमान् ॥ ३ ॥
तस्यैकदा समायातः श्वा गृहे च गृहान्तरे ।
सम्प्रविष्टः पात्रगतं पयोऽपिबत्तु धेनुजम् ॥ ४ ॥
अशुद्धं तत्पयः सर्वं जातं घटगतं ततः ।
वैश्योऽपश्यत् पिबन्तं तं श्वानं गृहान्तरे गतः ॥ ५ ॥
रुषा यष्टिं समगृह्याऽताडयत् श्वा तु मूर्छितः ।
आक्रोशन् पतितो भूमौ पादान् विक्षेपयन् मुहुः ॥ ६ ॥
मृत्युं जगाम यावत्तु तावद् वैश्येन कर्षितः ।
चत्वरे क्षिप्त एवापि तावत्पार्श्वालया जनाः ॥ ७ ॥
श्रुत्वाऽऽक्रोशं सत्वरं ते कुतूहलसमन्विताः ।
आययुश्चत्वरे तत्र व्यपश्यन् मारितं तदा ॥ ८ ॥
श्वानं वैश्येन वै क्षिप्तं मृतं वैश्येन मारितम् ।
तिरश्चक्रुस्तु ते वैश्यं धिक्कारं प्रददुस्तथा ॥ ९ ॥
श्वघ्नोऽयं क्रूरकर्मा चाऽग्राह्यजलान्न एव च ।
श्रुत्वैवं तु तदा पापशब्दान् लज्जां गतोऽभवत् ॥१०॥
धर्मवान् कीर्तिमाँश्चापि वेगेन पापमाचरन् ।
अवाच्यतां गतो वैश्यः शुशोचाऽतिजनान्तिके ॥११॥
उवाच तान् पार्श्वलोकान् न मया मृत्युहेतवे ।
ताडितः श्वा किन्तु शिक्षणार्थं प्रताडितोऽस्त्ययम् ॥१२॥
गृहं प्रविश्य स यतो दुग्धं पपौ हि धेनुजम् ।
सर्वं भ्रष्टं चकाराऽसौ तेन वै ताडितो मया ॥१३॥
पार्श्वमर्मस्थले मारः कृतो नहि विजानता ।
अकस्मात् पतितो मारः पार्श्वे मर्मणि तेन सः ॥१४॥
मृतोऽयं तस्य हत्या मे जाता करोमि निष्कृतिम् ।
विप्राः शिष्टा भवन्तो मे ब्रुवन्तु तस्य निष्कृतिम् ॥१५॥
इत्यर्थिता भूसुरास्तं जगदुर्व्रतमुत्तमम् ।
मासं कथायाः श्रवणं चैकभुक्तव्रतं तथा ॥१६॥
सत्संगः साधुसेवा च दानं यथाधनं तथा ।
तीर्थस्नानं मासमात्रं नित्यं मन्त्रसहस्रकम् ॥१७॥
हरेर्नाम्नां जपश्चेति प्रायश्चित्तं ददुर्द्विजाः ।
विशालरेखः पापस्य नुत्तये विचचार ह ॥१८॥
शर्करानगरं तीर्थे कथास्थानमनुत्तमम् ।
स्थावरं जंगमं चेत्युभयं तीर्थं हि तत्स्थले ॥१९॥
प्राप्तं तेन तु विधिना तीर्थे कृतं हि सिन्धुजम् ।
कथायाः श्रवणं नित्यमेकभुक्तव्रतान्वितम् ॥२०॥
मासमात्रं कृतं तेन लब्ध्वा यथोदितं मनुम् ।
साधूनां सेवनं चापि कृतं तेन हितैषिणा ॥२१॥
नष्टपापोऽभवन्नष्टवासनो वैश्य एव ह ।
पूर्वजन्मार्जिताऽघानि नष्टानि सेवनात् सताम् ॥२२॥
प्रारब्धं सञ्चितं कर्म सर्वमन्तं समाव्रजत् ।
आयुः पूर्णं तु सञ्जातं मृत्युकाल उपागतः ॥२३॥
मासान्ते चैत्रशुक्लस्य पञ्चम्यां प्रातरेव सः ।
स्नात्वा कथास्थलं प्राप पुपूज व्यासपुंगवम् ॥२४॥
संहितां लोमशं चापि नत्वा महर्षिमण्डलम् ।
कथां शुश्राव मालाया आवर्तनपुरःसरम् ॥२५॥
कथान्ते कीर्तनान्तेऽस्य जृंभणान्यभवन् मुहुः ।
तावद् व्योम्नो हरिः कृष्णोनारायणः समाययौ ॥२६॥
सर्वेषां शृण्वतां प्राह तमायाहि विमानकम् ।
श्रुत्वा विशालरेखः स मुमुदे मोक्षभाग्यवान् ॥२७॥
द्रुतं मूर्छामवापाऽपि दिव्यदेहो बभूव ह ।
विमाने तं समादाय ययौ धामाऽक्षरं हरिः ॥२८॥
कृपैषा बद्रिके श्रीमत्कृष्णस्य मोक्षदायिनी ।
प्रायश्चित्तनिमित्तेन मोक्षं यया जगाम सः ॥२९॥
तस्य पत्नी शुचिकान्तानाम्नी तस्यौर्ध्वदैहिकम् ।
चकार विधिवद् भक्त्या वैष्णवी भाग्यशालिनी ॥३०॥
वैराग्यं सा समापन्ना ह्यनपत्या सती शुभा ।
भक्तिं चक्रे मनुं नाम लब्ध्वा श्रीलोमशात् सदा ॥३१॥
नित्यं कथां शृणोत्येव साध्वीव्रजं प्रसेवते ।
सा तु वैराग्यवेगेन ज्ञानेन सेवया तथा ॥३२॥
त्यागदीक्षां जगृहे वै सर्वमन्त्रसमन्विताम् ।
काषायधारिणी भूत्वा साध्वीनां मण्डलेऽवसत् ॥३३॥
भेजेऽनादिकृष्णनारायणं पार्वतीप्रभुम्पतिम् ।
बद्रिके सा स्वतन्त्राऽभूत् साध्वी स्वर्गादिगामिनी ॥३४॥
ब्रह्मसभामपि याति सा समाधिमती तथा ।
शुचिकान्ताऽभवन्नाम्ना कृष्णकान्तेश्वरी ततः ॥३५॥
चतुर्युगं तु सा साध्वी पृथ्व्यां ततः स्थिताऽभवत् ।
भजनं कारयित्वाऽपि नारीजनानसंख्यकान् ॥३६॥
प्रेषयामास मुक्त्यर्थे कार्ष्णं पदं हि पावनम् ।
कुंकुमवापिकाक्षेत्रे वासं व्यधाच्चतुर्युगम् ॥३७॥

ततो धामाऽक्षरं प्राप साध्व्ययुतं विधाय सा ।
शिष्याणां मण्डलं तस्याः साध्वीनां चाऽयुतात्मकम् ॥३८॥
व्यचरद् भूमिखण्डेषु नारीणां बोधदायकम् ।
कृष्णनारायणीसत्यः सर्वा भेजुर्नारायणम् ॥३९॥
शाखाः प्रशाखाः शिष्याः प्रशिष्याः स्थाप्य धरातले ।
ययुर्धामाऽक्षरं ताश्च कृष्णनारायणालयम् ॥४०॥
इत्येवं बद्रिके वैश्यो मोक्षं जगाम भक्तराट् ।
कृष्णस्य कृपया भक्त्या सेवया श्रवणेन च ॥४१॥
अथाऽन्यं ते कथयामि चमत्कारं महत्तमम् ।
कायस्था बहवः श्रुत्वा चमत्कारं प्रमोक्षदम् ॥४२॥
आययुः परितो राष्ट्रात् संहितायाः कथास्थलम् ।
उपदा विविधा नीत्वा पूजासामग्रिकाऽन्विताः ॥४३॥
कीर्तयन्तो हरेर्नाम गायन्तो गीतिका हरेः ।
नरा नार्यो बालवृद्धा युवमण्डलकान्यपि ॥४४॥
आययुः शर्कराभ्याशं महोद्यानं समुत्सुकाः ।
महोद्याने कृतावासाः कृतस्नानाश्च तीर्थके ॥४५॥
उपदाकरपात्राश्चाऽऽययुः कथासभास्थलम् ।
जयनादान् प्रचक्रुश्च दण्डवन्नमनाञ्जलिम् ॥४६॥
पूजां चक्रुः संहितायाः मूर्तेश्च वाचकस्य च ।
सतां महर्षिवर्याणां सतीनामर्हणानि च ॥४७॥
विप्राणां योगिनां पूजां चक्रुश्चारार्त्रिकं व्यधुः ।
उपाविविशुः सदसि शुश्रुवुश्च कथामृतम् ॥४८॥
मन्त्रं स्वतःप्रकाशं च जगृहुर्नामधुन्यकम् ।
ययुश्चाऽऽवसथान्नैजान् मासं तस्थुः कथार्थिनः ॥४९॥
सतां सेवां च बहुधा चक्रिरे कीर्तनान्यपि ।
तीर्थाप्लवनं दानानि चक्रिरे भजनं मिथः ॥५०॥
हतपापा अभवँस्ते गतमायिकवासनाः ।
शुद्धात्मानोऽभवँश्चापि नरा नार्यः सहस्रशः ॥५१॥
चैत्रशुक्लैकादश्यां च बद्रिके त्वाययौ हरिः ।
अनादिश्रीकृष्णनारायणः स्वर्णविमानयुक् ॥५२॥
हसन् प्राह हरिः सर्वान् कायस्थान् कृपया मुदा ।
शृण्वतां मत्कथां सेवां कुर्वतां च सतां मुदा ॥५३॥
भजतां मां च वः कल्याणार्थं चाहमुपागतः ।
आयान्तु ते य इच्छन्ति त्वागन्तुं धाम मेऽक्षरम् ॥५४॥
सज्जा भवन्तु तूर्णं चारोहन्तु मे विमानकम् ।
नयामि चाऽक्षरं धाम शाश्वतानन्दमन्दिरम् ॥५५॥
एवमुक्ताः करणाद्याः कायस्था नरयोषितः ।
पञ्चशतानि सहसा सज्जास्तु मुक्तयेऽभवन् ॥५६॥

तेषां हलहलाशब्दाः सहस्रोत्क्षेपणाऽऽह्वनाः ।
परितश्चाऽभवन् बद्रि महाश्चर्यविधायिनः ॥५७॥
पञ्चशतानि कायस्था नरा नार्यस्तदा द्रुतम् ।
त्यक्त्वा भौतिकवर्ष्माणि चाबालवृद्धदेहिनः ॥५८॥
अभवन् दिव्यदेहास्ते कृष्णप्रोक्षितवारिभिः ।
सर्वे षोडशवर्षास्ते मुक्ता मुक्तानिकाः शुभाः ॥५९॥
आरुरुहुर्विमानं चोपाविविशुर्हरेः पुरः ।
पुपूजुः परया भक्त्याऽऽश्लेषस्पर्शाऽञ्जलिस्तवैः ॥६०॥
कृष्णनारायणनीता ययुस्ते परमं पदम् ।
बद्रिके शृण्वतां तेषां धुन्यं च पश्यतामपि ॥६१॥
सर्वेषामन्यलोकानां विमानं दिवमाविशत् ।
चमत्कारो महान् जातः कृपयाऽयं हरेः प्रभोः ॥६२॥
पश्चस्थैश्च कृतान्यूर्ध्वदैहिकानि ततः परम् ।
तेऽपि विरागमापन्नाः कथां श्रुत्वा ययुस्ततः ॥६३॥
निजानिजानालयाँश्च कृष्णभक्तिं प्रचक्रिरे ।
कालेन ते ययुर्धामाऽक्षरं श्रीपरमात्मनः ॥६४॥
बद्रिके परमाश्चर्यं कथयामि निबोध मे ।
त्रिवादनगरे त्वासीत् शास्ता शाहविलापनः ॥६५॥
तस्य सम्पत्तयश्चासन् वाटीक्षेत्रगृहादिकाः ।
अश्वा वृषभा गवया उष्ट्राश्च पशवोऽभवन् ॥६६॥
गोऽजामहिष्य आसँश्च भृत्याश्चापि शताधिकाः ।
ग्रामाधिपः खण्डराजः शाहविलापनस्तदा ॥६७॥
अश्वपालाँश्च गोपालान् वेतनैः संररक्ष वै ।
क्षत्रियः स हि शुश्राव कथोत्सवं महत्तमम् ॥६८॥
मनश्चक्रे तत्र गन्तुं साश्वगोपालकैः सह ।
सज्जोऽभवत् स तूर्णं वै श्रीस्वामिन्या स्त्रिया सह ॥६९॥
श्रीस्वामिनी सती पत्नी गवां शतं निनाय ह ।
दानधर्मार्थमेवापि दुग्धपानार्थमित्यपि ॥७०॥
प्रतस्थिरे ते गृहतः शर्करानगरं ययुः ।
गोपालाश्चाऽश्वपालाश्च तथा शाहविलापनः ॥७१॥
श्रीस्वामिनी तथा तस्याः सख्यो दास्यः शतं तदा ।
सभूषाः सोपकरणाः सोपदाः ससमृद्धयः ॥७२॥
महोद्याने प्रचक्रुस्ते स्वावसथान् यथायथम् ।
स्नात्वा ते दर्शनार्थं वै सोपदाः प्रययुः सभाम् ॥७३॥
कथां श्रुत्वा ततः पूजामारार्त्रिकं प्रचक्रिरे ।
राजा राज्ञी धनवन्तस्तथा भृत्यादयोऽपि च ॥७४॥
न्यधुर्व्यासपुरःस्थाने भूषामुद्राऽम्बराणि च ।
फलपुष्पान्नमिष्टान्नदुग्धदौग्धेयकानि च ॥७५॥

स्वप्रकाशायनकोऽपि लोमशश्च महर्षयः।
आशीर्वादान् ददुस्तेभ्यो ययुश्चावसथाँस्ततः ॥७६॥
एवं नित्यं नियमिताः शृण्वन्ति संहिताकथाम्।
राज्ञैकदा निशि स्वप्ने ददर्श स्वं शवं प्रगे ॥७७॥
उत्थाय सभयो भूत्वा कथास्थानं समागमत्।
न्यवेदयल्लोमशाय स्वाप्नवृत्तान्तमुल्बणम् ॥७८॥
लोमशः प्राह राजानं समाप्तायुष्यकं तदा।
राजन् कर्मसमाप्तिस्ते जाता कथानिषेवणात् ॥७९॥
मन्त्रं गृहाण नामापि गृह्ण श्रीपरमात्मनः।
सज्जो भव च मोक्षार्थे त्यज रागं तु भौतिकम् ॥८०॥
इत्युक्तः स तु शीघ्रं वै मन्त्रं जग्राह नाम च।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥८१॥
राज्ञीदास्यस्तथा दासा जगृहुर्मन्त्रमुत्तमम्।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥८२॥
'कृष्णनारायण कृष्णनारायण नरायण।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥८३॥
प्रभोनारायणश्रीमाधवीनारायण प्रभो।
जयाकृष्णललितान्नायणराधापते विभो ॥८४॥
लब्ध्वा मन्त्रं भजनं ते चक्रुर्मिथो निजालये।
राजा राज्ञी ददतुश्च दानानि गजवाजिनाम् ॥८५॥
गवां सुवर्णरत्नानां भूषावस्त्रादिसम्पदाम्।
सज्जो भूत्वा प्रतीक्षां तु राजा राज्ञीसमन्वितः ॥८६॥
करोति श्रीहरेः सम्यग् गन्तुं मोक्षपदं परम्।
द्वादश्यां चैत्रशुक्लस्य विमानेनागतो हरिः ॥८७॥
सतां प्रसेवया शुद्धं भक्तं राज्ञीसमेतकम्।
दिव्यदेहं विधायैव स्वामीकृष्णोनरायणः ॥८८॥
तथाऽन्यान् दासदासीश्च भक्तिसर्वस्वसंभृताः।
दिव्यदेहान् विधायैव निधाय स्वविमानके ॥८९॥
पश्यतां सर्वलोकानां निन्ये धामाऽक्षरं निजम्।
बद्रिके तन्महाश्चर्यं वीक्ष्याऽन्ये भृत्यदासिकाः ॥९०॥
सर्वदानानि दत्त्वैव मोक्षार्थे कृतनिश्चयाः।
ज्येष्ठाय तु कुमाराय नाम्ना भास्करभूतये ॥९१॥
राज्यधुरं विनिर्दिश्य सज्जास्ते मुक्तयेऽभवन्।
मेधुर्नारायणकृष्णं त्यक्ताऽन्नभोजनादयः ॥९२॥
दिनत्रयान्ते भगवान् स्वामीकृष्णोनरायणः।
कृपया त्वाययौ तूर्णं नेतुं धामाऽक्षरं निजम् ॥९३॥
विमानेन समस्तांस्तान् कृत्वा मूर्छासमन्वितान्।
त्याजयित्वा तु देहांश्च दिव्यदेहान् विधाय च ॥९४॥
निन्ये धामाऽक्षरं नैजं पश्यतां सर्वदेहिनाम्।
कुमारो भास्करभूतिश्चक्रे तदौर्ध्वदैहिकम् ॥९५॥
भक्तो भूत्वा कथां श्रुत्वा माग्यं मत्वा परं महत्।
ययौ त्रिवादनगरं शशास न्यायतः सदा ॥९६॥
भक्त्या काले समायाते पावनः सोपि वै मुदा।
वासनाशून्यहृदयो वंशे न्यस्य धुरं निजाम् ॥९७॥
ययौ धामाऽक्षरं कृष्णनारायणेन वाहितः।
एवं बद्रीप्रिये लोकैर्दृष्टा चमत्कृतिः परा ॥९८॥
मोक्षदा पापहन्त्री च साक्षात्कृष्णाऽङ्घ्रियोजिका।
त्रिवादनगरे ये ये शुश्रुवुस्तां चमत्कृतिम् ॥९९॥
तेऽपि पारोक्ष्यभावाढ्या भेजुः कृष्णंनरायणम्।
क्षीणपापा अभवँश्च सतां सेवापरायणाः ॥१००॥
सत्संगेन ययुर्धामाऽक्षरं त्वन्ते कृपाश्रयाः।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिर्भवेदपि ॥१०१॥
अश्वपालाश्च गोपाला ये ये चासन् त्रिवादके।
तेऽपि कृष्णं भजित्वैव ययुर्धामाक्षरं परम् ॥१०२॥
निकृष्टयोनयश्चापि पशवोऽजागवादयः।
तेऽपि दुग्धार्पणयोगैर्ययुर्धामाऽक्षरं प्रभोः ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणादिना लेखकस्य विशालरेखस्य सपत्नीकस्य, करणाद्यानां कायस्थानां बहूनां, शाहविलापनक्षत्रियस्य सपत्नीदासीदासस्य च, मोक्षणमित्यादिनिरूपण-नामा पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां गृध्रस्य मोक्षदाम्।
पारायणस्थले नित्यं सतामुच्छिष्टभोजनम् ॥ १ ॥
गृध्रो लब्ध्वा तु मध्याह्ने मुक्तिमवाप शाश्वतीम्।
न्यग्रोधषण्डे जरठा गृध्रा आसन् शताधिकाः ॥ २ ॥
आबालवृद्धाः सर्वे स्म वटषण्डे वसन्ति वै।
उड्डीयोड्डीय गगने मार्गयन्ति स्म भोजनम् ॥ ३ ॥
दूरं दूरं पराक्रम्य भक्षयन्ति स्म मार्गितम्।
तेषां पारायणकाले महोत्सवः सदाऽभवत् ॥ ४ ॥
नित्यं यत्र भोजनानि कुर्वन्त्यसंख्यमानवाः।
तत्र पारायणक्षेत्रे भोजनानां तु भूमिषु ॥ ५ ॥
उच्छिष्टानि पतन्ति स्म विविधान्नानि बद्रिके।
मर्जितान्नानि शाकानि मिष्टान्नानि पतन्ति च ॥ ६ ॥
वैष्णवानां पंक्तयो वै यत्र भवन्त्यहर्निशम्।
साध्वीनां पंक्तयश्चापि साधूनां पंक्तयस्तथा ॥ ७ ॥

भवन्ति भुञ्जते तत्र प्रसादान्नानि साधवः ।
तदुच्छिष्टानि पात्रेभ्यः पतितानि तु यानि वै ॥ ८ ॥
पात्रोच्छिष्टानि चान्नानि गृध्रास्ते शतशः सदा ।
पंक्त्यन्ते भुंजते सर्वे तृप्ता भवन्ति चान्वहम् ॥ ९ ॥
उच्छिष्टक्षेपणस्थाने महोत्करेऽपि पक्षिणः ।
प्रक्षिप्तोच्छिष्टपर्युषितान्नशाकानि भुंजते ॥१०॥
शृणु बद्रीप्रिये चैत्रशुक्लद्वादशिकादिने ।
स्वतःप्रकाशो भगवान् व्यासो मध्याह्नके शुभे ॥११॥
भुक्त्वोच्छिष्टं प्रचिक्षेप पार्श्वे क्षेत्रे सपात्रकम् ।
गृध्रस्त्वेको हि जरठो वटादुड्डीय चागमत् ॥१२॥
अभक्षयत् तदुच्छिष्टं कृष्णप्रसादमिश्रितम् ।
तावत्तस्य समस्तानि नष्टानि पातकानि वै ॥१३॥
पुण्यात्मा त्वभवत्तूर्णं कर्माशयोऽस्य भस्मितः ।
बहूनां पश्यतां पक्षी पपात भूतले द्रुतम् ॥१४॥
निर्गत्य पक्षिदेहात् स दिव्यदेहश्चतुर्भुजः ।
श्रीहरेः पार्षदो भूत्वाऽदृश्यत तत्र चाऽम्बरे ॥१५॥
विस्मिताः साधवः सर्वे तथाऽन्ये वैष्णवा अपि ।
वीक्ष्य तं पार्षदरूपं पप्रच्छुः साधवस्तु तम् ॥१६॥
को भवान् पक्षिरूपोऽपि पार्षदं रूपमासवान् ।
वद सर्वं यथातथ्यं निवर्तय कुतूहलम् ॥१७॥
इत्येवं पार्षदः श्रुत्वोवाच साधून् समुत्सुकः ।
अमुत्र पूर्वदेहोऽहं कौलिको मानवो भुवि ॥१८॥
नाम्ना दण्डारणिश्चासं हिंसाचौर्यपरायणः ।
खादके नगरे चासं महाकुटुम्बवानहम् ॥१९॥
मम वृद्धस्य वृद्धो यस्तस्य पुत्रा दशाऽभवन् ।
दशानां शतशश्चासन् शतानां तु सहस्रकम् ॥२०॥
कन्यकाश्च तथा ह्यासँस्तासां वंशाः सहस्रकम् ।
खादकं नगरं सर्वं प्रायः कौलिकवेष्टितम् ॥२१॥
ते सर्वेऽपि वयं नित्यं गृहस्थाः सुकुटुम्बिनः ।
अकरवाम वृत्त्यर्थं कृषिकर्माणि नित्यदा ॥२२॥
दुष्काले चोष्णकाले वा कुर्मश्चौर्यं प्रसह्य वा ।
लुण्टनं चापहरणं धनाऽन्नाऽम्बरसम्पदाम् ॥२३॥
विप्राणां वापि साधूनां क्षत्राणां चान्यदेहिनाम् ।
भक्षयामस्तदन्नादि धारयामोऽम्बरादिकम् ॥२४॥
तेन पापेन पापिष्ठा मृता वयं तु ये च ये ।
वृद्धा बाला युवानो वा नरा नार्यश्च ते खलु ॥२५॥
सर्वे वयं वटे गृध्रा इमे जाताः स्म वंशजाः ।
याम्यदुःखान्यनुभूय गृध्रा जाता वटे त्विह ॥२६॥
तेषु सर्वेषु वृद्धोऽहं चौरोऽभवं विशेषतः ।
चोरयित्वा मुहुस्तेषां पोषणं संव्यधां तदा ॥२७॥
तेन याम्यमहाकष्टं भुक्त्वाऽत्र गृध्रतां गतः ।
वृद्धः प्राचीनतमश्च भवामि बहुवत्सरः ॥२८॥
व्यासस्योच्छिष्टमासाद्य हरेः प्रसादमुत्तमम् ।
दग्धपाप्माऽभवं नष्टवासनश्च द्रुतं त्विह ॥२९॥
मुक्तदशां गतश्चास्मि मुक्तः पक्षिशरीरतः ।
प्रयामि त्वद्य बदरिकाश्रमं पावनं ततः ॥३०॥
श्वेतद्वीपं प्रयास्यामि वैकुण्ठं च ततः परम् ।
एवं मे मोक्षणं जातं प्रसादस्यैव भक्षणात् ॥३१॥
प्रसादस्य तु माहात्म्यं मया वक्तुं न शक्यते ।
महापापाः प्रसादेन मुच्यन्ते चाधमा अपि ॥३२॥
प्रसादस्य तु माहात्म्यमति जानन्त्यजादयः ।
मत्स्यो भूत्वा स्वयं ब्रह्मा चखाद सुप्रसादकम् ॥३३॥
सुराः प्रसादमिच्छन्ति पितरः सुतरां सदा ।
पापघ्नं पुण्यदं सत्त्ववर्धनं मोक्षदं तथा ॥३४॥
प्राणा येषां न निर्यान्ति मृत्युदुःखसुषां यदि ।
तेषां प्रसादलाभेन प्राणा निर्यान्ति वै द्रुतम् ॥३५॥
भूतप्रेतपिशाचानां छाया तस्य न लुम्पति ।
न बाधन्ते डाकिनीशाकिनीपिशाचिकाश्च तम् ॥३६॥
प्रसादभक्षभक्तानां निर्मलान्यान्तराण्यपि ।
धार्मिकानि प्रवर्तन्ते तमःपापक्षयाणि च ॥३७॥
अप्रसादभोजिनोऽत्र देहः सदा पिशाचकः ।
प्रसादभक्षभक्तस्य तनुः सदा तु देवता ॥३८॥
प्रसादभोजने देहे देवा वसन्ति नित्यशः ।
प्रसादभोजिनां दिव्यं शरीरं पावनं सदा ॥३९॥
अप्रसादप्रभोक्तारः पापभोक्तार एव ते ।
भूतप्रेतपिशाचान्नं प्रसादवर्जितं हि यत् ॥४०॥
प्रसादभोजिनां नित्यं कृपा कृष्णस्य जायते ।
कृपया सम्पदः सर्वा देहान्ते मोक्षसम्पदः ॥४१॥
प्रसादभोजनं नित्यं निर्गुणं दोषवर्जितम् ।
अपि स्वादभरं सर्वं निःस्वादं तत् सदा मतम् ॥४२॥
कृष्णार्पिता रसाः सर्वे भुक्ता बध्नन्ति ते नहि ।
रूपाणि यानि रम्याणि सुरूपाकृतयश्च याः ॥४३॥
चाकचक्ययुताश्चापि तेजःप्रभासमन्विताः ।
कृष्णार्पितास्तु ता मुक्ता नैव बध्नन्ति निर्गुणाः ॥४४॥
गन्धा उच्चावचा ये ये तैलसारादयोऽपि च ।
कस्तूरीकेसराद्याश्च कर्पूरं गन्धसारकाः ॥४५॥

कृष्णार्पिता निर्गुणास्ते मुक्ता बध्नन्ति नैव ह।
शब्दा रम्याः स्वर्थभरा मनोहराश्च नर्मदाः ॥४६॥
सुस्वरा उत्सवपूर्णा आकर्षकाश्च तानिनः।
कृष्णार्पिता निर्गुणास्ते मुक्ता बध्नन्ति नैव ह ॥४७॥
वादित्राणि समस्तानि सङ्गीतानि च गीतयः।
आलापाश्चाऽर्पिताः कृष्णे निर्गुणा बन्धवर्जिताः ॥४८॥
स्पर्शाश्च कोमलाः स्निग्धा मृदवः शीतला अपि।
उष्णा गम्या इष्टवर्या महानन्दप्रदाः सुखाः ॥४९॥
चेतनस्था जडस्था वा कृष्णार्पिता न बन्धदाः।
संयोगा विविधाश्चापि कठिना शिथिलाश्च ये ॥५०॥
द्रवाश्चापि समस्ता ये स्नेहा ये च मिथः शुभाः।
विज्ञानानि च काव्यानि तर्काश्च बुद्धयस्तथा ॥५१॥
सुखदुःखे सर्वविधे सर्वा इच्छाश्च वासनाः।
द्वेषा यत्नाः क्रियाः सर्वा धर्माऽधर्मादयोऽपि ये ॥५२॥
भावनाश्च समस्ता वै सर्वकर्माणि यानि वै।
भावा अभावाः श्रीकृष्णेऽर्पितास्ते निर्गुणाः सदा ॥५३॥
तद्भोकारं न बध्नन्ति यतो मायाविवर्जिताः।
मायासत्त्वं रजश्चापि तमोऽहंममतादयः ॥५४॥
स्वत्वं निद्रा च तन्द्रा च कृष्णेऽर्पिता तु निर्गुणाः।
नरो नारी बालिका च बालः कन्या युवा तथा ॥५५॥
वृद्धो वृद्धाऽर्पिताः कृष्णे निर्गुणा मोक्षभागिनः।
गावो वृषा गजा उष्ट्रा अश्वा अजाः प्रजास्तथा ॥५६॥
गृहं सर्वोपकरणं भोग्यजातं समस्तकम्।
वेषा भूषाः सम्पदश्च यानानि वाहनान्यपि ॥५७॥
रत्नानि मणयश्चापि कणाः पत्राणि सर्वथा।
फलपुष्पाण्यर्पितानि कृष्णे निर्बन्धनानि वै ॥५८॥
ज्ञानं ध्यानं धारणा च पूजा सेवा प्रदानकम्।
व्रतं तीर्थं पुण्यमिष्टं वापीकूपतडागकम् ॥५९॥
सर्वं कृष्णार्पितं दिव्यं निर्गुणं बन्धवर्जितम्।
प्रवासो भारवाहित्वं भृत्यता दासता कृतिः ॥६०॥
शिल्पिता कारुता कृष्णसमर्पितं तु निर्गुणम्।
कलाकौशल्यमत्यर्थं नवाऽऽविष्करणान्यपि ॥६१॥
साधनान्युत्सवानां च प्रतिमाश्च पृथग्विधाः।
शृंगाराणि निर्गुणानि कृष्णेऽर्पितानि सर्वथा ॥६२॥
पाचनं कर्षणं यानं कर्तनं लवनं तथा।
सीवनं चापि सन्धानं कृष्णार्पितं तु निर्गुणम् ॥६३॥
श्वसनं दर्पणं स्पर्शः स्वादश्च घ्राणनं तथा।
भोगः फलं समस्तं च कृष्णार्पितं तु निर्गुणम् ॥६४॥

वपनं सेचनं चाभ्यवर्धनं रक्षणं तथा।
पोषणं ग्रहणं सर्वं कृष्णार्पितं तु निर्गुणम् ॥६५॥
मज्जनं क्षुवनं चापि म्रोडनं त्रोटनं तथा।
हसनं रमणं चापि कृष्णार्पितं तु निर्गुणम् ॥६६॥
विहारश्च समाप्तिश्चारम्भो विस्तारणं तथा।
संकोचश्च विकासश्च कृष्णाऽर्पितास्तु निर्गुणाः ॥६७॥
जृंभणं पक्ष्मणं चापि निमेषोन्मेषणे तथा।
स्वपनं कूर्दनं पातः कृष्णाऽर्पितास्तु निर्गुणाः ॥६८॥
धावनं क्रमणं न्यासः स्थैर्यमुड्डयनं लयः।
प्रकाशनं यशः कीर्तिः कृष्णाऽर्पितास्तु निर्गुणाः ॥६९॥
कण्डनी पेषणी चुल्ली जलकुंभी च मार्जनी।
वर्धनी शयनी कोष्ठी कृष्णाऽर्पितास्तु निर्गुणाः ॥७०॥
मस्तकं नेत्रकर्णोरःकण्ठहस्तोदरादयः।
जघनोरुसक्थिजानुजंघापादादयस्तथा ॥७१॥
कृष्णार्पिताङ्गसर्वस्वं निर्गुणं मोक्षदं भवेत्।
रुग्णता स्वास्थ्यमुदयो वृद्धिर्हानिः प्रशासनम् ॥७२॥
अर्जनं व्यवहारश्च कृष्णाऽर्पितास्तु निर्गुणाः।
व्यापारो विक्रयो विनिमयः क्रयोऽपहारिता ॥७३॥
भिक्षा चोपार्जनं वृत्तिर्जीविकाऽऽयव्ययौ तथा।
सदसद् यत् समस्तं तत् कृष्णार्पितं तु निर्गुणम् ॥७४॥
स्त्रीपुंनपुंसकभावा धातवश्च प्रवर्तना।
निवर्तनाद्याः श्रीकृष्णार्पिता निर्गुणमुक्तिदाः ॥७५॥
बन्धशून्या हरावर्पणमाप्ताः सर्वसम्पदः।
मोक्षायैव प्रजायन्ते कृष्णप्रसन्नताप्रदाः ॥७६॥
यस्य द्रव्यं कृष्णशून्यं नैव नैव गुणास्तथा।
यस्य कर्म कृष्णशून्यं नैव नैव तथाऽस्तिता ॥७७॥
न जीवनं कृष्णशून्यं न प्राणाः कृष्णवर्जिताः।
न चैतन्यं कृष्णशून्यं न वर्णः कृष्णवर्जितः ॥७८॥
नाश्रमः श्रीकृष्णशून्यो न त्यागः कृष्णवर्जितः।
न दीक्षा श्रीकृष्णशून्या न मृत्युः कृष्णवर्जितः ॥७९॥
नेषणाः श्रीकृष्णशून्यास्तस्य सर्वं हि निर्गुणम्।
दिव्यं कृष्णार्थकं सर्वं सर्वं मोक्षप्रदं हि तत् ॥८०॥
कृष्णप्रसन्नतादं तत् तस्य सर्वं विराजते।
सोऽपि प्रसादपात्रं श्रीकृष्णार्पितस्तदीयकः ॥८१॥
कृष्णतादात्म्यमाप्तो वै महाभागवतो हि सः।
कोटिकल्याणभूमिः सः सर्वकल्याणदोऽपि सः ॥८२॥
अधर्मोद्धारकः स स्यादंशावतार एव सः।
साधुः स एव श्रीकृष्णसम्पद्वान् मुक्त उत्तमः ॥८३॥

ब्रह्मैव स तु विज्ञेयो यः श्रीकृष्णार्थकः सदा ।
मूर्तिः सा श्रीकृष्णनारायणवासार्थमन्दिरम् ॥८४॥
तद्देहः श्रीकृष्णदेहस्तन्मनः कृष्णमानसम् ।
तदिन्द्रियाणि श्रीकृष्णेन्द्रियाण्येव न वै पृथक् ॥८५॥
तत्क्रियाः श्रीकृष्णनारायणक्रिया न चेतराः ।
तत्सर्वस्वं कृष्ण एव तत्पूजा कृष्णपूजनम् ॥८६॥
तत्सेवा श्रीकृष्णसेवा स एव कृष्णमूर्तिकः ।
तस्य प्रसन्नता कृष्णप्रसन्नता न संशयः ॥८७॥
तद्वाक्यं कृष्णवचनं तदाशीः कृष्णकीर्तिता ।
तस्य प्राप्तिः कृष्णप्राप्तिर्नास्ति भेदो मनागपि ॥८८॥
अवतारास्त एवोक्ता लोकोद्धारकरा भुवि ।
तं भजन्तु महाराजं कृष्णनारायणं प्रभुम् ॥८९॥
प्रयाम्यहं विशालां च प्रसादमात्रभोजनः ।
स्वस्ति वोऽस्तु कृष्णनारायणश्रीनाथवल्लभः ॥९०॥
इत्युक्त्वा बद्रिके गृध्रो दिव्यो बद्रीश्वरं ययौ ।
नरनारायणं मां तु प्राप्तस्तपश्चकार ह ॥९१॥
ततः श्वेतद्वीपधाम ययौ नारायणाश्रितम् ।
ततो ययौ स वैकुण्ठं प्राप्तपूर्णमनोरथः ॥९२॥
अथ तस्माद् ब्रह्मधाम प्रयास्यत्यक्षरं पदम् ।
प्रमोनारायणकृष्णनारायणेति वै जपन् ॥९३॥
इत्येवं बद्रिके जातो मोक्षस्तस्य प्रसादतः ।
तस्मात् सर्वै करणीयं कारणीयं प्रसादजम् ॥९४॥
अथाऽन्ये शतशो गृध्रा वटे प्रसादभोजिनः ।
कौलिकस्य पुरा सम्बन्धिनो गृध्रगतिं गताः ॥९५॥
तेऽपि नित्यं भुंजते स्म प्रसादं साधुयोगिनाम् ।
तेन क्षपितकर्माणोऽभवन् पुण्याभिभागिनः ॥९६॥
देहाँस्तिर्यग्जातिजातान् त्यक्त्वा दिव्यशरीरिणः ।
भूत्वा श्रीबदरीनाथं ययुर्दिव्याश्रमं तु नौ ॥९७॥
तत्र तप्त्वा तपस्ते च ययुः श्वेतालयं हरेः ।
तत्र नारायणसेवां कृत्वा वैकुण्ठकं ययुः ॥९८॥
तेऽपि यास्यन्ति परमं धामाऽक्षरं ततः परम् ।
प्रज्ञानारायणपद्माश्रीनारायणजापिनः ॥९९॥
बद्रि प्रसादवत् कृष्णसत्तां धुलिं च पावनीम् ।
सतां पादजलं पूतं पीत्वा यान्ति परं दिवम् ॥१००॥
सतां प्रसेवया पूता न कल्पन्ते भवाय ते ।
सतां मूर्तिः कृष्णमूर्तिः कथा कृष्णवचः शुभम् ॥१०१॥
कृष्णार्पितं वैष्णवं वै तत् सेव्यं नेतरत् क्वचित् ।
भुक्तिर्मुक्तिर्भवेत्तेन श्रीकृष्णाप्तिर्भवेत्सदा ॥१०२॥
पठनाच्छ्रवणादस्य तिर्यग्योनिप्रदं त्वघम् ।
नश्यत्येव परं पुण्यं जायते नात्र संशयः ॥१०३॥
कृष्णे भक्तिर्जायतेऽपि सत्सु प्रीतिः प्रजायते ।
सर्वार्पणादिभावः स्यात् तन्मयत्वं ततो भवेत् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने पूर्वजन्मनि दण्डारणिनामकौलिकस्य गृध्रजन्मनि कथास्थले भगवत्साधुप्रसादोच्छिष्टभोजिनो मोक्षणं, तत्सम्बन्धिगृध्राणामपि प्रसादभोजनेन मोक्षणमित्यादिनिरूपणनामा षट्षष्टितमोऽध्यायः ॥ ६६ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां सर्वाघहारिणीम् ।
तटाधिष्ठानके ग्रामे गोवारो नामतोऽभवत् ॥ १ ॥
गवां पालः कुटुम्बाढ्यश्चारयत्येव गाः सदा ।
गवां पञ्चशतं सीम्नि क्षेत्रेषु पीडकेषु च ॥ २ ॥
सस्यभूमिषु घासाढ्यक्षितावुच्छ्रायकेषु च ।
नीत्वा नित्यं चारयति गोव्यापारश्च जीवति ॥ ३ ॥
दुग्धदध्याज्यविक्रेता गोवारः स प्रजीवति ।
करोति चापरं कार्यं ग्रामीणगोप्रचारणम् ॥ ४ ॥
ग्रामीणानां गवां चापि चारणं स्वीयधेनुभिः ।
साकं सीमसु सर्वत्र वृत्तिकां लभते तथा ॥ ५ ॥
एवं निर्वाहमाप्नोति किन्तु लोभाभिकर्षितः ।
अन्यासां तु गवां दुग्धं दोहयित्वा च विक्रयम् ॥ ६ ॥
क्वचित् क्वचित् करोत्येव दुग्धचौर्यं तथाविधम् ।
चतुःशतानि गावस्तु ग्रामीणानां भवन्ति ताः ॥ ७ ॥
निजा गावः शतं चेति दुग्धदास्तु तदर्धिकाः ।
ग्रामीणानां गवां नित्यं पञ्चानां दुग्धमेव सः ॥ ८ ॥
चोरयत्येव मध्याह्नोत्तरं सीम्न्येव प्रत्यहम् ।
नित्यमेवं रसचौर्यं करोति गोसतीष्वपि ॥ ९ ॥
दोग्ध्रीषु च स्वकीयासु तृष्णातन्तुर्हि दुर्जरः ।
रसस्तैन्यजपापेन कालान्तरे मृतो वने ॥१०॥
जलाजरहितः सोऽयं वने मार्जारतां गतः ।
शर्करानगराभ्याशे मार्जारो भ्रमति प्रगे ॥११॥
यद्वा रात्रौ भोजनार्थे समन्वेषणतत्परः ।
समायाति महोद्यानं गन्धेन कर्षितस्ततः ॥१२॥
आययौ भोजनोच्छिष्टोत्करपुञ्जसमीपगः ।
तत्र कृष्णप्रसादान्नभोजिनां साधुयोगिनाम् ॥१३॥

उच्छिष्टं प्राप्तवान् वन्यबिडालको मुदं गतः ।
भक्षयामास तृप्तश्च ययौ रात्रौ वनान्तरम् ॥१४॥
एवं करोति नित्यं स मिष्टगरिष्टभोजनम् ।
तेनाऽलसः स सञ्जातो मासान्ते पुष्टदेहवान् ॥१५॥
उत्करस्यैव पार्श्वस्थतृणपुञ्जे दिवानिशम् ।
वासं स रोचयामास निर्भीकः स्तबकेष्वपि ॥१६॥
स्तम्बेषु च क्वचिदास्ते स्वपिति भक्षणोत्तरम् ।
क्वचिद् दिवा समायाति बहिः श्वादिविवर्जिते ॥१७॥
चैत्रशुक्लत्रयोदश्यां भोक्तुमुत्करके स तु ।
मध्यान्होत्तरवेलायामागतो भयवर्जितः ॥१८॥
उच्छिष्टं भुक्तवाँस्तत्र मूर्छां जगाम वै ततः ।
व्यसुर्जातः क्षणात् तस्माद् दिव्यः पुमान् व्यजायत ॥१९॥
सुरवद् दिव्यदेहश्च सर्वांगशोभनः शुभः ।
उच्छिष्टमार्जका दृष्ट्वा महाश्चर्यमिदं ततः ॥२०॥
पप्रच्छुस्तं देवजनं कस्त्वं मार्जारतां गतः ।
कथं देवत्वमापन्नो नमस्तुभ्यं वदात्र नः ॥२१॥
स चाहोच्छिष्टहारौँस्तु तटाधिष्ठानके पुरे ।
गोचारनामकश्चाऽहं गवां चारोऽभवं पुरा ॥२२॥
ग्रामीणानां धेनवश्च दोग्ध्र्यः सुचारिता मया ।
किन्तु तासां सुदुग्धानि सीम्नि प्रलोभिना मया ॥२३॥
चोरितानि दोहितानि विक्रीतानि च चौर्यतः ।
आजीवनं कृतं चौर्यं तेन पापेन वै मृतः ॥२४॥
याम्यपुरे दुःखमयीर्यातनाः समलोक्य च ।
भुक्त्वा दुःखान्यसंख्यानि ततो मार्जारतां गतः ॥२५॥
जलान्नशून्यदेशो वै क्षुधातृषातिपीडितः ।
श्वपदानां भीतियुक्तो भ्रमामि रक्षयँस्तु माम् ॥२६॥
मार्गयामि भक्ष्यमेव जलं चापि मिलेद् यदि ।
अटन् वनानि चागच्छं वने सिन्धुतटेऽधुना ॥२७॥
जलयुक्ते प्रदेशेऽहं निवासं समरोचयम् ।
रात्रौ रात्रौ विचरामि भक्ष्यलाभाय खेटकान् ॥२८॥
महोद्यानाभिभूमौ चागच्छं दैवानुयोजितः ।
उत्करं दृष्टवान् रात्रावुच्छिष्टबहुलं तदा ॥२९॥
अभक्षयं यथेष्टं च तृप्तिं शान्तिमवाप च ।
नित्यमेवं भक्ष्यमत्र प्राप्तं मया दिवानिशम् ॥३०॥
पुष्टिं प्राप्तोऽत्र देहस्य महालस्यं गतोऽपि च ।
अलसः सन्निवासं चारोचयं तृणपुञ्जके ॥३१॥
नातिदूरे स्तबकेषु स्तम्बेष्वपि भ्रमाम्यहम् ।
भुक्त्वा चात्र प्रयाम्येवं मासोऽत्र मे व्यवर्तत ॥३२॥

उच्छिष्टं भुक्तवानित्थं कृष्णप्रसादभोजिनाम् ।
साधूनां वैष्णवानां च तेनाऽघानि गतानि मे ॥३३॥
नष्टपापो भवाम्यद्य प्रसादोच्छिष्टभोजनः ।
पुण्यवान् भाग्यवानस्मि जातश्चाद्य भुवस्तले ॥३४॥
कथास्थलीस्थसाधूनां प्रसादं प्राप्तवानहम् ।
देवभावं चाधिगतस्त्यक्त्वा बिडालविग्रहम् ॥३५॥
प्रयामि व्योमचारोऽहं स्वर्गं महेन्द्रपालितम् ।
तत्र शतयुगं स्थित्वा यास्यामि बदरीवनम् ॥३६॥
श्वेतद्वीपं ततश्चापि वैकुण्ठं च ततः परम् ।
ततोऽऽक्षरपदं दिव्यं प्रयास्यामि च संशयः ॥३७॥
अनादिश्रीकृष्णनारायणस्य परमात्मनः ।
साधूनां सुप्रसादस्योच्छिष्टभोगफलं त्विदम् ॥३८॥
जातं मे सर्वथा लोका यास्यामि स्वर्गमुत्तमम् ।
स्वस्ति वोऽस्तु नमो वोऽस्त्वित्युक्त्वा दिवं ययौ द्रुतम् ॥३९॥
उच्छिष्टमार्जकाः सर्वे महाश्चर्यं प्रपेदिरे ।
अहो प्रसादमाहात्म्यं पशूनां देवताकरम् ॥४०॥
विदित्वा ते कथायां वै कथान्ते चातुरत्सुकाः ।
सर्वे ज्ञात्वा मेनिरे तां कृपां कृष्णस्य सर्वथा ॥४१॥
शृणु बद्रीप्रिये देवि ठह्वोलस्य कथां तथा ।
वस्त्रचौरोऽभवद्धूर्तः ठह्वोलाख्यो वणिग्जनः ॥४२॥
हनूदराख्यनगरे वस्त्रव्यापारवान् सदा ।
वस्त्रापणाद् वस्त्रजातीन्यभिक्रीणाति नित्यदा ॥४३॥
विक्रीणाति च तान्येव व्यापारं प्रकरोति च ।
क्वचित् क्वचिद् वस्त्रचौर्यं करोति परवस्त्रतः ॥४४॥
क्रये चौर्यं विक्रयेऽपि परकोशेभ्य इत्यपि ।
ग्रन्थिचौर्यं करोत्येव यथा जानाति नेतरः ॥४५॥
वस्त्रचौर्योत्थपापेन दारिद्र्यं समजायत ।
अन्नवस्त्रादिहीनः स व्यजायत शनैः शनैः ॥४६॥
कुटुम्बपोषणाऽशक्तो विचित्तः सोऽभवँस्ततः ।
उन्मत्तः स गृहं त्यक्त्वाऽभ्रमद् ग्रामान्तरेऽपि च ॥४७॥
प्रारब्धवशतापन्नो ज्वराविष्टोऽभवत्तः ।
मृतो निर्जनदेशेऽसौ देहं काका अभक्षयन् ॥४८॥
वस्त्रचौर्यस्य पापेन याम्यपुरं गतोऽभवत् ।
तत्र भुक्त्वा नरकान् स वने जम्बुकतां गतः ॥४९॥
क्षुधाव्याप्तो बलहीनः शीतोष्णपीडितः शठः ।
धूर्तस्वभावयुक्तः स जम्बुकः शर्करापुरम् ॥५०॥
अदूरवनतस्तत्र कथाऽभ्याशमुपाययौ ।
रात्रौ भोजनलब्धीच्छाप्रेरितः पर्यटन् स्वयम् ॥५१॥

उत्करं खाद्यसम्पन्नमुच्छिष्टसञ्चयान्वितम् ।
प्राप चखाद तत्रान्नं प्रसादोच्छिष्टमुज्झितम् ॥५२॥
सतां प्रसादोच्छिष्टं च बुभुजे तृप्तिपूर्वकम् ।
एवं नित्यं भुक्तवान् स बद्रिके चोत्करोज्झितम् ॥५३॥
तेन पापानि नष्टानि पशुजन्मार्थकान्यपि ।
पूर्वजानि समस्तानि मूलजन्मानि यान्यपि ॥५४॥
सर्वपापानि नष्टानि वासनाश्च क्षयं गताः ।
शुद्धो जातः शृगालो यत् प्रसादो भेषजं सताम् ॥५५॥
जन्मरोगहरः सर्ववासनाक्षयकृत्तथा ।
हरेः सतां च साध्वीनां प्रसादो भेषजं महत् ॥५६॥
संसाररोगमग्नानां प्रसादो रोगनाशकः ।
ब्रह्मस्वास्थ्यप्रदश्चापि स्वर्गसौख्यप्रदस्तथा ॥५७॥
पशूनां पक्षिणां चापि कीटानां क्षुद्रदेहिनाम् ।
शाखिनां तृणजातीनामपि पापविनाशकः ॥५८॥
स्वर्गदः पुण्यदो मोक्षप्रदश्चापि प्रसादकः ।
दिव्यदृष्टिप्रदो दिव्यगतिप्रदः प्रसादकः ॥५९॥
प्रसादान्नं प्रसादापो भुक्तं पीताः प्रमोक्षदाः ।
पितरो मानवा देवाः पिबन्ति भुञ्जते ततः ॥६०॥
हरेः प्रसादं भुक्त्यर्थं सतां प्रसादमित्यपि ।
एवं भुक्त्वा नित्यमेव जम्बुकः शुद्धतां गतः ॥६१॥
बद्रिके चैत्रपूर्णायां मध्यन्दिनोत्तरं स तु ।
भक्षयामास चोच्छिष्टं मूर्छामवाप तत्क्षणम् ॥६२॥
तावज्जम्बुकदेहात्तु पुरुषो देवरूपवान् ।
सुदिव्यः प्राविरभवत् सर्वतेजोऽभिभासुरः ॥६३॥
कर्मचारैस्तथाऽन्यैः संवीक्षितः स तदाम्बरे ।
पृष्टः कस्त्वं कथं देवो जम्बुकाद्वै व्यजायथाः ॥६४॥
स प्राहाऽहं वणिग्जातिर्हंनूदरपुरालयः ।
पुराऽऽसं ठक्कोलकाख्यो वस्त्रव्यापारवान् सदा ॥६५॥
विश्वस्तानां चापणेभ्यो वस्त्रचौर्यपरोऽभवम् ।
वस्त्रकोशेभ्य एवाऽपि ग्रन्थिकाचौर्यतत्परः ॥६६॥
एवं चौर्यप्रपापैश्च दारिद्र्यं प्राप्तवाँस्ततः ।
उन्मत्तश्चाऽभवं मृत्युं गतो भ्रमन् वनान्तिके ॥६७॥
देहं त्वभक्षयन् काका गृध्राश्च जम्बुका मम ।
याम्यदुःखानि संभुक्त्वा पापलेशेन जम्बुकः ॥६८॥
वनेऽत्राऽस्मि प्रसंभूतः क्षुधाविष्टो भ्रमामि च ।
वस्त्रहीनः सदा दुःखी भोजनार्थमिहोत्करम् ॥६९॥
आगत्य प्रत्यहं चान्नं भुनज्म्युच्छिष्टमुत्तमम् ।
हरेः प्रसादजं चान्नं सतामुच्छिष्टमुत्तमम् ॥७०॥
पावनं पापहारं च नित्यं भुक्त्वाऽघवर्जितः ।
पावनो वासनाहीनो जातोऽस्मि पुण्यवानहम् ॥७१॥
कथाप्रसंगतश्चात्र मया प्राप्तं सुभोजनम् ।
येनाऽहं देवतारूपो जातोऽस्मि च दिवंगतः ॥७२॥
उषित्वा सुचिरं मार्गे ततो यास्यामि मोक्षणम् ।
इत्युक्त्वा प्रययौ बद्रि देवो भूत्वा दिवं तदा ॥७३॥
आश्चर्यं परमं प्राप्ताः कर्मचारास्तदा जनाः ।
विविदुश्च प्रसादस्य माहात्म्यं स्वर्गमोक्षदम् ॥७४॥
शृणु बद्रीप्रिये पश्चादाश्चर्यपरमं मनः ।
अभवत् कर्मचाराणां प्रसादान्नादिभक्षणे ॥७५॥
माहात्म्यसंविदस्ते च प्रसादं कर्मचारिणः ।
पापनाशकरं ज्ञात्वा चखादुर्भावसंभृताः ॥७६॥
तेषां वै कर्मचाराणां निर्मलान्यान्तराणि वै ।
इन्द्रियादीन्यभवँश्च हृदयानि शुभानि च ॥७७॥
पापशून्यानि जातानि श्रेष्ठविवेकवन्ति च ।
तेषां तदाऽभवन् हृत्सु संकल्पा मोक्षहेतवे ॥७८॥
मन्त्राणां ग्रहणे चापि सतां प्रसेवनेऽपि च ।
नाम्नां कृष्णस्य रटने कीर्तने परमात्मनः ॥७९॥
अथ ते वै शतं कर्मचाराः सेवापरायणाः ।
जगृहुः परमं मन्त्रं नामधुन्यं च कीर्तनम् ॥८०॥
स्वतःप्रकाशायनतो जापं चक्रुश्च कीर्तनम् ।
नित्यं कथायाः श्रवणं कृत्वा कुर्वन्ति कीर्तनम् ॥८१॥
एवं ते श्रद्धया युक्ता मन्त्रमाहात्म्यवेदिनः ।
प्रसादस्य सतां सेवायाश्च माहात्म्यवेदिनः ॥८२॥
भक्त्या कृष्णस्य भजनं चक्रिरे भोजनोत्तरम् ।
मासान्ते भजतां तेषां कृष्णः प्रसन्नतां गतः ॥८३॥
अनादिश्रीकृष्णनारायणश्रीकान्तवल्लभः ।
आकाशादाययौ तूर्णं स्वर्णविमानवाहनः ॥८४॥
प्रसन्नमानसो दिव्यः सर्वाभरणभूषितः ।
लक्ष्म्या जुष्टो ललितया माणिक्या परिसेवितः ॥८५॥
राधया जयया पद्मावत्या च प्रज्ञयाऽर्चितः ।
कर्मचारैर्नरैः सर्वैस्तथा कर्मपरायणैः ॥८६॥
तदन्यमानवैश्चापि योषिद्भिः कर्मजुष्टिभिः ।
दृष्टः श्रीभगवान् रम्यः सर्वकामार्थपूरकः ॥८७॥
नतो मुहुर्जयशब्दैर्वर्धितश्चाऽक्षतादिभिः ।
पूजितो हार्दकुसुमैर्विमानाद् भुवमागमत् ॥८८॥
प्राह सर्वान् प्रसंवीक्ष्य कर्मचाराऽग्रमानवम् ।
गृहनाम हरिं प्राह सर्वेषां शृण्वतां तदा ॥८९॥

भो स्वर्णाञ्जन भृत्य त्वं पवित्रोऽसि प्रसादतः ।
मन्ये नारीनराः सर्वे प्रसादभोजिनोऽपि च ॥९०॥
कथासेवापराः सन्ति पावना गतकल्मषाः ।
मुक्तियोग्याः समस्ता वै सर्वांस्नेतुं ममाऽक्षरम् ॥९१॥
आगतोऽपि समायान्तु सर्वे मे शाश्वतालयम् ।
इत्युक्ता बद्रिके सर्वे कर्मचारा नराः स्त्रियः ॥९२॥
सज्जा हुलहुलाशब्दैर्विमानं प्रति दुद्रुवुः ।
कृष्णनारायणेनैते वारिकणैः प्रसिञ्चिताः ॥९३॥
मूर्छां लब्ध्वा तनूस्त्यक्त्वा भूत्वा सुदिव्यविग्रहाः ।
विमानमधिरुह्यैते दिव्या धामाऽक्षरं ययुः ॥९४॥
वैशाखकृष्णैकादश्यां ययुर्धामाऽक्षरं हरेः ।
शतं नराः शतं नार्यो दिव्या मुक्ताः सदाऽभवन् ॥९५॥
जयनादान् प्रकुर्वन्तो मोदप्रमोदरञ्जिताः ।
भावयन्तो जनान् सर्वान् किर्तनं ते ययुस्तदा ॥९६॥
प्रभोनारायणकृष्णमालतीश्रायण प्रभो ।
जयाकृष्णललिताश्रायणराधापते विभो ॥९७॥
एवं तालीर्वादयन्तः कुर्वन्तः किलकिलाटिकाः ।
आह्वयन्तो भूतलस्थान् ययुर्धामाऽक्षरं हि ते ॥९८॥
बद्रिके श्रीहरेश्चाऽयं प्रसादः कृपयाऽन्वितः ।
भुक्तिं मुक्तिं ददात्येव तथेष्टं प्रददात्यपि ॥९९॥
भजतां भगवन्तं वै न न्यूनं त्ववशिष्यते ।
सेवतां साधुवर्यांश्च सर्वं पूर्णं प्रवर्तते ॥१००॥
रटतां श्रीहरेर्नाम भस्मीभवन्त्यघानि वै ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥१०१॥
इत्येवं जपतां मन्त्रं जायन्ते पुण्यकोटयः ।
स्मरतां श्रीहरिं बद्रि साक्षात् कृष्णोऽभियाति च ॥१०२॥
अर्पयतां समस्तं च गतिर्धाम्न्यक्षरेऽस्ति च ।
स्वयं नारायणः श्रीमान्नयत्येतान्निजाऽऽलयम् ॥१०३॥
पठतां शृण्वतां चापि स्मरतां मोक्षदं त्विदम् ।
सर्वेष्टपूरकं बद्रि शाश्वतानन्ददायकम् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने पूर्वजन्मनि धेनुपालस्य गोवाराभिधस्य मार्जारतां गतस्य, पूर्वभवे ठड्डोलाख्यवणिग्जनस्य शृगालतां प्राप्तस्य, स्वर्णाञ्जनादिशतद्वयकर्मचारिनरनारीणां च, प्रसादभोजनेन सेवाकथादिना च, मोक्षणमित्यादिनिरूपणनामा सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां चान्यां हितावहाम् ।
भरवाटोऽभवद्ग्रामे गुन्द्रके परमीरकः ॥ १ ॥
परमीराऽभिधः सोऽयमजासहस्रपालकः ।
अजामात्रपयोवृत्त्या तथोर्णविक्रयादिभिः ॥ २ ॥
अजाविक्रयवृत्त्या च जीवत्येव कुटुम्बवान् ।
अजामांसाशनश्चापि तथाऽजाबालभक्षकः ॥ ३ ॥
एवंविधोऽभवत् पापी सदाऽजापशुजीवनः ।
चारयत्येव सर्वाऽजाः सीमक्षेत्रादिषु नृणाम् ॥ ४ ॥
सस्वामिकेषु क्षेत्रेषु सस्यघासतृणानि च ।
यानि तान्यपि चौर्येण चारयत्यपि वै निशि ॥ ५ ॥
एवं दोषकरश्चाऽयं भरवाटोऽघसंभृतः ।
धर्मकर्मादिहीनः स कालपाशवशंगतः ॥ ६ ॥
ययौ यमालयं याम्यैर्नीतश्च तत्र रौरवे ।
असिपत्रवने कालपाशे सन्दंशके तथा ॥ ७ ॥
अग्निज्वाले नरकेषु क्षिप्तो लालाशनेऽपि च ।
याम्यदुःखान्यनुभूय भूतले श्येनतां गतः ॥ ८ ॥
अरण्ये श्येनपक्षी स जातः पापावशेषतः ।
स तु डीय वनाद् वनान्तरं सिन्धुतटेऽगमत् ॥ ९ ॥
प्राप्तोऽयं शर्कराभूमिं यत्र कथा प्रवर्तते ।
तरुषण्डेषु विश्रान्तिं लेभे मध्याह्नके तदा ॥१०॥
तत्र तत्र च चटका मार्गयन् तूत्करे स्थिताः ।
भक्षयन्तीश्चटकाः स व्यलोकयत् सुदूरतः ॥११॥
साधूच्छिष्टौदनकणान् कृष्णप्रसादरूपिणः ।
भक्षयन्तीर्भक्ष्यचिचाश्चटका वीक्ष्य वै द्रुतम् ॥१२॥
उत्पपात द्रुमात्तूर्णं पपात चटकोपरि ।
सहस्रशश्चटकास्ता उड्डीय भयतो द्रुतम् ॥१३॥
उत्पेतुरम्बरं त्वेकां धृतवान् भक्ष्यमुत्तमम् ।
चञ्च्वा तां मारयामास तावच्चटकावर्ष्मणः ॥१४॥
विनिर्ययौ दिव्यनारी सर्वाभरणभूषिता ।
स्वर्गस्य देवता यद्वत् कन्या तेजस्विनी शुभा ॥१५॥
पुष्पमालां करे धृत्वा साऽप्सरःसुन्दरी द्रुतम् ।
कथामण्डपमागत्य व्योममार्गेण पूजनम् ॥१६॥
प्रचक्रे श्रीप्रभो बद्रि संहितायाः समुत्सुका ।
विलोकिता समस्तैश्च मण्डपस्थैर्जनैस्तदा ॥१७॥
पृष्टा का त्वं नता चापि प्रत्युवाच जनान् प्रति ।
चटकाऽहं प्रसादान्नभक्षणात् पापवर्जिता ॥१८॥

पवित्रा पुण्यसंयुक्ता भवाम्यद्य जनास्त्विह ।
सतामुच्छिष्टमासाद्याऽभवं स्वर्गाय देवता ॥१९॥
अप्सरोवरतां प्राप्ता स्वर्गं प्रयामि चाधुना ।
चतुर्युगं दिवि स्थित्वा श्रीसंहिताऽर्हणोद्भवम् ॥२०॥
पुण्यमासाद्य यास्यामि वैकुण्ठं मुक्तविग्रहा ।
श्येनोऽयं तु पुरा चासीद्भरवाटो प्रजापतिः ॥२१॥
अहमासमजा तस्य मृताऽत्र चटकाऽभवम् ।
तेन धृता मृता चास्मि प्रयामि स्वर्गमुत्तमम् ॥२२॥
अन्याश्चटका उड्डीय प्रयाताश्चाऽम्बरं द्रुतम् ।
ता अपि भरवाटस्याऽभवन्नजादिमण्डलम् ॥२३॥
ताः सर्वा अपि कालेन प्रसादमक्षिका यतः ।
निष्पापाः पुण्यवत्यश्च प्रयास्यन्ति परं पदम् ॥२४॥
श्येनोऽपि मम देहस्य प्रसादपावितस्य वै ।
भक्षणेन पुण्यबलो भविष्यति न संशयः ॥२५॥
शनैः शनैः कणभक्षी भविष्यत्युत्करे स्थितः ।
प्रसादकणभुग् भूत्वा वैकुण्ठं स प्रयास्यति ॥२६॥
इत्युक्त्वा चटका बद्रि नत्वा संपूज्य चामृतम् ।
वारि पीत्वा ययौ स्वर्गं सर्वेषां पश्यतां परी ॥२७॥
महाश्चर्यमभूत्तेषां पश्यतां देहिनां तदा ।
बद्रिके चाथ चटकां श्येनः स बुभुजे तदा ॥२८॥
ओदनं सुसुगन्धं च प्रसादोच्छिष्टमित्यपि ।
बुभुजेऽन्यान्नकणकान् शृतान् स्वादून् मुमोदवान् ॥२९॥
मिष्टान्नखण्डकाँश्चापि घृतपक्वान् सुरन्धितान् ।
कच्चरस्थान् नित्यमेवमागत्य श्येन आद तान् ॥३०॥
पूतात्मा चाऽभवच्छ्येनस्तत्याज मांसभक्षणम् ।
जातिस्मरोऽभवत्तेन मोक्षमैच्छन्निजात्मनः ॥३१॥
चटकानां तथा मोक्षमैच्छत् पुराऽजजन्मनाम् ।
नित्यं श्येनस्तरुषण्डे प्रतीक्षन् चटकागमम् ॥३२॥
प्रच्छन्नस्तिष्ठति क्रोडे दिवसे चोत्करोन्मुखः ।
चटकाश्च समायान्ति प्रसादोच्छिष्टवाञ्छया ॥३३॥
भक्षयन्त्येकचित्ताश्च तावत्पतति पक्षिराट् ।
चटकं वा चटकां वा समादत्तेऽदनाय सः ॥३४॥
चटकाऽपि मृता तूर्णं देवो वा देवता तदा ।
भूत्वा यात्यम्बरं स्वर्गं प्रयात्येव मुदाऽव्ययम् ॥३५॥
एवं नित्यं प्रकुर्वाणश्चैकदाऽऽह तरौ स्थितः ।
चटका यूयमेवादावजा आस्त शुभा मम ॥३६॥
कर्मयोगेन जन्माऽत्र भवतीनां हि वर्तते ।
मया पूर्वं भवतीनां दुग्धान्यतिथये तथा ॥३७॥
साधुभ्यो धर्मकार्यार्थे नारायणाय चैकदा ।
अर्पितानि शिवराभ्यां शिवकानार्थमित्यतः ॥३८॥
तेन पुण्यप्रतापेन भवत्यश्चटकास्त्विह ।
सञ्जाता अपि कृष्णस्य प्रसादोच्छिष्टमक्षिकाः ॥३९॥
पवित्राः पुण्यशालिन्यो भवथैव दिवार्थिकाः ।
स्मरन्तु पूर्वजन्माऽद्य स्पृष्ट्वा मां भरवाटकम् ॥४०॥
श्येनात्मानं ततो यान्तु दिवं वैकुण्ठमित्यपि ।
श्रीसंहिताकथां श्रुत्वा प्रपूज्य वाचकं तथा ॥४१॥
साधून् सम्पूज्य दिव्यान् वै मोक्षदान् यान्तु मोक्षणम् ।
इत्येवं बद्रिके जातिस्मरः श्येनो जगाद तान् ॥४२॥
तेऽपि सर्वे चटकाश्च नरा नार्यस्तदा शुभाम् ।
श्येनगिरं समाकर्ण्य महाश्चर्यपुरःसराः ॥४३॥
सस्मरुः पूर्वजन्मानि भरवाटस्य ता अजाः ।
तदा विश्वासमापन्ना नेमुः श्येनं पुरा पतिम् ॥४४॥
श्येनोऽपि सत्कृतस्तैश्च समाययौ तमुत्करम् ।
मिलितश्चटकेभ्यश्च चटकाभ्यश्च सादरम् ॥४५॥
जातिस्मराः समस्तास्ते वृत्तान्तान् जगदुर्मिथः ।
उत्सवं मेनिरे तत्र बुभुजिरे प्रसादकम् ॥४६॥
अहिंसाव्रतमास्थाय न्यूषुस्तरुगणे मिथः ।
उच्छिष्टं भक्षयन्तस्ते शृण्वन्तश्च कथामृतम् ॥४७॥
मासं मिथोऽवसन् तावन्मृत्युस्तेषामुपाययौ ।
सर्वे क्षपितकर्माणो निष्पापाश्चटकादयः ॥४८॥
वैशाखकृष्णद्वादश्यां मध्याह्नोत्तरमेव ह ।
प्रसादोच्छिष्टभक्षास्ते श्येनेन सहसा सह ॥४९॥
त्यक्तदेहा अमर्वंश्च बभूवुर्देवजातयः ।
सहस्रशः सुरा देव्यः सर्वाभरणभूषिताः ॥५०॥
तन्नेता भरवाटोऽपि देवेश्वरो व्यजायत ।
गृहीतकरमालास्ते गृहीतकुसुमास्तथा ॥५१॥
संहितां ते प्रपूज्यापि व्यासं प्रपूज्य वै द्रुतम् ।
धृत्वा धूलिं कथाभूमेर्जनित्वाऽऽश्चर्यमुत्तमम् ॥५२॥
जयशब्दानुचरन्तो ययुः स्वर्गं सहस्रशः ।
बद्रिके ते दिवोऽन्ते च वैकुण्ठं धाम शोभनम् ॥५३॥
प्रयास्यन्ति महाभागा मुक्ता मुक्तानिकास्तदा ।
तत्र नारायणं लक्ष्मीं प्रसेव्य कृपया हरेः ॥५४॥
गोलोकं संप्रयास्यन्ति राधाकृष्णकृपालयाः ।
तत्र प्रसाद्य राधां च कृष्णं प्रसाद्य वै ततः ॥५५॥
प्रयास्यन्त्यक्षरं धाम परमं शाश्वतं सुखम् ।
इत्येतत् कथितं तुभ्यं माहात्म्यं तु कथोद्भवम् ॥५६॥

प्रसादस्यापि माहात्म्यं यस्य पाठाच्छ्रुतेरपि ।
भुक्तिर्मुक्तिर्दिवं स्वेष्टं लभेत् कृष्णकृपालवात् ॥९७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने-ऽजापालभरवाटस्य श्येनजन्मनि, अजानां चटका-जन्मसु च, हरेः साधूनां च प्रसादोच्छिष्ट-भक्षणलाभेन कथालाभेन च मोक्षण-मित्यादिनिरूपणनामाऽष्टषष्टि-तमोऽध्यायः ॥ ६८ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि कथामन्यां सुपावनीम् ।
कपोताश्चाययुर्व्योम्ना दशोत्कराऽन्नवाञ्छया ॥ १ ॥
कथामण्डपमासाद्य क्षणं तस्थुर्घटध्वजे ।
निषेदुर्मण्डपे श्रान्ताः कथाश्रवणहेतवे ॥ २ ॥
जातिस्मराश्च ते सर्वे कथान्ते द्वादशीदिने ।
वैशाखकृष्णे पक्षे वै मध्यान्होत्तरमेव ह ॥ ३ ॥
पाकशालाऽभ्याशभूमौ भोजनालयभूतले ।
वीक्ष्य लोकाँस्तु भुञ्जानान् साधून् साध्वीश्च वैष्णवान् ॥ ४ ॥
आशयोच्छिष्टलब्धेस्ते समुड्डीय पुनः पुनः ।
मण्डपोपरि तिष्ठन्ति निषीदन्ति समीहया ॥ ५ ॥
तावन्मिष्टौदनाद्यं च भक्ष्यं पक्वान्नमुत्तमम् ।
उच्छिष्टं साधुसाध्व्यश्च चिक्षिपुश्चोत्करे ततः ॥ ६ ॥
कपोता दश शीघ्रं निर्भीका भक्ष्यार्थमाययुः ।
प्रसादं सहसा भुक्त्वा पीत्वा सूपं जलं तथा ॥ ७ ॥
तृप्तास्तुष्टाः प्रसन्नाश्च बभूवुर्गतकल्मषाः ।
पावना धन्यभाग्याढ्या मेनिरे पुण्यमुत्तमम् ॥ ८ ॥
उड्डीय ते वृक्षषण्डे निषण्णा जगदुर्मिथः ।
अहो भाग्यं तु नः श्रेष्ठं प्रसादोऽद्य हरेः सताम् ॥ ९ ॥
उच्छिष्टो लब्ध उत्कृष्टो भक्षितः पापनाशकृत् ।
पूता अद्य तु जाताः स्म पक्षिणो भाग्यशालिनः ॥१०॥
श्रुताऽस्माभिः कथा दिव्या मोक्षदा संहितात्मिका ।
अहो भाग्यं मानवानां ये शृण्वन्ति सदा कथाम् ॥११॥
अहो भाग्यमतिथीनां प्रसादं भुंजते तु ये ।
अहो भाग्यं तु कीटानामदन्त्युच्छिष्टमत्र ये ॥१२॥
अहो भाग्यं पशूनां च येऽदन्त्युच्छिष्टमत्र वै ।
धन्येयं भूमिका मोक्षकरी जाता तु पावनी ॥१३॥
धन्या सिन्धुः सुधासिन्धुसमाऽद्य वर्तते भुवि ।
वदन्त्येवं कपोतास्ते तच्छ्रुतं त्वेकसाधुना ॥१४॥

नाम्ना कृष्णविरामेण भूतरुताभिवेदिना ।
तेन पृष्टाः कपोतास्ते प्रेम्णा जिज्ञासया द्रुतम् ॥१५॥
के भवन्तः कपोता यत् प्रसादोत्कर्षवेदिनः ।
हरेः सतां च माहात्म्यविदो दिव्या इवोत्तमाः ॥१६॥
जातिस्मराः कपोतास्ते प्राहुर्वयं पुरा क्षितौ ।
एकग्रामनिवासा वै सार्थवाटेतिजातिजाः ॥१७॥
आस्म वै मृत्तिकापुर्यां दारिद्र्यदोषपीडिताः ।
दशैव नवकुट्टाख्ये नगरे जीविकेच्छया ॥१८॥
अगच्छाम च तत्रापि भृत्यतायां धनिगृहे ।
धनिना निजकार्यार्थे योजिता वेतनेन वै ॥१९॥
सर्वे वयं तु कार्पासव्यापारे तेन योजिताः ।
कार्पासानामानयने ग्रामान्तरेभ्य इत्यपि ॥२०॥
कार्पासानां विक्रये च क्रयेऽपि योजिता वयम् ।
एकदा कृतं त्राश्च वयं तु धनलालसाः ॥२१॥
जानन्तो भूमिगं द्रव्यं श्रेष्ठिनो रामवर्चसः ।
रात्रौ विश्वासमापन्नं समस्ता रामवर्चसम् ॥२२॥
एकलं गलपाशेन रुरुधिमाऽतिनिर्दयाः ।
रामवर्चा मृतिं प्राप्तो वयमादाय नाणकम् ॥२३॥
निर्ययिम नगराद्वै तेन पापेन वै पथि ।
चौरैर्मिलितैर्बहुभिर्लुण्टिता मारितास्तथा ॥२४॥
शवाः क्षिप्ताश्च गर्तेषु फलं प्राप्ता द्रुतं तदा ।
यमदूतैर्धृताः पाशैर्नीता याम्यपुरं दश ॥२५॥
मुक्तवन्तो यातनानि कुण्डेषु पातिता यमैः ।
निर्गत्य च ततो जाता वने वयं तु भल्लुकाः ॥२६॥
मृतास्ततो वानराश्च जाता सह दशैव तु ।
पुनर्मृताश्च काका वै जातास्ततः सहैव च ॥२७॥
मृताः कपोतका जाता वर्तामश्चात्र भक्षकाः ।
उच्छिष्टभोजिनो जाता जातिस्मरास्तु पावनाः ॥२८॥
भवत्प्रसादोच्छिष्टस्याऽदनादद्याऽघनाशनम् ।
जातं सर्वविधानां वै पापानां विनिवर्तनम् ॥२९॥
उक्तं सर्वं स्मरामोऽद्य कृतपापफलादिकम् ।
भाति नोऽद्य परं श्रेयो भवनाशो भविष्यति ॥३०॥
कथायाः श्रवणं पुण्यं पुण्यं प्रसादभोजनम् ।
पुण्यं सतां दर्शनं च सत्संगो मोक्षदः सदा ॥३१॥
साधो भवत्प्रसंगेन निर्भीकाः स्मो वयं त्विह ।
मोक्षार्थं साधनं यत्तद् देहि नः शीघ्रमेव ह ॥३२॥
प्राप्तलाभः पुनर्नैव मिलिष्यतीति मा चिरम् ।
इत्येवं बद्रिके तैस्तु कपोतैः परिभाषितः ॥३३॥

कृष्णविरामः सलिलं करे धृत्वा स्थितोऽभवत् ।
आह्वयामास तान्सर्वान् कपोतान् शरणं प्रति ॥३४॥
आययुस्ते द्रुतं मत्वा कल्याणं समुपस्थितम् ।
निपेतुः पादयोस्तस्य सोऽपि वाराऽभ्यषेचयत् ॥३५॥
श्रावयामास नामाऽपि कृष्णनारायणेति च ।
तावत्ते पक्षिवर्ष्माणि समुत्सृज्य सुराः शुभाः ॥३६॥
दिव्या देवाः सुरूपाश्चाऽभवन् साधोः प्रपश्यतः ।
अथोचुस्ते सन्तमेनं देहि मन्त्रं तु मोक्षदम् ॥३७॥
देवलोकं न चेच्छामो यतः प्रपतनं पुनः ।
श्रुत्वा साधुर्ददौ मन्त्रं कृष्णनारायणस्य वै ॥३८॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
मन्त्रं प्राप्य कपोतास्ते देवास्तिरोऽभवन् द्रुतम् ॥३९॥
चतुर्भुजास्तु मुक्तास्तेऽभवन् साधोः प्रपश्यतः ।
'प्रभोनारायण पद्मावतीनारायण प्रभो ॥४०॥
जयाकृष्ण ललितानारायणाय राधापते विभो' ।
एवं ते भजनं चक्रुस्तावत्तत्र विमानकम् ॥४१॥
कृष्णनारायणस्वामियुक्तं चावाऽतरत्तु खात् ।
तानाह भगवान् कृष्णोवल्लाभार्यः कृपावशः ॥४२॥
आयान्तु मे विमानं वै मुक्ता भक्ता ममाऽऽश्रिताः ।
कपोतका भवन्तोऽद्य सुपोतकाः सुमुक्तिगाः ॥४३॥
इत्युक्त्वा तान् करे धृत्वा भगवान् कृष्णमाधवः ।
निनाय शाश्वतं धामाऽक्षरं साधोः प्रपश्यतः ॥४४॥
बद्रिके ते सदा मायाबन्धाद् विनिर्ययुः सुखम् ।
अथाऽन्यं ते चमत्कारं कथयामि निबोध मे ॥४५॥
काकानां शतसंख्यानां मण्डलं व्योमवर्त्मना ।
यदृच्छयाऽऽययौ तत्र महानससमीपतः ॥४६॥
गन्धं प्राप्य च मिष्टान्नं वीक्ष्य घ्रात्वाऽऽज्यधूम्रकम् ।
अवातरत् तरुषण्डे भोजनोच्छिष्टवाञ्छया ॥४७॥
वैशाखस्याऽसिते पक्षे त्रयोदश्यां दिनार्धके ।
भागे तेषां वैष्णवानां सतां वै भोजनोत्तरम् ॥४८॥
उच्छिष्टमुत्करस्थं तु भक्षयितुं प्रसादकम् ।
उपर्युपरि चोत्पेतुः काकास्ते हृष्टमानसाः ॥४९॥
निपेतुर्हृष्टशब्दास्ते बुभुजुर्मिष्टमुत्तमम् ।
क्षीरं च दुग्धसारादि पोलिकाः पूरिकादिकम् ॥५०॥
ओदनं च तथा सूपं चणकान् ग्रन्थकाँस्तथा ।
पूपानपूपान् कलिका बुभुजुश्चोत्करोज्झितान् ॥५१॥
साधुप्रसादरूपाँश्च सर्वे काका मुदान्विताः ।
बद्रिके महदाश्चर्यमभूत्तत्राऽप्यतर्कितम् ॥५२॥
कृष्णपक्षास्तु ते काका बभूवुस्तत्र सर्वथा ।
कर्बुरपक्षिणो रम्या नानारंगाढ्यपक्षिणः ॥५३॥
कृष्णं रूपं हि पापात्म लीनं पक्षेषु भागतः ।
अथाऽन्यस्मिद् दिने चापि बुभुजुस्ते तथाविधम् ॥५४॥
तेन श्वेतबहुला वै पक्षास्तेषां तदाऽभवन् ।
अथाऽपरस्मिन् दिवसे बुभुजुस्ते तथोज्झितम् ॥५५॥
सम्पूर्णश्वेतपक्षास्तेऽभवन् दुग्धस्वरूपिणः ।
अथेतरस्मिन् दिवसे बुभुजुस्ते तथोज्झितम् ॥५६॥
सर्वथा काकदेहास्ते श्वेतरूपा बभूविरे ।
अहो प्रसादमाहात्म्यं पापानां नाशकं परम् ॥५७॥
सतामुच्छिष्टमाहात्म्यं सर्वपातकनाशनम् ।
पातकं कृष्णवर्णं वै श्वेतं पुण्यं सदा मतम् ॥५८॥
पुण्यवन्तः प्रजातास्ते काका हंससमास्तदा ।
एवं ते बुभुजुर्नित्यं शुद्धात्मानोऽभवँस्ततः ॥५९॥
काकजातीयदोषाश्च नष्टास्तेषां तदात्मनाम् ।
जातिस्मराश्च ते जाता ज्ञानिनो हंसवत्तदा ॥६०॥
तान् द्रष्टुं मानवास्तत्राऽऽयान्ति कुतूहलान्विताः ।
काकास्ते निर्भयास्तत्र विचरन्ति च भूतले ॥६१॥
प्रशंसन्ति प्रसादस्योच्छिष्टमाहात्म्यमद्भुतम् ।
अहो प्राप्ता हरेश्चापि सतामुच्छिष्टभोजनम् ॥६२॥
तेन पुण्येन पापानि नष्टानि तामसानि नः ।
राजसानि समस्तानि नष्टान्यघानि सर्वथा ॥६३॥
सात्त्विकानि तु पुण्यानि स्वर्गप्रदानि यानि वै ।
तानि जातानि चास्माकं सतां प्रसादसेवया ॥६४॥
काका वयं हि पापिष्ठा विड्भुजः पूर्वकर्मतः ।
तेषां कल्याणकर्तारः सन्तः सतां प्रसादकाः ॥६५॥
ये न भुंजते कृष्णस्य प्रसादं च सतां तथा ।
ते लोके श्वेतवर्णाश्चेत् तथापि काककोटिकाः ॥६६॥
ये तु भुंजते कृष्णस्य सतां प्रसादमुत्तमम् ।
ते कृष्णा अपि नित्यं वै देवास्ते हंसकोटिकाः ॥६७॥
श्वेतत्वं निष्फलं तेषां येषां पापात्मभोजनम् ।
कृष्णत्वं सफलं तेषां येषां वै विघसाशिता ॥६८॥
तद्गृहं मलवत् प्रोक्तं यत्र देवा न भुंजते ।
सा भाषा काकभाषा वै न यत्र कृष्णकीर्तनम् ॥६९॥
तद्रूपं कुष्ठरूपं वै यन्न कृष्णार्थमर्पितम् ।
तद्भोज्यं तज्जलं मिष्टं शाकं पत्रं फलं दलम् ॥७०॥
वस्त्रं चोपकरणादि कृष्णार्थं न कृतं तु यत् ।
सर्वं तत् काकमलवत् पापभूतं मतं त्विह ॥७१॥

तिरश्चां नैव दोषोऽस्ति पशूनां नापि दूषणम् ।
दोषस्तु मानवानां यत्रानन्तोऽप्यपर्यन्ति न ॥७२॥
न भजन्ते न सेवन्ते नाऽऽश्रयन्ति हरिं सतः ।
यतन्ते नापि चात्मार्थे ते हरेरपराधिनः ॥७३॥
आगस्कृतस्त एवाऽत्र कर्तव्यं नाऽऽचरन्ति ये ।
मानवत्वं व्यर्थयन्ति न स्मरन्ति हरिं प्रभुम् ॥७४॥
वैष्णवानां सेवनं न गुरोः प्रसन्नतां न च ।
पित्रोराशीर्वचनं न प्राप्तास्ते नारका ध्रुवाः ॥७५॥
अपि चन्द्रसमं त्वास्यं वाणी मिष्टा सुधासमा ।
देहः स्वर्णसमश्चापि कृष्णशून्यास्तु ते यदि ॥७६॥
तदा ते निरया बोध्या दोषाऽऽकराऽघकोशकाः ।
सर्वे काकांगरूपास्ते निकृष्टा नरकप्रदाः ॥७७॥
काकशब्दः सार्थको नश्चाद्य सम्यग् व्यजायत ।
कं सुखं तद्भिन्नमेव दुःखमकं समुच्यते ॥७८॥
कुत्सितं तु कृतं दुःखमद्य प्रसादसेवनात् ।
काकास्तेन वयं त्वद्य सुखाऽर्थिनोऽघवर्जिताः ॥७९॥
का शक्तिर्ब्रह्मणः प्रोक्ता राधा लक्ष्मीः सती प्रभा ।
तया कं सुखमस्त्येषां काका वयं सुखाश्रयाः ॥८०॥
का काया पृथिवी तत्र कं सुखं चाऽत्र वर्तते ।
अस्माकं काकवाच्यत्वं सुखित्वं घटतेऽद्य वै ॥८१॥
इत्येवं बद्रिके काका वार्तां कुर्वन्ति वै मिथः ।
तां शृण्वन्ति जनास्तेषां दर्शकाः स्मयसंभृताः ॥८२॥
जनास्तान् श्वेतवर्णांस्तु पप्रच्छुः पक्षिणः शुभान् ।
कथं काका भवन्तोऽत्र पूर्वे के के ततः परम् ॥८३॥
काकस्त्वेकश्चाग्रगण्य उवाच मानवान् प्रति ।
वयमास्व कंकवर्णाः कंकाः पूर्वं हि मानवाः ॥८४॥
लुण्टका मलिनाहाराः परदारप्रधर्षकाः ।
परद्रव्यहराश्चापि परान्नभोजकास्तथा ॥८५॥
खदिरग्रामवासाश्च मद्यमांसपरायणाः ।
एकदा पूर्वनारायाः सरितः सन्निधौ वने ॥८६॥
प्रयान्तं श्रेष्ठिनं प्राप्य समाचराम लुण्टनम् ।
श्रेष्ठी लक्षेण सहितो नाणकेन प्रलुण्टितः ॥८७॥
तावद् यदृच्छया तत्राऽऽययुश्चान्ये प्रलुण्टकाः ।
पश्चाद्यत् ते परिज्ञाय वृत्तान्तं वणिजो द्रुतम् ॥८८॥
लुण्टितुं नः समायाता युद्धं मिथोऽभवत् तदा ।
मृताः परस्परं सर्वे शस्त्रैर्याम्यपुरं गताः ॥८९॥
कृतानां कर्मणां सर्वैः फलं भुक्तं तु कुण्डजम् ।
याम्यपाशान्निर्गताश्च द्विपिनोऽरण्यवासिनः ॥९०॥
हिंसकाः स्मो वयं जाता वृका जातास्ततः परम् ।
मार्जाराश्च ततोजातास्ततः काकास्तु साम्प्रतम् ॥९१॥
अत्र प्राप्तं प्रसादस्योच्छिष्टं हरेः सतां तथा ।
वैष्णवानां शुभं सर्वं सर्वपातकनाशकम् ॥९२॥
पातकानि समस्तानि नष्टान्युच्छिष्टभोजनात् ।
श्वेता इदानीं जाताः स्मः पुण्यवन्तः सुरा यथा ॥९३॥
यदि लभेम साक्षाच्छ्रीव्यासहस्तजलं त्विह ।
देवा भूत्वा प्रयास्यामो दिवं तूर्णं सुखाश्रयम् ॥९४॥
प्रतीक्षामो जलं तस्याऽमृतं तं सूचयन्तु वै ।
श्रुत्वा लोका व्याससौधमागत्य तमुदन्तकम् ॥९५॥
कथयामासुरीशं तं स्वतःप्रकाशकायनम् ।
व्यासस्तूर्णं कृष्णनारायणप्रसादवारि च ॥९६॥
नीत्वा ययौ तु तान् सर्वान् वारिणा सोऽभ्यषेचयत् ।
प्रभोनारायणकृष्णनारायणेति कीर्तयन् ॥९७॥
तावत्ते बद्रिके सर्वे त्यक्तदेहास्तदाऽभवन् ।
पीत्वा जलकणान् स्पृष्ट्वा जलबिन्दून् द्रुतं सुराः ॥९८॥
सुरतुल्या दिव्यरूपाः सञ्जाता दिव्यमूर्तयः ।
मन्त्रमयाचन् व्यासात्ते प्रपूज्य चरणौ ततः ॥९९॥
व्यासदेवो ददौ मन्त्रं नामधुन्यं ददौ तदा ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥१००॥
प्रभोनारायण पद्मावतीनारायण प्रभो ।
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो ॥१०१॥
प्राप्य मन्त्रं प्राप्य धुन्यं लब्ध्वा पादामृतं तथा ।
लब्ध्वा कृपां प्राप्य चाशीर्वादान् व्यासस्य ते सुराः ॥१०२॥
चतुर्भुजाः स्म सञ्जाता मुक्ता वैकुण्ठयोगिनः ।
नत्वा ययुस्ते सहसा दिव्या अम्बरवर्त्मना ॥१०३॥
वैकुण्ठं भगवद्धाम नारायणविमानगाः ।
वैशाखशुक्लतृतीयातिथौ मध्यान्हकोत्तरम् ॥१०४॥
प्राप्ता वैकुण्ठलोकं ते साधुप्रसादभोजिनः ।
एवं श्रीबद्रिके तेषां मुक्तिस्तत्राऽभवत्तदा ॥१०५॥
पठनाच्छ्रवणादस्य स्मरणात् पापनाशनम् ।
भुक्तिर्मुक्तिर्भवेच्चापि कृष्णप्राप्तिः शुभा भवेत् ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणादिना पुरा सार्थवाटजातीनां दशकपोतानां, तथा पुरा कंकजातीनां शतकाकपक्षिणां, साधोः कृपादिभिश्चोच्छिष्टभोजनेन च, मोक्षणमित्यादि-निरूपणनामा नवषष्टि-तमोऽध्यायः ॥ ६९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां मोक्षकरीं तथा।
गृहगोधाऽभवत् तत्र कथामण्डपभित्तिगा ॥ १ ॥
दूती सा त्वभवत् पूर्वे भाणवाणीसहायिनी।
दिनेश्वर्या महाराज्ञ्याः कृपापात्रं क्रियाकरी ॥ २ ॥
बाल्या खवासिनी नारी कुशला स्वार्थसाधने।
परार्थचिन्ताशून्या च धूर्तेव शाठ्यशालिनी ॥ ३ ॥
राज्ञ्या आदेशकर्त्र्येव तदन्याज्ञाऽवमानिनी।
राज्ञ्याः सहचरी नित्यं राज्ञ्यग्रे दीनकिंकरी ॥ ४ ॥
तदान्याऽग्रे सिंहिकेव वर्तमाना बलाधिका।
अधृष्या भृत्यवर्गस्य वर्चस्विनी तु सर्वथा ॥ ५ ॥
प्रच्छन्नस्वार्थकुशला प्रच्छन्नद्रव्यसंग्रहा।
क्रयविक्रयवार्तायां दानादौ धर्मकर्मसु ॥ ६ ॥
राज्ञ्या प्रदत्तधनतश्चौर्यवृत्त्या प्रतारिणी।
धननिष्कासने नित्यं कुशला शाठ्यधर्मिणी ॥ ७ ॥
नित्यमेवं दत्तधनान्निष्कास्य स्वं करोति सा।
तेन पापेन सा दूती नाम्ना नाणकिनी मृता ॥ ८ ॥
ययौ याम्यपुरं तत्र कुंभीपाके गता ततः।
निष्कासिता तु जन्मार्थं गृहगोधाऽभवद्धि सा ॥ ९ ॥
कथाया मण्डपे दीपसन्निधौ जन्तुभक्षिणी।
भित्तिभागे तोरणस्थाऽवसद् भीतिविवर्जिता ॥१०॥
नित्यं खादति कीटांश्च मक्षिका भित्तिसंगताः।
दिवाऽनिशं तोरणेऽपि विश्रान्तिं लभते मुदा ॥११॥
अथैकदा सा त्वरिता कथामण्डपिकोपरि।
आगत्य संस्थिता श्रीमत्संहिताया वितानके ॥१२॥
गृहात्याज्यदीपधूमं सुगन्धि धूपमुत्तमम्।
पुष्पपल्लवपत्राणां शैत्यं शीतजलोद्भवम् ॥१३॥
पूजावशिष्टसलिलं पत्रपुष्पादिषु स्थितम्।
बिन्द्वात्मकं स्वेदरूपं पिबत्यपि सुतृप्तिदम् ॥१४॥
गुडं च शर्करां मिष्टमन्नं पूजार्थमर्पितम्।
जिह्वया रसलुब्धा सा लिहत्यातृप्तिदं सुखम् ॥१५॥
एवं प्रसादमासाद्य जाता पापविवर्जिता।
जातिस्मरा च सा जाता स्मृत्वा स्मृत्वा च दुःखिता ॥१६॥
गृहगोधावपुस्त्यक्तुमीहमाना विरागिणी।
अभवत् त्वरिता बद्रि निमित्तस्याऽभिकांक्षिणी ॥१७॥
वैशाखशुक्लतृतीयादिने प्रातः कथासने।
पूजनार्थं संहिताया लोमशः समुपाययौ ॥१८॥
दिनेश्वरी रायहरिस्तथाऽन्येऽपि समाययुः।
चन्द्रेश्वरी कोटिरायस्तथर्षिसाधवो द्विजाः ॥१९॥
सहस्रशो जनाश्चापि दर्शनश्रवणार्थिनः।
सभामण्डपमासाद्य तस्थुर्यथोचितं तदा ॥२०॥
पूजामारार्त्रिकं चक्रे लोमशः पुस्तकस्य ह।
व्यासपूजां प्रचक्रेऽपि पत्रपुष्पाऽक्षतादिभिः ॥२१॥
शंखजलेन च नीराजनं व्यावर्तयत् त्रिधा।
शंखजलं तु चिक्षेप लोमशः परितोऽपि च ॥२२॥
प्रसादबिन्दुलाभार्थं सर्वेषामाक्षिपन्मुनिः।
दक्षकराञ्जलौ वारि धृत्वा धृत्वोर्ध्ववर्तिना ॥२३॥
भ्रमता स्वकरेणैव वारि चिक्षेप चाभितः।
गृहगोधाऽपि सा वारिस्पृष्टाऽभवद् वितानके ॥२४॥
अपिबज्जलबिन्दुं सा लोमशस्य करोज्झितम्।
तूर्णं सा गतपापा च दग्धकल्मषवासना ॥२५॥
शुद्धात्मा साधुवृत्तिर्वै जाता प्रक्षीणजीवना।
मूर्छामासाद्य भूभागे संहिताऽग्रेऽपतद्धि सा ॥२६॥
गृहगोधाशरीरात्तु निर्गता दिव्यकन्यका।
पूर्वरूपाऽनुरूपा साऽभवद् यथा खवासिनी ॥२७॥
तत्स्वरूपाऽपि दिव्याभा दिव्यस्वर्णातिसुन्दरी।
षोडशवत्सरा बाला देवकन्येव चापरा ॥२८॥
सर्वशृंगारसंशोभद्विग्रहा सुविभूषिता।
तेजःपरिधियुक्ता सा व्यद्योतत सभान्तरे ॥२९॥
अहो कृष्णस्य माहात्म्यं बद्रिके च कृपालुता।
लोहात् स्वर्णं कंकराच्च हीरकं मौक्तिकं झषात् ॥३०॥
रत्नं क्षितेः सुतं वीर्यान्मोक्षमुच्छिष्टभक्षणात्।
जन्तोर्देवं पशोर्मुक्तं जीवाच्छिवं करोति सः ॥३१॥
बद्रिके गृहगोधां तां मृतां तु सुरकन्यकाम्।
चक्षुषां गोचरां सर्वतेजआकर्षिणीं शुभाम् ॥३२॥
वीक्ष्य नार्यो नरास्तत्र लक्षशो विस्मयं गताः।
स्वप्रकाशो हि भगवान् पुष्पहारं ददौ गले ॥३३॥
लोमशस्तिलकं तस्या भालमध्ये चकार ह।
चन्द्रकं कुंकुमेनापि प्रचकार स लोमशः ॥३४॥
पृष्टवाँस्तां लोमशो वै का त्वं पुराऽधुनाऽपि च।
कमला वा सती भक्तिः सावित्री काऽसि कन्यके ॥३५॥
देवता वा संहिता वा गृहगोधोत्थविग्रहा।
का त्वं कल्याणसंस्थाना वद सन्देहनाशिनि ॥३६॥
पृष्टैवं सा बद्रिके संजगाद शृण्वतां सताम्।
समाजनानां सर्वेषां मेघगंभीरया गिरा ॥३७॥

'नमो वोऽस्तु समस्तेभ्यो व्यासाय ते नमोऽस्तु च।
श्रीसंहितास्वरूपायै लक्ष्म्यै देव्यै नमो नमः ॥३८॥
लक्ष्मीनारायणायाऽत्र कृष्णकान्ताय वै नमः।
लोमशाय गुरवे च मोक्षदाय नमो नमः ॥३९॥
सर्वर्षिभ्यश्च साधुभ्यः साध्वीभ्यश्च नमो नमः।
नमो मात्रे महाराज्ञ्यै महाराजाय वै नमः ॥४०॥
वैष्णवेभ्यः समस्तेभ्यः कथाश्रोतृभ्य ओं नमः।
नमो मण्डपदेवेभ्यो देवीभ्यश्च नमो नमः ॥४१॥
मुक्तमुक्तानिकाभ्यश्च सर्वेभ्यश्च नमो नमः'।
क्षमध्वं चापराधान्मे दोषान् क्षमध्वमीश्वराः ॥४२॥
साधवः ऋषयः सर्वे राजा राज्ञी च वैष्णवाः।
सखीजनाः सखायश्च क्षमध्वं मेऽपराधकान् ॥४३॥
अहं नाणकिनीनाम्नी खवासिनी पुराऽभवम्।
भाणवाणीसखी राज्ञ्या दिनेश्वर्याश्च किंकरी ॥४४॥
स्वार्थपरा स्तैन्यपरा धर्मधनाऽपचोरिका।
साऽहं मृता याम्यदूतैर्नीता याम्यपुरं ततः ॥४५॥
भुक्त्वा पापफलं तस्माज्जन्मार्थे त्विह चाऽऽगता।
गृहगोधा कर्मवशाज्जाताऽवशेषभोगिनी ॥४६॥
पूजावारिस्पृष्टदेहा मृताऽत्र कृपया मुनेः।
प्रसादाशनतो नष्टा वासना मम सर्वथा ॥४७॥
बहुपुण्याऽस्मि सञ्जाता कथायाः श्रवणादिह।
दिव्या देव्यस्मि सञ्जाता कृपया लोमशस्य च ॥४८॥
मोक्षमिच्छामि गन्तुं वै नेच्छामि स्वर्गमित्यपि।
मह्यं मन्त्रं हरेश्चापि नामधुन्यं प्रपत्तिदम् ॥४९॥
लोमशोऽयं ददात्वत्र येन यामि पराऽक्षरम्।
नमामि पादयोर्वश्च किंकरी देविकाऽस्मि च ॥५०॥
उक्त्वैवं बद्रिके सा तु चकार दण्डवद् भुवि।
धूलिं घृष्ट्वा शरीरे स्वे चिक्षेप च प्रसादजाम् ॥५१॥
अलुठत् पञ्चवारं सा पृथ्व्यां लुण्ठच्छरीरिणी।
उत्थाय सहसा श्रीमल्लोमशान्मन्त्रमाददे ॥५२॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा'।
'प्रभोनारायण पद्मावतीकृष्ण हरे प्रभो ॥५३॥
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो'।
एवं धुन्यं ददौ तस्मै लोमशः सापि जगृहे ॥५४॥
प्रसन्नहृदया शान्ता जाता सा ब्रह्मरूपिणी।
ब्राह्मी शक्तिर्हरेः शक्तिर्मुक्तानिकाऽभवद्धि सा ॥५५॥
'ओं नमः कमलायै मे मात्रे लक्ष्म्यै नमो नमः'।
इत्येवं सा नामधुन्यं स्वयं चक्रे समुत्सुका ॥५६॥
तावद् व्योम्ना विमानं तु लक्ष्मीनारायणान्वितम्।
अवातरत्तु सहसा मण्डपस्य समीपतः ॥५७॥
जयनादा वैष्णवानां पूजायुक्तास्तदाऽभवन्।
नारायणेन कृष्णेन लक्ष्म्या कमलया तदा ॥५८॥
आहूता कन्यके नाणकिनीत्येवं पुनः पुनः।
सापि सर्वान्नमस्कृत्योड्डीय विमानमाययौ ॥५९॥
सर्वेषां पश्यतां तां तु नीत्वाऽक्षरं ययौ हरिः।
इत्येवं बद्रिके दूती गृहगोधाऽपि देवता ॥६०॥
मुक्तानिका कृपायोगाद् भूत्वाऽक्षरं ययौ तदा।
किं वच्म्यत्र चमत्कारान् कथाप्रसंगजान् बहून् ॥६१॥
मक्षिका मत्सराः कीटाः पतंगाश्च पिपीलिकाः।
जन्तवोऽप्यक्षरं यान्ति प्रसादोच्छिष्टभोजिनः ॥६२॥
अथाऽप्यन्यां कथां बद्रि चमत्कारान्वितां तव।
कथयामि मूषकाणां मोक्षदां पावनीं पराम् ॥६३॥
पूर्वनारानदीतीरे ग्रामे भागलकेऽवसत्।
संघवाटाभिधः शूद्रः शस्त्रधारी बली तथा ॥६४॥
धनुर्धारी गदाधारी संगरज्ञः कलालयः।
प्रसिद्धः संगरे युद्धे विजये परभीप्रदः ॥६५॥
तथापि तु स्वभावेन चौर्यं रात्रौ करोत्यपि।
अन्नानां क्षेत्रसस्यानां क्वचित्तु पशुदेहिनाम् ॥६६॥
एकदा संघशो भूत्वा व्रीहीणां दीर्घभूमिषु।
चौर्यार्थे पाकयुक्तानां रात्रौ क्षेत्रेषु सोऽगमत् ॥६७॥
व्रीहीणां सञ्चयान् भृत्वाऽनस्सु यावत् प्रगच्छति।
तावत् क्षेत्रपतिः शस्त्रसम्पन्नः संघशोऽपि सः ॥६८॥
समाययौ रक्षणार्थं तयोर्युद्धमभूत्तदा।
संघवाटो हतस्तत्र खड्गस्य तीक्ष्णधारया ॥६९॥
परस्परं हताश्चान्ये चौराश्च स्वामिनोऽपि च।
मृतास्ते कर्मभोगार्थं याम्यं पुरं ययुस्ततः ॥७०॥
अनुभूय कृतानां तु भोगान् दुःखानि सर्वथा।
जन्म प्राप्ता मयूराणां कुक्कुटानां ततः परम् ॥७१॥
तित्तिराणां ततश्चापि घूकानां च ततः परम्।
मूषकाणां ततो जन्म लब्धवन्तोऽतिदुःखदम् ॥७२॥
कथामण्डपसान्निध्ये उत्कराभिक्षितौ च ते।
स्तबकानां समूहेषु तृणघासादिषु स्थिताः ॥७३॥
बिलवासास्तृणघाससस्यकणादिनोऽभवन्।
ते वैशाखाऽसितपक्षे तृतीयायां कथोत्तरम् ॥७४॥
मूषका द्वात्रिंशदेव प्रसादोच्छिष्टभोजिनः।
नित्यभोजनपूताश्च कथास्थलं निशामुखे ॥७५॥

आरार्त्रिकोत्तरं यदृच्छयाऽऽययुर्हि मण्डपे ।
संहितापट्टिकामूले चाययुः प्रसमुत्सुकाः ॥७६॥
प्रसादस्य कणाँस्तत्र यवसस्यानि यानि च ।
गोधूमस्यापि सस्यानि कोमलानि नवान्यपि ॥७७॥
प्राचीनानि कणिशानि लब्धवन्तो हि सद्रसान् ।
मिष्टान्नखण्डकाँश्चापि प्रसादरूपिणस्तदा ॥७८॥
भुक्तवन्तश्च ते तत्र रममाणा इतस्ततः ।
सर्वथा पावना जाताः सर्वक्षपितवासनाः ॥७९॥
निष्कल्मषाः शुद्धभावाः शुद्धात्मानः सुरा यथा ।
द्रुतं ते मूषकदेहाँस्त्यक्त्वा वै मण्डपान्तरे ॥८०॥
सुदिव्या देववज्जाता देवा देव्यश्च शोभनाः ।
सर्वे षोडशवर्षाश्च भासमानाः प्रभाविणः ॥८१॥
तुष्टुवुः परमात्मानं संहितारथं हरिं प्रभुम् ।
'नमो मोक्षप्रदानां तु सतां लक्ष्यैकबिन्दवे ॥८२॥
मुक्तानां ध्यानलक्ष्याय सर्वावतारिणे नमः ।
नमः कृष्णाय कृष्णादिस्वामिने परमात्मने ॥८३॥
बालकृष्णाय कान्ताय सर्वकान्ताय रक्षिणे ।
श्रीशाय कमलेशाय राधेशाय विहारिणे ॥८४॥
नमो देवाधिवासाय सर्वान्तर्यामिणे नमः ।
नमोऽनादिनिधनाय मोक्षदात्रे कृपालवे ॥८५॥
नमः श्रीलोमशायाऽपि सद्भ्यश्चापि नमो नमः ।
नमो व्यासाय दिव्याय स्वयम्प्रकाशिने नमः ॥८६॥
नमः पद्मावतीलक्ष्मीप्रशाभूपतये नमः ।
नमस्तस्मै हृदिस्थाय धामस्थाय च ते नमः ॥८७॥
प्रसादाय नमश्चापि मण्डपाय च वै नमः ।
नमो मण्डपदेवेभ्यो नमः श्रवणिभ्यस्तथा ॥८८॥
तारकेभ्यः पावकेभ्यः सद्भ्यः सदा नमो नमः ।
साध्वीभ्यश्च सतीभ्यश्च वैष्णवेभ्यो नमो नमः' ॥८९॥
वयं पापाः प्रसादेनोद्धृता यदृच्छया त्विह ।
कृपया दिव्यतां प्राप्ताः सतां दर्शनतस्तथा ॥९०॥
जातिस्मराः स्म सञ्जाताः कथास्थानप्रभावतः ।
पुनर्जन्म न चेच्छामश्चेच्छामः शाश्वताऽक्षरम् ॥९१॥
स्वप्रकाशो हि भगवान् ददातु मन्त्रमुत्तमम् ।
नामधुन्यं प्रददातु येन यास्याम उत्तमम् ॥९२॥
अक्षरं परमं धाम परमेश्वरराजितम् ।
इत्येवं बद्रिके ते सम्प्रार्थयामासुरुत्सुकाः ॥९३॥
स्वप्रकाशो हि भगवान् ददौ तेभ्यो मनुं तदा ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥९४॥
'प्रभोनारायण पद्मावतीनारायण प्रभो ।
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो' ॥९५॥
धुन्यं ददौ तदा तेभ्यस्तेऽपि चक्रुः प्रकीर्तनम् ।
एकताना अभवँश्च श्रीकृष्णेवल्लभे प्रभौ ॥९६॥
तावच्छ्रीललितास्वामी बद्रीनाथः समाययौ ।
माणिक्यापद्मजाप्रशोपेतः कृष्णोऽतिवल्लभः ॥९७॥
राधालक्ष्मीयुतश्चापि विमानवरसंस्थितः ।
तान्सर्वान्पार्षदान् मुक्तान् कृत्वा मुक्तानिकास्तथा ॥९८॥
विमाने तानुपाग्रह्य पश्यतां सर्वदेहिनाम् ।
जयनादैः सहितः श्रीहरिर्निनाय चाऽक्षरम् ॥९९॥
महाश्चर्यं गताः सर्वे प्रशशंसुः प्रसादनम् ।
कृपां हरेः प्रशशंसुर्मन्त्रबलं च कीर्तनम् ॥१००॥
भक्तिं सेवां कथां चापि प्रशशंसुर्हि मोक्षणम् ।
धन्यवादान्ददुश्चापि भूमये मण्डपाय च ॥१०१॥
मुक्तिं गतेभ्यः सर्वेभ्यो धन्यवादान्ददुर्जनाः ।
एवं बद्रीप्रिये मुक्तिं गतास्ते मूषकास्तदा ॥१०२॥
वैशाखशुक्लतृतीयादिने विमानसंस्थिताः ।
न स्वर्गं सम्पदस्तेषां बन्धनाय तदाऽभवत् ॥१०३॥
कृपैका परमो हेतुर्गमने चाक्षरं प्रति ।
ययाऽऽगत्य स्वयं कृष्णो नयत्येवाऽक्षरं निजान् ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणप्रसादभोजनजलप्रोक्षणादिभिः पूर्वजन्मनि नाणकिनीखवासिन्याः पश्चाद् गृहगोधायाः तथा पूर्वजन्मनि संघवाटादिद्वात्रिंशच्छूद्राणां पश्चान्मूषकाणां च, मोक्षणमित्यादिनिरूपणनामा सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां नकुलमोक्षदाम् ।
प्रसादोच्छिष्टसम्पन्ने चोत्करे तु बुभुक्षितः ॥ १ ॥
नकुलः कश्चिदायातः कथामण्डपसन्निधौ ।
भुक्तवान् स तदोच्छिष्टं सतां प्रसादमिश्रितम् ॥ २ ॥
तावत् स मूर्छितस्तत्र तत्याज निजविग्रहम् ।
देवस्वरूपः सञ्जातो वैशाखपञ्चमीदिने ॥ ३ ॥
शुक्लपक्षे तदा सर्वैर्दृष्टः सुरोत्तमः स तु ।
पृष्टश्चोवाच वृत्तान्तं नैजं पूर्वभवस्य तु ॥ ४ ॥
शृण्वन्तु वैष्णवा लोका अच्छोदरपुरे पुरा ।
अहमासं ज्ञानिवर्यो वाडवः सागराभिधः ॥ ५ ॥

लोकाः सागरदानेति विदुर्मां ज्ञानिनाम्वरम् ।
इतिहासकथाभिज्ञं समाहूय निजालयान् ॥ ६ ॥
कारयन्ति कथाख्यानं शृण्वन्ति मानवास्तदा ।
पूजयन्ति प्रसन्नास्तेऽर्पयन्ति मे धनादिकम् ॥ ७ ॥
अहं तृप्तो धनं लब्ध्वा प्रयामि स्म स्वमन्दिरम् ।
कथासु दानवार्तां वै करोमि पूर्वभूभृताम् ॥ ८ ॥
धर्मवार्तां गवां सेवां पितृसेवां वदामि च ।
तीर्थसेवां व्रतरक्षां देवपूजां समुत्सवान् ॥ ९ ॥
नियमांश्च यमांश्चापि जनानुपदिशामि च ।
स्नानधर्मादिकं सर्वं चोपदिशामि सर्वथा ॥१०॥
नाहं किंचिन्मनाग् वापि पालयामि तु तत्तथा ।
मृषावादी मिष्टवादी स्वार्थसिद्धिपरायणः ॥११॥
दुष्टात्माऽहं धनधूर्तो धनं हरामि वार्तया ।
न धर्मं न नियमं यमं व्रतं करोम्यपि ॥१२॥
आसीत् सर्वं वचने मे न क्रियायां तु किञ्चन ।
आचारहीनः सततं तदाऽभवं प्रतारकः ॥१३॥
गवां पित्रोः सुराणां च सेवया हीन इत्यपि ।
अभवं सर्वथा आर्या असत्प्रलापगर्जनः ॥१४॥
तेन पापेन मे विद्या कुविद्या समजायत ।
व्याख्यानानि समस्तानि शाठ्यपापफलानि च ॥१५॥
वाक्छलैर्ग्रथितान्येव पापदानि ममाऽभवन् ।
एवं पापातिभारेण नष्टायुष्यो मृतोऽभवम् ॥१६॥
याम्यपुरं गतस्तत्र याम्यैः संदंशकुण्डके ।
क्षितो जिह्वा कर्तिता मे बहिः कृष्टा चिपीटकैः ॥१७॥
संदंशैस्तीक्ष्णधारैश्च निष्कासिता मुहुर्मुहुः ।
भेदिता छेदिता चापि प्रज्वालिता च कूर्चिता ॥१८॥
विदारिता कर्बरिता तनुर्मे कर्दमीकृता ।
बहूनि तत्र कष्टानि भुक्त्वा नकुलतामिह ॥१९॥
गतोऽस्मि क्षुधया त्वत्रोत्करोच्छिष्टं प्रजग्धिवान् ।
तेन नष्टानि पापानि ममाऽवशेषकाण्यपि ॥२०॥
पूतात्मा पुण्यवानस्मि सञ्जातोऽद्य दिवंगमः ।
सुरोऽस्मि चाऽद्य सम्पन्नः प्रयामि स्वर्गमुत्तमम् ॥२१॥
इत्युक्तवान् बद्रिके स नेमे सर्वान् सुवैष्णवान् ।
अथ तत्र सुरं तं तु जगाद लोमशो मुनिः ॥२२॥
शृणु त्वं सुरवर्याऽद्य देवत्वं गतवानपि ।
मरणं ते पुनश्चाऽस्ति देवेऽमृतत्वमस्ति न ॥२३॥
तस्मात् साधय पुण्यात्मन्नमृतत्वं तु शाश्वतम् ।
अपुनर्भवसंज्ञं च ब्रह्मलोकमनामयम् ॥२४॥

श्रुत्वेत्थं लोमशं सोऽपि पप्रच्छ कुशलं ध्रुवम् ।
कथं मुनेऽमृतधामप्राप्तिः स्याद् वद मे द्रुतम् ॥२५॥
लोमशः प्रत्युवाचैनं कथां शृणु स्थिरो भव ।
प्रसादं श्रीहरेर्भुङ्क्ष्व नैवेद्यं हरयेऽर्पितम् ॥२६॥
व्रतं रक्ष सतां सेवात्मकं भक्तिं कुरु प्रभौ ।
कृष्णार्पणं समस्तं वै विधेहि परमेश्वरे ॥२७॥
मन्त्रं धुन्यं गृहाणाऽपि वैष्णवो भव उत्तमः ।
महाभागवतो भूत्वाऽक्षरं धाम प्रयास्यसि ॥२८॥
इत्युक्तश्च तदा देवस्वरूपः स कथालये ।
देवानां मण्डले दिव्यरूपस्तत्र तिरोऽभवत् ॥२९॥
संहितायाः कथां श्रोतुं देवगणे स्थिरोऽभवत् ।
व्रतं चक्रे प्रसादान्नभोजनं सप्तवासरान् ॥३०॥
सतां सेवां मानवेन स्वरूपेण करोत्यपि ।
पादसंवाहनं देहमर्दनं दर्शनादिकम् ॥३१॥
वैशाखशुक्लैकादश्यां प्रातः कथाश्रवोत्तरम् ।
लोमशः कृपया तस्मै मन्त्रं धुन्यं ददौ द्रुतम् ॥३२॥
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ।
'प्रभोनारायण पद्मावतीनारायण प्रभो ॥३३॥
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो' ।
सोऽपि देवो मनुं लब्ध्वा नामधुन्यं चकार ह ॥३४॥
नैवेद्यभोजनं कृत्वा यावद् देवगणे स्थितः ।
अकस्मादाययौ तावन्मध्यान्हे श्रीनरायणः ॥३५॥
दिव्यश्वेतहयारूढः श्रीपतिः कमलापतिः ।
अनादिश्रीकृष्णनारायणश्रीपतिवल्लभः ॥३६॥
तं नेतुमाययौ पक्षितुरगे छत्रशोभिते ।
आह्वयामास तं देवं भगवान् कम्भरात्मजः ॥३७॥
सर्वेषां पश्यतां देवश्चाऽश्वाऽऽरूढो बभूव ह ।
नीत्वा तं भगवान् कृष्णनारायणोऽक्षरं ययौ ॥३८॥
कृपैषा श्रीहरेश्चाति लोमशस्याऽपि भूयसी ।
सान्तममरभावं तं शाश्वताऽमरतामितः ॥३९॥
नकुलः सकुलश्चापि भगवत्कुलवान् कृतः ।
बद्रिके सा कथा चात्र प्रभूता कथिता परा ॥४०॥
अथाऽन्यं ते प्रवदामि चमत्कारं हरेः प्रभोः ।
भाटः कश्चित्कथां श्रोतुं समायातः कथास्थलम् ॥४१॥
नारायणहरे कृष्णनारायणेति संजपन् ।
श्लोकं कृत्वा स्तुतिं चक्रे संहितायाः सभास्थले ॥४२॥
'कथा कल्याणदा चेयं श्रीकृष्णः करुणाप्रदः ।
कीरतारामिधो भाटः श्रेयसेऽत्र उपागतः' ॥४३॥

'नमो व्यासाय कृष्णाय संहितायै नमो मुहुः ।
वैष्णवानां सभायै च लोमशाय नमो मुहुः ॥४४॥
नमः सद्भ्यो महर्षिभ्यः साध्वीभ्यश्च नमो मुहुः ।
पावनेभ्योऽत्र देवेभ्यः सर्वेभ्यश्च नमो मुहुः ॥४५॥
श्रूयन्ते बहवः पापास्तारिताः कृपया खलाः ।
कृष्णनारायणेनात्र कीरतारं समुद्धर ॥४६॥
हृदये वर्तते यश्च व्यासे च पुस्तकेऽपि यः ।
सदस्येषु च भाटे यः समामुद्धरतु प्रभुः ॥४७॥
बहूनां जन्मनामन्ते प्राप्तोऽस्मि परमेश्वरम् ।
शरण्यः स हरिर्भाटं प्रपन्नं पातु पामरम् ॥४८॥
प्राप्तमद्य मया स्वर्णे रत्नं पीयूषममृतम् ।
पीत्वा पीत्वा दृढो भूत्वा प्रयास्यामि परं पदम् ॥४९॥
उद्धर्ताऽनादिश्रीकृष्णनारायणः प्रमेश्वरः ।
परं धाम प्रयास्यामि मन्त्रधुन्यादिलाभवान्' ॥५०॥
एवं तुष्टाव च नमश्चोवाच दण्डवत्तथा ।
चक्रे स्वात्मार्पणं तत्र धूलिं देहेऽप्यघर्षयत् ॥५१॥
अथ श्रीव्यासदेवश्च स्वतःप्रकाशकायनः ।
ददावस्मै मनुं नामधुन्यं सलिलसाक्षिकम् ॥५२॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
'प्रभोनारायण पद्मावतीनारायण प्रभो ॥५३॥
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो' ।
'बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि ॥५४॥
तन्नो हृत्स्थः प्रचोदयादि'ति मन्त्रं च जगृहे ।
भाटः पवित्रतां प्राप्तोऽभवद् विगतकल्मषः ॥५५॥
बद्रिके स प्रसादं च जग्ध्वा पीत्वा पदामृतम् ।
दधार तौलसीं कण्ठीं चक्रे तिलकचन्द्रकौ ॥५६॥
धुन्यं चक्रे मुदा नृत्यन् कथां शुश्राव लीनवत् ।
ब्रह्मरसं पपौ नित्यं साधुसेवां चकार च ॥५७॥
मासमात्रं स्थितस्त्वेवं भजन् श्रीकान्तवल्लभम् ।
कथार्थांश्चिन्तयन् ध्यायन् हृदये परमेश्वरम् ॥५८॥
गोपालनन्दनं दिव्यं धारयन् कम्भरात्मजम् ।
वैशाखशुक्लैकादश्यां मुक्तसंसारबन्धनः ॥५९॥
कीरतारः कथां श्रुत्वा समाधिं प्राप मण्डपे ।
यावत्तत्र समायातं विमानं कृष्णशोभितम् ॥६०॥
दिव्यं तेजांसि परितः प्रास्रवत् स्वर्णकान्तिमत् ।
कीरतारोऽभवन्मुक्तस्तदा वै दिव्यविग्रहः ॥६१॥
चतुर्भुजः सुरूपश्च पार्षदः परमात्मनः ।
स्वर्णकुण्डलमुकुटसापीडादिभूषितः ॥६२॥
आरुरोह विमानं तत् समाहूतो दयालुना ।
पश्यतां तु सदस्यानां ययौ धामाऽक्षरं हरेः ॥६३॥
शृणु बद्रीप्रिये चात्र कृपैव कारणं हरेः ।
य इच्छति मोक्षं तं द्रुतं नयति माधवः ॥६४॥
शाश्वतानन्दलब्धेस्तु साधनं शरणागतिः ।
तवाऽस्मीति याचकाय स ददाति परं पदम् ॥६५॥
देही दिव्यो भवत्येव प्रारब्धं परिवर्तते ।
कृष्णमन्दिरवासार्हो जायते कृपया हरेः ॥६६॥
नरो मुक्तः पार्षदः स्याञ्नारी लक्ष्मीः प्रजायते ।
कृष्णेन सह रमतेऽश्नुते कृष्णस्य सद्रसान् ॥६७॥
न न्यूनं विद्यते तस्य तादात्म्यद्रवतां लभेत् ।
स्वामिनाथात् सर्वकामान् भुंक्ते कृष्णासनासनः ॥६८॥
स्पर्शानन्दान् समस्तांश्च कृष्णमालिङ्ग्य सोऽश्नुते ।
रूपानन्दान् रसानन्दान् जिह्वास्वादान् समस्तकान् ॥६९॥
गन्धानन्दान् गिरानन्दान् समस्ताऽऽश्लेषमोदकान् ।
शय्यानन्दान् समस्तांश्च कृष्णकान्तात् समश्नुते ॥७०॥
क्वचिद्दाम्नि निजं कृष्णं कान्तं रहः प्रसेवते ।
क्वचिद् रम्याणि पुष्पाणि भूत्वा गन्धैः प्रसेवते ॥७१॥
क्वचित् फलं स्वयं भूत्वा कृष्णं रसेन सेवते ।
क्वचिद्भूत्वा कामधेनुः कृष्णं दुग्धेन सेवते ॥७२॥
क्वचिद्भूत्वा रमा रामं वक्षस्यारामिच्छति ।
क्वचिच्छ्रीमाणिकी भूत्वा वहते कान्तमुत्तमम् ॥७३॥
क्वचिद् भ्रमरिका भूत्वा कृष्णगन्धं समश्नुते ।
क्वचिद् राधा सखी भूत्वा ताम्बूलं प्रददात्यपि ॥७४॥
भूत्वा लक्ष्मीर्हरेरोष्ठताम्बूलरसमेति च ।
आन्धसिकी क्वचिद् भूत्वा पाचयत्यस्य भोजनम् ॥७५॥
दासी भूत्वाऽऽप्लवनं सा कारयत्यच्युतस्य वै ।
देहसंवाहनं दासो भूत्वा करोति सेवनम् ॥७६॥
यष्टिः स्वर्णमयी भूत्वा करस्पर्शं सुविन्दति ।
नक्तकश्च क्वचिद् भूत्वा मुखस्पर्शं प्रविन्दति ॥७७॥
पादुकारूपमासाद्य पादचूम्बनमृच्छति ।
आदर्शरूपमासाद्य कृष्णं स्वस्मिन् दधात्यपि ॥७८॥
गेन्दुकतां समासाद्य कृष्णपृष्ठं दधात्यपि ।
कुंकुमं चन्दनं भूत्वा भालसुखं प्रविन्दति ॥७९॥
कज्जलं च क्वचिद् भूत्वा नेत्रस्पर्शं प्रविन्दति ।
दुग्धं दुग्धामृतं भूत्वा जठरे संविशत्यपि ॥८०॥
जलं भूत्वा तथा शौत्रं कटिस्पर्शं च विन्दति ।
तैलं भूत्वा रोममूलस्पर्शसुखं च विन्दति ॥८१॥

मनोभवः स्वयं भूत्वा कृष्णानन्दं समश्नुते ।
राधा भूत्वाऽस्य रमते यानं भूत्वा वहत्यपि ॥८२॥
सिंहासनं क्वचिद् भूत्वा राजते स्वामिनाऽऽश्रितम् ।
कल्पवृक्षः क्वचिद् भूत्वा परितः सेवते हरिम् ॥८३॥
सुगन्धिपवनो भूत्वा सेवते शीतलोऽपि सन् ।
ऊर्मिका वांऽगरक्षं च भूत्वाऽङ्गुलिं च वर्ष्म च ॥८४॥
कौस्तुभो रशना भूत्वा वक्षः कटिं च सेवते ।
भुक्तिपात्रं क्वचिद् भूत्वा प्रसादं सर्वमश्नुते ॥८५॥
स्नानकुण्डं क्वचिद् भूत्वा स्पर्शं विन्दति सर्वतः ।
क्वचित् कान्ता प्रमा भूत्वा कान्तमाश्लिष्यति प्रभुम् ॥८६॥
क्वचित्तु गरुडो हस्ती भूत्वा वाजी विमानकम् ।
वाहनं नरयानादि भूत्वा धारयति प्रभुम् ॥८७॥
क्वचित् पार्षवती भूत्वा सर्वसेवां करोति हि ।
मुक्ता मुक्तानिका प्रेम्णाऽश्नुवते हरिजं रसम् ॥८८॥
बद्रि धाम्न्यक्षरे प्रेम्णा मुक्ताः पिबन्ति तद्रसम् ।
गोलोके गोपिका गोपा पिबन्ति कृष्णजं रसम् ॥८९॥
वैकुण्ठे पार्षदाः पार्षदान्यः पिबन्ति तद्रसम् ।
अव्याकृतेऽमृते धाम्नि श्रीपुरे बदरीवने ॥९०॥
श्वेतद्वीपे क्षीरवार्धौ पिबन्ति सेविनो रसम् ।
कुंकुमवापिकाक्षेत्रे ब्रह्मप्रिया हरिप्रियाः ॥९१॥
पिबन्त्यनादिकृष्णस्य रसं राधारमाश्रियः ।
यथा च ललिता लक्ष्मीः मालती माणिकी प्रिया ॥९२॥
पद्मावती सुखदाश्रीर्नारायणी च भार्गवी ।
तुलसी पद्मिनी पद्मा पिबन्ति ता हरेः रसम् ॥९३॥
बदरी च विकुण्ठा च मुक्तिः शक्तिः सरस्वती ।
ता एताः श्रीकृष्णकान्तरसं पिबन्ति शाश्वतम् ॥९४॥
सनकाद्याः साधवश्च नारादाद्या महर्षयः ।
व्यासाद्याः शंसकाश्चापि कार्ष्णं रसं पिबन्ति हि ॥९५॥
बलिराजादयो दैत्या विभीषणादिराक्षसाः ।
ईश्वराः शंकराद्याश्च पिबन्ति श्रीहरेः रसम् ॥९६॥
अग्न्यादयो देवताश्च काश्यपा गरुडादयः ।
मानवा ध्रुवमुख्याश्च पिबन्ति श्रीहरेः रसम् ॥९७॥
भोगिनः शेषसर्पाद्या गावस्तु कामधेनवः ।
आत्मनिवेदिनो भक्ताः पिबन्ति श्रीहरेः रसम् ॥९८॥
बद्रिके शरणं प्राप्ताः सामस्त्येन समर्पिताः ।
दासा दास्यः प्रियवर्याः पिबन्ति श्रीहरेः रसम् ॥९९॥
ये ये धामाऽक्षरं प्राप्ताः परब्रह्मरसं तु ते ।
पिबन्ति सततं बद्रि परब्रह्मकृपाश्रयाः ॥१००॥



कृपया च गतौ मुक्तिं सागरः कीरतारकः ।
पाठको वाचकः श्रोता संहितायाः हि मोक्षदाः ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
सागरदानवाटस्य कीरतारभाटस्य च कथाश्रवण-
साधुसेवादिभिर्मोक्षणमित्यादिनिरूपणनामै-
कसप्ततितमोऽध्यायः ॥ ७१ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कथां ज्योतिर्विदस्य वै ।
विक्रमनगरे विप्रो नाम्ना देवमतीश्वरः ॥ १ ॥
कुलकुटुम्बसहितश्चासीद्धर्मव्रतादिमान् ।
देवसेवापरश्चापि प्रजाकल्याणचिन्तनः ॥ २ ॥
आतिथेयः शरण्यश्च परदुःखप्रभञ्जनः ।
ब्रह्मकर्मपरश्चापि ज्योतिर्विद्याऽर्धपण्डितः ॥ ३ ॥
बद्रिके सर्वलोकेषु चार्धज्ञः सर्वकर्मसु ।
न पारं निर्णयं याति ततो भवति क्लेशभाक् ॥ ४ ॥
औषधेषु भाग्यवित्सु ज्योतिर्वित्सु कलासु च ।
सर्वथा पारगो दीर्घानुभवी च बहुश्रुतः ॥ ५ ॥
साधनेष्वनुकूलेषु ध्रुवं फलं समश्नुते ।
अपारगस्तु यत्नेन दैवानुकूलवर्त्मनि ॥ ६ ॥
अकस्माल्लभते पुष्पं फलं वा लभते क्वचित् ।
प्रायशो न फलं याति विफलं लभते सदा ॥ ७ ॥
असत्याऽऽडम्बरदोषैर्लिप्यते विज्ञगर्ववान् ।
अर्धदग्धेन भाव्यं न प्रायशः क्लेशकारिणा ॥ ८ ॥
अर्धाभिज्ञो भिषङ्मध्यः शतहिंसोत्तरं वरः ।
उत्कृष्टभावमायाति हिंसापापशतान्वितः ॥ ९ ॥
अर्धाभिज्ञस्तथा ज्योतिर्वेत्ता रेखाविदस्तथा ।
बहूनामनृतानां च पापवान् जायते सदा ॥१०॥
असत्यकथनैश्चापि सन्दिग्धानां प्रदर्शनैः ।
निश्चितज्ञानविधुरा विश्वासघातदूषिताः ॥११॥
विपथे वर्तमानास्ते परान् विपथयन्ति च ।
तेन दोषेण जायन्ते मृतास्तिर्यञ्चि राक्षसाः ॥१२॥
उपदेशकरा एवं वृथा वाचां विहारिणः ।
स्वयमुक्तार्थशून्यास्ते परोपदेशपण्डिताः ॥१३॥
तिरश्चां योनिमृच्छन्ति जायन्ते राक्षसा अपि ।
बद्रिकेऽतो भिषक्त्वं विद्वत्त्वं ज्योतिःप्रवेतृता ॥१४॥
सत्येन युञ्जिताः सर्वे स्वर्गदा मोक्षदा अपि ।
असत्ययुञ्जिताः सर्वेऽधोगतौ निरयप्रदाः १५॥

बद्रिके स तथा चार्थज्योतिषी ग्रहदर्शकः ।
भाग्याऽभाग्यप्रवक्ता च मिथ्याचारोऽभवत्तदा ॥१६॥
तेन पापेन संलिप्तो देवगतीश्वराभिधः ।
गलगण्डेन रोगेण कण्ठमालरुजा तथा ॥१७॥
गले कर्कटवृद्धया च पीडितश्चाऽभवत्तदा ।
जिह्वामूलं रुजा छन्नं जिह्वा ह्रस्वा ततोऽभवत् ॥१८॥
अस्पष्टवर्णा वाणी च शनैर्वै मूकतां गता ।
एवं रोगाभिभूतस्य शिरसो वेदनाऽभवत् ॥१९॥
गण्डयोश्चाऽभवत् पाकस्तेन दुःखेन पीडितः ।
पूयपाकोऽभवद् भाले पूयस्रावश्च कर्णयोः ॥२०॥
नेत्रयोरान्ध्यभावश्च बाधिर्यं चाप्यजायत ।
अहो प्रारब्धदुःखं वा सञ्चितं तत्समागतम् ॥२१॥
कृतं मिथ्याप्रचारं यत् समस्तं भुज्यते त्विह ।
तस्मान्मिथ्या न कर्तव्यं न कर्तव्यं मृषा क्वचित् ॥२२॥
असत्यं नाचरणीयं नोपदेष्टव्यमनृतम् ।
अज्ञातं नोपदेष्टव्यं दर्शनीयं न चाऽनृतम् ॥२३॥
सन्दिग्धं विपरीतं वा कथनीयं न सर्वथा ।
नाऽहितं चिन्तनीयं च स्वार्थदोषाभिपातिना ॥२४॥
नाऽनिष्टं करणीयं च कारणीयं न केनचित् ।
नाऽन्धमार्गे धावनीयं नाऽऽकृष्टव्याः परेऽपि च ॥२५॥
न पातनीया गर्तेऽन्धे पतनीयं न सर्वथा ।
दृष्टं वाच्यं न त्वदृष्टं वाच्यं प्रामाणिकं तु यत् ॥२६॥
वक्तव्यं फलवद् बद्रि निष्फलं नाऽनृतं मृषा ।
आप्तभूतं प्रवक्तव्यं ह्याप्तभूत्या स्वया न तु ॥२७॥
आशीर्वादाः प्रदातव्याः कृष्णार्पणविधित्सया ।
वचनं तु प्रदातव्यं फलाऽऽयतिभृतं सदा ॥२८॥
आज्ञा कार्या बलसखा स्तुतिः प्रमोदकारिका ।
नाटकं रसवत् कार्यं समाजाश्चर्यकारकम् ॥२९॥
भजनं कीर्तनं गीतं कर्तव्यं तुष्टये हरेः ।
प्रशंसा तु महतां वै कर्तव्या पूज्यभावतः ॥३०॥
वर्णनं सर्वथा कार्यं शतगुणं ततोऽधिकम् ।
चिन्तनं तु विधातव्यं सहस्रतर्कितं तथा ॥३१॥
किन्तु रोगे ग्रहे सत्यं वाच्यं विश्वासकर्मसु ।
व्यवहारे यथायोग्यं वक्तव्यं सत्यमेव ह ॥३२॥
प्राणत्राणाय यद् योग्यं तद्वक्तव्यं विजानता ।
बद्रिके गणकः सोऽयं भिषङ्मिथ्याभिदूषणैः ॥३३॥
पीडितो बहुधा रोगैस्त्रातारं न ललाभ ह ।
बहुधाऽपि व्ययं कृत्वा प्राप्तो निर्धनतां पुनः ॥३४॥
अन्यायोपार्जितं सर्वं रोगेण विनियापितम् ।
अथाऽस्य मतिरुत्पन्ना श्रुत्वा श्रुत्वा पुनः पुनः ॥३५॥
कथाप्रशंसां बहुधा रोगघ्नीं मोक्षदां तथा ।
कथास्थलं ततो गन्तुं रक्षितुं स्वं व्रतादिभिः ॥३६॥
पत्न्यै निवेदयामास विचारं गमनात्मकम् ।
बद्रिके दुःखभाक् प्राणी भजते श्रीप्रभुम्पतिम् ॥३७॥
सुखे नैव स्मरत्येनं सुखदं माधवीप्रभुम् ।
विपद्येव स्मरत्येनं स्वार्थी प्राणी सुखोऽपि सन् ॥३८॥
मानुष्यं सर्वथा प्राप्तं स्मृत्यर्थं श्रीहरेः सदा ।
तद् विस्मृत्य धने पत्न्यां यापयन्ति क्षणं खलाः ॥३९॥
पूर्वकृतं भक्षयन्ति नवीनं नार्जयन्त्यपि ।
पुण्यं त्यक्त्वा पापमेवाऽऽचरन्ति निरयाय ते ॥४०॥
असत्यं हृदये यस्य वाचि त्वसत्यता भवेत् ।
कर्मस्वसत्यता तस्य त्रीण्यत्र निरयाणि वै ॥४१॥
तत्फलं घोरपापं च निरयं निरयप्रदम् ।
फलं च नरकं दुःखं सर्वमसत्यकारिणः ॥४२॥
प्रथमं नरकं देहे रोगः सम्परिकीर्तितः ।
द्वितीयं नरकं चाऽन्नाऽम्बरलब्धिरत्वतुष्टिदा ॥४३॥
तृतीयं नरकं भार्या दुष्टा दुष्टः पतिश्च वा ।
चतुर्थं नरकं दास्यं कैंकर्यं परवश्यता ॥४४॥
पञ्चमं नरकं नित्यं कलहः स्वजनेषु वै ।
षष्ठं तु नरकं ग्रामे देशे च बहुशत्रुता ॥४५॥
सप्तमं नरकं राजदण्डश्चातिप्रयासिता ।
अष्टमं नरकं तृष्णा वासना चाऽनिवर्तिनी ॥४६॥
नवमं नरकं चेष्टाऽलाभस्तथाऽवमाननम् ।
दशमं नरकं नित्यदारिद्र्यं सर्वतोऽधिकम् ॥४७॥
एकादशं तु नरकं सर्वत्रैवाऽर्धदग्धता ।
द्वादशं तु नरकं यन्नित्यं नरकक्षालनम् ॥४८॥
त्रयोदशं तु नरकं नवद्वारमलानि वै ।
चतुर्दशं तु नरकम् उदरस्थं सदा मलम् ॥४९॥
मलकुण्डः शरीरं वै नित्यं नरकसंभृतम् ।
पञ्चदशं तु नरकं पशुवन्मलिना स्थितिः ॥५०॥
षोडशं नरकं याम्यं सहस्रधा तु विस्तृतम् ।
इत्येवं बद्रिके लोके भवन्ति नरकाणि हि ॥५१॥
दुष्टपुत्रो दुष्टशिष्यो राजा दुष्टश्च भक्षकः ।
रक्षको भक्षकस्त्राता हन्तेति नरकाणि वै ॥५२॥
प्रातिकूल्यं तथाऽनिष्टप्राप्तिर्विघ्नानि यान्यपि ।
सर्वे ते निरया लोके दुर्भाग्यानां भवन्ति हि ॥५३॥

कारागारे निवासश्च तथाऽरातेरधीनता ।
दुर्भिक्षे भिक्षुकी वृत्तिर्नरकाणि भवन्ति हि ॥५४॥
लोभो मानं च रुट् कामो द्वेषो रागोऽप्यसूयिका ।
ईर्ष्या मत्सर उद्वेगः साक्षात्ते निरयास्त्विह ॥५५॥
अज्ञानं च तमो मोहश्चौर्यं शाठ्यमपूर्णता ।
प्रतारणं च विश्वस्तघातनं निरयास्त्विमे ॥५६॥
उन्मत्तत्वं विचित्तत्वं शीतोष्णागम उल्बणः ।
छेद्यभेद्याऽङ्गहीनत्वं नरकास्ते सदा मताः ॥५७॥
मलमूत्राशयाः सर्वे नरका देहरूपिणः ।
गर्भवासो जन्ममृत्यू नरकास्ते सदा मताः ॥५८॥
यावन्तः कर्दमाः स्वेदा दुर्गन्धा नरका हि ते ।
अपकीर्तिश्च नरकं शोकाग्निर्निरयो महान् ॥५९॥
आधयो व्याधयश्चोपाधयस्ते नरकाः सदा ।
बद्रिके यस्य सन्तोषस्तस्य स्वर्गमनुत्तमम् ॥६०॥
तृष्णाक्षयसुखं स्वर्गो निरीहता सुखं परम् ।
प्रतिष्ठां शौकरीं विष्ठां गौरवं रौरवं तथा ॥६१॥
अभिमानं सुरापानं त्यक्त्वा त्रीणि सुखी भवेत् ।
नेच्छानां विलयश्चास्ति भोगानां विरतिर्न हि ॥६२॥
कर्मणां शून्यता नास्ति त्रीणि त्यक्त्वा सुखी भवेत् ।
तृप्तिर्नास्ति रसानां वै शान्तिर्नास्ति च कर्मिणाम् ॥६३॥
निवृत्तिर्देहिनां नास्ति त्रिगुणः सर्वदा सुखी ।
अध्यात्मज्ञाने दिवसो रात्रिर्यस्य नरायणे ॥६४॥
निद्रा ब्रह्मात्मसन्धाने स वै स्यात् सर्वथा सुखी ।
दुःखदा सुखतृष्णापि तां त्यक्त्वा स्यात् सुखी सदा ॥६५॥
शरीरं नरकं सर्वं नवद्वारं मलैर्भृतम् ।
पुष्टं मलात्मकैर्मर्वैरात्मनो निरयात्मकम् ॥६६॥
अरे प्रपश्य बदरि नासिकायाः प्रगर्तयोः ।
पूयभागः प्रस्रवति दुर्गन्धश्चोष्ठलेपकः ॥६७॥
लालाजालं मुखे नित्यं कफश्चान्तःप्रदेशतः ।
मुखमायाति नित्यं च दन्तमूलेषु पूयकम् ॥६८॥
दुर्गन्धं दन्तमूलेषु पक्वं पूयं प्रवर्धते ।
प्रातर्मुखं हि दुर्गन्धं श्वासो दुर्गन्धसंभृतः ॥६९॥
स्वेदः सर्वेषु सर्वत्र रोमस्वभिस्रवत्यपि ।
दुर्गन्धः क्षारभृत् सर्वः सुगन्धो यत्र दुर्लभः ॥७०॥
श्रेष्ठांगमेवं दुर्गन्धमन्यांऽगानां तु का कथा ।
मनुष्याणां बिडालानां सिंहानां रक्षसां तथा ॥७१॥
पिशाचानां सूकराणां काकानां देहसाम्यता ।
बद्रिके सर्वथा नित्यदुर्गन्धाऽशुद्धिसंभृताम् ॥७२॥

नैसर्गाऽशुद्धदेहोऽयं कथं शुद्धिमवाप्नुयात् ।
तस्माद् योगिजना नित्यं क्षालयन्त्यान्तरं सदा ॥७३॥
ध्यानेन चेतनं देहस्थितमात्मानमुत्सुकाः ।
समाधिनाऽऽप्नुवन्त्येनं सत्यं सत्यात्मनाऽन्वितम् ॥७४॥
परमात्मा नित्यशुद्धः कृष्णनारायणो हरिः ।
यत्रास्ते चासने तच्चासनं शुद्धं सदात्मकम् ॥७५॥
सदात्मा चेतनो नित्यसच्चिदानन्दतत्त्वकः ।
तं सन्तं सात्त्वतं भक्तं भावयन्ति बुधाः सदा ॥७६॥
हृदये वर्तमानं तं स्वामिना संविराजितम् ।
प्रकाशितं भितं नित्यं श्रीकृष्णपरमात्मना ॥७७॥
ध्यायन्ति ज्ञानविमला देहभावविवर्जिताः ।
विवेकलब्धवैराग्याः सन्तः सन्तं हृदि स्थितम् ॥७८॥
यत्राऽसत्यमनृतं च फल्गुमिथ्यामृषात्मता ।
अणुतुल्याऽपि नास्त्येव सन्तो ध्यायन्ति तं निजम् ॥७९॥
ते पारं सम्प्रयान्त्यस्य कर्दमस्य हि वर्ष्मणः ।
सर्वमलानि सन्त्यज्य प्रयान्ति परमेश्वरम् ॥८०॥
माया मलात्मिका नित्यं तत्रापि राजसो गुणः ।
तमस्तु मलिनं नित्यं मलं सर्वं हि तामसम् ॥८१॥
तत तत्पजतत्त्वानि महदहं च मायिकौ ।
इन्द्रियाणि विषयाश्च भूतानि मलिनानि वै ॥८२॥
भौतिकानि समस्तानि मलिनानि मलानि च ।
बद्रिके तापसाः सन्तस्तस्मात् त्यजन्ति भौतिकम् ॥८३॥
शाश्वतं चिन्तयन्त्येव भजन्ते शाश्वतं हरिम् ।
तिष्ठन्ति ब्रह्मभावे च मोदन्ते चात्मगह्वरे ॥८४॥
परिहरन्त्यसत्यं तज्जगत् पापौघसंभृतम् ।
मोक्षार्थं च यतन्ते ते सद्गुर्वाश्रयमास्थिताः ॥८५॥
एवं बद्रीप्रिये देवगतीश्वरस्तु भूसुरः ।
सत्याऽसत्यमयं वीक्ष्य परमार्ग्यं ब्रह्मस्तथा ॥८६॥
सत्याऽनृतमयं सर्वं सन्दिग्धं भावि देहिनाम् ।
निवेदयति देहिभ्यः पापमर्षे यथातथम् ॥८७॥
तेन पापेन पीडावान् पत्न्यै सह प्रमुक्तये ।
पत्नी धर्मवती भूत्वा पत्युः प्रियचिकीर्षया ॥८८॥
पतिं नीत्वाऽनसा साध्वी जगाम शर्करापुरम् ।
कथास्थलं मुनिं व्यासं ददर्श च पुपूज च ॥८९॥
न्यवेदयत् स्वामिदुःखं मुक्तये प्रार्थयन्मुनिम् ।
व्यासं स्वतःप्रकाशाख्यं व्यासोऽपि दयया तदा ॥९०॥
भूसुराय ददौ मन्त्रं नामधुन्यं ददौ व्रतम् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥९१॥

प्रभोनारायण पद्मावतीनारायण प्रभो ।
जयाकृष्ण ललिताश्रीकृष्ण राधापते विभो ॥९२॥
पत्नी चापि प्रजग्राह मन्त्रं धुन्यं व्रतं तथा ।
पपतुस्तौ हरेः पादामृतवारि शुभप्रदम् ॥९३॥
चखदतुः प्रसादं च शुश्रुवतुः कथामृतम् ।
मासान्ते श्रीहरिस्ताभ्यां दर्शनं प्रददौ प्रभुः ॥९४॥
परपर्श तं कराग्रेण रुग्णं नीरोगिणं व्यधात् ।
दिव्यभावं व्यधाच्चापि भार्यां दिव्यां व्यधात्तथा ॥९५॥
ततस्ताभ्यां प्रार्थितश्च हरिर्मोक्षार्थमत्यति ।
हरिः कृत्वा दिव्यदेहौ तौ तु निजे विमानके ॥९६॥
न्यस्य वैशाखपूर्णायां निन्ये धामाऽक्षरं निजम् ।
पश्यतां सर्वलोकानां ज्योतिर्वित् प्राप मोक्षणम् ॥९७॥
पुण्यवत्या स्त्रिया साकं परं मोक्षमवाप सः ।
बद्रिके महदाश्चर्यमभूत् तत् सर्वदेहिनाम् ॥९८॥
मासमात्रेण विप्रस्य रोगनाशश्च मोक्षणम् ।
प्रशशंसुर्जना विप्रभार्यां पतिव्रतां शुभाम् ॥९९॥
यया स्वामी प्रापितो वै मोक्षं चाज्ञाप्रवृत्तया ।
धन्या सा गृहिणी लोके याऽऽज्ञाकारी वरस्य वै ॥१००॥
धन्यो नारायणश्चापि शरण्यो मोक्षदो वरः ।
बद्रिके जीवलोकेऽत्र स्नेहः स्वर्गः सदोत्तमः ॥१०१॥
परोपकारः स्नेहेन सेवा स्नेहेन जायते ।
सुखदत्वं प्रेमभावैर्जायते श्रद्धया तथा ॥१०२॥
पठनाच्छ्रवणादस्य स्मरणाद्वर्तनात्तथा ।
भुक्तिर्मुक्तिर्भवेच्चापि कृपा कृष्णस्य वै भवेत् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने देवगतीश्वरस्य विप्रस्याऽर्घज्योतिर्विदोऽसत्यपापादिनाशेन कथाश्रवणकारिणः पुण्यवतीभार्यासहितस्य मोक्ष इत्यादि-निरूपणनामा द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि बन्दिजनस्य पावनीम् ।
कथां मोक्षकरीं कृष्णनारायणस्तवाऽन्विताम् ॥ १ ॥
द्वेषरागजयनाम्नि नगरे पावनः परः ।
बन्दिजनोऽभवन्नाम्ना जयमानाभिधः सुखी ॥ २ ॥
कुटुम्बसहितस्तत्र वसमानश्च जीविकाम् ।
बन्दि सुवन्दनं राज्ञां कृत्वा निर्वहते सदा ॥ ३ ॥
द्वेषरागजये ग्रामे राजाऽऽसीद् वज्रविक्रमः ।
बन्दिप्रियो हि बहुधा दानप्रियस्तयोत्तमः ॥ ४ ॥
नित्यं रात्रौ दिवा प्रातर्बन्दिस्त्रियश्च बन्दिनः ।
वन्दनामिभिता गीतीर्गायन्ति तस्य सन्निधौ ॥ ५ ॥
विष्णुतुल्यमिन्द्रतुल्यं रुद्रतुल्यं शशिप्रभम् ।
रवितुल्यं चक्रवर्तितुल्यं मत्वा नराः स्त्रियः ॥ ६ ॥
कल्पितास्तत्कथाः सर्वा गायन्ति सुप्रशंसिताः ।
जयमानो वन्दकस्तु नूत्नं नित्यं प्रगायति ॥ ७ ॥
प्रसन्नोऽस्य विशेषेण जायते वज्रविक्रमः ।
पारितोषिकमस्मै स स्वर्णमुद्रां ददाति च ॥ ८ ॥
जयमानो जयं दत्वा नत्वा तं नृपतिं गृहम् ।
नित्यं प्रयाति मुदितः काव्यं नूत्नं करोति च ॥ ९ ॥
द्वितीये च दिने प्रातर्गत्वा गायति सन्निधौ ।
एवं सदा करोत्येव जीविकां लभते सदा ॥१०॥
अथैकदा जयमानो ज्वरेणाऽतीव पीडितः ।
शेके गन्तुं न भूपाऽग्रे भूपश्च विह्वलोऽभवत् ॥११॥
प्रतीक्षमाणस्तं राजा न लेभे दर्शनं कवेः ।
उत्थाय स ययौ पद्भ्यां जयमानस्य मन्दिरम् ॥१२॥
जयमानश्चकाराऽस्य भूपस्य स्वागतादिकम् ।
आसनं प्रददावुपाविवेश नृपतिः स च ॥१३॥
पृष्ट्वा तु कुशलं वीक्ष्य ज्वरितं कविमुत्तमम् ।
बन्दिनो ज्वरशान्त्यर्थं वैद्यमाहूय चौषधम् ॥१४॥
कारयामास नृपतिस्तस्याऽग्रे त्ववसन्नृपः ।
मुहूर्तान्ते ज्वरो नष्टो नीरुग्णो जयमानकः ॥१५॥
नृपं बन्दिप्रियं तत्र ववन्दे तन्मनो विदन् ।
'अहो राजन् यथार्थं वै भवतो नाम विद्यते ॥१६॥
राजसे देववल्लोके रक्षसि द्युनिवासिवत् ।
शोभसे कृष्णवद् विष्णुतुल्यो ददासि सम्पदः ॥१७॥
दयां करोषि लक्ष्मीवन्निभालयसि ब्रह्मवत् ।
आयासि मेघवद् राजन् शृणोषि परमात्मवत् ॥१८॥
प्रेरयसि प्रमेशावत् प्रजां धरसि धर्मवत् ।
सुधांशुवत् पोषयसि प्रकाशसे तु चन्द्रवत् ॥१९॥
सेवसे मातृवद् राजन् सुखाकरोषि रात्रिवत् ।
पितृवत् पालयसि श्रीसमो भवसि भूतले ॥२०॥
कुबेरोऽन्य इवाऽभासि धनदाता धनेश्वरः ।
सुवर्णं स्रावयस्यत्र वह्नितुल्यः प्रतापवान् ॥२१॥
शासने धर्मराजाभो विभासि च दिशांपतिः ।
यत्र राजन् विचरसे तद्वनं प्रजायते दिवम् ॥२२॥
प्रजा स्वर्गायते चापि स्वर्गे तवेश्वरायते ।
यत्र राजन् वर्तसे गोलोकायते तु तत्स्थलम् ॥२३॥

सौधो वैकुण्ठायते स यत्र भ्रमसि भाग्यवान् ।
यत्र वससि क्षणवत् स्थलं मोक्षायतेऽपि तत् ॥२४॥
आज्ञापयसि क्ष्मेशांश्च सुरेशानीश्वरानपि ।
सर्वे वहन्ति सततं समया भृत्यका इव ॥२५॥
सर्वशास्त्राणि गायन्ति वज्रविक्रमसद्गुणान् ।
श्रुतं राजन् मया त्वद्य शर्करानगरेऽधुना ॥२६॥
लक्ष्मीनारायणसंहितायाः कथा प्रवर्तते ।
यस्यां प्रवर्ण्यतेऽनादिकृष्णनारायणः प्रभुः ॥२७॥
सर्वेश्वरेश्वरः स्वामीकृष्णनारायणो हि सः ।
सर्वावतारवर्ती च सर्वब्रह्माण्डरक्षकः ॥२८॥
सर्वराजाधिराजश्च सर्वलक्ष्मीरमापतिः ।
सर्वमुक्तपतिः सर्वदेवतानां च दैवतम् ॥२९॥
सर्वशक्तिपतिः सर्वसम्राड् ब्रह्माण्डधारकः ।
सर्वविष्णुशिवपूज्यः सर्वब्रह्माभिवन्दितः ॥३०॥
सर्वतीर्थनिवासश्च प्रज्ञापद्मावतीपतिः ।
सर्वेशानः सर्वदेहिनियन्ता सर्वमोक्षदः ॥३१॥
राधाजयापतिः कृष्णो बालकृष्णो हि गीयते ।
राजन् यथा सार्वभौमो भगवान् स विराजते ॥३२॥
तथा विराजते सार्वभौमोऽनन्यसमो भुवि ।
अहो भाग्यं परं मन्ये कृष्णवन्नृपतिर्गृहे ॥३३॥
अहो भाग्यं परं राजन् साधुवद् वर्तसे सदा ।
मृषा मिथ्या वर्तसे न सत्यव्रतः प्रवर्तसे ॥३४॥
सत्यं वदसि सत्यं च शृणोषि विन्दसे ऋतम् ।
सत्यं ब्रह्म चिन्तयसि मोक्षे स्थितोऽसि सर्वथा ॥३५॥
कालकवलतां प्राप्ताः पूर्वनृपतयोऽभुवाः ।
न तथा भाससे राजन् कालपाशातिगो ह्यसि ॥३६॥
मृत्युः सर्वेषु यश्चास्ते स नास्ति वज्रविक्रमे ।
वार्धक्यं याम्यकष्टानि न सन्ति वज्रविक्रमे ॥३७॥
अनादिश्रीकृष्णनारायणतुल्यो विभासि मे ।
अहो कृष्ण अहो कृष्ण अहो कृष्ण हरे हरे ॥३८॥
अहो राजन्नहो राजन्नहो राजन् हरे हरे ।
कृष्णनारायण कृष्णनारायण नरायण ॥३९॥
बालकृष्णाऽनादिकृष्णनारायण रमायण ।
अहो राजन्नहो कृष्णनारायण रमापते ॥४०॥
अहो विष्णो अहो श्रीमद्बालकृष्ण श्रियः पते ।
अहो भाग्यं मम राजन् कृष्ण कृष्ण हरे हरे ॥४१॥
अहो भाग्यं नृपतेश्च कृष्ण कृष्ण हरे हरे ।
अहो स्वामिन्नहो स्वामिन्नारायण जगत्पते ॥४२॥

अहो यामिन्नहो यामिन्नारायण प्रभोपते ।
अहो कृष्णहरे स्वामिन् पद्मावतीसतीपते ॥४३॥
अहोऽक्षरपते स्वामिन् बदरीसुगुणापते ।
दुःखहाश्रीपते राधामंजुलीमाणिकीपते ॥४४॥
मुक्तमुक्तानिकाहंसास्वामिन् जयादयापते ।
जयाललिताकान्तश्रीसर्वधामपते पते ॥४५॥
आत्ममोक्षपते लक्ष्मीसंहिताख्यकथापते ।
मामुद्धर कृपासिन्धो वज्रविक्रममुद्धर ॥४६॥
एवं ब्रह्मात्मभावेन जयमानस्तु बन्दकः ।
तुष्टाव कंभराजालं गोपालतनुजं प्रभुम् ॥४७॥
नृपतिं चापि तं कृष्णनारायणैक्यभावतः ।
राजा कृष्णाभिधाः श्रुत्वा तूर्णं निष्कल्मषोऽभवत् ॥४८॥
अज्ञानं विगतं राज्ञो मोहो नष्टोऽभवत्तदा ।
नष्टो रागो निजश्लाघाविषयो विरमोऽभवत् ॥४९॥
मिथ्याभिमाननाशेन प्रकाशोऽस्य व्यजायत ।
कथायाः श्रवणेच्छा च दर्शनेच्छा हरेस्तथा ॥५०॥
कालमृत्युजराव्याधिनाशेच्छा च व्यजायत ।
वैराग्यश्चाऽभवत्तस्य नाशशीलाच्छरीरतः ॥५१॥
विवेकं प्राप्तवान् राजा श्रुत्वा मृषाप्रशंसनम् ।
अहोऽयं जायमानो मे कुरुते यत्प्रशंसनम् ॥५२॥
तदंशोऽपि मयि नास्ति मयि शक्तिर्न विद्यते ।
विद्यते नैव भक्तिश्च नारायणबलं न च ॥५३॥
कालपाशस्य योग्योऽहं मरिष्यामि क्षणान्तरे ।
कीटवद्वर्तमानोऽस्मि सृष्टौ मे गणनाऽस्ति न ॥५४॥
नाऽहं मृत्युविहीनोऽस्मि कालस्य कवलोऽस्म्यपि ।
मायायां वर्तमानोऽस्मि मोक्षे नैव स्थितोऽस्मि च ॥५५॥
चिन्तयामि न चात्मानं न ब्रह्म न नरायणम् ।
न पालयामि सत्यं च मिथ्यायां संरतोऽस्मि च ॥५६॥
न वर्तेऽहं साधुवच्च कुतस्तरां तु कृष्णवत् ।
खण्डराजोऽपि नैवाऽस्मि सार्वभौमः कुतस्तरः ॥५७॥
नाऽऽज्ञायां मम देहोऽस्ति देवाद्यास्तु कुतस्तराः ।
दुर्गुणोऽहं सदा चाऽस्मि सद्गुणस्तु कुतस्तरः ॥५८॥
नास्तिकोऽहं महामूर्खोऽहं मृषाकीर्तिप्रियोऽस्म्यहम् ।
मायाजाले विक्लिष्टोऽहं प्रमत्तोन्मत्तवत्तथा ॥५९॥
अहो नारायणः कृष्णः स्मर्यते न मया हरिः ।
इच्छामि भवितुं नारायणतुल्यो मृषाभवः ॥६०॥
पापं करोमि सततं पापात्मा कृष्णशत्रुवत् ।
महापाप्यतिपापात्मा कारयामि प्रशंसनम् ॥६१॥

नास्ति पूगीफलं हस्ते वाञ्छामि शेवधीशताम् ।
निर्मलं हृदयं नास्ति समिच्छामि सुरेशताम् ॥६२॥
मलिनं सर्वथा वर्ष्म मन्ये शिवाधिकं खलः ।
कीदृशोऽहं पशुश्रेष्ठोऽधमो मिथ्याभिमानवान् ॥६३॥
धन्योऽयं जयमानो हि भक्तोऽस्मि परमात्मनः ।
मम मोक्षकरश्चास्मि गुरुश्चाप्यस्ति मेऽधुना ॥६४॥
प्रशंसामिषतो येनाऽऽहितं ज्ञानं मयि ध्रुवम् ।
विवेकश्चाहितस्तेन मृषागर्वविनाशकृत् ॥६५॥
स्मारिता देवताः सर्वाः स्मारितः श्रीनरायणः ।
स्मारिता श्रीसंहितायाः कथा पापविमोचिनी ॥६६॥
अवश्यं पापनाशार्थं गच्छामि तत्कथास्थलम् ।
पावनीं साधुतां लब्ध्वा करिष्ये भजनं हरेः ॥६७॥
तरिष्यामि भवाब्धिं च करिष्ये स्वात्ममोक्षणम् ।
मृषापापं क्षालयिष्ये ग्रहीष्ये सत्यवर्तनम् ॥६८॥
नामश्रवणमात्रेण हृदयं पूततां गतम् ।
तत्कथाश्रवणात् किं किं स्यान्मे श्रेय उत्तमम् ॥६९॥
जयमानो जयत्वेव मे विवेकप्रदो गुरुः ।
बन्दका वन्दिनः सन्तु तादृशा मोक्षदर्शकाः ॥७०॥
अज्ञानहारकाः सन्तु न सन्तु शंखवादिनः ।
मिथ्यागालफटा मा च सन्तु सन्तु ऋतंवदाः ॥७१॥
विचार्येत्थं नृपः प्राह शिष्यवद् बन्दिनं गुरुम् ।
अहो विवेकदानेन तारितोऽहं त्वया गृहे ॥७२॥
प्रशंसा या त्वया प्रोक्ता श्रुता मयाऽतिरागिणा ।
श्रुतोत्तरं मम नष्टो रागस्तृष्णा लयं गता ॥७३॥
मृषा सत्यं च यत्तत्त्वं प्रकाशितं तु मे हृदि ।
दासोऽस्मि ते गुरुस्त्वं च संसारोद्धारकृन्मम ॥७४॥
वद मे क्व हरिस्त्वास्ते कृष्णनारायणः प्रभुः ।
कथा क्व वर्तते लक्ष्मीनारायणीयसंभवा ॥७५॥
श्रवणेच्छा वर्तते मे मृषपापं व्यपोहितुम् ।
मोक्षेच्छा वर्तते बन्दिन् नय यत्र कथामृतम् ॥७६॥
इत्येवं वदतस्तस्य नृपतेर्दर्शनं हरेः ।
अजायत प्रकाशे स्वहृदये परमात्मनः ॥७७॥
कृष्णनारायणस्तूर्णं प्रदर्श्य रूपमात्मनः ।
तिरोभवद्धि हृदये वृत्तीराकर्षयन् द्रुतम् ॥७८॥
मूर्तिदर्शनमात्रेण राजा परवशोऽभवत् ।
ननर्त बहुधा तत्र देहमानविवर्जितः ॥७९॥
अगायत हरिकृष्णकृष्णनारायणप्रभुम् ।
सतालगालवाद्येन कृष्णकृष्ण हरे हरे ॥८०॥
जयमानोऽपि तेनैव सार्धं संकीर्तनं व्यधात् ।
प्रमोदसंभृतश्चापि राज्ञा सह ननर्त ह ॥८१॥
अहो बदरीप्रिये कृष्णनारायणस्य वै कृपा ।
कथाकृष्णप्रशंसाभिः कृष्णश्चोपस्थितोऽभवत् ॥८२॥
एवं मुहूर्तमात्रं तौ नृत्यं गीतं प्रचक्रतुः ।
ततः शान्तौ सुखानन्दभृतौ विरेमतुः क्षणम् ॥८३॥
परस्परं च कथयामासतुः पारमेश्वरम् ।
दर्शनं च महानन्दं महासौभाग्यमात्मनोः ॥८४॥
शुश्रुवुश्चाऽन्यमनुजा नरा नार्यस्तदा गृहे ।
आयाता ये महाश्चर्यपरा द्रष्टुं नृपं तदा ॥८५॥
राजा बन्दी बन्दिपत्नी बन्दिपुत्रास्तथा स्त्रियः ।
पुत्र्यश्च बान्धवाश्चापि शर्करानगरं प्रति ॥८६॥
गन्तुं सज्जा बभूवुस्ते नृपो राज्ञी च तत्सुताः ।
पुत्र्यो राज्ञ्यास्तथा लोकाः प्रजा नार्यो नरा अपि ॥८७॥
सहस्रशो मानवास्ते शर्करानगरं प्रति ।
गन्तुं सज्जा बभूवुश्चाऽमात्यप्रधानकर्मिणः ॥८८॥
दास्यो दासाः कर्मचारा भटाः संरक्षकास्तथा ।
गजवाहनसंयुक्ता अश्ववाराश्च निर्ययुः ॥८९॥
बहुस्वर्णं धनं धान्यं पुष्कलं सह जगृहुः ।
दानयोग्याऽम्बरपात्रभूषाकम्बलकानपि ॥९०॥
सोत्सवा बहवो लोका हलहलेति वादिनः ।
निर्ययुस्ते तीर्थयात्राकृते कथास्थलीं प्रति ॥९१॥
भजनं चक्रिरे मार्गे महोद्यानमुपाययुः ।
कथामण्डपसान्निध्ये सहस्रशस्तु ते जनाः ॥९२॥
महोद्याने निवासांश्च यथायोग्यं प्रचक्रिरे ।
स्नात्वा तीर्थजले देवान् प्रपूज्य मण्डपं प्रति ॥९३॥
ययुस्ते पूजनं चक्रुः संहितायाः कथोत्तरे ।
व्यासस्य पूजनं चक्रुर्लोमशस्य सतां तथा ॥९४॥
आरात्रिकं प्रचक्रुश्चोपदा न्यधुः पुरस्तदा ।
व्यासाद्याः स्वागतं चक्रुर्ददुः प्रसादभोजनम् ॥९५॥
अथ राजादयः सर्वे ययुर्निवासमुत्सुकाः ।
प्रातः सर्वे समागत्य व्यासात्तथैव लोमशात् ॥९६॥
मन्त्रं धुन्यं स्रजं चैव जगृहुस्तौलसीं मुदा ।
वैष्णवास्ते ततो जाताः पावनाः शरणागताः ॥९७॥
शुश्रुवुस्ते कथां नित्यं पुपूजुर्व्यासमन्वहम् ।
ऋषीन् साधून् सतीः साध्वीः सिषेविरे हरिं प्रभुम् ॥९८॥
भेजिरे परमात्मानं बालकृष्णं नरायणम् ।
कृष्णनारायण कृष्णनारायण नरायण ॥९९॥

चक्रिरे सर्वदा धुन्यं प्रसादं च जलामृतम् ।
सर्वे बुभुजिरे बालवृद्धयुवजनाः सदा ॥१००॥
तेन जाताः पावनास्ते क्षपिताघौघसञ्चयाः ।
सात्त्वताः परमास्तेषां मासान्ते कृष्ण आययौ ॥१०१॥
प्रभुर्नारायणो दिव्यमूर्तिर्विमानमास्थितः ।
सर्वेषां पश्यतां भूमाववाततार चाम्बरात् ॥१०२॥
जलं चिक्षेप परितस्तेषामुपरि गोपजः ।
सर्वे दिव्यदृशो जाता भालयामासुरच्युतम् ॥१०३॥
उक्ता भगवता गन्तुं नृपाद्याश्चाऽक्षरं पदम् ।
सहस्राधिजनाः सज्जा बभूवुर्गन्तुमक्षरम् ॥१०४॥
दिव्यान् देहान् विधायैव नीत्वा विमानके च तान् ।
शेषाँस्त्यक्त्वा कृष्णनारायणोऽक्षरं जगाम ह ॥१०५॥
ज्येष्ठकृष्णस्य पञ्चम्यां निन्ये तानक्षरं हरिः ।
महाश्चर्यमिदं जातं ख्यातं सर्वं व्यजायत ॥१०६॥
बद्रिके शेषवर्गास्तु महाभागवतोत्तमाः ।
कथां श्रुत्वा ययुर्नैजं द्वेषरागजयं पुरम् ॥१०७॥
तेऽपि कालेन गोविन्दं भजित्वा चाऽक्षरं ययुः ।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिर्दिवं मिलेत् ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
जयमानाख्यबन्दिजनस्य स्तवनेन प्राप्तवैराग्यविवेकस्य
वज्रविक्रमनृपतेस्तत्प्रजानां च कथाश्रवणादिभि-
र्मोक्षणमित्यादिनिरूपणनामा त्रिसप्तति-
तमोऽध्यायः ॥ ७३ ॥

श्रीनरनारायण उवाच—
शृणु बद्रीप्रिये लक्ष्मि कथां सूतस्य मोक्षदाम् ।
पञ्चनदे शुभे देशे सिन्धुचीनापगान्तरे ॥ १ ॥
संगमे भूतले त्वासीन्नगरी पञ्चनादिनी ।
तस्या राजाऽभवन्नाम्ना सत्ताब्धिसिंह उत्तमः ॥ २ ॥
महापराक्रमः ख्यातशौर्यः प्रजाप्ररक्षकः ।
हस्तिवाजिमहायानविमानादिचभूपतिः ॥ ३ ॥
प्रजापालो धर्मबुद्धिर्ब्रह्मकर्मपरायणः ।
तस्य स्वस्य रथवाहः सूतोऽभवत् सुकेसरी ॥ ४ ॥
सोऽपि भूपसमो देहे भाने मन्त्रे रणे मतौ ।
सूतकार्यकरो नित्यं राज्ञः प्रियतरोऽभवत् ॥ ५ ॥
स राजा रथमास्थाय सूतनोदितमुत्तमम् ।
मृगयार्थमरण्यानीं विचचार नदीतटे ॥ ६ ॥
तत्र पातुं जलं सिन्धुतटं ययौ रथान्वितः ।
विशश्राम पपौ वारि सूतो वारि पपौ ततः ॥ ७ ॥
अश्वाः पपुर्जलं श्रान्ता मुक्ता रथयुगात् क्षणम् ।
वटच्छायातले राजा सूर्यतापेन नोदितः ॥ ८ ॥
लेभे निद्रां मनाक् तावत् सर्पो वटात् पपात ह ।
नृपकण्ठोपरि श्वेतवर्णोऽदशन्नृपं द्रुतम् ॥ ९ ॥
सूतो ददर्श सर्पं तं दशन्तं दीर्घविग्रहम् ।
नेमे दूरात् सूतवर्यो जानन् देवसमं नृपम् ॥१०॥
'नमस्ते श्वेतवर्णाय शेषरूपाय भोगिने ।
दंशते मम राजानं विष्णुरूपाय ते नमः ॥११॥
कालरूपाय रुद्राय रौद्राय प्राणहारिणे ।
नमस्ते दुःखहाराय रक्षाकर्त्रे मुहुर्नमः ॥१२॥
एषोऽहं नृपतेः सूतो भृत्योऽस्मि किंकरस्त्विह ।
अपरो न सहायोऽस्ति दयालो मां प्ररक्षय ॥१३॥
ईदृशे निर्जनेऽरण्ये जीविते मयि किंकरे ।
स्वामिनो मरणं योग्यं नैव नैव च नैव च ॥१४॥
ततो मत्स्वामिनं सर्प समुद्धर विषानलात् ।
तत्स्थाने मां दश सर्प स्वस्ति मे ते मुहुर्नमः ॥१५॥
राजार्थे देवतार्थे च गुर्वर्थे गोकृते तथा ।
पित्रर्थे प्राणदाता यः स स्वर्गं दिव्यमश्नुते ॥१६॥
नष्टे नृपे मम मृत्युर्ध्रुवश्चात्र भविष्यति ।
तत्पापं ते भवेत् सर्प तस्मादुद्धर मन्नृपम् ॥१७॥
नृपोद्धारे मम मृत्यौ पापं ते न भविष्यति ।
मृते स्वामिनि भृत्यस्य जीवनं गर्हितं क्षितौ ॥१८॥
तस्माद् रक्षय भोगीन्द्र दयां कृत्वा ममोपरि ।
विषं वाराय शीघ्रं तु यावन्नियान्ति नाऽसवः ॥१९॥
त्वं वने विद्यसे स्वामी वटस्थायीति तर्कये ।
तवाऽतिथिस्वरूपोऽहं नृपस्तेऽतिथिरस्ति च ॥२०॥
आतिथेयो भवान् भूत्वा प्ररक्षतु क्षितीश्वरम् ।
विधेहि स्वागतं सर्प जीवदानेन भूपतेः ॥२१॥
न चेत् पापं भवेत्तेऽत्र पुण्यनाशो भवेत्तव ।
आशाभग्नोऽतिथिर्यस्य गृहात्प्रतिनिवर्तते ॥२२॥
पापं दत्वा पुण्यमग्र्यादायातिथिः स गच्छति ।
धन्यास्ते गृहिणः सर्प पूज्यन्तेऽतिथयोऽन्वहम् ॥२३॥
येषां गृहेषु पूजान्नवस्त्रवारिप्रदानकैः ।
जीवदानसमं दानं परं दानं न विद्यते ॥२४॥
सर्वदानकृतं पुण्यमभयस्य प्रदे भवेत् ।
सर्वपापानि भयदे तिष्ठन्ति नाऽत्र संशयः ॥२५॥
भयं कार्यं न कस्यापि सूक्ष्मस्यापि तु देहिनः ।
भयदस्य फलं स्याद्वै प्रतिभयं न संशयः ॥२६॥

तस्माद् रक्षय राजानं सर्प त्वं वटसंग्रही ।
न चेत् प्राणभयं तेऽपि मम बाणेन विद्धिहि ॥२७॥
एकस्य पश्चादुभयोर्ध्रुवं निश्चितं त्विह ।
दत्त्वा प्राणं तव प्राणाञ्जीत्वा यास्ये यमालयम् ॥२८॥
यदाऽत्र शीघ्रं कर्तव्यं शर एषोऽनुसन्धितः ।
इत्युक्त्वा वल्लिके धनुः सगुणं सशरं तथा ॥२९॥
विधाय क्रोधमापन्नः प्रतीक्षते हितं वचः ।
तावत् सर्पो भीत इव प्रत्युवाच तु सान्त्वयन् ॥३०॥
शृण्वतिथे तथ्यमत्र ततो योग्याय चार्हसि ।
अविचार्यकृतः शीघ्रं भयमापद्यते क्षतम् ॥३१॥
शुकेसरिन् पुरा सृष्टौ ब्रह्मा रुद्राय सृष्टये ।
आज्ञां चकार रुद्रोऽसौ न स्वीचकार वै तदा ॥३२॥
स्वयं ब्रह्मा तु विविधाः प्रजाः ससर्ज शान्तिमान् ।
अथोत्पन्नाः प्रजाश्चासन्नाकल्पस्थायिजीवनाः ॥३३॥
नाऽप्ययवर्धन्त च नाशं न प्रापुर्वै यदा तदा ।
वृद्ध्यर्थं स निजाद्देहात् प्रजाः ससर्ज मैथुनीः ॥३४॥
युगलानि सहस्राणि सहस्राणां शतानि च ।
बहवः प्रजास्ता उत्पन्ना युगलेभ्योऽर्बुदाऽर्बुदम् ॥३५॥
तासामसंख्यसंतत्या प्रपूरितमिदं जगत् ।
तासां पुष्टिं चकारैव विष्णुर्लक्ष्मीपतिः प्रभुः ॥३६
न नाशोऽस्ति तदा तासां संकुलितं जगद् यदा ।
तदा ब्रह्मा तु रुद्राय प्रजानाशकलां ददौ ॥३७॥
रुद्रः प्राह न मे हिंसा रोचते भयकारिणी ।
हिंसाफलं तु नरक शापो दुःखं तथोल्वणम् ॥३८॥
क्रूरं कर्म दयाहीनं हिंसनं प्राणघातनम् ।
न तत् करिष्ये दोषाढ्यं पापाढ्यं वै प्रजापते ॥३९॥
तदा ब्रह्मा विचार्यैव रुद्रमुवाच तत्क्षणम् ।
कालं मृत्युं जरां व्याधीन् सृजामि पश्य नाशकान् ॥४०॥
ते विनाशान् करिष्यन्ति मा ते हिंसा भवेच्छिव ।
निमित्तेन विनाशः स्यात् त्वं तन्निरीक्षको भव ॥४१॥
इत्युक्तः शङ्करो देवो जगृहे ब्राह्मणो वचः ।
संहारकर्मणामाधिदैवत्वं जगृहे हरः ॥४२॥
ततो ब्रह्मा ससर्जोक्तान् कालमृत्युजराधिकान् ।
क्रूरान् निमित्तभूतांश्च देहिनो नः ससर्ज च ॥४३॥
सर्पान् व्याघ्रान् वृश्चिकांश्च विषाक्तान् देहिनस्तथा ।
ज्वरान् रोगानन्दधराकीः ससर्ज मारकानजः ॥४४॥
तेभ्योऽस्मभ्यो ददावाज्ञां येषां मृत्युर्यथा मतः ।
येन निमित्तमात्रेण नाशय्यं तान् तथैव ह ॥४५॥

एवमाज्ञां प्रदायैव शङ्कराय समर्पिताः ।
ते वयं नाशकर्तारो नष्टायुषां न चान्यथा ॥४६॥
प्रेर्यन्ते शङ्करेणैव काला रोगा अथाक्रयः ।
विषाढ्या रूपवन्तश्च भूत्वा भूत्वा प्रजासु च ॥४७॥
विचरामो नाशरेखां नाशक्षणं विलोक्य च ।
दशामो नान्यथा सूत गतायुर्नृपतिस्त्विह ॥४८॥
दृष्टो मया न दोषो मे न वयं भयशालिनः ।
ये येऽस्माकं महीमाना भवन्त्यतिथयस्तथा ॥४९॥
कुर्मस्तेषां तु सम्मानं विषार्पणैर्हि मृत्यवे ।
कृतो मया चातिथेयः सत्कारो योऽस्तिमद्गृहे ॥५०॥
राजा गतो हि निधनं न पुनः प्राणमेष्यति ।
सूत ते जीवनं चास्ते शर्वं नय प्रयाहि च ॥५१॥
यदि त्वं शरसन्धानैर्मम प्राणान् हरिष्यसि ।
नूत्नेन कर्मणा त्वं च प्राणान् त्यक्ष्यसि चात्र वै ॥५२॥
मानुषाणां तु शस्त्राणां दैवे प्रवर्तनं नहि ।
सर्पोऽहं कालरूपोऽहं तथ्यं वच्मि प्रयाहि च ॥५३॥
विरमाऽस्मात् कर्मणश्च मा स्वायुष्यं विनाशय ।
विचार्याऽत्र यथायोग्यं यद् विधेयं विधेहि तत् ॥५४॥
एषोऽस्मि वटशाखायां निर्भीको हुद्रुतं कुरु ।
कर्तुंस्तु साहसस्यैवापद्यन्ते दुःखकोटयः ॥५५॥
वयं नियामकाः सृष्टेस्त्वं नियाम्योऽसि सद्नृपः ।
हिंसायां मम पापं न तव पापं तु वै ध्रुवम् ॥५६॥
हिंसायां मे न नरकं ते नरकं ध्रुवं भवेत् ।
राज्ञा कार्यो विरोधो न जनेन सुखमिच्छता ॥५७॥
विरोधो नापि दैवेन भाग्येनापि च नैव ह ।
यदापतेत् तत्सोढव्यं यथाकर्म ह्युपस्थितम् ॥५८॥
सूत नैव हि कर्तव्यो विरोधो वह्निना सह ।
न कालेन सह कार्यो विरोधः सुखमिच्छता ॥५९॥
न मृत्युना नेश्वरेण न शास्त्रा न स्त्रिया अपि ।
न मूर्खेण न क्रुद्धेन न शस्त्रधारिणाऽपि च ॥६०॥
न समर्थेन कर्तव्यो विरोधो मृदुना सता ।
न शस्त्रेण न भूतैश्च न चमत्कारकारिणा ॥६१॥
बलिना न विरोद्धव्यं न माया जनकेन च ।
गुरुणा न विरोद्धव्यं तपस्विना न साधुना ॥६२॥
बहुभिर्न विरोद्धव्यं क्षेमं कुशलमिच्छता ।
पतिना न विरोद्धव्यं न गृहस्वामिना क्वचित् ॥६३॥
न पिशाचेन योद्धव्यं रक्षसा दानवेन न ।
न सिंहेन गजेनापि न सर्पेण विषेण च ॥६४॥

न दुष्टेन च योद्धव्यं न निर्दयेन शत्रुणा।
तत्र धर्मो न वै तिष्ठेच्छठे दुष्टे च निर्दये ॥६५॥
शरं संहर राजानं नयोद्ध्वदैहिकं कुरु।
यद्वा मुञ्च शरं शीघ्रं मयि यत्फलमाप्नुयाः ॥६६॥
विवेकेन विदध्याद्वै तद्धीनस्त्वापदां पदम्।
मनुष्योऽसि च मेधावी यद् योग्यं तत् समाचर ॥६७॥
नाऽयं हतो मया सूत राजा हतः स्वकर्मणा।
नाऽहं घातमवाप्स्यामि शरेण तव केसरिन् ॥६८॥
प्रत्युत तव घातार्थः शरश्चात्र भविष्यति।
ममाऽहमिति मोहं त्वं मुञ्च मा कुरु मोहनम् ॥६९॥
क्व ते राजा क्वाऽस्य सूतः सर्वं वै कर्मबन्धनम्।
भौतिके पुत्तले बद्धा आत्मानो निजकर्मभिः ॥७०॥
भुञ्जते स्वकृतं कर्म यावद् देहे वसन्ति हि।
तत् त्यक्त्वा चापरे देहे पुनः कर्माणि भुञ्जते ॥७१॥
मयि सर्पे न विश्वासस्ते यदि मुञ्च मार्गणम्।
कृत्वा परीक्षां च ततो मौढ्यं स्वयं प्रहास्यसि ॥७२॥
इत्युक्त्वा बद्रिके सर्पो विरराम कथानकात्।
सूतो विचार्य सहसा त्यक्त्वा धनुः शरं तथा ॥७३॥
एषोऽहं शरणे तेऽस्मि सर्पदेव शुचं हर।
देवोऽसि कालकालोऽसि कालोऽसि शंकरोऽसि वा ॥७४॥
योऽसि सोऽसि ऋतं मन्ये कृतं त्वया यथातथम्।
तथापि वन्दनां कुर्वे हितं मे स्याद् यथा तथा ॥७५॥
नृपतेश्च हितं स्याद् यत् दंशस्ते विफलोऽपि न।
तथा दैवनियोगेन विधेहि सर्पराडिह ॥७६॥
इत्युक्त्वा बद्रिके सूतो दण्डवत्प्रचकार तम्।
सर्पोऽपि कालरूपोऽपि हितं व्यचिन्तयत् क्षणम् ॥७७॥
उवाच सूत भीं त्यक्त्वोत्तिष्ठ नृपं समाहय।
विषं हरामि चाद्याऽत्र नृपो जीवतु चाधुना ॥७८॥
किन्तु धारय मन्त्रं त्वं नृपं श्रावय सत्वरम्।
पुण्येन तेन कालोऽहं हराम्यस्य न जीवनम् ॥७९॥
इत्युक्त्वा बद्रिके कालः सर्पो मन्त्रं ददौ तदा।
'ॐ नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥८०॥
'ॐ बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि।
तन्नः श्रीशः प्रचोदयादि'ति मन्त्रं च वै ददौ ॥८१॥
'कृष्णनारायण कृष्णनारायण नरायण।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥८२॥
नामधुन्यं ददौ चापि सर्पः सूताय वै तदा।
सूतः श्रीनृपतेः कर्णे श्रावयामास सत्वरम् ॥८३॥
तावद् राजा समुत्तस्थौ निर्विषः स्वस्थदेहवान्।
सर्पश्चैनं नृपं प्राह याहि राजन् कथास्थलम् ॥८४॥
लक्ष्मीनारायणसंहितायाः शृणु कथां शुभाम्।
कुरु सेवां सतां चापि ततः श्रेयः परं व्रज ॥८५॥
सूतादथ विशेषेण वृत्तान्तं नृपतिः स्वकम्।
ज्ञात्वा ददौ धन्यवादान् सूताय भोगिनेऽपि च ॥८६॥
नमस्कृत्य द्रुतं नैजरथेन गृहमाययौ।
गृहिणीं दासदासीश्च नीत्वा सह ययौ कथाम् ॥८७॥
पुपूज परमात्मानं प्रभुं कृष्णं सुमूर्तिकम्।
व्यासं च लोमशं चापि साधून् पुपूज भूपतिः ॥८८॥
ददौ दानान्यनेकानि कथां शुश्राव भावतः।
भोजनानां प्रदानैश्च सेवां सतां चकार सः ॥८९॥
सूतेन स्मारितो राजा भजनं प्रचकार ह।
प्रसादं पादसलिलं जग्राह नृपतिर्मुहुः ॥९०॥
कुटुम्बसहितो बद्रि पावनः सम्बभूव ह।
मृत्युभयात् कृष्णमूर्तौ लीनवद् वर्तते सदा ॥९१॥
ज्येष्ठे कृष्णैकादश्यां तु मध्यान्हे भगवान् हरिः।
अनादिश्रीकृष्णनारायणो विमानमास्थितः ॥९२॥
आययौ तस्य मोक्षार्थं राजा सज्जो बभूव च।
ददौ दानानि सर्वाणि नमस्कृत्य समस्तकान् ॥९३॥
कृष्णनारायणाऽऽहूतो विमानमारुरोह सः।
सूतः सुकेसरी चापि राज्ञी रक्षावती तथा ॥९४॥
पुत्राः पुत्र्यो भृत्यवर्गा दासा दास्यो नृपाय वै।
जयवादान्नमोवादान् ददुर्मोक्षप्रगामिने ॥९५॥
सर्वेषां पश्यतां राजा सप्ताब्धिसिंहनामकः।
दिव्यो भूत्वा बद्रिके स ययौ धामाऽक्षरं हरेः ॥९६॥
राज्ञ्याद्याश्च नृपस्यौर्ध्वदैहिकं प्रव्यधुस्ततः।
सूतः सुकेसरी राज्ञी रक्षावती सुतादयः ॥९७॥
वैष्णवाः परमा भूत्वा श्रुत्वा कथां प्रमोक्षिणीम्।
ययुर्नैजां हि नगरीं सैन्धवीं पद्मनादिनीम् ॥९८॥
भजित्वा वल्लभं कृष्णं प्रभुं गोपालबालकम्।
अनादिश्रीकृष्णनारायणं पद्मावतीपतिम् ॥९९॥
ययुः कालेन सर्वे ते हरेर्धामाऽक्षरं परम्।
एवं बद्रीप्रिये राजा मृतो मन्त्रेण जीवितः ॥१००॥
कथां श्रुत्वा हरिं प्राप्य ययौ ब्रह्माऽक्षरं पदम्।
पठनाच्छ्रवणादस्य चिन्तनादपि सर्वथा ॥१०१॥
कालमायापापकर्मविमुक्तिः संभवेत्तथा।
भुक्तिर्मुक्तिर्भवेच्छ्रेष्ठा यथेष्टाः स्युः समृद्धयः ॥१०२॥

कृष्णकथाबलं बद्रि सर्वबलाधिकं मतम् ।
ततोऽधिकं कृष्णकृपाबलं सर्वार्थसाधकम् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने सर्पदष्टस्य सप्ताब्धिसिंहनृपते सूतदत्तमन्त्रधुन्ययोगेन सजीवनं कथाश्रवणेन च मोक्षणमित्यादिनिरूपण-नामा चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये लक्ष्मि मागधस्य कथां शुभाम् ।
अमृताख्यनगरे वै तदाऽऽसीन्मागधो जनः ॥ १ ॥
नाम्ना तु हर्षनयनो वंशोपवंशबोधवान् ।
वंशोपवंशपूर्वेषां चरित्राख्यानकारकः ॥ २ ॥
राज्ञां पञ्चनदीयानां सिन्धुजानां विशेषतः ।
स शुश्राव जनेभ्यो वै चमत्कारं कथोद्भवम् ॥ ३ ॥
राज्ञां प्रजानां बह्वीनां मोक्षणं पापनाशनम् ।
ततो विचार्य सहसा कथाऽऽकर्णनहेतवे ॥ ४ ॥
आययौ शर्करापुर्यां कथामण्डपमागतः ।
नेमे सर्वान् संहितां च व्यासं श्रीलोमशं हरिम् ॥ ५ ॥
साधुजनान् सतीः साध्वीर्वैष्णवान् नृपतींस्तथा ।
श्रोतॄन् राज्ञीजनांश्चापि नेमे शुश्राव सत्कथाम् ॥ ६ ॥
कथान्ते स तु वंशान् वै नारायणसमुद्भवान् ।
जगाद भक्तियुक्तश्च रञ्जयामास मानवान् ॥ ७ ॥
'अनादिश्रीकृष्णनारायणः श्रीपरमेश्वरः ।
एको दिव्येश्वरकोट्यवतारकोटिकारणम् ॥ ८ ॥
अक्षरे परमे धाम्नि राजते पुरुषोत्तमः ।
तद्वंशे प्रथमं कृष्णो व्यासुदेवो व्यजायत ॥ ९ ॥
ततो नारायणो जातो महाविष्णुस्ततः परम् ।
ततो विराड् विराजाश्च ब्रह्मविष्णुमहेश्वराः ॥१०॥
ब्रह्मतः सनकाद्याश्च ऋषयो मानवादयः ।
कुंकुमवापिकाक्षेत्रे लक्ष्मपद्मसरोवरे ॥११॥
अनादिश्रीकृष्णनारायणः श्रीभगवान् प्रभुः ।
कंभराश्रीमहालक्ष्मीसुतो गोपालनन्दनः ॥१२॥
लक्ष्मीराधारमाकृष्णाप्रज्ञापद्मावतीपतिः ।
माणिकीसुखदालक्ष्मीललिताकमलापतिः ॥१३॥
ब्रह्मप्रियापतिर्मुक्तपतिर्मुक्तानिकापतिः ।
हारिप्रियापतिः सर्वपतिर्ब्रह्मपतिः प्रभुः ॥१४॥
वर्तते विप्ररूपोऽद्य सर्वगोत्राऽग्रधाश्वतः ।
गीयतेऽत्र हरिर्लक्ष्मीनारायणकथादिभिः ॥१५॥

जयत्यत्र महाराजराजाधिराजपुंगवः ।
विधाता श्रेयसां कर्ता मोक्षस्य दुःखनाशनः ॥१६॥
शरणागतरक्षाकृत् जयत्वानन्दशेवधिः ।
परब्रह्म हरिकृष्णो नित्यं विजयतेतमाम् ॥१७॥
साधवो विजयन्ते च वैष्णवा विजयन्त्यति ।
एवं श्रीबद्रिके हर्षनयनः श्रीपतिं हरिम् ॥१८॥
अभिष्टूय सभार्यां स दण्डवत् प्रचकार ह ।
तुलसीदलपुष्पाणि फलानि शर्करास्तथा ॥१९॥
पूगीफलं च मुद्रां च कानकीं चाम्बरं शुभम् ।
व्यासाय च तथा संहितायै न्यधात् प्रपूज्य च ॥२०॥
नमश्चक्रे प्रसादं च जगृहे चरणामृतम् ।
मन्त्रं च नामधुन्यं च जगृहे व्यासदेवतः ॥२१॥
जजाप मन्त्रं नित्यं स चक्रे धुन्यप्रकीर्तनम् ।
शुश्राव च कथां नित्यमेकतानोऽभवत् सदा ॥२२॥
पावनः पूर्णभाग्यश्च समजायत मागधः ।
ज्जेष्ठकृष्णैकादश्यां तु सायं भक्त्या वशीकृतः ॥२३॥
अनादिश्रीकृष्णनारायणो विमानमास्थितः ।
आययौ तं समानेतुं दिव्यः श्रीसेवितो हरिः ॥२४॥
मागधं हर्षनयनं संकृत्वा दिव्यविग्रहम् ।
अवस्थाप्य विमाने तं निन्ये धामाऽक्षरं निजम् ॥२५॥
शृणु बद्रीप्रिये देवि कथां चान्यां प्रपावनीम् ।
दासस्तत्राऽभवद् वृद्धः संहितामण्डपस्थले ॥२६॥
रात्रौ रक्षाकरो नित्यं जागर्ति यश्च रक्षति ।
नित्यं स भजते कृष्णं कथां शृणोति भावतः ॥२७॥
प्रदक्षिणं निशान्ते च करोति संहितासनम् ।
पत्रं पुष्पं फलं नित्यमर्पयत्यपि भावतः ॥२८॥
करोति कीर्तनं नित्यं भुंक्ते प्रसादमुत्तमम् ।
पिबत्यपः प्रसादोत्थाः सतां प्रसादमश्नुते ॥२९॥
सेवां व्यासस्य देहादिसंवाहनं करोत्यपि ।
मार्जनं सदसश्चापि वस्त्रक्षालनमित्यपि ॥३०॥
वैष्णवेभ्य इष्टवस्तुप्रदानं प्रकरोत्यपि ।
एवंविधस्य भक्तस्य योगिदासाभिधस्य तु ॥३१॥
प्रसन्नः श्रीहरिर्जातो बद्रिके चाययौ हरिः ।
दिव्यं हंसं समारुह्य सर्वाभरणभूषितः ॥३२॥
उवाच योगिदासं त्वं सज्जो भव विमुक्तये ।
नेतुं समागतोऽस्म्यत्र हंसेन मोक्षणं प्रति ॥३३॥
योगिदासोऽतिमुमुदे श्रुत्वा वाक्यं परात्मनः ।
चचाल श्रीहरिं हंसं प्रति यावद् विमुक्तये ॥३४॥

तावन्मूर्छामवापाऽसौ देहः पपात भूतले ।
दिव्यरूपो योगिदासोऽभवन्मुक्तस्वरूपवान् ॥३५॥
हंसे निषाद्य भक्तं तं ययौ कृष्णनरायणः ।
शाश्वतं परमं धाम पश्यतां सर्वदेहिनाम् ॥३६॥
इत्येवं बद्रिके मुक्तोऽभवत् कथादिसेवया ।
योगिदासो ज्येष्ठकृष्णैकादश्यां कृष्णमानसः ॥३७॥
अथाऽन्यां ते कथां बद्रि वदामि भक्तमोक्षदाम् ।
नाम्ना सौरभसाविन्नोऽभवत्ताम्बूलकारकः ॥३८॥
शर्करानगरे बद्रि सतां हरेश्च सेवकः ।
प्रत्यहं सोऽपि सेवायां वैष्णवानां स्थिरोऽभवत् ॥३९॥
ददाति ताम्बूलकानि नित्यं सहस्रशो मुदा ।
सुगन्धिरसचूर्णादिमिश्रितानि शुभानि च ॥४०॥
नित्यं प्रातः समुत्थाय स्नात्वा चायाति मण्डपम् ।
यथास्थानं समागत्य पत्रपुष्पाक्षतादिभिः ॥४१॥
करोति पूजनं कथासंहितायास्तथा सताम् ।
व्यासदेवस्याऽर्हणां च लोमशस्याऽर्हणां तथा ॥४२॥
लालासनस्यापि पूजां पूजां वृकायनस्य च ।
नीलकर्णस्य पूजां च यवक्रीतादिपूजनम् ॥४३॥
तुषितानां हारितानां दिविमानायनस्य च ।
देवायतनमेषायतमंकणादियोगिनाम् ॥४४॥
हेमशालायनादीनां साधूनां पूजनं प्रगे ।
करोति नित्यमेवाऽयं देवानां पूजनं तथा ॥४५॥
व्यासाय संहितायैचार्पयत्येव फलान्यपि ।
ताम्बूलकानि तुलसीपत्रहारांश्च कौसुमान् ॥४६॥
मुद्गांश्चाऽक्षतगोधूमान् वस्त्रकम्बलकांस्तथा ।
यथाशक्ति ददात्येव पूजार्थां सौरभान् रसान् ॥४७॥
एवं सौरभसाविन्नो भक्त्या निष्कल्मषोऽभवत् ।
सतां देहादिसंवाहपादसंमर्दनादिकम् ॥४८॥
कृत्वा भुक्त्वा प्रसादं च पीत्वा तच्चरणामृतम् ।
श्रुत्वा कथाः संहितायाः सन्दग्धवासनोऽभवत् ॥४९॥
तं नेतुं चाक्षरे स्थाने कृष्णनारायणः प्रभुः ।
आययौ श्वेतगरुडे स्थित्वा कथास्थलं हरिः ॥५०॥
अवाततार सहसा प्रसन्नाननपङ्कजः ।
प्राह सौरभसाविन्नं प्रसन्नस्तव सेवया ॥५१॥
आयाहि परमं स्थानं दिव्यं व्योम ममाऽक्षरम् ।
श्रुत्वा सौरभसाविन्नः कूर्दयित्वा ननर्त ह ॥५२॥
धन्यं मोक्षपदं मत्वाऽऽगतं कृष्णनरायणम् ।
नत्वा त्यक्त्वा निजं देहं मनुं जपं पुराऽर्जितम् ॥५३॥
नामधुन्यं भावयंश्चाऽऽरुरोह गरुडोपरि ।
दिव्यमुक्तशरीरोऽसौ ययावम्बरवर्त्मना ॥५४॥
ज्येष्ठकृष्णस्य द्वादश्यां कथोत्तरं ययौ परम् ।
आश्चर्यं परमं दृष्ट्वा मुमुदिरेऽतिमानवाः ॥५५॥
शृणु बद्रीप्रिये देवि भक्तगाथां तथाऽपराम् ।
रंगकारकथां तत्रभूतां परमपावनीम् ॥५६॥
रंगकारोऽभवन्नाम्ना रंगिलो रंगकृत् सदा ।
रंगकलासु सर्वासु कुशलश्चित्रकोटिषु ॥५७॥
शर्करानगरे नित्यं रंगकार्यप्रजीवनः ।
देवसेवापरश्चापि साधुभक्तोऽभवत् सदा ॥५८॥
बद्रिके स कथाया वै मण्डपं समरंगयत् ।
देवचित्राणि सर्वाणि भक्तचित्राणि सर्वशः ॥५९॥
भित्तीनां रंगकार्याणि पटरंगान् सुशोभनान् ।
अकरोत् सेवया भक्त्या सतां प्रसन्नताप्तये ॥६०॥
हरेः प्रसन्नतायै च रंगसेवां तथाऽकरोत् ।
अभजत्परमात्मानं मन्त्रं जजाप नित्यशः ॥६१॥
नामसंकीर्तनधुन्यादीन्याचरत् कृतादरः ।
वैष्णवानां सेवनं च कथायाः श्रवणं व्यधात् ॥६२॥
प्रसादभक्षणं पादामृतवारिप्रपानकम् ।
पादधूलिवहनं च शरीरे भावतोऽकरोत् ॥६३॥
एवं क्षपितपापः स संप्रक्षालितवासनः ।
इयेष श्रीहरेर्धाम गन्तुं शाश्वतमक्षरम् ॥६४॥
बद्रिके व्यापकः कृष्णोऽन्तर्यामी श्रीनरायणः ।
श्वेताऽश्वाऽऽरूढ ईशेशेशेश्वरः समुपाययौ ॥६५॥
उवाच रंगिल एहि मम धामाऽक्षरं परम् ।
रंगिलः सहसा देहं त्यक्त्वा भौतिकमुत्सुकः ॥६६॥
दिव्यदेहोऽभवत् कृष्णदृष्ट्याऽश्वमारुरोह च ।
सर्वेषां पश्यतां नारायणो निन्ये तमक्षरम् ॥६७॥
रंगिलं रंगकर्तारं यान्तं वीक्ष्य सभाजनाः ।
जयवादान् प्रचक्रुश्च नेमुस्तां दिशमच्युतम् ॥६८॥
ज्येष्ठकृष्णत्रयोदश्यां रंगिलो ह्यक्षरं ययौ ।
बद्रिके च ततश्चान्यां कथां भक्तस्य शृणु ॥६९॥
वाद्यकारोऽभवत्तत्र शर्करानगरे शुभः ।
डमरूकाभिधः सोऽपि भक्तो वाद्यादिनिर्मितिम् ॥७०॥
कृत्वा वृत्तिं निर्वहति सतां सेवां करोति च ।
कथायां वाद्यदानानि कृतवान् भावतः स वै ॥७१॥
कांस्यान् शंखान् पटहांश्च भेरीदिण्डिमगोमुखान् ।
मृदंगान् पणवांश्चापि मुरजाऽम्बरकांस्तथा ॥७२॥

मर्दलान् वेणुवीणाश्च दर्दुरान् कच्छपान् ददौ ।
तलघातानानकांश्च दुन्दुभीन् तालकान् ददौ ॥७३॥
तेन पुण्येन भगवान् प्रसन्नोऽस्याऽभवत्तदा ।
सोऽपि वाद्यकलाविज्ञो वाद्यवादनमाचरत् ॥७४॥
तेन सन्तः प्रसन्नाश्च बद्रिके तस्य चाभवन् ।
सेवां चक्रे सतां नित्यं कथां शुश्राव नित्यदा ॥७५॥
प्रसादं जगृहे नित्यं पादामृतं पपौ सदा ।
मन्त्रं जजाप सततं नामसंकीर्तनं व्यधात् ॥७६॥
एवं वैष्णवसेवायां श्रीकृष्णसेवने रतः ।
डमरूकोऽभवत् सर्वनष्टपापः सुपावनः ॥७७॥
अनादिश्रीकृष्णनारायणश्रीकान्तवल्लभः ।
आययौ त्वक्षरं धाम नेतुं तं डमरूकणम् ॥७८॥
सोऽपि मोक्षक्षणं ज्ञात्वा चागतं हरिना हरिम् ।
नेमे दध्यौ हृदये च नत्वा समाजनान् मुहुः ॥७९॥
भौतिकं वर्ष्म सन्त्यक्त्वा दिव्यदेहमवाप्य च ।
कृष्णनारायणाऽऽहूतो गजं समारुरोह सः ॥८०॥
ययौ धामाऽक्षरं श्रीमन्नारायणस्य शाश्वतम् ।
कृपया श्रीहरेर्बद्रि ययावपुनरागमम् ॥८१॥
ज्येष्ठकृष्णचतुर्दश्यां ययौ डमरूकोऽक्षरम् ।
शृणु बद्रीप्रिये देवि तथा कथां सुपावनीम् ॥८२॥
भावसारोऽभवत्तत्र वस्त्रव्यापारकारकः ।
शर्करानगरे नाम्ना चिह्नरायेति विश्रुतः ॥८३॥
चिन्हरायो ददौ वस्त्रसहस्रं मण्डपार्थकम् ।
भक्त्या कथास्थलार्थं स वैष्णवो धनवान् सुखी ॥८४॥
ऊर्णिकाप्रस्तरणानि वितानान्युत्तमानि च ।
आसनानि सुरम्याणि ददौ कथोत्सवे यतः ॥८५॥
साधून् स सेवयामास शुश्राव चाऽऽच्युतीं कथाम् ।
मन्त्रं जग्राह धुन्यं च कीर्तनं व्यासदेवतः ॥८६॥
सिषेवे नित्यमेवाऽपि वस्त्रनाणकदाणकैः ।
तत्सेवया प्रसन्नोऽभूच्छ्रीहरिः पुरुषोत्तमः ॥८७॥
प्रसादेन पवित्राय चिह्नरायाय दर्शनम् ।
प्रत्यक्षं प्रददौ कृष्णो वल्लभार्यः श्रियः पतिः ॥८८॥
उवाच तं प्रसन्नोऽस्मि धाम चायाहि मेऽक्षरम् ।
एतद्विमानवर्येण नयामि परमं पदम् ॥८९॥
ज्येष्ठाऽमायां तु मध्याह्ने कृष्णं दृष्ट्वा समागतम् ।
सज्जोऽभवत् प्रगन्तुं वै तत्याज भौतिकीं तनुम् ॥९०॥
दिव्यदेहोऽभवत्तूर्णं विमानमारुरोह च ।
नामसंकीर्तनं कुर्वन् कृष्णनारायणेति सः ॥९१॥
सार्धं श्रीहरिणा तूर्णं विमानेनाऽऽक्षरं ययौ ।
जयनादास्तदा तत्र भक्तानामभवन् मुहुः ॥९२॥
बद्रिके च तदा तत्र सायंकाले कथोत्तरम् ।
आश्चर्यं परमं जातं शृणु तद्ग्रामयाजिनः ॥९३॥
ग्रामयाजी विप्रदेवोऽभवन्नाम्ना रमेश्वरः ।
नित्यं कथां शृणोत्येव व्यासाऽर्हणां करोति च ॥९४॥
भजते श्रीहरिं नित्यं मन्त्रं जपति नित्यशः ।
नामधुन्यं कीर्तनं च करोति सततं मुदा ॥९५॥
प्रसादं श्रीहरेर्नित्यं गृह्णाति च पदामृतम् ।
एवं पावनहृदयो विप्रो व्यवर्तताऽन्वहम् ॥९६॥
वैष्णवः परमो नित्यं सेवते साधुपुंगवान् ।
निश्चयं सोऽकरोद् गन्तुं धामाऽक्षरं परं हरेः ॥९७॥
बद्रिकेऽनशनं चक्रे निर्जलं मोक्षलब्धये ।
दिनत्रये हरिस्तस्य मोक्षार्थं समुपाययौ ॥९८॥
अमायां तु निशारंभे विमानेन समाययौ ।
आहतं भक्त चायाहि विमानं त्वत्कृते त्विदम् ॥९९॥
सोऽपि तूर्णं दिव्यदेवो भूत्वा समारुरोह तत् ।
ययौ कृष्णेन सहितो धामाऽक्षरं परं पदम् ॥१००॥
बद्रिके ते चमत्काराः प्रासरन् भुवि सर्वतः ।
असंख्या मानवा यान्ति कथाश्रवणहेतवे ॥१०१॥
तीव्रवेगास्तूर्णशुद्धाः प्रयान्ति तूर्णमक्षरम् ।
मध्यवेगाः शनैर्यान्ति मन्दाश्चिरेण यान्ति च ॥१०२॥
अस्नेहास्तु न वै यान्ति स्नेहस्तत्र हि कारणम् ।
प्रसन्नता कृपा सेवा श्रद्धा च दिव्यभावना ॥१०३॥
वासनाविलयश्चापि जिगमिषाऽतिवेगिनी ।
वैराग्यं शरणं भक्तिः कारणानि तु मोक्षणे ॥१०४॥
येषां तीव्रास्ते तु शीघ्रं प्रयान्ति परमं पदम् ।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिर्भवेदिह ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणसेवादानादिना प्रसन्नः श्रीहरिः, हर्षनयनाख्यं मागधं, योगिदासाख्यं दासं, सौरमल्लचित्राख्यं ताम्बूलकारं, रंगिलाख्यं रंगकारं, डमरूकाख्यं वाद्यकारं, चिन्हरायाख्यं भावसारं, रमेश्वरं ग्रामयाजिनं च, मोक्षपदं नीतवानित्यादिनिरूपणनामा पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि चमत्कारभरीं कथाम् ।
विद्याधराणां मोक्षस्य कारिणीं पारमेश्वरीम् ॥१॥
स्वर्णास्तरणनामा तु विद्याधरोऽभवत्तदा ।
ब्रह्मणो मानसः पुत्रो हिमालयनिवासकृत् ॥२॥
स वै निजविमानेनाऽम्बरे विहर्तुकाम्यया ।
निर्ययौ सिन्धुमार्गेण पश्यन् देशान् वनाश्रितान् ॥३॥
मानसरोवरादग्रे निविष्टान् वीक्ष्य वै ततः ।
काश्मेरान् पञ्चनदान् वीक्ष्य सिन्धुतटाँस्ततः ॥ ४ ॥
विमानेनाऽऽययौ यत्र शर्करानगरं महत् ।
लक्ष्मीनारायणसंहिताकथायाश्च मण्डपः ॥ ५ ॥
विद्यते स्वर्गसदृशो दिवा स्वर्णप्रकाशनः ।
विशालो लक्षशो यत्र मानवाः सन्ति वेष्टिताः ॥ ६ ॥
प्रवर्तते कथा यत्र व्यासकण्ठनिनादनम् ।
मेघानुल्लंघ्य खे याति देवश्रवणगोचरम् ॥ ७ ॥
हवनस्य घृतादीनां धूमाः सुगन्धशालिनः ।
प्रवर्तन्ते वायुलोके यत्स्थानादतिपावनाः ॥ ८ ॥
शान्तिर्यद्भूतलादूर्ध्वमम्बरे च प्रवर्तते ।
सन्तप्तहृदयानां वै ब्रह्मशान्तिर्यतो मिलेत् ॥ ९ ॥
योगिनां सहस्रान्येव मानसानि तदाऽम्बरे ।
प्रभायन्ते प्रभानां वै विमानानामपि क्षणम् ॥१०॥
ध्वजाः पताकाः कलशाः सतां संकीर्तनानि च ।
वैष्णवानां समुदायाः संघाश्च दैवयोषिताम् ॥११॥
आगमा विगमा व्योम्नि वैष्णवानामनारतम् ।
देवानामवताराश्च वेदघोषा द्विजेरिताः ॥१२॥
सर्वमेतत्तु वैकुण्ठभ्रान्तिं कारयति क्षितौ ।
एतादृशो महान् सत्रः कथारूपः प्रभायते ॥१३॥
वीक्ष्याऽऽलोच्य विविच्यापि निश्चित्य सुखमुत्सवम् ।
देवर्षिसिद्धसंघानां विमानावतरं तथा ॥१४॥
वीक्ष्य नैजं विमानं तु सिन्धुतीरेऽभ्यतारयत् ।
विद्याध्रीशतसंयुक्तो दासदासशतान्वितः ॥१५॥
पुत्रपुत्रीशतैर्युक्तो विमानाद् बहिराययौ ।
महोद्यानाङ्गणे स्थाप्य विमानं मण्डपं ययौ ॥१६॥
वाच्यमानां कथां तत्र स्थित्वा निषद्य मण्डपे ।
श्रुत्वा चैकाग्रमनसा कथान्ते व्याससन्निधौ ॥१७॥
बहूपदाभिः सहितः कुटुम्बसहितस्तथा ।
आययौ व्यासपूजार्थं नत्वा सभां सतः सतीः ॥१८॥
स्वर्णास्तरणो मुकुटं चावतार्य तु मस्तकात् ।
नेमे व्यासं संहितां च हरिं नेमे पुनः पुनः ॥१९॥
चन्दनाऽक्षतपुष्पाद्यै रत्नहीरकभूषणैः ।
स्वर्णमणिमौक्तिकाद्यैः पूजनं स व्यधान्मुदा ॥२०॥
आरार्त्रिकं सहस्रैकवर्त्तिभिः प्रचकार सः ।
विद्याधर्यो ननृतुश्च गायन्त्यो गुणगौरवम् ॥२१॥
दासा दास्यो ननृतुश्च कथाश्रवणमोदिनः ।
लोमशः स्वागतं चक्रेऽपृच्छत् परिचयं ततः ॥२२॥
स आह लोमशस्याऽहं शिष्योऽस्मि हिमपर्वते ।
निवसामि कुटुम्बेन सहितो मानसारसे ॥२३॥
आगतोऽस्मि विहारार्थं दृष्ट्वोत्सवमवातरम् ।
कृतकृत्योऽस्मि सञ्जातः कथाश्रवणपूजनैः ॥२४॥
शान्तिर्मे हृदये जाताऽम्बरे एव शुभार्थिनी ।
ततश्चाऽवातरं चात्र वृत्तं श्रेयः परं मम ॥२५॥
विद्याधरोऽपि जिज्ञासां चक्रे व्यासं प्रवेदितुम् ।
तथा तं गुरुवर्यं च लोमशं ज्ञातुमित्यपि ॥२६॥
तदा लालायनः साधुर्विद्याध्रं प्राह सत्वरम् ।
अयं नारायणो व्यासः स्वतःप्रकाशकायनः ॥२७॥
अनादिश्रीकृष्णनारायणशिष्यशिरोमणिः ।
लक्ष्मीनारायणसंहितायाः कथयेयमुत्तमा ॥२८॥
यस्य त्वं शिष्य एवास्से स चायं लोमशो मुनिः ।
अहं लालायनश्चापि हिमाद्रौ च विहारवान् ॥२९॥
इत्युक्तः स तु विद्याध्रः स्नेहाश्रूणि समसृजत् ।
पतितः पादयोस्तूर्णं लोमशस्य गुरोस्तदा ॥३०॥
कुटुम्बं सर्वमेवापि पतितं पादयोर्मुनेः ।
लोमशः स्वागतं चक्रे पप्रच्छ कुशलं सुखम् ॥३१॥
आवासं प्रददौ राज्योद्याने भोज्यं ततो ददौ ।
महीमानाऽतिथिसेवां चकार लोमशो गुरुः ॥३२॥
लोमशस्य वचनेन मासमुवास तत्र सः ।
शुश्राव च कथां नित्यं भवबन्धविमोचिनीम् ॥३३॥
कुटुम्बसहितो नित्यं प्रसादं बुभुजे हरेः ।
दासा दास्यो गुरोः सेवां सतां सेवां प्रचक्रिरे ॥३४॥
पुत्राः पुत्र्यश्च विद्याध्र्यः चक्रुः सेवां गुरोः सताम् ।
नित्यं चक्रुः कीर्तनानि नामधुन्यं प्रचक्रिरे ॥३५॥
ददौ श्रीलोमशस्तेभ्यो मन्त्रं मोक्षप्रदं ततः ।
'ब्रह्माऽहं श्रीकृष्णनारायणदासो भवामि ओम्' ॥३६॥
मन्त्रं लब्ध्वा तु विद्याध्राः सर्वे विगतकल्मषाः ।
अभवन् मुक्तरूपास्ते सर्वे क्षपितवासनाः ॥३७॥

मोक्षेच्छवोऽभवँश्चापि ब्रह्मानन्दाऽतिलिप्सवः ।
प्रार्थनां चक्रिरे श्रीमद्गुरवे मोक्षलब्धये ॥३८॥
ओमित्याह गुरुस्तेभ्यः सस्मार परमेश्वरम् ।
लोमशस्मृतमात्रः श्रीकृष्णनारायणोऽभ्यगात् ॥३९॥
सर्वविमानसंस्थश्च राधालक्ष्मीप्रियायुतः ।
माधवीपार्षदमुक्तमुक्तानिकान्वितोऽभ्यगात् ॥४०॥
सूर्यप्रभविमानाच्छ्रीहरिः प्रसन्नमानसः ।
सर्वाभरणसंशोभाः प्रहसन् बहिराययौ ॥४१॥
लोमशाद्यैर्गुरुगणैः सद्भिः सतीभिरर्चितः ।
वैष्णवैर्वन्दितः कृष्णनारायणो बलामृतैः ॥४२॥
विद्याधरव्रजं सर्वं दिव्यतार्थे कृपावशः ।
अभ्युक्षयद् बिन्दुकणैः सर्वे दिव्यास्ततोऽभवन् ॥४३॥
परिवर्तनमासास्ते विद्याश्रा मुक्तवर्ष्मसु ।
दिव्यदेहा व्यजायन्त कृष्णराधारमासमाः ॥४४॥
पञ्चशतानि सर्वे ते विमानवरमास्थिताः ।
कृष्णनारायणं प्राप्याऽभवन् मुक्ता हि शाश्वताः ॥४५॥
आशीर्वादैर्वर्धितास्ते महर्षिसाधुभूसुरैः ।
कीर्तयन्तः कृष्णनारायणेति तालवादनैः ॥४६॥
आकाशं गर्जयन्तश्च जयशब्दान् प्रचक्रिरे ।
हरिर्विमानं सहसा हिमालयेन वर्त्मना ॥४७॥
मानसरोवरं नीत्वा विद्याश्रनगरं शुभम् ।
स्वर्णास्तरणपौत्राय सुने नाम्ना विशालिने ॥४८॥
दत्वोर्ध्वव्योममार्गेण ययौ ब्रह्माऽक्षरं निजम् ।
विशालास्तरणश्चापि भक्तिं चकार वै हरेः ॥४९॥
पुत्रपौत्रादिवंशाढ्यः सम्पन्नश्चाऽभवत्ततः ।
चिरेण सोऽपि कमलाकान्तभक्त्याऽक्षरं पदम् ॥५०॥
प्राप बद्रीप्रिये मोक्षं परमेशपदासनम् ।
ज्येष्ठशुक्लैकादश्यां ते विद्याश्रा ययुरक्षरम् ॥५१॥
अथाऽन्यं ते चमत्कारं वदामि शृणु बद्रिके ।
गन्धर्वा हिमवासा ये चित्रबर्हादयः शुभाः ॥५२॥
मानसरोवरे देशे विहर्तुं समुपाययुः ।
ते विमानं दृष्टवन्तः सहस्रशो हिमालये ॥५३॥
स्वर्णास्तरणं पप्रच्छुः पिता कुत्र गतस्तव ।
प्रत्याह स्वर्णास्तरणो मोक्षपदं ययौ पिता ॥५४॥
विमानेन सुदिव्येन श्रीकृष्णचालितेन वै ।
पञ्चशतानि विद्याश्रा ययुर्धामाऽक्षरं हरेः ॥५५॥
कथाश्रवणमात्रेण सर्वे मोक्षपदं ययुः ।
सा कथा शर्करापुर्यां सिन्धुदेशे प्रवर्तते ॥५६॥
लक्ष्मीनारायणसंहितायाः परममोक्षदा ।
यत्र देवोऽनादिकृष्णो वल्लभाऽऽर्यो विराजते ॥५७॥
संहितादेवतारूपः सर्वाविर्भावकारणम् ।
यत्र विद्याधरादीनां गुरुः श्रीलोमशो मुनिः ॥५८॥
स्वतःप्रकाशो भगवान् व्यासो यद्वाचकोऽस्ति च ।
देवदानवगन्धर्वाः पूता यच्छ्रवणात् खलु ॥५९॥
तां कथां प्रसमाकर्ण्य मत्पित्राद्या दिवं गताः ।
श्रुत्वैवं तु चमत्कारं बद्रिके हिमवासिनः ॥६०॥
चित्रबर्हादयश्चापि विमानेन कथास्थलीम् ।
आययुः स्त्रीपुरुषाश्च त्रिशतानि समुत्सुकाः ॥६१॥
अम्बरादवतेरुस्ते महोद्यानसमीपतः ।
कथामण्डपमागत्य ज्येष्ठे द्वादशिकादिने ॥६२॥
शुक्लपक्षे हि गन्धर्वा गान्धर्व्यश्च हरेः कथाम् ।
संहितां शुश्रुवुः सायं नीराजनोत्तरं ततः ॥६३॥
लोमशाज्जगृहुर्मन्त्रं नामधुन्यं च जगृहुः ।
प्रसादं जगृहुः कृष्णपादवारि पपुश्च ते ॥६४॥
चतुर्दशदिनान्येवं शुश्रुवुस्ते कथां शुभाम् ।
सतां सेवां प्रचक्रुश्च नृत्यं नित्यं व्यधुर्मुदा ॥६५॥
गायनं च व्यधुर्नित्यं समारञ्जनकारकम् ।
कृष्णाग्रे संहिताग्रे च सतामग्रे जगुर्मुदा ॥६६॥
भक्तियुक्ताश्चक्रुरेवं नामसंकीर्तनं हरेः ।
तेन स्नेहेन विगतकल्मषा अभवन् द्रुतम् ॥६७॥
क्षीणक्लेशाः क्षीणसर्ववासनाः सिद्धयोगिनः ।
सञ्जातास्ते समस्ता वै मोक्षमन्त्रं च जगृहुः ॥६८॥
'ब्रह्माऽहं श्रीकृष्णनारायणदासो भवामि ओम्' ।
संगृह्य मन्त्रं जेपुस्ते नरानार्योऽतिभावतः ॥६९॥
तेषां प्रसन्नः श्रीकृष्णोऽषाढकृष्णे दले द्रुतम् ।
एकादश्यां विमानेनाऽऽययौ नेतुं निजाऽक्षरम् ॥७०॥
त्रिशतानां तु सर्वेषामुपर्येव जलाञ्जलिम् ।
प्रचिक्षेप हरिर्वारिकणैः स्पृष्टाश्च ते तदा ॥७१॥
दिव्यदेहाः समस्तास्ते गन्धर्वा मुक्तकोटिगाः ।
गन्धर्वा मुक्तगन्धर्वा अभवन् दिव्यविग्रहाः ॥७२॥
श्रीकृष्णेन समाहूता आरुरुहुर्विमानकम् ।
जयनादैर्गर्जयन्तो नत्वा कथास्थलं सभाम् ॥७३॥
गुरुं साधून् नमस्कृत्य दध्युः श्रीकृष्णमीश्वरम् ।
अनादिश्रीकृष्णनारायणो निन्ये क्षणात्ततः ॥७४॥
हिमाद्रिं च ततो निन्ये ब्रह्मधामाऽक्षरं निजम् ।
एवं श्रीबद्रिके याताः सर्वे ते शाश्वतं पदम् ॥७५॥

शृणु बद्रीप्रिये दिव्यचमत्कारं तथैव ह ।
किन्नराः किम्पुरुषा ये हिमाद्रौ सारसे स्थले ॥७६॥
शुश्रुवुश्च पुरा विद्याधराणां मोक्षणं ततः ।
विमानैरायुर्लक्ष्मीनारायणकथास्थलीम् ॥७७॥
सहस्रार्धं किन्नराश्च किंपुरुषास्तदर्धकाः ।
चारणा द्वे शते सिद्धाः पञ्चाशत्ते समाययुः ॥७८॥
महोद्याने विमानानि चाऽवतेरुस्तदाऽम्बरात् ।
कथास्थानं ययुः सर्वेऽवतीर्य दर्शनाय ह ॥७९॥
सम्मानिता लोमशाद्यैः शुश्रुवुस्ते कथां शुभाम् ।
प्रसादं जगृहुः पादामृतं पपुर्मुदान्विताः ॥८०॥
मोक्षमन्त्रं नामधुन्यं जगृहुर्लोमशान्मुनेः ।
व्यासपूजां कथापूजां सतां सेवां च नित्यदा ॥८१॥
चक्रिरे भावयुक्तास्ते वैष्णवाः पावनाः पराः ।
आषाढकृष्णद्वादश्यां श्रीकृष्णः परमेश्वरः ॥८२॥
साक्षात्तेषां तु सर्वेषां निशायामभवद्धरिः ।
सर्वाभरणसंशोभो राधालक्ष्मीसमन्वितः ॥८३॥
विमानवरमारूढः प्रसन्नवदनः प्रभुः ।
उवाचाऽऽयान्तु मे धामाऽक्षरं परमपावनम् ॥८४॥
इत्युक्ता बद्रिके धन्यभाग्यानि त्वभिमत्य ते ।
सज्जा भूत्वा चारुरुहुर्विमानं कृष्णशोभितम् ॥८५॥
दिव्यदेहाः समस्तास्ते कृपया श्रीहरेः शुभाः ।
अभवन् मुक्तरूपा वै चक्रुर्धुन्यं विमानके ॥८६॥
अनादिश्रीकृष्णनारायणः श्रीबद्रिके प्रभुः ।
निनाय तां हिमशैलं ततो धामाऽक्षरं निजम् ॥८७॥
किन्नरान् किंपूरुषांश्च चारणान् सिद्धयोगिनः ।
दिव्यमुक्तान् विधायैव निनाय कृपया हरिः ॥८८॥
अहो श्रीबद्रिके भाग्यं हिमाचलनिवासिनाम् ।
नारायणविमानाप्तिर्नारायणाप्तिरित्यपि ॥८९॥
ब्रह्मलोकाप्तिरेवापि कथाश्रवणयोगतः ।
सतां सेवनतश्चापि प्रसादाशनतस्तथा ॥९०॥
अवतारिकृष्णनारायणप्राप्तिर्व्यवर्तत ।
इत्येवं बद्रिके नित्यं जीवानां मोक्षणं शुभम् ॥९१॥
कथाश्रवणतश्चापि दर्शनाद्वन्दनात् सताम् ।
भवत्येव हरेर्योगात् सर्वकारणकारणात् ॥९२॥
नागा दैत्या दानवाश्चोरगा यक्षाः सरीसृपाः ।
ये तत्र चाययुर्बद्रि योगामुपाययुश्च ये ॥९३॥
सर्वे ते क्षीणपापाश्च निर्गुणाः कृष्णयोगिनः ।
भूत्वा भूत्वा ययुर्धामाऽक्षरं श्रीपरमात्मनः ॥९४॥
कीटाः शाखामृगा वन्याः पक्षिणः पशवोऽपि च ।
जन्तवो वल्लिका वृक्षा यादांसि स्वेदजा अपि ॥९५॥
ये ये तत्र मृताः सत्रे कार्ष्णयोगेन योजिताः ।
सर्वे प्रापुः परं धामाऽक्षरं ते कृपया हरेः ॥९६॥
यानि सस्यानि धान्यानि स्तम्बाश्च स्तवका अपि ।
फलपुष्पदलवृक्षाः कथायोगमुपाययुः ॥९७॥
परम्परया साक्षाद्वा स्वांगैः फलादिभिश्च वै ।
ते सर्वे परमं मोक्षं प्राप्ताः कार्ष्णप्रसंगतः ॥९८॥
सर्वं वै सुलभं लोके सत्संगो दुर्लभः सदा ।
सत्संगः कृपया प्राप्यो येन मोक्षः करे स्थितः ॥९९॥
बद्रिके पठनादस्य श्रवणान्मननादपि ।
भुक्तिर्मुक्तिर्भवेदत्र शाश्वती परमा गतिः ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कथाश्रवणादिभिः स्वर्णास्तरणप्रभृतिविद्याधराणां, चित्रबर्हादिगन्धर्वाणां, किन्नरकिम्पुरुषचारणसिद्धानां च, मोक्षणमित्यादिनिरूपणनामा षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि यथा यथा दिनात्ययः ।
कथाया जायते लोका लक्षशो यान्ति तत्र वै ॥ १ ॥
मासमात्रं कथा चास्ति पक्षमात्रमतः परम् ।
सप्ताहमात्रमेवेति ज्ञात्वा चायान्ति लक्षशः ॥ २ ॥
नरा नार्यो बालबालायुता वृद्धा युवात्मकाः ।
सोत्साहाः पापनाशार्थं कृष्णदर्शनलालसाः ॥ ३ ॥
मोक्षवाञ्छायुताश्चाऽन्ये बहवस्तत्र चाययुः ।
नित्यं यथा तु गोलोको वैकुण्ठो द्यौर्यथा च वा ॥ ४ ॥
तथा श्रीशर्कराभूमिर्दिव्या भक्तैर्विभाति हि ।
पूजयन्ति जना व्यासं कृष्णमूर्तिं च संहिताम् ॥ ५ ॥
लोमशादीन् गुरुन् साधून् विप्रान् प्रवैष्णवान् सतीः ।
साध्वीश्च योगिवर्यांश्च यतिनीः सांख्ययोगिनीः ॥ ६ ॥
उपदाः प्रददुः रत्नमणिस्वर्णाम्बरादिकम् ।
शुश्रुवुः सेवयामासुर्ददुर्दानानि मुक्तये ॥ ७ ॥
शुद्धाः प्रसादं भुक्त्वाऽऽपः पीत्वा भक्तिसमन्विताः ।
ययुः प्रसाद्य साधूंश्च हरिं धामाऽक्षरं हरेः ॥ ८ ॥
आषाढे शुक्लपक्षे तु दाक्षिणात्या नृपादयः ।
उष्णालयनिवासाश्च प्राग्ज्योतिर्भूनिवासिनः ॥ ९ ॥

ब्रह्मदेशनिवासाश्च श्यामशंभुनिवासिनः ।
प्राचीनवासिनश्चापि शिबिराज्यनिवासिनः ॥१०॥
आययू राशियानानां मानवाश्च नृपेश्वराः ।
केतुमालनिवासाश्च किम्पुरुषनिवासिनः ॥११॥
हारिताश्च परीदेशनिवासाश्चाययुर्मुदा ।
अन्रिक्तानां मानवाश्च नृपास्तत्र समाययुः ॥१२॥
अमराणां जना भूपा विमानैः समुपाययुः ।
यावद्भूस्तरवासाश्च नरा नार्यः समाययुः ॥१३॥
भूगर्भान्त्रप्रदेशानां नरा नार्यः समाययुः ।
कथाश्रवणलाभार्थं कृष्णेक्षार्थं विशेषतः ॥१४॥
कीर्तयन्तः प्रभुं कृष्णं राधापतिं सतीपतिम् ।
अनादिश्रीकृष्णनारायणं सर्वावतारिणम् ॥१५॥
तेषां स्वागतसम्मानं मधुपर्कं जलं गृहम् ।
कोटिरायो रायहरिश्चक्रुः श्रीलोमशादयः ॥१६॥
यथाव्यक्ति यथायोग्यं स्वर्ग्यं निर्मिमिरे सुखम् ।
यानभोजनपानार्हाऽऽवासान् दिव्यान् ददुस्तदा ॥१७॥
तोषयामास सर्वांस्तान् श्रीकृष्णोऽसंख्यरूपधृक् ।
निजभक्तान् सिषेवेऽपि सर्वेष्टपूरकोऽभवत् ॥१॥
लक्ष्मी राधा रमा श्रीर्भूः माधवी माणिकी प्रिया ।
मंगला मञ्जुला रेवा सुगुणा च सरस्वती ॥१९॥
गंगा भक्तिः सती मुक्तिरेकादशी रतिर्दया ।
तुलसी कामगौः शान्ता कमला विरजा हिमा ॥२०॥
हंसा मूर्तिर्गोमती कुंकुमवाप्यन्नपूर्णिका ।
जया दुर्गा ललिता सावित्री सन्तोषिणी कला ॥२१॥
बद्री चम्पा मौक्तिका च विद्युत् षष्ठी ऋतम्भरा ।
श्वेता रक्ता सिद्धयश्च कृष्णाऽथ निधयोऽपि च ॥२२॥
शक्तयोऽनेकरूपादिधारिण्यो जनसेवनम् ।
यथायोग्यं प्रचक्रुस्ते कृष्णाज्ञया ह्यनन्तशः ॥२३॥
चतुर्दशभुवनानां देहिनः क्रमशः क्रमात् ।
आययुः श्रीकथाकृष्णलाभार्थे शार्करापुरीम् ॥२४॥
कृतकृत्या बभूवुस्ते पुमांसो योषितोऽखिलाः ।
दिव्यभावं प्रपन्ना ये प्रपन्नाः पुरुषोत्तमम् ॥२५॥
शृणु बद्रिप्रिये देवि महोत्सवस्तदाऽभवत् ।
आषाढशुक्लपक्षे वै पारायणान्तिमे दले ॥२६॥
आययुः श्रीकृष्णनारायणाद्याः कुंकुमस्थलात् ।
ये त्वासन् तत्र वै रूपान्तरैर्भक्तार्थमास्थिताः ॥२७॥
श्रीमद्गोपालकृष्णाद्या वृद्धा महर्षयस्तथा ।
तथाश्रीकम्भरालक्ष्मीसहिता ब्रह्मयोषितः ॥२८॥
पार्षदाः पावनाद्याश्च देवा महर्षयोऽपरे ।
राजानश्च प्रजाश्चापि कथायज्ञे समाययुः ॥२९॥

श्रीबद्रीप्रियोवाच—

के के समागतास्तत्र श्रोतुमिच्छामि नामतः ।
देवा महर्षयो ये च गन्धर्वाऽप्सरसस्तथा ॥३०॥
पार्षदा ये च राजानस्तान् सर्वान् श्रावय प्रभो ।
पारायणे प्रसक्तानामागतानां दलेऽन्तिमे ॥३१॥
नाम्नां श्रवणमात्रेण वैष्णवानां सतां तदा ।
पापनाशो भवेदेव पुण्यं भाग्यं प्रवर्धते ॥३२॥
धन्यास्ते श्रीकृष्णनारायणयोगमुपागताः ।
येषां स्मरणमात्रेण मायाबन्धः प्रणश्यति ॥३३॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि दले पारायणान्तिमे ।
आषाढे शुक्लपक्षे वै ये ये तत्र समागताः ॥३४॥
एकादश्यां समाप्तौ चोपस्थिता येऽभवँस्तदा ।
तान् सर्वान् सम्प्रवक्ष्यत्र महाभागवतान् शृणु ॥३५॥
आययुरानन्ददेवा भुवर्देवाः समाययुः ।
भावदेवा रांभदेवास्तथा तापसदेवताः ॥३६॥
आर्तवदेवा आब्वरदेवाः पावकदेवताः ।
सावित्रा हव्यवाहाश्च भूमदेवास्तथाऽऽययुः ॥३७॥
औशिकाः कौशिका देवास्तथा गान्धारदेवताः ।
आर्षभाः षड्जना मार्जालीयदेवास्तथाऽऽययुः ॥३८॥
वैराजका माध्यमाश्च निषादाः प्राणदेवताः ।
आकूतिकाश्चिन्तकाश्चाऽऽययुश्च मेघवाहनाः ॥३९॥
विज्ञातिका मानसाश्च भावा राथन्तराः सुराः ।
सद्योजाता वामदेवा वीराः पीताः कुमारकाः ॥४०॥
सत्याद्या व्यासदेवाश्च सुताराद्याश्च शांभवः ।
स्वायम्भुवाद्या मनवः पूर्णाहुतौ समाययुः ॥४१॥
वैमानिकाः समस्ताश्च सहस्राक्षाः समाययुः ।
नारायणास्तथाऽऽदित्याः प्राजापत्याः समाययुः ॥४२॥
आमूर्ता ब्रह्मदेवाश्च कल्पावसानिकास्तथा ।
पितरो मुनयश्चापि कथायां समुपाययुः ॥४३॥
धर्मो रुचिश्च दक्षश्च मरीचिर्भृगुराययुः ।
अत्र्यंगिराःपुलस्त्याश्च वसिष्ठः पुलहः क्रतुः ॥४४॥
नारदश्च ऋभुः सनत्कुमाराद्याः समाययुः ।
गन्धर्वाः सिद्धपूर्णौ च बही पूर्णाद्य इत्यपि ॥४५॥

शतगुणो ब्रह्मचारी विश्वावसुः सुपर्णकः ।
भानुः सुचन्द्रो वरुणो भीमसेनोग्रसेनकौ ॥४६॥
सुपर्णो धृतराष्ट्रश्च सूर्यवर्चाश्च तुम्बुरुः ।
गोमान् सुबाहुः प्रयुतः पत्रवानर्कपर्णकः ॥४७॥
भीमश्चित्ररथः शालिशिराः पर्जन्य इत्यपि ।
हाहा हूहूः कलिर्हंसो ज्योतिष्टोमश्च मध्यमः ॥४८॥
आचारो दारुणश्चापि वरेण्यो वरुणस्तथा ।
सुरुचिः सुमनाश्चापि वसुरुच्यादयोऽपि च ॥४९॥
आययुस्ते तु गन्धर्वाः कृष्णदर्शनलालसाः ।
अप्सरसश्चाययुश्च बद्रिके उर्वशी तथा ॥५०॥
अरुणा विमनुष्या चाऽनपाया च वराम्बरा ।
असिपर्णा मिश्रकेशी शुचिकाऽलम्बुषा तथा ॥५१॥
विद्युत्पर्णा लक्ष्मणा च तिलोत्तमाऽद्रिका तथा ।
रम्भा क्षेमाऽसिता मारीचिका मनोभवा तथा ॥५२॥
सुबाहुी सुप्रिया पुण्डरिका च सुदती तथा ।
सुरसा सुभुजा चाऽजगन्धा हंसा सरस्वती ॥५३॥
अजया कमला सूता सुमुखी हंसपादिका ।
अरूपा सुभगा भासी मनुवन्ती सुकेशिनी ॥५४॥
मेनका सहजन्या च पर्णिनी पूर्वचित्तिका ।
कृतस्थली घृताची च प्रम्लोचास्तत्र चाययुः ॥५५॥
अनुम्लोचा तथा तन्वी पूञ्जिकस्थलिनी उषा ।
पुत्र्यस्तासां प्रपौत्र्यश्च सहस्रशः समाययुः ॥५६॥
अनादिश्रीकृष्णनारायणदर्शनलालसाः ।
सर्वा दास्यस्तथा तासां पारायणे समाययुः ॥५७॥
बद्रिके पार्षदाश्चापि बालकृष्णस्य चाययुः ।
पावनो वृषभो गोपो वत्सलश्च कुमारकः ॥५८॥
सिद्धोऽरुणो हारितश्च विश्वो विप्रश्च कुण्डलः ।
सहस्राक्षः सुयोगश्च महीमानो वसन्तकः ॥५९॥
सहस्रशिरा मध्वश्चोरुक्रमो विक्रमस्तथा ।
विश्वाक्षश्चोरुगायश्च विश्वात्मा जातवेदकः ॥६०॥
आनन्दश्चिक्लीतदेवो देवत्रा विजयो जयः ।
नन्दः सुनन्दश्च वसुवनो जयन्त आययुः ॥६१॥
भुतदेवः प्रचण्डश्च चण्डः सात्त्वत आययुः ।
विश्वक्सेनः पुष्पदन्तः सुपर्णः प्रबलो बलः ॥६२॥
कुमुदः कुमुदाक्षश्च चिदात्मा गरुडस्तथा ।
कैवल्यबोधो हंसश्च स्वप्रकाशश्च चिन्मयः ॥६३॥
प्रपूरुषश्च कल्याणः पद्मधरः सुमूर्तकः ।
प्रमोगः श्रीप्रसादश्च श्रीप्रकाशोऽक्षरो नयः ॥६४॥
सन्तोषो ब्रह्मदृक् प्रध्यानश्चिदानन्द ऊर्जकः ।
परमहंः सुनयश्च विनयश्च प्रभञ्जनः ॥६५॥
अचिन्त्योऽनन्तः प्रशमोऽमोघश्च दहरस्तथा ।
विश्वरूपश्च वैकुण्ठः प्रज्ञानोंकारकौ तथा ॥६६॥
प्रतत्त्वो निजबोधश्च पुण्डरीकस्तथोत्तमः ।
उद्धवः शाश्वतश्चापि पूर्णभद्रः प्रभूतकः ॥६७॥
ऋषभश्च सुभद्रश्च निरालम्बो विदेहकः ।
सालम्बनस्तथाऽऽनन्दः वृकण्ठश्च प्रसत्तकः ॥६८॥
हंसः प्रहंसो भद्राश्वो मञ्जुलश्च प्रधन्यकः ।
प्रबोधश्च सुज्योतिश्च सत्येशश्च सवित्रकः ॥६९॥
अव्ययो मंगलश्चापि तापसः सुव्रतस्तथा ।
सुशीलश्च प्रतुर्यश्च प्रविष्णुर्वरदस्तथा ॥७०॥
प्रजिष्णुर्वल्लभश्चापि प्रसादः प्रधनस्तथा ।
अवदातोऽमृतश्चापि प्रभवोऽध्वर इत्यपि ॥७१॥
उत्सवश्च हिरण्यश्चाऽनघो विश्रुत आययुः ।
निर्देशो भूषणश्चापि निवृत्तश्च प्रवर्धनः ॥७२॥
संवृतश्च बृहद्रूपः प्रभावोऽशोक आययुः ।
अकामश्चापि निष्कामः श्रीगर्भश्च सुदर्शनः ॥७३॥
निर्वाणश्च विरामश्च धर्मयूपो विशालकः ।
पुरातनः प्रमोदश्चाऽऽमोदः सुपुण्य आययुः ॥७४॥
आदित्यश्च विशुद्धश्चोद्भवो नेत्रश्च आययुः ।
श्रीवासः कृष्णपादश्च पार्षदास्ते समाययुः ॥७५॥
स्वस्तिकाः शेषसंज्ञाद्या नागा ये वैष्णवोत्तमाः ।
अनन्ताद्या आययुश्च पारायणान्तिमोत्सवे ॥७६॥
राजानश्चापि भूमिस्था बद्रिके ते समाययुः ।
शावदीनो लक्ष्मणश्च जुम्मसेम्लश्च भूपतिः ॥७७॥
दक्षजवंगरश्चापि शिबिदेवः समाययुः ।
थर्कूटस्थो वीरजारः शत्त्यक्षिकः समाययुः ॥७८॥
कालिमाद्यो बालकाशः कथकश्च समाययुः ।
पृथुराजस्तथोरलके तुरुष्कालराजकः ॥७९॥
तीराणश्चापि हंकारो जयकाष्ठल आययुः ।
अल्वीनरो जीनवर्द्धिरल्पकेतुः समाययुः ॥८०॥
जयकृष्णवनृपतिः परीशाननृपस्तथा ।
इन्दुरायश्च मुद्राण्डो गण्डराजः समाययुः ॥८१॥
बृहच्छरश्च लीनोर्णो बललीनः समाययुः ।
रायगानलभूपश्च वरसिंहो नृपस्तथा ॥८२॥
फेनतन्तुनृपः स्तोकहोमः कोलक आययुः ।
काष्ठयानो दिनमानार्कश्च वै रायकिल्लटः ॥८३॥
रायरोकीश्वरो रायरणजीवः समाययुः ।
रायवाकक्षकश्चापि रायमारीश इत्यपि ॥८४॥

रायबलेश्वरो रायलम्बारभूप आययुः ।
रायनवार्कभूपश्च रायहुण्डेशभूपतिः ॥८५॥
रायकूपेशभूपश्च कालीमण्डलिकेश्वरः ।
वनजेलेशभूपश्च पारावारपिबो नृपः ॥८६॥
कोटीश्वरः श्रीसतीशः त्रेताकर्कशभूपतिः ।
आण्डजरो बाल्यरजो रायसोमनभूपतिः ॥८७॥
उरुगवाक्षकः पराङ्मुत ईशानपानकः ।
राजारायपतिश्चापि पारायणे समाययुः ॥८८॥
स्वायम्भुवो मनुः प्रियव्रतोत्तानपदावुभौ ।
यज्ञस्तत्राऽऽययौ धर्मश्चाययौ स्त्रीगणान्वितः ॥८९॥
देवौ धाताविधातारौ चाययतुस्तदध्वरे ।
आग्निध्राद्या भूपतयो नाभिः किंपुरुषस्तथा ॥९०॥
केतुमालादयश्चापि हिरण्यो रम्यको नृपः ।
कुरुश्चेति नृपास्तत्र पारायणे समाययुः ॥९१॥
उमारायः क्षीरपुरुर्नागविक्रम आययुः ।
जयादित्यो विक्रमार्कः कृष्णदुर्गश्च पाञ्चलः ॥९२॥
प्रभालाक्षो लक्ष्मसेनोऽमरशालः श्रीलंभनः ।
प्रपत्पालः प्राणिपातो नन्दिभिल्लः समाययुः ॥९३॥
रायपारश्चेन्द्रगुत्सो गवयेन्द्रो जनाऽऽत्मकः ।
कर्णपुत्सोऽवध्यतेजा यागदेवः पटासनः ॥९४॥
दाराभाग्यो राजमानो माधवो ब्रह्मपानकः ।
शीलहारो माणिकाभश्चित्तगांगेय आययुः ॥९५॥
चन्द्रनागो मेदकोशः पुरुकुत्स उपाययुः ।
बालसंघः पार्वतेशो नागविजय आययुः ॥९६॥
राजभारुर्महेन्द्राभो मदाशनः समाययुः ।
शररंगो मधुराजो विरामासः समाययुः ॥९७॥
त्रिकुटोर्की महासारश्चत्रलास्यः समाययुः ।
कालिकाञ्चन आपाण्ड आकलार्यो विवर्धनः ॥९८॥
मण्डलारो जवलीन इन्द्रद्युम्न उपाययुः ।
माठरसिंहः कुटिधृक् चिच्चिन्तन उदक्प्रभः ॥९९॥
श्रीनागरिर्धरणिधृक् मूरध्वजो रजिध्वजः ।
कुंकुमास्यस्तथा खण्डराजानः समुपाययुः ॥१००॥
द्वीपेशाश्चाऽब्धितीरेशा रणेशा अद्रिशासिनः ।
उपभूपाः प्रजायुक्ताः पारायणे समाययुः ॥१०१॥
राजस्वर्गो ब्रह्मसभास्वर्गो वा किमु धार्मिकम् ।
सदो वा सत्यलोको वा शोभते शर्करापुरम् ॥१०२॥
बद्रिके नागराजानो भक्ता दैत्यनृपेश्वराः ।
आययुः श्रीसंहितायाः पारायणे समुत्सुकाः ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने पारायणसमाप्तिप्रसंगोत्सवे समागतत्रिभुवनीयराजप्रजाना-मुद्देशनिरूपणनामा सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि समाजोऽनन्तसंख्यकः ।
लक्ष्मीनारायणसंहितायाः कथासमापने ॥ १ ॥
अभवच्छर्करापुर्यां सिन्धुतटे समन्ततः ।
महोद्याने विशाले वै दशयोजनविस्तरे ॥ २ ॥
भूतले द्रुमसंकीर्णे गन्धिपुष्पादिशोभिते ।
स्वागतं भोजनं सर्वसमाजस्य व्यधात् प्रभुः ॥ ३ ॥
निवासान् पार्षदा दासा दास्यः सेवां प्रचक्रिरे ।
आषाढस्य सिते पक्षे त्वेकादश्यां प्रगे हरिः ॥ ४ ॥
अनादिश्रीकृष्णनारायणः श्रीवल्लभः प्रभुः ।
ब्रह्मप्रियाभिः स्नपितः शृंगारितः प्रियाजनैः ॥ ५ ॥
विभूषितो वेषितश्च पूजितः साधुमण्डलैः ।
वन्दितो बन्दिसूताद्यैर्नतोऽर्चितश्च राजभिः ॥ ६ ॥
वर्धितो वैष्णवीभिश्च स्तुतो भागवतैर्जनैः ।
निरीक्षितः स्त्रीसमाजैः प्रसादितोऽङ्गसेवकैः ॥ ७ ॥
राजाधिराजचिह्नाद्यैर्बृंहितो दिव्यपार्षदैः ।
कृतपूजादिसत्कर्मा वाद्यध्वनिं प्रकर्षयन् ॥ ८ ॥
आययौ राजचिह्नाढ्यः कथामण्डपमच्युतः ।
गजासने स्वर्णमणिहाराढ्ये संव्यराजत ॥ ९ ॥
आययौ भगवान् व्यासः स्वतःप्रकाशकायनः ।
समाजनैः कृतोत्थानैः सत्कृतश्चासनं स्वकम् ॥१०॥
अलंचकार पुष्पादिपूजितः श्रावितो जयम् ।
लोमशाद्याः ऋषिगणा लालायनादिसाधवः ॥११॥
रमाद्याः शक्तयो मणिमाणिक्याद्या हरिप्रियाः ।
देव्यश्च देवता ईश्वराण्य ईश्वरकोटयः ॥१२॥
विप्रा वेदविदः सर्वे वैष्णवाः पावनाः शुभाः ।
सिद्धाश्च भूपशार्दूलाः प्रजा नार्यो नरास्तथा ॥१३॥
आययुः संहितास्थानं मण्डपे च यथायथम् ।
निषेदुश्च कथारंभो व्यजायत समंगलः ॥१४॥
मुहूर्तान्ते संहितायाः समाप्तौ श्रीहरेस्तथा ।
व्यासस्य पूजनं चक्रुः कृष्णनारायणादयः ॥१५॥

कोटिरायो राघहरिस्तथाऽग्निभ्रादयो नृपाः ।
सर्वे नृपाः सर्वदेवाः सर्वर्षयश्च साधवः ॥१६॥
आनर्चुः श्रीसंहितां च व्यासं स्वतःप्रकाशकम् ।
प्रजाजनाः श्रेष्ठिनश्च पत्रपुष्पफलैर्जलैः ॥१७॥
स्वर्णरूप्यकमुद्राभिर्हीरकाद्यैः सुमौक्तिकैः ।
मणिभिः स्वर्णभूषाभिः पुपूजुश्चन्दनाऽक्षतैः ॥१८॥
राजार्हाम्बरवर्यैश्च राजार्हभूषणादिभिः ।
मुकुटाद्यैरमूल्यैश्च पुपूजुर्व्याससमच्युतम् ॥१९॥
स्वायंभुवः क्षितेः राज्यं प्रियव्रतोऽपि वै तथा ।
उत्तानपादः पृथिवीखण्डराज्यं हरे ! तव ॥२०॥
इत्यार्पयत् तथाऽऽग्निध्रो हिरण्याद्याः समार्पयन् ।
विमानानि किंपुरुषाद्या आर्पयन् गजाऽश्वकान् ॥२१॥
स्वर्णकोशान्महापद्मान् कच्छपानार्पयन्मुदा ।
असंख्यहीरकमौक्तिकादीन् स्वर्णानि चार्पयन् ॥२२॥
बहून् दासान् दासिकाश्च राजानोऽपि समार्पयन् ।
पार्थिवाः सार्वभौमास्ते स्वस्वखण्डान् समार्पयन् ॥२३॥
इन्द्राद्याः कामधेनूश्च दिव्यवेषान् समार्पयन् ।
सुधाऽमृतान्यसंख्यानि दिव्यभूतीः समार्पयन् ॥२४॥
मानवाश्च यथायोग्यं धनं तत्र समार्पयन् ।
यद्यद् विशिष्टं स्वायत्तं तत्तत् तत्र समार्पयन् ॥२५॥
अमूल्योपकरणानि देहोपकरणान्यपि ।
पर्यंका यत्र त्रैलोक्यं दृश्यते प्रतिबिम्बितम् ॥२६॥
तानार्पयद् वाचकाय तथा श्रीहरये मुदा ।
चिन्तामणीन् कल्पलताः कल्पपात्राणि चार्पयन् ॥२७॥
कल्पशस्त्राणि दिव्यानि कल्पवेषान् समार्पयन् ।
देहभूषाः समस्ताश्चार्पयन् यानानि वै तदा ॥२८॥
पृथ्व्यां स्वर्गे च पाताले यद्यच्छ्रेष्ठं तदाऽभवत् ।
तत्तदानीय देवाद्यैः स्थानिभिश्चार्पितं तदा ॥२९॥
विष्णुना चार्पितो हारः कौस्तुभानैक्यशोभनः ।
येन सभा कृता दिव्या तेजोभिः सूर्यवर्चसा ॥३०॥
ब्रह्मणा चाऽर्पितं छत्रं यत्र नक्षत्रमण्डलम् ।
दिव्यं प्रकाशते नद्धं दिव्यस्वर्गमिवाऽपरम् ॥३१॥
शङ्करेणाऽर्पितश्चन्द्रो लोकतिमिरहारकः ।
देवीभिश्चापि सर्वाभिः शक्तयश्चार्पिता निजाः ॥३२॥
साधुभिः पुष्पमालाद्यैः पूजितो व्याससत्तमः ।
मुक्तैरीश्वरकोट्याद्यैः पूजितो निजसम्पदा ॥३३॥
चैत्रान् रथान् दिव्यवाहान् प्रददुर्दिक्प्रपालकाः ।
आशीर्वादान् ददुर्दिव्या मातरो लोकमातरः ॥३४॥
गजरथां संहितां दाने ददुर्यज्वान उत्सुकाः ।
आरार्त्रिकं प्रचक्रुश्च वन्हयो राजभिः सह ॥३५॥
नीराजनोत्तरं बद्रि तत्र भूमौ महत्तमाः ।
वस्तूनामुपदाख्यानां पर्वता अभवँस्तदा ॥३६॥
यद्यद् द्रव्यं ह्यभूद् येषां तत्तत्तत्राऽर्पितं ह्यभूत् ।
पृथिव्यां नामवद् रत्नं दिवि पातालकेऽपि च ॥३७॥
सृष्टौ श्रेष्ठं च पूजार्हं दानार्हं यत् प्रकीर्त्यते ।
तत् सर्वं चार्पितं तत्र सर्वसृष्टिनिवासिभिः ॥३८॥
अमुकं तत्र नास्तीति नाऽभूत् सर्वस्य सम्मतम् ।
आरार्त्रिकोत्तरं पूजा सतां प्राजायतोत्तमा ॥३९॥
विप्रर्षिसुरपूज्यानां लोमशस्य गुरोस्तथा ।
अनादिश्रीकृष्णनारायणपूजोत्तराऽभवत् ॥४०॥
आकाशादभवँस्तत्र पुष्पादीनां सुवृष्टयः ।
चन्दनानां सुधानां च वृष्टयः प्राभवन् दिवः ॥४१॥
अप्सरसां नर्तनानि गीतयो ब्रह्मयोषिताम् ।
नामधुन्यानि भक्तानामभवँश्च समन्ततः ॥४२॥
काव्यानि च तथा व्याख्यानान्यजायन्त वै तदा ।
विदुषां देवगुरूणां कवीनां काव्यकान्यपि ॥४३॥
दानानि सर्वरत्नानामभवँस्तत्र बद्रिके ।
असंख्यवस्तुरूपाणि दीनाऽनाथादिदेहिषु ॥४४॥
अन्नदानानि बहूनि स्वर्णदानानि वै तथा ।
गवाश्वगजदानानि तदानीमभवन् खलु ॥४५॥
कन्यादानानि च श्रेष्ठकुमारदानकान्यपि ।
क्षेत्रवाटीगृहसम्प्रदानानि चाभवँस्तदा ॥४६॥
यज्ञार्थे द्रव्यदानानि राज्ञां तदाऽभवन् क्षणे ।
एवं कथासमाप्तिश्चाऽभवद् बद्रीप्रभे तदा ॥४७॥
लक्ष्मीनारायणो देवः श्रीमत्कृष्णनरायणः ।
राधाकृष्णस्तथा बद्रि नरनारायणोऽप्यहम् ॥४८॥
वासुदेवन्नारायणश्च शेषनारायणस्तथा ।
आशीर्वादान् ददुस्तत्र लोकेभ्यो मोक्षदानपि ॥४९॥
लक्ष्मीनारायणसंहिताकथाश्रवणार्थिनः ।
प्राप्स्यन्ति परमं मोक्षं कृपया नोऽक्षरे पदे ॥५०॥
संहितेयं वेदपत्नी महाभागवती सती ।
वैष्णवीश्रीः सात्त्विकी च कार्ष्णनारायणी कथा ॥५१॥
सर्वतीर्थाश्रया सर्वधर्माश्रया प्रवर्तते ।
सर्वदानाश्रया सर्वज्ञानाश्रया प्रमुक्तिदा ॥५२॥
सर्वपुण्याश्रया सर्वसृष्टिसाध्वाश्रया वरा ।
सर्वसाध्व्याश्रया सत्याश्रया कृष्णांगसंगिनी ॥५३॥

सर्वनारायणयुक्ता सर्वावतारधारिणी ।
सर्वदेवमयी सर्वपूजाध्यानमयी कथा ॥५४॥
सर्वस्तोत्रमयी सर्ववेदबीजकथामयी ।
सर्वशक्तिमयी सर्वपुमर्थादिपरायणा ॥५५॥
सर्वसौभाग्यदा सर्वेषणापूरणिका कथा ।
सर्वेष्टसाधिका सर्वरक्षाकरी हितावहा ॥५६॥
सर्वैश्वर्यादिसंजुष्टा सर्वसिद्धिनिषेविता ।
सर्वविघ्नादिहर्त्रीयं कथा विजयते भुवि ॥५७॥
ये श्रोष्यन्ति तदध्यायं ते यास्यन्ति परां गतिम् ।
वाचकं ये जलान्नाद्यैस्तोषयिष्यन्ति चाम्बरैः ॥५८॥
धनाद्यैश्चोपकरणैस्ते यास्यन्त्यक्षरं हि नः ।
इमामाद्यां सृष्टिमूलामाश्रित्य च कथास्ततः ॥५९॥
प्रवर्तिष्यन्त आख्यानोपाख्यानग्रन्थकोटयः ।
वेदश्चैकः परब्रह्मभाषितः संहिता तथा ॥६०॥
परनारायणोक्ता च द्वितीया वेदिनो हि सा ।
व्यासा नवनवा भूत्वाऽऽश्रित्य वेदं च संहिताम् ॥६१॥
लिखिष्यन्ति ग्रन्थकथा रचयिष्यन्ति वार्त्तिकाः ।
तत एषा मोक्षदा वै धृता स्मृता श्रुताऽविता ॥६२॥
इत्युक्त्वा श्रीसंहितायां जयमुच्चार्य संगताः ।
कथासमाप्तिं कृत्वैव सभाविसर्जनं तथा ॥६३॥
कुर्वन् श्रीकृष्णभगवान् बद्रिके पूजनाऽऽगतम् ।
यद्यत् सर्वं च तत् तत्रोत्थाय स्वयं परेश्वरः ॥६४॥
दातृभ्य एव सर्वं वै प्रात्यार्पयत् प्रसादजम् ।
राज्यं भूमिर्गृहक्षेत्रोद्यानवाहनयानकम् ॥६५॥
स्वर्णं रौप्यं विभूषाश्च गवाश्ववाजिमण्डलम् ।
तत्तद्दातृभ्य एवापि दीनेभ्यश्चापि माधवः ॥६६॥
प्रसादं रूपं चाऽऽज्ञयैव प्रात्यर्पयत् प्रदातृषु ।
द्विजेषु दीनवर्गेषु दानं च विधिनाऽकरोत् ॥६७॥
सर्वे प्रसन्नचित्तास्ते कृष्णाज्ञया प्रजगृहुः ।
कृष्णार्थं कृष्णपूजार्थं धर्मार्थं जगृहुश्च ते ॥६८॥
विप्रेभ्यश्चापि साधुभ्यः साध्वीभ्यः प्रददौ हरिः ।
यथापेक्षं समस्तं च ततोऽवशिष्टमेव यत् ॥६९॥
तत्तत्र मन्दिरे नैजे कोटिरायादिनिर्मिते ।
सौवर्णे माणिकीलक्ष्मीराधाप्रभादिसेविते ॥७०॥
आर्पयज्जीविकासिद्ध्यै क्षेत्रवाटीधनादिकम् ।
जयकारं ततः सर्वे समुच्चार्य विसर्जनम् ॥७१॥
सभायाः सम्प्रचक्रुस्ते तदा नार्यो नरा जनाः ।
समाञ्जलिं पत्रपुष्पाऽक्षतान् जगृहुरुत्सुकाः ॥७२॥
पतित्वोपत्य चोत्पत्य प्रसादमृत्तिकां शुभाम् ।
जगृहुश्च जयनादानूचिरे मुक्तकण्ठतः ॥७३॥
परिहारं विधायैव यज्ञभूमिं हरिर्ययौ ।
व्यासश्च लोमशाद्याश्च ययुर्यज्ञालयं द्विजाः ॥७४॥
राजानोऽपि ययुर्यज्ञस्थलीं योजनवर्तुलाम् ।
यत्र प्रवर्तते विप्रद्वारा यज्ञक्रियादिकम् ॥७५॥
अनादिश्रीकृष्णनारायणः पद्मावतीयुतः ।
प्रज्ञया सहितश्चापि पतिः श्रीवल्लभः प्रभुः ॥७६॥
यज्ञासने स्वर्णमये ह्युपाविवेश कर्मणे ।
संकल्पं लोमशो ब्रह्मा कारयामास वै ततः ॥७७॥
प्रायश्चित्तं प्रधानाख्यसंकल्पं च ततः परम् ।
दिशां रक्षां कलशाराधनं गणेशपूजनम् ॥७८॥
स्वस्तिप्रवाचनं पुण्याहादिप्रवाचनं ततः ।
अभिषेचनमेवाथ मातृकापूजनं तथा ॥७९॥
नान्दीश्राद्धं तथाऽऽचार्यद्विजादिवरणं ततः ।
अर्घदानं वन्दनं च मधुपर्कं चकार च ॥८०॥
वर्धिनीकलशस्थापनां च मण्डपप्रोक्षणम् ।
वास्तुस्थापनमेवापि वास्तुमण्डपपूजनम् ॥८१॥
सर्वतोभद्रदेवानां स्थापनं पूजनादिकम् ।
यन्त्रदेवस्थापनं च पूजाऽग्न्युत्तारणं ततः ॥८२॥
पीठपूजां कुण्डपूजामग्निस्थापनमाचरत् ।
ग्रहस्थापनमेवाथ योगिनीस्थापनाऽर्हणे ॥८३॥
क्षेत्रपालस्थापनार्हे कुण्डमेखलिकार्चनम् ।
अग्नेः प्रपूजनं ग्रहार्हणाऽन्वाधानचिन्तनम् ॥८४॥
आधाराज्यभागादिहोमं चकार विश्वसृट् ।
वास्तुमण्डपदेवादिहोमं चकार माधवः ॥८५॥
योगिनीहोममेवापि प्रधानहोममित्यपि ।
व्याहृतिहोममेवापि बलिदानं ददौ ततः ॥८६॥
यूपारोपणमेवापि चक्रेऽधिवासनं ततः ।
जलमातृप्रपूजां च जलपूजामकारयत् ॥८७॥
शंखघण्टादिपूजां च भूतशुद्धिमकारयत् ।
प्राणप्रतिष्ठां कृष्णस्य षोडशादिप्रपूजनम् ॥८८॥
बलिदानं तथाऽऽहुतीन् सर्वदेवहवींस्ततः ।
महापूर्णाहुतिहोमं घृतधाराभिराचरत् ॥८९॥
श्रीफलैश्च रसैः सर्वविधैश्च पायसादिभिः ।
चन्दनैः फलपुष्पाद्यैश्चकार परमेश्वरः ॥९०॥
नीराजनं महारार्त्रिकं चकार हरिः स्वयम् ।
पुष्पाञ्जलिं ददौ सर्वयजमानाभिषेचनम् ॥९१॥

ब्रह्मा व्यधात्ततः श्रेयोदानं च दक्षिणाः शुभाः ।
भूयसीः स्वर्णरत्नाढ्या आशीर्वादान् ददौ ततः ॥९२॥
परिहारं सवाग्रं च कारयामास विश्वसृट् ।
फलानां कन्दमूलानां भोजनान्यभवँस्ततः ॥९३॥
पायसादिप्रसादानां भोजनानि शुभानि च ।
मुन्यन्नानां चामृतानां शाकानां पयसां तथा ॥९४॥
भोजनान्यभवँस्तत्र यथायोगं च देहिनाम् ।
व्रतिनां सर्वलोकानां तृप्तिर्यथायथं ह्यभूत् ॥९५॥
ततः श्रीबद्रिके चाऽवभृथं सिन्धुजलेऽभवत् ।
अवभृथमहातीर्थं ख्यातं तत्तु व्यजायत ॥९६॥
अवभृथमहास्नाने महाश्चर्याणि चाभवन् ।
बहूनि स्वर्णदिव्यानि विमानानि समाययुः ॥९७॥
अनादिश्रीकृष्णनारायणाद्यधिष्ठितानि च ।
ये ये त्वासन् शुद्धभावा जना मोक्षाधिकारिणः ॥९८॥
नरा नार्यो निजान्देहान् त्यक्त्वाऽथ दिव्यविग्रहाः ।
भूत्वाऽऽरुह्य विमानानि ययुर्धामाऽक्षरं हरेः ॥९९॥
ययुः केचन गोलोकं वैकुण्ठं केचनापि वै ।
अव्याकृतं ययुश्चापि ययुः केचन चामृतम् ॥१००॥
श्रीपुरं चापरे भक्ताः परे सत्यं दिवं ययुः ।
बद्रीनाथं श्वेतधाम क्षीरधाम ययुः परे ॥१०१॥
कैलासं ब्रह्मलोकं च यथाशुद्धि ययुस्तदा ।
महाश्चर्यमभूत्तद्वै बद्रिके मोक्षदायकम् ॥१०२॥
ततः स्वस्वावसथाँश्च ययुः कीर्तनकारिणः ।
पत्तने संहितायाश्च भ्रामणं पूजनादिकम् ॥१०३॥
देशेषु सार्वभौमेषु ततोऽभूद् बद्रिके बहु ।
गृहे गृहे चत्वरादावापणेष्वालयेष्वपि ॥१०४॥
राजद्वारे मन्दिरादौ प्रत्यंगणं प्रपूजनम् ।
व्यासस्य संहितायाश्च प्रस्थापनमभूच्छुभम् ॥१०५॥
आरार्त्रिकानि दानानि पूजनान्युपदास्तथा ।
नैवेद्यानि प्रजायन्ते बद्रिके वै स्थले स्थले ॥१०६॥
महावाद्यानि वाद्यन्ते कीर्त्यन्ते तद्यशांसि च ।
कुमारिकाभिः सौभाग्यवतीभिश्च सतीजनैः ॥१०७॥
पूज्यन्ते नागरिकाभिः राज्ञीभिर्गृहिणीजनैः ।
शर्करानगरे चैवं राजद्वारे च मन्दिरे ॥१०८॥
प्रप्रतिष्ठापनं सम्यग् विधाय मण्डपालयम् ।
संहिताया आनयनं जातं महोत्सवेन ह ॥१०९॥
गजवाजिविमानानां वाहनानां च सर्वथा ।
नरयानोत्तमानां च सम्मर्दोऽभूद् दिवं यथा ॥११०॥
दर्शनं पुण्यदं तस्य स्मरणं पुण्यदं ह्यपि ।
चिन्तनं पुण्यदं बद्रि ध्यानं तस्य तु मोक्षदम् ॥१११॥
एवं समुत्सवं सर्वेऽवलम्ब्य भुवि भूमिपाः ।
करिष्यन्ति महायज्ञान् दानविधीन् तथोत्तमान् ॥११२॥
पठनाच्छ्रवणादस्य मोक्षः स्यान्नात्र संशयः ।
सकामानामिष्टलब्धिर्भवेदेव न संशयः ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने आषाढशुक्लैकादश्यां संहितापारायणसमाप्तौ श्रीकृष्णनारायणेन देवै राजभिः प्रजाभिः सर्वसृष्टिदेहिभिः संहिताया व्यासस्य गुरोः साधूनां साध्वीनां द्विजानां महर्षीणां च कृतपूजनोपदार्पण्याऽऽरार्त्रिकादिकं स्वस्वगृहालयमन्दिरसौधादौ भ्रामणं प्रप्रतिष्ठानं चेत्यादिनिरूपणनामा ऽष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

श्रीबदरीप्रियोवाच—

नारायणहरे कृष्ण ततः किं समजायत ।
क्व क्व यानं ततः कुंकुमाऽश्वरागमनं कदा ॥ १ ॥

श्रीनरनारायण उवाच—

आषाढशुक्लद्वादश्यां कृतस्नानप्रपूजनः ।
अनादिश्रीकृष्णनारायणो नैजे गजासने ॥ २ ॥
पद्मावतीप्रियायुक्तो व्यराजत स्वदर्शनम् ।
प्रातर्दातुं स्वतःप्रकाशोऽपि वै लोमशो मुनिः ॥ ३ ॥
श्रीमद्गोपालकृष्णाद्या पत्नीव्रताश्च भूसुराः ।
व्यराजन्त सभायां ते कृष्णनारायणान्तिके ॥ ४ ॥
विप्राः सत्यः साधवश्च सिद्धाश्च यतयोऽमलाः ।
विरेजिरे सभामध्ये सूर्यवर्चस्विनोऽनघाः ॥ ५ ॥
श्रीहरेर्दर्शनार्थं वै स्वायंभुवादिसृष्टिपाः ।
ब्रह्माद्या भगवन्तश्च महेन्द्राद्याश्च देवताः ॥ ६ ॥
महर्षयश्च राजानो राज्ञयश्च देविकागणाः ।
श्रेष्ठिनश्च प्रजावर्गा महाभागवतोत्तमाः ॥ ७ ॥
आययुश्चोपदा हस्ता पुपूजुः परमेश्वरम् ।
व्यासं गुरुं लोमशं च नत्वोपाविविशुश्च ते ॥ ८ ॥
लोमशः श्रीगुरुः सर्वान् धन्यवादानवासृजत् ।
विदायं प्रददौ योग्योत्तमेभ्यो हि यथायथम् ॥ ९ ॥
साधुभ्यश्च सतीभ्यश्च महर्षिभ्यो विदायकम् ।
महीमानेभ्य एवाप्यागन्तुकेभ्यो विदायकम् ॥१०॥

सुरेभ्यः पितृदेवेभ्यः सिद्धेभ्यः प्रददौ तथा ।
गान्धर्वसूतवन्दिभ्यः सेवकेभ्यो ददौ मुदा ॥११॥
कर्मचारेभ्य उत्कृष्टविदायानि ददौ मुनिः ।
पारितोषिकरूपाणि स्वर्णादीनि ददौ मुदा ॥१२॥
विप्रेभ्यो दक्षिणादानान्यमानि कानकानि च ।
हीरकान् रत्नभूषाश्च धनानि प्रददौ मुनिः ॥१३॥
देवीभ्यः स्त्रीभ्य एवापि कन्याभ्यः प्रददौ मुनिः ।
बालेभ्यो ब्रह्मचारिभ्यो यतिनीभ्यो विदायकम् ॥१४॥
सांख्ययोगिनीभ्यो ब्रह्मचारिणीभ्यो ददौ मुनिः ।
यथायोग्यं विदायं वै पूर्णसन्तोषकारकम् ॥१५॥
स्वर्णहारान् स्वर्णभूषाः स्वर्णाम्बराणि मुद्रिकाः ।
सुवेषान् स्वर्णपात्राणि देहोपकरणान्यपि ॥१६॥
शृंगारोत्तमरूपाणि कल्पपात्राणि यान्यपि ।
कल्पचिन्तामणीन् मौक्तिकादिहारान् ददौ मुनिः ॥१७॥
यानानि गृहसामग्रीर्ददौ श्रीलोमशो गुरुः ।
आशीर्वादान् ददौ चान्ते महोत्सविभ्य आदरात् ॥१८॥
विहायं प्रददौ पुष्पहारान् कण्ठेषु देहिनाम् ।
अथ भूपाः सभायां तं जगदुर्लोमशं मुनिम् ॥१९॥
निजालयान्निजराज्यं पवित्रयितुमागमैः ।
अनादिश्रीकृष्णनारायणो व्यासश्च संहिताः ॥२०॥
लोमशः पितरौ चान्याः श्रीलक्ष्म्याद्याश्च देवताः ।
यथायोग्यं समायान्तु पवित्रयन्तु नः क्षितीः ॥२१॥
राष्ट्राणि नः प्रदेशांश्च प्रजाश्च मन्दिराणि नः ।
पवित्रयन्तु चागत्य भगवन्तः परेश्वराः ॥२२॥
स्वायम्भुवो मनुश्चापि प्रियव्रतो नृपस्तथा ।
उत्तानपादश्चाप्याह प्राहाऽऽग्नीध्रो नृपस्तथा ॥२३॥
प्रार्थयँश्च तदा खण्डेश्वरा हिरण्यकादयः ।
पावयितुं निजावासान् निजप्रजादिभूमिकाः ॥२४॥
तथाऽस्त्विति कृष्णनारायणस्तेभ्यो ददौ वचः ।
कोटिरायो रायहरिस्ततो विदायकं महत् ॥२५॥
यथायोग्यं नृपादीनां चक्रतुः सेवकाविव ।
सभाविसर्जनं चाद्रि जयनादैस्ततोऽभवत् ॥२६॥
भोजनान्यभवँस्तत्र लक्षाऽयुताधिदेहिनाम् ।
सज्जता प्रस्थानकानि गमनानि ततोऽभवन् ॥२७॥
प्रजाः स्वस्वराष्ट्रदेशान् ययुः प्रसन्नमानसाः ।
महीमाना ययुश्चापि नृपभिन्नाः प्रजाजनाः ॥२८॥
देवा ययुश्चेश्वराश्च तदा कृष्णाज्ञया दिने ।
देवैरभ्यर्थितः कृष्णो गन्तुं स्वर्गादिकालयान् ॥२९॥
हरिः कालान्तरे गन्तुं स्वीकृत्यतानवासृजत् ।
ईश्वरानपि सर्वान् वै प्रार्थनाकारिणस्तथा ॥३०॥
कालान्तरे प्रयातुं स्वीकृत्येश्वरानवासृजत् ।
पितॄनपि तथोक्त्वैव पातालवासिनस्तथा ॥३१॥
कालान्तरे प्रगन्तुं च स्वीकृत्य तानवासृजत् ।
ओमित्याह हरिस्तत्र भूपेभ्यस्तद्दिने खलु ॥३२॥
पृच्छ्यामेव नृपाणां तु गन्तुं गृहाणि भूस्तरान् ।
स्वीचकार कृपासिन्धुर्लोमशस्यानुमन्त्रणात् ॥३३॥
अथ सर्वसमाजो द्वादश्यां विसृष्ट एव ह ।
केवलाश्च नृपाः सज्जा भूत्वा प्रतीक्षणे स्थिताः ॥३४॥
तदा व्यचिन्तयत् कृष्णः सर्वेषां लाभकांक्षया ।
नैकरूपधरत्वं वै सर्वैः सह प्रमाणकम् ॥३५॥
अथैवं संविचार्यैवाऽनादिकृष्णनरायणः ।
बद्रिकेऽधारयन्नैकरूपाणि सहस्रानि सः ॥३६॥
स्वतःप्रकाशश्यासात्मा लोमशात्माऽभवत्प्रभुः ।
तावद्रूपश्च पित्रात्मा मात्रात्मा चाऽभवत्प्रभुः ॥३७॥
राधारमादिशक्त्यात्मा दासदासीस्वरूपवान् ।
यावन्तो राजन्यवर्यास्तावद्रूपाण्यधारयत् ॥३८॥
तेषां तावद्विमानेषु समारुरोह माधवः ।
तावत्सर्वस्वरूपात्मा सर्वस्ववर्गरूपवान् ॥३९॥
शर्करानगरं त्यक्त्वाऽम्बरे विमानकानि वै ।
अभवन् बद्रिके कृष्णाज्ञया तत्स्वामिजुषि वै ॥४०॥
तदा वाद्यान्यवाद्यन्त जयशब्दास्तदाऽभवन् ।
ओं नमो बालकृष्णायाऽनादिकृष्णाय ते नमः ॥४१॥
नमस्काराश्चाभवँश्च पुष्पाऽक्षताऽभिवर्धनम् ।
चक्रुर्लोका देवताद्याश्चन्दनाद्यभिवर्षणम् ॥४२॥
कृष्णाज्ञया विमानानि निर्ययुः सिन्धुमण्डलात् ।
प्रथमं कोटिरायस्याऽऽलयं प्रति ययौ द्रुतम् ॥४३॥
द्वितीयं तु रायहरिमन्दिरं प्रति तद् ययौ ।
तृतीयं तु ययौ स्वायम्भुवमन्दिरमुज्ज्वलम् ॥४४॥
चतुर्थे तु ययौ दिव्यं प्रियव्रतालयं प्रति ।
पंचमं तु ययौ दिव्यमुत्तानपादमन्दिरम् ॥४५॥
षष्ठमाग्नीध्रराज्यं वै सप्तमं तु हिरण्यकम् ।
अष्टमं केतुमालं च नवमं तु कुरुं प्रति ॥४६॥
दशमं काशिकाराजं ययौ विमानमुत्तमम् ।
शावदीनं लक्ष्मणं च जुम्मासेम्लं नृपं प्रति ॥४७॥
दक्षजवंगरं शिबिदेवं प्रति पृथक् पृथक् ।
यर्कुटस्थं वीरजारं शक्त्यक्षिकं नृपं प्रति ॥४८॥
कालिम्पाद्यं बालकाद्यं कथकं प्रति वै पृथक् ।
पृथुराजं प्रत्युरलकेतुमुख्यालराजकम् ॥४९॥

तीराणं चापि हंकारं जयकाष्ठलकं प्रति ।
पृथक् कृष्णस्य यानानि ययुस्तैस्तैः सहैव ह ॥५०॥
अल्वीनरं जीनवर्द्धिमल्पकेतुं पृथक् पृथक् ।
जयकृष्णवनृपतिं परीशाननृपं प्रति ॥५१॥
हन्नुरायं च मुद्राण्डं गण्डराजं पृथक् प्रति ।
बृहच्छरं च लीनोर्णं बल्लीनं पृथक् पृथक् ॥५२॥
रायगामलभूपं च वरसिंहं पृथग् ययुः ।
फेनतन्तुनृपं स्तोकहोमं च कोलकं प्रति ॥५३॥
काष्ठयानं दिनमानार्कं पृथग् रायकिन्नटम् ।
रायरोकीश्वरं रायरणजीवं पृथग् ययुः ॥५४॥
रायवाकक्षकं चापि रायमारीशकं प्रति ।
रायबलेश्वरं रायलम्बरं प्रति वै पृथक् ॥५५॥
रायनवार्कभूपं च रायहुण्डेशकं प्रति ।
रायकूपेशभूपं च कालिमाण्डलिकं प्रति ॥५६॥
वनजेलेशभूपं च पारावारपिबं पृथक् ।
हरेर्विमानवर्याणि ययुस्तान् प्रति वै पृथक् ॥५७॥
कोटीश्वरं श्रीसतीशं त्रेताकर्कशभूपतिम् ।
आण्डजरं बाल्यरजं रायसोमनकं पृथग् ॥५८॥
ऊरुगवाक्षकं पराङ्मतमीशानपानकम् ।
राजारायपतिं चापि विमानानि पृथग् ययुः ॥५९॥
यशं धर्मं च धातारं विधातारं पृथक् पृथक् ।
नाभिं किम्पुरुषं चान्यं रम्यकं प्रति वै पृथक् ॥६०॥
उमारायं क्षीरपुरुं नागविक्रमणं प्रति ।
जयादित्यं विक्रमार्कं कृष्णदुर्गं च पाञ्चलम् ॥६१॥
प्रभालाक्षं लक्ष्सेनम् आम्रशालं श्रीलम्भनम् ।
प्रपत्पालं प्राणिपातं नन्दिभिल्लं पृथग् ययुः ॥६२॥
रायपारं चेन्द्रगृत्सं गवयेन्द्रं जनात्मकम् ।
कर्णपुत्समवध्याभं यागदेवं पटासनम् ॥६३॥
दाराभाग्यं राजमानं माधवं ब्रह्मपानकम् ।
शीलहारं माणिकाभं चित्तमांगेयकं प्रति ॥६४॥
चन्द्रनागं मेदकोशं पुरुकुत्सं पृथग् ययुः ।
बालसंघं पार्वतेशं नागविजयकं प्रति ॥६५॥
राजमारुं महेन्द्राभं मदाशनं नृपं प्रति ।
शररंगं मधुराजं विरामासं पृथग् ययुः ॥६६॥
त्रिकूटार्कं महासारं चित्रलास्यं नृपं प्रति ।
कलिकाञ्चनमापाण्डमकलार्यं विवर्धनम् ॥६७॥
मण्डलारं जवलीनमिन्द्रद्युम्नं नृपं प्रति ।
माठरसिंहं नृपं कुटिघरं चिचिन्तनं पृथग् ॥६८॥

उदङ्क्प्रभं श्रीनागारिं घरणिघ्रं रजिध्वजम् ।
मूरध्वजं कुंकुमास्यं नृपं प्रति पृथक् पृथक् ॥६९॥
ययुर्हरेर्विमानानि बद्रिके सह तैः पृथक् ।
तथा खण्डनृपैश्चापि द्वीपेशैश्चाब्धितीरगैः ॥७०॥
रणेशैरद्रिभूपैश्च चोपभूपैः पृथग् ययुः ।
तत्तद्देशान् समुल्लंघ्य तत्तद्राष्ट्राणि संययुः ॥७१॥
तत्तन्नृपालयोद्यानभूम्यादौ तान्यवातरन् ।
जलपानं भोजनादि कारयित्वाऽमृतादनम् ॥७२॥
नगरे भ्रामयामासुः स्वस्वस्मिन् भूमिपास्ततः ।
संहितायाः पूजनं च व्यासस्य पूजनं गुरोः ॥७३॥
स्वे स्वे दिव्ये महारम्ये प्रासादे चक्रुरुत्सुकाः ।
उपदाश्चार्पयामासू रत्नहीरकमालिकाः ॥७४॥
सर्वोत्कृष्टं गृहे यद्यद् राज्ये राष्ट्रे तथोत्तमम् ।
तत्तच्छ्रीकृष्णसेवायां न्यधुस्ते राजसत्तमाः ॥७५॥
आरार्त्रिकं प्रचक्रुश्च पपुः पादामृतं हरेः ।
प्रसादं भक्षयामासुः श्रीस्वामिकृष्णहस्ततः ॥७६॥
सेवयामासुरत्यर्थं पादसंवाहनादिभिः ।
एनं प्रसादयामासुर्भक्त्या पद्मावतीपतिम् ॥७७॥
जगृहुस्ते महामन्त्रान् प्रज्ञानारायणाननात् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥७८॥
'शरणं श्रीकृष्णनारायणोऽस्तु मम सर्वदा' ।
कालमायापापकर्मशत्रुयाम्यकुहृद्भयात् ॥७९॥
शूलमीनध्वजधनुश्चक्रस्वस्तिवानत्र' ।
'ब्रह्माऽहं श्रीकृष्णनारायणभक्तोऽस्मि शाश्वतः' ॥८०॥
'ब्राह्मयहं श्रीकृष्णनारायणदासी भवामि ओम्' ।
'ओं नमः श्रीकृष्णनारायणाय पतये स्वाहा' ॥८१॥
'अनादिश्रीकृष्णनारायणः स्वामी पतिश्च मे' ।
'बालकृष्णः परब्रह्म मम वै शाश्वतः पतिः ॥८२॥
पिता बन्धुः सुहृन्मित्रं रक्षकः पोषकोऽस्तु सः' ।
'बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि ।
तन्नः श्रीशः प्रचोदयात्' ॥८३॥
'ओं श्रीलक्ष्म्यै महालक्ष्म्यै दुःखभंक्त्र्यै श्रियै नमः' ।
'ओं मां श्रीबालकृष्णाय समर्पयामि ओं नमः' ॥८४॥
'कृष्णनारायणभक्तोऽहं श्रीहरिः शरणं मम' ।
'श्रीकृष्णो वल्लभः स्वामी श्रीस्वामी शरणं मम' ॥८५॥
'श्रीकृष्णः श्रीहरिः स्वामी श्रीपतिः शरणं मम' ।
'श्रीकृष्णो वैष्णवाचार्यः प्रभुः पद्मावतीपतिः ॥८६॥
स्वामी मे शाश्वतः कान्तस्तस्याऽहं स्वामिनी प्रिया' ।
'प्रभुः कृष्णः पारमेश्यः श्रीकृष्णः शरणं मम' ॥८७॥

'प्रभुः कृष्णः पार्वणो नारायणः शरणं मम'।
एतान्मन्त्रान् ददौ कृष्णनारायणः स्वयं हरिः ॥८८॥
'कृष्णनारायण कृष्णनारायण नरायण।
अनादिश्रीकृष्णनारायण राधारमायण' ॥८९॥
'प्रभो नारायण माधवीश्रीनारायण प्रभो।
जयानारायण श्रीलंलितानारायण ! विभो' ॥९०॥
'कंभरागोपाललालः स्वामी पतिश्च मामव'।
एवं मन्त्रान् नामधुन्यं ददौ चापि स्वयं हरिः ॥९१॥
तुलसीकण्ठिकां चापि तिलकं चन्द्रशोभितम्।
ददौ स्वचरणौ तेषां वक्षःस्थलेषु माधवः ॥९२॥
जगृहुस्ते हरे रक्तचरणौ रंगशोभितौ।
मुद्रापितौ शुभौ सर्वपादचिह्नसुशोभितौ ॥९३॥
दक्षहस्ततलस्यापि सचिह्नमुद्रिकां शुभाम्।
जगृहुस्ते तु पूजार्थं दर्शनार्थं तु रञ्जिताम् ॥९४॥
प्रतिकृतिं प्रतिमां च प्रतिरूपं च जगृहुः।
चित्रं कृत्वा हरिं गेहे रक्षयामासुरन्वहम् ॥९५॥
बद्रिके द्वादशीरात्रिं सर्वगेहेषु माधवः।
उषित्वा तु ततः प्रातः कृतसेवादराऽशनः ॥९६॥
कृतपूजः समस्तैश्च तोषितस्तोषितैश्च तैः।
सवाद्यगीतयशसा जयनादैः समन्ततः ॥९७॥
प्रस्थापितो विमाने स्वे पृथक् समारुरोह च।
तदा सर्वेऽन्तिमां नैजां प्रार्थनां चक्रुरीशिनः ॥९८॥
'हरे स्वामिन् कृपासिन्धो पाविताः कृपया वयम्।
तथैव चान्तकालेऽपि पावनान् स्वाक्षरं नय ॥९९॥
मध्ये सदा मूर्तिरूपो रक्षयाऽस्मान् तवाश्रितान्।
हृदये स्वं दिव्यरूपं सदा चेदं प्रदर्शय ॥१००॥
तवाऽस्मीति तव स्मश्च तथा पालय सर्वदा।
एवं मायाविमोहो न भवन्नैवेति चिन्तय' ॥१०१॥
इत्येवं बद्रिके सर्वे चक्रुश्चाभ्यर्थनां प्रभोः।
पूजायामागतं यद्यत् सर्वं प्रसादरूपि तत् ॥१०२॥
हरिस्तेभ्यः प्रदात्तुभ्यः प्रत्यार्पयत् कृपावशः।
आशीर्वादान् शुभान् दत्वा स्वीकृत्य प्रार्थनां ततः ॥१०३॥
प्राप्य विदायमेवाऽसौ पश्यन् भक्तान्नृपादिकान्।
प्रजाजनाः प्रपश्यंश्च प्रेम्णा विमानमैरयत् ॥१०४॥
अम्बरे सहसा कृष्णविमानानि समौद्धुयन्।
तिरोऽभवन् चिदाकाशे कृष्णात्मकानि तानि वै ॥१०५॥
एकीभूतानि सर्वाणि सौराष्ट्रेऽश्वसरोऽन्तिके।
कुंकुमवापिकाक्षेत्रे विमानमेकमाययौ ॥१०६॥
अवतारच्छनैः क्षेत्रे द्योतयन् सर्वतोदिशः।
भगवान् व्यासदेवाद्या लोमशाद्या महर्षयः ॥१०७॥
पितरौ दासिका दासा विविशुः स्वस्वमन्दिरम्।
एवं श्रीबद्रिके पारायणस्याऽस्य महोत्सवः ॥१०८॥
अभूत् सर्वोत्सवाग्र्यश्च पारायणाग्र्य एव सः।
ततस्तु चक्रिरे त्वन्ये मखान् भागवतोत्तमाः ॥१०९॥
स्वारोचिषस्तथा भूपा उत्तमस्तामसोऽपि च।
रैवतश्चाक्षुषश्चापि वैवस्वतोऽपि तन्नृपाः ॥११०॥
एते च मनवः पारायणोत्सवान् प्रचक्रिरे।
अन्ये चापि विधास्यन्ति महाभागवतोत्तमाः ॥१११॥
मोक्षशास्त्रमिदं बद्रि धर्मार्थकामनाफलम्।
सर्वेष्टदायकं चात्मपरमात्मप्रसङ्गदम् ॥११२॥
पठनाच्छ्रवणादस्य कथोत्सवस्य चिन्तनात्।
सर्वेष्टसिद्धिः सुलभा सुलभा दिव्यसम्पदः ॥११३॥
मोक्षलाभो भवेच्चापि सर्वेषणाप्रपूर्तयः।
कल्पवृक्षसमास्तस्य संकल्पाः सफला द्रुतम् ॥११४॥
मनश्चिन्तामणिप्रख्यं प्रजायेत न संशयः।
कथानां धारणाल्लक्ष्मीतुल्या नारी भवेदपि ॥११५॥
नरो नारायणः स्याच्च कथानां धारणादिह।
बद्रिके सर्वसृष्टौ तत् पारायणं जयत्यति ॥११६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने-ऽखिलनृपार्थितः श्रीहरिर्नैकरूपधरः सन् सर्वनृपराष्ट्रमन्दिराणि ययौ, पूजां प्रगृह्य पावयित्वा तिरोभूयाऽश्वपट्टसरः प्रत्याययावित्यादिनिरूपणनामा नवाऽधिकसप्ततितमोऽध्यायः ॥ ७९ ॥

श्रीबद्रीप्रियोवाच—

सर्वकल्याणकर्तः श्रीकान्त कृष्णनरायणः।
किं चकार ततः सर्वं चरित्रं वक्तुमर्हसि ॥ १ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि स्वामिकृष्णनरायणः।
नागविक्रमभूपेन यज्ञे त्वाकारितो ययौ ॥ २ ॥
पारवत्या निजपत्न्या प्रभया निजकान्तया।
युतः सन्तुष्टया स्वस्रा दासदासीगणैर्युतः ॥ ३ ॥
ययावस्मै कृष्णनारायणाय शर्करापुरे।
प्रतिज्ञातं तु यज्ञार्थं युद्धपुराऽधिपेन यत् ॥ ४ ॥

नागविक्रमसंज्ञेन समारब्धो मखस्तु सः ।
तत्राऽनादिकृष्णनारायणो ययौ निमन्त्रितः ॥ ५ ॥
सर्वमेधं महायज्ञं कारयामास माधवः ।
अनादिश्रीकृष्णनारायणश्रीश्वरवल्लभः ॥ ६ ॥
नागविक्रमराजेशो महाभागवतोत्तमः ।
चातुर्मास्यव्रतं कुर्वन् सर्वमेधं चकार ह ॥ ७ ॥
युद्धपुरे लुनोनद्यास्तटे विशालभूतले ।
पञ्चयोजनविस्तारे मण्डपं स त्वकारयत् ॥ ८ ॥
श्रावणशुक्लैकादश्यां कृतसंभारसञ्चयः ।
यज्ञमारभत क्ष्मेशो विप्रयाज्ञिकनोदितः ॥ ९ ॥
आययुस्तत्र भूदेवाः साधवो वैष्णवा अपि ।
नरा नार्यो लक्षशो वै धर्मकार्यपरायणाः ॥१०॥
ब्रह्माऽभवत् कृष्णनारायणः श्रीभगवान् स्वयम् ।
यजमानो नागविक्रमाख्यो भूपो हि वैष्णवः ॥११॥
ऋत्विजो गालवाद्याश्च महर्षयोऽभवन्मखे ।
फालायनोऽभवत्तत्रोद्गाता सामपरायणः ॥१२॥
सारायणोऽभवत्प्रत्युद्गाता वेदार्थवित्तथा ।
अजायनोऽभवत्तत्राऽऽहर्ता वैदिकसत्क्रियः ॥१३॥
दण्डायनोऽभवत्प्रतिहर्ता सर्वक्रियापरः ।
भालायनस्तु ऋषिराट् प्रस्तोता चाभवन्मखे ॥१४॥
रसायनोऽभवत् प्रतिप्रस्तोता यज्ञकर्मणि ।
होता धारायणश्चैव प्रतिहोताऽलवायनः ॥१५॥
जापकाश्चार्बुदा विप्राः पौष्करा हवनार्थिनः ।
यामुनेया द्विजाश्चासन् दिक्पाला वैष्णवोत्तमाः ॥१६॥
सौराष्ट्रीयाः पूजकाश्च द्विजाश्चासँस्तदा मखे ।
गौर्जराः पाचकाश्चासन् मरुजाः परिवेषकाः ॥१७॥
गांगेया वेदमन्त्रादिव्याख्यातारोऽभवन्मखे ।
सिन्धुजाः पाठकाश्चासन् सभासदास्तु पूर्वजाः ॥१८॥
दक्षिणात्या हवनार्था आसँस्तत्र च जापकाः ।
महर्षयो वशिष्ठाद्या गुरवस्तु निरीक्षकाः ॥१९॥
द्रष्टारस्तत्र सर्वेषां कर्मणां वै तदाऽभवन् ।
मध्यस्था वैदिका विप्रा आसन् प्रख्यातनामिनः ॥२०॥
लोमशाद्यास्तथा मार्कण्डेयाद्या दिव्यदृष्टयः ।
हैमाचलाः कृष्णनाम्नां कीर्तनेष्वभवन् स्थिराः ॥२१॥
एवं वै बद्रिके यज्ञेऽभवन् विप्रा व्यवस्थिताः ।
साधवो लक्षशश्चाप्यभवन् भजनकारिणः ॥२२॥
प्रजाश्च खण्डराजन्या आमन्त्रिताः समाययुः ।
लक्षातिलक्षमनुजाः सर्वमेधेऽभवँस्तदा ॥२३॥

घृतकुल्या दधिकुल्याः सुधाकुल्यास्तदाऽभवन् ।
पयःकुल्या मधुकुल्याः शर्करापर्वतास्तथा ॥२४॥
मिष्टान्नानां पर्वताश्च पानानां प्रसरांसि च ।
भक्ष्याणां सेतवश्चासन् सर्वमेधेऽत्र बद्रिके ॥२५॥
फलानां लेह्यचोष्यानां महाद्रयोऽभवन् मखे ।
दानार्हहोमयोग्यानां मेरवस्तत्र चाऽभवन् ॥२६॥
समिधां पायसान्नानां क्षीराणां सञ्चयोत्तमाः ।
कणानां चापि शिम्बीनां राशयोऽप्यभवन्मखे ॥२७॥
वस्त्राणां कम्बलानां च भूषाणामद्रयोऽभवन् ।
पात्राणां दाररत्नानां धेनूनां मण्डलान्यपि ॥२८॥
देहोपकरणानां च गृहोपकरणार्थिनाम् ।
आसन् प्रराशयस्तत्र सम्पदां दिव्यसम्पदाम् ॥२९॥
सुवर्णानां रजतानां सञ्चयाश्चाऽभवन्मखे ।
आसनानां स्रुक्स्रुवाणां हविष्याणां प्रपूर्णताः ॥३०॥
दश सूत्यास्तथा बद्रि दीक्षाश्च द्वादशापि वै ।
उपसदो द्वादशश्च यथायोग्यं व्यवर्तयन् ॥३१॥
भाद्रपूर्णावधिर्यागश्चतुस्त्रिंशद्दिनात्मकः ।
सर्वांगपूर्णो ह्यभवद् बद्रिके कृष्णसन्निधौ ॥३२॥
बृहस्पतिसवाद्याश्च आप्तोर्यामान्तकाः शुभाः ।
सांगोपांगा ह्यभवँश्च नारायणसमाहिताः ॥३३॥
बृहस्पतिसवे त्रयस्त्रिंशद्गोदानमाभवत् ।
वैश्यसवे विप्रसवे सोमसवे तथाऽभवत् ॥३४॥
पृथिसवे गोसवे ओदनसवे तथाऽभवत् ।
मरुत्स्तोमेऽग्निस्तुतौ च महेन्द्रस्तवने तथा ॥३५॥
आप्तोर्यामे निघने च सवे गोदानकानि च ।
अभिषेकाः पृथक् चापि तत्तद्देवाऽभ्यपूजनम् ॥३६॥
पुरोडाशार्पणं चापि यथाकर्माऽभवन् खलु ।
सवोऽभिषेक उक्तो वै यजमानस्य चैव ह ॥३७॥
जलेनाऽऽज्येन दध्ना च घृतेन पयसा तथा ।
अभिषेको यथायोग्यमभवत्तत्र चाध्वरे ॥३८॥
पुरोडाशाश्चरवश्च हवींषि द्रव्यमुत्तमम् ।
ओदनानि सक्तवश्च मन्थास्तत्राऽभवन् शुभाः ॥३९॥
रथन्तरादिसोमाश्च संस्थाश्च हवनान्यपि ।
यथायोग्यानि जातानि निर्वर्तितानि शार्ङ्गिणा ॥४०॥
अवतारा ईश्वराश्च शक्तयो देवताः सुराः ।
प्रत्यक्षा आगमन् बद्रि कृष्णाऽऽहूतास्तदध्वरे ॥४१॥
सृष्टित्रये च ये देवा यज्ञाधिकारयोगिनः ।
सर्वे ते बलिभोगार्थमाययुर्गोचराः सुराः ॥४२॥

घृतधाराभिरेतेपि हविष्यान्नैरनुत्तमैः ।
रसैर्मिष्टान्नकैः क्षीरैः फलैः समिद्भिरित्यपि ॥४३॥
कणैः सुधाभिः पयसा तर्पिताः शाककन्दकैः ।
नित्यं तत्र प्रदीयन्ते स्वर्णगोदानकानि वै ॥४४॥
भोजनाऽम्बरदानानि धर्मदानानि यान्यपि ।
पितृतृप्तिप्रदानानि दीयन्ते वै नृपेण ह ॥४५॥
पूज्यन्ते साधवः सन्तः साध्व्यो विप्राश्च वैष्णवाः ।
आगन्तुकाऽनाथदीना नरा नार्यः प्रदानकैः ॥४६॥
लक्षशो मानवाद्याश्च भुञ्जते गृष्टमिष्टकम् ।
पिबन्ति सद्रसान् गृष्टिपुष्टिदान् तृप्तिकारकान् ॥४७॥
अग्नयो गोचरास्तत्र भुंजते स्वकर्ममुखे ।
प्रसन्ना देवताः सौम्या भुञ्जते हव्यमुत्तमम् ॥४८॥
पितरो भुञ्जते बद्रि तथाऽन्यदेवतादिकाः ।
समस्ताः श्रीकृष्णहस्तार्पितप्रसादमुत्तमम् ॥४९॥
तृप्तास्तृप्ता वयं तृप्ता इत्यूचुश्चानलाननाः ।
ततो यज्ञस्य भाद्रस्य पूर्णायां पूर्णताऽभवत् ॥५०॥
पूर्णाहुतौ हविष्याणि त्रैलोक्यसंभवानि वै ।
यान्यानीतानि तानि श्रीकृष्णो ददौ महानले ॥५१॥
उद्गारास्तृप्तिदास्तेषां सुराणां संभवन्ति च ।
मा मेति सुरवाचश्चाऽभवन् पूर्णाहुतौ मुदा ॥५२॥
सृष्टित्रयं तर्पितं श्रीकृष्णेन परमात्मना ।
नागविक्रमभूपस्य संकल्पः सफलीकृतः ॥५३॥
बद्रिके श्रीहरिर्यत्र विश्वात्मा सकलंभरः ।
दाता ग्रहीता भोक्ताऽत्ता नित्यतृप्तो जगन्मयः ॥५४॥
तत्राऽतृप्तिर्न विद्येत परिपूर्णो यतः स्वयम् ।
नागविक्रमभूपोऽपि कृत्वा यज्ञं सदक्षिणम् ॥५५॥
कृतकृत्योऽभवद् बद्रि महाभागवतोत्तमः ।
स्वर्णरूप्यमयीः सर्वा दक्षिणाः प्रददौ मखे ॥५६॥
गोधनानि विभूषाश्च कन्यादानानि वै ददौ ।
क्षितिदानानि रत्नानां दानानि विभवार्पणम् ॥५७॥
विद्यादानानि बहूनि धर्मदानानि सन्ददौ ।
गृहदानान्युत्तमानि वृत्तिदानानि सन्ददौ ॥५८॥
अवभृथं ततो राजा चकार याज्ञिकैः सह ।
जलमातृपूजनादि जलदेवप्रपूजनम् ॥५९॥
तीर्थस्थाने लूणिकाया जले चकार भूपतिः ।
सर्वं विधिं सदानं च कृत्वा स्नानं समाचरत् ॥६०॥
लक्षाधिमानवाः साकं स्नानदानानि चाचरन् ।
नागविक्रमभूपस्य राज्ञी नाम्नाऽर्कमालिनी ॥६१॥

अवभृथान्ते दानानि योषिद्भ्यः प्रददौ मुदा ।
हीररत्नादिहारांश्च स्वर्णभूषाम्बराणि च ॥६२॥
शृंगारवेषान् सुभगान् स्वर्णपात्राणि यानि च ।
देहोपकरणान्येव ददौ भूरीणि वै मुदा ॥६३॥
विप्रपत्न्यः कन्यकाश्च साध्व्यः सत्यः सखीजनः ।
प्रसन्नमानसा जातास्तृप्ता दानाप्तिसत्फलाः ॥६४॥
एवमवभृथे तत्र बद्रिके विस्मयावहः ।
चमत्कारोऽभवत्तूर्णं तं वदामि निबोध मे ॥६५॥
आगतं मण्डलं त्वेकं पिशाचानां महत्तदा ।
आकाशाज्जलमध्ये तत् पतितं निम्नवारिषु ॥६६॥
सहसा ते सहस्रं वै पपुर्वारि मुदान्विताः ।
पिशाचाः स्नातमात्राश्च दिव्यदेवास्तदाऽभवन् ॥६७॥
स्वर्णकुण्डलहाराद्यैर्भूषिताः सूर्यवर्चसः ।
सुरा देव्योऽभवन् सर्वे षोडशादिप्रवत्सराः ॥६८॥
कृताञ्जलयः श्रीकृष्णमस्तुवन् भावगर्भितम् ।
अहो वयं पुरा कृष्ण व्यापारार्थं वणिग्जनाः ॥६९॥
युद्धपुरात् थररणं निर्गताः शर्करापुरम् ।
स्त्रीबालसहिताः कृष्ण उष्ट्रमहोष्ट्रवाहनाः ॥७०॥
रणमध्ये गता यावज्झंझावातोऽतिदुःसहः ।
प्रोत्पन्नो वालुकावृष्टिवहो मध्याह्ननाशनः ॥७१॥
उष्ट्रा महोष्ट्रा बालाश्च नार्यः क्षितौ हि वायुभिः ।
वालुकासु मुहूर्तेन गर्भस्था अभवन्मृताः ॥७२॥
वयं ये बलिनश्चापि वालुकावृष्टिताडिताः ।
उपविष्टा वालुकाधस्तत्र छन्ना हि वालुभिः ॥७३॥
वालुकानामुच्छ्रया वै जाता वयं तदन्तरे ।
मृता गर्भगताः सर्वे पिशाचतां रणे गताः ॥७४॥
युद्धपुराम्याश्चसीमप्रदेशेषु निरन्तरम् ।
सहस्रसंख्यकाः कृष्ण अभवाम रणालयाः ॥७५॥
अद्य ज्ञात्वा सर्वमेधयज्ञस्याऽवभृथोत्सवम् ।
अनादिश्रीकृष्णनारायणपादजलामृतम् ॥७६॥
पातुमुपागताश्चात्र पीत्वा स्नात्वा पदामृतम् ।
पावनाः स्म च सञ्जाताः पिशाचत्वविवर्जिताः ॥७७॥
स्नानेन पुण्यलाभेन देवानां योग्यतान्विताः ।
अद्य जाता वयं कृष्ण तथापि सुरभावनाम् ॥७८॥
नेच्छामहे यतः कृष्ण पुनरावर्तनात्मिकाम् ।
अपुनरावृत्तिभावं कांक्षामहे तु सर्वथा ॥७९॥
परमेशो भवानत्र साक्षाद् दृष्टोऽधुना प्रभुः ।
पीतं पादजलं तेऽत्र स्नातं प्रसादवारिभिः ॥८०॥

तद्वयं परमं मोक्षं कांक्षामहे तवाऽऽश्रिताः ।
शाश्वतं ब्रह्मनिर्वाणं प्रापयाऽस्मान् कृपां कुरु ॥८१॥
श्रुत्वैवं भगवान् बद्रि करे धृत्वा जलं पुनः ।
निजमन्त्रं चार्पणात्मात्मकमुच्चार्य तत्र च ॥८२॥
संकल्पं संप्रयोज्यैवाऽक्षिपद् वारि सुरोपरि ।
सर्वे सुरा द्रुतं मुक्ता अभवन् दिव्यविग्रहाः ॥८३॥
वैकुण्ठपार्षदाः सर्वे ततोऽक्षरस्य पार्षदाः ।
दिव्या भूत्वा हरिं नत्वा जयमुच्चार्य चाऽसकृत् ॥८४॥
आगतेन विमानेन ययुर्धामाऽक्षरं हरेः ।
पश्यतां लुनिकानद्यास्तटे वै लक्षदेहिनाम् ॥८५॥
ययुर्धामाऽक्षरं सर्वे पिशाचा मुक्ततान्विताः ।
अथाऽऽश्चर्यपरा लोकाः क्षणं स्तब्धा इवाऽभवन् ॥८६॥
ज्ञातवन्तः प्रतापं श्रीहरेर्मानवदेहिनः ।
कृत्वैवं मोक्षणं स्नात्वाऽवभृथान्ते नृपादयः ॥८७॥
साकं श्रीहरिणा नैजालयान् ययुर्मुदान्विताः ।
चक्रुस्ते वैष्णवाः सर्वे देवा देव्यश्च साधवः ॥८८॥
भोजनानि महीमानाः प्रजा आगन्तुका जनाः ।
प्राप्य प्रसादं कृतिनोऽभवन् पुण्यातिशालिनः ॥८९॥
रात्रौ विश्रान्तिमापुश्च राजा राज्ञी हरिं मुदा ।
सिषेवाते बालकृष्णं वल्लभाऽऽर्ये सुसत्पतिम् ॥९०॥
पादसंवाहनाद्यैश्चाथ प्रगे प्रतिपद्दिने ।
जजागर हरिः स्नातः कृतपूजन ईशिता ॥९१॥
व्यराजताऽऽसने दिव्ये सौवर्णे नृपदर्शिते ।
पूजां कर्तुं हरेस्तत्राऽऽययुर्युद्धपुराश्रिताः ॥९२॥
उपदाः श्रीहरेरग्रे न्यस्य चन्दनकुंकुमैः ।
अक्षतैः कुसुमैर्माल्यैर्हरिभूषाम्बरादिभिः ॥९३॥
धनाद्यैरार्चयन् कृष्णनारायणपतिं पतिम् ।
आशीर्वादान् जगृहुस्ते पूजका वैष्णवा जनाः ॥९४॥
राजा विदायं प्रददौ महीमानान् समन्ततः ।
ययुस्ते निजदेशान् वै कृतार्थेना मुदान्विताः ॥९५॥
तमध्वरं प्रशंसन्तो ययुरानन्दसंभृताः ।
युद्धपुरप्रजाः कृष्णं सिषेविरे गृहे गृहे ॥९६॥
नीत्वा स्वस्वालयाचार्यो नरा आनन्दमाप्नुवन् ।
मन्त्रं जगृहुर्बहवो भक्ताः कृष्णस्य वैष्णवाः ॥९७॥
अभवन् युद्धपुरीयप्रजाजना विशेषतः ।
हरिर्दिनत्रयं तत्रोवास राज्ञ्याग्रहेण तु ॥९८॥
चतुर्थ्यां श्रीहरिर्गन्तुं सज्जोऽभवन्निजालयम् ।
तावत् युद्धपुरे बद्रि सैन्यं शत्रोरुपागतम् ॥९९॥
नामतो नन्दिभिल्लस्य यमुनातटभूपतेः ।
दूतं स प्रेषयत्तूर्णं रणार्थं नन्दिभिल्लकः ॥१००॥
युद्धं देहि च वा राज्यं देहि वा करदो भव ।
इत्युवाच हि दूतोऽपि नत्वा तु नागविक्रमम् ॥१०१॥
दूतं सत्कृत्य राजाऽपि कृष्णं न्यवेदयत्त तत् ।
कृष्णो ज्ञात्वा मदं नन्दिभिल्लस्याऽऽज्ञापयद् रणम् ॥१०२॥
बद्रिके युद्धनगरे युद्धवार्ता स्थले स्थले ।
प्रासरद् भयदा सर्वदेहिनां तिष्ठति प्रभौ ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने युद्धपत्तनस्य नागविक्रमस्य नृपस्य सर्वमेधयज्ञं श्रीकृष्णनारायणः सम्पादयामासेत्यादिनिरूपण-नामाऽशीतितमोऽध्यायः ॥ ८० ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि क्षात्रधर्मो हि दुर्जयः ।
सति राज्येऽपि राष्ट्रान्यत् वाञ्छन्ति मुग्धभूमिपाः ॥ १ ॥
तृष्णातन्तुर्गले यस्य पाशरूपः प्रवर्तते ।
सत्सु सर्वेषु भोग्येषु मृत्युमुखो स गच्छति ॥ २ ॥
न सम्पत्सुखमृच्छन्ति तृष्णाऽन्धीकृतबुद्धयः ।
नात्मकल्याणमिच्छन्ति रागद्वेषाभिवर्तिनः ॥ ३ ॥
राजाऽपि परभोगेच्छुः परद्रव्यादिलालसः ।
जार एव हि प्रोक्तोऽसौ जारत्वं परभोक्तृता ॥ ४ ॥
कृष्णे त्रैलोक्यनाथे च प्राप्ते श्रीपरमेश्वरे ।
येषां तृष्णा न शान्ता चेत् त एव गोखरास्त्विह ॥ ५ ॥
सति ज्ञाने न वै यस्येन्द्रियाणां शान्तता स तु ।
वानरो नरभावेऽपि पशुर्याम्यग्रहार्हणः ॥ ६ ॥
कृष्णः सम्पूजितो येन गृहे मूर्तिश्च रक्षिता ।
हृदये पूजितो नैव रक्षिता न स राक्षसः ॥ ७ ॥
नन्दिभिल्लो नृपो बद्रि कथायाः समये पुरा ।
पुपूज श्रीहरिं नीत्वा विमानेन स्वमन्दिरे ॥ ८ ॥
स एव भगवानत्र राजते गुरुरच्युतः ।
नागविक्रमयज्ञे वै नन्दिभिल्लागुरुर्हि सः ॥ ९ ॥
श्रुत्वा कीर्तिं तु यज्ञस्य नागविक्रमभूपतेः ।
नन्दिभिल्लोऽसहमानो ज्ञात्वाऽपि गुरुमास्थितम् ॥१०॥
युद्धपुरे स्थितं चापि ज्ञात्वा युद्धार्थमाययौ ।
सोऽयं मोहो विनाशार्थो नन्दिभिल्लस्य विद्धि ह ॥११॥
यत्र श्रीभगवानास्ते तं योद्धुं यदुपाययौ ।
यत्रास्ते भगवान् साक्षात्तस्यैव विजयो ध्रुवः ॥१२॥

जानन्नपि नन्दिभिल्लो यमुनाभूपतिर्बली ।
लक्षयोद्धृगणैः सार्धं युद्धार्थं यदुपाययौ ॥१३॥
दूतं दर्दुररत्नाख्यं प्रेषयामास मोहतः ।
नागविक्रमभूपं श्रीकृष्णनारायणान्वितम् ॥१४॥
प्रणम्याऽऽगत्य राजानं नत्वा श्रीपुरुषोत्तमम् ।
स्वस्वाम्युक्तं समस्तं वै प्राह गर्वभरं वचः ॥१५॥
गंगायमुनासिन्धूनां मध्ये सम्राड् भवाम्यहम् ।
अन्ये मे करदाः सर्वे भवान् भवति मे तथा ॥१६॥
तस्मात् करदः खण्डेशः करं ददातु मे द्रुतम् ।
नो चेद् युद्धं प्रददातु नन्दिभिल्लस्य मे नृप ॥१७॥
नान्दिभिल्लीं राजधानीं सर्वराज्यातिवर्तिनीम् ।
गृह्णातु युद्धमूल्येन मा चिरं करदोऽस्ति मे ॥१८॥
मया कृपालुना नाऽन्याऽवधिः करः स्मृतो यतः ।
अल्पकीर्तिः क्षुद्रराज्यो भवानास्ते विचार्य तत् ॥१९॥
किन्त्वत्र मस्तमासाद्य वर्तते मूर्ध्नि रोहितुम् ।
पादत्राणं कथं मूर्ध्नि तिष्ठेत करदोऽस्ति यः ॥२०॥
युद्धे युद्धपुरं दत्वा यद्वा मे किंकरोऽस्तु च ।
एषोऽहं सन्निधावस्मि युद्धपुरस्य सीमसु ॥२१॥
अनिर्देश्यविमानाढ्यश्चानिर्देश्यगजान्वितः ।
उष्ट्राऽश्वाऽश्वतरासंख्यमानवसैन्यसंयुतः ॥२२॥
शीघ्रं करोतु वै प्राणग्लहं त्वग्रे ह्युपस्थितम् ।
यद्वा प्रसादमासाद्य करोतु राज्यमुत्तमम् ॥२३॥
इत्येवं मम नृपतिर्भवते वै यशस्विने ।
आवेदयति दूतोऽहं कथयामि यथोदितम् ॥२४॥
इत्युक्त्वा बद्रिके दूतो विरराम ननाम च ।
कृतादरो निषसाद सिषेवे पुरुषोत्तमम् ॥२५॥
नन्दिवह्निमहासैन्यं लक्षमानवसंकुलम् ।
लुनीनद्यास्तटे बद्रि चासीत् सन्नद्धमुत्सुकम् ॥२६॥
विमानशतसंयुक्तं सहस्रगजशोभनम् ।
पञ्चसाहस्रोष्ट्रयुक्तं दशसाहस्रवाजियुक् ॥२७॥
तथा विंशतिसाहस्रमहाश्वतरशोभनम् ।
तथा विंशतिसाहस्रवृषभादिसमन्वितम् ॥२८॥
पञ्चसाहस्ररथयुक् सर्वशस्त्रास्त्रपूरितम् ।
नीयमानं सैन्यपेन नाम्ना मयूरवाहिना ॥२९॥
एतादृशं महासैन्यं गुप्तचारेण वै द्रुतम् ।
ज्ञात्वा युद्धपुराधीशो नारायणमुपाययौ ॥३०॥
दूतं निष्कास्य दूरं वै न्यवेदयद् विपत्क्षणम् ।
हरिस्तस्मै विजयाय महाशीर्वादमैरयत् ॥३१॥
युद्धं देहि जयं धेहि प्राप्नुहि राज्यमुत्तमम् ।
अत्र तिष्ठामि राजेन्द्र तव रक्षार्थमन्वहम् ॥३२॥
गर्विष्ठानां महागर्वहर्ताऽहं भक्तरक्षकः ।
प्रतीपानां नाशकर्ता भवामि भक्तवत्सलः ॥३३॥
इत्युक्तो बद्रिके कृष्णनारायणेन वै तदा ।
नागविक्रयभूपश्च तुष्टोऽभवद्धृदन्तरे ॥३४॥
दूतमाहूय प्राहेत्थं निवेदय नृपाय ते ।
युद्धार्थं वै समायाति नागविक्रमभूपतिः ॥३५॥
करदो भव मे राजन्नयतो नन्दिभिल्लराट् ।
याहि प्रयामि पृष्ठेऽहं ससैन्यो वै यथाबलम् ॥३६॥
इत्युक्तः स तु दूतोऽपि नत्वा लब्ध्वा वचो द्रुतम् ।
ययौ तं नन्दिभिल्लं वै जगाद तद् यथातथम् ॥३७॥
सैन्यं सज्जं द्रुतं श्रुत्वा नन्दिभिल्लो हि सैन्यपम् ।
इन्द्रवज्राभिधमाज्ञापयामास रणाय वै ॥३८॥
बद्रिके विश्वलोकानां विज्ञानं लयमेत्यपि ।
बुभुक्षितानां क्षुब्धानां सतृष्णानां च कामिनाम् ॥३९॥
गर्विष्ठानां मानिनां च मत्सरिणां खलात्मनाम् ।
कालाऽऽवृतशिखानां च दुर्भाग्यानां च पापिनाम् ॥४०॥
सम्प्राप्तनिधनानां च निम्नभाग्यवतां तथा ।
शठानां हिंसकानां च क्रुद्धानां धीर्विनश्यति ॥४१॥
विवेको लीयते बद्रि युद्धदुर्मदिनां रणे ।
मद्यपानां यथा भानं लीयते रणिनां तथा ॥४२॥
सैन्यं सज्जमभवच्च नन्दिभिल्लस्य सर्वथा ।
चतुरंगं बलं सर्वं प्रत्यैक्षत निनादनम् ॥४३॥
अभवँश्च तदा सैन्ये चाऽपशकुनकानि वै ।
इन्द्रवज्रध्वजो मुख्यो न्यपतद् गजपृष्ठतः ॥४४॥
सेनापतिशिरस्त्राणं न्यपतत् स्वकरेण वै ।
वामांगानि स्फुरणानि हस्तिचित्कारगर्जनाः ॥४५॥
हेषाश्च वाजिनां कर्णकठोरास्तु तदाऽभवन् ।
वायुर्ववौ सन्मुखोऽतिवेगवान् धूलिका वहन् ॥४६॥
दुर्दिनं चाम्बरे तस्य सैन्योपरि व्यदृश्यत ।
वाहनानि सकम्पानि व्यवर्तन्त स्वभावतः ॥४७॥
भग्नमनस्का योद्धारः समजायन्त वै मनाक् ।
काका घूकाः कपोताश्च श्येना गृध्राः पतन्ति च ॥४८॥
ध्वजाऽग्रेऽस्त्रालिकाऽग्रे च रथाऽग्रे योद्धृमस्तके ।
गोमायवो रुदन्त्यग्रे पादस्खलनकान्यपि ॥४९॥
शस्त्रपातश्च तत्कोशात् प्रजायते मुहुर्मुहुः ।
नन्दिभिल्लस्य वै स्वप्नं क्षणनिद्रामयं ह्यभूत् ॥५०॥

तत्र काष्ठचयं शुष्कं रथभंगं ददर्श सः ।
वेश्यास्तन्यं पपौ राजा यन्त्रस्फोटमकालिकम् ॥५१॥
शुश्राव तत्र निद्रायामुच्छिष्टभोजनं व्यधात् ।
शत्रुव्रजे स्वपतनं जलपूरे प्रपातनम् ॥५२॥
वनदाहं च तन्मध्ये दहनं स्वं ददर्श ह ।
मिथः सैन्यस्य युद्धं च स्वस्यैव वै परस्परम् ॥५३॥
नग्नं स्वस्य स्वरूपं च दक्षिणाऽभिगमं तथा ।
मस्तके चार्मणोपानद्धारणं स ददर्श ह ॥५४॥
रक्तवस्त्रस्त्रियाऽऽश्लिष्टं व्यपश्यन्नन्दिभिल्लकः ।
उरःपीडनं कुर्वन्त्या पदा ताडितमित्यपि ॥५५॥
धृत्वा स्वस्य शवं राजा श्मशानेऽर्धनिशोत्तरे ।
ययौ तत्र महाजीर्णं सौधदेवालयादिकम् ॥५६॥
खण्डितं पतितं चापि व्यलोकयद् भयंकरम् ।
काका निपेतुः शिरसि शतं तु राजमस्तके ॥५७॥
वेत्रं हस्तात्तु पतितं स्खलितं वेत्रधारिणः ।
प्रधानः पतितः स्वप्ने पादस्खलनदोषतः ॥५८॥
परितश्चापि मार्गाणां निरोधः शत्रुभिः कृतः ।
रोरूयमाणा राज्ञी चेत्येवं स्वप्ने व्यलोकयत् ॥५९॥
नाम्नादिलावरीदेवी यन्नाम्ना नगरी ह्यभूत् ।
दिलावरीतिनगरी यमुनातटमास्थिता ॥६०॥
नन्दिभिल्लीतिनाम्नी वै सभा यत्राऽभवत् परा ।
स्वर्णस्फाटिकवैदूर्यहीरकादिविनिर्मिता ॥६१॥
सापि पतिता राज्ञा वै दृष्टा पाषाणसञ्चया ।
नगरी सैन्यवद् याति पश्चिमां दिशमित्यपि ॥६२॥
व्यलोकि तेन राज्ञा च राज्या वैधव्यमित्यपि ।
केशानां मुण्डनं राज्या व्यलोकि निजमस्तके ॥६३॥
श्मशानं विकरालाश्चाऽऽदृश्यन्त याम्यदूतकाः ।
राज्याः केशानपि धृत्वाऽऽकुञ्चनं बलिभिः कृतम् ॥६४॥
कृष्णवर्णैस्तु पुरुषैर्धर्षितेति नृपप्रिया ।
स्वप्ने स्वां दुःखसम्पन्नां व्यलोकयत्तिरस्कृताम् ॥६५॥
दासीभिर्दासवर्गैश्च तर्जितां चावमानिताम् ।
तथा व्यलोकयद् राज्ञी रूपवत्यो हि कन्यकाः ॥६६॥
अपि तेजोविहीनाश्च मलिनाऽस्थाः शुचाऽन्विताः ।
सौधं त्यक्त्वा गम्यमाना अरण्यं प्रति वै तदा ॥६७॥
बद्रिके क्षणमात्रेण वीक्ष्य राजा बुबोध ह ।
सर्वमनिष्टं नैजं वै तथापि न न्यवर्तत ॥६८॥
राज्ञी शंकरपूजां सा चक्रे विघ्नजयाय वै ।
बाणाच्छुश्राव सा राज्ञी हतभाग्यो नृपस्तव ॥६९॥
मा खेदं कुरु कल्याणि जयो यत्र हरिः स्वयम् ।
राजा कृतापराधोऽसौ फलमेष्यति वै द्रुतम् ॥७०॥
यत्रास्ते भगवान् साक्षात् तत्र योद्धुं गतो यतः ।
निजदोषहतो राजा मदान्धो नैव पश्यति ॥७१॥
इत्युक्त्वा शंकरो लिङ्गे विरराम दिलावरीम् ।
दिलावरी तु वै मूर्च्छां प्रजगाम तदा क्षणे ॥७२॥
निराशा साऽभवन्मृत्युमहीमानेव रोगिणी ।
बद्रिके तु तदा काले नागविक्रमभूपतेः ॥७३॥
शकुनान्यभवन् सर्वजयप्रदानि सर्वतः ।
आशीर्वादपरा विप्रा आययुस्तिलकान्विताः ॥७४॥
प्रदक्षिणोऽभवद्वह्निः प्रसन्नो धूमवर्जितः ।
श्वेतो वै देववृषभोऽदृश्यत गोसमन्वितः ॥७५॥
कन्यकाः स्वर्णरत्नाढ्या भूषाम्बरधरास्तथा ।
अदृश्यन्त प्रसन्नास्या नागविक्रमभूपतिम् ॥७६॥
कोकिलाः सारसा हंसाः शुकाश्च गरुडाः खगाः ।
खे त्वागत्य पुनर्यान्ति दक्षिणं विजयप्रदाः ॥७७॥
रत्नाभरणभूषाढ्या नर्तकी वारकांगना ।
अदृश्यत निसर्गाद्वै स्वर्णघटसमन्विता ॥७८॥
वैष्णवाः साधवो दिव्याः शिखासूत्रसमन्विताः ।
सबिन्दुतिलकाढ्याश्चाऽदृश्यन्ताप्यभिसन्मुखाः ॥७९॥
घण्टानादोऽभवत्तत्र देवनैवेद्यबोधनः ।
दक्षांगानां स्फुरणानि तदाऽभवन्नृपस्य वै ॥८०॥
क्षणस्वप्ने विमाने स्वं ददर्श देवपूजितम् ।
ततः क्षणे गजे स्वर्णाम्बालिकायां स्थितं निजम् ॥८१॥
दिव्यया कन्यया पद्महारेण कृतपूजनम् ।
ददर्श बहुकन्याभिः सेवितं शयनोत्तमे ॥८२॥
पितृभिस्तुष्टहृदयैः प्रसन्नाऽऽस्यैः प्रवर्धितम् ।
महोत्सवैर्महाशृंगारकैः संशोभितालये ॥८३॥
दिव्यसिंहासनस्थं स्वं ददर्श परिवारितम् ।
क्षीरभोजनतृप्तिं च कमलस्य दले कृताम् ॥८४॥
अन्वभवत् क्षणस्वप्ने दीर्घतृप्तिं जले स्थितः ।
एवं राज्ञः शकुनानि समभवन् जयाय वै ॥८५॥
राज्यास्तस्याऽभवत् स्वप्ने महेन्द्राणीव दर्शनम् ।
महायशोत्सवे स्वां सा ददर्श चक्रवर्तिनीम् ॥८६॥
लक्ष्म्या श्रिया पार्श्ववत्या प्रभयाऽऽश्लिष्य वक्षसि ।
धृतां दिव्यपद्महारैरर्चितां हृदि योजिताम् ॥८७॥
सपक्षधवलाभैश्च हस्तिभिर्वाहिते निजाम् ।
विमाने त्वम्बरे पत्या साकं स्थितां ददर्श सा ॥८८॥
सैन्यानामपि योद्धॄणां शकुनानि शुभानि वै ।
नागविक्रमराज्ञश्चाऽभवन् जयप्रदानि हि ॥८९॥

अस्फुरन् सर्वसैन्यानां दक्षांगानि समन्ततः ।
नन्दकूबरसेनानीयोजितानां तदा क्षणे ॥९०॥
सेनायां युद्धनादार्था भेर्यवाद्यत वै स्वयम् ।
पवनः सानुकूलश्च पृष्ठभागाद् ववौ तदा ॥९१॥
बलं सोत्साहमेवाऽभूत्तदा वै नागवैक्रमम् ।
सर्वं विंशतिसाहस्रं युद्धार्थं योजितं क्षणात् ॥९२॥
धुनीनद्यास्तटे सर्वमुपस्थितं क्षणाद्धयभूत् ।
युद्धपुरं प्रसंरक्ष्य महार्धचन्द्रसदृशम् ॥९३॥
बद्रिके हि तदा राज्ञी नागविक्रमभामिनी ।
आययौ श्रीकृष्णपूजार्थं द्रुतं त्वर्कमालिनी ॥९४॥
प्रपूज्य परमात्मानं युद्धवार्तां समाकरोत् ।
सभयां निर्भया चापि कृष्णनारायणान्तिके ॥९५॥
'कृष्णनारायणस्वामिनारायण नरायण ।
बालकृष्णाऽनादिकृष्णनारायण रमायण' ॥९६॥
तव भक्ताऽस्मि देवेश कांक्षये नैव मायिकम् ।
किन्तु कृष्ण स्त्रिया इष्टमवैधव्यं सुधार्मिकम् ॥९७॥
प्रभाया इव मे चाऽस्तु तदिष्टं मे प्रपालय ।
राज्यं तवेदं सर्वं वै सनाथाऽहं त्वदर्पिता ॥९८॥
यथेष्टं कुरु कृष्णाऽत्र प्राप्ते शत्रुभये प्रभो ।
इत्युक्त्वा बद्रिके कृष्णपादयोः पतिता हि सा ॥९९॥
कृष्णस्तस्यै ददौ तूर्णं दानमभयसंज्ञकम् ।
अदर्शयन्निजे रूपे महाकालं भयंकरम् ॥१००॥
शत्रुसैन्यानि सर्वाणि भक्षयन्तं त्वरायुतम् ।
जीवयन्तं रक्षयन्तं निजसैन्यानि यानि च ॥१०१॥
ततः सौम्यं कृष्णरूपं विष्णुं नारायणं हरिम् ।
अदर्शयन्निजे रूपे सौम्यं साम्राज्यदं प्रभुम् ॥१०२॥
अंके कृत्वा पतिं नैजं हसन्तं पार्वतीपतिम् ।
तिरोभूय ततो नैजं मानवं रूपमुत्तमम् ॥१०३॥
अदर्शयद्धरिस्तस्यै सा सन्तुष्टाऽभवत्ततः ।
बद्रिके श्रीहरिस्तूर्णं युद्धार्थं त्वरितोऽभवत् ॥१०४॥
सज्जो भूत्वा रथे स्थित्वा श्वेताश्वपरिवाहिते ।
सर्वशस्त्रास्त्रसंविष्टो रणाग्रे संस्थितोऽभवत् ॥१०५॥
नागविक्रमभूपोऽपि रणाऽग्रे रथमध्यगः ।
संस्थितः सर्वशस्त्राढ्यः श्रीकृष्णात्मनिवेदवान् ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने दिलावरीनगर्यां नन्दिभिल्लनृपसैन्यस्य नागविक्रयं जेतुमागमनं, नागविक्रमस्य ससैन्यस्य युद्धार्थं तत्प्रतिनिर्याणं, शकुनाऽपशकुनस्वप्नादीनि चेत्यादिनिरूपणनामैकाशीतितमोऽध्यायः ॥८१॥

श्रीबद्रीप्रियोवाच—

नागविक्रमसैन्यानां कतिवाजिगजादयः ।
कीदृशं च ततो युद्धं कृष्णस्य वद मे प्रभो ॥ १ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि सहस्राणि तु विंशतिः ।
नागविक्रमसैन्यस्याऽऽसन् योद्धारस्तु मानवाः ॥ २ ॥
सहस्रं हस्तिनां तत्र पञ्चसाहस्रवाजिनः ।
उष्ट्रास्त्रीणि सहस्राणि विमानानि तु विंशतिः ॥ ३ ॥
अश्वतरास्तथा पञ्चसहस्राण्यभवन् मृधे ।
सर्वे कृष्णप्रतापास्ते कृष्णदत्तबलाधिकाः ॥ ४ ॥
महारथिनः प्रबलाः सर्वेरथिन इत्यपि ।
वज्रदेहाः कृष्णनारायणाऽऽवेशात्तदाऽभवन् ॥ ५ ॥
सैन्ययोरुभयोस्तत्र साक्षान् गोचरताऽभवत् ।
अनादिश्रीकृष्णनारायणस्य शाश्वतं रथम् ॥ ६ ॥
रणाग्रे वीक्ष्य सहसा नन्दिभिल्लं तु तद्गुरुः ।
अङ्गिरातऋषिः सर्वशस्त्रास्त्रकुशलोऽपि सन् ॥ ७ ॥
सन्दिह्य विजये शिष्यं समुवाच हितावहम् ।
सर्वसृष्टिमयं कृष्णं नन्दिभिल्ल विलोकय ॥ ८ ॥
योद्धुकामः पुरश्चास्ते प्रतिसैन्ये जनार्दनः ।
यत्संकल्पे जगत् सर्वं जायते लीयतेऽपि च ॥ ९ ॥
सोऽयं शस्त्रधरः कृष्णः सैन्याग्रे त्वभितिष्ठति ।
तस्य पार्श्वे जयश्चास्ते तथाऽऽस्ते विजयोऽपि च ॥१०॥
मा वृथा त्वं प्रयासं वै विधेहि विजयेच्छया ।
नारायणस्य जेता न न तं जेष्यति कश्चन ॥ ११॥
राजन् राज्यं विपुलं ते कथं क्षिपसि भस्मनि ।
भुंक्ष्व भोगान् विहायैव मत्सरं युद्धभूभृता ॥१२॥
त्वमास्से नागराज्याद्वै श्रेष्ठो दशगुणोऽधिकः ।
महतां जायते हानिर्नीचैः सह तु घर्षणम् ॥१३॥
नीचस्य विजये कीर्तिः शतधा जायते द्रुतम् ।
महतां विजये सैव यथा साऽस्ति तथैव सा ॥१४॥
स्वरूपस्य न मानस्य हानिः पराजयेऽधिका ।
विचार्येत्थं विहायैव युद्धं भुंक्ष्व क्षितिं निजाम् ॥१५॥
न भाति मे विजयोऽद्य तवाऽपशकुनादिभिः ।
मद्वाक्यं कुरु राजेन्द्र मा जुहुध्यनले प्रजाः ॥१६॥
सुखं राज्यं सम्पदश्च मा जुहुध्यनले विदन् ।
गुरोर्वाक्यं सुखदं वै लंघने तस्य चापदः ॥१७॥
एह्यागच्छ प्रणम्यैनं श्रीकृष्णं भक्तिभावतः ।
आशीर्वादान् शुभान् प्राप्य कृतकृत्यः सुखी भव ॥१८॥

गुर्वग्रे मानहानिर्न कृष्णाग्रे सुतरां तु न।
सर्वनाशामिसम्प्राप्तौ त्यक्त्वा किञ्चित् प्ररक्षयेत् ॥१९॥
युवां शिष्यौ समौ तस्य विनीतौ भवतां यदि।
द्वयोः श्रेयोविधाता स्यात् कृष्णो दयापरः प्रभुः ॥२०॥
मानं रक्ष्यं समानाग्रे नाऽधिकाग्रे कदाचन।
तत्रापि गुरुदेवाऽग्रे मानं रक्ष्यं न सर्वथा ॥२१॥
पूर्वेषां पूर्वपूर्वेषां गुरुः शास्ता हि माधवः।
गुर्वग्रे मनसा वाचा कर्मणाऽऽर्प्यं निजं वपुः ॥२२॥
समस्तं चार्पणीयं वै गुर्वग्रे सर्वसिद्धये।
माता गुरुः पिता वृद्धो गुरुर्ज्ञानप्रदो गुरुः ॥२३॥
हितकृद्धितदश्चापि गुरुर्मोहविनाशकः।
त्रिकालज्ञो गुरुश्चापि दण्डदोऽपि गुरुर्मतः ॥२४॥
शास्तारो गुरवः सर्वे ऐहिकाऽमुत्ररक्षकाः।
बहुश्रुतानां मन्तव्यं गुरूणां वाक्यमैश्वरम् ॥२५॥
त्रिसन्ध्यं खलु कर्तव्या गुरोः पूजा हितेच्छुना।
यो गुरुः स हरिः प्रोक्तो यो हरिः स गुरुर्मतः ॥२६॥
यथा हरिस्तथा शर्वो यथा शर्वस्तथा गुरुः।
हरविद्या हरेर्विद्या गुरोर्विद्या हि मोक्षदा ॥२७॥
सर्वदेवमयः सर्वशक्तिमयो गुरुर्यतः।
सगुणो निर्गुणो वापि तस्याऽऽज्ञां पालयेत् सदा ॥२८॥
श्रेयोर्थी यस्तु गुर्वाज्ञां मनसाऽपि न लंघयेत्।
गच्छँस्तिष्ठन् स्वपन् भुञ्जन् गायन् यद्यत् समाचरन् ॥२९॥
समक्षं वा परोक्षं वा स लभेतात्मसम्पदः।
गुरोर्देवस्य सान्निध्ये न यथेष्टासनो भवेत् ॥३०॥
गुरुर्देवो यतः साक्षात् तद्गृहं देवमन्दिरम्।
गुरोः प्रसेवया भक्त्या तद्धर्मफलभाग् भवेत् ॥३१॥
यथैवानलसंसर्गान्मलं त्यजति काञ्चनम्।
तथैव गुरुसम्पर्कात्पापं त्यजति सेवकः ॥३२॥
यथा वह्निसमीपस्थो घृतकुम्भो विलीयते।
तथा पापं विलीयेत गुरोर्देवस्य सन्निधौ ॥३३॥
यथा प्रज्वलितो वह्निः कचरादि विनिर्दहेत्।
गुरुः प्रसेवितस्तद्वत्पापं दहति सर्वथा ॥३४॥
ब्रह्मा हरिश्च शंभुश्च देवा देव्यो महर्षयः।
कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे सुखप्रदाः ॥३५॥
कर्मणा मनसा वाचा गुरोः क्रोधं न कारयेत्।
तस्य क्रोधेन दह्यन्ति पुण्याऽऽयुर्ज्ञानश्रीक्रियाः ॥३६॥
गुरोः क्रोधप्रकर्तॄणां कृता यज्ञा हि निष्फलाः।
निष्फलाः सम्पदः सर्वा निष्फला नियमा यमाः ॥३७॥
गुरोर्विरोधकृद्वाक्यं वदेन्नैव कदाचन।
वदेच्चेन्मूर्खतायोगाद् रौरवं स व्रजेद् ध्रुवम् ॥३८॥
हृदा चित्तेन वित्तेन वाचा देहेन कर्मणा।
परोक्षं वा समक्षं वा मिथ्या न कारयेद् गुरोः ॥३९॥
दुर्गुणे स्थापिते तस्य दौर्गुण्यशतभाग् भवेत्।
सद्गुणे स्थापिते तस्य सर्वसाद्गुण्यभाग् भवेत् ॥४०॥
गुरोर्हितं प्रियं कुर्यादादिष्टो वा न वा सदा।
असमक्षं समक्षं वा गुरोः कार्यं समाचरेत् ॥४१॥
गुरोर्हितं प्रियं कुर्यान्मनोवाक्कायकर्मभिः।
अधः पतन्नपि राजन् हितं कुर्यात् स वर्धते ॥४२॥
गुरुर्नारायणकृष्णस्त्वया राजन्निजालये।
पूजितो वन्दितः सोऽयं सत्करेऽभ्यधिसत्कृतः ॥४३॥
अहं राजन् गुरुस्तेऽस्मि विप्रो राज्यगुरुः सदा।
मत्वा मे शोभनं वाक्यं निवर्तस्व रणांगणात् ॥४४॥
मा वैधव्यं दिलावर्या राज्ञ्या पुर्याश्च मन्त्रय।
नन्दिभिल्ल्याः सभाया मा नूत्नेशत्वं च मन्त्रय ॥४५॥
मा रोषं कुरु राजेन्द्र सत्यं ते निगदाम्यहम्।
मा स्वहस्ते स्थितं राष्ट्रं परहस्ते निपातय ॥४६॥
शूराणां मा विनाशं वै शूरतरैर्विधापय।
योद्धव्यं मायया साकं मायाविना समं तथा ॥४७॥
तथापि नैव कृष्णेन योद्धव्यं परमात्मना।
यत्र सर्वे *यतः सर्वे यः सर्वात्मा विराजते ॥४८॥
यं सर्वः सेवते श्र्यर्थे तं कथं योधयेद् रणे।
सेवनीयो विजयार्थे तोषणीयः प्रमुक्तये ॥४९॥
प्रसादनीयः श्रेयोऽर्थे प्रस्तोतव्यः प्रशान्तये।
लब्धव्यः शरणं गत्वा तं कथं योधयेद् बुधः ॥५०॥
पृथ्वी हसति राजैँस्त्वां यमुनाजलफेनकैः।
सस्यपुष्पमयैर्हास्यैः पूतनाशस्त्रजैः करैः ॥५१॥
लूनीवारिप्रवाहोत्थनादफेनबकादिभिः।
निमन्त्रयति मृत्युं यन्नन्दिभिल्लो दिल्लपतिः ॥५२॥
राजन् काले यथायोग्यं मयोक्तमौषधप्रभम्।
स्वतन्त्रोऽसि निजे कार्ये यथायोग्यं समाचर ॥५३॥
इत्युक्त्वा तं गुरुश्चाभिरातर्षिर्नन्दिभिल्लकम्।
बद्रिके स्वस्ति स्वस्त्यस्तु व्याजहार पुनः पुनः ॥५४॥
प्रत्युत्तरं गुरुं नत्वा नन्दिभिल्लो ददौ ततः।
धृतमूर्धा धृतकेशो महाकालेन मृत्युना ॥५५॥
जानाम्यहं समस्तं तद् गुरो भवता नोदितम्।
सर्वं तत् साधुभावेऽस्ति राज्यवादे न युज्यते ॥५६॥

गुरुर्वा जनको वापि भ्राता सुहृत् सुतोऽपि वा ।
सङ्गरे प्रतिसम्पन्नः स योद्धव्यो नृपेण ह ॥५७॥
तृप्तिस्तु यतिसाधूनां स्वल्पे भवति योगिनाम् ।
राज्ञां तृप्तिः पृथिव्याश्चेद् राजधर्मः क्रमाश्रयेत् ॥५८॥
जयश्च विजयश्चैतौ सामर्थ्यबलकिंकरौ ।
नैकान्तकृष्णपार्श्वस्थौ सर्वगौ हि मतौ मम ॥५९॥
नारायणः सदा जय्यः सर्वैरिव मुमुक्षुभिः ।
स्वार्थिभक्ता जयन्त्येव नारायणं मुहुर्मुहुः ॥६०॥
अग्निर्नारायणः साक्षात्तस्मिन् होमोऽपि मोक्षदः ।
नारायणेन महता नीचस्य योधने मम ॥६१॥
कीर्तिर्वा बहुला स्यान्मे मोक्षगो वा भवाम्यहम् ।
न मे हानिः कृष्णहस्तहतस्य मम काचन ॥६२॥
सुखं राज्यं सम्पदश्च वन्ह्रौ जुह्वति मोक्षिणः ।
कृष्णे जुहोमि तत्सर्वं वृथा होमो न मे गुरो ॥६३॥
गुरोर्वाक्ये हितं लोके जीवनं चिरमेव यत् ।
अवाक्ये योधनं कृष्णे वासश्च शाश्वते पदे ॥६४॥
देहपृथिवीनाशेऽपि लप्स्ये लाभं तु शाश्वतम् ।
निर्णीतं तु मया कृष्णे सर्वार्पणं तु भावतः ॥६५॥
ऐहिकाऽमुत्रसिद्धिर्मे कृष्णयोगाद् भविष्यति ।
नृपधर्मैः पूजयिष्ये रणांगणे हरिं प्रभुम् ॥६६॥
कालहस्तेन मृत्योस्तु कृष्णहस्ताद्वरो हि सः ।
गुरोः सेवां रणयोग्यां करिष्ये पादयोः पतन् ॥६७॥
करिष्ये वा हरेर्मूर्ध्नि शस्त्रपुष्पाऽक्षताऽर्पणम् ।
त्यक्ष्ये मलं हरेः शस्त्रानलसङ्गाद् दृढं द्रुतम् ॥६८॥
यदि तुष्टो भवेत् कृष्णो मयि शस्त्रनिपातनैः ।
तदा मे पितरस्तुष्टास्तुष्टाः सुरा महर्षयः ॥६९॥
गुरौ नारायणे कृष्णे क्रोधदोषो न विद्यते ।
परोक्षं वा समक्षं वा करिष्ये नृपधर्मतः ॥७०॥
गुरो प्रसन्नो भगवान् यन्मां युद्धे विलोकितुम् ।
आगतोऽस्ति हरिः साक्षात्ततो भाग्यं कियन्महत् ॥७१॥
गुर्वग्रे मूर्खशिष्योऽपि तरत्येव न संशयः ।
परोक्षं वा समक्षं वा क्षात्रं मिथ्या न कारयेत् ॥७२॥
क्षात्रधर्मेण गन्तुर्मे दिलावर्या अनाथता ।
भाविनी नैव विप्रर्षे ततो धर्मो हतो भवेत् ॥७३॥
करोमि धर्मसंग्रामं संग्रामे शत्रुवद्गुरुः ।
आगच्छेच्छरसन्धानैः पूजार्हः स गुरुस्तदा ॥७४॥
ब्रह्मा विष्णुर्महेशो वा महाविष्णुर्नरायणः ।
यमः कालो महाकालः पुराणपुरुषोत्तमः ॥७५॥
यो वा को वा समागच्छेच्छरपूजार्ह एव सः ।
धर्मे स्थितस्य विजयो न त्वधर्मे स्थितस्य वै ॥७६॥
युद्धं राज्ञां परो धर्मो युद्धस्था वधगोचराः ।
क्षात्रधर्माण एवैते गुरुधर्मास्तदा न ते ॥७७॥
न पूज्यधर्मा न शिष्यधर्मा न मित्रधर्मिणः ।
न पुत्रधर्मा न च वा कुटुम्बधर्मिणोऽपि ते ॥७८॥
न स्वधर्माण एवापि परधर्मिण एव ते ।
साकं तैः खलु योद्धव्यं क्षात्रधर्मः स शाश्वतः ॥७९॥
युद्धे चेत् कृष्णहस्तेन गमिष्यामि पराभवम् ।
कृष्णहस्ते विजयः स न वै स नागविक्रमे ॥८०॥
कृष्णं हित्वा जयेन्मां स तदा मन्ये पराक्रमम् ।
कृष्णयुक्तं जगत्सर्वं बलवद्भाति मे गुरो ॥८१॥
स धाता च विधाता च स मेरुर्मेदिनी च सः ।
स जेता च विजेता च परामावयिता च सः ॥८२॥
स्रष्टा पोष्टा पोषयिता रक्षयिताऽविताऽपि सः ।
तं शरण्यं च कारुण्यपूर्णं प्राप्य समक्षगम् ॥८३॥
अत्र वापि परत्रापि जयं लप्स्ये न दुर्जयम् ।
द्वयोस्तु कार्ययोः प्राप्तौ निर्बलं तत्र बाध्यते ॥८४॥
गुरोर्वाक्यं निर्बलं वै कृष्णाप्तिर्या बलान्विता ।
कृष्णाप्तौ पुरुषार्थास्तु निवर्तन्ते तदन्तिमाः ॥८५॥
ग्रामं त्यजेत् कुलस्याऽर्थे स्वस्याऽर्थे तु कुलं त्यजेत् ।
स्वं त्यजेच्चापि गुर्वर्थे कृष्णार्थे सकलं त्यजेत् ॥८६॥
जानाति भगवान् मां च जानाति नागविक्रमम् ।
नागक्रमः सकामोऽस्ति न मे कामो हरिं विना ॥८७॥
हरिर्युद्धप्रसंगेन निष्कामं समनेष्यति ।
सकामं निरये लोके प्रतिष्ठाप्य प्रयास्यति ॥८८॥
यथा विप्रो गुरुश्चास्ते तथा धर्मोऽपि सद्गुरुः ।
धर्मो वक्ति सदा युद्धं क्षत्रस्य त्वपलायनम् ॥८९॥
आरब्धात् कर्मणश्चेत् स्यात् पश्चपादो जनो यदि ।
हास्यपात्रं भवत्येव धर्महन्ता स एव ह ॥९०॥
विचार्याऽऽरम्भणीयानि पारं नेयानि तानि वै ।
फलं वा विफलं वापि सयत्नदैवसात्कृतम् ॥९१॥
तस्माद् योत्स्ये नमस्कृत्वा धृत्वा हृदम्बरे हरिम् ।
तव योगबलं तत्राऽऽकांक्षेऽमिरात सद्गुरो ॥९२॥
इत्युक्त्वा तूर्णमेवाऽसौ दध्मौ शंखं मृधार्थकम् ।
तावत्तूर्णमवाद्यन्त रणभेर्यः पृथक् पृथक् ॥९३॥
विगुलानि समन्ताच्च पटहाऽऽनकगोमुखाः ।
योद्धॄणां गर्जना व्योमवाप्यो युद्धामिदर्शिकाः ॥९४॥

अभवन् मेघमार्गेऽपि विमानानां प्रगर्जनाः ।
युद्धार्थे विजयार्थे च गजानां बृंहितानि च ॥९५॥
हेषाश्च वाजिनां तत्र वृषाणां रंभणानि च ।
उष्ट्राणां गांगणनाश्च समन्ततोऽभवन् मृधे ॥९६॥
महाकालस्तथा रुद्रो यमो विघ्नेश्वरो हरः ।
आकाशे देवतास्तत्र महर्षयश्च पार्षदाः ॥९७॥
व्यापृतं श्रीकृष्णनारायणं ज्ञात्वा समाययुः ।
चक्रं सुदर्शनं नैजम् आजगत्कलनं धनुः ॥९८॥
दधार भगवान् शीघ्रं शरं च प्रसनाह्वयम् ।
नागविक्रम एवापि सर्वास्त्राणि दधार ह ॥९९॥
सेनानीर्नन्दकुबरो रथस्थोऽग्रे स्थितोऽभवत् ।
एवं वै नन्दिभिल्लोऽपि सेनापेन्द्रवज्रोऽपि च ॥१००॥
स्वस्वरथौ पुरः कृत्वाऽतिष्ठतां सज्यकार्मुकौ ।
प्रतीक्षन्ते च सैन्यानि शस्त्रमोचनसूचकम् ॥१०१॥
महामहाध्वनिं शांखं स्वस्वसेनापसंभवम् ।
इत्येवं बद्रिके तत्र सन्नाहोऽभवदाच्युतः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कृष्णेन सह न योद्धव्यमिति गुरोरभिराचस्योपदेशं स्वानुकूलं योधने नन्दिभिल्लो मत्वा युद्धक्षण-सूचकशंखध्वानमाचरत्, उभयसैन्यध्वाना-नीत्यादिनिरूपणनामा द्व्यशीति-तमोऽध्यायः ॥ ८२ ॥

श्रीनरनारायण उवाच—

ततो बद्रीप्रिये तत्र श्रीकृष्णसेवनेच्छया ।
रुद्रः कालस्तथा मृत्युरागत्य च प्रणम्य च ॥ १ ॥
सहसा श्रीकृष्णनारायणं भीताश्च कम्पिनः ।
ऊचुः प्रसन्नताल्लब्ध्यै सेवायां प्राप्तुमिच्छवः ॥ २ ॥
हरेकृष्ण कृपासिन्धो दासाः स्मो वयमत्र ह ।
नियोजयाऽस्मानाज्ञायां कुर्मो द्रागेव सिद्धये ॥ ३ ॥
श्रुत्वा प्राह हरिस्तान् वै कार्यं दास्यं तु मेऽधुना ।
युद्धे चात्र महाकालो विशतु नागविक्रमे ॥ ४ ॥
नन्दकुबरे रुद्रश्च विशत्वेव महेश्वरः ।
मृत्युर्विशतु बाणेषु शस्त्रेषु मृत्युपार्षदाः ॥ ५ ॥
सैन्येषु शक्तयः सर्वाः शीघ्रं विशन्तु चाऽव्ययाः ।
नागविक्रमपक्षाणां रक्षणं सर्वथा भवेत् ॥ ६ ॥
नन्दिभिल्लस्य दर्पस्य फलं तत्पक्षगामितु ।
युद्धशोभात्मकं चास्तु कृतं भुंक्ते यतो जनः ॥ ७ ॥
मात्सर्यदोषदग्धोऽयं नन्दिभिल्लो हि युध्यति ।
अपराद्धं ततस्तेन नागविक्रमभूभृतः ॥ ८ ॥
इत्युक्त्वा भगवान् शंखं दध्मौ युद्धप्रवर्तकम् ।
इन्द्रवज्रोऽपि शंखं स्वं दध्मौ युद्धप्रवर्तकम् ॥ ९ ॥
नन्दकुबरः शंखं स्वं दध्मौ युद्धप्रवर्तकम् ।
सैन्यानां च तदा भेरीशब्दा गगनभेदिनः ॥१०॥
युद्धप्रवर्तका बद्रि भयंकरास्तदाऽभवन् ।
शौर्यदा बलदाश्चासन् निनादा मेघवत्तदा ॥११॥
सहैव तु निनादैश्च शराणां वर्षणं मिथः ।
मिथोऽभवच्च सैन्यानां नन्दकुबेरेन्द्रवज्रयोः ॥१२॥
बद्रिके क्षणमात्रेण बाणवृष्ट्याऽम्बरं तदा ।
आच्छादितं समस्तं वै सैन्यान्याच्छादितान्यपि ॥१३॥
बाणा योद्धृशरीरेषु दृश्यन्ते लग्नभोगिनः ।
सहस्ररश्मयो यद्वल्लग्ना आदित्यमूर्तिषु ॥१४॥
किंशुका इव दृश्यन्ते देहा योद्धृशरैर्हताः ।
अर्धचन्द्रैः फलभागैस्तीक्ष्णाग्रैः खण्डितांगिनः ॥१५॥
भिन्ना द्वेधा विलोक्यन्ते प्रेतास्तु विकृता इव ।
तड्फडायन्त उच्छ्रित्योच्छ्रित्योत्पतन्ति भूतले ॥१६॥
छिन्नकण्ठा विमूर्धानः शवाः क्षिपन्ति सायकान् ।
विलोक्यन्ते च ते तत्र राहवश्चाहवेऽभितः ॥१७॥
बद्रिके तत्र वै नन्दिभिल्लो बाणशतैर्द्रुतम् ।
अताडयत्तदा नागविक्रमं तीक्ष्णधारकैः ॥१८॥
नागोऽपि नन्दिनं बाणैः पञ्चशतैः शिलीमुखैः ।
तताड परितः शीघ्रमाश्चर्यं तदभून्महत् ॥१९॥
नन्दी विच्छिद्य बाणाँस्तान्निजप्राणसहस्रकम् ।
मुमोच क्षणमात्रेण नागदेहेऽतिवेगतः ॥२०॥
नागोऽपि तानर्धचन्द्रशरैश्छित्वाऽतिलाघवात् ।
मुमोचाऽर्धचन्द्रसमान् बाणान् नन्दिनि चाहवे ॥२१॥
छेदयामास मुकुटं ज्यां धनुश्चापि नन्दिनः ।
नन्दी जग्राह सहसा धनुश्चान्यन्महत्तरम् ॥२२॥
शरान्मुमोच बहुधा नागप्राणहराँस्तदा ।
नागः सर्वान्प्रविच्छिद्य ताडयामास भल्लकैः ॥२३॥
कुन्तलैर्विविधैश्चापि शरैर्भिन्नाग्रधारकैः ।
धनुर्नष्टं पुनर्नष्टं तृतीयं च चतुर्थकम् ॥२४॥
तदा नन्दी महाशक्तिं जग्राह शतघण्टिकाम् ।
दिव्यां लम्बां बहुवेगां सूक्ष्माग्रां विषसंभृताम् ॥२५॥
मुमोच बहुवेगेन महीं पद्भ्यां निपीड्य ह ।
पपात सा नागवक्षोमध्ये यावत्तु तावता ॥२६॥

हस्तेनैव समग्राह्य नागस्तां सममोडयत् ।
द्वेधा प्रमोड्य पृथ्व्यां तां निचिक्षेप जगर्ज ह ॥२७॥
वीक्ष्य नन्दी महाक्रुद्धो जग्राहाऽन्यां महोज्ज्वलाम् ।
शक्तिं चिक्षेप सहसा नागकण्टविघातिनीम् ॥२८॥
तां शक्तिं त्वापतन्तीं तु नागो लाघवनोदितः ।
स्वशक्त्या तूर्णमहनद् द्वेधा भूत्वा पपात सा ॥२९॥
तृतीयां जगृहे यावन्नन्दी तावत्तु नागराट् ।
मुमोच शक्तिं सहसा नन्दिवक्षसि वै बली ॥३०॥
जगाम मूर्छां नन्दी च जगर्ज नागविक्रमः ।
सूतस्तं सहसादूरं निन्ये सरथनन्दिनम् ॥३१॥
अथ कृष्णरथं चान्ये नन्दिसेनेश्वरास्तदा ।
ताडयामासुरत्यर्थं बाणैर्भल्लैश्च कुन्तलैः ॥३२॥
अर्धचन्द्रैर्गोलकैश्च क्षेपणैः शरकोटिभिः ।
दुर्भिक्षार्णा महाशक्तिर्या रथं परितः स्थिता ॥३३॥
लग्नाऽऽसीत् सा सर्वबाणान् शस्त्राणि विविधान्यपि ।
धृत्वा धृत्वा मुखे निगिलत्येव नाशयत्यपि ॥३४॥
हरिस्तु नागसैन्यानां घातकान् कोटिशः शरान् ।
निजबाणैश्चातिशीघ्रं भेदयत्येव सर्वथा ॥३५॥
भक्तरक्षां करोत्येव नागसैन्यं न हन्यते ।
हन्यन्ते नन्दिसैन्यानि महाश्चर्यमभूद्धि तत् ॥३६॥
तावद् राजा गतमूर्छश्चाजगाम रणाजिरे ।
सरथः शस्त्रसम्पन्नो नारायणरथोपरि ॥३७॥
प्रैरयत्तीक्ष्णशस्त्राणि मुमोच बाणसञ्चयान् ।
शक्तीश्चिक्षेप बहुधा नाराचान् स मुमोच ह ॥३८॥
हरिः सर्वान् प्रविच्छिद्य मुमोचैकं शरं द्रुतम् ।
अभेद्यमजरं चाप्यनिवर्तनं दृढं तदा ॥३९॥
लग्नः शरः स उरसि नन्दी पपात भूतले ।
सूतः शीघ्रं तमुत्थाप्य कृत्वा रथे ययौ बहिः ॥४०॥
हाहाकारः क्षणं जातः सैन्ये नन्दिप्रयोजिते ।
अथेन्द्रवज्रः सैन्येशो हरिं नागं च कुबरम् ॥४१॥
सर्वान् शरैस्तीक्ष्णधारैरताडयच्छतैः शतैः ।
हरिः सर्वांश्च तद्बाणान् चिच्छेद करलाघवात् ॥४२॥
निजबाणैः सर्वसैन्यरक्षां करोति चाभितः ।
कुबेरो दशबाणैश्च त्विन्द्रवज्रं तताड ह ॥४३॥
इन्द्रस्तु शतबाणैस्तं कुबरं प्रतताड ह ।
कुबरः शतबाणैश्च प्रतितताड वज्रकम् ॥४४॥
इन्द्रवज्रो द्रुतं शक्तिं चिक्षेप प्राणहारिणीम् ।
आपपात नन्दकुब्रं बधानोरसि वेगिनी ॥४५॥

स्पृष्टमात्रा धृता शीघ्रं भुग्नीकृता करेण सा ।
कुबरेण द्रुतं यावत्तावदन्या समागता ॥४६॥
धृत्वा तामपि वेगेनाऽमोडयत् कुबरो बली ।
तावत्तृतीयशक्तिः प्रागता ह्यति भयङ्करी ॥४७॥
रुद्रः कुबरगः शक्तिं जग्रासाऽपाचयत्तथा ।
महाश्चर्यमिदं दृष्ट्वा चेन्द्रवज्रो भयं ह्यगात् ॥४८॥
मुमोच स गदां दिव्यां महास्तम्भनिभां पराम् ।
मस्तकाद्रिस्थिरभावां काञ्चनपट्टशोभिताम् ॥४९॥
आकाशे तूर्णमागत्य रथे पपात शृंगवत् ।
रथः प्रचूर्णितो नन्दकुबरस्याऽऽप भूतलम् ॥५०॥
कुबरो रथमध्यस्थो रुद्ररक्षाप्ररक्षितः ।
अभग्नांगो निर्ययौ वै पतत्प्रासादतो यथा ॥५१॥
तावद् राजा नन्दिभिल्लः स्वस्थो रणेऽभवत् पुरः ।
नागं नाशयितुं तूर्णं मुमोच नागपाशकान् ॥५२॥
हरिस्तत्र गारुडान् वै प्रेरयामास भक्षकान् ।
नागाः प्रभक्षिताः सर्वे गरुडैस्तत्र वै क्षणात् ॥५३॥
नन्दी विद्युच्छरं तत्र मुमोच नागविक्रमम् ।
नागो मुमोच ताम्रास्त्रं विद्युत्तत्र लयं गता ॥५४॥
नन्दी मुमोच वह्न्यस्त्रं सर्वसैन्यभयंकरम् ।
नागो मेघास्त्रबाणैस्तान् वह्निशराननाशयत् ॥५५॥
नन्दी मुमोच कुपितो ब्रह्मास्त्रं त्वनिवर्तनम् ।
हरिर्जग्राह सहसा ब्रह्मास्त्रेण तदस्त्रकम् ॥५६॥
नन्दी मुमोच च तदा पाशुपतास्त्रमुल्बणम् ।
नागरथश्च महाकालो भक्षयामास पाशवम् ॥५७॥
संहारास्त्रं तदा नन्दी मुमोच तैजसं महत् ।
कुबरस्थो महारुद्रः संहारास्त्रमुपाहरत् ॥५८॥
कुबरस्तु तदा शक्तिं शतभारां नगात्मिकाम् ।
उत्थाप्यापीड्य पृथिवीं मुमोच वज्रकं प्रति ॥५९॥
चकम्पे पृथिवी निम्नीभूता क्षणं तु बद्रिके ।
इन्द्रवज्रं गता तूर्णं प्रविष्टा हृदये तदा ॥६०॥
इन्द्रवज्रः पतन् पृथ्व्यां वज्रं मुमोच कूबरम् ।
वज्रं छिन्नं महावज्रैस्तदा नागेन तत्क्षणम् ॥६१॥
इन्द्रवज्रः पपातैव भिन्नवक्षा ममार ह ।
हाहाकारो महाञ्जातो भिल्लसैन्ये तु बद्रिके ॥६२॥
कुबरस्य जयनादा अभ्यूयन्त समन्ततः ।
अथ तूर्णं घातवज्रनामा भिल्लचमूपतिः ॥६३॥
रथस्थश्चाययौ तूर्णं रणांगणेऽतिगर्वितः ।
भिल्लसैन्ये महाघोषास्ततोऽभवन् समन्ततः ॥६४॥

घातवज्रोऽपि युयुधे नन्दकुबरकेन वै ।
दशबाणान् सहयोगान् मुमोचैकेन तन्तुना ॥६५॥
चिच्छिदे नन्दकुबरो दश तानागतान् द्रुतम् ।
प्रतिमुमोच कुबरो बाणान् विंशतिसंख्यकान् ॥६६॥
घातवज्रो द्रुतं छित्वा तान् सर्वान् लीलया ततः ।
मुमोच त्रिंशदपरान् चिच्छेद कुबरोऽपि तान् ॥६७॥
कुबरो भल्लकान् दीर्घान् मुमोच घातवज्रकम् ।
घातवज्रो गदामारैः सर्वान् भल्लान् व्यपोथयत् ॥६८॥
गदां सर्वस्वसामर्थ्यैश्चिक्षेप कुबरोपरि ।
कुबरस्तां गदां तूर्णं गदयाऽधो व्यपोथयत् ॥६९॥
चिक्षेप तु शरान् शीघ्रं चिच्छेद ज्यां च कार्मुकम् ।
हस्तं प्रकोष्ठे चिच्छेद वामं चन्द्रमुखैः शरैः ॥७०॥
एकहस्तो घातवज्रः खड्गमादाय चोत्पतन् ।
रथादुत्तीर्य कुबरं प्रत्यधावद् रुषान्वितः ॥७१॥
तावत्तु कुबरो दृष्ट्वा समापतन्तमुल्बणम् ।
सखड्गं वारयामास बाणैर्वेगाभियायिभिः ॥७२॥
तथापि तत्परक्तोऽसौ न्यवर्तत न धावनात् ।
तदा श्रीकुबरः खड्गमादाय रथतो द्रुतम् ॥७३॥
अवतीर्य ददौ युद्धं खड्गेन भ्रमशोभिना ।
द्वयोः सैनपयोर्युद्धं द्रष्टुं देवास्तदाम्बरे ॥७४॥
क्षणं स्थिरा अभवँश्च प्राणयोधनसद्रसाः ।
कुबरो नैजखड्गेन द्वेधा खड्गं तदीयकम् ॥७५॥
कृत्वा तूर्णं ददौ खड्गं द्वितीयं योधनाय ह ।
सोऽपि धृत्वा विविधैर्वै योधनस्य प्रकारकैः ॥७६॥
बहुधा युयुधे तत्र मण्डलानि प्रकाशयन् ।
अथ क्षणेन खड्गेन कुबरस्य तु मस्तके ॥७७॥
घातं चक्रे घातवज्रस्तावत्तु कुबरो निजम् ।
खड्गमुत्प्लुत्य कण्ठेऽस्य स्कन्धे वक्षसि चोदरे ॥७८॥
कट्यां सक्थ्नीत्यारपारमेकघातेन चानयत् ।
द्वेधा भूत्वा घातवज्रः पपात सैन्यसन्निधौ ॥७९॥
हाहाकारोऽभवन्नन्दिभिल्लसैन्ये समन्ततः ।
नागविक्रमसैन्येन शक्तिगणाधिवासिना ॥८०॥
दशसाहस्रयोद्धारो हतास्तावत्तु बद्रिके ।
नन्दिभिल्लस्य सैन्यानामेवं घातो बभूव ह ॥८१॥
अथाययौ तृतीयो वै हरिद्रुमाख्यसैन्यपः ।
स्वर्णवर्मधरो वीरः पुष्टो युवाऽद्रिशृङ्गभः ॥८२॥
रथस्थो भल्लकान् शीघ्रं मुमोच कुबरं प्रति ।
कुबरस्थो हरो रुद्रोऽगिलत् सर्वांस्तु भल्लकान् ॥८३॥
हरिद्रुमस्ततस्तूर्णं शक्तिं मुमोच घातिनीम् ।
कुबरस्थो हरस्तां चाऽगिलत् सर्वामपाचयत् ॥८४॥
हरिद्रुमस्ततस्तूर्णं सिंहास्त्रं मन्त्रितं तदा ।
मुमोच सहसा सिंहाः सहस्रशोऽभवन् मृधे ॥८५॥
गगने भूतले सैन्ये रथेषु वाहनेष्वपि ।
क्षणमात्रेण सिंहानां सैन्यानि सर्वतोऽभवन् ॥८६॥
कुबरस्थो महारुद्रस्तावद् देवीं निजां सतीम् ।
सर्वसैन्यस्वरूपां संभवितुं तु समादिशत् ॥८७॥
शिवांगनाऽभवत् तूर्णं सैन्यात्मिका सुशोभना ।
सर्वशस्त्रधरा सर्वात्मकस्त्रीरूपदर्शिनी ॥८८॥
तां मातरं सतीं दृष्ट्वा सिंहास्तद्वाहनानि वै ।
निपेतुः पादयोस्तूर्णं तदाश्चर्यमभून्महत् ॥८९॥
देव्या योगमहास्त्रेण शार्दूला विलयीकृताः ।
वीक्ष्यैतत्तु हरिद्रुमोऽमोचयन्मोहनास्त्रकम् ॥९०॥
बालकृष्णो मोहनास्त्रं जग्रास रणमध्यगः ।
अथ भीतो हरिद्रुर्णो विषास्त्रं प्रमुमोच ह ॥९१॥
एकबाणेन परितो व्योमभागे विषं विषम् ।
विषवायुमयं सर्वं प्रासरन्नेत्रनाशकम् ॥९२॥
प्राणरोधकमेवापि मृत्युकरं विनाशकम् ।
कुबरस्थस्तदा रुद्रो विषं जहार योगतः ॥९३॥
निर्विषं वै कुबरस्य सैन्यं सर्वं व्यजायत ।
अथ श्रीकुबरो धृत्वा शक्तिं मुमोच नाशिकाम् ॥९४॥
हरिद्रुमो विभिद्यैनां मुमोच शक्तिमुत्तमाम् ।
कुबरोऽपि विभिद्यैतां गुर्वीं गदामवासृजत् ॥९५॥
हरिद्रुमो गदां धृत्वा कुबरं प्रत्ययोजयत् ।
कुबरस्तां पुनर्धृत्वा चिक्षेप बहुवेगिताम् ॥९६॥
चिक्षेप पश्चात्तस्यास्तु शक्तिं शक्तिं द्वितीयकाम् ।
तृतीयकां प्रचिक्षेप सा लग्ना गलमध्यतः ॥९७॥
प्राणान्नीत्वा ययौ भूमौ रथं भित्त्वाऽतिदारुणा ।
हरिद्रुमस्तु सरथो भग्नो ममार तत्र ह ॥९८॥
हाहाशब्दा नन्दिभिल्लसैन्येऽभवन् समन्ततः ।
दुद्रुवुः पृष्ठपादाश्च भीता युद्धविशारदाः ॥९९॥
जयशब्दाः कुबरस्य सैन्ये वाद्ययुतास्तदा ।
अभवन् बद्रिके कृष्णनारायणप्रतापतः ॥१००॥
नन्दिभिल्लो रणभेरीं नादयामास वै पुनः ।
द्रवतां निजसैन्यानां धैर्यार्थं योधनाय च ॥१०१॥
दशसाहस्रयोद्धारो हरिद्रुमस्य वै मृधे ।
नागविक्रमसैन्येन हताः शक्तिनिवासिना ॥१०२॥

अपरे सप्ततिसहस्राणि निश्चित्य वै मिथः।
परितश्चाभिसंव्याप्य व्यूहं वृश्चिकरूपवत् ॥१०३॥
कृत्वा मारयितुं सर्वान् कुबरस्य तु योधकान्।
अभ्यधावन् दिशः सर्वा भिल्लसैन्यान्विताश्च ताः ॥१०४॥
अभवन् परितो बद्रि दिशः सर्वा भयप्रदाः।
अथ रुद्रः कुबरस्थो नैजान् रोगान् गणानपि ॥१०५॥
समूर्तान् निजसैन्यस्याऽभितः स्थितानकारयत्।
अप्रतिहतदेहास्ते शस्त्राघातविवर्जिताः ॥१०६॥
दुर्गवन्मानवसैन्यव्यापकाश्चक्रिरे मृधम्।
तद्बाणैर्निहतास्तत्र बद्रिकेऽयुतसंख्यकाः ॥१०७॥
नन्दिभिल्लस्य योद्धारो दुद्रुवुः शेषशालिनः।
शैलवज्रश्चतुर्थो वै सेनापतिस्तदा बली ॥१०८॥
स्वसैन्यानि समाहूय योधनं पुनराव्यधात्।
गर्जना विविधाश्चासन् बद्रिके चोभयोरपि ॥१०९॥
सैन्ययोर्जयलब्ध्यर्थे शंखनादाश्च खेऽभवन्।
सज्जा आवेशवन्तश्च योद्धारश्चक्रुरुन्मृधे ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने रणसंग्रामे नन्दिभिल्लस्येन्द्रवज्रघातवज्रहरिद्रप्रेति-सेनापतित्रयसहितत्र्ययुतसेनात्मकयोद्धॄणां निधनमित्यादिनिरूपणनामा त्र्यशीति-तमोऽध्यायः ॥ ८३ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि शैलवज्रश्चमूपतिः।
रथस्थः सर्वशस्त्रास्त्रसम्पन्नः पुरतोऽभवत् ॥ १ ॥
नन्दिभिल्लमहासैन्येऽभवन् घोषाः सहर्षकाः।
जयार्थे तूर्यनिनदा भेरीढक्कादिनिस्वनाः ॥ २ ॥
तावन्मुमोच बाणान् स तीक्ष्णान् विदारकान् मृधे।
शतं शतं चैकवारमाच्छादयद् रथं हरेः ॥ ३ ॥
कुबरस्य रथं चापि नागस्यापि रथं तथा।
चिच्छेद भगवान् सर्वान् समायातान् प्रवाहिणः ॥ ४ ॥
सहस्रबाणैर्भगवान् मुक्तैर्युगपदेव हि भिः।
शरान् शैलवज्रस्यापि नन्दिभिल्लस्य वै शरान् ॥ ५ ॥
कुबरो भल्लकान् धृत्वा सायकांश्च शिलीमुखान्।
शतं शतं तु युगपत्प्रधानभिल्लसैन्यपो ॥ ६ ॥
व्यदृश्यन्त रिपुरथा मेघच्छन्नाद्रयो यथा।
कालवज्रादयश्चान्ये चमूनां पतयस्तदा ॥ ७ ॥
शरमेघान् प्रसंजह्रुर्बहीभिः शरकोटिभिः।
नन्दिभिल्लः शरं तीक्ष्णं वाह्नेयं समवासृजत् ॥ ८ ॥
तदुत्पन्ना अनलास्तु प्राज्वालयन् हि कुबरम्।
नागविक्रमणं चापि तस्य सैन्यानि चाभितः ॥ ९ ॥
कृष्णनारायणस्तत्र धृत्वा रूपाणि सर्वशः।
ययौ सैन्यानलं सर्वं महाश्चर्यमभूद्धि तत् ॥१०॥
अथ शैलवज्रस्तत्र शरं पार्वतमन्त्रवत्।
मुमोच नागसैन्येषु पर्वतास्तेऽभवन् हि खे ॥११॥
निपेतुश्चूर्णयामासुर्नागसैन्यानि सर्वतः।
कुबरः पार्थिवैर्मन्त्रैर्वज्रान् मुमोच दारुणान् ॥१२॥
वज्राहताः पर्वतास्ते निलीयुर्वै क्षणान्तरे।
पृथ्वी महाद्रीन् सहसाऽगिलत् सर्वान् समन्ततः ॥१३॥
तदाश्चर्यं महज्जातं सर्वेषां स्तब्धताकरम्।
हरिश्चूर्णिततताप्तान् स्वस्थान् चकार वीक्षणात् ॥१४॥
पद्मन् वाहनसंस्थांश्च योधितानप्यजीवयत्।
अथ बद्रीप्रिये तत्र कुबरो गर्तमन्त्रवित् ॥१५॥
गर्तमन्त्रशरं साऽस्त्रं मुमोच शैलवज्रकम्।
शैलवज्ररथाऽश्वस्ताच्छरास्त्रं गर्तमाकरोत् ॥१६॥
यद्गर्ते तु रथोऽश्वाश्च शैलवज्रः ससारथिकः।
अवातरद् द्रुतं यस्य रक्षा केनापि न कृता ॥१७॥
पृथ्वी जग्रास गर्भे स्वे शैलवज्रं तु बद्रिके।
पृथ्वीगर्भे मृतः पृथ्वी पुनर्यथा तथाऽभवत् ॥१८॥
भूकम्पस्तु महान् जातस्तदा चम्वोर्द्वयोरपि।
त्रस्ता योद्धार एवापि क्षणं मोहमुपागताः ॥१९॥
शैलवज्रो हतश्चेति शुश्रुवुर्नन्दिभिल्लिनः।
जयनादान् प्रचक्रुश्च नागविक्रमयोधिनः ॥२०॥
अथाऽऽययौ कालवज्रनामा पञ्चमसैन्यपः।
महाकालसमः क्रूरोऽन्तकतुल्यपराक्रमः ॥२१॥
तदा वाद्यान्यवाद्यन्त सेनयोरुभयोर्द्रुतम्।
अस्त्रं हैमं महामन्त्राधिष्ठितं स मुमोच ह ॥२२॥
उपला हिमजास्तत्राऽभवन् व्योम्नि जलस्रवाः।
अतिशैत्योपला व्योम्नो निपेतुः प्राणघातिकाः ॥२३॥
कोटिशो लक्षशश्चापि ज्ञात्वाऽस्त्रं हिममन्त्रितम्।
मुमोच कुबरस्तूर्णं सौर्यास्त्रं हिमनाशनम् ॥२४॥
वाडवास्त्रं द्रुतं चापि जलभक्षणकारकम्।
तेनोपला विलीना वै हैम्यः सर्वा जलात्मिकाः ॥२५॥
जलं तूर्णं चाम्बरे तु लयं प्राप्तं तु वाडवात्।
कुबरस्तु ततः कालवज्राय वज्रमुत्तमम् ॥२६॥

मुमोच कालवज्रस्तद् व्यनाशयत् स्ववज्रकैः।
कुबरस्य विनाशार्थं प्रैषयद् भैरवास्त्रकम् ॥२७॥
भैरवो भयदः क्रूरः कुबरे वीक्ष्य शंकरम्।
नत्वा लीनोऽभवत्तूर्णं महाश्चर्यमिदं त्वभूत् ॥२८॥
कुबरः स्वशरं सांकर्षणास्त्राख्यं व्यमूमुचत्।
कालवज्राय कालोऽपि यदधीनो विलुण्ठति ॥२९॥
संकर्षणो महावीरो महागदादिशस्त्रवान्।
जघान बाणरूपेण कालवज्रं तु सैन्यपम् ॥३०॥
चूर्णयामास सरथं घातेनैकेन भूतले।
कालवज्रे हते भिल्लसैन्यान्यासन् द्रवन्ति च ॥३१॥
हाहाकारो महान् जातो हते वै कालवज्रके।
वह्निवज्रस्ततस्तूर्णमाययौ पृतनापतिः ॥३२॥
सैन्याग्रेऽयोधयद् बाणैर्भल्लैश्च स्वर्णपुंखकैः।
शतं सहस्रं बाणानां विससर्ज स मेघवत् ॥३३॥
एकस्मात् तु सहस्राणि मन्त्रास्त्रयोजिताः शराः।
विनिर्ययुर्व्योममार्गे पतन्ति सैन्यमस्तके ॥३४॥
शराणां वृष्टयश्चाऽधोमुखानां परितोऽभवन्।
नागविक्रमसैन्यानि चाऽऽन्ध्यमुग्धानि वै क्षणम् ॥३५॥
अभर्वैश्च तदा रुद्रो व्योमाऽस्त्रं समवासृजत्।
कुबरस्थेन रुद्रेण व्योम्ना वृष्टिर्लयीकृता ॥३६॥
उत्पादिताश्च राक्षस्यो वज्रदेह्योऽतिदारुणाः।
बाणभक्षणकारिण्योऽन्तरीक्षे वज्रनाशिकाः ॥३७॥
उत्पद्यन्ते सहस्राणि त्वेकस्या राक्षसीस्त्रियाः।
ता निगिल्य शरवृष्टिं व्योम्ना पेतुर्हि सैन्यके ॥३८॥
नन्दिभिल्लस्य सर्वस्मिन् तदाऽऽक्रोशास्ततोऽभवन्।
मारयन्तु खादयन्तु चर्वयन्तु विघ्नन्तु च ॥३९॥
त्रोटयन्तु स्फोटयन्तु मानवान् भिल्लसैन्यगान्।
इत्येवं वदमानास्ता निगिलुश्चखदुश्च तान् ॥४०॥
हाहाकारः पुनश्चासीद् भिल्लिसैन्येषु सर्वतः।
मरणं शरणं चेति नान्यत्तत्र व्यदृश्यत ॥४१॥
अथ राजा नन्दिभिल्लो ज्ञात्वाऽऽपदं विनाशिनीम्।
जगाम शरणं चाभिरातर्षेः स्वस्य सद्गुरोः ॥४२॥
अभिरातस्तदा रक्षोहनं मन्त्रं शरासनम्।
कृत्वा मुमोच सहसा सायकं राक्षसान्तकम् ॥४३॥
एकशरात्सहस्राणि जायन्ते सायकास्ततः।
यां यां स्पृशति बाणोऽसौ सा सा तिरोभवत्तदा ॥४४॥
एवं निवारिताः सर्वा राक्षस्यो गुरुणा तदा।
वह्निवज्रो ततोऽमुञ्चद् वैष्णवास्त्रं सुदारुणम् ॥४५॥
विष्णवः प्रज्वलन्तो वै समुत्पन्नाः सहस्रशः।
उत्पत्योत्पत्य सहसा लीनाः कृष्णनरायणे ॥४६॥
तदद्भुतं परं जातं वह्निवज्रस्ततः पुनः।
नारायणास्त्रं विपुलं सर्वप्राणहरं क्षणात् ॥४७॥
मुमोच सर्वनाशार्थं तदपि श्रीनरायणे।
बालकृष्णेऽभवल्लीनं महाश्चर्यमिदं ह्यभूत् ॥४८॥
वह्निवज्रस्ततो निद्रामहास्त्रं प्रसमैरयत्।
निद्रा नारायणाक्षिप्ता विलीना कृष्णनेत्रके ॥४९॥
एवं व्यर्थानि चास्त्राणि विदित्वा क्रोधमाप्तवान्।
मुमोच कालकवलं महास्त्रं सर्वभक्षकम् ॥५०॥
मुक्ताद् बाणान्महाकालो विकरालो विनिर्ययौ।
नैकयोजनविस्तीर्णो नैकयोजनकोच्छ्रयः ॥५१॥
सर्वग्रासकरं वीक्ष्य कालं कृष्णनरायणः।
नागरथं तु महाकालमैरयत् तल्लयाय ह ॥५२॥
नागविक्रमराजस्थो महाकालो द्रुतं तदा।
कालकवलसंज्ञं स्वं रूपं समजहार ह ॥५३॥
लीनं वीक्ष्य तु कालास्त्रं भयं चापाऽग्निवज्रकः।
गतं चास्त्रं महन्मे वै निःशस्त्रोऽस्मि च निर्बलः ॥५४॥
तथापि गदया योत्स्ये मुद्गरेण तथाऽसिना।
विचार्येत्थं महाशक्तिं जग्राह च मुमोच च ॥५५॥
कुबरस्तां स्वगदया विहतां प्रचकार ह।
पतिता सा गदा चापि भूतले ग्राहवत्तदा ॥५६॥
कुबरश्च द्रुतं शक्तिं चिक्षेप वह्निवज्रके।
सा वह्निवज्रकं भित्त्वा क्षितावर्धगताऽभवत् ॥५७॥
वह्निवज्रोऽद्रिबलवान् समुत्थाय सशक्तिकः।
उत्थाय खड्गहस्तश्च दुद्राव शक्तिलम्भितः ॥५८॥
कुबरं तु व्यसुं कर्तुं तावन् कुबरसैन्यपः।
शक्तिं मुमोच सहसा द्वितीयां गलकूपके ॥५९॥
तृतीयामुदरे चास्य गदां मुमोच मस्तके।
अर्धचन्द्रांस्तीक्ष्णशरान् पादाग्रयोर्मुमोच ह ॥६०॥
कर्त्तपादो भग्नकण्ठो भिन्नोदरः पपात ह।
गदया चूर्णितांगश्च भिन्नमूर्धा ममार च ॥६१॥
वह्निवज्रोऽगमन्मृत्युं वह्निके गहने रणे।
त्रिंशत्सहस्रसैन्यानि नन्दिभिल्लस्य वह्निके ॥६२॥
नागविक्रमसैन्यानां मारैर्मृत्युमगुर्मृधे।
अथ प्रालेयवज्राख्यः ससमः सैन्यपस्ततः ॥६३॥
नन्दिभिल्लादेशकरः सैन्याग्रे संस्थितोऽभवत्।
शरान् मुमोच शतधा गर्जयन् परितो दिशः ॥६४॥

सैन्यानि तस्य मुमुचुर्बाणाग्नागचमूषु वै ।
स्फोटकैर्गोलकैश्चापि शतघ्नीभिश्च सायकैः ॥६५॥
भूशुण्डीभिर्वह्निशस्त्रैर्दयामासुरुत्कटान् ।
योद्धॄन् समन्ततस्तत्र प्रालेयवज्रदेशतः ॥६६॥
कुबरस्यापि सैन्यानि बद्रिके वह्निगोलकैः ।
शतघ्नीभिर्भूशुण्डीभिर्जघ्नुर्भिल्लचमूस्ततः ॥६७॥
प्रालेयवज्रहस्तेन बाणाः शतसहस्रशः ।
कार्मुकान्निःसरन्त्यूर्ध्वमुत्पतन्ति चमूपरि ॥६८॥
कुबरस्य धनुर्ज्यां सचिच्छेदापि च कार्मुकम् ।
कुबरोऽन्यत् समादाय व्यसर्जयच्छरान् बहून् ॥६९॥
तज्ज्यां व्यनाशयच्छीघ्रं प्रालेयवज्रको यदा ।
कुबरश्चार्धचन्द्राभ्यां चिच्छेद कार्मुकं करम् ॥७०॥
प्रकोष्ठहस्तशून्यो वै प्रालेयोऽस्त्रमवासृजत् ।
प्रालेयास्त्रं विषतापात्मकमन्त्राभिमन्त्रितम् ॥७१॥
यत्र द्वादशसूर्याणां विषतेजांसि चापतन् ।
सैन्यमूर्छां व्यधात्तूर्णं तद्धि प्रलयसदृशीम् ॥७२॥
कृष्णोनारायणःस्वामी विदित्वा तु विषानलम् ।
आमृतीं पीयूषमयीमाक्षरीं ब्रह्मसंभवाम् ॥७३॥
ब्राह्मीं शक्तिं निजां सर्वविषादां समवासृजत् ।
सा तु मूर्ता क्षणमात्रान्मनोवेगेन सर्वतः ॥७४॥
व्यामम्बरे सैन्यभागे प्रासरद् विषशान्तिदा ।
आमृती सा विषं पीत्वाऽमृतदानेन तान् भटान् ॥७५॥
पोषयामास बहुधा सैन्यानि सर्वतोदिशः ।
प्रालेऽयाऽस्त्रं समस्तं सा संजहार हि बद्रिके ॥७६॥
कुबरस्तु तदा धृत्वा सर्वधारं सुचक्रकम् ।
फलाग्रशुभ्रमचक्रं दीर्घशरमिवाऽसृजत् ॥७७॥
प्रालेयवज्रकं प्राप्य चक्रं तच्छरसंयुतम् ।
गले पपात यावद्वै तावद् द्वेधा बभूव तत् ॥७८॥
शरं विवेश हृदये चक्रं विवेश वै गले ।
प्रालेयवज्रको द्वेधा छिन्नो ममार वै रणे ॥७९॥
हाहाकारो महान् जातो मृतः प्रालेयवज्रकः ।
शोकं चकार भिल्लोऽपि वह्निरात्रं न्यवेदयत् ॥८०॥
गुरो नष्टा मम सप्त सेनेशाः सप्ततिस्तथा ।
सहस्राणि तु योद्धारो मानवा रणदुर्मदाः ॥८१॥
दिवारात्रं युद्धमेतत्प्रवर्तते दिनद्वयात् ।
रात्रिद्वयात्तथा विप्र सैन्यनाशो महानपि ॥८२॥
त्रिंशत्सहस्रमात्रं मे वर्तते मानवं दलम् ।
त्रयश्चमूपतयश्च शिष्यन्ते मे जयप्रदाः ॥८३॥
गुरो त्वं सैन्यपो भूत्वा मञ्जयाय समाचार ।
पराजयो हि संसारे सर्वथा नरकप्रदः ॥८४॥
इत्येवं बद्रिके श्रुत्वा गुरुश्चाह तु भिल्लकम् ।
इन्द्रघातहरिच्छैलकालाग्निलयवज्रकाः ॥८५॥
हतास्तथापि सबला जयाशा गुरुगामिनी ।
यत्र नारायणश्चास्ते महाकालो नृपेऽस्ति च ॥८६॥
रुद्रः कुबरे संविष्टः सैन्येषु सर्वशक्तयः ।
तत्र जयाशा विफला राजन् युद्धं विरामय ॥८७॥
श्रुत्वैतत् सहसा क्रुद्धो नन्दिभिल्लोऽतिवेगवान् ।
प्रेरयद् रणवज्रं वै सैन्यपं चाष्टमं तदा ॥८८॥
रणवज्रो रणं चक्रे नाराचैर्भिन्दिपालकैः ।
शरैर्बाणैः सायकैश्च शिलीमुखैश्च मार्गणैः ॥८९॥
स्वर्णपुंखैः रुक्मपुंखैश्चान्द्रयन्त्रैश्च खड्गकैः ।
छुरिकैर्मल्लकैश्चापि कुन्तलैः शक्तिभिश्च ह ॥९०॥
मन्त्रास्त्रयोजितैः सर्वैर्वर्धमानैः समन्ततः ।
आच्छादयद् व्योममार्गं शरजाले रणव्रजः ॥९१॥
कुबरस्य महासैन्यं छन्नं बाणप्रवर्षणैः ।
नाकाशो दृश्यते तत्र नोर्ध्वं चक्षुः प्रवर्तते ॥९२॥
अन्धकारमयं बाणैर्जातं सर्वं क्षणान्तरे ।
तदाश्चर्यमभूत्तत्र रणवज्रस्य कर्मणा ॥९३॥
अथ राजा नागदेवः स्वयमस्त्रं दधे तदा ।
महातेजोऽभिधं सर्वबाणानां भस्मताकरम् ॥९४॥
व्याप्तं भूत्वाऽम्बरे भस्मीचकार बाणवर्षणम् ।
सन्दधे च महाशक्तिं दुर्गामन्त्रप्रवर्धिताम् ॥९५॥
रणवज्रं मारयितुं मुमोच रुद्रदेवताम् ।
जगाम सहसा देवी रणवज्रस्य वक्षसि ॥९६॥
निपपात यथा वज्रं पर्वते प्रपतेत्तथा ।
विभिद्य हृदयं तस्य जगाम सरथा भुवम् ॥९७॥
रणवज्रो हतस्तत्र हाहाकारोऽभवन्महान् ।
अहो कष्टं दरोदाऽपि श्रुत्वा भिल्लो विमूर्छितः ॥९८॥
स्वस्थो भूत्वा तथा युद्धे युद्धवज्रं तु सैन्यपम् ।
विजयार्थं त्वादिदेश युद्धवज्रोऽपि चाऽऽययौ ॥९९॥
रणाग्रे कुबरस्यापि नाशार्थं श्रीहरेस्तथा ।
राज्ञश्चापि विनाशार्थं रणाग्रे समुपाययौ ॥१००॥
रथं स्त्रीसूतनोद्यं वै समास्थाय समाययौ ।
धर्मयुद्धं परित्यज्य स्त्रीं कृत्वा चाऽग्रतो रथे ॥१०१॥
आययौ रणधूर्तः सहस्रास्त्रबलसंयुतः ।
यत्र स्त्री दृश्यते तत्र शस्त्रपातो न सम्मतः ॥१०२॥

स्त्रीकृताऽवन एवासौ रणे चावाततार ह ।
बद्रिके सर्वसैन्यानां तदा हास्यमभून्महत् ॥१०३॥
स्त्रीभूतः स्त्रीवचःकर्ता स्त्रीसहायः स्त्रीधर्मवान् ।
स्त्रीनोदितो विनाशं वै यात्येव नात्र संशयः ॥१०४॥
अथ कृष्णः प्रभुर्दृष्ट्वा स्त्रीसुतं युद्धवज्रकम् ।
दुर्गायै स्त्रीस्वरूपेण योद्धुमाज्ञां चकार ह ॥१०५॥
अनन्ताश्च तदा दुर्गा रथस्थाः सिंहपृष्ठगाः ।
शरभस्था व्याघ्रसंस्था गवयस्था वृषस्थिताः ॥१०६॥
अभवँस्तत्र चाग्रस्था योद्धुं स्त्रीसुतसन्निधौ ।
आश्चर्यं परमं प्राप युद्धवज्रः प्रवीक्ष्य ताः ॥१०७॥
सहसाग्रस्तदा दुर्गाः सन्देहमाप जीवने ।
बाणवर्षणमेवाऽऽदौ चकार स्त्रीजनेषु सः ॥१०८॥
दुर्गास्तु सर्वतस्ताश्च सर्वानगिलन् सायकान् ।
खड्गहस्ताश्च ताः सर्वा उत्पत्योत्पत्य तद्रथे ॥१०९॥
निपेतुर्युद्धवज्रस्य नाशनार्थे रथोपरि ।
प्रविश्य ता रथे युद्धवज्रं च सारथिं स्त्रियम् ॥११०॥
चिच्छिदुः खण्डशः सर्वास्ततः सैन्यान्यनाशयन् ।
मृतश्च नवमो युद्धवज्रः सैन्यप आहवे ॥१११॥
हाहाकारो महानासीत्तदा भिल्लचमूषु वै ।
सैन्यानि निहतान्येव सहस्राणि तु विंशतिः ॥११२॥
दुर्गाभिस्तत्र सैन्यैश्च सर्वशक्तिबलान्वितैः ।
बद्रिके नन्दिभिल्लस्तु तदा मूर्छामवाप ह ॥११३॥
नागविक्रमसैन्यानां महोत्सवस्तदाऽभवत् ।
वह्निरातो भिल्लगुरुः शुशोचाऽवनमुत्तमम् ॥११४॥
शरणं रक्षणं चात्र नान्य उपाय उत्तमः ।
एवं राज्ञे उपादेष्टुं समारभत सद्गुरुः ॥११५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने संग्रामे नन्दिभिल्लस्याऽन्यषट्सेनापतीनां षष्टिसाहस्र-सैन्यसहितानां विनाशनमित्यादिनिरूपणनामा चतुरशीतितमोऽध्यायः ॥ ८४ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि वह्निरातो गुरुर्नृपम् ।
हितमुवाच संगम्य शेषजीवनहेतवे ॥ १ ॥
राजन्नन्दिभिल्ल भूप नाशोऽस्माकं प्रजायते ।
कृष्णरक्षितसैन्यानां नाशो नास्ति न जायते ॥ २ ॥
एकेन कुबरेणैव चमूपा नव नो हताः ।
दशसाहस्रसैन्यैश्च नवाऽयुतानि नो हताः ॥ ३ ॥
पश्य नाशं ततो युद्धं कुरु वा शरणं व्रज ।
मा गर्वं वह राजेन्द्र नागवशेऽस्ति माधवः ॥ ४ ॥
निवर्तस्व प्रजानाशात् सुतरां राज्यनाशतः ।
अतितरां स्वनाशाच्च निवर्तस्व पदं व्रज ॥ ५ ॥
इत्येवं बोधितश्चापि नन्दिभिल्लोऽतिगर्ववान् ।
गुरोऽन्तेऽहं स्वयं युद्ध्वा हत्वा सर्वान् समन्ततः ॥ ६ ॥
वैरनिर्यातनं चान्तं करिष्येऽहं क्षितीश्वरः ।
जितो भोक्ष्यामि पृथिवीं मृतो भोक्ष्येऽक्षरं पदम् ॥ ७ ॥
भयाद् युद्धात् कथञ्चित्तु निवर्तिष्ये न सर्वथा ।
युद्धं भवतु सततं धर्मवज्रो विजेष्यति ॥ ८ ॥
इत्युक्त्वा सहसा चाज्ञां धर्मवज्रो चकार सः ।
दशसाहस्रसैन्याढ्ये जयाशाप्रेरितोऽबुधः ॥ ९ ॥
याहि मारय तान्सर्वान् धर्मवज्र महत्तमान् ।
जहि नारायणं पूर्वं ततस्तु नागविक्रमम् ॥१०॥
नन्दकुबरं पश्चाच्च भिन्धि छिन्धि चमूस्ततः ।
एषोऽहं व्रतमास्थायोपस्थितो हवनेऽनले ॥११॥
शत्रुनाशाय हवनं करोमि याहि घातय ।
इत्युच्चार्य द्रुतं वह्निशालां विवेश भिल्लकः ॥१२॥
वह्निं प्रज्वाल्य चावाह्य स्वमांसैः संजुहाव तम् ।
बाहुमांसं सक्थिमांसं निकृत्योत्कृत्य चाऽनले ॥१३॥
चिक्षेप 'शत्रुनाशार्थं स्वाहा वह्ने स्थिरो भव' ।
वदन्नेवं नन्दिभिल्लश्चकार हवनं तदा ॥१४॥
प्रसन्ना वह्नयो मूर्ताः सशस्त्राः सृष्टिदाहकाः ।
समुत्पेतुरनलाद्वै दुद्रुवुर्नागविक्रमम् ॥१५॥
नारायणं च कुबरं सैन्यानि प्रति दुद्रुवुः ।
हाहाकारोऽभवन्नागसैन्येषु वीक्ष्य चानलान् ॥१६॥
ज्वालाभिर्व्याप्तदेहाँश्च परसैन्यप्रदाहकान् ।
भस्मीभूतानि सैन्यानि रथान् वाहान् प्रकुर्वतः ॥१७॥
महाकालस्तथारुद्रः शक्तयश्चाज्ञया हरेः ।
उत्पन्नानागतान् मूर्तानग्नीन् दिक्षु विदिक्षु च ॥१८॥
भक्षयामासुरत्यर्थं महातेजःस्वरूपिणः ।
वह्नयो मूर्तिमन्तस्ते भक्ष्यमाणास्तु चक्रिणा ॥१९॥
महाकालेन रुद्रेण शक्तिभिर्भक्षितास्तथा ।
परावृत्त्यैव भिल्लस्याऽभक्षयन् पृतनाऽयुतम् ॥२०॥
भीतास्तं वह्नयः कृष्णात् प्रधाव्य दूरतो ययुः ।
भिल्लसैन्येषु संक्रुद्धा दावानलं प्रचक्रिरे ॥२१॥
भिल्लो विवेद हवने शालायां निजवह्निजम् ।
निजसैन्यविनाशं वै तदा हतमना द्रुतम् ॥२२॥

बभूव वह्निं पादेन ताडयित्वा क्रुधाऽऽहवे ।
शक्तिबाणभुशुण्डीगदामुद्गरखड्गकैः ॥२३॥
सहितः सरथो युद्धे पुरो गत्वाऽहनद् बहून् ।
नागयोद्धॄन् जघानाऽसौ बाणवृष्ट्याऽतिघट्टया ॥२४॥
धर्मवज्रस्तदा चैन्द्रजालिकं रूपमादधात् ।
नागरूपं समगृह्य नारायणरथं ययौ ॥२५॥
आरुरोह रथं नत्वा श्रीकृष्णं वल्लभाऽऽऽयकम् ।
तावच्छ्रीदुर्गया देव्या गदया प्रहृतो रथात् ॥२६॥
निपपात क्षितौ तूर्णं समुत्थाय गदाधरः ।
खड्गहस्तो दधावाऽति हन्तुं तु नागविक्रमम् ॥२७॥
महाकालो गदया तं पोथयामास तत्क्षणम् ।
समुत्थाय द्रुतं खड्गं धृत्वा दुद्राव कूबरम् ॥२८॥
रुद्रस्तत्र स्थितस्त्वेनं जघान मुद्गरेण ह ।
तस्मात्ताडनवेगाच्च क्षितावुत्तानतोऽपतत् ॥२९॥
समुत्थाय ययौ नैजं रथं यावत्तु तावता ।
कूबरेण हतः सूतो हता अश्वाः शराष्टकैः ॥३०॥
दग्धो रथश्च वह्निस्तत्शरैर्धर्मवज्रस्य ह ।
धर्मवज्रो रथात्तूर्णं त्वपसृत्य विमानके ॥३१॥
व्योमवाटे चोपविश्य नागसैन्यानि चाऽहनत् ।
अधोमुखैर्वह्निशस्त्रैर्गोलाधसायकादिभिः ॥३२॥
नन्दिभिल्लोऽपि सहसा विमानमधिरुह्य च ।
शस्त्रवर्षामकरोद्धि व्योममार्गात् समन्ततः ॥३३॥
अन्येऽपि शेषयोद्धारो वैमानिका विमानकैः ।
नन्दिभिल्लाज्ञया शस्त्रवृष्टिं चक्रुस्तदाऽम्बरात् ॥३४॥
अथ वीक्ष्य कृष्णनारायणो विमानयोधनम् ।
सहसा स्वविमानैः स्वान् योद्धमाज्ञां ददौ तु खे ॥३५॥
तदा बद्रीप्रिये ! नागविक्रमो नन्दकूबरः ।
सैन्येश्वरा भटाश्चापि विमानेष्वधिरुह्य च ॥३६॥
वैमानिकं महायुद्धं चक्रिरे सर्वनाशकम् ।
हरिस्तदा विचार्यैव दुर्गां तु गतिरोधिनीम् ॥३७॥
प्राह शत्रुविमानानां गतिरोधान् समाचर ।
निपातय क्षितौ शत्रुविमानानि समन्ततः ॥३८॥
इत्युक्ता रोधिनीदुर्गा चाध्यात्मदेवतात्मिका ।
नन्दिभिल्लविमानानां गतिं रुरोध सर्वथा ॥३९॥
गरिमानामदुर्गा च गुर्वी गुर्वीतमा स्वयम् ।
विमानेषु महाभारं दधार तेषु वै द्रुतम् ॥४०॥
अवतेरुर्निपेतुश्च क्षितौ विमानकानि वै ।
गन्तुं नैव समर्थानि भाराक्रान्तानि सर्वतः ॥४१॥
तद्गता योद्धृवर्गाश्च हताः शस्त्रादिभिस्तदा ।
नागवैमानिकैर्बद्रि ततस्ते शरणं ययुः ॥४२॥
धर्मवज्रोऽपि शरणं चाययौ नागविक्रमम् ।
नन्दिभिल्लोऽसहमानः खड्गमादाय दीर्घकम् ॥४३॥
हन्तुं नागं प्रदुद्राव विमानमारुरोह च ।
तावत्तु कालकालेन महाकालेन विधृतः ॥४४॥
केशेषु मस्तके बद्रि नागविक्रमरूपिणा ।
खड्गेन तत्करौ छित्वा पातितौ खड्गभूषणौ ॥४५॥
गदया पोथितः सोऽपि पपात रणमूर्धनि ।
महाशक्त्या भिन्नवक्षा मुमुर्षुः स्तवनं व्यधात् ॥४६॥

नन्दिभिल्ल उवाच—

नमो नमस्ते निजरक्षकाय नमो नमस्तेऽन्यविनाशकाय ।
नमो नमस्ते शिवसंग्रहाय कलाधिनाथाय नमो नमस्ते ॥४७॥
नमो नमस्ते बहुमोहनाय नमोऽतिगर्विष्ठसुशासकाय ।
नमो हृदिस्थाय परेश्वराय चाऽनादिनारायण ते नमोऽस्तु ॥४८॥
नमोऽक्षरेशाय परावराय नमो नमस्तेऽखिलकारणाय ।
नमः समस्तांगजतत्त्वगर्भप्रपूरकायाच्युत ते नमोऽस्तु ॥४९॥
नमोऽवतारिन्नवतारधर्त्रे ह्यनन्तमुक्ताऽभिनिषेविताय ।
अनादिकृष्णाय परेश्वराय नारायणायेति नमोऽस्तु तुभ्यम् ॥५०॥
श्रीकान्तरूपाय रमेश्वराय राधाधिनाथाय नमो नमस्ते ।
नमोऽस्तु ते श्रीपुरपालकाय भूमन्नमस्ते ललितेश्वराय ॥५१॥
सर्वेश्वरीशाय समस्तसर्वेश्वरेश्वरेशाय नमोऽस्तु तुभ्यम् ।
वैराजनाथाय जगन्नियन्त्रे मायेश्वरायाऽच्युत ते नमोऽस्तु ॥५२॥
पितृर्षिदेवर्षिशरीरकाय चराचरान्तःस्थ च ते नमोऽस्तु ।
श्रीमाणिकीपार्वतीश्वरायप्रज्ञाधिनाथायनमोऽस्तुतुभ्यम् ॥५३॥
ब्रह्मप्रियावामनिवासकाय हरिप्रियाद्याभिरभिष्टुताय ।
कृतस्थली कुंकुमवापिकाय गोपालबालाय नमो नमस्ते ॥५४॥
श्रीकंभरामातृभवाय कृष्णनारायणश्रीश च ते नमोऽस्तु ।
साधुस्वरूपाय मखात्मकाय स्वामिन्नमस्ते रणरञ्जनाय ॥५५॥
जन्मस्थितिध्वंसकराय विष्णो जिष्णो नमस्ते परमेश्वराय ।
सद्भक्तलभ्याय कृपावशाय शक्ताय कालाय नमो भवाय ॥५६॥
रुद्राय बाणाय रथाय शास्त्रे यमाय धर्माय नमो द्विजाय ।
प्राणायजीवाय तदात्मनेतेऽन्विताय रिक्ताय नमोऽव्ययाय ॥५७॥
नागस्वरूपाय मदन्तकाय दुह्याय निर्वाणकराय धात्रे ।
शीघ्रं शरण्य त्वमभिप्रपद्य नयाऽक्षरं मोक्षपदं हरे माम् ॥५८॥
कृतापराधं बहुगर्वदग्धं परभियं वीक्ष्य सदा ज्वलन्तम् ।
रणे स्थितं प्राणगतिं त्यजन्तं क्षमाप्य सर्वं नय मोक्षणं ते ॥५९॥
सर्वज्ञ सर्वेश समस्तचक्षुःसमस्तकर्णाऽऽत्ममनस्तु संस्थ ।
दिव्यंनिजं दर्शनमत्र देहि मृतान् समस्तांश्च समुद्धराऽद्य ॥६०॥

हरेऽभिरातेन विबोधितेन मयापि गर्वादवमानितस्त्वम् ।
अतोऽघदावानलमध्यमार्तं समुद्धर शीघ्रं विधेहि दिव्यम् ॥६१॥
स्वर्गं यथा वा नरकं मदर्थं यदस्ति तत्तेऽर्पितमत्र कृष्ण ।
प्रपन्नजीवं परलोकयानं नयाऽक्षरं धाम विनाश्य पापम् ॥६२॥
हरे कृष्ण हरे विष्णो कृष्णनारायण प्रभो ।
तवास्मीति तवास्मीति मोक्षं मा नय माधव ॥६३॥
इत्युक्त्वा मौनमादाय कृताञ्जलिर्द्विदन्तरे ।
विवेश नन्दिभिल्लो वै स्मरन् ध्यायन् प्रभुं पतिम् ॥६४॥
बद्रिकेऽथ तदा कृष्णनारायणो निजाद् रथात् ।
उत्प्लुत्य नन्दिभिल्लाय दातुं दर्शनमाययौ ॥६५॥
नेत्रयोर्गोचरः कृष्णोऽभवद् दिव्यस्वरूपवान् ।
हस्तेन कल्पितं वारि नन्दिभिल्लमुखेऽददात् ॥६६॥
दग्धपापस्तदा नन्दिभिल्लः पीत्वा हरेर्जलम् ।
त्यक्त्वा दिल्लावरीं पृथ्वीं विमानेनाऽक्षरं ययौ ॥६७॥
दिव्यदेहो हरेर्दासो धाम्न्यक्षरे व्यराजत ।
तथा तत्र रणे नष्टा हता ये तान् कृपावशः ॥६८॥
कृष्णनारायणो मोक्षे निन्ये वैकुण्ठप्रभृतौ ।
नन्दिभिल्लस्य नाशेन तत्सैन्यानि द्रुतं हरेः ॥६९॥
शरणं त्वाययुः शेषमानवा भयविह्वलाः ।
विजयस्य महाशंखनादं चकार कूबरः ॥७०॥
नागविक्रम एवाऽऽजौ ध्वजं चकार चाम्बरे ।
कृष्णनारायणस्तत्र दध्मौ शङ्खं जयार्थदम् ॥७१॥
सैन्यानि श्रीकृष्णरक्षितानि दध्मुर्हि वारिजान् ।
भेरीश्च ताडयामासुर्व्यधुर्महोत्सवाँस्तथा ॥७२॥
जयो नागस्य च हरेर्जयोऽपि कुबरस्य च ।
कालरुद्राऽब्जशक्तीनां विजयोऽस्तीत्यघोषयन् ॥७३॥
विरेमुर्युद्धतः सर्वे बद्रिके लूनिकातटे ।
विशश्रमुर्यथास्थानं शवानां मार्गणं तथा ॥७४॥
मृतानां जीवतां चापि व्यवस्थां चक्रिरे भटाः ।
सजीवाः श्रीकृष्णनारायणेन कृपया द्रुतम् ॥७५॥
स्पृष्टाः करेण युगपत् तावत्स्वरूपधारिणा ।
नीरुजश्चाऽक्षताश्चापि स्वस्थाः पूर्णाऽसवोऽभवन् ॥७६॥
अथ ये तु शवास्तत्र नद्यां गर्तेषु गह्वरे ।
भूतले रणभूमौ च तेषामन्त्यविधिः कृतः ॥७७॥
अथोत्सवं नागराजश्चकार युद्धपत्तने ।
विजयोत्सवमासाद्य ददौ दानानि सर्वशः ॥७८॥
प्रजाः प्रददुरुपदा राज्ञे जयनिमित्तिकाः ।
कृष्णस्य पूजनं चक्रुर्जयप्रदाय चक्रिणे ॥७९॥

अथ बद्रीप्रिये कृष्णनारायणः पुमुत्तमः ।
इयेष नागराजाय दातुं दिल्लावरीं पुरीम् ॥८०॥
नागविक्रमराजानं प्राह कृष्णस्तयेच्छया ।
राजन् राज्यं हिमशैलाद् विन्ध्याचलान्तकं शुभम् ॥८१॥
नन्दिभिल्लस्य साम्राज्यं त्वयि न्यस्तुं हि कांक्षये ।
भव सज्जस्ततस्तूर्णं युद्धसैन्यसमस्तकः ॥८२॥
आयामि यामुनीं रम्यां पुरीं दिल्लावरीं प्रति ।
तत्राऽभिषेको भवतः कर्तव्योऽस्ति मया नृप ॥८३॥
बद्रिके कृष्णवचनं प्राप्यैव नागविक्रमः ।
तूर्णं सैन्ययुतः कृष्णयुतो दिल्लावरीं पुरीम् ॥८४॥
ययौ तत्र नन्दिभिल्लीसभासमाजमाह्वयत् ।
प्रकाशं प्राह राजाऽसौ सर्वसमाजसन्निधौ ॥८५॥
युद्धे कृष्णसहायेन मया प्राप्ता दिल्लावरी ।
नगरी मध्यखण्डस्था यामुनीसदृशी पुरी ॥८६॥
हिमवद्विन्ध्ययोर्मध्ये राज्यं श्रीकृष्णसात्कृतम् ।
मया भक्तेन वै कृष्णो राज्यं करोतु सर्वथा ॥८७॥
इत्येवं नागराजो वै भिल्लीसभासमाजके ।
व्याजहार तदा कृष्णः प्रकाशं प्रत्यबोधयत् ॥८८॥
शृण्वन्तु सर्वराज्येष्टाः प्रजा राजा सुखावहम् ।
मया भक्तस्य नागस्य यज्ञः प्रकारितः शुभः ॥८९॥
अप्रसह्य यशस्तस्य नन्दिभिल्लो रणं व्यधात् ।
जितो नागेन सहसा नागराज्यं ततस्त्विदम् ॥९०॥
दिल्लावरीपुरीराज्ये साम्राज्ये नागविक्रमम् ।
अभिषिञ्चामि कृष्णोऽहं स सम्राडस्ति वोऽधुना ॥९१॥
इत्युक्त्वा श्रीकृष्णनारायणो भिल्लिसभासने ।
साम्राज्यमुकुटं कृष्णो ददौ नागाय मस्तके ॥९२॥
महासाम्राज्यमासाद्य नागराजोऽपि बद्रिके ।
ददौ दानानि विप्रेभ्यो ग्रामान् देशांश्च वाटिकाः ॥९३॥
स्वर्णरत्नगृहक्षेत्रधेनुवाजिगजादिकान् ।
कन्यादानानि च ददौ तथा धनानि सम्पदः ॥९४॥
मृधे मृतानां श्रेयोऽर्थं श्राद्धयज्ञं चकार सः ।
एवं राज्यध्वजं राजालये चाऽऽरोप्य माधवः ॥९५॥
कृत्वा सम्राण्महाभूपं नागविक्रमणं नृपम् ।
व्यवस्थां कारयामास राज्यस्य शोभनां हरिः ॥९६॥
सैन्यपेभ्य उपदादि ददौ भटेभ्य इत्यपि ।
तोषयामास भगवान् सर्वदेहिभ्य आपणैः ॥९७॥
परिहारं चकारैव नागाह्वये पुरे प्रभुः ।
नागनाम्ना पुरी नागाह्वया ख्यातिं गमिष्यति ॥९८॥

मिल्लीसभामिधानेन भिल्लीनाम्नाऽपि सा पुरी ।
दिलावरीसतीनाम्ना दिलावरी भविष्यति ॥९९॥
तन्नाम्ना नगरी सापि दिलावरीति. यामुनी ।
राजधानी शाश्वतीयं कल्पान्ता संभविष्यति ॥१००॥
इत्येवं बद्रिके सर्वे व्यवस्थाप्य नरायणः ।
विमानेनाऽऽययौ नैजां कुंकुमवापिकापुरीम् ॥१०१॥
पठनाच्छ्रवणादस्य स्मरणात् पापसंहृतिः ।
भुक्तिर्मुक्तिस्तथा शान्तिर्मिलेदन्तेऽक्षरं पदम् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने धर्मवज्रादिसेनापतीनां नागविक्रमशरणागमः, विमानयुद्धं, नन्दिमिल्लनृपमृत्युकालीनस्तवनम्, श्रीकृष्णनारायणकृतमोक्षणम्, दिलावरीसाम्राज्यं नागविक्रमे भगवता निहितं चेत्यादिनिरूपणनामा पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

श्रीश्वेतायनव्यास उवाच—

सनकाद्या गुरुजनाः भगवान् कृष्णनन्दनः ।
भक्तकार्याणि कृत्वैवं स्वाऽऽक्षरीं भूमिमागतः ॥ १ ॥
नरनारायणस्त्वेनां कथां बद्र्यै भिधाय च ।
विरराम तथा बद्री विरराम हरिस्मृतिः ॥ २ ॥
दध्यौ ध्याने सदा बद्रीप्रिया नारायणं पतिम् ।
तृप्ता कथारसास्वादपूर्णाऽभवद्धि शाश्वती ॥ ३ ॥
अथैत्य कुंकुमवापीमुवास स्वालये हरिः ।
ततः कृत्वा सभां सर्वप्रजाभक्तप्रियान्विताम् ॥ ४ ॥
वृत्तान्तं विजयस्याऽऽह विस्तरेण सुखभवम् ।
तत्र नन्दिमिल्लपत्नी दिलावरीति वै सती ॥ ५ ॥
अभूद् वृत्तमिमं श्रुत्वा प्रज्ञा पद्मावती प्रिया ।
सहचर्यौ भगिन्यौ ते पत्न्यौ श्रीकृष्णसत्प्रभोः ॥ ६ ॥
पप्रच्छतुः सर्वसभ्यलाभार्थं विनयान्विते ।
प्रणिपत्य पतिं कान्तं स्वामिनं कृष्णमाधवम् ॥ ७ ॥
अनादिश्रीकृष्णनारायणं स्वामिनमच्युतम् ।
कुंकुमवापिकानाथं विराजन्तं सभापतिम् ॥ ८ ॥

श्रीपद्मावतीप्रज्ञे ऊचतुः—

भगवन् भवता प्रोक्ता दिलावरी सतीति या ।
कथं दिलावरी नन्दिमिल्लपत्नी सती ह्यभूत् ॥ ९ ॥

श्रीकृष्णनारायण उवाच—

भवतीभ्यां शुभं पृष्टं शृणुतं सहचारिके ।
नन्दिमिल्ले मृते राज्ञी दिलावर्या स्थिताऽभवत् ॥१०॥
पतिभक्ता व्यपश्यत् सा नारायणस्य मन्दिरे ।
जपपूजनकाले स्वपत्युर्जयविचिन्तना ॥११॥
साकं कृष्णेन पत्युश्च मूर्तेः पूजापरायणा ।
छत्रमुकुटयुक्तायाः पतनं सहसा क्षितौ ॥१२॥
पत्युर्मूर्तेः प्रपतनं विना निमित्तकं द्रुतम् ।
छत्रस्य पतनं चापि मुकुटस्यापि वीक्ष्य सा ॥१३॥
शुशोच पतिधर्मा सा विवेद पतिपातनम् ।
नन्दिमिल्लो रणे नूनं मृतो दिलावरीपतिः ॥१४॥
यदर्थे यद्विजयार्थे त्यक्ताऽऽहारजलाशना ।
कृष्णव्रतपरा पत्युः पूजापराऽस्मि जापिका ॥१५॥
सा सर्वा सत्क्रिया मेऽद्य पत्यू रक्षाकरी न वै ।
न सत्याः सत्यमेवाऽपि पत्यू रक्षाकरं त्विह ॥१६॥
न पूजायाः फलं मेऽद्य पत्युः कृते सहायदम् ।
अहो दैवे विपरीते सर्वे भवति निष्फलम् ॥१७॥
यत्नाः सर्वेऽपि विफला विफला देवमानताः ।
व्रतं बाधा च नियमाः सर्वे भवति निष्फलम् ॥१८॥
अथ श्रीकृष्णभक्तस्य द्रोहपापं बलिष्ठकम् ।
यदग्रे भगवानास्ते तस्य द्रोहो भयंकरः ॥१९॥
न तत्र देवकार्याणि शम्भोः साहाय्यदानि वै ।
नन्दिमिल्लो कृतवान् वै द्रोहं मखाभियोगिनः ॥२०॥
नागस्य च हरेश्चापि तत्र पूजा मृषा मम ।
जाताऽद्य विफला सर्वा स्वामी रणे हतो मम ॥२१॥
यद्येवं श्रीकृष्णनारायणविष्णो जगत्प्रभो ।
जगद्गुरो सतीसत्यं समारोहतु मामिह ॥२२॥
इत्युक्त्वा सा करे धृत्वा जलं मुमोच भूतले ।
तावत्तस्याः पादतले कुंकुमाक्ते बभूवतुः ॥२३॥
भूमौ मुद्रापिते पादतलेऽपश्यद् दिलावरी ।
वीक्ष्य सत्यं व्रतं सत्याः साक्षि पत्युर्मृतौ तदा ॥२४॥
कृष्णध्यानपरा साध्वी पतिचिन्तापरायणा ।
क्षणं रुरोद लोकार्थंप्रकाशनपरायणा ॥२५॥
तावत् पुत्र्यश्च दास्यश्च भृत्यवर्गाः समाययुः ।
रोदनस्य तु याथार्थ्यं ज्ञात्वा तेऽपि विमूर्छिताः ॥२६॥
तावद्विमानमार्गेण दूतः शोकपरायणः ।
ध्वजशून्याद् विमानाद्वै पृथ्व्यामवाततार ह ॥२७॥
पराजयं मृतिं राज्ञो ज्ञात्वा दूतमुखादपि ।
दिलावरीसती सत्यं वह्निमुत्पाद्य पादतः ॥२८॥
तत्रैव देवदेवस्य चत्वरे मन्दिराग्रतः ।
कृष्णमूर्त्या पतिमूर्त्या साकं जज्वाल मुक्तये ॥२९॥

तत्पुत्र्यः पञ्च सर्वास्ताः सत्य आसन् कुमारिकाः ।
अपुत्रस्य मिल्लराज्ञो जलप्रदास्तदा सुताः ॥३०॥
व्यलोकयन् विमानं वै स्वर्णं समागतं द्रुतम् ।
यत्र राजा नन्दिमिल्लः कृष्णनारायणान्वितः ॥३१॥
आययौ श्रीसतीं नेतुं दिलावरीं प्रभस्मिताम् ।
दिलावरी दिव्यदेहा चन्द्रानना विभूषिता ॥३२॥
पत्या च हरिणा साकं निषसाद विमानके ।
उवाच पुत्रिकाः पञ्च सह नेतुं हरिं पतिम् ॥३३॥
हरिस्ताः पुत्रिकाः पञ्च जलेनाऽभ्युक्ष्य सत्वरम् ।
दिव्यदेहा विधायैव विमाने ताः समग्रहीत् ॥३४॥
जयकारस्तदा तत्र महानासीज्जनेष्वथ ।
रिक्ता सा नगरी जाता राजपत्नीविवर्जिता ॥३५॥
अथाऽन्या दासिका दासाः प्रजाः क्षत्रादिजातिजाः ।
तन्निमित्तं दानयज्ञं द्वादशाहादि चक्रिरे ॥३६॥
गृहस्था अपि कर्माख्या भक्त्या यान्त्यक्षरं पदम् ।
कामधर्मपराश्चापि चेत् कृष्णाज्ञापरायणाः ॥३७॥
लभन्ते ते महाराज्यं स्वर्गे धामाऽक्षरं तथा ।
कृष्णाज्ञा विपरीता ये ते तु कष्टं प्रयान्ति वै ॥३८॥

श्रीपद्मावतीप्रश्ने प्रोचतुः—

भगवन्नौ संशयोऽत्र तं निवर्तस्व सर्वथा ।
गृहस्थो दारसंयुक्तो दाराः कामस्य भूमिकाः ॥३९॥
कामो दोषो वासनाख्यः पापात्पापतरो हि सः ।
कामधर्मा गृहस्थाश्च कथं मुक्तिं प्रयान्ति ते ॥४०॥
देवा ये कामधर्माणः पत्नीयुजो रतिप्रियाः ।
कथं ते बद्धदेवा वै परेषां मोक्षकारिणः ॥४१॥
संशयं नौ कृष्णनारायणस्वामिन्निवारय ।
सर्वेषां हितलाभाय विश्वे प्रच्छाव ईप्सते ॥४२॥
इष्टदेवा देवताभिः सहिताः सर्वपूजने ।
पूज्यन्ते चाप्युपास्यन्ते स्वस्वशक्त्यंगनायुताः ॥४३॥
ते कथं मोक्षदा मोक्षे स्थिता वा स्त्रीसमन्विताः ।
मायायुक्ताः कथं मायापारास्ते पारयायिनः ॥४४॥
ईश्वरा ईश्वरीभिश्च युक्ताः कथं नु मोक्षदाः ।
सरागाणां न वै मुक्तिः संशयं नौ निवारय ॥४५॥

श्रीकृष्णनारायण उवाच—

तत्त्वं वदामि सम्याग् वां शृणुतं सहचारिके ।
यज्ज्ञात्वा संशयो नैव जायेतात्र कदाचन ॥४६॥
सन्देहोऽपि निवर्तेत सर्वथा यस्य शीलनात् ।
यदाऽनादिकृष्णनारायणश्रीकृष्णमाधवः ॥४७॥
अहमाज्ञामक्षरब्रह्मणे चक्रे तु सृष्टये ।
साऽऽज्ञा मे श्रीहरेः शक्तिमूर्तिमती स्वरूपिणी ॥४८॥
कृष्णनारायणीरूपा मुक्तानिकेश्वरी सती ।
श्रीमुक्ताश्रीर्दिव्यरूपा स्वामिसन्मुखतः स्थिता ॥४९॥
सा पत्नी सा धर्मपत्नी सा श्रुतिः सा विधायिनी ।
सा राधा श्रीः रमा लक्ष्मीर्ललिता माधवी प्रिया ॥५०॥
कमला सुगुणा पद्मा सावित्री मञ्जुला च सा ।
हंसा संज्ञा शिवा नारायणी ब्राह्मी सरस्वती ॥५१॥
साऽऽज्ञा नारी सतीरूपा कृष्णेच्छामूर्तिरूपिणी ।
सा लीला भूर्विभूतिश्च वामांगं सा महेश्वरी ॥५२॥
ब्रह्मप्रिया माणिकी सा कार्ष्णी कृष्णा हरिप्रिया ।
आगमी नैगमी चिदंशा सद्युक्ताऽऽनन्दसंभृता ॥५३॥
ताः सर्वा मे हरेराज्ञास्वरूपाणि भवन्ति वै ।
आज्ञा विधिस्वरूपश्च विधिर्धर्मश्च सत्क्रिया ॥५४॥
आज्ञायां ये तु वर्तन्ते मुक्ता एव त उत्तमाः ।
आज्ञायां ये न वर्तन्ते बद्धास्ते द्वेषरूपिणः ॥५५॥
आज्ञा मे मूर्तयः सर्वा आविर्भवन्ति मे हृदः ।
हृदये मे निवसन्ति तिरोभवन्ति मे हृदि ॥५६॥
आज्ञया योषिता साकं नित्ययुक्तोऽस्मि मापतिः ।
आज्ञायुक्तो हरिस्तस्माद् दिव्य एव न रागवान् ॥५७॥
संकल्पो दिव्य एवाऽस्ति नारायणस्य मे सदा ।
आज्ञा संकल्पसंभाव्या दिव्या पुमर्थदायिनी ॥५८॥
चत्वारस्ते पुमर्था वै धर्मार्थकाममुक्तयः ।
आज्ञया पाल्यते धर्मश्चाज्ञा धर्मो विधिर्मतः ॥५९॥
गृहस्थधर्मः कामाख्यश्चाज्ञया विधिना कृतः ।
न स रागाय बन्धाय न द्वेषाय प्रकल्प्यते ॥६०॥
आज्ञाधर्मः कामधर्मो देवानां नहि बन्धकृत् ।
आज्ञाधर्मो मानवानां स्वधर्मे श्रेयसां प्रदः ॥६१॥
आज्ञा धर्मश्च नारीणां पातिव्रत्यं परो मतः ।
पातिव्रत्ये स्थिता नारी ब्रह्मलोकं प्रयाति वै ॥६२॥
पत्नीव्रते स्थितो ना च ब्रह्मलोकं समश्नुते ।
अवतारा ईश्वराश्च पितरो मानवाः सुराः ॥६३॥
अन्येऽपि देहिनश्चाज्ञास्थितास्ते मोक्षभागिनः ।
प्रजार्थमाज्ञया कामस्तेषां पुमर्थ एव सः ॥६४॥
आज्ञाधर्मो धर्मदेवश्चार्थे प्रयोजने शुभे ।
पुमर्थेऽन्वयतां याति सत्त्वसम्पत्स्वरूपिणि ॥६५॥

सत्त्वार्थः कामसंकल्पे धर्मिण्यन्वयतां तथा ।
याति तेन हि संकल्पः कामो निष्काम एव ह ॥६६॥
रागद्वेषरहितः स कामो न वासनामयः ।
न भोगपरमः कामो न दोषपरमस्तथा ॥६७॥
आज्ञापालनमात्रार्थं कामो भवति धर्मदः ।
ऋतावुपेयाद् भार्यां वै पतिं गच्छेदृतूत्तरम् ॥६८॥
एवमाज्ञा धर्मरूपा कामक्रिया हि मैथुनम् ।
रतिः सा चाऽऽनन्ददाऽपि रागद्वेषविवर्जिता ॥६९॥
विधिना गोचरा सा तु ततो बन्धनवर्जिता ।
मायाहीना पापहीना धर्माढ्या सा रतिक्रिया ॥७०॥
आज्ञाधर्मेण सहितश्चाऽर्थः कामश्च मुक्तये ।
सहायास्ते प्रजायन्ते प्रयुक्ताश्चाज्ञया तु ये ॥७१॥
भवत्यो या धर्मपत्न्यः सर्वा आज्ञास्वरूपिकाः ।
भवत्यो विषयः सर्वे ह्याज्ञास्वरूपसंभवाः ॥७२॥
भवत्यो या वधूः पत्नी भार्या चाज्ञास्थिताः सदा ।
पत्युश्चाज्ञास्वरूपास्ताः पत्याज्ञामूर्तयो हि ताः ॥७३॥
आज्ञास्था वर्तमाना या नार्यो कामप्रभोगदाः ।
अपि चाज्ञावशास्तस्मान्नैव बन्धाय ताः क्वचित् ॥७४॥
यत्र बन्धो न चास्त्येव तत्र मुक्तिः करे स्थिता ।
संकल्पो धर्मपौत्रः स कामपुत्रः प्रमुक्तये ॥७५॥
मानवानां तु या नार्य आज्ञासर्वस्वसंस्थिताः ।
ता एव मोक्षदायिन्यः पत्युः स्वासां कुटुम्बिनाम् ॥७६॥
अनाज्ञावर्तमानास्तु मायाबन्धनदा हि ताः ।
मोक्षभ्रंशविधायिन्यो विधिशून्या यतो हि ताः ॥७७॥
देवानां देवता देव्यस्तत्तद्देवांगसंभवाः ।
तत्तदाज्ञास्वरूपिण्यो वेदाज्ञोक्ताऽभिदेवताः ॥७८॥
तास्तथा स्त्रीस्वरूपिण्यो वर्तमानाः सुरप्रियाः ।
सुरभोगप्रदाभ्यस्ताः सर्वा बन्धनवर्जिताः ॥७९॥
यत्राऽऽज्ञा तत्र बन्धो न न रागो द्वेष एव न ।
कृष्णाज्ञा निर्गुणो धर्मो नैष्कर्म्यं बन्धकृन्नहि ॥८०॥
परब्रह्म स्त्रीसहितश्चावताराः प्रियान्विताः ।
ईश्वरा ईशिकायुक्ता देवाश्च देवतान्विताः ॥८१॥
मानवा मानवीयुक्ता ये त्वाज्ञार्थपरायणाः ।
आज्ञा नारायणी ह्येषां बहुरूपा प्रवर्तिका ॥८२॥
भक्त्याज्ञा च मखाज्ञा च विवाहाज्ञा सदारिका ।
सृष्ट्याज्ञा धर्मकर्माज्ञा विद्याज्ञा मोक्षदा सदा ॥८३॥
यदाज्ञा सा तु विद्याऽस्ति विद्या वै मोक्षदा मता ।
अनाज्ञा सा त्वविद्याऽस्ति माया सा बन्धता मता ॥८४॥

पतिधर्मपरा नारी पत्याज्ञारूपवर्तिनी ।
मोक्षस्थैव तु सा नारायणीश्रुतिस्वरूपिणी ॥८५॥
मोक्षदा सा सदा चाज्ञारूपिणी पतिधर्मिणी ।
प्रज्ञा पद्मावती त्वेवं चाज्ञास्था नैव कामतः ॥८६॥
कामो न रागजस्तेषां ततो द्वेषो न युज्यते ।
वासना नैव तेषां च दूषणं नैव बन्धनम् ॥८७॥
श्रीकृष्णेच्छानुकूल्येन वर्तनं मोक्षदं भवेत् ।
वर्तनं तादृशं कृष्णप्रसन्नताप्रदं भवेत् ॥८८॥
प्रसन्नता मोक्षदाऽस्ति हरेर्मेऽत्र न संशयः ।
आत्मा प्रसन्नतायुक्तो मोक्षं विन्दति चाऽश्नुते ॥८९॥
न ह्येषा प्रकृतिर्जैवी याऽऽज्ञा श्रीपरमात्मनः ।
न विकारो न वा माया स्वेच्छाशरीरिणः प्रभोः ॥९०॥
पत्नी या सा स्मृतिश्चाऽऽज्ञा प्रज्ञा विद्या कला श्रुतिः ।
धृतिर्निष्ठा क्रिया चेच्छा शक्तिर्शा शक्तिरीश्वरी ॥९१॥
आत्मशक्तिश्च सा भार्या मुक्तिः सा विधिनोदिता ।
नैषा माया विकृतिर्न वासना न न बन्धनम् ॥९२॥
पुरा कृष्णमुखादाज्ञा चाविर्भूता सनातनी ।
वेदवक्त्रा महाभागा जगतां स्थितिदायिनी ॥९३॥
तामाज्ञां संप्रविश्यैव पत्नीवन्तोऽपि मोक्षिणः ।
आज्ञातदाश्रययोश्च भिन्नता नास्ति वस्तुतः ॥९४॥
द्विधाऽसौ रूपमास्थाय स्थित एव हरिः प्रभुः ।
विज्ञायेत्थं न बध्यन्ते निःसंशया भवन्त्यपि ॥९५॥
यदा विद्वत्प्रसंगः स्यादाज्ञया परमात्मनः ।
तदा मुक्तिः क्षणादस्य नान्यथा कर्मकोटिभिः ॥९६॥
वर्णाश्रमक्रमो लोके कृतः श्रीपरमेष्ठिना ।
भूतविवृद्धये तत्र क्रमे तिष्ठन्ति मोक्षिणः ॥९७॥
अक्रमे ये प्रयान्त्येव ते बद्धा नैव मुक्तये ।
आज्ञया च प्रसादेन क्षणान्मुक्तिर्न संशयः ॥९८॥
गर्भस्थो जायमानो वा बालो वा तरुणोऽपि वा ।
वृद्धो वा मुक्त एवाऽस्ति प्रसादाज्ञासमन्वितः ॥९९॥
उद्भिज्जश्चाण्डजश्चापि स्वेदजो वा विधिस्थितः ।
प्रसादान्मे श्रीहरेर्वै मुच्यते नाऽत्र संशयः ॥१००॥
कृष्णाज्ञैषा स्थिता राधा ह्यनया मुक्तिराश्वरी ।
आज्ञा लक्ष्मीस्वरूपा च नारायणी नरेश्वरी ॥१०१॥
गायत्री च सती दुर्गा सावित्री वैष्णवीश्वरी ।
देव्यः सर्वाश्च या वेदेष्वविदेव्यः प्रकीर्तिताः ॥१०२॥
सर्वास्ता मुक्तिरूपा वै मुक्तिदाः समुपासिताः ।
अपि जैवी प्रिया चाज्ञास्थिता स्वामिवृषस्थिता ॥१०३॥

कृष्णप्रसन्नतां प्राप्य मोक्षदा सा प्रजायते ।
प्रज्ञे पद्मावती कामक्षेत्रं नारीमयं सदा ॥१०४॥
आज्ञापालनमग्नं चेन्मोक्षक्षेत्रं तदुच्यते ।
अत्र वां संशयो माऽस्तु वासनाद्वेषरागजः ॥१०५॥
आज्ञां नीत्वा हरिर्लोके सपत्नीकः प्रवर्तते ।
ईश्वरा देवताः सन्तश्चाज्ञापत्नीयुजोऽमलाः ॥१०६॥
नैष्कर्म्यभावमापन्ना मुक्तास्ते मोक्षदाः सदा ।
मोक्षस्था बन्धहीनास्ते लीला त्र्याविधायिनः ॥१०७॥
अथात्मज्ञास्तमोमग्ना ये तु चाज्ञाविलम्बिनः ।
ते स्वकल्पनकैर्मार्गे वै दूषयन्त्यधमा जनाः ॥१०८॥
देवान् शक्तियुतान् पापा अनाज्ञाकर्मचारिणः ।
पशुवृत्ता मम चाज्ञां विहाय मत्तगामिनः ॥१०९॥
विरक्तवादिनश्चापि तथाऽरण्यनिवासिनः ।
अपरिग्रहमग्नाश्च द्वेषशून्यत्ववादिनः ॥११०॥
अपि भवन्ति परमेश्वरे चेश्वरिणीयुते ।
रागद्वेषाख्यवचना युगलद्रोहकारिणः ॥१११॥
स्वकल्पिताज्ञावृत्ताश्च तत्राऽप्यपूर्णवर्तिनः ।
अतो दुष्टाः पाशवन्तो न मुच्यन्ते कदाचन ॥११२॥
इत्येवं माधवि वच्मि प्रज्ञे नारायणः स्वयम् ।
यथार्थं लोकहितकृद् आज्ञापत्नी न बन्धदा ॥११३॥
इष्टदेवा देवताश्चाप्युपासन्ते स्वयम्भुवः ।
आज्ञामूर्तिस्वरूपास्ते मोक्षदा मोक्षिणो हि ते ॥११४॥
नारी यद्यपि मायाऽस्ति या त्वाज्ञाविवर्जिता ।
विधिशून्या यतो माया साज्ञा नारायणी तु सा ॥११५॥
नारायणान्न मद् भेदो नारायण्या अभिन्नयोः ।
नारायणो मोक्षदोऽहं नारायण्यपि मोक्षदा ॥११६॥
आज्ञायां वर्तमानानां माया सदा निवर्तते ।
माया दिव्या भवत्येव मोक्षदा बन्धनाशिनी ॥११७॥
पठनाच्छ्रवणादस्य नास्तिक्यं विनिवर्तते ।
दिव्यता जायते दृष्ट्यां चित्ते जीवे निजात्मनि ॥११८॥
आज्ञाभोगो मोक्षणं च स्वर्गमेतद् द्वयं प्रिये ।
आज्ञाऽङ्कितस्य जायेत माधवि नात्र संशयः ॥११९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां नन्दिभिल्लपत्न्या विलावर्याः सतीत्वं, सत्नीकदेवेश्वरावतारादीनां परमेशाज्ञात्मकस्त्री-स्वरूपसेविनां मोक्षस्थितिर्मोक्षदातृत्व-मित्यादिनिरूपणनामा षडशीति-तमोऽध्यायः ॥ ८६ ॥

श्रीपद्मावतीप्रज्ञे प्रोचतुः—

कृष्णनारायणस्वामिन् यद्याज्ञा मोक्षदा मता ।
को विशेषो भोगिनो वै त्यागिनो वद नौ स्फुटम् ॥ १ ॥
श्रेष्ठो वेदे तथा लोके त्यागाश्रमो गृहाश्रमात् ।
किमत्राऽऽशंकिते त्यागाश्रमे श्रेष्ठ्ये तु कारणम् ॥ २ ॥
गृहाश्रमस्य वै श्रेष्ठ्यं विद्यते वा न सर्वथा ।
त्यागाश्रमस्य हीनत्वं विद्यते वा न वा क्वचित् ॥ ३ ॥
गृहाश्रमे च के दोषास्त्यागाश्रमे च के गुणाः ।
त्यागाश्रमे च के दोषा गृहाश्रमे च के गुणाः ॥ ४ ॥
केषां संसारमग्नत्वं स्वाश्रमस्थायिनामपि ।
आज्ञया वर्तमानानामपि नैम्न्यं न वा क्वचित् ॥ ५ ॥
कथं दारा बन्धनं वै कथं पुमान्न बन्धनम् ।
पुमान् वा बन्धनं दारा न स्यात्तु बन्धनं कथम् ॥ ६ ॥
मोक्षफलं कदा कस्य नरस्य वा क्रिया द्रुतम् ।
गृहस्थस्य त्यागिनो वा मोक्षः कस्य मतो द्रुतम् ॥ ७ ॥
गृहस्थस्य त्यागिनो वा साहस्यं विद्यते न वा ।
विधर्मित्वं सधर्मित्वं कियत् तद्वद नौ प्रभो ॥ ८ ॥
द्वयोर्वा गृहधर्मित्वं विद्यते वा न विद्यते ।
द्वयोर्वा त्यागधर्मित्वं विद्यते वा न विद्यते ॥ ९ ॥
भोग्यं किं कश्च भोक्ताऽस्ति कोऽस्त्यभोक्ता पृथग्जनः ।
किमभोग्यं तथा कृष्ण वद नौ हितकृत्तमम् ॥१०॥

श्रीकृष्णनारायण उवाच—

शृणुतं हितकृत् सर्वेषां प्रिये सहचारिके ।
पृष्टं तत्त्वं समस्तं वै यज्ज्ञात्वा मोक्षमाग् भवेत् ॥११॥
विस्तरेण प्रवक्ष्यामि यथार्थं शृणुतं प्रिये ।
वक्रो बद्रीकण्टकश्चैकोऽपरः सरलोऽस्ति वै ॥१२॥
वक्रो गृहाश्रमो बोध्यस्त्यागस्तु सरलो मतः ।
वक्रे बन्धनमाप्नोति सरले बन्धनं नहि ॥१३॥
वक्रः पाशस्वरूपोऽस्ति सरलः पाशवर्जितः ।
समभूस्थितयोश्चापि वैषम्यं बहुधा मतम् ॥१४॥
सरलोऽगाधतामेति वक्रो नोपैत्यगाधताम् ।
वक्रो वक्ति पुनर्जन्म सरलस्त्वपुनर्भवम् ॥१५॥
वक्रः स्वर्गात् पतनं च सरलः शाश्वतीं गतिम् ।
वक्रो नारीस्वरूपोऽस्ति लज्जयाऽऽज्ञाप्रपालकः ॥१६॥
सरलोऽस्ति नररूपः शासकश्च सहायदः ।
पत्त्रलादौ सरलः प्राक् पश्चाद् विद्यति वक्रकः ॥१७॥

भज्यते वा बहिर्वक्रः सरलः पारगो भवेत् ।
प्रश्ने पद्मावति दाराश्रमस्त्यागाश्रमात् पृथक् ॥१८॥
उक्तधर्मानुरुद्धश्च विशेषबन्धनप्रदः ।
वक्रः प्रविष्टश्चरणे न निर्याति निमज्जति ॥१९॥
सरलश्चाकृष्टियोगान्निर्यात्येव न मज्जति ।
वक्रे भंगा हि बहवः सरले सन्ति नैव ते ॥२०॥
सरलस्त्यागमार्गो वै वक्रो दारादिलम्बनः ।
दारशून्यस्तु तरति दारमग्नो निमज्जति ॥२१॥
दारास्तु किलकः स्थूलो बन्धनाय च शृङ्खला ।
गदा गर्वविनाशाय दारा दरं भयस्य च ॥२२॥
दारा मत्तमनःशास्त्री दाराः स्वातन्त्र्यरोधिका ।
सत्ताया मार्दवकर्त्री दारा रुद्धगुहात्मिका ॥२३॥
दारा वै कण्टकी वल्ली दारा गवाक्षिकाफलम् ।
दारा मिष्टविषतुल्या दारा फुत्कारमूषिका ॥२४॥
दारा दीर्घपथे यातुर्विघ्नकर्त्री चिरायतिः ।
दाराश्चान्तर्गता लग्ना नैव निर्याति वै क्वचित् ॥२५॥
बहिर्दारा नरं शीघ्रं चोन्मत्तयति भामिनी ।
भ्रान्तिदा दिग्भ्रमकर्त्री तमस्येव युनक्ति तम् ॥२६॥
संसारे मलिने क्षिप्त्वा करोति मलिनं नरम् ।
वीक्षणं प्रेमयुक् कृत्वा ह्यापयत्येव मोक्षणम् ॥२७॥
घ्राह्ये धार्ये तथा भोग्ये योगे जाग्रति वा स्वपौ ।
दारा मूर्तिः पुरःप्राप्या कृष्णमूर्तिविरोधिनी ॥२८॥
आवरणस्वरूपा सा दारा नरस्य सर्वथा ।
प्रश्ने पद्मावति त्यक्त्वा वनं यान्ति विरागिणः ॥२९॥
विरागिण्यो वनं यान्ति त्यक्त्वा त्यागिनरं ह्यतः ।
दारा वा दारको वापि रागी बन्धनवान् मतः ॥३०॥
दारा वा दारको वापि रागशून्यो विमुच्यते ।
शृणुतं सहचारिण्यौ सन्त्याज्या गृहमेधिनाम् ॥३१॥
बहवस्ता नैव पाल्यन्ते गृहस्थैः कर्मजालिभिः ।
नाऽर्चयन्ति सुरान् दीनानतिथीन् साधुसाध्विकाः ॥३२॥
न वृद्धान्न महीमानान् नर्षीन् न गा न जन्तुकान् ।
यथाधर्मं नार्चयन्ति पतिं पत्नीं च बालकान् ॥३३॥
न पूज्यांश्चापि मान्यांश्च न गुरून् कुलदेवताः ।
न पितॄन् नैव मातॄंश्च नाऽध्यात्मिकांश्च यज्ञजान् ॥३४॥
नाऽऽगन्तुकांश्चाऽभ्यागतांश्च श्रेष्ठांश्च कनिष्ठिकान् ।
न मां न पार्षदान्मेऽपि न शक्तीर्न वृषं सतीम् ॥३५॥
नाऽर्चयन्त्याश्रितांश्चापि विप्रान् वा भिक्षुकानपि ।
न पशून् पक्षिणश्चापि नार्चयन्ति यथार्थतः ॥३६॥
स्वार्थमात्रपरा ये च परोपकृतिवर्जिताः ।
गृहस्थाश्चाशया हीना हीनास्ते सर्वथा सदा ॥३७॥
यद्गेहे न सतां पादा यद्गेहे न सुरालयः ।
यद्गृहे नापि नैवेद्यं हरये ते श्मशानिनः ॥३८॥
यत्र ब्रह्मार्पणं नास्ति यत्र साध्वर्पणं न च ।
यत्र भक्तिर्हरेर्नास्ति ते सर्वे वै श्मशानिनः ॥३९॥
यत्र दारमयं राज्यं भोगा दारप्रसंगजाः ।
दारध्यानं दारपूजा ते वै निरयवासिनः ॥४०॥
एवमाशाहीनदारप्रसक्तो निरयेऽस्ति सः ।
दाराश्रमस्ततो हीनस्तस्मात् त्यागः सदोत्तमः ॥४१॥
दाराश्रमे ऋणं दैवं पैत्र्यमार्षं प्रवर्तते ।
पूजापुत्राऽध्ययनैश्च निवर्तन्ते हि नान्यथा ॥४२॥
गृहाश्रमोऽनपत्यानामपत्यार्थे प्रशस्यते ।
तस्मिन् कृतेऽनपत्यत्वं निरयाय प्रकल्प्यते ॥४३॥
जीविकाभावनालक्ष्यं दारगृहं तु देहिनाम् ।
समस्तानां तु वर्णानां गृहाश्रमो हि भोज्यदः ॥४४॥
भोज्यदाने चाऽसमर्थो गृहाश्रमो वृथाश्रमः ।
कण्डनी पेषणी चुल्ली जलकुंभी च मार्जनी ॥४५॥
पञ्चसूनाः सदाराणां स्वर्गरोधाः प्रपातिनः ।
कामो लोभो रसास्वादः पैशुन्यं स्वार्थगौरवम् ॥४६॥
मानं कलिश्चावमानं दोषा वसन्ति दारिषु ।
अहंकारः प्रमोहश्चाऽऽसक्तिश्च वासना रतिः ॥४७॥
मृषाऽऽडम्बर उद्वेगो दोषा वसन्ति दारिषु ।
अनौदार्यं संग्रहश्च ग्रहणं चाऽनिवर्तनम् ॥४८॥
प्रवृत्तिश्चाऽप्यसन्तोषो दोषा वसन्ति दारिषु ।
मालिन्यं सूतकं हानिर्भयं मुहुः प्रवासनम् ॥४९॥
दास्यं पराश्रयत्वं च दोषा वसन्ति दारिषु ।
मृषा प्रशंसनं निन्दा स्वायत्तीकरणश्रमाः ॥५०॥
आशापाशा नवनवा दोषा वसन्ति दारिषु ।
ग्रहपितृप्रेतपीडा कुमेलोत्थप्रपीडनम् ॥५१॥
रोगक्षुधातृषाजन्यबलक्षयादिदुःखिता ।
भोगयोग्योपकरणानामलाभो दरिद्रता ॥५२॥
तिरस्कारो नृपादीनां करादानं प्रसह्य वै ।
प्रसंगोत्सवमोदादावसामर्थ्ये च भिक्षुता ॥५३॥
अतिशयो निकटानां संशयो दूरवासिनाम् ।
वियोगो विप्रकृष्टानां दोषा वसन्ति दारिषु ॥५४॥
अविश्वासः स्वजनानां परेषां धनहारिता ।
समूहाऽऽवासवशता दोषा वसन्ति दारिषु ॥५५॥

ततो गृहाश्रमो भार्ये पदे पदेऽघदुःखकृत् ।
स्वर्गसंशायकश्चापि मोक्षसंशायकोऽपि च ॥५६॥
दाराश्रमे ये दोषास्ते त्यागिनः प्रायशो गुणाः ।
त्यागाश्रमस्ततः श्रेष्ठः सवर्णवर्जितः शुभः ॥५७॥
दाराश्रमे प्रजायन्ते ऋणिनः पुत्रपुत्रिकाः ।
ऋणं दत्वा चिरमार्गे प्रयान्ति नाऽभियन्ति ते ॥५८॥
दाराश्रमेऽर्पणबुद्धिः संकोचं भजते सदा ।
आत्मविवेकविज्ञानं स्थितिं लभते वा न वा ॥५९॥
आत्मनि श्रीकृष्णनारायणोपास्तिर्भवेन्न वा ।
मोक्षो वा वृष एवापि सन्दिग्धा वै गृहाश्रमे ॥६०॥
ततः पद्मावति प्रज्ञे नारायणो नरान्वितः ।
त्यागाश्रमं प्रभजामि सर्वबन्धनवर्जितम् ॥६१॥
मायारसो गृहस्थानां त्यागिनां भगवद्रसः ।
आद्यानां सान्त एवाऽस्ति त्यागिनां शाश्वतो रसः ॥६२॥
निश्चिन्तता त्यागिनां वै यात्रामात्रजुषां भुवि ।
सातिशयादिहीनत्वं सर्वभयादिशून्यता ॥६३॥
जीवने मरणे साम्या बुद्धिस्तु त्यागिनां यतः ।
समलोष्टाश्मकनकस्नेहानां चात्मवर्तिनाम् ॥६४॥
नित्यानन्दे चित्सदात्मन्यवतिष्ठन्ति ये सदा ।
ब्रह्मानन्दपरास्तुसास्त्यागिनश्चात्ममूर्तयः ॥६५॥
अत्र देहादिमन्तोऽपि देहसेवाविवर्जिताः ।
जीवन्तोऽपि हरौ मग्ना जीवन्मुक्ता विदेहिनः ॥६६॥
दोषशून्या गुरवस्ते परमोक्षप्रदायिनः ।
लीलाप्रवृत्तिमन्तस्ते मायात्यागातिशोभनाः ॥६७॥
विशेषोऽयं त्यागिनां वै गृहस्थेभ्यो मम प्रिये ।
गृहस्थानां तु या आज्ञास्ता यदि स्वल्पखण्डिताः ॥६८॥
गृहाश्रमस्ततो न्यूनो यतः शक्तो न पालने ।
त्यागाश्रमस्तु ह्यर्थो मोक्षार्थः परमार्थकः ॥६९॥
गृहाश्रमस्तु भोगार्थश्चाज्ञाभंगपरायणः ।
कामभोगे दुष्टपाने दुष्टाशने तु जन्तवः ॥७०॥
नैसर्गात् सम्प्रवर्तन्ते विमर्यादा विशेषतः ।
मानवादींस्तादृशान् वै निवर्तयन्ति चाज्ञया ॥७१॥
वेदाद्या विधिरूपा वै ह्याज्ञाकरा निवर्तकाः ।
आज्ञामुखा निषेधन्ति विधिवत् तन्निषेधकाः ॥७२॥
मा कुर्वन्तु विषयाणां भोगानिति मुहुर्मुहुः ।
उपदिशन्ति तान् लोका अवमत्य पतन्ति च ॥७३॥
दारगृहस्वभावोऽयं यत्राज्ञापि प्रहीयते ।
तस्माद् गृहाश्रमाच्छ्रेष्ठस्त्यागश्चाज्ञापरायणः ॥७४॥

शृणुतं सहचारिण्यौ श्रैष्ठ्यं गृहाश्रमस्य तु ।
दम्पती वा नरो नारी त्वेकवारम् ऋतूत्तरम् ॥७५॥
गर्भार्थे भोगमादत्ते बालजन्मोत्तरं पुनः ।
ऋतुधर्मे समापन्ने गर्भार्थे गमनं पुनः ॥७६॥
एकवारं गर्भदानं युगान्तरे समान्तरे ।
एवं तौ वर्तमानौ वै साध्वीसाधू प्रकीर्तितौ ॥७७॥
पुत्रपुत्रीयुतौ दाराश्रमौ श्रेष्ठौ सदा मतौ ।
ब्रह्मचर्यव्रतस्थौ च ब्रह्मशीलनतत्परौ ॥७८॥
अध्यात्मचिन्तकौ हिंसास्तेयादिदोषवर्जितौ ।
यथाप्तिलाभसन्तुष्टौ यात्रामात्रपरायणौ ॥७९॥
स्वल्पसर्वोपकरणावेतौ श्रेष्ठौ गृहाश्रमौ ।
पत्रैः पुष्पैः फलैरन्नैब्रह्मयज्ञपरायणौ ॥८०॥
देवयज्ञपितृयज्ञपरौ चातिथिपूजकौ ।
साधुसाध्वीयतियोगिसेवासत्संगशीलिनौ ॥८१॥
शौचव्रततपस्तुष्टिपरौ क्लेशविवर्जितौ ।
ब्रह्माऽर्पितक्रियाकाण्डौ कर्तव्यवृत्तियोजितौ ॥८२॥
आज्ञामात्रानुसन्धानौ भोगवृत्तिविवर्जितौ ।
जपकीर्तनमग्नौ च नवधाभक्तिशोभितौ ॥८३॥
आत्मज्ञानपरावात्मसंशीलनपरायणौ ।
ध्यानमग्नौ कृष्णनारायणस्मरणजीवनौ ॥८४॥
सर्वाऽचिच्चित्कृष्णबोधौ कृष्णदृष्टिप्रकाशनौ ।
उपार्जनपरौ योग्ययत्नकौ सक्तिवर्जितौ ॥८५॥
रागशून्यौ द्वेषशून्यौ व्यवस्थागुणवर्जितौ ।
एतादृशौ नरो नारी श्रेष्ठौ दारगृहाश्रमौ ॥८६॥
यद्गृहे बालका बालाः सत्यः साध्व्यश्च साधवः ।
भिक्षुका यतयः सिद्धा भुञ्जते दीनकिंकराः ॥८७॥
अनाथाश्च महीमाना आगन्तुकाश्च वैष्णवाः ।
अभ्यागताश्चातिथयो यात्रालवो वनस्थिताः ॥८८॥
राजानो राजवर्गाश्च प्रजावर्गा नराः स्त्रियः ।
सूतमागधचाराश्च दासवर्गाश्चतुर्थकाः ॥८९॥
पशवः पक्षिणश्चापि यादांसि जन्तवस्तथा ।
भुञ्जते यत्प्रदत्तं वै सर्वाधारो गृहाश्रमः ॥९०॥
दाराश्रमे महादानं श्रेष्ठं सुरार्पणादिकम् ।
भूवस्त्रस्वर्णपात्रान्नकन्यागोगृहदानकम् ॥९१॥
सर्ववस्तुप्रदानं च श्रेष्ठं दाराश्रमे सदा ।
साधूनां देवतानां च ऋषीणां पितृयोगिनाम् ॥९२॥
पूजनं भोजनं यत्र श्रेष्ठो दाराश्रमस्ततः ।
वंशविस्तारसन्तानो दारगृहैः प्रवर्तते ॥९३॥

वंशे सन्तो मोक्षगाश्च साध्व्यो भवन्ति भाविनि ।
तद्योगेन गृहस्थानामुद्धारः श्रेष्ठता ततः ॥९४॥
विनावंशं नवै सृष्टिस्थितिः सा स्त्रीसमुद्भवा ।
तस्मान्नारी वंशदा वै गृहिणः श्रेष्ठता ततः ॥९५॥
नारी चाज्ञामयी यस्य तस्य मोक्षः करे स्थितः ।
श्रेष्ठो दाराश्रमो नित्यं यद्याज्ञारूपिणी प्रिया ॥९६॥
कृष्णनारायणो यस्य दाराऽर्पणं धनार्पणम् ।
देहगृहाद्यर्पणं च सर्वार्पणं नरायणे ॥९७॥
सम्पदामर्पणं सर्वसाधनार्पणमित्यपि ।
क्रियार्पणं तथेन्द्रियकृत्यर्पणं हरौ मयि ॥९८॥
मनश्चित्तमतीनां चार्पणं निजात्मनां मयि ।
प्रत्यर्पणं हरौ यस्या आज्ञार्पणं तथा मयि ॥९९॥
कामरत्यर्पणं कृष्णे पुत्रपुत्र्यर्पणं हरौ ।
यस्याः सर्वार्पणं श्रीशे श्रेष्ठौ दाराश्रमौ हि तौ ॥१००॥
एवं दाराश्रमः श्रेष्ठः सर्वेच्छापूरकोऽस्त्यहम् ।
पूरयित्वा समस्तेच्छानिवर्तकश्च शान्तिदः ॥१०१॥
कृष्णोनारायणःस्वामी भवाम्यैश्वर्यदस्तथा ।
प्रान्ते पद्मावति चाहं तत्र निर्गुणताप्रदः ॥१०२॥
भुक्तिर्मुक्तिप्रदः श्रेष्ठो वैष्णवः स गृहाश्रमः ।
कान्ते द्वे ! तत्पथासक्ता यान्ति धामाऽक्षरं परम् ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां गृहाश्रमस्य निकृष्टतोत्कृष्टते त्यागाश्रमस्योत्कृष्टता चेत्यादिनिरूपणनामा सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

श्रीकृष्णनारायण उवाच—

गार्हस्थ्येऽपि प्रश्निके पद्मावति प्रमोक्षणं ह्यपि ।
यौवनार्धं ब्रह्मचर्यं पालयेद् यः समुच्यते ॥ १ ॥
तदर्धं वा तदर्धार्धं ब्रह्मचर्यं प्रपालयेत् ।
लक्षार्धं वा सहस्रार्धं शतं शतार्धमेव वा ॥ २ ॥
पञ्चविंशतिवर्षाणि पालयेद् द्वादशाब्दिकम् ।
वा षडब्दानि वर्षं वा ब्रह्मचर्यं प्रपालयेत् ॥ ३ ॥
ऋतुमात्रं च वा मासं ब्रह्मचर्यं प्रपालयेत् ।
व्रतोत्तमं हि तत्प्रोक्तं यथाबलं प्रमोक्षदम् ॥ ४ ॥
एवपत्नीव्रतं यद्वा स्वर्गदं मोक्षदं ततः ।
आर्तवं चार्तवं दानं ब्रह्मचर्यं हि मध्यमम् ॥ ५ ॥
तेनाऽपि बलतुल्यं वै प्राप्यते मोक्षणं खलु ।
धर्माऽधर्माऽनभिज्ञो य आज्ञाशीलपरायणः ॥ ६ ॥
स्नेहसेवातिमग्नश्च गृही मोक्षमवाप्नुयात् ।
नरो वा यदि वा नारी गृहधर्मपरायणौ ॥ ७ ॥
देवसाध्वीसाधुसेवापरौ मोक्षं प्रगच्छतः ।
यदा कृष्णो हरिः पृथ्व्यां रामो नारायणः प्रभुः ॥ ८ ॥
प्राविर्भावपरः स्याद्वै तदा तद्योगतो द्रुतम् ।
दयालोस्तस्य कृपया तच्छक्तेः कृपयापि च ॥ ९ ॥
पार्षदानां च भक्तानां कृपया मुच्यते जनः ।
कृष्णो वा कृष्णभूतानि विचरन्ति भुवस्तले ॥१०॥
छद्मरूपा भिक्षुका वै जनकल्याणहेतवे ।
भिक्षार्थं चाऽलक्ष्यचिह्नाः समायान्ति गृहिगृहम् ॥११॥
तदा भिक्षादानसेवायोगं लभेद् गृहाश्रमी ।
अज्ञातो ज्ञानतो वापि मोक्षमवाप्नुयात् ॥१२॥
तस्माद्वै गृहिभिर्नित्यं दातव्यं भिक्षुकाय तु ।
मोक्षदानां क्वचिद् योगान्मोक्षः स्याद् गृहधर्मिणाम् ॥१३॥
सत्कारस्य निधानं वै दाराश्रमो विशिष्यते ।
बहुपापादियुक्तोऽपि परोपकारशेवधिः ॥१४॥
गृहाश्रमो विजयते नित्यशः साधुसेवनात् ।
यद्गृहे साधवो यान्ति स्वल्पभोजनवाञ्छया ॥१५॥
साधुपादरजोभूमिर्गार्हस्थ्यं तद् विशिष्यते ।
साधुपादामृतं यत्र साधुशिष्टाशनं तथा ॥१६॥
साधुसम्वाहनं यत्र मोक्षस्थानं तु तद्गृहम् ।
यत्र देवालयो देवपूजा सतां निवासनम् ॥१७॥
ब्रह्मकथा वैष्णवाश्च तदेव मोक्षमन्दिरम् ।
यत्र लक्ष्मीश्च तुलसी गंगा यमी सरस्वती ॥१८॥
स्थावरं जंगमं तीर्थं तदेव मोक्षमन्दिरम् ।
यत्र विष्णुः शिवो ब्रह्मा नारायणो नरायणः ॥१९॥
यत्राऽवताराः कृष्णस्य यत्र योगिजनालयः ।
चैत्यद्रुमा देवमूर्तिस्तदेव मोक्षमन्दिरम् ॥२०॥
इत्येवं सर्वथा श्रेष्ठ्यं दाराश्रमस्य भूतले ।
अन्यत्रापि तथा श्रेष्ठ्यं सन्त्युक्तानि तु यद्गृहे ॥२१॥
दारागृहाश्रमो यस्य परोपकारहेतवे ।
तदा श्रेष्ठ्यं सर्वतो वै दाराश्रमस्य माधवि ॥२२॥
अपि प्रश्ने प्रवक्ष्यामि त्यागाश्रमस्य वै क्वचित् ।
हीनत्वम् ऋद्धिशून्यस्य व्यक्तिदोषेण वा क्वचित् ॥२३॥
उपकाराऽसमर्थो वै ऋद्धिशून्याश्रमः स हि ।
त्यागिनो न क्षितिश्चास्ति न गृहं वाटिका सुता ॥२४॥
भूदानं वाटिकादानं कन्यादानं गृहार्पणम् ।
स्वर्णदानं च गोदानं धनदानं न जायते ॥२५॥

नाऽन्येषां जीविकादानं जायन्ते नोत्सवास्तथा ।
नहि सम्पद्रहितानां गृहेऽश्नन्ति सदा द्विजाः ॥२६॥
न चाऽऽयान्ति मखे देवा महीमाना न यन्त्यपि ।
न बाला बालिकास्तस्य प्रमोदन्ते प्रसंगिनः ॥२७॥
शून्यतुल्यं त्यागिनो वै स्थलमासनमम्बरम् ।
मनोमोदकरं त्यागे सर्वं शुष्कायते यतः ॥२८॥
न चुल्ली काथते क्वापि न वह्निस्तृप्तिमेत्यपि ।
पेषणी गायति प्राक्ने ब्रह्मनादं न तु क्वचित् ॥२९॥
नापि कुसूलधान्यानि न पिष्टचिन्तनं तथा ।
न नवोत्पन्नलाभश्च यत्राऽऽतिथ्यं न वर्तते ॥३०॥
न शय्या नाऽऽलयं सौधं न गौर्न क्षेत्रमित्यपि ।
नवसस्यकणाशिश्च यत्र स्वप्नेऽपि नास्ति हि ॥३१॥
न नारीणां गीतयश्च न धनानां प्रदानकम् ।
न प्रातर्बालभाषादिश्रवणं यत्र विद्यते ॥३२॥
न नारीजनविश्वासो नारीशून्ये प्रवर्तते ।
न सौभाग्यं न संस्कारा धर्मयशा भवन्ति न ॥३३॥
शुष्कायते सदात्यागाश्रमो हीनोत्सवो यतः ।
पर्युषितं न पशवो भक्षयन्ति यदाश्रमे ॥३४॥
नापि पिपीलिकाद्याश्च पिष्टमदन्ति यत्स्थले ।
न मिष्टं विद्यते यत्र मक्षिका न वसन्ति च ॥३५॥
न मूषका वर्तयन्ति पारावाता वसन्ति न ।
न वृद्धा जलपानादि लभन्ते गुडमिश्रितम् ॥३६॥
न स्त्रीणां यत्र सम्मानं देवीनां गणना न च ।
दानं यत्र न चोत्कृष्टं रूक्षस्त्यागाश्रमस्ततः ॥३७॥
कौपीनवल्कलभस्मज्ञानधनं यदाश्रमे ।
न क्षुधानाशकं तद्वै रूक्षस्त्यागाश्रमस्ततः ॥३८॥
नम्रास्तु संहता यत्र मर्यादाऽधोमुखायते ।
आत्मामृताभिमग्नाश्च बाह्यामृतविवर्धिताः ॥३९॥
रूक्षदेहाः शुष्करागा विद्यन्ते यत्र तापसाः ।
दुःखसहाश्च जटिला मालाकेशविभूषणाः ॥४०॥
वृक्षगृहनिवासाश्च फलिद्याखिप्रभोजनाः ।
पत्रपात्राः करतुम्बा मायानाशपरायणाः ॥४१॥
विचित्रतिलकशृंगा मृत्तिकाभस्मचन्दनाः ।
धूनीवन्हिसहायाश्च मत्तकनकसेविनः ॥४२॥
प्रतीक्षमाणा वसतिं चायान्तीं देयसंभृताम् ।
श्वानः काकाः सदोच्छिष्टं प्राप्नुवन्ति न यत्र च ॥४३॥
न भूतयशो भवति सतृष्णः शान्तिमेति न ।
न लाभं लभते लोके रूक्षस्त्यागाश्रमो हि सः ॥४४॥

प्रश्ने पद्मावति त्यागो मुक्तानामभयंकरः ।
यथा तथा देहभाजां त्यागोऽपि चाभयंकरः ॥४५॥
निर्भयत्वे वितृष्णत्वे कलिक्लेशविवर्जिते ।
दानशून्येऽपि रूक्षेऽपि त्यागाश्रमे विशेषता ॥४६॥
हर्याश्रयो हरौ स्थानं हरेर्ध्यानं च धारणा ।
हर्यर्थं सर्वकर्माणि श्रैष्ठ्यं त्यागाश्रमे ततः ॥४७॥
न चिन्ता गृहदेहादेर्न पत्न्या न सुतादिषु ।
नासक्तिर्धनवाट्यादौ सूतकं यत्र नास्ति च ॥४८॥
शोकग्लानं न वै यत्र यत्नोपार्जनमस्ति न ।
न श्रमो न व्यवहारो न मानं चावमाननम् ॥४९॥
ऋणं न नापि दण्डोऽस्ति न रक्षणस्य चिन्तनम् ।
न मोहो विभ्रमो नैव न पात्रगृहमार्जनम् ॥५०॥
न दैवं भौतिकं वापि यस्योद्वेजनमस्ति च ।
नात्मीयं परकीयं वा पारतन्त्र्यं न हिंसनम् ॥५१॥
नास्ति चौरभयं नास्ति याम्यभीर्मृत्युभीर्न च ।
नहि विप्लवचिन्ता च न पक्षदायचिन्तनम् ॥५२॥
न देहरोगचिन्ताऽपि निरपेक्षस्य योगिनः ।
न रागो जीवने यस्य न त्वरा मरणे तथा ॥५३॥
न पुष्टौ न रताविच्छा न विकाराश्च मानसाः ।
यतः शान्तिश्च निर्विघ्ना नारायणाभियोगिनी ॥५४॥
यत्र कृष्णार्थचिन्ता च यत्र नारायणाश्रयः ।
यत्र सतां संगमाश्च सत्संगो यत्र योगिनाम् ॥५५॥
ब्रह्मध्यानरतानां च सेवा यत्र च दर्शनम् ।
श्रवणं यन्मुखेभ्यश्च नाम्नां हरेर्मुहुर्मुहुः ॥५६॥
त्यागं वीक्ष्य क्षणं वृत्तिः शान्तिमेति हि मायिनाम् ।
परावृत्त्य मनो यत्र विशत्येव हृदीश्वरे ॥५७॥
भासतेऽणुमहानन्दकणिका तु सुधोत्तमा ।
ज्ञानध्यानामृतपानैस्तृप्तिर्यत्र तु योगिनाम् ॥५८॥
साध्व्यश्च साधवो यत्र कुटुम्बिनो न चेतरे ।
न यत्र वासनाख्यश्च संसारो विद्यते मनाक् ॥५९॥
गतिर्मोक्षस्य यत्रास्ति मुक्तिर्यत्र प्रलुण्ठति ।
तीर्थानि यत्र चागत्य पूयन्ते रजसा सताम् ॥६०॥
माया दिव्याऽपि सत्संगाज्जायते वै यदाश्रमे ।
मायामयं समस्तं वै सतां योगेन दीव्यति ॥६१॥
नैर्गुण्यं यत् समासाद्य ब्राह्मं सम्परिवर्तते ।
तस्माच्छ्रैष्ठ्यं तु रूक्षेऽपि त्यागाश्रमेऽर्थमोक्षिणाम् ॥६२॥
चतुर्थाऽर्थपरा यत्र दिव्या देवा हि साधवः ।
सर्वपापविलोप्तारः पावनाः परमेश्वराः ॥६३॥

संसारतापदग्धानां ब्रह्मशान्तिप्रवर्षकाः ।
उद्धारका भयात्कष्टात् सर्वेष्टपूरकास्तथा ॥६४॥
मिलन्ति साधवो यत्र त्यागाश्रमे हरिप्रियाः ।
ततस्त्यागाश्रमः श्रेष्ठः श्रमितानां निवृत्तये ॥६५॥
यथा सूर्यप्रतप्तानां छाया विश्रान्तिहेतुका ।
तथा संसारतप्तानां सन्तः शान्तिप्रदायकाः ॥६६॥
हरिं विना सतां सेवां विना च भक्तिमन्तरा ।
आत्मभावं विना शान्तिं ध्यानं विनाऽन्यदुज्झितम् ॥६७॥
रक्षितं रक्षणीयं वै त्यागाश्रमे पराश्रमे ।
ततस्त्यागाश्रमः श्रेष्ठो मोक्षसन्निधिगोचरः ॥६८॥
हरिः साक्षात् सुराः साक्षात् साक्षान्मुक्ताश्च पार्षदाः ।
साधुभिः सह तिष्ठन्ति तस्मात् त्यागः सदोत्तमः ॥६९॥
आक्षरः परमानन्दो मृत्स्वा मुक्तकोटिकाः ।
कुटुम्बं चाच्युतं यत्र तस्मात् त्यागः सदोत्तमः ॥७०॥
नर्तनं भगवदर्थे व्यापाराः कृष्णतुष्टये ।
आरम्भा यत्र मुक्त्यर्थास्तस्मात् त्यागः सदोत्तमः ॥७१॥
मत्ता भागवता यत्र प्रसादश्च सतां हरेः ।
कृषिर्मायामलहन्त्री तस्मात् त्यागः सदोत्तमः ॥७२॥
जीवनं चात्मसिद्ध्यर्थे प्रवृत्तिः कृष्णतुष्टये ।
ब्रह्मगृहप्रयाणं च तस्मात् त्यागः सदोत्तमः ॥७३॥
येन त्यक्तं समस्तं वै समस्तैरुज्झितः स वै ।
त्यागः स्वात्मार्पणं कृष्णे सर्वार्पणं हि मुक्तये ॥७४॥
मुक्तिर्वै शाश्वतानन्दमग्नताऽक्षरधामनि ।
अत्राऽप्यनुभवस्तादृङ् मुक्तः स त्यागवान् गुरुः ॥७५॥
ये येऽर्था इष्टतापन्नास्ते ते त्यागे ह्यकल्मषाः ।
सिद्ध्यन्ति सर्वथा साध्वि प्रश्ने माधवि सिद्धवत् ॥७६॥
ततस्त्यागाश्रमः श्रेष्ठः पूज्यो मान्यश्च मोक्षदः ।
फलं श्रेष्ठं न वै पुष्पं न पत्रं नापि मञ्जरी ॥७७॥
फले पक्वरसः श्रेष्ठो रसे मिष्टाम्लको रसः ।
श्रेष्ठो नारायणो मिष्टश्चाम्लस्तत्रातिरक्तता ॥७८॥
स्नेहभक्तिधरः कृष्णः प्राप्यस्त्यागेन चोत्तमः ।
केवलस्तु परस्त्यागो न श्रेष्ठो भजनं विना ॥७९॥
उपासनां विना त्यागः पाषाणत्वाय कल्पते ।
सेवां ध्यानं विना त्यागश्चागस्करो न संशयः ॥८०॥
ज्ञानं विना तथा त्यागश्चागस्करोऽस्ति सर्वथा ।
गुरोराज्ञां विना त्यागो वैराग्यमन्तरा तथा ॥८१॥
आगस्करः स विज्ञेयः प्राप्तिशून्यो फले मृषा ।
संसारत्यजनं सार्थं यद्यात्मा हरिमाप्नुयात् ॥८२॥
न प्राप्तिस्तु हरेर्येन प्राप्तानां यत्र नाशनम् ।
पुमर्था निष्फला यत्र स त्यागश्चाऽऽग एव ह ॥८३॥
ज्ञानं चोपासना भक्तिर्दिव्यता श्रीहरिस्मृतिः ।
मोक्षस्थितिर्गुणास्त्यागे साधुता मुक्तताऽपि च ॥८४॥
केवलस्तु महात्यागो दोष एवास्ति देहिनः ।
प्रस्तरोऽपि महात्यागे तिष्ठत्येव स तादृशः ॥८५॥
त्यागे मौर्ख्यं च गर्वश्च मानं च जडता तथा ।
फलेच्छा त्यक्तसाजात्यगोचरा दूषणानि वै ॥८६॥
उपवासी पारणायां द्विगुणं ग्रसते यदि ।
पूर्वदिनेऽपि द्विगुणं तदोपवासिता मृषा ॥८७॥
त्यागी पश्चाच्छतगुणं गृह्णाति स्वर्जनं तपः ।
सत्यमैश्वरलोकं च तदा त्यागफलं नु किम् ॥८८॥
अनित्यं तु प्रागभवत् पश्चादनित्यमित्यपि ।
द्वयोः पर्यवसानं तु नाशे त्यागो विवर्तते ॥८९॥
दोषस्त्यागे महान् सोऽस्ति यद्दुत्तमाभिरागिता ।
प्राप्तं त्यक्तं चाध्रुवं तत् प्राप्तव्यं स्वं तथाऽध्रुवम् ॥९०॥
ध्रुवं नाऽऽलम्बितं ब्रह्म त्यागे त्रेधापि दूषणम् ।
त्यजनाद् वाऽप्यभियोगाद् ब्रह्म सम्पद्यते यथा ॥९१॥
सेवयोपासनया वाऽऽज्ञया ज्ञानेन वा तथा ।
त्यागेन विधिना वापि स त्यागो भोग एव वा ॥९२॥
ब्रह्मप्रदो यतः श्रेष्ठो गुण एव स उत्तमः ।
कृष्णेच्छाधीनवाञ्छात्मत्याग उत्तम एव सः ॥९३॥
मोक्षस्थित्यनुभावात्मत्याग उत्तम एव सः ।
तद्विना दूषणं त्यागो भार एव स केवलः ॥९४॥
शृणुतं माधवि साध्वि प्रश्ने त्यागे तु भूषणम् ।
औदासीन्यं बाधितानुवृत्तिस्तु दूषणं तथा ॥९५॥
कर्मत्यागो भूषणं वै कृष्णत्यागस्तु दूषणम् ।
नारीत्यागो भूषणं सत्क्रियात्यागस्तु दूषणम् ॥९६॥
दोषत्यागो भूषणं वै गुणत्यागस्तु दूषणम् ।
गृहिणां दूषणं त्यागो भूषणं भोगसम्पदः ॥९७॥
त्यागिनां दूषणं भोगो भूषणं भोगवर्जनम् ।
मम भक्तिः सतां सेवा देवा देवाऽर्हाऽतिथिपूजनम् ॥९८॥
सुधार्मिकं तु दाम्पत्यं भूषणानि तु दारिणाम् ।
आत्मनिष्ठ मयि निष्ठा तदनाऽसक्तवृत्तिता ॥९९॥
नित्यभक्तिश्च सत्संगस्त्यागिनां भूषणानि वै ।
क्षमा भूषणं साधूनां सत्कारो गृहिणां तु तत् ॥१००॥
साध्वीनां भूषणं शीलं ममाऽऽज्ञा भक्तभूषणम् ।
भूषणं स्थानिनां दानं ध्यानं भूषा तु योगिनाम् ॥१०१॥

त्यागवतां त्वनासक्तिर्भूषणं गृहिणां सती ।
अश्रद्धा त्यागिनां दोषो देहाभिमान इत्यपि ॥१०२॥
आलस्यं धर्महीनत्वं नास्तिक्यं दूषणानि वै ।
विषयाणां सेवनेच्छा दूषणं परमं तु तत् ॥१०३॥
ध्यानाश्रमे धने वाञ्छा दूषणं त्यागिनां सदा ।
कुटुम्बिषु स्नेहवृत्तिस्त्यागिनां दूषणं परम् ॥१०४॥
दारिद्र्यं तु गृहस्थानां दोषकृद् दूषणं महत् ।
तृष्णा दोषो हि सर्वेषां राज्ञां तु भूषणं मता ॥१०५॥
ज्ञानिनां ज्ञानतृष्णाऽपि भूषणं त्यागवत् सदा ।
भक्तानां भक्तितृष्णाऽपि मम तृष्णाऽतिभूषणम् ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां गृहस्थस्य मोक्षोपायाः, त्यागाश्रमे रूक्षता निश्चिन्तता सुखिता च, यथार्थत्यागो यथार्थो दोषाश्च, गुणता दोषता चेत्यादिनिरूपणनामाऽष्टाऽशीतितमोऽध्यायः ॥ ८८ ॥

श्रीकृष्णनारायण उवाच—

शृणु त्वं माधवि साध्वि प्रज्ञे संसारमग्नताम् ।
ब्रह्मचारी प्रथमो वै स्वाभ्युदयं समिच्छति ॥ १ ॥
जन्मतः सर्वबाला वै बालका ब्रह्मचारिणः ।
आगार्हस्थ्यं तर्कयन्ति श्रेष्ठ्यमुदयमुन्नतिम् ॥ २ ॥
अध्ययनं कलाशिक्षां व्यापारं जीविकाक्रियाम् ।
भृत्यत्वं दासतां यद्वा कृषिं रक्षां च कारुताम् ॥ ३ ॥
तत्संकल्पाः प्रजायन्ते महत्त्वाऽऽकांक्षयाऽन्विताः ।
आकांक्षास्ताः समस्ता वै बन्धनं ब्रह्मचारिणाम् ॥ ४ ॥
गृहस्थानां प्रियायां वा स्वामिनि स्वसुतादिषु ।
धने गृहे च सम्पत्सु भवत्यासक्तिरन्वहम् ॥ ५ ॥
सा वासनास्वरूपा स्याद् बन्धनं वासनामयः ।
संसारस्तु गृहस्थानां कुणपे सुखमानिनाम् ॥ ६ ॥
वियोगं न सहन्ते वै मिथः सक्ता रुदन्ति च ।
वहन्ति कष्टं यत्पश्चान्मृतिं यन्त्यनु केचन ॥ ७ ॥
एवं रागाभिसम्बद्धा मग्नाः संसारसागरे ।
गृहस्थाः संप्रजायन्ते पुनरावृत्तिचक्रिणः ॥ ८ ॥
येषां लोकैषणा पुत्रैषणा वित्तैषणाऽस्ति च ।
ते वै संसारमग्ना हि नोत्तरन्ति कदाचन ॥ ९ ॥
अपि ये यतयो येषां नेष्टं वै कृष्णमन्तरा ।
तेषा चेद्देहपूजेच्छा रागासक्ती तु बन्धने ॥१०॥
त्यक्त्वा गृहं कुटुम्बं च ग्रामं धनं च सम्पदः ।
त्यागी मठे च शिष्येषु वासे द्रव्ये तथाश्रमे ॥११॥
आसक्तः स तु संसारे मग्न एव न संशयः ।
उपादिश्य जनान् द्रव्यादिभ्यः प्रच्याव्य तद्धनम् ॥१२॥
आकांक्षति स्वयं त्यागी संसारे मग्न एव सः ।
त्यागी भूत्वा गृहस्थानां शुश्रूषां तु करोति यः ॥१३॥
स्वार्थवृत्तिः स एवाऽस्ति मग्नः संसारकर्दमे ।
त्यागे स्थितश्चिन्तयति मानं मे न न पूजनम् ॥१४॥
न कीर्तिर्न यशो मेऽस्ति न मे राज्यादरस्तथा ।
न प्रजायां न सम्मानं सम्पदो मे न न प्रिया ॥१५॥
न प्रासादो न मे यानं वाहनं न न वाटिका ।
न मे क्षेत्रं नाऽम्बरं मे नर्द्धिर्न धिष्ण्यमित्यपि ॥१६॥
नाऽऽचार्यत्वं गुरुत्वं न नैश्वर्यं न प्रशंसनम् ।
न क्षेत्रं न सुतश्चापि न भृत्यो न पशुर्गवाः ॥१७॥
नाऽश्वो नास्ति विमानं मे न मिष्टाशनोत्सवः ।
न शृङ्गारो न चांऽगारो नाऽगारं मे न चत्वरम् ॥१८॥
न शय्या मे न पर्यंको न दासी मे न दास्यकृत् ।
न बन्दी मे न सेवाकृन्नास्ति विद्या न संस्कृतिः ॥१९॥
इत्येवमिहयाऽऽकृष्टो मज्जत्यगाधसागरे ।
संसारनामके मग्नो न निस्सरति कर्हिचित् ॥२०॥
माधवि विधिमुत्सृज्य वर्तन्ते कामगर्विताः ।
ये ते प्रज्ञे सुमज्जन्ति संसारे घोरसागरे ॥२१॥
विधिं दृष्ट्वा गुरोराज्ञां ममाऽऽज्ञां संप्रपाल्य च ।
वर्तन्ते ये ममवृत्तास्तेषां नैम्न्यं न वै क्वचित् ॥२२॥
पत्नी या पत्युराज्ञायां वर्तमानाऽतिगाऽपि च ।
सा निकृष्टा न वै क्वापि याऽऽज्ञा सा धर्मरूपिणी ॥२३॥
यतिः साधुः सती साध्वी त्यागी योगी विरक्तकः ।
ममाऽऽज्ञायां वर्तमानाः प्रणालीरीतिवर्जिताः ॥२४॥
अलोकमिलनाश्चापि समूहविपरीतगाः ।
अश्लीलवृत्तकाचारा अमर्यादास्थिता अपि ॥२५॥
ब्रह्मभावपराचाराः श्रेष्ठा एव सदा हि ते ।
न निम्नत्वं विरक्तानां ब्रह्मस्थितिजुषां क्वचित् ॥२६॥
न निम्नत्वं हि देवानामीश्वराणां तथा क्वचित् ।
न मुक्तानां निम्नता नाऽवताराणां तथा क्वचित् ॥२७॥
नाऽप्यवतारिणीनां च निम्नत्वं विद्यते क्वचित् ।
सतीनां चापि साध्वीनां निम्नता नास्ति कर्हिचित् ॥२८॥
आज्ञायां सम्पदो भोगा निर्गुणा न तु बन्धदाः ।
आज्ञालभ्या विरक्तानां भोगा नैर्गुण्यशालिनः ॥२९॥

बन्धदा न भवन्त्येते कृष्णप्रसादरूपिणः ।
त्यागिनां श्रीहरेराज्ञा मुक्तिदा सगुणाऽगुणा ॥३०॥
कृष्णाज्ञा निर्गुणा तस्मात्तत्कृतिर्निर्गुणा सदा ।
लोकवत्तु हरेर्लीला त्यागिलीलाऽपि मोक्षदा ॥३१॥
कृष्णार्पणीकृता चेष्टा सर्वा निर्गुणतां व्रजेत् ।
अमायिकी स्थितिश्चेयं त्यागिनां बन्धवर्जिता ॥३२॥
दारास्तु बन्धनं मोक्षे यदि विघ्नविधायिनी ।
पुमान् वै बन्धनं तद्वन्मोक्षे विघ्नकरो यदि ॥३३॥
मोक्षदौ तौ मिथश्चेद्वै परस्परं न बन्धनम् ।
प्रश्ने श्रीमाधवि तत्त्वं चाकर्णय तु बन्धकृत् ॥३४॥
पतिव्रता यदि नारी मोक्षतत्त्वाभिवर्तिनी ।
सा नारी बन्धनं नैव पुमाँस्तस्यास्तु बन्धनम् ॥३५॥
पत्नीव्रतः पुमान् यस्या मोक्षमार्गाभिवर्तनः ।
स पुमान् बन्धनं नैव तस्य नारी हि बन्धनम् ॥३६॥
समशीलौ बन्धने न विशीलौ बन्धने मतौ ।
कामासक्तस्य वै नारी बन्धनं वर्तते सदा ॥३७॥
तद्विरक्तस्य वै नारी बन्धनं नास्ति सर्वथा ।
एवं स्त्रियास्तु तादृश्याः पुमान् बन्धो विबन्धनम् ॥३८॥
आसक्तिर्बन्धनं तृष्णा रागो गृध्ना च बन्धनम् ।
संस्कारा बन्धनं चापि वासना बन्धनानि वै ॥३९॥
नारीत्वं च नरत्वं च सापेक्षं देहयोगतः ।
यावदात्मनि स्फुरति तावद्वै बन्धनं मतम् ॥४०॥
ब्रह्मात्मभावतो नारीनरत्वे विगते यदा ।
तदा तु बन्धनं सर्वं लीयते मयि सत्प्रभौ ॥४१॥
माधवि गहना युष्मदस्मदर्थस्य वार्तिका ।
सा यावद् बन्धनं तावत् सा गता बन्धनं गतम् ॥४२॥
विलीयन्ते तु पापानि क्षीयन्ते कर्मराशयः ।
सेवयाऽहं प्रभुः प्रसादितो मोक्षं ददामि वै ॥४३॥
वैतृष्ण्यं गुणमात्रेषु स्नेहो गुणातिगे मयि ।
सर्वार्पणं यदा नार्या नरस्यापि च मोक्षणम् ॥४४॥
भ्रान्तिर्यदा लयं प्राप्ता विवेकश्च प्रकाशते ।
आकर्षणं मयि यत्र क्षणे तदा तु मुक्तता ॥४५॥
गुरुधामसतां सेवा शुश्रूषा परमात्मनः ।
अत्युत्कृष्टा पाकमाप्ता यदा तदा तु मोक्षणम् ॥४६॥
तत्त्वाभ्यासान्निजज्ञानं मयि स्नेहसमन्वितम् ।
प्रारब्धस्य क्षयान्तश्च मोक्षः फलं प्रपद्यते ॥४७॥
आत्माऽहं नैव देहोऽस्मि न मायाऽस्मि न वासना ।
न नारी न नरश्चाऽस्मीत्येवंविदस्य मोक्षणम् ॥४८॥

ब्रह्माऽस्मि ब्रह्मणश्चाऽस्मि सच्चिदानन्दरूप्यहम् ।
मयि नारायणश्चास्ते एवंपश्यस्य मोक्षणम् ॥४९॥
स्त्रीगोचरास्तु संकल्पाः संस्काराश्च यदा क्षयम् ।
यन्ति तदा नरस्यापि मोक्षणं नान्यथा क्वचित् ॥५०॥
क्षीयन्ते तु यदा नार्याः संकल्पा नरगोचराः ।
संस्काराश्च तदा मोक्षो मिथ्यास्फुरणसंक्षयात् ॥५१॥
स्त्रीलिङ्गोऽहं पुल्लिङ्गोऽहं यावदस्ति गुणाङ्कुरः ।
तावद् बद्धस्तत्क्षयेऽस्य मोक्षो भवति देहिनः ॥५२॥
कृताधिकारसर्वस्वो निवृत्तः सर्वरागतः ।
निर्वातस्थदीपशिखास्थिरस्तरंगवर्जितः ॥५३॥
अन्तस्तत्त्वे कृतस्नेहश्चान्तरात्माभिरामकः ।
तदन्यौदासीन्यमाप्तश्चात्मा मोक्षगतो भवेत् ॥५४॥
स्त्रिया राधारमातुल्या मतिर्मयि यदा भवेत् ।
तदा मोक्षे स्थिता साऽस्ति कृपया परमात्मनः ॥५५॥
स्त्री पत्यर्थं तु सर्वस्वं यथा करोति चार्पणम् ।
तथा मय्यर्पितायास्तु मोक्षणं कृपया मम ॥५६॥
यथैकस्मिन् प्रिये पुत्रे बाले मातुस्तदात्मता ।
तद्ध्यानं तच्चिन्तनादि तथा चेन्मयि मोक्षणम् ॥५७॥
शवहर्तुः श्मशाने वै क्षणं रागो विनश्यति ।
तथा रागादिहीनस्य द्रुतं भवति मोक्षणम् ॥५८॥
अनपत्या यथा नारी भर्तुर्मृत्यौ प्रशोचति ।
तथाऽऽवेगवती कृष्णे मुच्यते भवबन्धनात् ॥५९॥
महापत्स्वावरितो यो रक्षकं ध्यायति क्षणम् ।
तथा ध्यायति कृष्णं मां स द्रुतं मुच्यते भवात् ॥६०॥
आत्मार्थं क्रियते यावद्धर्यर्थं क्रियते यदि ।
तदा मोक्षः करे चास्ति फलं पक्वं भुनक्ति सः ॥६१॥
यथा नद्यः समुद्रेषु वेगवत्योऽभियन्ति वै ।
तथा नार्यो मयि वेगिन्यश्चेन्मोक्षं विशन्ति ताः ॥६२॥
यावत्पत्युरपेक्षाऽस्ति पत्न्यपेक्षा च वा मनाक् ।
तावन्मुक्तिर्भवेद् दूरेऽपेक्षानाशे करे भवेत् ॥६३॥
यस्या ब्रह्ममयी बुद्धिर्दृष्टिर्ब्रह्ममयी सदा ।
सर्वं ब्रह्मस्पृष्टं यस्यास्तस्या मोक्षसुखं त्विह ॥६४॥
यस्या निर्लेपताबुद्धिर्यस्याः शैत्यौष्ण्यवर्जिता ।
मायाऽऽस्वादा लयं प्राप्तास्तस्या मोक्षफलं त्विह ॥६५॥
यस्याः कामा निवर्तन्ते सन्ति चेत् कृष्णगोचराः ।
असांकर्यस्थितिं प्राप्तास्तदा मोक्षफलं त्विह ॥६६॥
जाग्रत्सु विषयः कृष्णः स्वप्नस्य विषयो हरिः ।
सुषुप्तेश्चान्तरात्मा च तुर्येऽक्षरस्थितः प्रभुः ॥६७॥

यस्या भवेत् सदा त्वेवं यस्य वा तौ हि मोक्षिणौ।
तस्करस्य यथा चौर्ये नटस्य खेलने यथा ॥६८॥
शत्रोः शत्रौ यथा वृत्तिरेकाग्रा मोक्षदा मयि।
साध्व्या स्नेहो यथा साध्वौ चकोरस्य निशाधिपे ॥६९॥
शलभानां प्रदीतेऽग्नौ मत्स्यानां पिष्टभोजने।
कामातुरस्य वै नार्यो मोक्षदः स तथा मयि ॥७०॥
यथा मूर्छाऽतिरत्यन्ते शस्त्रघातेऽतिमूर्छना।
सुषुप्तौ मादके वा च तथा वै मयि मुक्तिदा ॥७१॥
यथा मतिर्जीवने स्वे स्वार्थेऽभिगमनं यथा।
स्वस्मिन् यथा गुणदृष्टिस्तथा वै मयि मोक्षदा ॥७२॥
गृहस्थस्य चिरं मोक्षस्त्यागिनस्तु द्रुतं मतः।
गृहस्थस्त्यागमापन्नः शीघ्रं मोक्षं प्रविन्दति ॥७३॥
त्यागी गृहस्थाचारश्चेन्मोक्षार्थे स चिरायते।
गृहस्थस्य त्यागिनो वा सादृश्यं ज्ञानसत्कृतम् ॥७४॥
विषवद् विषया यस्य सादृश्यं वै तयोर्मतम्।
सुधावन्मोक्षणं यस्य सादृश्यं वा तयोः सदा ॥७५॥
लोकः सुधायतेऽन्यस्यैकस्य सुधायते हरिः।
द्वयोः पन्था विभिन्नश्चेद् वैधर्म्यं तु तयोस्तदा ॥७६॥
ये वा के वा ब्रह्मभावा ब्रह्मज्ञाना हरिप्रियाः।
भविष्यन्ति यदा साध्व्यौ ! तदा मोक्षमवाप्नुयुः ॥७७॥
स्त्रीधर्मित्वं गृहस्थस्य वैधर्म्यं त्यागिनस्तु तत्।
परिग्रहो गृहस्थस्य त्यागिनस्त्वपरिग्रहः ॥७८॥
तीव्रसंवेगमाप्तस्य द्रुतं मोक्षो भवेदिति।
त्यागिनो वा गृहस्थस्य स मन्दस्य चिरायते ॥७९॥
सधर्मित्वं देहवत्त्वं विधर्मिताऽऽत्मभावना।
धीस्वामित्वं सधर्मित्वं श्रीस्वामित्वं विधर्मिता ॥८०॥
सत्कर्मित्वं सधर्मित्वं नैष्कर्म्यं तु विधर्मिता।
फले रागः सधर्मित्वं पुष्पे रागो विधर्मिता ॥८१॥
सापेक्षत्वं सधर्मित्वं नैरपेक्ष्यं विधर्मिता।
यात्रालुत्वं सधर्मित्वं निक्षेपस्तु विधर्मिता ॥८२॥
अर्वाग्वृत्तिः सधर्मित्वं पराग्वृत्तिर्विधर्मिता।
पुनरेच्छा सधर्मित्वं शाश्वतेच्छा विधर्मिता ॥८३॥
स्थूलभोगाः सधर्मित्वं प्रज्ञाभोगो विधर्मिता।
चिदानन्दः सधर्मित्वं सदानन्दो विधर्मिता ॥८४॥
निजानन्दः सधर्मित्वं परानन्दो विधर्मिता।
गृहस्थत्यागिनोश्चैवं त्यागिनः सा क्रमाद् विधा ॥८५॥
शृणुतं ज्ञानिपत्न्यौ मे ह्युभयोर्गृहधर्मिताम्।
एक आयाति गर्भाद्वै तथैको वर्धते सदा ॥८६॥
एको युवा च वृद्धश्च प्रयात्येकः परेतकः।
पुनर्जन्म पुनर्मृत्युर्गृहे तिष्ठति वै पुनः ॥८७॥
गृहं गर्भो गृहं सौधं गृहं नैजं वपुस्तथा।
गृहं कर्म गृहं तृष्णा गृहं यत्र प्रतिष्ठति ॥८८॥
स गृह्णाति गृहं तद्वै गृह्यते येन तद् गृहम्।
चिता गृहं मरणोत्थं गर्भो गृहं तु कर्मजम् ॥८९॥
सौधं गृहं कृत्रिमं वै तद्वान् गृहस्थ उच्यते।
त्यागिनो वा गृहस्थस्य द्वयोः सा गृहधर्मिता ॥९०॥
आतिथेयत्वमात्मनिष्ठत्वं देवार्पणं व्रतम्।
दानं स्नानं ध्यानमिष्टाराधनं जपकीर्तने ॥९१॥
हवनं पितृतृप्तिश्च द्वयोः सा गृहधर्मिता।
गृहिणी गृहमेवापि स्त्री गृहस्थस्य सा मता ॥९२॥
त्यागिनस्तु हरेर्मूर्तिर्गृहिणीव प्रिया सदा।
तया साकं स्थितिर्या सा ह्युभयोर्गृहधर्मिता ॥९३॥
शृणुतं माधवि प्रज्ञे ! द्वयोश्च त्यागधर्मिताम्।
यथा युवां साधिके स्थो निर्द्वन्द्वे कृष्णमानसे ॥९४॥
यथाऽहं तापसश्चास्मि निर्द्वन्द्वो वां परायणः।
युवां पत्न्यौ पतिश्चाऽहं तथापि द्वन्द्वता नहि ॥९५॥
न संसारे गृहित्वं न किन्त्वस्ति त्यागधर्मिता।
एवंविधयोर्दम्पत्योः सदाऽस्ति त्यागधर्मिता ॥९६॥
यथा शंभोश्च पार्वत्या योगः पुत्रार्थ इष्टकृत्।
एवंविधयोर्दम्पत्योर्योगस्तु गृहधर्मिता ॥९७॥
आसने पर्णकुट्यां च वृक्षे देहे तु मुग्धता।
भासते चेत् त्यागिनस्तद् बन्धनं गृहधर्मिता ॥९८॥
भोगो वै मानसो यस्य क्रिया तु चोभयात्मिका।
अन्यतः सुखिता चेति त्यागिनो गृहधर्मिता ॥९९॥
त्यागे यत्नो हरौ प्रीतिर्मोक्षे चेच्छात्मनि स्थितिः।
रतिर्ज्ञाने जपे कर्म ध्याने शान्तिः परात्मनः ॥१००॥
यस्य वै त्यागिनः सन्ति स त्यागित्याग उत्तमः।
भोग्यं देहेन्द्रियबुद्ध्यादिकं मायामयं जगत् ॥१०१॥
भोक्ता तेन तु सम्बद्धश्चात्मा कर्मानुगो बद्धी।
आत्मात्मा यः परमात्मा स त्वभोक्ता पृथग्विधः ॥१०२॥
अभोग्यं चेतनं सर्वं विकारवर्जितं यतः।
भोगः सुखस्य दुःखस्य वा साक्षात्त्वं निजस्य वै ॥१०३॥
भोगं विहाय सततं वर्तते यः स मुक्तराट्।
स एव त्वरितं साध्व्यौ ! परब्रह्माभिविन्दति ॥१०४॥
इत्येतत् कथितं सर्वं ज्ञातव्यं हितकृत् तथा।
एतज्ज्ञात्वा पालयित्वा मोक्षार्थे नावसीष्यते ॥१०५॥

गृहगीता मयोक्ता वाँ गृहबन्धननाशिनी ।
पठनाच्छ्रवणादस्य भुक्तिर्मुक्तिः करे भवेत् ॥१०६॥
चतुःपुमर्थलाभश्च परा शान्ति तथाऽऽत्मनि ।
सर्वोद्वेगाः प्रणश्येयुर्गृहगीतार्थचिन्तनात् ॥१०७॥
सर्वैषणानिवृत्तिश्च सकामानां सुखाशयः ।
गृहे मोक्षाभिगमनं गृहगीतार्थचिन्तनात् ॥१०८॥
नारी नारायणी स्याच्च नरो नारायणो भवेत् ।
अङ्गने ! गृहगीतायाः स्वरूपं भगवन्मयम् ॥१०९॥
गृहगीतार्थविज्ञानां पापलेपो न कर्मभिः ।
गृहित्वेऽपि सदा त्यागिसमत्वं शोभतेऽमलम् ॥११०॥
सर्वे विघ्ना निवर्तन्ते बाधन्ते सिद्धयोऽपि न ।
संस्कारा न त्वरायन्ते गृहगीताभिपाठिनाम् ॥१११॥
सुवर्णता भवत्यस्याऽमृतता च भवत्यपि ।
भवेद् दिव्याम्बरता च गृहगीताभिपाठिनाम् ॥११२॥
कृष्णं मां पूज्य विधिवद् गृहगीतां पठेत्ततः ।
तस्येष्टसिद्धिर्जायेत त्वरिता नात्र संशयः ॥११३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां सर्वाश्रमिणां संसारमग्नता, विध्याज्ञावतां मग्नता न, स्त्रीपुंसोर्बन्धनाऽबन्धने, सेवादिभिर्मोक्षणम्, गृहित्यागिनो वैधर्म्यं साधर्म्यं च, गृहित्वार्थश्चेत्यादिनिरूपणनामा नवाऽशीतितमोऽध्यायः ॥ ८९ ॥

श्रीपद्मावतीप्रश्ने प्रोचतुः—

कृष्णनारायणस्वामिन् सर्वोद्धारपरायण ।
संसारकर्दमस्थानामुद्धारकोऽसि वै प्रभो ॥ १ ॥
येषां ज्ञानं न वा ध्यानं न जपो नेष्टदेवता ।
न गुरुर्न मखो धर्मः किन्तु पापानि सन्ति वै ॥ २ ॥
न सत्संगो व्रतं नास्ति न तीर्थं विप्रभोजनम् ।
न साधुभोजनं कृष्णपूजनं नास्ति वै तथा ॥ ३ ॥
तेषां संसारमग्नानां समुद्धाराय साधनम् ।
मोक्षदं पापनाशार्थं सुगमं यद् वदस्व नौ ॥ ४ ॥

श्रीकृष्णनारायण उवाच—

शृणुतं माधवि साध्वि प्रश्ने संसारिमुक्तये ।
पापिनां पापनाशार्थं साधनं गोप्रदानकम् ॥ ५ ॥
गृहाश्रमस्तु पापाढ्यो गोदानं पापनाशकम् ।
उद्धारकं यमदूतभयात् संरक्षकं सदा ॥ ६ ॥
पितृद्धारकरं स्वर्गप्रदं वंशप्रदं तथा ।
सम्पत्प्रदं हि गोदानं मोक्षदं सद्गतिप्रदम् ॥ ७ ॥
येन नाऽन्यत् कृतं पुण्यं कर्तव्यं गोप्रदानकम् ।
गोदानेन प्रजायन्ते समग्रा इष्टसिद्धयः ॥ ८ ॥
गोदानं पृथिवीदानं पृथिवी गोस्वरूपिणी ।
गोदानं श्रीकृष्णदानं धेनुः कृष्णप्रिया सदा ॥ ९ ॥
गोदानं यज्ञपुण्यादिप्रदं गौर्यज्ञरूपिणी ।
गोदानं श्रीरमादानं गौर्हि लक्ष्मीस्वरूपिणी ॥१०॥
गोदानं तु सर्वरसप्रदानं दुग्धदा हि गौः ।
गौर्माता सर्वलोकानां पयोभिः पोषणप्रदा ॥११॥
दातव्या सर्वथा दाने दोग्ध्री वत्सतरीयुता ।
गुरवे सा प्रदातव्या वैष्णवाय तु साधवे ॥१२॥
विप्राय सा प्रदातव्या मखिनेऽतिथिसेविने ।
अङ्गने ! यजमानस्तु स्नातः कृताभिवन्दनः ॥१३॥
यायाद् गोष्ठं मखद्वारं देवालयं मठं सताम् ।
तीर्थं यायात् प्रकुर्याद्वै शुद्ध्यर्थं तीर्थवारिणा ॥१४॥
आचमनत्रयं नेत्रे जलस्पर्शो तथाऽऽचरेत् ।
हस्तपादौ आलयेच्च दक्षे करे जलं शुभम् ॥१५॥
गृह्णीयाद् देशकालादि पुण्याहं वाचयेत्ततः ।
गुरुर्दानस्य संकल्पं कुर्याच्च कारयेत्तथा ॥१६॥
जलं भूमौ प्रमुच्याऽथ नमः कुर्यात् पयस्वतीम् ।
सवत्सिकां मातरं गां पुनर्जलं करे न्यसेत् ॥१७॥
धर्मार्थकाममोक्षार्थं निजसम्बन्धिनां तथा ।
कुटुम्बिनां च सौख्यार्थं करोमि गोप्रदानकम् ॥१८॥
इत्युक्त्वा तज्जलं पृथ्व्यां मुञ्चेद् वरुणसाक्षिकम् ।
नमस्कुर्याच्च गां पश्चात् करे धृत्वा तु कुंकुमम् ॥१९॥
यजमानो वदेत् स्वेष्टसिद्ध्यर्थं गोसमीपतः ।
आरोग्यार्थं सम्पदर्थं पुत्रपौत्रादिसिद्धये ॥२०॥
वंशविस्तारसौख्यार्थं सौख्यार्थं यशसे तथा ।
तापत्रयविनाशार्थं धर्मार्थं मोक्षहेतवे ॥२१॥
सर्वशत्रुविनाशार्थं निर्विघ्नकार्यसिद्धये ।
प्रेतानां मम मुक्त्यर्थं सर्वपापादिशान्तये ॥२२॥
सर्वक्लेशविनाशार्थं पुण्यार्थं गोप्रपूजनम् ।
धेनुदानांगभूतं वै करोमि कुंकुमादिभिः ॥२३॥
बिन्दुं भाले कुंकुमेन करोमि चन्दनादिभिः ।
मम सौभाग्यसिद्ध्यर्थं करोमि तिलकं तु गोः ॥२४॥
मम कुटुम्बिसौख्यार्थं पूजां करोमि चाक्षतैः ।
मम पुण्यस्य लाभार्थं दीपं धूपं करोमि च ॥२५॥

मम सम्पत्प्रवृद्ध्यर्थे गवे भक्ष्यं ददामि च।
मम स्वर्गस्य सिद्ध्यर्थे गवे वारि ददामि च ॥२६॥
पितृुद्धाराय च गवे गुडं मिष्टं ददामि च।
नवसस्यानि बीजानि कार्पासस्य ददामि च ॥२७॥
वस्त्रं प्रावरणं पृष्ठे ददामि झुल्लरीं शुभाम्।
माल्यं मालां पुष्पमालां स्वर्णमालां ददामि च ॥२८॥
अम्बरं च विभूषाश्च गवे ददामि शृङ्गयोः।
स्वर्णशृङ्गे रूप्यखुराः खुरेषु प्रददामि च ॥२९॥
दोहनं ताम्रपात्रं च शृङ्खलां प्रददामि च।
सुवर्णघण्टिकायुक्तं हारं कण्ठे ददामि च ॥३०॥
भक्ष्यपात्रं पानपात्रं दोहपात्रं ददामि च।
गवां खर्जननाशार्थं खर्जकं प्रददामि च ॥३१॥
देवगुर्वोः प्रतुष्ट्यर्थं दक्षिणां प्रददामि च।
गुलालाबीरकुंकुमाऽक्षतैः प्रपूजयामि गाम् ॥३२॥
पत्रैः पुष्पैः फलैश्चापि तुलसीपत्रकैस्तथा।
पूजयामि प्रकरोमि प्रदक्षिणचतुष्टयम् ॥३३॥
पृथ्वीप्रदक्षिणतुल्यं चार्थयामि सुखाप्तये।
नमोऽस्तु ब्रह्ममूर्तिभ्यो विश्वमातृभ्य ओंनमः ॥३४॥
लोकाधिवासिनीभ्यश्च रोहिणीभ्यश्च वै नमः।
गवामङ्गेषु तिष्ठन्ति सर्वे देवास्तथेश्वराः ॥३५॥
अवताराश्च पितरस्तिष्ठन्ति श्रीरमादिकाः।
गोललाटे गणेशोऽस्ति गणेशं प्रणमाम्यहम् ॥३६॥
गोशृंगयोस्तु गोलोको वैकुण्ठस्तौ नमाम्यहम्।
गोनेत्रयोः सूर्यचन्द्रौ वसतस्तौ नमाम्यहम् ॥३७॥
वैश्वानरोऽस्ति धेन्वास्ये वैश्वानरं नमाम्यहम्।
गोदन्तेषु ग्रहाः सर्वे ग्रहान् सर्वान्नमाम्यहम् ॥३८॥
गोनसोरश्विनीपुत्रौ कुमारौ तौ नमाम्यहम्।
गवोष्ठयोर्नारदस्तुम्बुरुस्तौ प्रणमाम्यहम् ॥३९॥
गोकर्णयोर्नरनारायणौ तौ प्रणमाम्यहम्।
गोजिह्वायां शारदाऽस्ति शारदां प्रणमाम्यहम् ॥४०॥
गोकण्ठे प्रणवश्चास्ति ओंकारं प्रणमाम्यहम्।
ब्रह्मा गले कम्बले तु सावित्री तौ नमाम्यहम् ॥४१॥
शंभुः ककुदि स्कन्धे तु शिवा तौ प्रणमाम्यहम्।
विष्णुर्हृदये लक्ष्मीश्च शकृति तौ नमाम्यहम् ॥४२॥
मूत्रे गङ्गा यमुना च सरस्वती नमामि ताः।
पुच्छे तु पितरः सन्ति पितॄन् सर्वान्नमाम्यहम् ॥४३॥
पृष्ठवंशे तु ऋषयः ऋषीन् सर्वान्नमाम्यहम्।
पार्श्वेषु देवताः सन्ति देवतास्ता नमाम्यहम् ॥४४॥
रोमसु साधवः सिद्धा वसन्ति तान्नमाम्यहम्।
पुच्छे शेषश्च विष्णुः श्रीस्तान् सर्वान् प्रणमाम्यहम् ॥४५॥
पुच्छान्ते सर्वतीर्थानि तीर्थानि प्रणमाम्यहम्।
उदरे लोकपालाश्च लोकपालान्नमाम्यहम् ॥४६॥
ओधस्यमृतसर्वस्वं ब्रह्मामृतं नमाम्यहम्।
स्तनेषु सागराः सर्वे राधापुत्रान्नमाम्यहम् ॥४७॥
वक्षोऽग्रे तु ब्रह्महृदो ब्रह्म तत्प्रणमाम्यहम्।
पादेषु पार्षदा विष्णोस्तान् सर्वान् प्रणमाम्यहम् ॥४८॥
खुरेषु तु मखाः सर्वे तान् यज्ञान् प्रणमाम्यहम्।
गोष्ठं ब्रह्माऽक्षरं धाम गोस्थलीं प्रणमाम्यहम् ॥४९॥
गोधूलिर्जंगमं तीर्थं धूलिं मूर्ध्नि वहाम्यहम्।
गोतक्रं गोघृतं धेनुक्षीरं गोरसमित्यपि ॥५०॥
गोनवनीतमेवापि ब्रह्मपीयूषपञ्चकम्।
दाने ददामि तत्सर्वं तृप्यन्तां पितरः सुराः ॥५१॥
रोहिण्यो दोग्ध्र्य ईश्वर्यो मातरः पान्तु मां सदा।
गावो ममाऽग्रतः सन्तु गावः सन्तु च पृष्ठतः ॥५२॥
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम्।
वत्सतरी भक्तिरूपा वत्सो धर्मः सनातनः ॥५३॥
कृष्णशंभुप्रियौ पातां मां सदा सकुटुम्बकम्।
स्वर्गं सत्यं च वैराजं भौमं वैकुण्ठमुत्तमम् ॥५४॥
श्रीपुरं चामृतं चाव्याकृतं गोलोकमक्षरम्।
ब्रह्मधाम च मे गावो ददत्वेव च सम्पदः ॥५५॥
त्वं देवि सर्वदेवानां वासरूपाऽसि तारिणी।
कामधेनुसमस्तानां प्रतिमायै च ते नमः ॥५६॥
सर्वकामप्रदे मातर्गोलोकवासिनि प्रिये।
पापहे पुण्यदे मोक्षप्रदे मातश्च ते नमः ॥५७॥
मामस्मात् सागराल्लक्ष्मीरूपे तारय सर्वथा।
सर्वसम्पत्प्रदे कृष्णप्रिये तारय सागरात् ॥५८॥
पुत्रान् पौत्रान् पुत्रिकाश्च धनं धान्यादि देहि मे।
ऐश्वर्याणि च दीर्घायुरारोग्यं सम्प्रदेहि मे ॥५९॥
सौभाग्यं पतिसौभाग्यं पत्नीसौभाग्यमित्यपि।
द्रव्यसौभाग्यमेवाऽपि देहि मे कामपूरिके ॥६०॥
इत्यभ्यर्थ्यं यजमानो गुरोर्हस्ते द्विजस्य च।
जलं दद्यान्मया दत्ता गौर्यज्ञतां समुद्धरेत् ॥६१॥
गवे पुष्पाञ्जलिं दद्यान्नमस्कुर्याद् गवे सते।
गुरवे चापि विप्राय साधवे पात्रयोगिने ॥६२॥
धेनुं दद्यात् सुगुरवे महाचार्याय साधवे।
विप्राय योग्यपात्राय वैष्णवाय च शार्ङ्गिणे ॥६३॥

मत्यं कृष्णाय दातव्या मन्दिराय हराय च ।
अन्यरत्नानि धान्यानि देवयस्तूनि यानि च ॥६४॥
तानि सर्वाणि दद्याच्च यथायोग्येभ्य आदरात् ।
भोजयेद् बालिका बालान् सतीः साध्वीः सतो द्विजान् ॥६५॥
पुष्पहारं गवोच्छिष्टं गृह्णीयाद् यजमानकः ।
गोपूजासलिलं पुच्छपावनं प्रणमेद् गृहे ॥६६॥
प्रोक्षणं गृहमध्ये वै कुर्याद्गोपूतवारिणा ।
पुष्पहारं रक्षयेच्च विघ्ननाशकरो हि सः ॥६७॥
गुरुं सम्पूजयेत्तत्र गोपूजाया अनन्तरम् ।
वत्सं वत्सां पूजयेच्च प्रणमेच्च प्रदक्षिणम् ॥६८॥
दक्षिणां गुरवे दद्याद् यथाशक्ति कृतादरः ।
कपिलां गां च धवलां रक्तां कर्बुरिकां च वा ॥६९॥
दद्यात्तस्या फलं साध्व्यौ! वैराजपदमुत्तमम् ।
कृष्णां धूम्रां पिशंगीं च दद्याद् वेधःपदं फलम् ॥७०॥
दोग्ध्रीं यां कां प्रदद्याच्च फलं त्विन्द्रपदं दिवि ।
वत्सां दद्यात् फलं तस्य देवताभवनं दिवि ॥७१॥
दद्यादुभयतोमुखीं फलं तस्याः परं पदम् ।
आक्षरी परमा मुक्तिः शाश्वती पौरुषोत्तमी ॥७२॥
असूतकीं प्रदद्याद्वै दोग्ध्रीं गोलोकदा तु सा ।
गोदानस्य यजमानः पालयेद् गोव्रतं तदा ॥७३॥
दिवारात्रं व्रतं कुर्यादेकभोजित्वमेव ह ।
गव्याऽशित्वं प्रकुर्याद्वै गोसेवां सर्वथा चरेत् ॥७४॥
ब्रह्मचर्यं तदेकाहं पालयेद् गोस्थले स्वपिम् ।
मालया श्रीहरिं मां श्रीकृष्णं नारायणं जपेत् ॥७५॥
गोदानेन समं दद्यान्मासग्रासतृणान्यपि ।
कार्पासबीजकादीनि दद्याद् गोमुक्तये सदा ॥७६॥
प्रत्यक्षां गां प्रदद्याद्वै श्रेष्ठं दानं हि तन्मतम् ।
गवाऽलाभे गां प्रपूज्य तन्मूल्यं चार्पयेत्परम् ॥७७॥
मूल्यार्धं वा तदर्धं वा स्वल्पं दशांशकं च वा ।
दद्याद् यथाधनं भक्तो नत्वा श्रीगुरवे मुहुः ॥७८॥
यथाशक्ति मया दत्तं क्षमस्वाऽऽपूर्णमत्र यत् ।
कुर्याच्च दण्डवत्तस्मै वित्तशाठ्यं विवर्जयेत् ॥७९॥
गोदानं मन्दिरे श्रेष्ठं देवालये तदुत्तमम् ।
मठे साध्वाश्रमे श्रेष्ठं मखे पारायणालये ॥८०॥
विवाहमण्डपे श्रेष्ठं तीर्थे सरित्तटेऽपि च ।
व्रताहे पुण्यदिवसे महोत्सवे शुभोत्सवे ॥८१॥
श्रेष्ठं धेनुप्रदानं वै स्वास्थ्ये कुर्यात् करेण वै ।
या धेनुर्दीयते दाने सा दिव्या मरणोत्तरम् ॥८२॥
स्वर्गमार्गे धर्ममार्गे ह्यग्रेऽग्रे याति रक्षिका ।
धेनुदानप्रदाता न यात्यसद्गतिमीश्वरि ॥८३॥
वैतरण्यां दुःखनद्यां धेनुश्चोत्तारिणी प्रिये ! ।
परलोके प्रगन्तुश्च प्रेतस्य भोजनप्रदा ॥८४॥
धेनुं स्वर्णमयीं दद्याद् धेनुं च राजतीं तथा ।
धेनुं धान्यमयीं दद्याद्धेनुं कार्पासकीं तथा ॥८५॥
धेनुं रसमयीं दद्याद् धेनुं सम्पन्मयीं तथा ।
धेनुं कन्यामयीं दद्यात् कन्याहीनो जनो भुवि ॥८६॥
विधिवन्मण्डपं कुर्याद् वेदीं कुण्डं च कारयेत् ।
दानवस्तूनि सर्वाणि तथा रत्नानि सन्न्यसेत् ॥८७॥
धेनुं स्वकन्यकां कृत्वा नामान्वितां तदा ।
कन्यावस्त्राणि सर्वाणि कन्यकाभरणानि च ॥८८॥
कन्याधेनुं मण्डपे वै कृत्वा दद्याद् द्विजातये ।
हवनं कारयेत्तत्र वादित्राणि प्रवादयेत् ॥८९॥
कन्यादानविधिं योग्यं कारयेन्मण्डपे तदा ।
कन्यादानफलं तस्य धेनुदातुः प्रजायते ॥९०॥
कन्याधेनुं रोहिणीं वै दद्याद् वृषभासंगिनीम् ।
अगर्भिणीं महावत्सीं दद्यात् कन्यास्वरूपिणीम् ॥९१॥
महावत्सीप्रदानेन कन्यावान् जायते ततः ।
एवंदानप्रदाता स्यात् स्वर्गभाङ् मोक्षभाक् तथा ॥९२॥
भुक्तिमुक्तिमहामुक्तिसम्पन्नो जायते सदा ।
पितॄणां तारकश्चापि कुटुम्बिनां च तारकः ॥९३॥
सर्वपुण्यसुपात्रं च ब्रह्मानन्दमयो भवेत् ।
अनपत्यो धेनुदाता सापत्यो हि समान्तरे ॥९४॥
अपुत्रः पुत्रवान् स्याच्च वर्षान्तरे न संशयः ।
शुभं कालं च सत्पात्रं प्राप्य दद्यात् प्रदानकम् ॥९५॥
गतः कालः शुभो यस्तु पुनर्नाऽऽयास्यति क्वचित् ।
गृहस्थो धर्मकर्मार्थहीनो गोदानमाचरेत् ॥९६॥
गौस्तस्योद्धारिका साध्व्यौ ! शतैकादिकुटुम्बिनाम् ।
गोदात्रे तु गुरुर्दद्यादाशीर्वादान् तदाऽक्षतैः ॥९७॥
धनवान् पुत्रवाँल्लक्ष्मीसम्पद्वान् भव पार्थिवः ।
आरोग्यवाँस्तथा श्रीमान् वर्चस्ववान् जनेष्वपि ॥९८॥
आयुष्यवान् भोगवाँश्च वंशविस्तारवान् भव ।
स्वर्गवान् सुरसम्पद्वान् मोक्षवान् भव चोत्तरे ॥९९॥
वंशे ते गोप्रदातारो जायन्तां मोक्षभागिनः ।
धार्मिका देवभक्ताश्च प्रबोद्धारपरायणाः ॥१००॥
साधुसेवापराः सन्तु नार्यः सन्तु पतिव्रताः ।
सत्य सन्तु च ते वंशे राधालक्ष्मीसमाः स्त्रियः ॥१०१॥

स्वस्ति तेऽस्तु सदा लोके परलोकेऽपि तेऽस्तु तत् ।
गौरियं सर्वथा स्वस्ति करोत्वग्रे गता तव ॥१०२॥
ओं नमः श्रीगोपतये राधायाः पतये नमः ।
गवात्मनि स्थितश्चाहं साक्षी कृष्णनरायणः ॥१०३॥
मां संस्मृत्य प्रिये पद्मावति कुर्याद्गवार्पणम् ।
कृष्णार्पणमिदं दानं चाऽस्त्वित्युक्त्वा विसर्जयेत् ॥१०४॥
इत्येवं सुप्रिये ! श्रेष्ठं साधनं वां मयोदितम् ।
पठनाच्छ्रवणादस्य धेनुदानफलं भवेत् ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां सर्वधर्मादिवर्जितगृहिणोऽपि मोक्षादिसाधनं गोदानं गोस्थदेवादि चेत्यादिनिरूपणनामा नवतितमोऽध्यायः ॥ ९० ॥

**श्रीपद्मावतीप्रश्ने प्रोचतुः—**

कृष्णनारायणस्वामिन् गोदानं चेत् कृतं न हि ।
मोक्षार्थं त्वपरं किञ्चिदस्ति चेन्नौ वदाऽत्रह ॥ १ ॥

**श्रीकृष्णनारायण उवाच—**

सतां देहेन मनसा सेवा वै कर्मणा सदा ।
सर्वसम्पत्प्रदा मोक्षप्रदा पापविनाशिनी ॥ २ ॥
येषां न व्रतविज्ञानं धर्मज्ञानं न विद्यते ।
दारिद्र्यं विद्यते चापि मालिन्यं तीर्थवर्जिता ॥ ३ ॥
तेषां साधोस्तु सत्संगात् पापनाशश्च मोक्षणम् ।
जायते नाऽत्र सन्देहः सत्संगे भगवान् स्थितः ॥ ४ ॥
सतां समागमो भार्ये ! बहुधा रुचिभेदतः ।
यस्य भवति तस्याऽघविनाशो मोक्षणं भवेत् ॥ ५ ॥
नेत्राभ्यां दर्शनमात्रं सत्संगो दर्शनात्मकः ।
हस्ताभ्यां संवाहनादि सत्संगो देहमर्दनः ॥ ६ ॥
शुश्रूषा कार्यकारित्वं चाज्ञायामनुवर्तनम् ।
भृत्यता दास्यमेवाऽपि सत्संगो देहदानकम् ॥ ७ ॥
पद्भ्यां गमनं साधूनामाश्रमं प्रति नित्यदा ।
प्रदक्षिणं प्रकर्तव्यं सत्संगाश्चरणार्पणः ॥ ८ ॥
मस्तकेन नमेत् सन्तं सत्संगो नमनात्मकः ।
प्राञ्जलिः प्रणमेत् सन्तं सत्संगः प्राञ्जलिः स तु ॥ ९ ॥
प्रशंसेज्जिह्वया सन्तं सत्संगः शंसनात्मकः ।
प्रसादं भक्षयेत् साधोः सत्संगो रसनात्मकः ॥१०॥
शृणुयात्तु कथां साधोः सत्संगः श्रवणात्मकः ।
स्पृशेत् साधुं स्नेहपूर्वं सत्संगः स्पर्शनात्मकः ॥११॥
गन्धं सतां तु गृह्णीयात् पुष्पप्रसादसंभवम् ।
गन्धसारं सतां देहात् सत्संगो घ्राणनात्मकः ॥१२॥
आश्लिष्येत् साधुवर्यं तु सत्संगः सञ्जनात्मकः ।
प्रसादयेन्मोदयेच्च सत्संगो नन्दनात्मकः ॥१३॥
स्तुवीताऽऽज्ञां पालयेच्च सत्संगः स्तवनात्मकः ।
सेवेत सततं साधून् सत्संगः सेवनात्मकः ॥१४॥
विहरेत् साधुभिः सार्धं सत्संगो भ्रमणात्मकः ।
विचरेत् साधुभिः सार्धं सत्संगो मण्डलात्मकः ॥१५॥
निवसेत्त सता साकं सत्संगः स गृहात्मकः ।
मन्येत पितरं साधुं सत्संगः स सुतात्मकः ॥१६॥
प्रमन्येत गुरुं साधुं सत्संगः शिष्यवर्तनः ।
सुसाधोः शरणं गच्छेत् सत्संगः शरणात्मकः ॥१७॥
भोजनं साधवे दद्यात् सत्संगो भोजनात्मकः ।
दुग्धं दधि घृतं दद्यात् सत्संगः स रसात्मकः ॥१८॥
वस्त्रं च कम्बलं दद्यात् सत्संगश्चाऽम्बरात्मकः ।
छत्रं दद्याच्चामरं च सत्संगः करणात्मकः ॥१९॥
पात्रं शय्यां प्रदद्याच्च सत्संगः शयनात्मकः ।
गृहं सौधं प्रदद्याच्च सत्संगो भवनात्मकः ॥२०॥
यानं दद्याद्विमानं च सत्संगो वाहनात्मकः ।
अन्नं शाकं फलं दद्यात् सत्संगस्तर्पणात्मकः ॥२१॥
जलं दद्यात् स्नपयेच्च सत्संगः स्नाननामकः ।
साधुं शृंगारयेत् पुष्पैः सत्संगो भूषणात्मकः ॥२२॥
साधुं चावाहयेद्ग्रामे गृहे वाद्यैः प्रपूजयेत् ।
भ्रामयेद् ग्राममध्ये च सत्सङ्गश्चोत्सवात्मकः ॥२३॥
उपदेशं धारयेच्च सत्सङ्गो बोधनात्मकः ।
द्रव्यं समर्पयेत्तस्मै सत्सङ्गः स धनात्मकः ॥२४॥
इष्टदानैस्तोषयेच्च सत्सङ्गस्तोषणात्मकः ।
आशीर्वादान् लभेत् साधोः सत्सङ्गः स वरात्मकः ॥२५॥
औषधादि दिशेत् तस्मै सत्सङ्गः स निरामयः ।
समिदादि दिशेद् यज्ञे सत्सङ्गः समिदात्मकः ॥२६॥
अध्यापयेत्तु साधून् वै सत्सङ्गोऽध्यापनात्मकः ।
ब्रह्मविद्यामर्जयेच्च सत्सङ्गो ब्रह्मबुद्धिदः ॥२७॥
ध्यायेत् साधुं च मां नित्यं सत्सङ्गो ध्यानयोगदः ।
कीर्तयेच्छ्रीहरिं साधून् सत्सङ्गः कीर्तनात्मकः ॥२८॥
साध्वर्थे सर्वशः कुर्यात् सत्सङ्गो निर्गुणो हि सः ।
साधुरेव हरिर्यस्य तस्य कार्यं न विद्यते ॥२९॥
एवं सतां सेवनेन सत्सङ्गेन ममाऽङ्गने ! ।
मोक्षः करे स्थितो बोध्यः कर्तव्यं नाऽस्य शिष्यते ॥३०॥

शृणुतं भावनां साधुजने गुरौ यथायथम् ।
कर्तव्यविधिना सम्यक् कृतां संवर्णयामि वाम् ॥३१॥
साधुं दिव्यं विजानीयाद् ब्रह्ममूर्तिममायिकम् ।
पावनं पुण्यमूर्तिं च निर्लेपं पुरुषोत्तमम् ॥३२॥
साधुपादरजः पुण्यं साधुवस्त्रं च पावनम् ।
साधुसेव्यं समस्तं वै पावनं चाप्यमायिकम् ॥३३॥
साधुस्पर्शः पावनोऽस्ति साधुभुक्तं हि पावनम् ।
जलान्नफलपुष्पादिः प्रसादः पावनः सताम् ॥३४॥
साध्वासनं पवित्रं च पादुके पावने सताम् ।
सर्वोपकरणाद्यं च पावनं सर्वथा सताम् ॥३५॥
साधोर्दन्ता नखाः केशाः पावनाः पापनाशकाः ।
साध्वाश्लेषः पावनो वै सर्वाऽभिचारनाशनः ॥३६॥
उपाध्याधिव्याधिनाशकरः साधोः समागमः ।
साध्वाश्रमो महत्तीर्थं साध्वाश्रयश्च पावनः ॥३७॥
साधूनां वसतिर्दिव्या महावैकुण्ठशालिनी ।
साध्वागमः स्वस्तिदाता श्रेयसां वर्षकः सुखः ॥३८॥
कल्याणशेवधिः साधोः प्रसन्नता तु सेवया ।
साधोः स्नेहो ब्रह्मलाभप्रदः प्रीतिः प्रमोक्षदा ॥३९॥
सर्वानन्दप्रदा साधोः सङ्गतिर्भयवर्जिता ।
कालमायापापकर्मशत्रुयाम्यभयापहा ॥४०॥
साधोः शिखान्ते विरजा नदी गोलोकजाऽस्ति वै ।
शिखामूले ब्रह्महृदोऽक्षरस्थो राजते सदा ॥४१॥
ब्रह्मरन्ध्रेऽक्षरं धाम गोलोको मस्तकेऽस्ति च ।
वैकुण्ठं तु ललाटेऽस्ति भालमध्ये रमापुरम् ॥४२॥
भालान्तयोरमृताऽव्याकृतधामद्वयं स्थितम् ।
कर्णयोस्तु महाविष्णुवैराजौ द्वाववस्थितौ ॥४३॥
नेत्रयोः सूर्यचन्द्रौ च गण्डयोर्वै भ्रुवद्वयम् ।
नासायां मरुतो देवा मुखे नारायणः स्वयम् ॥४४॥
ओष्ठयोरमृतं दिव्यं मिष्टमानन्दसंभृतम् ।
जिह्वायां सर्ववेदाश्च मुखगर्भेऽग्निदेवता ॥४५॥
शब्दे वाणी शारदाश्रीः रूपे लक्ष्मीर्हि कन्धरे ।
कण्ठे सर्वा ब्रह्मविद्या हृदये ब्रह्म शाश्वतम् ॥४६॥
चेतनेऽहं परब्रह्म संकल्पे कृष्णदेवता ।
वक्षसि धर्मदेवश्च पृष्ठे पितरो देवताः ॥४७॥
पार्श्वयोर्ब्रह्मरुद्रौ च विष्णुरुरसि तिष्ठति ।
उदरे चान्नपूर्णाऽस्ति नाभौ स्वर्गं सुरालयम् ॥४८॥
जघने श्रीगणेशश्च गुते चैश्वर्यकोटयः ।
कट्यां पृथिवी द्यावद्री चास्तोदयौ नितम्बयोः ॥४९॥

स्कन्धयोरनिरुद्धश्च प्रद्युम्नश्चेति तावुभौ ।
भ्रुवोः संकर्षणो वासुदेवो भ्रूमध्यगः सताम् ॥५०॥
भुजयोस्तु दिशां पाला लोकपालास्तु हस्तयोः ।
हस्ततलयोः श्रीर्भूश्च विभूतयोऽङ्गुलिष्वपि ॥५१॥
नखेषु तारकाः सन्ति ग्रहा वसन्ति पर्वसु ।
सर्वरोमसु तीर्थानि वसन्ति साधुविग्रहे ॥५२॥
वचने कामगावश्च चिन्तामणयश्चिन्तने ।
कल्पद्रुमा ह्यनुवृत्तौ सौहृदे कल्पवल्लयः ॥५३॥
नाडीषु तीर्थसरितः सरोवराणि कुक्षिषु ।
आन्त्रेषु काश्यपाः सर्वे वसन्ति साधुविग्रहे ॥५४॥
सक्थ्नोः शिलादप्रह्लादौ जानुनोर्बलिवामनौ ।
जंघयोर्नागलोकाश्च पादयोः शेषकच्छपौ ॥५५॥
शक्तयः सन्ति सर्वेषु सन्धिषु साधुविग्रहे ।
मुक्ता धातुषु वर्तन्ते पार्षदाः साधुसत्कृतौ ॥५६॥
सिद्धयो धारणायां च साधोर्ध्याने हरिस्त्वहम् ।
साधुतादात्म्यवासोऽस्मि भगवान् पुरुषोत्तमः ॥५७॥
अनादिश्रीकृष्णनारायणो राजे हि साधुषु ।
अङ्गने साधुमूर्तौ न त्यागभागी कथंचन ॥५८॥
एवं तु भावयेत् साधुं तथैव सेवयेत् सदा ।
सर्वं समर्पयेद् यस्तु तस्य मोक्षः करे स्थितः ॥५९॥
साध्विके ! भावयित्वैवं पूजयेत् सेवयेत् सतः ।
प्रातः प्रबोधसमये देहसंवाहनं चरेत् ॥६०॥
उत्थिताय जलं दद्याद् दन्तधावनमर्पयेत् ।
जलपात्रं प्रदद्याच्च देहशौचार्थमित्यपि ॥६१॥
हस्तशौचं कारयेच्च पात्रशुद्धिं विधापयेत् ।
यथेष्टवारिभिर्दिव्यैस्तीर्थजलैः सुगन्धितैः ॥६२॥
स्नानमालेपनपूर्वं कारयेच्चान्दनैर्जलैः ।
सुगन्धितैलसम्मिश्रैः स्नापयेत्तिलचूर्णकैः ॥६३॥
आमलकादिचूर्णैश्च मर्दयेत् साधुविग्रहम् ।
दुग्धेन स्नापयेच्चापि परं शुद्धजलैरपि ॥६४॥
वस्त्रैः सम्मार्जयेद् देहं सुगन्धं प्रोक्षयेत्तथा ।
वस्त्राधानं भूषणानि शृंगारं मालिकादिभिः ॥६५॥
पुष्पैः सौभाग्यचूर्णैश्च कुंकुमाऽक्षतचन्दनैः ।
कारयेच्च ततो धूपं दीपं तिलकं चन्द्रकम् ॥६६॥
कारयेद् रङ्गरूपाद्यैः रंजयेत् साधुविग्रहम् ।
कज्जलं नेत्रयोर्दद्यात् केशेषु तैलमित्यपि ॥६७॥
आसनं पट्टिकाद्यं च सिंहासनं सतेऽर्पयेत् ।
आवाहनं च पाद्यं चाऽऽचमनीयं तथाऽर्पयेत् ॥६८॥

अर्घ्यं च मधुपर्कं च दद्यात् श्रीसाधवे रसान् ।
नैवेद्यं च जलं ताम्बूलकं फलं दलं दिशेत् ॥६९॥
यज्ञोपवीतकं दद्यान्मेखलां योगपट्टकम् ।
कम्बलं नक्तकं दद्यात्पुष्पगुच्छं करेऽर्पयेत् ॥७०॥
नैवेद्यं भोजनं मिष्टं सुगन्धं भक्ष्यमित्यपि ।
दुग्धसारं क्षीरमिष्टं पूरिकाः प्रार्पयेद् दधि ॥७१॥
तक्रं जलं प्रार्पयेच्च मुखवासं तथाऽर्पयेत् ।
पर्यंकं वाहनं यानं पादुके छत्रमर्पयेत् ॥७२॥
शय्यां दद्यात् स्वापयेच्च पवनं प्रार्पयेत्तथा ।
पादसंवाहनं देहमर्दनं दास्यमाचरेत् ॥७३॥
यद्यदपेक्षितं दद्याद् दैहिकं मानसं च वा ।
प्रकाशं चाऽप्रकाशं च यदिच्छेत्तत्प्रपूरयेत् ॥७४॥
एवं कुर्यात् सतां सेवां पावनीं श्रीप्रदां तदा ।
हरिः साक्षात् पूजितोऽहं तेनेयं सृष्टिरर्चिता ॥७५॥
सर्वं पुण्यं कृतं तेन तीर्थं सर्वं कृतं तथा ।
साधुपादजलं दिव्यं पिबेत् तीर्थादिपावनम् ॥७६॥
सर्वं तीर्थं व्रतं दानं कृतं तेन तु सेवया ।
साधुः प्रसादितो येन तेन कृष्णः प्रसादितः ॥७७॥
कृष्णः प्रसादितो येन ब्रह्मधाम्नि स मोदते ।
परानन्दमयो भूत्वा सर्वान् कामान् समश्नुते ॥७८॥
साधुतोषणकाच्छ्रेष्ठं तुल्यं वा साधनं परम् ।
विद्यते नैव सरलं मोक्षार्थे गृहिणां भुवि ॥७९॥
सर्वपापहराः सन्तो हरिशीलपरा यतः ।
ब्रह्मव्रतपरा यस्मान्महाभागवता यतः ॥८०॥
निबोधत प्रिये पत्न्यौ ! गृही यथा तु तोषयेत् ।
पत्न्यै सर्वं प्रदायैव यथा पत्नीं प्रतोषयेत् ॥८१॥
पुत्रं पुत्रीं यथा प्रतोषयेद् गृही तदिष्टदः ।
तथा साधुं प्रदायैव तोषयेदभिवाञ्छितम् ॥८२॥
भ्रात्रे पित्रे पतये च प्रदायैव यथा गृही ।
इष्टं सते तथा दत्वा तोषयेत् सन्तमन्वहम् ॥८३॥
महीमानार्थमेवाऽयं गृही याद्दव्ययं बहुम् ।
करोति तु तथा कुर्यात् सतामर्थे स मोक्षभाग् ॥८४॥
सते पौष्पं समुकुटं दद्यान्मूर्ध्नि सुशोभनम् ।
साधवे प्रच्छदपटीं दद्यात् पौष्पीं च सूत्रजाम् ॥८५॥
बध्नीयात् पुष्पकटकान् भुजयोश्च प्रकोष्ठयोः ।
आरात्रिकं प्रकुर्वीत बहुवर्तिसमन्वितम् ॥८६॥
प्रदक्षिणं प्रकुर्याच्च कुर्याच्च दण्डवन्मुदा ।
पादयोर्मस्तकं दद्यान्मूर्ध्नि हस्तौ निधापयेत् ॥८७॥
सतां प्रसादं भुञ्जीताऽऽशीर्वादान् धारयेच्छुभान् ।
पुष्पाञ्जलिं सते दद्याद् दानं यथेष्टमर्पयेत् ॥८८॥
एवं श्रीललने ! साधोः सेवया गृहधर्मिणाम् ।
सत्संगस्य बलात् सर्वाऽघानि नश्यन्ति सर्वथा ॥८९॥
सतां पुण्यं लभेतापि सम्पत्प्रदं प्रमोक्षदम् ।
प्रार्थयेत्तु सतः साध्वीः क्षमापयेत्तदग्रतः ॥९०॥
कृपासिन्धो दयासिन्धो शरणागतवत्सल ।
साधो असाधुलोकानामस्माकं शरणं भवान् ॥९१॥
न साधनानि जानामि न पुण्यानि करोम्यपि ।
नाऽऽराधनं पापहं च मोक्षदं साधनं न च ॥९२॥
अगतीनां गतिस्त्वं मे भवाऽरण्येऽतिदुर्गमे ।
संसारसागरे नौका तारयित्री प्रवर्तसे ॥९३॥
सर्वपापविनाशार्थं मुक्त्यर्थं सुखहेतवे ।
साधो कृष्णस्वरूपोऽसि त्वां प्रपद्ये हरेस्तनुम् ॥९४॥
वयं नित्यं पतिताः स्मो घोरे संसारकर्दमे ।
प्रक्षाल्य नः समुद्धर्तुं समर्थोऽसि समुद्धर ॥९५॥
पूजने सेवने साधो न्यूनं वा क्रमवर्जितम् ।
मानहीनं च वा यत्तत् क्षमस्व शरणंजुषम् ॥९६॥
ओं नमो गुरुदेवाय साधवे परमात्मने ।
अस्मद्दैवतरूपायोद्धारकर्त्रे मुहुर्नमः ॥९७॥
इत्यभ्यर्घ्य नमस्कृत्य समर्प्य गुरुदक्षिणाम् ।
विसर्जयेत् सदाऽस्मत्सु प्रसन्नो भव तापस ॥९८॥
आयाहि नित्यमेवात्र पूजां गृहाण मामकीम् ।
भुक्तिं मुक्तिं च सम्पत्तिं प्रदेहि मे कृपां कुरु ॥९९॥
इतिविसर्जितं साधुं चिन्तयेद्धरिरूपिणम् ।
एवं साधुव्रतेनापि साध्व्यौ ! मोक्षः करे स्थितः ॥१००॥
अन्तकाले साधुभक्ता यान्ति साधुभिरेव ते ।
अक्षरं परमं धाम दिव्यं विमानगैः सह ॥१०१॥
नरो नारी सतः साध्व्या एवं पूजनमाचरेत् ।
वर्षे वर्षे च मासे वा सर्वान् कामानवाप्नुयात् ॥१०२॥
यत्र साधोश्चरणं तद्गृहं गोलोकसद्मम् ।
साधुभक्ताः पार्षदास्ते नार्यो मुक्तानिकास्तु ताः ॥१०३॥
पठनाच्छ्रवणादस्य साधुपूजाफलं भवेत् ।
अन्ते भक्त्या लभेतापि ब्रह्मधाम न संशयः ॥१०४॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने गृहगीतायां सर्वधर्मकर्मादिहीनानां गृहिणां परमं मोक्षस्य साधनं साधुसत्संगतिरित्यादिनिरूपणनामैकनवतितमोऽध्यायः ॥ ९१ ॥

श्रीमाधवोपाह्वौ प्रोचतुः—

भगवन् करुणासिन्धो कृष्णनारायणप्रभो ।
स्वः सञ्जाते कृतकृत्ये माहात्म्यश्रवणात् सताम् ॥ १ ॥
अथाऽनादिकृष्णनारायणश्रीकृष्णमाधव !
कर्तुमीहामहे सर्वा भवजन्यजयन्तिकाम् ॥ २ ॥
आज्ञां देहि पते स्वामिन् सर्वाः कुर्मो महोत्सवम् ।
अपूर्वमुत्सवं वीक्ष्य जीवानां मोक्षणं भवेत् ॥ ३ ॥

श्रीश्वेतायनव्यास उवाच—

मुनयोऽनादिकृष्णश्रीनारायणस्तदर्थनाम् ।
गृहीत्वाऽऽज्ञां ददौ कर्तुं ताभ्यः स्वाऽऽविर्भावोत्सवम् ॥ ४ ॥
द्वाविंशतितमे जन्मवत्सरे कार्तिकेऽसिते ।
आद्ये दलेऽष्टमी प्राप्ता तज्जयंत्सर्वसिद्धये ॥ ५ ॥
श्रीमद्गोपालकृष्णस्तु पिता मण्डपमुत्तमम् ।
कल्पयामास सहसा सौवर्णं राजतं शुभम् ॥ ६ ॥
विशालं योजनायामं पद्ममण्डपमित्यपि ।
गजासनं च सौवर्णमण्डपे सन्न्यधाद्धरेः ॥ ७ ॥
लोमशो हवनार्थं वै कुण्डं चाकारयत्तथा ।
समग्रोपकरणादि साधयामास लोमशः ॥ ८ ॥
ब्रह्मप्रियाद्याः प्रमदाः पक्वान्नानि प्रचक्रिरे ।
पद्मावतीप्रियाद्याश्च हरिप्रियास्तथाऽपराः ॥ ९ ॥
मण्डपेऽथ समाजस्योपवेशनानि सर्वशः ।
कल्पयामास भगवान् ज्येष्ठो भ्राता हरेस्तदा ॥१०॥
शुको भ्राता द्वितीयश्च स्वागतार्थं स्थितोऽभवत् ।
सन्तुष्टाद्याः कुमार्यश्च देवीनां स्वागतं व्यधुः ॥११॥
आययुः सर्वलोकेभ्यो धिष्ण्यपाः स्वविमानकैः ।
ऊर्जकृष्णाष्टमीप्रातः कृष्णाशीर्वादहेतवे ॥१२॥
योगेशा ! ब्राह्मसमयेऽवाद्यन्त वाद्यकोटयः ।
मंगलानि च नारीणां कीर्तनान्यभवन् प्रगे ॥१३॥
विप्राणां वेदघोषाश्चाऽभवन्नाशीःपरायणाः ।
गीतयश्चाप्सरसां च सनृत्याः परितोऽभवन् ॥१४॥
गन्धर्वाणां किन्नराणां किंपुंसां गायनानि च ।
सूतमागधबन्दीनां वन्दनानि शुभानि च ॥१५॥
काव्योत्तमानि च कविवर्याणामभवंस्तदा ।
विद्याध्राणां चारणानामासन् कथानकानि च ॥१६॥
पण्डितानां नाटकानि सतानां कीर्तनानि च ।
नामधून्यानि साध्वीनां चासन् जयन्तिकोत्सवे ॥१७॥
नैष्ठिकाः ! श्रीहरिः प्रातर्योगनिद्रां विहाय च ।
दिव्यवाद्यादिघोषादीन् शृण्वन् सस्नौ सरोजलैः ॥१८॥
दधार वेषं सुभगं भूषाः शृंगारकाणि च ।
सुगन्धानि सर्वस्वस्तिचन्द्रकः शुशुभे हरिः ॥१९॥
माताश्रीकम्भरालक्ष्मीः पुत्रस्य तिलकं व्यधात् ।
चन्द्रकं कौंकुमं चापि चान्दनं केसरान्वितम् ॥२०॥
सन्तुष्टा भगिनी भालेऽक्षतबिन्दुं व्यधाद्धरे ।
पिता मालां ददौ पुत्रकण्ठे स्वर्णमणिस्रजम् ॥२१॥
अथैवं शोभितः कृष्णो मण्डपं समुपाययौ ।
लोमशश्चाययौ तत्र पूजोपकरणान्वितः ॥२२॥
सर्वैर्नमस्कृतस्तूर्णं वाचयामास मंगलम् ।
पुण्याहं स्वस्ति चैवापि गणेशपूजनं ततः ॥२३॥
देहशुद्धिं प्रोक्षणं च तिलकं चन्द्रकं हरेः ।
भाले चकार ऋषिराडाशीर्वादान् ददौ ततः ॥२४॥
पुष्पहारं गले रम्यं ददौ कृष्णस्य लोमशः ।
ततो माता पिता भाले बान्धवाश्च कुटुम्बिनः ॥२५॥
तिलकं साक्षतं चक्रुर्यवांकुराणि कर्णयोः ।
ददुश्चाशीर्वादवाणीं ततो ब्रह्मा ह्युपाययौ ॥२६॥
कृत्वा तु तिलकं हारं गले दत्वा स्तुतिं व्यधात् ।
नमस्कृत्याऽऽसनं प्राप विष्णुस्तत उपाययौ ॥२७॥
हारं च मुकुटं दिव्यं कुण्डले कौस्तुभं मणिम् ।
दत्वा ननाम च ततः शंभुरुपाययौ हरिम् ॥२८॥
नत्वा दत्वा पुष्पमालां चक्रे भाले सुचन्द्रकम् ।
इन्द्रादयस्ततो देवाः सिद्धाश्च साधवोऽमलाः ॥२९॥
सनकाद्या भवन्तः श्रीहरिं पुपूजुरादरात् ।
नारदाद्याः ऋषयश्च सूर्याद्यास्तिलकं व्यधुः ॥३०॥
लोकपालाश्च पितरो गन्धर्वाः किन्नरास्तथा ।
किंपुमांसो मानवाश्च विप्राः सन्तो जलेशयाः ॥३१॥
तीर्थानि सागरा नद्यो वृक्षाश्च विरुधोऽपि च ।
देवा दैत्या दानवाश्च भक्ताः सूताश्च मागधाः ॥३२॥
चारणा वैष्णवाश्चान्ये शैवा गणाश्च पार्षदाः ।
अप्सरसो देवताश्च देव्यः साध्व्यश्च योगिनः ॥३३॥
योगिन्यो गणिकावृन्दा भक्तानिकाश्च योषितः ।
वर्णाश्रमा नरा नार्यो यक्षा रक्षांसि वन्दिनः ॥३४॥
विद्याधराश्च विद्वांसो कृष्णमानर्चुरुत्सुकाः ।
नागा यादांसि च जरायुजाश्च स्वेदजाश्च ये ॥३५॥
दिव्या दिव्यवपुष्मन्तः पुपूजुः परमेश्वरम् ।
आरार्त्रिकं महामुक्ताश्चक्रुर्मुक्तानिकास्तदा ॥३६॥

अभिषेकं ततो नद्यः पादयोश्चक्रुरुत्सवे ।
उपदाश्च ददुः सर्वे महीमानोत्तमाः सुराः ॥३७॥
चिरं जीवाऽव नः कृष्ण क्षेमं च कुशलं तव ।
आरोग्यं च धनं सम्पन्महैश्वर्याणि सन्तु ते ॥३८॥
शरण्यत्वं दयालुत्वं मोक्षदत्वं सदास्तु ते ।
वंशविस्तारवत्त्वं च देवाधिदेवराजता ॥३९॥
सौख्यं सर्वविधं तेऽस्तु सर्वानन्दादिशेवधेः ।
एवमाशीर्वादवाणीश्चाहुः सुरादयस्तथा ॥४०॥
लोमशः स्वागतं मानं धन्यवादान् ददौ तदा ।
ब्रह्मप्रियाः समस्ताश्च हरिप्रियाश्च योषितः ॥४१॥
राधारमाश्रीकमलावृन्दापार्वतीप्रियाः ।
माणिकीसुखदालक्ष्मीभूलीलाभूतिशारदाः ॥४२॥
सावित्रीपार्वतीसंज्ञागायत्रीभगवत्प्रियाः ।
देव्यस्तथेश्वरपत्न्योऽवतारिण्योऽपराः स्त्रियः ॥४३॥
पुपूजुः परमात्मानं भालेऽस्य तिलकं व्यधुः ।
वृद्धयञ्जलिं दुःखनाशाञ्जलिं जगृहुरादरात् ॥४४॥
पुष्पाऽक्षताऽञ्जलीन् कृष्णे निदधुर्जगदुर्हरिम् ।
चिरं जीव सतीसाध्वीशक्तीशानन्ददो भव ॥४५॥
सम्पत्प्रदो मोक्षदश्च नो ह्रस्वविचलो वस ।
एवमाशीर्ददुस्तस्मै कृष्णनारायणाय ताः ॥४६॥
आरार्त्रिकं च ताश्चक्रुर्जलं पपुश्च पादयोः ।
हरिस्ततो नरान्नारीर्नमश्चक्रे समुत्थितः ॥४७॥
वर्धितोऽहं महाभाग्यैर्नमामि परमेश्वरान् ।
गुरून् वृद्धान् मातृकाश्च देवीर्देवादिकान्मुहुः ॥४८॥
समागतान् कृपयाऽत्र मेऽर्थे तान्प्रणमाम्यहम् ।
सर्वे भवन्तु सुखिनो धिष्ण्यपाः सम्पदन्विताः ॥४९॥
वंशविस्तारवन्तश्च लोकधामाधिपास्तथा ।
निर्भया विमलानन्दभोगसम्पत्सुखोच्छ्रयाः ॥५०॥
इत्युक्त्वा श्रीकृष्णनारायणो राजन्निजासने ।
आहूय पूज्यवर्गांश्च प्रददौ बहुदानकम् ॥५१॥
सर्वसृष्ट्यधिपान् पूर्वं ददौ रत्नानि सर्वशः ।
ततः साधून् भूसुरांश्च सूतमागधबन्दिनः ॥५२॥
भिक्षुकान् बालिका बालान् योगिनश्च सतीजनान् ।
दासीर्दासांश्च भृत्यांश्च नरान्नारीः समस्तकान् ॥५३॥
नत्वा नत्वा महामूल्यं धनं तेभ्यो ददौ हरिः ।
यथायोग्यप्रसादांश्च भूषापात्राऽम्बराणि च ॥५४॥
ददौ चक्रे ततः कृष्णः सभाविसर्जनं द्रुतम् ।
अथ तेभ्यो भोजनानि विचित्राण्युत्तमानि च ॥५५॥
कारयामास भगवान् पिता माता च बान्धवाः ।
तर्पयामासुरीशाद्यान् मिष्टान्नजलपानकैः ॥५६॥
मुखवासप्रदानैश्च विश्रामासनदानकैः ।
सेवाभिर्विविधाभिश्च सत्कारैर्योग्यवर्तनैः ॥५७॥
बुभूजुर्देहिनस्तत्र जन्मजयन्तिकादिने ।
द्वाविंशतिवर्षसंख्येऽष्टम्यां त्रिलोकवासिनः ॥५८॥
मध्यान्होत्तरवेलायां प्रार्थयामासुरच्युतम् ।
निजलोकान् पावयितुं समागन्तुं हरिं तु ते ॥५९॥
तथाऽस्त्वेवं हरिः प्राह विससर्ज समाजकम् ।
विदाय प्राप्य ते सर्वे ययुर्लोकानजं विना ॥६०॥
ब्रह्मा तस्थौ गृहे तत्र कृष्णाज्ञया सुखेन वै ।
विमानैस्ते ययुः सर्वे मुदा स्वस्वालयान् प्रति ॥६१॥
अथाऽऽश्चर्यमभूत्तत्र शृणुतेदं मुनीश्वराः ! ।
वर्धमाननगरस्य राजा नाम्ना पुरञ्जनः ॥६२॥
आगतोऽभूज्जन्ममहोत्सवे चान्ये नृपा यथा ।
पुरञ्जनस्य वै रात्रौ स्वप्नमभूच्चिरायितम् ॥६३॥
कुंकुमवापिकाक्षेत्रे मुहूर्ते ब्राह्मपूर्वके ।
स्वप्ने ददर्श राजा स्वं पतितं ज्वलितानले ॥६४॥
निन्युस्तं विकराला वै दूता यमस्य दक्षिणाम् ।
याम्यपुरीं सर्वकर्मफलभोगार्थसंस्थिताम् ॥६५॥
धर्मराजो ददौ दण्डं वीक्ष्य पापानि भूभृतः ।
परवित्ताऽपत्यनारीहर्ता त्वं कालपाशकम् ॥६६॥
तामिस्रं घोरनरकं भुंक्ष्वेत्याह यमाधिपः ।
नरनारीवञ्चकस्त्वमन्धतामिस्रगो भव ॥६७॥
भूतद्रोहकरस्त्वं च हिंसको रौरवं व्रज ।
देहंभरो न दाता त्वं महारौरवगो भव ॥६८॥
पशुपक्षिप्राणहा त्वं कुम्भीपाकगतो भव ।
पितृविप्रब्रह्मध्रुक् त्वं कालसूत्रगतो भव ॥६९॥
पाषण्डपोषकस्त्वं वै संविशाऽसिदलं वनम् ।
अदण्ड्यदण्डकर्ता त्वं सूकराननके पत ॥७०॥
प्राणिव्यथाप्रदाता त्वमन्धकूपगतो भव ।
पञ्चयज्ञविहीनस्त्वं कृमिकुण्डगतो भव ॥७१॥
हिरण्यरत्नहर्ता त्वं सन्दंशे नरके पत ।
अगम्यागमकस्त्वं वै तिग्मसूर्म्यागतो भव ॥७२॥
पाषण्डपोषकस्त्वं वैतरण्यां पत सर्वथा ।
शौचाचारविहीनस्त्वं पूयकर्दमगो भव ॥७३॥
मृगयाव्यसनी त्वं वै याहि वैशसमुल्बणम् ।
अनृतार्थप्रवादी त्वं याह्यवीचिमधःशिराः ॥७४॥

मद्यपस्त्वं रक्तमद्याऽनलपानकरो भव ।
गुर्ववज्ञाविधाता त्वं क्षारकर्दमके पत ॥७५॥
सर्वोद्वेगकरस्त्वं वै दन्दशूकगतो भव ।
साध्वभ्यागतपूजाघ्नो वज्रतुण्डगतो भव ॥७६॥
एवमुक्त्वा यमो याम्यान्नृपं नेतुमुवाच ह ।
यमदूता ददौ दुःखं ताडनैश्छेदनैस्तथा ॥७७॥
घातनैर्वह्निदाहैश्च पेषणैः कर्तनैस्तथा ।
वह्निपानैर्विषदानैः क्षारपातनकैस्तथा ॥७८॥
गलरोधैश्चान्त्रकर्षैर्वज्रघातैर्मुहुर्मुहुः ।
कण्टकादौ गमनैश्चाकर्षणैः शस्त्रिभूतले ॥७९॥
ताम्रबन्धैर्ज्वालनैश्च पाशलम्बनकैस्तथा ।
खड्गपत्रप्रवासैश्च पूयशोणितपातनैः ॥८०॥
एवंविधानि दुःखानि भुक्त्वा स्वप्ने नृपश्चिरम् ।
निष्कासितो बहिश्चापि प्रवासितो विदायवान् ॥८१॥
आययौ स्वनिवासे वै वर्धमानपुरे हि सः ।
सम्मानितो नृपो लोकैर्महोत्साहैः प्रजादिभिः ॥८२॥
राज्यासने स्थितः पश्चाद् विश्रम्य च दिनान्तरे ।
यात्रार्थं प्रययौ कुंकुमवापीं कृष्णसन्निधौ ॥८३॥
जन्मजयन्तिकाहे वै तत्र कृत्वा महोत्सवम् ।
विदायं स ललाभापि तावन्निद्रोत्थितोऽभवत् ॥८४॥
शुशोच बहुधा राजा किमिदं स्वप्नमुल्बणम् ।
पृच्छामि परमात्मानं दृष्टं यत् तत् समस्तकम् ॥८५॥
राजा पुरञ्जयः शीघ्रं कृष्णनारायणाय वै ।
श्रावयामास वृत्तान्तं शोकं चकार वै क्षणम् ॥८६॥
अनादिश्रीहरिः प्राह राजँस्त्वं पापकृत् पुरा ।
पश्चाद् भक्तोऽसि जातोऽत्र महापापी पुराऽभवः ॥८७॥
सहस्रयुगपर्यन्तं पापफलं तवाऽभवत् ।
भोगाय यमलोके वै तत्सर्वं विलयं गतम् ॥८८॥
ममाश्रयेण वै राजन् यदंशः स्वप्नके त्वया ।
भुक्तः सर्वोऽपि रात्रौ वै न शेषं तव विद्यते ॥८९॥
अथाऽधुना मम मन्त्रं गृहाण शुद्धभावनः ।
मुक्तो भूत्वा प्रयास्येवाऽक्षरं धाम परं पदम् ॥९०॥
त्वमग्नौ पतितो राजन् नाऽऽयुष्यं तव विद्यते ।
अश्वपट्टसरःक्षेत्रे याहि धामाऽक्षरं मम ॥९१॥
इत्युक्त्वा श्रीकृष्णनारायणो मन्त्रं तु भूभृते ।
'ॐ नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥९२॥
ददौ वारि ददौ नैजं पादप्रक्षालनोद्भवम् ।
पपौ राजा पादजलं दिव्यदृष्टिर्बभूव ह ॥९३॥
मायापाराऽऽचारवाँश्चाऽभवत् करुणया हरेः ।
आचकर्ष समस्ता वै वृत्तिश्चेन्द्रियवाजिनाम् ॥९४॥
तूर्णं ब्रह्मस्थितो तिष्ठन् पुपूज परमेश्वरम् ।
ऋषीन् साधून् वैष्णवाँश्च नेमे परमभाववान् ॥९५॥
स्वभृत्यान् शिक्षणं दत्वा त्यक्त्वा तत्र कलेवरम् ।
आगतेन विमानेन दिव्येन मुक्तशोभिना ॥९६॥
ययौ धामाऽक्षरं शीघ्रं पश्यतां सर्वदेहिनाम् ।
भत्वा याम्यप्रदत्तान् वै दण्डान् सर्वेऽनुयायिनः ॥९७॥
तत्यजुर्भृत्यवर्गास्तं दूषणानि ह्यघानि च ।
जयकारोऽभवद् राज्ञश्चोर्ध्वंकृत्यं ततोऽभवत् ॥९८॥
भूपस्याऽनुचराः सर्वे मन्त्रं जगृहुरच्युतात् ।
नामधुन्यं जगृहुश्च कृष्णनारायणप्रभो ॥९९॥
बालकृष्णस्वामिकृष्णाऽनादिकृष्णप्रभो विभो ।
एवं धुन्यं प्रचक्रुस्ते ययुर्नैजं पुरं प्रति ॥१००॥
जगदुर्नृपमोक्षं च भेजुस्ततो हरिं प्रभुम् ।
इत्येवं वर्चुलं तत्राऽऽश्चर्यमभून्मयोदितम् ॥१०१॥
पठनाच्छ्रवणादस्य स्मरणान्मुक्तिभाग् भवेत् ।
मायां विहाय पापानि ब्रह्मलोकगतोऽभवत् ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीहरेर्द्वाविंशतितमां (?) जन्मजयन्तीदिनोत्सवः, वर्धमानपुरेशितुः पुरञ्जयनृपतेः स्वप्ने सर्वनरकभोगस्ततः शीघ्रं श्रीकृष्णनारायणस्वामिसन्निधौ मोक्षणं चेत्यादिनिरूपणनामा द्वानवतितमोऽध्यायः ॥ ९२ ॥

श्रीपद्मावतीप्रश्ने प्रोचतुः—

भक्तप्रियहरिकृष्णस्वामिन्नारायणप्रभो ।
ब्रह्मा पितामहः कस्माद् रक्षितोऽत्र स्वसन्निधौ ॥ १ ॥

श्रीकृष्णनारायण उवाच—

शर्करानगरेऽहं श्रीकृष्णनारायणो महे ।
देवेद्यपितृनागादीन् तेषां स्वीकृत्य चाऽर्थनाम् ॥ २ ॥
तेषां तेषां भवनानि ततश्चिद् गन्तुमाह तान् ।
तल्लक्ष्यीकृत्य भगवानियेषैतुमजाऽऽस्पदम् ॥ ३ ॥
सत्यलोकं प्रगन्तुं वै ब्रह्मणा सह कार्तिके ।
ब्रह्मणो मानसपूर्त्यै प्रारूरुधं निजान्तिके ॥ ४ ॥
ऊर्जकृष्णनवम्यां मां हरिं ब्रह्मा प्रणम्य तु ।
अपृच्छत् कारणं स्वस्य निरोधस्य सुखासने ॥ ५ ॥

अहं न्यवेदय तत्राऽस्मारयं च तदर्थनाम् ।
सर्वब्रह्मप्रियाहरिप्रियाद्याभिः सहैव ह ॥ ६ ॥
कृतप्रार्थनस्थानीशालयान् गन्तुं तु वेधसम् ।
ब्रह्मापि च कृपां लब्ध्वाऽतुष्यच्चातीव तत्क्षणम् ॥ ७ ॥
मह्यं न्यवेदयत्तत्र यथायोग्यं हितं निजम् ।
भगवन् सत्यलोके मे दीपोत्सवं विधापय ॥ ८ ॥
अन्नकूटान् दिव्यभोगानर्पयिष्यामि भावतः ।
सेवालाभो हि गायत्र्याः सावित्र्याश्च भविष्यति ॥ ९ ॥
सत्यवासिसमस्तानां तत्र सेवा भविष्यति ।
तवाऽङ्गनानां सर्वासां दर्शनं च भविष्यति ॥१०॥
यदिष्टं तत् त्वरं वै विधेहि भगवन् प्रभो ।
मत्प्रियेऽहं तदा कृष्णनारायणोऽगदं तमोम् ॥११॥
सुखीकृतवान् ब्रह्मोक्तं तस्मात् सज्जेऽद्य तिष्ठतम् ।
सर्वाभिश्चांऽगनाभिर्वै स्वस्त्रा सन्तुष्टया सह ॥१२॥
दासीभिः सेविकाभिश्च लोमशादिमहर्षिभिः ।
पार्षदैर्भृत्यवर्गैश्च सह सज्जो भवाम्यहम् ॥१३॥

श्रीश्वेतायनव्यास उवाच—

कृत्वा चैकादशीं कृष्णनारायणो जगत्प्रभुः ।
शतयोजनविस्तारं विमानं सूक्ष्मभावगम् ॥१४॥
वर्धयामास सहसा व्योम्नि सर्वाऽऽसनाऽर्हकम् ।
दिव्यं वैकुण्ठतुल्यं वै हिरण्यब्रह्मनामकम् ॥१५॥
सर्वर्द्धिसर्वभोगाढ्यं सर्वकामप्रपूरकम् ।
विमानेऽत्राऽनादिकृष्णोनारायणःश्रीवल्लभः ॥१६॥
निषसाद द्रुतं सर्वदासदासीप्रसेवितः ।
अथ हलहलाशब्दो यात्रार्थं चाऽऽज्ञया हरेः ॥१७॥
अभवत् कुंकुमवापीनगरेऽभित ऊर्ध्वगः ।
नार्यः समस्तवेषाढ्या नीतभूषाम्बरास्तथा ॥१८॥
सर्वशृङ्गारकरणा ह्यतिष्ठन् यानसन्निधौ ।
आज्ञां ददौ स तास्तूर्णं चारुरुहुर्विमानकम् ॥१९॥
श्रीहरिः स्वपितरौ सम्प्रणम्याऽपि विमानके ।
द्वितीयेन स्वरूपेण ब्रह्मणा लोमशेन च ॥२०॥
सद्भिः स्वपार्षदैः सर्वप्रियाभिः संव्यराजत ।
अथ वाद्यान्यवाद्यन्त पुष्पचन्दनवृष्टयः ॥२१॥
अम्बरादभवँस्तत्र जयनादास्ततोऽभवन् ।
अथ श्रीबदरी बद्रिकाश्रमे श्रीनरायणम् ॥२२॥
श्रुत्वा घोषान् दिव्यशक्त्या पप्रच्छ श्रीहरेः कथाम् ।
क्व यानादितदाऽऽह श्रीनरनारायणोऽपि ताम् ॥२३॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये कृष्णो द्वाविंशं स्वजनैर्महम् ।
कृत्वा पुरञ्जनमोक्षोत्तरं सत्यस्तरं प्रति ॥२४॥
गन्तुं सज्जोऽभवत्तत्र सेवका अपि सर्वशः ।
द्वादश्यां ते कृताहारा विमानस्थाः सरोवरम् ॥२५॥
वापीं क्षेत्राणि नत्वाऽपि नत्वा स्वद्विस्वरूपिणम् ।
नरा नार्यो हर्षयुक्ता यात्रार्थं निर्ययुर्हि खे ॥२६॥
विमानं जयनादैश्च सहितं चाऽम्बरेऽप्रगम् ।
शनैर्गतिपरं जातं विमुच्याऽश्राणि वै क्षणात् ॥२७॥
मनोवेगेन च भुवः स्वर्गं महर्जनं तपः ।
सत्यं प्राप मुहूर्तेन महाश्चर्यमभूद्धि तत् ॥२८॥
सर्वासां योषितां दासीदासानां वेगदर्शिनाम् ।
उद्घोषः सर्वतो जातो यात्रायां भगवान् ययौ ॥२९॥
सर्वलोकेषु सर्वत्र सा वार्ता प्रासरत् क्षणात् ।
योगिनो देवताश्चापि दिव्यशा विविदुः क्षणात् ॥३०॥
आययुः सत्यलोके ते हरिं नेतुं निजालयान् ।
क्रमात् कृष्णोऽपि तानाह समागन्तुं यथायथम् ॥३१॥
सत्यलोके तदा साध्वि ! सत्यलोकनिवासिनाम् ।
श्रीकृष्णस्याऽऽगमे जाते महानन्दो ह्यजायत ॥३२॥
स्वागतं सत्यलोकस्था ब्रह्मपुत्राः सनातनाः ।
सिद्धाः सनत्कुमाराद्यास्तथा सत्याधिकारिणः ॥३३॥
देवाश्चक्रुर्हरेस्तत्र वाद्यमालाऽर्हणादिभिः ।
फलाऽक्षतसुपुष्पाद्यैर्लाजासुगन्धिसद्द्रवैः ॥३४॥
ब्रह्मा ब्रह्मपुरीं सर्वां शृङ्गारशोभितां व्यधात् ।
सुगन्धिसिक्तमार्गां च ध्वजपताकिकोर्जिताम् ॥३५॥
सुवर्णकलशै रम्यां हारतोरणशोभिताम् ।
सत्याभिर्देविकाभिश्चसुवेषाभिरलंकृताम् ॥३६॥
मन्दिरागारसुन्यस्तस्वस्तिकादिविराजिताम् ।
कदलीस्तम्भशाखाढ्यगोपुरैः शोभितां तदा ॥३७॥
विमानैर्वाहनैर्देवैर्बहुभिः सङ्कुलाम् ।
विविधैर्दिव्यवाद्यैश्च नादितां सुमनोहराम् ॥३८॥
सत्यदेवैर्देविकाभिश्चाप्सरोभिरलंकृताम् ।
सिंहव्याघ्रहंसहस्तिमृगवेषितसैन्यिकाम् ॥३९॥
दिव्यकुसुमैर्गुच्छैश्च विकीरितां समन्ततः ।
दधिमांगल्यसंशोभदगारसौधराजिताम् ॥४०॥
कराऽऽत्ताऽक्षतपुष्पादिसिद्धाभिः सुप्रतीक्षिताम् ।
कृत्रिमोद्यानसंशोभत्वराऽऽवासशान्तिदाम् ॥४१॥
कामकल्पलतावृक्षमालाभिरभिराजिताम् ।
सत्यां ब्रह्मपुरीं कृष्णनारायणो हि वेधसा ॥४२॥

नीयमानश्चाविवेश वर्धितः पूजितः सुरैः ।
भ्रमित्वा श्रीहरिर्दीर्घां सत्यां वै लक्षयोजनाम् ॥४३॥
विमानं तु स्थिरीकृत्य हंसयानमुपाविशत् ।
ब्रह्मणो भवनं ब्रह्माऽनयच्छ्रीपरमेश्वरम् ॥४४॥
ब्रह्मा च ब्रह्मपुत्राश्च सनकाद्या महर्षयः ।
ऋभुश्च नारदाद्याश्च पुपूजुः परमेश्वरम् ॥४५॥
पादामृतं पपुश्चारात्रिकं चक्रुः समुत्सुकाः ।
हारान् भूषाश्चन्दनादि समर्प्य च ततोऽस्तुवन् ॥४६॥
पावितः सत्यलोकोऽयं भगवन् कृपया त्वया ।
सेवायां न समर्थाः स्म क्षमस्वाऽशक्तिमच्युत ॥४७॥
ब्रह्मा दिव्यसभायां च निन्ये श्रीपुरुषोत्तमम् ।
विश्रामं प्राप भगवान् भोजितश्चामृतादिभिः ॥४८॥
अथ सावित्रिकागायत्रिकासरस्वतीस्त्रियः ।
साध्व्यश्च सिद्धयश्चापि सुराण्यः कोटिशोऽपि च ॥४९॥
पुपूजुः श्रीहरिं तत्र तथा श्रीं माणिकीं रमाम् ।
लक्ष्मीं प्रभां पाद्मवतीं राधां च शारदां सतीम् ॥५०॥
कृष्णनारायणपत्नीः पूजयामासुरेव ताः ।
उपदा विविधाश्चापि ददुर्दिव्यास्तदुद्भवाः ॥५१॥
ततश्चारात्रिकं चक्रुर्भोजयामासुरीश्वरीः ।
ब्रह्मप्रियादिकाः सर्वा दासीर्दासान् समस्ततः ॥५२॥
विश्रान्तिमन्दिरेष्वेता ददुर्विश्रमणं तथा ।
सर्वप्रदानकैर्देव्यो भगवत्योऽर्हणां व्यधुः ॥५३॥
सेवां चक्रुर्महीमानयोषितां सर्वतोऽर्पणैः ।
ब्रह्माऽभवत् कृतकृत्यः साविच्याद्या मुदान्विताः ॥५४॥
सनकाद्याः साधवश्चाऽभवन् कृतार्थकास्तदा ।
बद्रिप्रिये ! ब्रह्मसत्ये क्षणमात्रं तु भूतले ॥५५॥
युगाऽयुतायते चापि मानवस्य कृते खलु ।
न तु योगवतां चापि भगवतां तथाविधा ॥५६॥
ईश्वराणां न च तथा सुतरां श्रीहरेर्नहि ।
काले दैर्घ्यं कृतं येन वामनत्वं कृतं तथा ॥५७॥
संकल्पाधीनमस्याऽस्ति का तत्र कालकल्पना ।
बद्रिप्रिये हरिकृष्णः प्रपूर्य ब्रह्मणो मनः ॥५८॥
ब्रह्मणाऽऽदिष्टदेवानां मन्दिरेषु ययौ ततः ।
सौधेषु सनकादीनां साधूनां प्रययौ पुरा ॥५९॥
ब्रह्मशीलव्रतानां च नैष्ठिकानां महात्मनाम् ।
सिद्धानामाश्रमश्रेष्ठेष्वपि नारायणो ययौ ॥६०॥
पूजितः साधुसंघैश्च ततो गृहिगृहाण्यपि ।
सत्यावसानिकदेवालयेषु भगवान् ययौ ॥६१॥
पूजितो वन्दितः सर्वैर्भोजितोऽमृतसद्रसैः ।
नीराजितो वर्धितश्चाऽऽययौ ब्रह्मालयं पुनः ॥६२॥
धनलक्ष्मीमहापूजां ब्रह्माद्याश्चक्रिरे ततः ।
त्रयोदश्यां चतुर्दश्यां कृष्णपूजां प्रचक्रिरे ॥६३॥
दीपावल्यां शारदाश्रीमहापूजां प्रचक्रिरे ।
कोटिसिद्धाः कोटिसन्तो नैष्ठिका ब्रह्मकोटिकाः ॥६४॥
ऋभुर्नीराजनं चक्रे ब्रह्माऽप्यपूजयन् मुदा ।
साविच्याद्याः सतीनार्यो लक्ष्मीपूजां प्रचक्रिरे ॥६५॥
दिव्यसारैरमृताद्यैरभिषेकं प्रचक्रिरे ।
शृङ्गाराणि समस्तानि समस्तभूषणानि च ॥६६॥
समस्तवेषसौभाग्यं लक्ष्म्या देव्याः प्रचक्रिरे ।
सत्यलोकं ब्रह्मदीपावलिकोटिसमुज्ज्वलम् ॥६७॥
चक्रिरे दीपनिवहैः पुण्यात्मकैः समस्ततः ।
नृतगीतमहामोदाऽमृतादिमिष्टभोजनैः ॥६८॥
महीमानमहानन्दं जनयामासुरीशिकाः ।
अन्नकूटोत्सवं ब्रह्मा चकार बहुवस्तुकम् ॥६९॥
सत्यलोकान्ननिवहान् पाचितान् सुसुधाभृतान् ।
मिष्टान्नानि समस्तानि क्षारान्नानि तथैव च ॥७०॥
रस्यान्नानि च भक्ष्याणि भोज्यानि विविधान्यपि ।
लेह्यानि रसयुक्तानि पेयानि विविधानि च ॥७१॥
आस्वाद्यानि समस्तानि चोष्याणि चोत्तमानि च ।
तिक्तमिष्टाम्ललकटूनि प्रवाहितानि यान्यपि ॥७२॥
सहायकानि सर्वाणि रूक्षशुष्काणि यानि च ।
भर्जितानि संस्कृतानि दिव्यगन्धरसानि च ॥७३॥
शाकपत्राणि रम्याणि भाजा भाजीः रसप्लुताः ।
कन्दमूलानि सर्वाणि फलपुष्पाणि यान्यपि ॥७४॥
उत्कृष्टोत्कृष्टरूपाणि सर्वकलाकृतानि च ।
स्वर्णपात्रेषु महास्थालेषु कोट्यर्बुदेषु च ॥७५॥
दिव्यभाजनवर्येषु कलशेषु जलानि च ।
साक्षात्फलानि पुष्पाणि बीजानि मञ्जरीस्तथा ॥७६॥
संस्कृत्य शिम्बिकाश्चापि न्यधुः श्रीहरिसन्निधौ ।
स्वर्णहंसासने राजत्कृष्णो ब्रह्मप्रियादिभिः ॥७७॥
बुभुजे ब्रह्मणाऽऽदिष्टः साविच्यादिभिरर्चितः ।
प्रशंस्याऽन्नानि भगवान् श्रीप्रज्ञामाधवीधवः ॥७८॥
गायत्र्याद्या ब्रह्मपत्न्यो व्यजनैः पवनं ददुः ।
साविच्याद्याः पुनस्तत्र परिवेषणमाचरन् ॥७९॥
हरिस्तृप्तो हरेः पत्न्यो दास्यो दासाश्च सेवकाः ।
साधवः पार्षदास्तृप्ताश्चुलुकं च व्यधुस्ततः ॥८०॥

वार्यमृतं पपुश्चापि मुखवासं च जगृहुः ।
ताम्बूलकं तु भगवान् सर्वाश्च श्रीहरिप्रियाः ॥८१॥
मुखवासानि चान्यानि दिव्यपूगीफलान्यपि ।
तथा सुगन्धिबीजानि शीतकणांश्च जगृहुः ॥८२॥
भुक्त्वोत्थाय हरिकृष्णो निषसाद महासने ।
ब्रह्मा च ब्रह्मपत्न्यश्च ब्रह्मपुत्रादयस्तथा ॥८३॥
प्रसादं श्रीहरेः सर्वे बुभुजिरेऽतिभावतः ।
सनकाद्याः ऋषयश्च ऋभ्वाद्या नैष्ठिकोत्तमाः ॥८४॥
सत्यः साध्व्यः शारदाद्या बुभुजिरे प्रसादकम् ।
ततः श्रीभगवान् सत्यलोकवासिभ्य आदरात् ॥८५॥
शरण्यः शरणे प्राप्तान् ददौ मन्त्रं निजं स्वयम् ।
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ॥८६॥
'ओं बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि ।
तन्नः श्रीशः प्रचोदयादि'ति मन्त्रं ददौ तथा ॥८७॥
सत्यलोके कोटिशोऽपि सिद्धाः साध्याश्च नैष्ठिकाः ।
पूर्वप्रपूर्वकल्पीयदेवाद्या न्यवसँश्च ये ॥८८॥
सर्वे ते वैष्णवा जाताः कृष्णनारायणाश्रिताः ।
देवा देव्यः समस्ता वै नामधुन्यं प्रचक्रिरे ॥८९॥
'कृष्णनारायणकृष्णनारायण नरायण ।
अनादिश्रीकृष्णनारायणस्वामिन् रमायण' ॥९०॥
इत्येवमुत्सवं ब्रह्मा चान्नकूटस्य संव्यधात् ।
दक्षाद्याः ब्रह्मपुत्राश्च नारदाद्या महर्षयः ॥९१॥
सत्यलोकगताः कृष्णप्रसादं जगृहुर्मुदा ।
नृत्यं च कीर्तनं चक्रुर्गान्धर्वा नारदादयः ॥९२॥
ब्रह्मसरसोऽप्सरसो व्यधुर्नृत्यानि वै मुदा ।
योगिनो यतयः सिद्धास्तापसा ब्रह्मचारिणः ॥९३॥
चक्रिरे नामधुन्यं च कृष्णनारायणप्रभोः ।
अपुनर्मारका देवाः सत्याः सत्यनिवासिनः ॥९४॥
पूजनं श्रीहरेश्चक्रुरागत्य ब्रह्ममन्दिरम् ।
प्रसादं जगृहुस्ते च मन्त्रं च जगृहुर्हरेः ॥९५॥
अथ श्रीमत्कृष्णनारायणः प्रसाद्य वेधसम् ।
विष्णुनाऽभिष्टुतः प्रायान्नारायणालयं ततः ॥९६॥
विष्णुलोकं विशालं वै प्राप्य विष्णोस्तु मन्दिरे ।
विष्णुना च श्रिया सर्वपार्षदैः कृतमुत्तमम् ॥९७॥
स्वागतं पूजनं दिव्यकौस्तुभाद्यर्पणं मुदा ।
जग्राहोर्जस्य पूर्णायां तिथौ पद्मावतीपतिः ॥९८॥
भोजनं च शुभं पानं प्राप्य पूजां श्रिया कृताम् ।
विमानेन ययौ ज्योतिर्मयं हरपुरं प्रभुः ॥९९॥
कोटिकोटिगणाऽभ्यक्तो हरो मुदितमानसः ।
अभ्याययौ हरिं चक्रे दण्डवत् गणकोटिभिः ॥१००॥
ज्योतिर्मये पुरे कृष्णं भ्रामयित्वा विमानगम् ।
नैजे स्वर्णालये निन्ये पुपूज पुष्परत्नकैः ॥१०१॥
आरात्रिकं चकारापि भोजयामास चाऽमृतम् ।
सर्वानुगयुतं कृष्णं सेवयामास शंकरः ॥१०२॥
गणा गणिकाः सत्यश्च श्रीसतीसहिता हरेः ।
लक्ष्म्यादीनां च शुश्रूषां चक्रिरे ह्यतिभावतः ॥१०३॥
हरिस्तेभ्यो ददौ मन्त्रं ताभ्यश्च नैजमुत्तमम् ।
वैष्णवान् संविधायैवाऽऽसाद्य पूजां ततः परम् ॥१०४॥
स्वयंभूमनुनाऽऽगत्याऽर्थितः कृष्णो ययौ सह ।
अर्चितः पूजितः सर्वसम्पद्भिर्वर्धितः प्रभुः ॥१०५॥
सेवितः शतरूपादिनारीभिः श्रीप्रमापतिः ।
प्रतोष्य तं मनुं चान्यमनूनामालयान् ययौ ॥१०६॥
सर्वे ते मनवः स्वस्वमन्दिरे चांगनायुतम् ।
अवस्थाप्य मनुं प्राप्य पुपूजुः सम्पदा हरिम् ॥१०७॥
मनूनां पत्निकाः कृष्णपत्नीः पुपूजुरादरात् ।
आरात्रिकं ततश्चक्रुर्भोजनानि व्यधुस्तथा ॥१०८॥
तेभ्यः प्रसन्नो भगवान् ददौ पादौ तु वक्षसि ।
प्रस्थापितस्ततः कृष्णो विमानेन निजेन तु ॥१०९॥
समाप्य भ्रमणं सत्ये तपोलोकमुपागमत् ।
बद्रीप्रिये ! मार्गशीर्षे सर्वस्ववर्गसंयुतः ॥११०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने ब्रह्मणाऽर्थितो भगवान् कोट्यर्बुदादिपत्न्यादिसहितः शतयोजनविमानेन सत्यलोकं ययौ, तत्र दीपोत्सवाऽन्नकूटादिमहोत्सवे ब्रह्मसिद्धयतिमनुप्रभृतिभिः पूजितो हरिस्तान् सुखयित्वा तपोलोकमाजगामेत्यादिनिरूपणनामा त्रिनवतितमोऽध्यायः ॥ ९३ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये प्रज्ञापारावतीश्वरः ।
तपोलोकं प्राजगाम तापसानां निवासनम् ॥ १ ॥
अर्यमादिकपितॄणां पुण्यस्थानं परं दिवम् ।
पूर्वकल्पोद्भवाः स्थानधिष्ण्याधिकारिणः सुराः ॥ २ ॥
अधिकारं समाप्यैव यत्र वसन्ति निर्भयाः ।
ऋषयो मुनयश्चापि पितरः श्रावणाश्च ये ॥ ३ ॥

याम्याः सम्वत्सराः कालाः कालाधिदेवताश्च याः ।
ये नैष्ठिकास्तापसाश्च वृद्धाः पुण्याभियोगिनः ॥ ४ ॥
वैराजाश्च तथा देवाः सर्वथा दाहवर्जिताः ।
प्राजापत्या देवताश्च सौम्या बर्हिषदस्तथा ॥ ५ ॥
अग्निष्वात्ताश्च काव्याश्च ऋतवः सोमपास्तथा ।
अष्टकापतयश्चापि लेखास्तथोष्मपा अपि ॥ ६ ॥
दिवाकीर्त्याश्च पितरश्छन्दजाः पितरस्तथा ।
श्राद्धदेवाश्च पितरो यज्वानोऽयोनिजास्तथा ॥ ७ ॥
ब्रह्मचर्येण तपसा यज्ञेन प्रजया तथा ।
श्रद्धया विद्यया दानैः श्रद्धायुक्तेन कर्मणा ॥ ८ ॥
परलोकगता ये ते यत्र वसन्ति तापसे ।
वारुणा भृगवश्चापि आग्नेयाऽऽङ्गिरसास्तथा ॥ ९ ॥
मारीचाश्चाऽऽत्रेयकाश्च पौलस्त्याः पौलहास्तथा ।
वाशिष्ठा वसवश्चापि ब्राह्मणः पितरश्च ते ॥१०॥
प्रजापतय एवैते यमो राजा प्रजापतिः ।
कार्दमाः काश्यपाः शैषा विक्रान्ताः सुश्रवादयः ॥११॥
बहुपुत्राः कुमाराश्च विवस्वन्तः शुचिश्रवाः ।
प्राचेतसोऽरिष्टनेमिर्बहुलाः पितरश्च ते ॥१२॥
कुशोच्चयाश्च पितरः प्राजापतय एव ते ।
वालखिल्यास्तथा वैखानसा अश्विसुतावुभौ ॥१३॥
एते सर्वे तपोलोके वसन्ति पुण्यभोगिनः ।
अनादिश्रीकृष्णनारायणं तत्र समागतम् ॥१४॥
विदित्वा चाऽर्यमा राजा कोटिसैन्यैश्च तापसैः ।
देवीभिर्मातृभिर्युक्तः कृष्णसन्निधिमाययौ ॥१५॥
आर्यम्णीं निजनगरीं शृंगारैः सर्वतोमुखीम् ।
प्रावेशयद्धरिं सर्वस्त्रीविमानसमन्वितम् ॥१६॥
महासौधे निजे सिंहासनेऽर्यमा न्यषादयत् ।
अपूजयद्धरिं रत्नैः पुष्पैः सुवर्णभूषणैः ॥१७॥
चन्दनाद्यैश्च पीयूषैरमृतैरक्षतादिभिः ।
अभोजयद्दिव्यभोगैर्भोज्याद्यैर्विविधैस्तथा ॥१८॥
आरार्त्रिकं चकारापि पापौ पादजलामृतम् ।
आर्यादेवी च तत्पत्नी राज्ञी पितृशरीरिणाम् ॥१९॥
पुपूज परमात्मानं तथा ब्रह्मप्रियादिकाः ।
भोजयामास सर्वास्ता आर्यादेवी हि मातृका ॥२०॥
अथ सौधे पौषमासे कृष्णोऽर्यम्णो वसँस्ततः ।
तपोलोकनिवासानानामालयेषु ययौ मुहुः ॥२१॥
महाश्वेतो वामदेवादयो ये तु महर्षयः ।
स्वस्वमन्दिरवर्येषु श्रीकृष्णमनयन्मुदा ॥२२॥
सर्वसार्थसहितं तं ह्यपूजयन् यथाधनम् ।
ब्रह्मसत्त्वायनाद्याश्च मुनयोऽप्यनयद्धरिम् ॥२३॥
यथाधनं च सत्कारं ह्यकुर्वन् भावसंभृताः ।
श्रवणाद्याः पितरश्च पितृराज्यकरा अपि ॥२४॥
सपत्नीकाः सपत्नीकं श्रीकृष्णं स्वगृहेऽनयन् ।
अपूजयन्नभोजयन् तथाऽशृंगारयन् प्रभुम् ॥२५॥
तथा याम्याः पितरश्च धर्मधनाख्यमुख्यकाः ।
सहस्रशो हरिं नीत्वा स्वालयेष्वभ्यपूजयन् ॥२६॥
तथा सम्वत्सरपरिवत्सराद्याश्च पितृकाः ।
स्वस्वकुटुम्बसहिताः स्वालयेष्वनयन् प्रभुम् ॥२७॥
अपूजयन् यथाद्रव्यं ह्यभोजयन् सुधात्मकम् ।
आरार्त्रिकं प्रचक्रुश्च ददुः स्वर्णमणीन् बहून् ॥२८॥
तथा कालाधिदेवाख्याः ऋतवो मासपक्षकाः ।
पितरः श्रीहरिं निन्युर्निजालये समाऽऽर्चयन् ॥२९॥
अथ ये नैष्ठिका वृद्धास्तापसाः पुण्यसञ्चयाः ।
पितरः पुण्यजननाऽभिधास्तेऽप्यनयन् हरिम् ॥३०॥
स्वस्वालयेषु विधिवत् पुपूजुः परमेश्वरम् ।
अथ वैराजदेवाश्च तपोलोकनिवासिनः ॥३१॥
स्वर्णदहनप्रमुखा निन्युर्नारायणं प्रभुम् ।
स्वस्वालयेषु विधिवद् राजाधिराजवत् प्रभुम् ॥३२॥
पूजयामासुरीशेशं मणिरत्नानि ते ददुः ।
अथ प्राजापत्यदेवास्तपोलोकनिवासिनः ॥३३॥
योगाहाराभिधाद्याश्च निन्युः पार्वतीप्रभुम्पतिम् ।
स्वस्वालयेषु देवेशं पुपूजुः परमादृताः ॥३४॥
आरार्त्रिकादिकं चक्रुर्भोजयामासुरच्युतम् ।
अथ सौम्याश्च पितरश्चान्द्रायणादिनामिनः ॥३५॥
निन्युः श्रीपरमात्मानं निजालयेषु भावतः ।
अमृताद्यैः समानर्चुर्भोजयामासुरमृतम् ॥३६॥
चन्द्रकान्तादिरत्नानि ददुः पूजाक्षणे च ते ।
अथ बर्हिषदाश्चापि पितरः कुशिकादयः ॥३७॥
स्वस्वालयेषु नाथं तं निन्युरानर्चुरुत्सुकाः ।
यथाधनं च सत्कारं प्रचक्रुर्भोजनादिभिः ॥३८॥
अथ ये पितरश्चाग्निष्वात्ताद्या भासुरादयः ।
निन्युर्नारायणं स्वस्वसौधेष्वानर्चुरच्युतम् ॥३९॥
पायसादीनि भोज्यानि ददुस्ते पावनानि वै ।
अथ ये काव्यपितरोऽपक्वभोजनरागिणः ॥४०॥
निन्युस्ते परमात्मानं स्वस्वालयेष्वपूजयन् ।
अथ सोमायनाद्याश्च सोमपाश्च सुधाशिनः ॥४१॥

निन्युस्ते श्रीहरिं स्वस्वालयेष्वानर्चुरुत्सुकाः ।
सुधाभोज्यानि रम्याणि कारयामासुरच्युतम् ॥४२॥
अथाऽष्टकापतयोऽपि तापसाः पितरोऽपि च ।
उत्तथ्यकायनाद्याश्च निन्युर्निजालये हरिम् ॥४३॥
पुपूजुर्भोजयामासुरारार्त्रिकादिकं व्यधुः ।
अथ लेखाश्च पितरो विप्रलीपादयो हरिम् ॥४४॥
निन्युर्निजाश्रमं हर्षादानर्चुश्चोपदा ददुः ।
भोजयामासुरत्यर्थे सेवयामासुरीश्वरम् ॥४५॥
अथोष्मपाश्च पितरः फेनिलेहादयो हरिम् ।
निन्युर्निजाश्रमेष्वेवाऽऽनर्चुः श्रीपुरुषोत्तमम् ॥४६॥
नवनीतादिभोज्यानि ददुस्ते च यथाधनम् ।
अथ ये तु दिवाकीर्त्याः पितरः ऋषिकादयः ॥४७॥
तेऽपि निन्युर्हरिं नैजालयेष्वानर्चुरुत्सुकाः ।
छन्दजाः पितरश्चापि निन्युरनुष्टुपादयः ॥४८॥
हरिं निजालयेष्वानर्चुः प्रभुं परमेश्वरम् ।
श्राद्धदेवाश्च पितरो निन्युः श्रीशं निजालयम् ॥४९॥
पुपूजुर्भोजयामासुरारार्त्रिकादिकं व्यधुः ।
यज्वानो भूभृतश्चापि चक्रवर्तिन एव ये ॥५०॥
तपोलोके स्थितास्तेऽपि निन्युर्नारायणं गृहे ।
पुपूजू राजयोग्यैश्च वस्तुभिर्बहुमानतः ॥५१॥
उपदाश्च ददुः श्रेष्ठा भोजयामासुरच्युतम् ।
वारुणा भार्गवाश्चापि आग्नेयाः पितरस्तथा ॥५२॥
आङ्गीरसाश्च मारीचा आत्रेयकाश्च तापसाः ।
पौलस्त्याः पौलहाश्चापि वाशिष्ठा वसवश्च ये ॥५३॥
भिन्नभिन्नाश्रमास्तेऽपि प्रजानां पतयोऽमलाः ।
निन्युः स्वस्वाश्रमेष्वेनं श्रीपतिं राधिकापतिम् ॥५४॥
तपोलोके तमानर्चुर्भोजयामासुरुत्सुकाः ।
यमः प्रजापतिश्चापि निनाय स्वालये प्रभुम् ॥५५॥
कार्दमाः काश्यपाः शैषा विक्रान्ताः सुश्रवादयः ।
बहुपुत्राश्च पितरः कुमाराः पितरोऽपि च ॥५६॥
प्राचेतसो विवस्वन्तोऽरिष्टनेमय इत्यपि ।
कुद्योषयाश्च पितरो निन्युर्नारायणेश्वरम् ॥५७॥
स्वस्वालयेषु चानर्चुरुपदाभिर्मुदान्विताः ।
भोजयामासुरत्यर्थे सेवयामासुरुत्सुकाः ॥५८॥
वाल्यखिल्याश्च ऋषयो वैखानसाश्च ये तथा ।
देववैद्यौ भगवन्तौ तथाऽन्ये तपआश्रिताः ॥५९॥
स्वस्वालयेषु देवीशं सपत्नीकं विमानकैः ।
निन्युरानर्चुरारार्त्रिकं व्यधुश्चोपदा ददुः ॥६०॥
भोजयामासुरुत्कृष्टाऽमृतान्नानि गृहे गृहे ।
भ्रामयामासुरीशेशं ग्रामे ग्रामे गृहे गृहे ॥६१॥
शयनासनभोगांश्च ददुस्ते गन्धिमालिकाः ।
भूषा वेषांश्च प्रददुर्मणिरत्नस्रगादिकम् ॥६२॥
पात्राऽऽसनाऽनर्घ्यश्रृङ्गारादि ददुर्यथायथम् ।
नवीनोपकरणानि ददुस्ते कमलेशिने ॥६३॥
आहारांश्च विहारांश्चार्पयामासुः परात्मने ।
पुण्योद्यानेषु वाटीषु वनारण्याद्रिभूमिषु ॥६४॥
निजराज्येषु सौधेषु प्रजासु वसतिष्वपि ।
भ्रामयित्वा सर्वराजं पावयामासुरुत्सुकाः ॥६५॥
पपुः पादामृतं ते ते तास्ताश्च योषितः शुभाः ।
भोजयित्वा हरिं तस्य प्रसादं लेभिरे स्त्रियः ॥६६॥
नैजं सौभाग्यमुत्कृष्टं धन्यं भाग्यं च मेनिरे ।
नारायणप्रसंगेन कृतकृत्या बभूविरे ॥६७॥
रामयामासुरीशेशं स्वस्वसम्पत्प्रदानकैः ।
सेवयामासुरत्यर्थे यथेष्टं शयनेश्वरम् ॥६८॥
प्राणेशं भोजयामासुरर्पयामासुरुत्तमम् ।
द्रव्यं धनं सुगन्धं च दिव्यं वेषं च भूषणम् ॥६९॥
कृष्णमान्दोलयामासुर्दोलासु बहुयोषितः ।
पादसंवाहनं चक्रुरंगानां मर्दनं तथा ॥७०॥
स्वस्वकलानां कौशल्यं दर्शयामासुरग्रतः ।
'ओं नमः श्रीकृष्णनारायणायस्वामिने स्वाहा' ॥७१॥
'बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि ।
तन्नः श्रीशः प्रचोदयादि'तिमन्त्रौ च जगृहुः ॥७२॥
'कृष्णनारायणकृष्णनारायण नरायण ।
अनादिश्रीकृष्णनारायणकान्त रमायण' ॥७३॥
एवं ते जगृहुर्नामधुन्यं श्रीमाधवीशितुः ।
मातरः श्रीरमालक्ष्मीप्रज्ञाऽर्हणां प्रचक्रिरे ॥७४॥
तथा देव्यो ब्रह्मनारीः पुपूजुश्चोपदान्विताः ।
नृत्यगीतोत्सवाँश्चक्रुः स्वाऽऽवासे यज्जनार्दनः ॥७५॥
सर्वार्पणं प्रचक्रुश्च ब्रह्मेशाय परात्मने ।
तुष्टुवुः श्रीजयाकान्तं नरा नार्यश्च तापसाः ॥७६॥
'नमः सर्वावताराणामवतारिपरात्मने ।
मुक्तानां मण्डलाऽऽवासायाऽपि मानुषवासिने ॥७७॥
कृपालवे सत्यलोकलाभदाय च ते नमः ।
नमस्तापसदेवाय तपोलोकाऽऽगताय ते ॥७८॥
नमो मोक्षप्रदात्रे ते नमः पितृप्रमोचिने ।
नमोऽनन्तस्वरूपायाऽनन्तशक्त्यभिशालिने ॥७९॥

नमो ब्रह्मप्रियाकान्तस्वरूपायान्तरात्मने ।
हरिप्रियाभिसेव्याय बालकृष्णाय ते नमः ॥८०॥
तपोलोकस्तपःप्राप्यस्तपःक्षये क्षयं व्रजेत् ।
तापसाश्च गतैश्वर्या नश्यन्ति भवसागरे ॥८१॥
हरिं विना न वै मुक्तिः सोऽयं भवानुपागतः ।
उद्धारय तपोलोकात् संसारसागरादितः ॥८२॥
पूर्वेषां कल्पकालानां पुण्यभाजो वयं त्विह ।
कृपया निवसामो हि यद्यपि श्रीभुजः सदा ॥८३॥
तथापि तव सान्निध्यं पादयोः पूजनं तु नः ।
कदापि प्राप्यते नैव नाऽवाऽऽप्येत कृपां विना ॥८४॥
स्वर्गसत्यान्तलोकानां निवासिनां तु सर्वथा ।
महापुण्यानि सन्त्येव केवलबन्धनानि हि ॥८५॥
नैव पुण्यफलं भोगमन्तराऽन्यत् प्रवर्तते ।
इयं तु करुणा तेऽत्र हरे यद् दर्शनं तव ॥८६॥
वरं तु भूतले जन्म यत्र कृष्णो ह्यवाप्यते ।
न दिनं तु विना कृष्णं साक्षात् पृथ्वीगतं क्वचित् ॥८७॥
अन्यलोकेष्वेकवारं समायास्यति गौरवात् ।
महाकार्यनिवहार्थे सर्वथा दृश्यसे नहि ॥८८॥
वरं भूतपिशाचादिजन्म देवर्षिपितृतः ।
यत्र क्वापि मिलेन्मुक्तिर्योगतः श्रीहरेः सताम् ॥८९॥
तदद्य भगवान् प्राप्तो दयाशेवधिरच्युतः ।
कुरु नः सर्वथा मोक्षमर्थयामो वरं त्वियम् ॥९०॥
शृणु बद्रीप्रिये देवि श्रुत्वा तेषां तदर्थनाम् ।
पुराणपितृनिवहान् आज्ञापेक्षकजीविनाम् ॥९१॥
पुराणातिपुराणानां मोक्षमियेष सत्वरम् ।
बद्रिके श्रीहरिस्तांश्च पाययामास चाऽमृतम् ॥९२॥
पादामृतं प्रसादादि भोजयामास सत्कृपः ।
तेषां वक्षःसु चरणौ ददौ बन्धहरौ सुखौ ॥९३॥
दिव्यताधायकौ रम्यौ राधालक्ष्म्यादिसेवितौ ।
ऊर्ध्वरेखान्वितौ रक्ततलौ च मृदुलावति ॥९४॥
अष्टकोणस्वस्तिकाभ्यां वज्रजम्बूजवांकुशैः ।
केतुपद्मसुचक्राद्यैर्युक्तं दक्षपदं शुभम् ॥९५॥
त्रिकोणकलशाभ्यां च गोपादमकराम्बरैः ।
धनुर्मीनाऽर्धचन्द्रैश्च मन्दिरचक्रकैर्युतम् ॥९६॥
वामपादं प्रवीक्ष्यापि तुष्टिं ते परमां ययुः ।
मस्तकेषु न्यधात् कृष्णनारायणः करद्वयम् ॥९७॥
कोमलं रक्ततलकं चन्द्रांशनखराजितम् ।
मीनध्वजधनुःस्वस्तियवशङ्खविराजितम् ॥९८॥
चतुश्चक्रमहादण्डशंखलेखादिशोभितम् ।
दक्षं करं हरेर्वीक्ष्याऽऽनन्दं परं हि लेभिरे ॥९९॥
वामं सुशोभनं रम्यं छत्रधेनुलतान्वितम् ।
निर्मीचक्रयुतं चक्रचतुष्टयाऽञ्जराजितम् ॥१००॥
शंखेन रेखितं मध्याऽङ्गुल्यग्रं वीक्ष्य ते तदा ।
दिव्यदृष्टियुता जाताः सदध्न लक्ष्मीं तु वामके ॥१०१॥
राधां तु जघने वीक्ष्य महानन्दं प्रपेदिरे ।
कृष्णस्य कृपया तूर्णं विसृज्य पितृपुत्तलान् ॥१०२॥
दिव्यदेहा अभवँश्च बहवः पितरस्तदा ।
मुक्ता मुक्तानिका जाताः पितरो मातरो गणाः ॥१०३॥
आययुश्च विमानानि मुक्तेरितानि धामतः ।
स्थित्वा निषद्य ते तेषु ययुर्धामाऽक्षरं हरेः ॥१०४॥
इत्येवं बद्रिके कृष्णनारायणो हि मोक्षणम् ।
दत्वा प्रसाद्य तान् तत्र निवसितान् प्रभाष्य च ॥१०५॥
अर्यमादिकृताऽर्चश्च विमानेन स्वयं प्रभुः ।
सर्वसार्थयुतः प्रस्थापितो जनं समाययौ ॥१०६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीहरिस्तपोलोकनिवासिनां पित्रादिदेवगणानां भवनेषु चार्यमादिकृतपूजां सम्प्राप्य पितॄणां मोक्षं कृत्वा जनलोकमाजगामेत्यादिनिरूपणनामा चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि भगवान् पौषमासके ।
जनलोकं साध्यदेवाश्रितं समाययौ ततः ॥ १ ॥
तत्र देवाः साध्यसंज्ञा जयाख्याः पितरस्तथा ।
यज्ञभाजः परदेवाः स्वागतं श्रीहरेर्व्यधुः ॥ २ ॥
ब्रह्मणो ये मुखाज्जाता जया देवाः प्रजेप्सवः ।
सर्वे मन्त्रशरीरास्ते हरेः स्वागतमाचरन् ॥ ३ ॥
दर्शाख्यः पूर्णमासाख्यो बृहद्यो रथन्तरः ।
चितिश्चापि विचित्तिश्च आकूतिः कूतिरित्यपि ॥ ४ ॥
विज्ञातश्च मनो यज्ञश्चैते जयाख्यदेवताः ।
यज्ञनारायणसौधे राजाधिराजशोभिते ॥ ५ ॥
यज्ञदेवो हरिं तत्र निवासं समकारयत् ।
पुपूज परया प्रीत्याऽऽरात्रिकं च व्यधात्तथा ॥ ६ ॥
भोजयामास पीयूषं सेवयामास भावतः ।
तुषिता नाम देवाश्च ततो निन्युर्निजालये ॥ ७ ॥

पुपूजुः परया प्रीत्या नीराजनं व्यधुर्हरेः ।
ततश्च हरयो देवा निन्युर्नारायणं प्रभुम् ॥ ८ ॥
आनर्चुर्बहुसम्पत्त्या भोजयामासुरच्युतम् ।
वैकुण्ठा नाम वै देवा जनलोकनिवासिनः ॥ ९ ॥
निन्युः स्वमन्दिरे कृष्णं पुपूजुः परमादृताः ।
हंसः प्राणः प्रभवश्चारार्त्रिकं श्रीहरेर्व्यधुः ॥१०॥
अष्टापि वसवः कृष्णं निन्युर्निजालयान् प्रति ।
धरो ध्रुवश्च सोमश्च आपश्चाप्यनिलोऽनलः ॥११॥
प्रत्यूषश्च प्रभासश्चाऽऽनर्चुः श्रीपुरुषोत्तमम् ।
मणिरत्नानि बहूनि प्रददुः परमात्मने ॥१२॥
अथ निन्युर्विश्वदेवाः क्रतुर्दक्षः श्रवः स्तवः ।
कामः सत्यो धुनिः कालः कुरुः प्रमुश्च रोचनः ॥१३॥
पुपूजुः परमीशानं श्रीकान्तं कम्भरात्मजम् ।
आरार्त्रिकं व्यधुश्चापि भोजयामासुरच्युतम् ॥१४॥
विष्णुर्वै मानसाख्यश्चाऽजितश्चापि हरिस्तथा ।
सत्यो विष्णुश्च वैकुण्ठः साध्यो विष्णुस्त्रिविक्रमः ॥१५॥
त एते विष्णवः सर्वे जनलोके कृतालयाः ।
अनादिश्रीकृष्णनारायणमाहूय मन्दिरे ॥१६॥
पुपूजुर्विष्णुयन्तारं परब्रह्म पुमुत्तमम् ।
अभिषेकं प्रचक्रुस्ते श्रीगोपालात्मजस्य वै ॥१७॥
शृंगारं शोभनं पूजामारार्त्रिकं ततो व्यधुः ।
भोजनानि प्रददुश्च ताम्बूलकानि वै ततः ॥१८॥
वैष्णवाश्च जनाः सर्वे तथाऽऽनर्चुः परेश्वरम् ।
वैष्णव्य इन्दिराः सर्वाः पुपूजुः श्रीरमाप्रियाः ॥१९॥
लक्ष्मीराधाब्रह्मप्रिया हरिप्रियाश्च योषितः ।
इन्दिराभिश्चार्पिताश्चोपदा लक्ष्म्यादिसन्निधौ ॥२०॥
भोजिताः पूजिताश्चापि सेविता मातरोऽखिलाः ।
प्रददुर्विष्णवश्चापीन्दिराद्या भूषणानि ह ॥२१॥
सौवर्णं मुकुटं दिव्यं साग्रं रत्नादिसंभृतम् ।
कुण्डले शोभने दिव्ये कर्णपूरौ च कानकौ ॥२२॥
कण्ठहारान् कौस्तुभाढ्यान् मणिरत्नादियोजितान् ।
भुजबन्धौ हीरकाद्यैः खचितौ कानकौ ददुः ॥२३॥
प्रकोष्ठशृंखले स्वर्णमौक्तिकादिविभूषिते ।
कटके कानके चाप्यङ्गुलीयकानि चोर्मिकाः ॥२४॥
पद्मानि रशना हारान् सुदर्शनानि वै ददुः ।
वेत्रं यष्टिं कानकीं च नक्तकं दिव्यतन्तुजम् ॥२५॥
पादुके पादभूषे च सौवर्णे दिव्यकानके ।
प्रददुर्हरये बद्रि विष्णवस्ते हरिप्रियाः ॥२६॥
हरिप्रियाभ्यः प्रददुरिन्दिराद्या महोपदाः ।
कुचलीः कुतलश्रीश्च शाटिका कञ्चुकीस्तथा ॥२७॥
घर्घरीश्चान्तरपटान्यपि ददुः सुभाविताः ।
केशभूषाश्चन्द्रकानि चिपिटिकाः सुगुच्छकान् ॥२८॥
वेणीवेषान् कानकांश्च धम्मिल्लान् सुवर्णजान् ।
चूडामणीन् तैजसांश्च नन्दमौक्तिकभूषितान् ॥२९॥
दिव्या ललन्तिकाश्चापि गण्डपद्मललन्तिकाः ।
चिबुकचन्द्रिकाश्चापि कर्णशृंखलिकाः शुभाः ॥३०॥
श्रावणीः कानकीश्चाप्याऽऽलम्बराणीः सुशोभिताः ।
पुष्पकाणि कानकानि स्थलकानि शुभान्यपि ॥३१॥
तारका वधिकाश्चापि चन्द्रिकाः प्रददुः स्त्रियः ।
पत्रिकाः पद्मसरिकाः सूक्ष्मतिलांश्च कानकान् ॥३२॥
मुद्रमालाः स्वस्तिमाला बदरीमालिका ददुः ।
यवमालाः स्वर्णमाषाः सुवर्णकण्ठिका ददुः ॥३३॥
पत्रमालाः शृंखलाश्च मणिमौक्तिकमालिकाः ।
ददुरिन्दिवरश्यामा वैष्णव्यः पद्ममालिकाः ॥३४॥
स्फाटिकानां शुभान् हारान् सूर्यमुखीं ददुस्तदा ।
रत्नचन्द्रौ मणिरत्नबद्धकानकनिर्मितौ ॥३५॥
नथिका वालिकाः स्वर्णजन्या मणिविभूषिताः ।
पाटलीमालिकाश्चापि मणिहारान् ददुः स्त्रियः ॥३६॥
कण्ठवलयान् सौवर्णतिलस्रजश्च मादलीः ।
प्लक्षदलीं महाहारान् रशना मेखला ददुः ॥३७॥
स्वर्णगुच्छान् कन्दुकांश्च सौवर्णान् चक्रकान् ददुः ।
सक्थिपट्टान् जानुपट्टान् प्रकोष्ठशृङ्खला ददुः ॥३८॥
झांझरीः काम्बिकाश्चापि ददुः कदलिकाः शुभाः ।
पादभूषांऽगुलिभूषांऽगुष्ठभूषा ददुः स्त्रियः ॥३९॥
अलक्तकान् कज्जलानि शृंगारकुंकुमानि च ।
रंगान् द्रवान् द्रवसारान् तैलसाराणि वै ददुः ॥४०॥
रससारान् गन्धसारान् मिष्टसाराणि संददुः ।
अम्बराणि भास्वराणि स्वर्णतारमयानि च ॥४१॥
दिव्यमौक्तिकनद्धानि ददुस्ताभ्यस्तु चेन्दिराः ।
पात्राणि कुन्दनजानि दिव्योपकरणान्यपि ॥४२॥
सर्वसारातिसाराणि गृहोपकरणानि च ।
इन्दिराः इन्दिराभ्यः सन्ददुः शय्याः समुज्ज्वलाः ॥४३॥
आसमानि विचित्राणि केशसाधनकान्यपि ।
आदर्शान् सौरभचूर्णान् पूजायां प्रददुः स्त्रियः ॥४४॥
पादत्राणानि रम्याणि कोमलानि मृदूनि च ।
आलेखनानि रम्याणि किरीटान् प्रददुः स्त्रियः ॥४५॥

इत्येवं जनलोकस्था विष्णवश्चेन्दिरास्तथा ।
हरये हरिपत्नीभ्य उपदाः सुभगा ददुः ॥४६॥
सेवयामासुरत्यर्थं जनलोके तु बद्रिके ।
पोषमासं जनलोके भगवान् पुरुषोत्तमः ॥४७॥
भ्रमयामास जनिनां स्नेहाग्रहप्रसेवनैः ।
पर्वतोद्यानसरितो लोकयामास सर्वतः ॥४८॥
दर्शयामास भगवान् सर्वा भगवतीर्निजाः ।
जनलोकनिवासिभ्यो ददौ मन्त्रं हरिः स्वयम् ॥४९॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
'बालकृष्णाय विद्महेऽनादिकृष्णाय धीमहि ॥५०॥
तन्नः श्रीशः प्रचोदयादि'तिमन्त्रं जगाद तान् ।
कृष्णनारायणकृष्णनारायण नरायण ॥५१॥
अनादिश्रीकृष्णनारायणस्वामिन् रमायण ।
इतिधुन्यं ददौ तेभ्यः पावयित्वा ततो हरिः ॥५२॥
बहुभ्यः प्रेषयामास धामाऽक्षरं निजं द्रुतम् ।
यज्ञदेवादयो देवा विदायं हरये ददुः ॥५३॥
हरिर्मोघे जनलोकान्महर्लोकं समाययौ ।
कल्पाधिकारिदेवानां द्विजानां यत्र वासिता ॥५४॥
रुद्रा एकादश ये ते ब्रह्मपुत्रास्तु भालजाः ।
पूर्वकल्पोद्भवाः कल्पावसानिका महर्गताः ॥५५॥
तेषां राज्येषु भगवान् रुद्रार्थित उपाययौ ।
नीललोहितरुद्रस्य महापुर्यां जनार्दनम् ॥५६॥
नीललोहितरुद्रो वै पुपूज रुद्रिकायुतः ।
आरार्त्रिकं प्रचकार भोजयामास केशवम् ॥५७॥
वासमामास सौधे स्वे सेवयामास सप्रियः ।
ददौ कृष्णाय बहुलोपदा दिव्याः प्रपूजने ॥५८॥
मुकुटाऽम्बरभूषादि मणिरत्नविभूतिकाः ।
अथाऽन्ये ये रुद्रवर्या निन्युर्नारायणं हरिम् ॥५९॥
निजालयेषु विधिवत् पूजयामासुरच्युतम् ।
सहस्रैकवृषमाणां धवलानां प्रभाजुषाम् ॥६०॥
ककुद्वतां सुरूपाणां गिरिशृंगाभदेहिनाम् ।
व्योमगानां हि धुर्याणां योजिते कानके रथे ॥६१॥
सहस्रैककलशाढ्ये सहस्रैकध्वजान्विते ।
शतकम्मानिकाजुष्टे वर्तुले पद्मसदृशे ॥६२॥
स्वर्णव्यासासने कृष्णं रुद्रा न्यषादयन् हरिम् ।
अभ्रामयन्निजपुर्यां रौद्र्यां सर्वत्र मेश्वरम् ॥६३॥
गृहे गृहे च रथ्यासु चत्वरे चत्वरे तथा ।
उद्यानेषु निवासेषु रुद्रा निन्युर्हरिं प्रभुम् ॥६४॥
पुपूजुः परया प्रीत्या रुद्रास्तत्र स्थले स्थले ।
रुद्राण्यो धवलाभाश्च पुपूजुः पार्वतीश्वरम् ॥६५॥
चन्दनाक्षतगन्धैश्च फलपुष्पैर्विभूतिभिः ।
भूषावस्त्रनाणकैश्च दिव्यमानसभावनैः ॥६६॥
पूर्वकल्पान्तिका देवा अष्टाविंशतिकोटयः ।
नीत्वा नीत्वाऽऽलयान् नैजानानर्चुर्बहुरूपिणम् ॥६७॥
भोजयामासुरिष्टाज्ञान्यतिदिव्याऽमृतान्यपि ।
सेवयामासुरीशेशं देवास्ते देवतायुताः ॥६८॥
आनन्दाख्याश्च ये देवा भावदेवाश्च ये तथा ।
रांभदेवा आर्तवाश्च आश्वराः पावकाः सुराः ॥६९॥
हव्यवाहाश्च सावित्रा औशिकाः कौशिकास्तथा ।
निन्युर्नारायणं स्वस्वमन्दिरेष्वभ्यपूजयन् ॥७०॥
भोजयामासुरीशेशं सिषेविरे समादृताः ।
अथ गान्धारदेवाश्च षड्जना आर्षभाः सुराः ॥७१॥
मार्जालीयास्तथा देवा माध्यमा निन्युरच्युतम् ।
दिव्ययाने हरिं नैजनगरेषु व्यवर्तयन् ॥७२॥
अपूजयँश्च विविधैरुपहारैरनुत्तमैः ।
अभोजयँश्च बहुधा दिव्यान्नैर्दिव्यभोजनैः ॥७३॥
अथ वैराजकाश्चान्ये नैषादा मेघवाहनाः ।
प्राणदेवाश्चिन्तकाश्चाऽऽकूतिका मानसाः सुराः ॥७४॥
निन्युर्नारायणं स्वस्वसौधेषु चाभ्यपूजयन् ।
राथन्तराः सुराश्चापि सद्योजाता हरास्तथा ॥७५॥
वीराश्च वामदेवाश्च पीतवासादयः सुराः ।
सितकल्पा अघोराश्च विश्वरूपाश्च ये सुराः ॥७६॥
निन्युस्ते परमात्मानं स्वस्वालयेषु भाविताः ।
अभ्रामयन् हरिं नैजे नैजे तु पत्तने गृहे ॥७७॥
अपूजयन् मणिरत्नैर्दिव्यैः सर्वोपचारकैः ।
अभोजयन् सुधान्नैश्चातर्पयन्नमृतैर्जलैः ॥७८॥
रुद्राश्चक्रुस्ताण्डवानि नारायणसमीपगाः ।
नीललोहितरुद्रो वै सुचक्रे ताण्डवं शुभम् ॥७९॥

श्रीबद्रीप्रियोवाच—

कीदृशं ताण्डवं चक्रे कीदृग्रूपो हरस्तदा ।
वद मे तत्स्वरूपं वै नारायणपरेश्वर ॥८०॥

श्रीनरनारायण उवाच—

रुद्रो हरिं प्रपूज्याऽऽनन्दमग्नो बभूव ह ।
प्रसन्नात्मा प्रणिपत्य स्वामिकृष्णनारायणम् ॥८१॥

धन्योऽस्म्यद्य हरेः प्राप्तेः कृतकृत्योऽस्मि सर्वथा।
यन्मे गृहे कृपासिन्धुः परमेश उपागतः ॥८२॥
इत्युक्त्वा हर्षपूर्णश्च स्मयन् ताण्डवमाचरत्।
तत्र स्थिताः शृङ्गिभृङ्गिरीटिकिरीटिनामकाः ॥८३॥
अम्बाकार्तिकविघ्नेशा अभवन्नृत्ययोगिनः।
रूपं दधार रुद्रोऽत्र चार्धनारीनरात्मकम् ॥८४॥
मन्दस्मिताननं भस्मगौरं यथार्हभूषणम्।
वामपादांगुष्ठसंस्थो दक्षपादं समुन्नयन् ॥८५॥
ईषदूर्ध्वाननश्चोर्ध्वहस्तो वक्रश्च जानुनोः।
समुद्भिन्नमालचक्षुर्जटासरत्सुरापगः ॥८६॥
नागराजाढ्यकण्ठश्च कृष्णबिन्दुगलोज्ज्वलः।
भालनेत्रोद्भववह्निरेखाभासितभूतलः ॥८७॥
सिंहचर्मार्धसम्पन्नः शाटिकाऽर्धाऽऽवृताङ्गकः।
हुङ्कारनादसंघुष्टसभास्थलः स्वरान्वितः ॥८८॥
प्रकोष्ठयोर्दधन्नागकुण्डले भुजयोरपि।
पादप्रकोष्ठयोश्चापि घुर्घुरानद्धभूषणः ॥८९॥
महाकिंकिणिकाव्याप्तरशनाकटिवर्तुलः।
मुण्डास्थिमालिकाराजद्वक्षःस्थलातिशोभनः ॥९०॥
कर्णयोः प्रान्तयोर्लम्बस्वर्णकुण्डलराजितः।
कर्णयोः परितो यस्य भोगिबालौ भ्रमायितौ ॥९१॥
भाले तिलकचन्द्राभ्यां सुशोभो मानसाऽऽहरः।
नेत्रप्रान्तदधत्स्निग्धनीलकज्जलरेखकः ॥९२॥
फणिबद्धजटाजूटः स्कन्धयोः फणिविग्रहः।
ईषद्वक्राग्रनमनः कट्या धवलनीलया ॥९३॥
धृतार्धकौपीनश्चार्धबद्धान्तर्वस्त्रगुह्यकः।
धृतार्धाऽलकमूर्धा च तथाऽर्धे जटया युतः ॥९४॥
वामे स्त्रीभूषणैर्युक्तो दक्षे पुंभूषणान्वितः।
सतीस्तनपटप्रान्तयोजितोत्तरकञ्चुकः ॥९५॥
कार्तिकस्य मयूरेण फुंकारितोऽतिभोगराट्।
सुधां लिहन् नृत्यजातां स्वेदात्मिकां तु वक्षसि ॥९६॥
राजते रज्जुरूपोऽपि भ्रमन् कण्ठेऽस्य कर्बुरः।
गणेशस्योन्दुरुर्यत्र चिंचिंकरोति नृत्यवित् ॥९७॥
शिवाऽऽसनो मृगेन्द्रोऽपि करोति गर्जनां तदा।
नृत्यमेलान्वितां चौजोवर्धिनीं दिङ्निनादनाम् ॥९८॥
धवलो वृषभो यत्र मां करोति तदन्विताम्।
तेषां तालप्रदानोऽयं डमरुं वादयन् हरः ॥९९॥
हृष्टरोमा हृष्टगात्रः कम्पयन् धरणिभयम्।
पादं विक्षेपयन् चैकपादांऽगुष्ठेन तोलयन् ॥१००॥
ननर्त भ्रामयन् देहं भ्रमन् रराज नृत्यकृत्।
प्रदक्षिणेन दक्षेण वामेनापि ततः पुनः ॥१०१॥
पृष्ठवंशेन चाग्रेण पार्श्वदानेन वै पुनः।
पदेनापि च पादाभ्यां दत्तकृष्णेक्षणो हरिः ॥१०२॥
ननर्त चञ्चलस्त्यक्तलज्जः सर्वांगकम्पनः।
क्वचित् स्तनं क्वचिल्लिङ्गं क्वचित्कराग्रमात्रकम् ॥१०३॥
क्वचिन्नितम्बमात्रं च कम्पयन् शुशुभे हरः।
क्वचिद् भुजां क्वचित् सक्थि क्वचिद् गण्डं च गालकम् ॥१०४॥
क्वचिद् भ्रुवं क्वचिज्जंघां कम्पयन् शुशुभे हरः।
क्वचिद्वक्रां क्वचिन्नीचां दृष्टिं तु सरलां क्वचित् ॥१०५॥
क्वचिदूर्ध्वामभितश्च ददत् ननर्त शंकरः।
क्वचिल्लज्जां क्वचित् सार्धां क्वचित् द्विगुणां गतिम् ॥१०६॥
क्वचिन्मन्दां स्थिरां वापि दर्शयन् स ननर्त ह।
क्वचिन्नमन् क्वचित्प्रेम्णा भावं स्नेहं च दर्शयन् ॥१०७॥
आकर्षयन्निव कृष्णं स्वामिनाथं ननर्त सः।
अर्धांगे भामिनीरूपे प्रसन्नास्ये हिरण्मये ॥१०८॥
दर्शयन् सेविकाभावं ननर्त शंकरो मुदा।
विशालनेत्रा सुभगा पद्मपत्रनिभेक्षणा ॥१०९॥
आरक्तकरचरणतला मिष्टस्वरा सती।
सर्वांगसुन्दरी भूतिसितस्तनाभिशोभना ॥११०॥
प्रियार्धे सस्वजाना च सर्वांगरागभासुरा।
चन्द्रचूडा रूपरूपाभिरूपकृतमोहिका ॥१११॥
ननर्ताऽङ्कगता देवी शिवा शिवमयी तदा।
परमेशप्रसन्नत्वकृते ननर्त सा तदा ॥११२॥
लज्जां विहाय कृष्णाग्रे सर्वभावसमन्विता।
हावभावयुता सर्वनृत्यांगरसरंभृता ॥११३॥
कण्ठे तु शंभुवत् कण्ठीं तौलसीं दधती तदा।
नारायणहरे विष्णो कृष्णनारायणेति च ॥११४॥
बालकृष्णेति तानेषु वदमाना ननर्त सा।
रुद्राज्ञया सवाद्या या पृथक्स्थिताऽभवत् तु सा ॥११५॥
ननर्ताऽपि तदा भावपूर्णा नारायणान्तिके।
रुद्राश्चान्ये रुद्रगणा गणिकाश्चापि ननृतुः ॥११६॥
कृष्णकरे करान् न्यस्य चूम्बनान्यपि जगृहुः।
सवाद्यघोषगीतैश्च सतालगालवादनैः ॥११७॥
सर्वथा रुद्रदेवानां मण्डलं तन्ननर्त ह।
अथ वाहनरूपा ये ननृतुस्ते समुत्सुकाः ॥११८॥
धृतरुद्रस्वरूपा वै पृथग्भावो न यत्र तु।
आश्चर्यं परमं त्वेतन्महर्लोके हरेः कृतम् ॥११९॥

नृत्यात्मकं वीक्षितं श्रीहरिणा सार्थसंयुजा ।
प्रसन्नो भगवान् स्वामी समुत्थाय निजासनात् ॥१२०॥
आश्लिष्यच्छंकरं धृत्वा निजवक्षसि तन्मयः ।
समाश्लिष्यत् कृष्णनारायणः सर्वान् कृपावशः ॥१२ ॥
रुद्राणीश्च समाश्लिक्षँल्लक्ष्मीपद्मावतीप्रियाः ।
अन्याः समाश्लिषन् रुद्राणिकाश्चाशीःपरायणाः ॥१२२॥
उपदाः प्रददुर्हारान् दिव्यान् मणीन् विभूषिकाः ।
नृत्यान्ते श्रीहरिः प्राह तुष्टोऽस्मि वरदानकृत् ॥१२३॥
वरं वृणुत सर्वेऽत्र यदिच्छथ ददामि तत् ।
रुद्राश्चाहुस्तव सेवां भक्तिं त्वय्यविनाशिनीम् ॥१२४॥
अन्ते ब्रह्मगतिं चापि देहि धाम्न्यक्षरे तव ।
इत्युक्त्वाऽऽरार्त्रिकं चक्रुर्विदायं प्रददुस्ततः ॥१२५॥
तेभ्यो मन्त्रं ददौ कृष्णो नैजं नाम ददावपि ।
'श्रीकृष्णनारायणस्वामी श्रीहरिः शरणं मम' ॥१२६॥
दिव्यभावं तथाऽऽशीर्वार्णीं ददौ परमेश्वरः ।
अथ विमानमारुह्य जयनादैः स्वराययौ ॥१२७॥
स्वर्गे कृष्णविमानेन बद्रिके चाऽक्षरप्रभम् ।
व्यद्योतत सुरा वीक्ष्याऽमीयु· स्वागतसिद्धये ॥१२८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने महर्लोकनिवासिनां मन्दिरेषु भगवतः पूजनादि रुद्रस्य ताण्डवं चेतिवर्णननामा पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि श्रीकृष्णः फाल्गुने प्रभुः ।
प्रथमं स्वविमानेन ध्रुवस्वर्गमुपाययौ ॥ १ ॥
यत्र वै वैष्णवो भक्तो राजा ध्रुवोऽस्ति सर्वदा ।
यदाधारं लोकचक्रं प्रवर्तते भ्रमत्यपि ॥ २ ॥
वीक्ष्य विशालं दिव्यं च सर्वलोकोत्तरं शुभम् ।
विमानं श्रीहरेस्तूर्णं ध्रुवश्चाभ्याययौ द्रुतम् ॥ ३ ॥
ससैन्यः सर्वदेवैश्च सवाद्यः सहितो हरिम् ।
कृष्णं सम्मानयामास स्वागतं व्यचरन्मुदा ॥ ४ ॥
प्रणम्य धन्यभाग्योऽस्मीत्याह कृत्वा च दण्डवत् ।
निन्ये नारायणं नैजे महासौधे तु कानके ॥ ५ ॥
यत्र विष्णुध्रुवपूज्यो वर्तते सम्पदां प्रदः ।
विष्णुर्नारायणं नत्वा चकार दण्डवत्तदा ॥ ६ ॥
पादसंवाहनं चक्रे शुभासनविराजिनः ।
हरेः सेवां ध्रुवश्चापि चक्रे जलामृतार्पणैः ॥ ७ ॥
आवासदानकैः सर्वार्पणैर्भागवतोत्तमः ।
षोडशाद्युपचारैः संप्रपूज्याऽऽरार्त्रिकं व्यधात् ॥ ८ ॥
वैष्णवी कमला देवी लक्ष्म्यादीनां प्रपूजनम् ।
ध्रुवपत्नी शाश्वती च ब्रह्मप्रियादिपूजनम् ॥ ९ ॥
अन्या महामहाभक्तानिकाश्चापि प्रपूजनम् ।
हरेश्चक्रुस्तथा ध्रुवप्रजाः पुपूजुरच्युतम् ॥१०॥
उपदा विविधाश्चापि ददुः श्रीपरमात्मने ।
दिव्यसौवर्णरत्नाढ्यभूषाहारधनानि च ॥११॥
भोजयामासुरीशेशं सर्वांगिसहितं च ते ।
सर्वार्पणविधानेन देवा देव्यः प्रसेवनम् ॥१२॥
चक्रुः श्रीबालकृष्णस्य सर्वावतारधारिणः ।
ध्रुवराज्ये महाराज्ये भ्रामयामासुरच्युतम् ॥१३॥
प्रजाश्च श्रीहरिं सम्यक् प्रपूज्य मनुमाप्नुवन् ।
नामधुन्यं जगृहुश्च दध्युर्नारायणं हृदि ॥१४॥
कृष्णः प्रपावयित्वैव ध्रुवलोकं ततस्ततः ।
द्रुतं विमानमारुह्य सप्तर्षिलोकमाययौ ॥१५॥
प्रथमं श्रीहरिः श्रेष्ठं वसिष्ठस्याऽऽलयं ययौ ।
अरुन्धतीयुतर्षिश्च स्वागतं प्राचरद्धरेः ॥१६॥
पुष्पचन्दनपीयूषामृताऽक्षतयवांकुरैः ।
पुपूज परमात्मानं पुपूजाऽरुन्धती ह्यपि ॥१७॥
कृष्णसार्थं समस्तं च पुपूजारुन्धती सती ।
वासिष्ठाश्च सुरादेव्यः प्रजाश्चानर्चुरच्युतम् ॥१८॥
वेदमन्त्रैरार्षयोगैर्हरेः प्रपूजनं व्यधुः ।
भोजयामासुरिष्टान्नामृताद्यं बहुधा कृतम् ॥१९॥
आरार्त्रिकं प्रचक्रुश्च गृहे गृहे तथर्षयः ।
सम्मानं संव्यधुश्चापि सेवां व्यधुर्महादृताः ॥२०॥
आशीर्वादान् सामगीर्भिर्ददुर्नारायणाय तं ।
भृगुश्च भार्गवाश्चापि निन्युर्नारायणेश्वरम् ॥२१॥
निजालयेषु चानर्चुर्भोजयामासुरीश्वरम् ।
अङ्गिराश्चाप्यांगिरसा निन्युर्नारायणं ततः ॥२२॥
तेऽप्यानर्चुर्हरिकृष्ण बहूपकरणादिभिः ।
मरीचिश्चापि मारीचा निन्युर्नारायणं गृहम् ॥२३॥
अत्रिस्तथा तदात्रेया निन्युर्नारायणं मुदा ।
पुपूजुर्भोजयामासुरुपदाश्च न्यधुः पुरः ॥२४॥
पुलस्त्यश्चापि पौलस्त्या निन्युर्नारायणं गृहम् ।
पुलहः पौलहाश्चापि निन्युर्निजालयान् हरिम् ॥२५॥
पुपूजुः परया भक्त्या श्रीप्रद्युम्नमाधवीपतिम् ।
उपदाश्च न्यधुस्त्वग्रे भोजयामासुरीश्वरम् ॥२६॥

महैश्वर्यैर्हरेः सेवां चक्रुस्ते ऋषिपुंगवाः ।
हरिर्विदाय संप्राप्य वह्निके द्रुतमेव ह ॥२७॥
क्रतोर्लोकं निभाल्यैव कृतपूजादरः प्रभुः ।
आशिषः क्रतवे दत्वा शनेर्लोकमुपाययौ ॥२८॥
शनिना कृतपूजश्च दत्वा तस्मै मनुं निजम् ।
वैष्णवं तं सूर्यपुत्रं युक्त्वाऽऽशीर्भिस्ततो द्रुतम् ॥२९॥
गुरोर्लोकं विशालं वै समाययौ हरिः स्वयम् ।
बृहस्पतिर्हरेश्चाभिषेकं व्यधात् तु सामगैः ॥३०॥

अपूजयत् प्रभुं दिव्यैरुपचारैः समृद्धिभिः ।
मनुं जग्राह हरितो भोजयामास वै ततः ॥३१॥
उत्तमाभिरुपदाभिस्तोषयामास माधवम् ।
विदायं प्रददौ प्रस्थापयामास ततोऽच्युतम् ॥३२॥
हरिस्तूर्णं मंगलस्यालयं तत उपाययौ ।
मंगलः पूजयामास प्रभुं रत्नादिभिस्ततः ॥३३॥
आययौ भगवान् शुक्रालयं विमानतो द्रुतम् ।
शुक्रस्तु बहुधा चक्रे स्वागतं पूजनादिभिः ॥३४॥
ततो हरिर्द्रुतं बुधालयं वै समुपाययौ ।
बुधः सम्पूज्य मुदितो भोजयामास माधवम् ॥३५॥
विदायं प्रददौ चाथ हरिर्नक्षत्रमण्डलम् ।
आययौ स्वविमानेन रोहिण्यादिगृहेषु वै ॥३६॥
ताः सर्वा वै दक्षपुत्र्यो नारायणं यथायथम् ।
पुपूजुः सेवयामासुर्भोजयामासुरच्युतम् ॥३७॥
हरेः पत्नीगणांश्चापि सन्तुष्टाः सहितानपि ।
पूजयामासुरत्यर्थं नारीयोग्योपचारकैः ॥३८॥

ततः श्रीभगवान् सूर्यलोकं समाययौ द्रुतम् ।
आदित्यः स्वर्णवर्णस्तं हिरण्मययुतः पुमान् ॥३९॥
पुपूज परमात्मानं सर्वद्रव्यैः सुवर्णजैः ।
विभूषणैरमृतैश्च दिव्याम्बराम्बरादिभिः ॥४०॥
पूषाऽर्यमा विवस्वांश्च त्वष्टा विष्णुर्भगस्तथा ।
पर्जन्यो वरुणो धाता शक्रो मित्रोंऽशुरित्यपि ॥४१॥
पुपूजुः परमात्मानं श्रेष्ठर्द्धिसम्पदादिभिः ।
राजाधिराजवेषांश्च ददुर्नारायणाय ते ॥४२॥

स्वस्वराज्येषु सर्वत्र निन्युर्नारायणं मुदा ।
मुकुटान् कटकान् हारान् कुण्डलानि ददुश्च ते ॥४३॥
मणिरत्नमयी रम्याः शृंखलाश्च ददुस्तथा ।
अक्षयान्यपि पात्राणि महामृतप्रदान्यपि ॥४४॥
ददुस्ते हरये लक्ष्म्यादिभ्यश्च सूर्ययोषितः ।
छाया संज्ञाऽश्विनी चापि हिरण्या च प्रभादिकाः ॥४५॥

भोजयामासुरीशेशं विदायं प्रददुस्ततः ।
अथ श्रीभगवान् शीघ्रमाययौ चान्द्रभूमिकाम् ॥४६॥
चन्द्रलोके सोमराजश्चकार स्वागतं हरेः ।
पूजां सेवां चकारापि भोजनान्यमृतानि च ॥४७॥
ददौ वस्त्राणि रम्याणि रसान् पीयूषसंभृतान् ।
मणीन् रत्नानि रम्याणि ददौ कृष्णाय चन्द्रमाः ॥४८॥
तत्पत्न्यश्च ददुर्भूषादिकं योषिद्भ्य आदृताः ।
विदायं प्रददुश्चापि ततः कृष्णनरायणः ॥४९॥

तत्तल्लोकप्रजाभ्यश्च मनुं स्वकं ददौ मुदा ।
नामधुन्यं ददौ चापि ततस्तु मानसोत्तरम् ॥५०॥
पर्वतं चाययौ चैत्रे पूर्वे महेन्द्रमन्दिरम् ।
नगर्याममरावत्यां देवेन्द्रोऽभ्रामयत् प्रभुम् ॥५१॥
सर्वशृंगारयुक्तायां दिव्यायां देववन्दितम् ।
देवैश्च देवताभिश्च शच्याऽप्सरोभिरर्चितः ॥५२॥
पावयित्वा देववर्गानिन्द्रसभामुपाययौ ।
इन्द्रः पुपूज बहुभिश्चोपचारैः समृद्धिभिः ॥५३॥
तस्मै स प्रददौ रत्नहारान् दिव्यांस्तथोपदाः ।
इन्द्रभोगान समस्तांश्च महेन्द्रः प्रभवे ददौ ॥५४॥
भोजयामास सर्वांश्च सेवयामास भावनैः ।
रक्षयामास सौधे स्वे प्रभुं श्रीपुरुषोत्तमम् ॥५५॥
सिद्धचारणगन्धर्वाः सिषेविरे हरिं स्त्रियः ।
विदायं प्राप्य भगवान् अग्नेस्तेजोवतीं पुरीम् ॥५६॥
ययौ स्वेन विमानेन वह्निकेऽग्निमहालयम् ।
अग्नयः श्रीहरिं नत्वा कृत्वा स्वागतमुत्तमम् ॥५७॥
प्रपूज्य भ्रामयामासुर्नगरे स्वे गृहे गृहे ।
अर्चयामासुरत्यर्थं भोजयामासुरादरात् ॥५८॥
मणिरत्नादिहारांश्च ददुः कृष्णाय तेऽनलाः ।
स्वाहाद्याः स्त्रीजनान् सर्वानानर्चुः स्वर्णभूषणैः ॥५९॥
चान्दनैर्गन्धिभिः श्रेष्ठैर्द्रव्यैरमृतवर्षिभिः ।
विदायं प्राप्य भगवान् ययौ संयमनीं पुरीम् ॥६०॥
यत्र वैवस्वतस्तस्य प्रजाः पुपूजुरादरात् ।
यमाः पुपूजुरीशेशं यमराजः पुपूज च ॥६१॥

याम्या यमानुगाश्चापि पुपूजुः परमेश्वरम् ।
हरिस्तु स्वविमानेन वीक्षितुं नारकान् ययौ ॥६२॥
कृष्णवायोः प्रसंगेन नारका मोक्षमाप्नुवन् ।
नैकोऽपि दण्डवाँस्तत्र दण्ड्यः कुण्डेऽस्ति शेषितः ॥६३॥
नावशिष्टस्तदा तत्र पापी कश्चिद् यमालये ।
सर्वे मोक्षं गताः स्वर्गं गताः कृष्णकृपावशात् ॥६४॥

यमेन पूजितः कृष्णो विदायं प्राप्य सत्वरम् ।
रक्षोवतीं पुरीं रक्षोभृतां निर्ऋतिपालिताम् ॥६५॥
आययौ स्वविमानेन निर्ऋतिः स्वागतं व्यधात् ।
रक्षोगणाश्च देवेशं पुपूजुर्निर्ऋतेः प्रजाः ॥६६॥
तेभ्यो दत्वा मनुं कृष्णो लब्ध्वा विदायमुत्तमम् ।
आययौ स्वविमानेन वारुणीं सुखिनीं पुरीम् ॥६७॥
वरुणो भगवन्तं तं पुपूज परमर्द्धिभिः ।
भोजयामास बहुधा रसानमृतसंभवान् ॥६८॥
सिषेविरे च बहुधा ततो विदायमार्पयत् ।
हरिस्तूर्णं विमानेनाऽऽययौ तु वायवीं पुरीम् ॥६९॥
गन्धवतीं चातिरम्यां प्रभञ्जनेन पालिताम् ।
प्रभञ्जनो हरेः श्रेष्ठं पूजनं सार्थमाचरत् ॥७०॥
ददौ कृष्णाय रत्नानि विदायं प्रददौ तथा ।
हरिश्चोत्तरभागस्थां कौबेरीं नगरीं ययौ ॥७१॥
विभावरीं च सोमस्य नगरीं बहुशोभनाम् ।
ययौ तूर्णं कुबेरेण पूजितस्तत्र माधवः ॥७२॥
बहुरत्नैर्बहुधनैर्भूषाम्बरादिभिस्तथा ।
सर्वकोशैः पूजितश्च ययावीशानपत्तनम् ॥७३॥
ईशानः स्वयशोवत्यां पुर्यामभ्रामयद्धरिम् ।
अपूजयद् दिव्यरसैः सगणः सगणं प्रभुम् ॥७४॥
विदायं प्रददौ चापि कृष्णः कान्तिमतीं पुरीम् ।
आययौ मेरुभागस्थां निशानाथादिसेविताम् ॥७५॥
बह्वीभिश्चाप्सरोभिश्च सर्वदेवगणैर्युताम् ।
सर्वथा वैष्णवीं रम्यां तारकाभिर्निवासिताम् ॥७६॥
तत्र निशाकरः कृष्णं पुपूज बहुभाववान् ।
भोजयामास बहुधा भ्रामयामास पत्तने ॥७७॥
विदायं प्रददौ चापि कृष्णो मेरुनिवासिनाम् ।
गृहे गृहे समस्तानां व्यस्तानां च ययौ तदा ॥७८॥
आहूतः पावनार्थं स्वमन्दिराणि हरिर्ययौ ।
प्रियव्रतोत्तानपादौ सम्राजौ परमात्मनः ॥७९॥
स्वागतं बहुसम्मानं चक्रतुः पूजनादिकम् ।
भोजयामासतुश्चापि ददुरनर्घ्यसन्मणीन् ॥८०॥
धर्मदेवो रुचिश्चापि दक्षः क्रतुर्महर्षयः ।
पुपूजुः परमात्मानं ससार्थं चोपदादिभिः ॥८१॥
खेचरी वसुधारी च ब्रह्मेशो ब्रह्मजीवधीः ।
सुषेणः शाश्वतः पृष्ठः सुपुष्टश्च महाबलः ॥८२॥
त एते चारणा दिव्या निन्युर्नारायणं गृहम् ।
पुपूजुः परया प्रीत्या रत्नहारादिभिस्तदा ॥८३॥
मन्त्रज्ञो मन्त्रवित् प्राज्ञो मन्त्रराट् सिद्धिशोभनः ।
सिद्धेशः परमः सिद्धः सिद्धा निन्युर्हरिं गृहम् ॥८४॥
पूजयामासुरत्यर्थं भोजयामासुरमृतम् ।
यक्षो यक्षेशकश्चापि जृंभको मणिभद्रकः ॥८५॥
पूर्णप्रभद्रको माली शितिकुण्डलकस्तथा ।
नरेन्द्रश्चेति यक्षाश्च निन्युर्नारायणं गृहम् ॥८६॥
पुपूजुः परया प्रीत्या ददुर्दिव्योपदास्तथा ।
विणाज्ञः किन्नरस्तत्र सुरसेनः प्रमर्दनः ॥८७॥
अतीशयः सप्रयोगी गीतज्ञश्चेति किन्नराः ।
निन्युर्नारायणं नैजावासेष्वपूजयन् मुदा ॥८८॥
विद्याधरश्च विबुधो विद्याराशिर्विदाम्वरः ।
प्रबुद्धश्च कृतज्ञश्च श्रीशस्तत्त्वधरादयः ॥८९॥
विद्याध्राः श्रीहरिं निन्युर्निजावासेष्वपूजयन् ।
गायनैर्नर्तनैर्भावैर्वाद्यप्रकारकैस्तथा ॥९०॥
ते संप्रसादयामासुः श्रीपतिं श्रीजनैर्युतम् ।
वामदेवो महाजम्भः सुग्रीवो मर्दकस्तथा ॥९१॥
बाष्कली पिंगलः कुंभश्चैते भक्तास्तु तामसाः ।
निन्युर्नारायणं दैत्याः पुपूजुः परमेश्वरम् ॥९२॥
गरुत्मान् खगतिर्नागमर्दनो विष्णुवाहनः ।
एते हिरण्यवर्णाभा गरुडाः परमेश्वरम् ॥९३॥
निन्युर्नैजगृहाण्येवाऽऽनर्चुः श्रीपतिमीश्वरम् ।
उर्वशी मेनका रंभा रतिश्चापि तिलोत्तमा ॥९४॥
सुमुखी सुस्तनी शान्ता कामुकी शारदानना ।
अलम्बुषाद्या अप्सरोगणा निन्युर्हरिम् पतिम् ॥९५॥
निजावासेषु कान्तेशं पुपूजुः कामगौरवैः ।
सिषेविरे समालिङ्ग्य पावित्र्यं प्रापुरीश्वरात् ॥९६॥
गायनं नर्तनं चक्रुः चक्रुः सेवां च योषिताम् ।
भोजयामासुरत्यर्थं शृंगाराणि व्यधापयन् ॥९७॥
रामयामासुरात्मेशं कान्तं सस्वजिरे दृढम् ।
सुरभिः सर्वतोभद्रा सुशीला श्रीप्रदा तथा ॥९८॥
नन्दिनी चेति गावश्च दिव्यरूपधरास्तदा ।
कामदुघा हरिं निन्युर्मेरौ निजाश्रमेष्वपि ॥९९॥
पुपूजुः कामरूपेशं महाभिषेकपूर्वकम् ।
भोजयामासुरिष्टं वै मिष्टं क्षीरमयामृतम् ॥१००॥
अयाऽरुणाऽनपाया च विमनुष्या वराम्बरा ।
मिश्रकेश्यसिपर्णा चाऽलंबुषा शुचिका तथा ॥१०१॥
मारीचिश्चाद्रिका विद्युत्पर्णा क्षेमा च लक्ष्मणा ।
मनोभवाऽसिता पुण्डरीकाऽब्जगन्धिनी तथा ॥१०२॥

सुबाहुी सुप्रिया चापि सुभुजा सुदती रमा ।
सुरसा सुमुखी हंसपादी सुताऽभया जया ॥१०३॥
हंसा च कमला भासी सुभगा च सरस्वती ।
अरूपा मनुवंती च सुकेशी पर्णिनी तथा ॥१०४॥
सहजा पुञ्जिकस्थली घृताची च कृतस्थली ।
विश्वाची पूर्वचित्तिश्च प्रम्लोचा शारदी दया ॥१०५॥
माणिकी चानुम्लोचा मंजुला हंसी च शान्तिदा ।
युवतीत्वं हरये ता ददू रेमे रतिप्रियः ॥१०६॥
सिषेविरे स्वालयेषु सर्वस्वार्पणभावनैः ।
तथा कृष्णप्रियाणां च सेवां चक्रुः समन्विताः ॥१०७॥
ननर्तुः श्रीहरेरग्रे चक्रुर्वल्लभकीर्तनम् ।
आशीर्वादान् जगृहुश्चोपदा न्यधुर्हरेः पुरः ॥१०८॥
भीमसेनश्चोग्रसेनः सुपर्णो वरुणस्तथा ।
सूर्यवर्चा धृतराष्ट्रो गोमान् भीमश्च पत्रवान् ॥१०९॥
अर्कपर्णः प्रयुतश्च चित्ररथश्च वैकलिः ।
शालिशिराः सुबाहुश्च हंसो मध्यश्च दारुणः ॥११०॥
ज्योतिष्टमः सदाचारो वरेण्यश्च वरूथकः ।
वसुरुचिः सुरुचिश्च विश्वावसुश्च भानुकः ॥१११॥
बही सिद्धस्तु पूर्णश्च पूर्णाशः शतगौणकः ।
सुचन्द्रश्चेति गान्धर्वाः पुपूजुः परमेश्वरम् ॥११२॥
निन्युर्नारायणं नैजसौधेष्वानर्चुरच्युतम् ।
उपदाः प्रददुः सर्वे भोजयामासुरच्युतम् ॥११३॥
दिव्या मेरोररण्यानी तथा च वनदेवताः ।
ओषधयस्तथा दिव्या समूर्ताः परमेश्वरम् ॥११४॥
पुपूजुः फलपुष्पाद्यैः सद्रसैर्भोजनामृतैः ।
तेभ्यो मेरुनिवासिभ्यः स्वमनुं माधवो ददौ ॥११५॥
नामधुन्यं ददौ नैजमाशीर्वादान् ददौ तथा ।
ततः स्वस्य विमानेन भुवर्लोकमुपाययौ ॥११६॥
वैशाखमासे भगवान् बद्रिके भक्तवत्सलः ।
वियच्चराः सुरास्तत्र पूजयामासुरच्युतम् ॥११७॥
आवहः प्रवहश्चेति संवहोऽनुवहस्तथा ।
परावहो विवहश्च परिवहश्च वायवः ॥११८॥
निजासु रम्यनगरीष्वानयन् परमेश्वरम् ।
पुपूजुः परया प्रीत्या भोजयामासुरच्युतम् ॥११९॥
भूतप्रेतपिशाचाश्च कूष्माण्डाश्च विनायकाः ।
वीरा वेतालकाश्चापि भुवर्लोकनिवासिनः ॥१२०॥
पुपूजुः परमात्मानं जगृहुश्च मनुं हरेः ।
दिव्यमुक्ता बभूवुस्ते हरिर्भूतलमाययौ ॥१२१॥
कुंकुमवापिकाक्षेत्रं ज्येष्ठमासे निजालयम् ।
विरराम हरिर्बद्रि सर्वभक्तप्रपूजितः ॥१२२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने स्वर्गलोके मेरौ भुवर्लोके च भगवतो भ्रमणं कुंकुमवापिकां प्रत्यागमनं चेत्यादिनिरूपणनामा षण्णवतितमोऽध्यायः ॥ ९६ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि भगवान् भूतभावनः ।
कुंकुमवापिकाक्षेत्रे यदागमत् तदा द्रुतम् ॥ १ ॥
विमाने यानि रूपाणि पत्नीनां द्वैतवन्ति च ।
तानि सर्वाणि तत्रैव तिरोभावयदच्युतः ॥ २ ॥
विमानस्थानि रूपाणि भूस्थेष्वाविविशुस्तदा ।
दासदासीस्वरूपाणि भूस्थेष्वाविविशुस्तथा ॥ ३ ॥
लोमशादेः स्वरूपाणि भूस्थेष्वाविविशुस्तदा ।
द्वैतभावे विलीने च निजरूपे हरिः स्वयम् ॥ ४ ॥
एकभावं गतस्तत्र विमानं चाऽणुतां गतम् ।
रत्नभूषाम्बरहारा उपदाः स्वर्णशोभनाः ॥ ५ ॥
सर्वा यथायथं कृष्णो ददौ योग्येभ्य एव च ।
विप्रेभ्योऽनाथदीनेभ्यः श्रीभ्यो ददुर्यथायथम् ॥ ६ ॥
चातुर्मास्यमुवासाऽपि हरिः कुंकुमपत्तने ।
त्रयोविंशं हरेर्जन्मदिनं प्राप्तं शुभप्रदम् ॥ ७ ॥
प्रातरेव कृतस्नानोऽष्टम्यामूर्जस्य चाऽसिते ।
कृतशृंगारकः कृष्णोवल्लभोऽयात् स्वसंसदि ॥ ८ ॥
तदा वाद्यान्यवाद्यन्त गीतयश्चाभवन् शुभाः ।
नर्तनानि विचित्राणि देवतानां तदाऽभवन् ॥ ९ ॥
सर्वोत्कृष्टा सभा पूर्णा सर्वसृष्टिनिवासिभिः ।
जाता सा बद्रिके तत्र लोमशः समुपाययौ ॥१०॥
पुपूज परमात्मानं चिरं जीवेति चाहतम् ।
श्रीमद्गोपालकृष्णाद्याः पुपूजुः परमेश्वरम् ॥११॥
अवतारा ईश्वराश्च मुक्ताः सिद्धाः सुरास्तथा ।
ऋषयः पितरो देवा मानवाश्च नराः स्त्रियः ॥१२॥
पुपूजुः कम्भरालालं चाशीर्वादान् ददुस्तदा ।
आरार्त्रिकं व्यधुः सर्वे महोत्सवमकारयन् ॥१३॥
प्रज्ञापद्मावतीलक्ष्मीराधाद्याश्चक्रुरुत्सवम् ।
अतलादिनिवासाश्च दैत्यदानवराक्षसाः ॥१४॥
नागाः सर्पा भोगिनश्चार्थयामासुर्हरिं प्रति ।
भगवन् पावयाऽस्मान् स्वान् पातालादीनि दर्शनात् ॥१५॥

तथाऽस्त्विति हरिः प्राह भोजयामास तान् हरिः ।
महीमानान् समस्तांश्च विदार्य प्रददावपि ॥१६॥
ययुः सर्वे निजलोकान् कृष्णः पातालवासिभिः ।
सह गन्तुं समियेष सर्वपूर्वानुगैर्युतः ॥१७॥
सर्वस्त्रीदासदास्यादियुतश्च लोमशान्वितः ।
स्वतःप्रकाशप्रभृतिमुनिभिः साधुभिर्युतः ॥१८॥
हेमन्ताद्यैः पार्षदैश्च युतो द्वेधा समस्तकः ।
सर्वरूपोऽभवत् कृष्णो द्वेधा वेषादिभूषितः ॥१९॥
विमानं यदणु त्वासीन्महत्तत् तत्र संव्यधात् ।
सर्वान् संस्थाप्य सर्वाश्च तत्र कुंकुमक्षेत्रके ॥२०॥
सर्वान् सर्वाः सह नीत्वा चैकादश्यां विमानके ।
आरुरोह ससार्थाढ्यो हरिर्गोपालनन्दनः ॥२१॥
सुपर्णवासुकिशंकुकर्णनमुचिभिः सह ।
विमानमैरयत्तूर्णं शृण्वन् हर्षजयध्वनीन् ॥२२॥
अतले तु सुपर्णस्य सौधवर्यं महाप्रभुम् ।
सुपर्णाद्या हरिं तत्र पुपूजुः परमादरात् ॥२३॥
महाराज्ये च सर्वत्र भ्रामयित्वोपदा ददुः ।
मणिरत्नानि बहूनि भोजनान्युत्तमानि च ॥२४॥
यक्षा दैत्या दानवाश्च नामुचेया नरायणम् ।
पुपूजुः परया प्रीत्या मनुं हरेश्च जगृहुः ॥२५॥
विदार्य प्रददुश्चापि मार्गशीर्षे ततो हरिः ।
प्रययौ वितलं लोकं विमानेन द्रुतं प्रभुः ॥२६॥
जम्भकश्चापि प्रह्लादः कम्बलश्चेति ते तदा ।
स्वागतं श्रीहरेश्चक्रुर्बहुमानपुरःसरम् ॥२७॥
दैत्या भक्ता भक्तिमन्तो पुपूजुः परमेश्वरम् ।
प्रह्लादो रक्षयामास प्रभुं मासान्तमेव ह ॥२८॥
स्वगृहे निजराज्ये च भ्रामयामास सर्वशः ।
दैत्यानां कोटयः कृष्णं निन्युर्निजालयानपि ॥२९॥
सस्त्रीकं सर्वसार्थाढ्यं कृष्णं पुपूजुरादरात् ।
दैत्यस्त्रियो दानचित्ता लक्ष्म्यादीरार्चयन्मुदा ॥३०॥
ददू रत्नानि बहूनि मणीन् श्रेष्ठांश्च वै तदा ।
भोजनानि ददुश्चापि विदार्य प्रददुस्ततः ॥३१॥
पौषमासे ययौ कृष्णः सुतलं लोकमुत्तमम् ।
विरोचनगृहे तत्रोवास श्रीपतिरीश्वरः ॥३२॥
दैत्याः कृष्णं बहुप्रीत्या पुपूजुश्चोपदादिभिः ।
भोजयामासुरत्यर्थं सिषेविरेऽर्बुदा जनाः ॥३३॥
पुपूज शतसाहस्रो गणो हालाहलाभिधः ।
दानवानामर्बुदानि पुपूजुः श्रीपरमेश्वरम् ॥३४॥
विप्रचित्तिप्रधानास्ते हरये चोपदा ददुः ।
शंकुकर्णादयश्चापि निन्युर्नारायणं गृहम् ॥३५॥
हयग्रीवादयश्चापि पुपूजुर्माधवीपतिम् ।
शरभाः शाम्बराश्चापि पुपूजू राधिकेश्वरम् ॥३६॥
कालनाभादयो दशसहस्राणि तु भूभृतः ।
पुपूजुः कमलाकान्तं हिरण्यपुरवासिनः ॥३७॥
कालकेया दानवाश्च निन्युर्नारायणं गृहम् ।
पुपूजुश्चापि दानव्यो भोजयामासुरीश्वरम् ॥३८॥
ददौ तेभ्यो हरिर्मन्त्रं 'श्रीहरिः शरणं मम' ।
विदार्य गृह्य सं माघे तलातलमुपाययौ ॥३९॥
वैनतेयालये वासं चकार भगवान् स्वयम् ।
वैनतेया हरिं सार्थयुतमानर्चुरादरात् ॥४०॥
गरुत्मतां चतुर्दशसहस्राणि तु भूभृताम् ।
हरिं निन्युर्निजराज्येष्वानर्चुर्मणिभूषणैः ॥४१॥
कालनेम्यादयश्चापि दैत्येशा ललितापतिम् ।
निन्युर्निजप्रदेशेष्वानर्चुः सरस्वतीश्वरम् ॥४२॥
कोटिशोऽपि तथा देवराक्षसा निजराष्ट्रके ।
निन्युः श्रीभूपतिं कृष्णं पुपूजुः परमादरात् ॥४३॥
उपदाश्च प्रददुस्ते तेभ्यो ददौ मनुं हरिः ।
नामधुन्यं ददौ चापि विदार्य जगृहे ततः ॥४४॥
फाल्गुने श्रीहरिर्निजविमानेन महातलम् ।
उपाययौ च तत्रापि मुचुकुन्दादिमन्दिरे ॥४५॥
उवास भगवाँस्तस्य सेवां जग्राह भाववित् ।
अनन्ताद्या महासर्पाः कामरूपधराः सुराः ॥४६॥
पुपूजुः परमेशानं सेवयामासुरादरात् ।
उपदाश्च ददुः श्रेष्ठा मणिरत्नात्मिका मुदा ॥४७॥
भोजयामासुरत्यन्तं दिव्यान्नानि बहून्यपि ।
आरार्त्रिकं प्रचक्रुश्च विदार्य प्रददुस्ततः ॥४८॥
चैत्रेऽनादिकृष्णनारायणो रसातलं ययौ ।
बलेर्गृहे निवासं स्वं चकार तेन पूजितः ॥४९॥
वामनेनेडितः कृष्णो रसाराज्यानि सर्वशः ।
बभ्राम सर्वदेशेषु भक्तानां मोक्षकांक्षया ॥५०॥
राजाधिराजवद् राजा बलिर्नारायणं हरिम् ।
पुपूज मानयामास भोजयामास मिष्टकम् ॥५१॥
विदार्य प्रददौ चापि ततोऽन्ये दैत्यपुंगवाः ।
राक्षसास्तारकाद्याश्च हिरण्याक्षास्तथाऽपरे ॥५२॥
कोट्यर्बुदाधिका निन्युर्नरेश्वरं निजालयान् ।
पूजयामासुरत्यन्तं सर्वस्वदानकैर्हरिम् ॥५३॥

तन्मन्त्रं जगृहुश्चापि विदायं प्रददुस्ततः ।
वैशाखे श्रीकृष्णस्वामी पातालं समुपाययौ ॥५४॥
तत्रत्याः शेषजातीया सर्पा नारायणं गृहे ।
ररक्षुर्बहुमानाद्यै पूजयामासुरुत्सुकाः ॥५५॥
अन्ये सर्वे महासर्पाः सर्वकामस्वरूपिणः ।
नागिन्यश्च महादेव्यो हरिं लक्ष्मीः सिषेविरे ॥५६॥
अनन्तः कुलिकश्चापि वासुकिस्तक्षकस्तथा ।
कर्कोटको महापद्मः शङ्खपालादयोऽपि च ॥५७॥
निन्युर्नारायणं नैजराज्येष्वानर्चुरुत्सुकाः ।
पुपूजुर्मणिरत्नाद्यैः सेवयामासुरत्यति ॥५८॥
भोजयामासुरीशेशं विदायं प्रददुस्ततः ।
हरिर्मन्त्रं ददौ तेभ्यस्ततो विमानमास्थितः ॥५९॥
वाद्यघोषादिभिश्चोत्तेजितः सम्मानितो ह्यति ।
क्षीरसागरमध्ये वै यत्र शेषासनो हरिः ॥६०॥
आययौ तत्र भगवान् महोत्साहभरः प्रभुः ।
ज्येष्ठे मासे हरिं शेषासनो विष्णुः पुपूज ह ॥६१॥
पायसै रससारैश्च भोजयामास वै मुदा ।
लक्ष्मीः समस्तलक्ष्मीनां सेवां चकार भावुकी ॥६२॥
मणिरत्नानि विष्णुर्वै नारायणाय संददौ ।
विदायं प्राप्य भगवान् श्वेतद्वीपमुपाययौ ॥६३॥
आषाढे कमलाकान्तः प्रज्ञानारायणं हरिम् ।
ररक्ष पूजयामास भोजयामास चाऽमृतम् ॥६४॥
सिषेविरेऽति बहुधा कमलाः कमलादिकाः ।
विदायं जगृहे कृष्णो विमानेन ततः परम् ॥६५॥
श्वेतमुक्तेभ्य ईशेशो मनुं ददौ निजं परम् ।
प्रेषयामास वै धामाऽक्षरं निजं च तानथ ॥६६॥
विमानेनाऽऽययौ तूर्णं श्रावणे बद्रिकाश्रमम् ।
नरनारायणावावां यूयं बद्र्यस्तथर्षयः ॥६७॥
तन्वाद्यास्तापसा नद्य हिमाद्रिस्तीर्थमण्डलम् ।
अपूपुजाम सर्वेशं बह्वादरसमन्विताः ॥६८॥
पादजलं पपुः सर्वे ददुर्महोपदाः शुभाः ।
हरिस्तत्र मासमात्रमुषित्वा भाद्रमासि वै ॥६९॥
आययौ स्वविमानेन वाराणसीं शुभां पुरीम् ।
तीर्थं कृत्वा धेनुपालं नृपं वीक्ष्य ततः परम् ॥७०॥
प्रयागराजे संस्नात्वा भारद्वाजं प्रणम्य च ।
द्रुतं सौराष्ट्रदेशं स्वमाययौ चाक्षरीं भुवम् ॥७१॥
द्वैतरूपाणि सर्वाणि तिरोभावयदच्युतः ।
एकरूपस्ततो भूत्वाऽऽविवेश निजमन्दिरम् ॥७२॥
कुंकुमवापिकाक्षेत्रे विरराम निजालये ।
एवं बद्रीप्रिये सर्वपातालानां पवित्रता ॥७३॥
विधत्ता हरिणा नैजकृपया मोक्षिता जनाः ।
अथोर्जकृष्णपक्षस्याऽष्टमी जन्मजयन्तिका ॥७४॥
हरेस्तिथिर्मंगलाढ्या चतुर्विंशा समागता ।
प्रातः स्नात्वा कृतसर्वशृंगारः कुंकुमेश्वरः ॥७५॥
मण्डपे चाययौ नैजे गजासने सुशोभिते ।
उपाविवेश मुनिभिः पूजितः कृतमङ्गलः ॥७६॥
लोमशस्तिलकं चन्द्रं कृष्णभालेऽक्षतान्वितम् ।
कौंकुमं सुभगं चक्रे पुपूजाऽऽशीःपरायणः ॥७७॥
पिता माता भ्रातरश्च महर्षयः सुरेश्वराः ।
पुपूजुः परमात्मानं मुक्ता मुक्तानिकास्तथा ॥७८॥
ईश्वरा अवताराश्च ह्याशीर्वादपरायणाः ।
पितरो यक्षगन्धर्वाः किंपुमांसश्च किन्नराः ॥७९॥
देवाश्च दानवाः सिद्धाः साध्यः सूताश्च चारणाः ।
द्विजा नृपाः श्रेष्ठिनश्च दासाः पुपूजुरच्युतम् ॥८०॥
देव्यः सरांसि सरितस्तीर्थानि देवमातरः ।
लोकपाला दिशांपालाः पुपूजुः परमेश्वरम् ॥८१॥
अतलादिनिवासाश्च भूवासा मानवाः प्रजाः ।
नरा नार्यो हरिकृष्णमर्चयामासुरुत्सवे ॥८२॥
उपदाश्च न्यधुर्दिव्या हरेरग्रे सुवर्णजाः ।
मणिरत्नादिरूपाश्च चिरं जीवति ते जगुः ॥८३॥
आरात्रिकं प्रचक्रुश्च प्रसादं जगृहुस्ततः ।
परिहारं सभायाश्चाकरोच्छ्रीलोमशस्ततः ॥८४॥
महीमानान् समस्तांश्च भोजयामास लोमशः ।
दत्वा दानानि बहूनि विदायं प्रददौ ततः ॥८५॥
सप्तद्वीपनृपाद्याश्च समागन्तुं निजालयान् ।
प्रार्थयामासुरत्यर्थं हरिं सर्वसमन्वितम् ॥८६॥
तथाऽस्त्विति प्राह तांश्च ततोऽन्ये प्रययुर्मुदा ।
निजलोकान्निजदेशान् सप्तद्वीपेतरस्थिताः ॥८७॥
अथ श्रीभगवान् प्राप्ते त्वेकादशीदिने निजान् ।
दासीदासान् प्रमदाश्च सज्जीचकार पूर्ववत् ॥८८॥
विमाने स्वे विधायैव द्वैधारूपाणि तानि वै ।
न्यषादयत् समस्तांश्च नारीनरात्मकान् हरिः ॥८९॥
वाद्यघोषैर्जयनादैरम्बरे स्वविमानके ।
अनादिश्रीकृष्णनारायणः समारुरोह च ॥९०॥
लोमशाद्याः ऋषयश्च ब्रह्मप्रियादियोषितः ।
आरुरुहुर्विमानं च सप्तद्वीपान् विलोकितुम् ॥९१॥

नवद्वीपेश्वराश्चापि स्वस्वविमानमास्थिताः ।
स्वागतार्थं ययुस्ते तु पुरतः श्रीहरेस्तदा ॥९२॥
स्वस्वदेशान्नगराणि प्रासादान् समशोभयन् ।
शृंगारितान् रम्यरूपानकारयन्मुदान्विताः ॥९३॥
सेवौपयिकीः सरसाः सामग्रीः प्रत्यपादयन् ।
मण्डपान् सुभगांश्चापि समास्थानान्यकारयन् ॥९४॥
गोपुराणि सप्रभाणि दीपतोरणभाञ्जि च ।
अकारयन्नृपास्ते च प्रजाः शोभा अवर्धयन् ॥९५॥
जम्बूद्वीपेऽपि च ये ते खण्डेश्वरा हरिं मुदा ।
संप्रार्थयन् पुरा नैजान् खण्डान् पावयितुं ततः ॥९६॥
हरिस्तथाऽस्त्विति प्राह ते च सर्वे तदाज्ञया ।
पुरैव प्रययुर्नैजान् खण्डान् शृंगारहेतवे ॥९७॥
पृथ्व्यां सर्वत्र चोद्घोषः सुमहान् समजायत ।
अनादिश्रीकृष्णनारायणश्चायाति सुप्रियः ॥९८॥
दर्शनीयः स भगवान् पापहा दुःखहाः प्रभुः ।
अर्चनीयो वन्दनीयो हरिर्गोपालनन्दनः ॥९९॥
इत्येवं बद्रिके भूमौ प्रतीक्षन्ते समुत्सुकाः ।
अद्य वा श्वः परश्वो वाऽऽगमिष्यति नरायणः ॥१००॥
बालकृष्णोऽथ भगवान् प्रादक्षिण्येन वर्त्मना ।
विमानमैरयत्तूर्णमम्बरे पश्चिमोत्तरम् ॥१०१॥

इति श्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने त्रयोविंशजन्मोत्सवोत्तरम् अतलादिसप्तपातालेषु तत्तद्राजन्यप्रजादि पावयित्वा क्षीरोदधिं श्वेतद्वीपं बद्रिकाश्रमं पावयित्वा च भगवान् कुंकुमवापीमागत्य चतुर्विंशतितमं स्वजन्मदिनोत्सवं चकारेत्यादिनिरूपणनामा सप्तनवतितमोऽध्यायः ॥ ९७ ॥

श्रीनरनारायण उवाच—

ततः बद्रीप्रिये देवि भगवान् श्रीप्रमापतिः ।
जम्बूद्वीपेश्वरसौधं विमानेन ययौ द्रुतम् ॥ १ ॥
आग्नीध्रः पूजयामास मानयामास माधवम् ।
राजाधिराजशोभाभिः सिषेवे माधवीपतिम् ॥ २ ॥
राज्ञ्यः सर्वा महालक्ष्मीराधादियोषिदर्हणम् ।
चक्रुर्महोपदादानैः सिषेविरेऽतिभावतः ॥ ३ ॥
आग्नीध्रस्य नव पुत्रा निन्युर्नारायणं ततः ।
नाभिर्हिमाह्वये राज्ये निनाय परमेश्वरम् ॥ ४ ॥
पुपूज परया प्रीत्या महोपदा ददौ तथा ।
किंपुरुषो भूपतिश्च हेमकूटाह्वये निजे ॥ ५ ॥
महाखण्डे महाराज्ये निन्ये पुपूज भावतः ।
हरिर्भूपो नैषधाख्ये वर्षे निनाय माधवम् ॥ ६ ॥
पुपूज भावभक्त्या तं ददावुत्तमसन्मणीन् ।
इलावृतो नृपो निन्ये खण्डे चेलावृते निजे ॥ ७ ॥
गोपीपतिं पुपूजाऽप्युपदाश्च प्रददौ मणीन् ।
रम्यो राजा हरिं नीत्वा नीलाचलाख्यखण्डके ॥ ८ ॥
पुपूजाऽपि सिषेवेऽपि भोजयामास चादरात् ।
हिरण्वान्नृपतिर्निन्ये श्वेतवर्षे निजे हरिम् ॥ ९ ॥
पुपूज परया प्रीत्योपदा ददुस्तथोत्तमाः ।
कुरुराजो हरिं निन्ये निजोत्तरकुरून् प्रति ॥१०॥
पुपूज रामरामेशं स्वर्णद्रव्यादिभिस्तदा ।
भद्राश्वो नाम राजाऽपि पूर्ववर्षे निनाय तम् ॥११॥
पुपूज परया प्रीत्योपदा ददौ शुभोत्तमाः ।
केतुमालस्ततो राजा निनाय स्वालये हरिम् ॥१२॥
पुपूज परया भक्त्या भोजयामास सत्पतिम् ।
विदायं संगृह्य कृष्णनारायणो द्रुतं ततः ॥१३॥
अन्यद्वीपान् प्रगन्तुं वै स्वं विमानं तदैरयत् ।
प्रियव्रतस्य वै पुत्राः प्रजापतिसमा दश ॥१४॥
आग्नीध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा ।
मेधा मेधातिथिर्हव्यः सवनः पुत्रकस्तथा ॥१५॥
ज्योतिष्मान् दशकश्चेति सर्वे वै वैष्णवाः शुभाः ।
मेधाऽग्निबाहुपुत्राश्च त्रयस्ते साधवोऽभवन् ॥१६॥
सप्ताऽन्ये त्वभवन् भूपास्तद्द्वीपान् प्रययौ प्रभुः ।
प्लक्षद्वीपेश्वरं मेधातिथिं प्रति ययौ हरिः ॥१७॥
मार्गशीर्षे मासि कृष्णं मेधातिथिरपूजयत् ।
मेधातिथेस्तथा पुत्राः स्वराज्येष्वनयन् प्रभुम् ॥१८॥
शान्तभयश्च शिशिर आनन्दश्च सुखोदयः ।
शिवश्च क्षेमकश्चापि ध्रुवश्च सप्त भूभृतः ॥१९॥
महाराजाधिराजस्य सम्मानं चक्रुरुत्सुकाः ।
विविधा उपदा रम्या ददुः पुपूजुरादरात् ॥२०॥
आरार्त्रिकं प्रचक्रुश्च पपुः पादजलं हरेः ।
भोजयामासुरीशेशं प्रसादं जगृहुश्च ते ॥२१॥
मनुं कृष्णस्य जगृहुः सेवयामासुरच्युतम् ।
विदायं प्रददुश्चापि प्रजापूजोत्तरं ततः ॥२२॥
भ्रमित्वा श्रीहरिर्द्वीपं विमानेन द्रुतं ततः ।
पौषमासे ययौ कृष्णः शाल्मलिद्वीपमुत्तमम् ॥२३॥
तस्य सम्राड् वपुष्मांश्च राजा कृष्णमपूपुजत् ।
स्वप्रासादे हरिं नित्यं ररक्ष भावपूरितः ॥२४॥

असेवत सदा भक्त्याऽभोजयद् बहुधा प्रभुम् ।
रत्नहारादिकान् रम्यानमूल्यान् हरये ददौ ॥२५॥
तत्पुत्राः सप्त राजानः श्वेतश्च हरितस्तथा ।
जीमूतो रोहितश्चापि वैद्युतो मानसः प्रभः ॥२६॥
सप्तैते परमात्मानं निजराज्येषु चानयन् ।
बहुमानेन सौधेषु नीत्वा नीत्वा समार्चयन् ॥२७॥
उपदाभिश्चन्दनाद्यैर्हीरकाद्यैश्च कानकैः ।
भूषणैर्मणिरत्नाद्यैः कम्बलैः स्वर्णपात्रकैः ॥२८॥
तद्राज्यश्च प्रजाश्चापि पुपूजुः परमेश्वरम् ।
तेभ्यो दत्वा मनुं कृष्णो विदायं प्राप्य सत्वरम् ॥२९॥
माघे विमानमारुह्य कुशद्वीपमुपाययौ ।
ज्योतिष्मान्नामकः सम्राट् ससैन्यो मानमाचरत् ॥३०॥
निजसौधे नगर्यां च भ्रामयामास केशवम् ।
पुष्पाक्षताद्यैः सम्पूज्य मणिरत्नानि सन्ददौ ॥३१॥
भोजनानि ददौ राज्यः सिषेविरे तमच्युतम् ।
तस्य पुत्राश्च राजानः सप्त निन्युर्हरिं निजान् ॥३२॥
प्रासादानालयाँश्चापि राष्ट्रेष्वपि समन्ततः ।
उद्भेदो वेणुमाँश्चापि धृतिरश्वरथस्तथा ॥३३॥
लम्बनः कपिलः प्रभाकरस्ते वेणुवादिनम् ।
आनर्चुर्बहुभावेन सिषेविरे तमच्युतम् ॥३४॥
उपदाः प्रददुश्चापि गुरुमन्त्रं च जगृहुः ।
प्रजाः सीतापतिं कृष्णं पुपूजुः परमादरात् ॥३५॥
जगृहुः कृष्णमन्त्राँश्च विदायं प्रददुस्ततः ।
फाल्गुने स्वविमानेन क्रौंचद्वीपं ययौ हरिः ॥३६॥
सम्राड् राजा द्युतिमाँश्च सैन्यैः सम्मानमाचरत् ।
निजप्रासादवर्ये तं कृष्णं न्यवासयन्मुदा ॥३७॥
भोजयामास देवेशं सेवयामास केशवम् ।
सर्वसार्थयुतं कृष्णं पूजयामास नाणकैः ॥३८॥
मणिरत्नादिभिश्चापि कुंकुमाक्षतचन्दनैः ।
अथ पुत्रास्तस्य सप्त निन्युर्नारायणं ततः ॥३९॥
मनोहरश्च कुशल उष्णश्च पीवरो मुनिः ।
दुन्दुभिरन्धकारश्च नृपा आनर्चुरच्युतम् ॥४०॥
तेषां चक्रुर्हि बहुधा प्रजाश्चानर्चुरीश्वरम् ।
विदायं प्रददुश्चापि ततो मन्त्रं च जगृहुः ॥४१॥
अथ चैत्रे हरिः शाकद्वीपं जगाम सत्वरम् ।
सम्राट् तत्र हव्यनामा ससैन्यो मानमाचरत् ॥४२॥
निजसौधे निवासं चाकारयत्परमात्मनः ।
पुपूज परया भक्त्या सिषेवे बहुभावया ॥४३॥
भोजयामास गोविन्दं विदायमुपदा ददौ ।
तत्सुताः सप्त राजानो निन्युः कृष्णं निजालयान् ॥४४॥
जलदश्च कुमारश्च सुकुमारो मणीचकः ।
कुशोत्तरश्च मोदाकिर्महाद्रुमश्च ते ततः ॥४५॥
आनर्चूः रुक्मिणीकान्तं ददुर्दिव्योपदाः शुभाः ।
सिषेविरेऽतिसम्पन्नैर्ददुर्विदायमुत्तमम् ॥४६॥
तत्प्रजाश्च हरिं नीत्वा स्वालयेष्वभ्यपूजयन् ।
हरिर्मन्त्रं प्रदायैव विमानेन हि सत्वरम् ॥४७॥
वैशाखे पुष्करं द्वीपं ययौ ससार्थशोभनः ।
पुष्कराधिपतिर्भूपः सवनः सैन्यशोभितः ॥४८॥
सम्मानं श्रीहरेश्चक्रे भ्रामयामास पत्तने ।
सौधे नैजे ततो नीत्वा पूजयामास वस्तुभिः ॥४९॥
वासयामास नित्यं च सेवयामास भक्तितः ।
भोजयामास नित्यं स विदायं प्रददौ बहु ॥५०॥
तस्य पुत्रौ नृपौ द्वौ च निन्यतुः परमेश्वरम् ।
निजराष्ट्राणि भावेन स्वस्वसौधेष्ववासयन् ॥५१॥
महावीतो धातकिश्च सेवयामासतुर्हरिम् ।
तद्राज्यश्च प्रजाश्चापि पुपूजुः माधवीप्रभुम् ॥५२॥
भोजयामासुरीशेशं मन्त्रं च जगृहुर्हरेः ।
विदायं प्रददुश्चापि हरिः सज्जोऽभवत्ततः ॥५३॥
लोकालोकाचलं कृष्णो ज्येष्ठमासे ययौ मुदा ।
विहर्तुं वीक्षितुं स्त्रीभ्यो दर्शयितुं प्रदेशकान् ॥५४॥
पर्वतान् ग्रहमार्गांश्च वनान्युपवनानि च ।
प्रादक्षिण्येन वेगेन विमानगमनेन च ॥५५॥
लोकालोकं प्रवीक्ष्याऽथ काञ्चनीं भूमिमीक्ष्य च ।
आषाढे श्रीहरिः प्रत्याययौ कुंकुमवापिकाम् ॥५६॥
इत्येवं बद्रिके कृष्णनारायणो महाप्रभुः ।
पावयित्वा भूमिलोकान् कृपया तत्प्रजा अपि ॥५७॥
एको भूत्वा निजसौधे चातुर्मास्यं चकार ह ।
कुंकुमवापिकाक्षेत्रे निजजन्मजयन्तिका ॥५८॥
पञ्चविंशाऽष्टमी कृष्णा कार्तिकस्याऽस्य चागता ।
तत्र स्वर्णोत्सवं चक्रे पिता गोपालकृष्णकः ॥५९॥
सौवर्णं मण्डपं चक्रे ह्यपूर्वं बहुशोभनम् ।
सर्वशो मणिरत्नाद्यैर्नद्धं धामाऽक्षरं यथा ॥६०॥
दिव्ये गजासने कृष्णः कृतस्नानो विभूषितः ।
आगत्य निषसादाऽथ लोमशस्तमपूजयन् ॥६१॥
प्रातर्वाद्यान्यवाद्यन्त गीतिका मङ्गलानि च ।
मुक्तावतारदेवानामीश्वराणां च देहिनाम् ॥६२॥

अभवन् सर्वतो बद्रि सर्वलोकनिवासिनाम् ।
वेदघोषाश्च परितो मुनीनामभवँस्तदा ॥६३॥
प्रातर्होमा महर्षीणां ह्यजायन्ताऽक्षरस्थले ।
अथ पूजा हरेस्तत्र प्रावर्तत क्रमादनु ॥६४॥
अवताराश्च मुक्ताश्चेश्वराश्चाथ महर्षयः ।
पितरश्च सुरा दैत्या दानवा राक्षसास्तथा ॥६५॥
मानवा नागसर्पाश्च यक्षा सिद्धाश्च चारणाः ।
सूताश्च मागधाः किंपुमांसश्च किन्नरास्ततः ॥६६॥
बन्दिनो वेदविप्राश्च राजानो वैश्यदेहिनः ।
दासाश्च दासिकाश्चापि तीर्थानि देवतास्तथा ॥६७॥
अप्सरसो गणाश्चापि पार्षदा गणिकास्तथा ।
पुपूजुः परमात्मानं ददुस्ते चोपदाः शुभाः ॥६८॥
तिलकं कुंकुमेनापि तथाऽक्षतैश्च चन्दनैः ।
चक्रुश्चिरं जीव चेत्याशीर्वादं प्रददुस्ततः ॥६९॥
आरार्त्रिकं प्रचक्रुश्च ददुर्दानानि वै तदा ।
योषितः सर्वसृष्टीनां तदा चक्रुः प्रपूजनम् ॥७०॥
पिता तदानीं रत्नानां मणीनां च प्रदानकम् ।
धेनुदानानि धातूनां दानानि कानकान्यपि ॥७१॥
पात्रभूषाम्बरादीनां कोट्यर्बुदादिसंख्यया ।
प्रददौ लोमशश्चापि ददावाशिष उत्तमाः ॥७२॥
पूजान्ते भोजयामासुर्लक्ष्म्यो ब्रह्मप्रियादिकाः ।
महीमानान् समस्तांश्च विदायं च ततो ददुः ॥७३॥
यद्यत् समागतं प्राप्तं सर्वलोकेषु सर्वथा ।
भ्रमणे ह्युपदारूपं स्वर्णरूप्यादिकं बहु ॥७४॥
हीरकाश्च मणयश्च रत्नानि विविधान्यपि ।
मौक्तिकानि विचित्राणि पात्राणि चाम्बराणि च ॥७५॥
पिता दाने ददौ सर्वं विप्रेभ्यो दीनवत्सलः ।
दीनेभ्यो भिक्षुकेभ्यश्च साध्वीभ्यः सद्व्रय इत्यपि ॥७६॥
योषिद्भ्यो मानवेभ्यश्चाऽनाथेभ्यः सर्वथा तदा ।
अथ सर्वेभ्य एवाऽन्नं मिष्टान्नं प्रददौ ततः ॥७७॥
विदायं प्रददौ चापि परिहारोऽभवत्ततः ।
ययुः सर्वे समापृच्छ्य कृष्णं निजालयान् सुराः ॥७८॥
ब्रह्माण्डदेहिनः सर्वे ययुर्नेजान् प्रलोककान् ।
ईश्वराश्च विराडाद्याः प्रार्थयामासुरच्युतम् ॥७९॥
निजलोकान् समागन्तुं हरिः प्राह तथाऽस्त्विति ।
एकादश्यामूर्जकृष्णे हरिः सज्जो बभूव ह ॥८०॥
सर्वसार्थसुयुक्तस्तैरीश्वरैः सह केशवः ।
बद्रिके दिव्यमहता विमानेन द्विरूपधृक् ॥८१॥
पूर्ववद् भगवान् भूत्वा प्रतस्थे चाम्बरे द्रुतम् ।
जयनादैः सुखशब्दैः प्रतस्थे परमेश्वरः ॥८२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने जम्बुप्लक्षादिसप्तद्वीपेश्वराणां राज्येषु भगवतो भ्रमणं कुंकुमवाप्यां च पञ्चविंशतितमस्वजन्मजयन्त्युत्सवकरणं चेत्यादिनिरूपणनामाऽष्टनवतितमोध्यायः ॥ ९८ ॥

श्रीनरनारायण उवाच—

बद्रिके भगवान् कृष्णनारायणो मुहूर्ततः ।
सत्यपारं ययावष्टावरणान्यप्यलंघयत् ॥ १ ॥
महातेजोमयेनातिदिव्यविमानकेन सः ।
वैराजलोकमासाद्य वैराजेन समं हरिः ॥ २ ॥
वैराजभवने तत्र पूजितः समुवास सः ।
सिषवे चाति वैराजो वैराजीसहितस्तदा ॥ ३ ॥
वैराजीयप्रजाश्चाप्यानर्चुर्दिव्योपचारकैः ।
आरात्रिकं हरेश्चक्रुर्महोपदा न्यधुः पुरः ॥ ४ ॥
हरिं प्रसादयामासुः सर्वार्पणैर्मुहुर्मुहुः ।
ईश्वराणां दिव्यरीत्या सेवयामासुरच्युतम् ॥ ५ ॥
वैराजस्य सुताश्चापि ब्रह्मविष्णुमहेश्वराः ।
ब्रह्माणोऽष्टाननाश्चापि शतास्या अयुताननाः ॥ ६ ॥
लक्षाननास्तथा कोट्याननाः सिषेविरे हरिम् ।
त्र्यक्षाश्च शंकराश्चैकपञ्चाशन्नेत्रकाः शिवाः ॥ ७ ॥
नवनवतिनेत्राश्चैकसहस्रादिनेत्रकाः ।
अयुतकादिनेत्राश्च लक्षैकादिसुचक्षुषः ॥ ८ ॥
कोट्येकचक्षुषश्चापि सदाशिवाः सिषेविरे ।
तथाविधाश्च ब्रह्माण्यः शिवाश्चापि तथाविधाः ॥ ९ ॥
सिषेविरे ब्रह्मनारीर्नारायणं सिषेविरे ।
विष्णवोऽष्टभुजाश्चापि शतायुतभुजास्तथा ॥१०॥
लक्षकोटिभुजाश्चापि वैष्णव्यश्च तथाविधाः ।
सिषेविरेऽनादिकृष्णनारायणं समर्पिताः ॥११॥
नैजलोकेषु सर्वेषु कार्तिके मार्गशीर्षके ।
पौषे चाप्यनयन् कृष्णं चतुर्दशस्तरेषु च ॥१२॥
अष्टाविंशतिकक्षेषु षट्पञ्चाशत्स्थितिष्वपि ।
ततो द्विगुणकक्षेषु निन्युर्नारायणं हरिम् ॥१३॥
स्वागतं चक्रिरे पूजां चक्रिरे चोपदा ददुः ।
भोजयामासुरिष्टानि दिव्यानि भोजनानि च ॥१४॥

भ्रामयामासुरेतेषां राज्येषु विविधेष्वपि ।
विदायं प्राप्य भगवान् महाविष्णोर्महास्पदम् ॥१५॥
हैरण्यं धाम सुभगं ययौ श्रीपरमेश्वरः ।
यत्राश्चर्यमभूद् दिव्यं बद्रिके प्रवदामि ते ॥१६॥
महाविष्णुस्तदा श्रीमद्गोपालकृष्णमूर्तिमान् ।
स्वपितृरूपोऽदृश्यत पितृदेहे तिरोभवत् ॥१७॥
महालक्ष्मीस्तथा श्रीमत्कंभरावर्ष्मणि स्थिता ।
श्रीकंभरास्वरूपेणाऽदृश्यत च तिरोऽभवत् ॥१८॥
मातापितृस्वरूपाभ्यां पूजितः पुत्र ईश्वरः ।
बालकृष्णोऽतिभावेन प्राविर्भवन्द्वयां यत्ततः ॥१९॥
आश्चर्यं तत्परं वीक्ष्य तदा ब्रह्मप्रियादिकाः ।
मेनिरे तु तयो रूपौ श्वश्रूं श्वशुरमित्यपि ॥२०॥
पद्मावतीप्रिये वीक्ष्य श्वश्रूश्वशुरौ रूपिणौ ।
महासन्तोषमाप्ते ते ववन्दाते स्नुषात्मिके ॥२१॥
मासमासं समस्तं वै महाविष्णोर्गृहे हरिः ।
समस्तसार्थसहितश्चोवास पितृमानितः ॥२२॥
पित्रोः सेवां कृष्णनारायणश्चकार सर्वदा ।
ब्रह्मप्रियाद्याः सर्वाश्च सिषेविरे च तौ मुदा ॥२३॥
विदायं जगृहे कृष्णस्ततः श्रीपुरमाययौ ।
ललितायाः महालक्ष्म्या दिव्यं धाम मनोहरम् ॥२४॥
पूजितो वन्दितः कृष्णः सेवितश्च प्रसादितः ।
उपदाभिस्तोषितश्चोवास तत्रापि पक्षकम् ॥२५॥
ललितायाः स्वरूपे च तदा श्रीललिताऽऽविशत् ।
अन्याश्च कोटिशः सख्योऽपश्यन्निजसुविग्रहान् ॥२६॥
आश्चर्यं मेनिरे ताश्च वीक्ष्य नैजां तु दिव्यताम् ।
पूजां च भोजनं लब्ध्वा प्राप्य विदायमित्यपि ॥२७॥
परस्परं प्रसम्मिल्य कृष्णेन सह सत्वरम् ।
विमानं च समारुह्य भूम्नोऽव्याकृतमाययुः ॥२८॥
अनादिश्रीकृष्णनारायणं वीक्ष्याऽऽगतं तदा ।
भूमा नारायणस्तूर्णं स्वागतं महदाचरत् ॥२९॥
महेश्वराधिराजार्हमानं ददौ सुसैन्ययुक् ।
तत्पत्न्यश्च रमाद्याश्चाऽऽगायन् कृष्णस्य गीतिकाः ॥३०॥
अव्याकृते शुभे धाम्नि भूमसौधे हरिं तथा ।
भूमा न्यवासयन्नित्यं मासमेकमपूजयत् ॥३१॥
अभोजयत् सदा कृष्णं ससार्थं चामृतादिकम् ।
ततो हरिर्विदायं च लब्ध्वा विमानमास्थितः ॥३२॥
वासुदेवाऽमृतं धाम ययौ सार्थसमन्वितः ।
वासुदेवो हि भगवानाचरत् स्वागतं हरेः ॥३३॥
फाल्गुनार्धोत्तरे तत्रोवास कृष्णनरायणः ।
वासुदेवालये रम्येऽसंख्यवैष्णवपूजितः ॥३४॥
चैत्रे कृष्णो ययौ तूर्णमनिरुद्धालयं तथा ।
प्रद्युम्नमन्दिरं चापि संकर्षणालयं ह्यपि ॥३५॥
तैः सर्वैश्चातिदिव्यैः स्वैः सैन्यैश्च पार्षदादिभिः ।
सम्मानितः स्वागताद्यैः पूजितश्चोपदार्पणैः ॥३६॥
भोजितश्चाऽमृतभोगैः सेवितो भावभक्तिभिः ।
विदायं प्राप्य भगवान् नैजं विमानमास्थितः ॥३७॥
गोलोकं श्रीकृष्णधाम वैशाखे प्रययौ द्रुतम् ।
श्रीकृष्णेन निजे धाम्नि परकृष्णः प्रपूजितः ॥३८॥
सर्वगोलोकमुक्तादिसैन्यैः सम्मानितो हरिः ।
राधादिभिरसंख्याभिर्ब्रह्मप्रियाश्च सेविताः ॥३९॥
पूजिता भोजिताश्चापि वन्दिताश्च प्रसादिताः ।
श्रीकृष्णभवने कृष्णनारायणोऽवसन्मुदा ॥४०॥
राधाद्याः स्वस्वरूपेषु तिरोऽभवँस्तदा द्रुतम् ।
आश्चर्यं परमं वीक्ष्य विज्ञाय निजरूपकम् ॥४१॥
ततः प्राविरभवँश्च महानन्दं प्रपेदिरे ।
सिषेविरे सुरत्यर्थं कृष्णेशं कृष्णयोषितः ॥४२॥
श्रीकृष्णश्च तथा गोपा गोप्यश्चाप्यर्बुदाऽर्बुदाः ।
हरिं प्रसादयामासुस्तोषयामासुरच्युतम् ॥४३॥
श्रीकृष्णोऽपि तदा नैजं मूलं परमकारणम् ।
अस्तौच्छ्रीपरमात्मानमवताराऽवतारिणम् ॥४४॥
'यतो वयं चावतारास्तव मूर्तेः पृथक्स्थिताः ।
रमोऽत्र धामाधिपतयस्तस्मै पित्रे नमः सदा' ॥४५॥
यतो राधादयश्चापि भवन्मूर्तेः प्रयत्नतः ।
अस्मदर्धांगतां प्राप्तास्तस्मै पित्रे नमो नमः ॥४६॥
यतश्चाऽन्येऽसंख्यरूपा अवतारा भवन्त्यपि ।
तस्मै मूलपरब्रह्मपित्रे नमोऽवतारिणे ॥४७॥
प्रसन्नो भव कृष्णेश निजरूपेषु सर्वथा ।
यदाशां प्रवहामोऽत्र तस्मै पित्रे मुहुर्नमः ॥४८॥
सदा त्वत्पूजनं चात्र करोमि सर्वथा पितः ।
अनुग्रहं सदेच्छामि पावितोऽहं ससार्थकः ॥४९॥
एवं स्तुत्वा हरिं नत्वा लब्ध्वा प्रसादमुत्तमम् ।
विदायं प्रददौ कृष्णः कृष्णनारायणाय वै ॥५०॥
चैत्रे त्वन्यानि धामानि ह्यवतारकृतानि च ।
हरिर्ययौ विमानेन त्रयोविंशतिकानि च ॥५१॥
त्रयोविंशत्यवतारैस्तत्तद्धामसु धामिपः ।
परब्रह्म पूजितः सेवितो भक्त्या प्रपूसादितः ॥५२॥

मोजितश्चोपदाभिश्चार्पितः स्तुतः क्षमां प्रति ।
हरिर्विदायमासाद्य वीक्ष्याऽक्षरस्य सीमगम् ॥५३॥
मात्स्यं धाम च कौर्मं च वाराहं धाम वीक्ष्य च ।
कापिलं च हरेर्धाम वासुदेवीयकं तथा ॥५४॥
पृथोर्धाम तथा दत्तात्रेयधाम प्रवीक्ष्य च ।
हंसधाम च वीक्ष्यापि नृहरेर्धाम वीक्ष्य च ॥५५॥
आर्षभं वामनं धाम पर्शुरामालयं तथा ।
याज्ञीयं रामधामाऽपि कौमारं धाम वीक्ष्य च ॥५६॥
हायग्रीवं नारदीयं राजराजीयमित्यपि ।
व्यासीयं कार्ष्णमन्यं च बौद्धं धामाऽभिवीक्ष्य च ॥५७॥
तथा चाऽसंख्यधामानि वीक्ष्य प्रमिल्य तत्प्रभून् ।
तत्प्रदत्ताऽर्हणां गृह्य प्रसाद्य तान्निजात्मजान् ॥५८॥
सर्वधामिन आपृच्छ्य विमानेन निजेन सः ।
वैकुण्ठलोकं वैशाखे ययौ नारायणालयम् ॥५९॥
लक्ष्मीनारायणस्तत्र स्वागतं प्रसमाचरत् ।
सर्वपार्षदवृन्दैश्च पार्षदानीसमन्वितः ॥६०॥
सर्वभक्तयुतः कृष्णं पुपूज परमादरात् ।
हारकेयूरमुकुटैस्तथा कौस्तुभभूषणैः ॥६१॥
दिव्याम्बरविभूषाद्यैरक्षतैश्चन्दनादिभिः ।
आनर्च परमात्मानं वासयामास मन्दिरे ॥६२॥
सर्वा लक्ष्म्यो दासिकाश्च पुपूजुः श्रीरमादिकाः ।
ब्रह्मप्रियाद्याः सर्वाश्च भोजयामासुरुत्सुकाः ॥६३॥
पादसंवाहनाद्यैश्च सेवयामासुरच्युतम् ।
स्तवनाद्यैश्चोपकारैश्चक्रुः प्रसन्नमच्युतम् ॥६४॥
आरार्त्रिकं प्रचक्रुश्च नारायणश्रियोऽपि च ।
विदायं प्रददौ नारायणः कृष्णाय वै ततः ॥६५॥
हरिर्निजविमानेन प्रकृतेर्धाम चाययौ ।
महामाया चकारापि सर्वतत्त्वान्विताऽर्हणम् ॥६६॥
प्रधानपुरुषाद्याश्च पुपूजुर्धामिधामिनम् ।
पादजलं पपुश्चाथ भोजनानि ददुस्तथा ॥६७॥
विदायं प्रददुश्चाथ ज्येष्ठे कृष्णनरायणः ।
विमानेनाऽऽययौ तूर्णं सदाशिवमहालयम् ॥६८॥
नित्यकैलासधामाख्यं तत्र सदाशिवः प्रभुः ।
स्वागतं स्वेष्टदेवस्य व्यधाद् गणसमन्वितः ॥६९॥
पुपूज परया प्रीत्या सेवयामास तं हरिम् ।
उपदाः प्रददौ चापि व्यधात् प्रसन्नमच्युतम् ॥७०॥
विदायं श्रीहरिर्लब्ध्वा विमानेन निजेन वै ।
तैजसावरणप्रान्ते जलावरणमस्तके ॥७१॥
स्थिते वैकुण्ठसंज्ञे वै सिद्धसाध्यादिसेविते ।
आषाढे चाययौ तत्र पद्मेशश्चाक्षराधिपम् ॥७२॥
पुपूज परया भक्त्या कृत्वा स्वागतमुत्तमम् ।
अथाऽन्ये चावरणानामीश्वरस्तत्त्वचिन्तकाः ॥७३॥
पुपूजुः परमात्मानं स्वस्वावासेषु भावतः ।
तानि स्थानानि चाऽऽलोक्य सेवां लब्ध्वा विदायकम् ॥७४॥
आययौ स्वविमानेन प्रविष्याऽन्धतमो महत् ।
सत्यलोकं मुहूर्तेन मुहूर्तेन तु भूतलम् ॥७५॥
कुंकुमवापिकाक्षेत्रेऽवाततार निजालये ।
द्वैतभावं तिरोभाव्य त्वेकभावं जगाम ह ॥७६॥
कृष्णनारायणस्वामिभगवत्परमेश्वरः ।
कोट्यर्बुदाब्जपत्नीभ्यो दर्शयामास सर्वशः ॥७७॥
सर्वधामानि चैशानि सर्वलोकांश्च मायिकान् ।
सर्वराज्यानि भूपानां सर्वद्वीपान् भुवस्तथा ॥७८॥
समुद्राऽद्रिवियत्स्वर्गविहारांश्च यथायथम् ।
तन्मिषेण ददौ लाभं सर्वेभ्यः स्वस्य सर्वगः ॥७९॥
बद्रिके प्रार्थितः कृष्णनारायणो महेश्वरैः ।
धामिभिः सिद्धसाध्यैश्च मुनिभिः पितृभिस्तथा ॥८०॥
लोकपालैर्नृपैश्चापि सर्वलोकाधिपैरपि ।
अर्थितः स्वालये नेतुं तन्मिषेण प्रभुः स्वयम् ॥८१॥
सर्वकुटुम्बसहितो ययौ ददौ स्वदर्शनम् ।
सृष्ट्यारंभे पृथिवीं स पावयामास तन्मिषात् ॥८२॥
पातालानि समस्तानि स्वर्गाणीश्वरभूमिकाः ।
अवतारालयांश्चापि पावयामास लीलया ॥८३॥
सर्वत्र व्यापकस्याऽस्य सर्वान्तर्यामिणः प्रभोः ।
सर्वशरीरकस्याऽस्य गन्तव्यं नैव विद्यते ॥८४॥
यत्र यत्र प्रयात्येव स्थितोऽस्त्यग्रे परः प्रभुः ।
अन्येषां जायते बुद्धिश्चायं गतस्तथाऽऽगतः ॥८५॥
सर्वत्र व्यापकस्याऽस्य दूरं किञ्चिन्न विद्यते ।
सर्वत्र संस्थितस्याऽस्य निरोधः कोऽपि नास्ति च ॥८६॥
सर्वशरीरिणश्चाऽस्य नाऽपथ्यं किञ्चिदस्ति वै ।
नाऽगम्यं चापि नाऽसह्यं नाऽप्राप्यं किञ्चिदस्ति च ॥८७॥
नाऽविधेयं च नाऽयोग्यं नाऽकार्यं किञ्चिदस्त्यपि ।
यस्य सर्वाणि तत्त्वानि क्षेत्राणि भवनानि च ॥८८॥
सृष्टयो जडरूपाश्च चिद्रूपा यस्य सन्ति च ।
कालो येन कृतो दीर्घः क्षणो येन च ह्रस्वितः ॥८९॥
गतयः पारहीनाश्च सुपारा येन निर्मिताः ।
व्योमाऽनन्तं तथा सान्तं येन कृष्णेन निर्मितम् ॥९०॥

यत्संकल्पे प्रलम्बन्ते ह्रस्वायन्ते दिनादयः ।
अक्षरे प्रकृतिं धत्तेऽक्षरं धत्ते तनावपि ॥९१॥
प्रकृतौ सर्वतत्त्वानि धत्ते मायामयेऽक्षरम् ।
एवं कर्तुं चाप्यकर्तुमन्यथाकर्तुमीश्वरः ॥९२॥
यो हि सर्वाऽधिकश्चैको भगवतां परेश्वरः ।
सोपि लीलावशो नैजान् दर्शयामास भूतिकाः ॥९३॥
जीवसृष्टीश्चेशसृष्टीर्दर्शयामास सर्वथा ।
सर्वाभ्यो निजशक्तिभ्यः स्वाऽभिन्नाभ्यः पृथक्तया ॥९४॥
तदिदं मोहनं बद्रि चाद्वैते द्वैतवद् यथा ।
एवं विदित्वा निर्लेपं निष्क्रियं च निरञ्जनम् ॥९५॥
निजनाथं कृपानाथं सद्यः सृष्टेर्विमुच्यते ।
सर्वधामेशपूज्यं स्वं पतिं श्रीवल्लभंगुरुम् ॥९६॥
विदित्वा ब्रह्मरूपास्ता ब्रह्मप्रियादिकाः स्त्रियः ।
परं भावं हरौ प्राप्ताः सर्वोत्कर्षं निजं विदुः ॥९७॥
तृप्तास्तासां समस्ताशा विभाव्य सर्वतोधिकम् ।
निजं कान्तं परमेशं विरामं ताः परं ययुः ॥९८॥
कृष्णनारायणस्वामी तासां मनांस्यपूरयन् ।
भक्तमनःपूर्णताऽऽनुषङ्गिकत्वेन लीलया ॥९९॥
चर्मनेत्रा जना लोके न जानन्ति कलां हरेः ।
चिकीर्षितं न जानन्ति चतुःपुमर्थसंभृतम् ॥१००॥
बद्रिके स्वप्रियाद्यैश्च सेवितो भगवत्तमः ।
चातुर्मास्ये वसन् क्षेत्रेऽक्षरे कुंकुमसंज्ञके ॥१०१॥
जन्मजयन्तिकां चक्रे षड्विंशां स्वस्य शोभनाम् ।
आययुस्तत्र सर्वे वै सर्वसृष्टिनिवासिनः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने वैराजादीश्वरलोकेषु चावतारधामादिषु गत्वा भगवान् ससार्थः कुंकुमवापिकामाययावित्यादिनिरूपणनामा नवनवतितमोऽध्यायः ॥ ९९ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि श्रीहरेः परमात्मनः ।
षड्विंशायां स्वजन्मनो जयन्त्यां प्रातरेव ह ॥ १ ॥
कार्तिकस्याऽसिताऽष्टम्यां कृतस्नानादिमंगलः ।
भूषावेषादिसम्पन्नो भगवान् पुरुषोत्तमः ॥ २ ॥
सभायां कानके दिव्ये गजासने महासने ।
व्यराजत हरिस्तत्र लोमशेन महर्षिणा ॥ ३ ॥
पूजितो वर्धितश्चाशीर्वादैरक्षतकुंकुमैः ।
चन्दनैः पुष्पहाराद्यैर्गन्धसारैः समर्चितः ॥ ४ ॥
पित्राभ्यां न्यस्तमुकुटो मस्तके कुण्डले तथा ।
कर्णयोर्मणिहारादिशोभितश्च गलोरसोः ॥ ५ ॥
ततो मुक्तैराक्षराद्यैरवतारैस्तथेश्वरैः ।
सिद्धैर्मुनिभिः पितृभिः सुरैश्च मानवादिभिः ॥ ६ ॥
नृपैर्यक्षैः किन्नरैश्च साध्यैश्च चारणैस्तथा ।
गन्धर्वैः फणिभिर्दिव्यदेहिभिः पूजितः प्रभुः ॥ ७ ॥
आशीर्भिर्वर्धितश्चापि शुशुभे भगवाँस्तथा ।
विप्रैश्च साधुभिः साध्वीभिश्च योगिभिरर्चितः ॥ ८ ॥
नीराजितः क्रमात् सर्वैरुपदाभिः प्रतोषितः ।
गीतिभिश्चाप्सरोवृन्दैर्नर्तनैर्नृत्यवेदिभिः ॥ ९ ॥
नर्तकीभिश्च भगवान् प्रसादितः प्रहर्षितः ।
आगता ये महीमाना लोकालोकनिवासिनः ॥१०॥
धामाऽधामनिवासाश्च धन्यवादैः प्रतोषिताः ।
गुरुणा लोमशेनापि पित्रा गोपाल्योगिना ॥११॥
पारितोषिकदानैश्च पूजिता मानिता अपि ।
सभायाः परिहारान्ते भोजिता दिव्यभोजनैः ॥१२॥
उपदाभिस्तोषिताश्च पूजिताः सर्व एव ते ।
विदायं प्राप्य ते सर्वे ययुर्नैजान् महालयान् ॥१३॥
परिहारे समुत्पन्ने सुखं चोवास सत्पतिः ।
आनन्दयन् प्रियाः सर्वा आवसन्तं निजालये ॥१४॥
बद्रिके तत्र चायान्ति प्रतियन्ति सहस्रशः ।
वीक्षणार्थं हरेर्नित्यं नरा नार्यो मुदान्विताः ॥१५॥
बालिकापुत्रसंयुक्ताः पतिबान्धवशोभिताः ।
स्त्रीकुटुम्बादिसहितास्तीर्थार्थे समयान्ति हि ॥१६॥
क्वचिद् देवाश्च पितरो मुनयोऽप्यभियन्ति च ।
पुत्रपुत्र्यादिसहिताः सापत्या योषितोऽपि च ॥१७॥
सौभाग्यवत्यः सुन्दर्यो रामयन्त्यो निजात्मजान् ।
आयान्ति कृष्णवीक्षार्थं तीर्थं कृत्वा प्रयान्ति च ॥१८॥
भक्ता नार्यश्च ताः पुत्रं पुत्रीं कृत्वा कटिस्थले ।
प्रमोदन्ते प्रशोभन्ते स्तन्यपानं ददत्यपि ॥१९॥
चूम्बन्ते च स्पृशन्ति द्राक् प्राप्नुवन्ति सुखानि हि ।
रमन्ते बालकैः स्वैश्च समयन्ति च तत्पराः ॥२०॥
मातः पितः प्रवदन्ति समाह्वयन्ति बालकाः ।
श्रुत्वा काकलिकां भाषां प्रमोदन्तेऽति मातरः ॥२१॥
पतिस्पर्शप्रमोदाश्च सम्प्रयोगसुखानि च ।
पुत्रस्पर्शप्रमोदानां कलां नार्हन्ति षोडशीम् ॥२२॥
अपुत्रा चाऽसुता माता शोभते नैव चैकला ।
अनपत्या चाऽफला च कदलीव न शोभते ॥२३॥

सापत्या सफला वल्ली मृगीव शोभते सदा ।
शुष्कायते त्वनपत्या रूक्षायते विषायते ॥२४॥
गृहं चापत्यविहीनं चाऽङ्कोऽपत्यं विनाकृतः ।
उत्सवो भोजनं चेति शोभन्ते न कदाचन ॥२५॥
एवं ब्रह्मप्रिया नित्यं विचारयन्ति स्वान्तरे ।
वीक्ष्य वीक्ष्याऽपत्यवतीर्मातॄः स्वतुल्यविग्रहाः ॥२६॥
बद्रिके श्रीकृष्णनारायणेन सह भूतले ।
पातालेषु भुवर्लोके स्वर्गे सत्ये जने तथा ॥२७॥
यत्र यत्र ययुः कृष्णपत्न्यस्तत्र च तत्र च ।
दृष्ट्वा सापत्यवनिता अकुर्वन्त सुतेषणाः ॥२८॥
ईशलोके देवलोके मेरौ द्वीपेषु सप्तसु ।
यत्र विमानके स्थित्वा पत्या समं ययुस्तु ताः ॥२९॥
ब्रह्मप्रियाद्याः सर्वा वै तत्र तत्र विलोक्य ताः ।
सापत्यसुखरसिकाश्चक्रुर्वाञ्छां सुतार्थिनीम् ॥३०॥
पुत्रवत्याः समानायाः सन्निधौ पुत्रवर्जिता ।
म्लायते बद्रिके लोकेऽनपत्या शोकमेत्यपि ॥३१॥
वन्ध्यात्वं दूषणं लोके निरयो मूर्तरूपधृक् ।
यत्र बालपदं नास्ति बालदोला न विद्यते ॥३२॥
बालकाकलिका नास्ति तद्गृहं प्रेतवासितम् ।
यत्र गर्भवती नारी नास्ति नास्ति च सूतिका ॥३३॥
नास्ति स्तन्यप्रपात्री च तद्गृहं डाकिनीगृहम् ।
यत्र माता पिता शब्दौ न स्तो न स्तश्च पुत्रकः ॥३४॥
पुत्री शब्दोऽपि नास्त्येव तद्गृहं चाऽवधूतिकम् ।
यत्र बालस्वरूपं स्वं प्रतिबिम्बं न विद्यते ॥३५॥
तद्गृहं त्वन्धतमसा व्याप्तं चामंगलं सदा ।
यत्र बालो न वा पुत्री सम्पन्नृतं गृहं तु तत् ॥३६॥
अरण्यसदृशं बोध्यं फेरुराजगृहोपमम् ।
गार्हस्थ्यं विफलं तस्या यस्यांऽके बालकं नहि ॥३७॥
कामना विफला तस्या या तु गर्भवती नहि ।
भूषाशृंगारवेषाश्च विफला रूपसम्पदः ॥३८॥
विफलं सपतिकत्वं यस्या अङ्के न बालकम् ।
विनाऽपत्यं पितृऋणं नापगच्छति कर्हिचित् ॥३९॥
यौवनस्य फलं बालैः ऋणापाऽऽकरणं यतः ।
विफला धातवस्तस्या रणे नद्याः प्रवाहयत् ॥४०॥
शरीरमस्या रणवद् गृहं स्मशानवत्तथा ।
पतिः पाषाणवच्चापि पत्नी सा शुष्कगर्तिका ॥४१॥
वंशविस्तारहीनानां परलोको न विद्यते ।
स्वर्गे वंशविहीनानां वासो देवेषु नैव च ॥४२॥
अत्र लोकेऽनपत्यानां मुखं पश्यति नेतरे ।
प्रातस्तद्दर्शने जाते गण्यते चाऽत्यमंगलम् ॥४३॥
सम्पदां तु फलं भोगो भोगानां बालकाः फलम् ।
बालकानां फलं वंशो वंशः पितृप्रशान्तिदः ॥४४॥
अपि गावश्च पशवः पक्षिणो जलजन्तवः ।
आरण्यकाश्च वा ग्राम्याः शोभन्तेऽपत्यसंयुताः ॥४५॥
मानमर्हन्ति सापत्या निरपत्यास्तिरस्कृतिम् ।
जातिभावो हि सापत्ये पुरुषार्थोऽपि तत्र वै ॥४६॥
तस्मात् पुत्रवती पत्नी सत्या पत्नी न चान्यथा ।
पुत्रवतीभिरस्माभिर्भाव्यं ब्रह्मप्रियादिभिः ॥४७॥
कृष्णनारायणः कान्तः स्वयं दास्यति नः सुतान् ।
समयोऽयं सुतार्थोऽस्ति कदा दास्यति नः सुतान् ॥४८॥
कदा कान्तस्य बिम्बानि प्रतिबिम्बानि वै मुदा ।
द्रक्ष्यामः स्वांऽकसंस्थानीत्येवं चिन्तां प्रचक्रिरे ॥४९॥
ज्ञात्वा कृष्णः सतीनां वै मानसानि यथायथम् ।
विकसन्तं वसन्तर्तुमालोक्याऽचिन्तयत्तदा ॥५०॥
आम्रमये महारण्ये विहर्तुं यामि चैत्रके ।
कोट्यर्बुदाब्जपत्नीनां पूरयिष्ये मनोरथान् ॥५१॥
निश्चित्यैवं तृतीयायां शुक्ले चैत्रे स्वयोषितः ।
सह नीत्वा विहर्तुं स ययावाम्रवणानि तु ॥५२॥
अशोकानां च कुन्दानां बकुलानां वनानि च ।
चम्पकानां कदलीनां रैवताद्रिवनानि च ॥५३॥
कर्मदानां च वंशानां क्षीरिकाणां वनानि च ।
जम्बूनां किंशुकानां च स्थलपद्मवनानि च ॥५४॥
कदम्बानां पुष्पवतीवल्लीनां सुवनानि च ।
पुष्पितानां स्तबकानां स्तम्बानां प्रवणानि च ॥५५॥
अश्वपट्टसरसश्च दक्षिणे पश्चिमे तथा ।
मधुकानां चामृतानां जम्बीराणां वनानि च ॥५६॥
इक्षूणां सरसानां च बिल्वानां सुवनानि च ।
श्रीवृक्षाणां श्रीफलानां महोद्यानानि यान्यपि ॥५७॥
नासपतीनां सन्तराणां बदराणां वनानि च ।
दाडिमानां खर्जुराणां खारिकाणां वनानि च ॥५८॥
शर्कराकन्दजातीनां भूतलानि शुभानि च ।
द्राक्षाणां च लविंगानामेलानां सुवनानि च ॥५९॥
पूगीनां नागवल्लीनां कर्पूराणां वनानि च ।
त्वक्साराणां तिन्तिडीनां चाऽक्षिराणां वनानि च ॥६०॥
चिकूराणामरण्यानि नवरंगवनानि च ।
महोद्यानानि रम्याणां बदामानां वनानि च ॥६१॥

कस्तूरीमृगवासानां क्षेत्राणि सस्यवन्ति च ।
चणकानां गोधूमानां यवानां शालिशाकिनाम् ॥६२॥
पत्रिणां शिम्बिकानां चोत्तेजकानां वनानि च ।
कमलीनां कुमुदानां सुकल्मानां सरांसि च ॥६३॥
शाद्वलानि विचित्राणि भूतलारण्यकानि च ।
वीक्षितुं च विहर्तुं च दर्शयितुं निजप्रियाः ॥६४॥
रन्तुं गन्तुं सुखं रामयुतुं पूरयितुं मनः ।
विमानेन ययौ कृष्णनारायणोऽद्रिसन्निधौ ॥६५॥
पश्चिमोदधिपर्यन्तं वनेषूपवनेष्वपि ।
भद्रातीरे तथा स्वर्णरेखातीरे च भूतले ॥६६॥
गोमतीसागरे चौजस्वतीतीरे तथा ययौ ।
हरिणीसागरे शत्रुंजितायाः सन्निधावपि ॥६७॥
व्याघ्रारण्ये तथा सिंहारण्ये गोकर्णसन्निधौ ।
सर्वसौराष्ट्रभागेषु विहरन् स्त्रीः प्रमोदयन् ॥६८॥
पूरयँस्तन्मनांस्येव रेमे कृष्णनरायणः ।
यावत्यः प्रमदा नैजास्तावद्रूपाणि धारयन् ॥६९॥
रेमे समस्तनारीभिः कृष्णनारायणः प्रभुः ।
ऊर्ध्वरेता ब्रह्मचारी शीलं रेमे प्रपोषयन् ॥७०॥
कोकिलानां कूजनानि केका मयूरघोषिताः ।
मेनानां मिष्टगीतानि गुंजारवान् द्विरेफिणाम् ॥७१॥
शुकानां चिक्कुकीर्वाणीर्वन्यानां विमला गिरः ।
शृण्वन्नुत्तेजिका रेमे रामाभी रमणीश्वरः ॥७२॥
सुगन्धान् विविधान् गृह्णन् पुष्पद्यस्यासु भूतले ।
आस्वादयन् रसान् श्रेष्ठान् भक्षयन् सुमधूनि च ॥७३॥
फलान्यास्वादयन् कृष्णो रेमे रामाभिरुत्सुकः ।
पिबन् प्रियाननरसान् ददत् ताम्बूलसद्रसान् ॥७४॥
प्रियामुखेषु भगवान् रेमे ताभिर्वने वने ।
भोजयन् भक्षयन् गुन्द्रान् गुन्द्रपनसपेशिकाः ॥७५॥
उत्तेजयन् हावभावै रेमे ताभिर्वने वने ।
कुंजे निकुंबके वृक्षतले वल्लीसुगह्वरे ॥७६॥
तृणपुञ्जे स्तम्बमध्ये रेमे राजीवलोचनः ।
आश्लेषचुम्बनस्पर्शैर्घर्षणैर्मर्दनैरपि ॥७७॥
आह्लादकैर्दैः कामै रेमे रामाभिरच्युतः ।
अप्रस्खलितभावैश्च रामयामास ताः प्रियाः ॥७८॥
बद्रिके तृप्तिमापन्ना यावत्तावद् रराम ह ।
रामयन्तं तोषयन्तं चानन्दयन्तमच्युतम् ॥७९॥
वीक्ष्य सम्प्रार्थनाकालं प्रसन्नं परमेश्वरम् ।
पतिं प्रियामयं कान्तं कान्ताः परीक्ष्य चान्तरम् ॥८०॥
विहस्य प्रणिपत्याऽपि समाश्लिष्य मुहुर्मुहुः ।
प्रचुम्ब्य हृदये धृत्वा प्रार्थनां चक्रिरे प्रियाः ॥८१॥
कान्त रमण योगीन्द्रपूज्य योगेश कामद ।
ब्रह्मचारिन् परब्रह्म निर्लेप कामवर्जित ॥८२॥
निरीह सर्वशक्तीश चाऽनासक्त निरञ्जन ।
सर्वकामप्रपूर त्वं जयसे प्रियकारक ॥८३॥
अप्रस्खलितभावस्त्वं जयसे सुखशेवधे ।
नित्यस्वानन्दमग्नोऽसि भक्ताशापूरकोऽप्यसि ॥८४॥
शीलव्रतं तव मूर्तौ सदा संवर्तते हरे ।
वयं मुग्धा भवामोऽत्र बीजदानं न विद्यते ॥८५॥
पुत्रवत्यः कथं स्यामो नारायणनरायण ।
कृष्णकृष्णेश राधेश लक्ष्मीश चात्मसंभृत ॥८६॥
सर्वगर्भेश गोपीश ब्राह्मीकान्त रमापते ।
आत्मपते प्रियपते प्रियापतेऽक्षरेश्वर ॥८७॥
मुक्तमुक्तानिकास्वामिन् बीजं दत्से न चेद् यदि ।
कथं स्यामः पुत्रपुत्रीवत्यो वयं तवाऽङ्गनाः ॥८८॥
सापत्येच्छावतीनां नः समीहाः पूरय प्रभो ।
पुत्रपुत्रीमातरश्च स्यामो वयं तथा कुरु ॥८९॥
अनपत्यप्रमदानां मुखं चाऽमंगलं सदा ।
नाऽयं लोकः परश्चापि सुखदो विरतिप्रदः ॥९०॥
लोकाश्चाऽपत्यहीनस्य षण्ढत्वं कल्पयन्त्यपि ।
अनपत्यगृहे कृष्ण देवा नायान्ति पूजने ॥९१॥
गृहस्थाश्चापि नाऽऽयान्ति नैजाऽमंगलताभयात् ।
तस्मात् समर्थ भगवन् सर्वासां कामपूरक ॥९२॥
देहि युग्मफलं पुत्रीपुत्रयुगलरूपकम् ।
सर्वाभ्यो युगलं चैकं चैकं निजस्वरूपवत् ॥९३॥
लोकपंक्तिगणनायै गार्हस्थ्यशोभनाय च ।
वंशविस्तारसिद्ध्यर्थं देह्येकं युगलं पृथक् ॥९४॥
समर्थं त्वत्समं कृष्ण पितृतारणशक्तिकम् ।
ब्रह्मशक्त्यन्वितं दिव्यमेकैकं युगलं शुभम् ॥९५॥
अपत्यरूपं वात्सल्यस्थानं मानसबन्धनम् ।
सर्वमंगलसंवासं देह्येकैकं सुतासुतम् ॥९६॥
सहायकृत् पितुः पुत्रो मातुः पुत्री सहायिनी ।
पुत्रस्य न्यूनता पुत्र्या पूरयितुं न शक्यते ॥९७॥
न पुत्र्या न्यूनता पुत्रैः पूरयितुं प्रशक्यते ।
तस्मात् पुत्रीं शुभां चैकां चैकां चैकैककं सुतम् ॥९८॥
प्रदेहि श्रीस्वामिकृष्णनारायणाऽऽर्यसत्पते ।
सर्वरतिपतेऽनंगपते गर्भपते विभो ॥९९॥

धर्मार्थकाममोक्षाधिपते श्रेयःपते प्रभो ।
प्रेयःपतेऽर्थितभावपते देहि सुतां सुतम् ॥१००॥
इत्येवमर्थयामासुः सर्वास्ताः कृष्णयोषितः ।
अवैषम्येन वै पुत्रीं पुत्रं च युगलात्मकम् ॥१०१॥
श्रीकृष्णो बद्रिके तासां भावान् ज्ञात्वा रतिप्रियान् ।
पुनः पुनश्च रेमे वै ता रेमुश्च सुतेच्छया ॥१०२॥
मूर्च्छान्तं परमानन्दं ताभ्यो ददौ हरिः पतिः ।
ऊर्ध्वरेता ब्रह्मचारि स्वामिश्रीवल्लभः प्रभुः ॥१०३॥
भानं विसृज्य देहानां कृष्णतादात्म्यमूर्छिताः ।
अभवँस्ताः प्रियाः सर्वा बद्रिके द्रविता हरौ ॥१०४॥
दिव्या लीला इमाः स्मृत्वा बद्रिके पापिनो जनाः ।
नरा नार्योऽपि निष्पापा भूत्वा यान्ति परां गतिम् ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने वसन्ते श्रीहरिः सौराष्ट्रीयनदनदीपर्वतारण्यसमुद्रपुलिनादिषु विहारार्थं गतस्तत्र स्वपत्नीभिः पुत्रपुत्र्यर्थं प्रार्थितो रमणं रेमे चेत्यादिनिरूपणनामा शततमोऽध्यायः ॥१००॥

श्रीनरनारायण उवाच—

ततः श्रीभगवान् बद्रि ज्ञात्वा भावान् स्वयोषिताम् ।
रञ्जयँस्तास्तदा प्राह सर्वकामार्थकृद्वचः ॥ १ ॥
यथेष्टं वः प्रदास्यामि युगलं युगलानि वा ।
पुत्रीसमूहमात्रं वा पुत्रसमूहमात्रकम् ॥ २ ॥
पुत्रपुत्र्युभयं चापि न्यूनपुत्र्यधिकात्मजम् ।
न्यूनपुत्राऽधिकपुत्रीं बह्वपत्यानि वाऽर्पये ॥ ३ ॥
यासां यस्या यथा यादृङ्मनो वा तृप्तिमर्जयेत् ।
तथा तावदपत्यानि दास्ये सर्वाभ्य एव ह ॥ ४ ॥
सृष्टिः संकल्पजा श्रेष्ठा धामेश्वरादिलोकगा ।
सृष्टिर्दर्शनजा चान्या देवपित्रादिलोकगा ॥ ५ ॥
सृष्टिः स्पार्शनजन्या तु तापसानां च योगिनाम् ।
सृष्टिर्मैथुनजा लोके मनुष्यपशुपक्षिणाम् ॥ ६ ॥
सत्ये संकल्पजा सृष्टिस्त्रेतायां दर्शनोद्भवा ।
द्वापरे स्पर्शमात्रोत्था कलौ मिथुनकर्मजा ॥ ७ ॥
गर्भे बीजप्रदानोत्था सूतकादिमयी हि सा ।
सृष्टिस्तु मलिना सैषा नेदानीं वर्तते भुवि ॥ ८ ॥
स्पर्शमात्रोद्भवा चापि गर्भाधानात्मिका हि सा ।
सापि तद्वत्तु मलिना न श्रेष्ठा सूतकान्विता ॥ ९ ॥
सृष्टिर्दर्शनजा चापि नारीगर्भोद्भवा हि सा ।
पत्नी पत्युर्वीक्षणेन सगर्भा जायते यतः ॥१०॥
सूतेऽपि च ततो गर्भजन्या सापि न चोत्तमा ।
तस्मात् पत्न्यो भवत्यो वै यदि वाञ्छथ मानसीम् ॥११॥
संकल्पजां प्रजां दिव्यां मालिन्यसूतकोज्झिताम् ।
ददामि प्रत्येकपत्न्यै युगलानि शुभानि वै ॥१२॥
कन्या मातृसमाकाराः पुत्रान् मद्रूपरूपिणः ।
यथेष्टं प्रददाम्यत्र प्रब्रुवन्तु यदर्थितम् ॥१३॥
अयोनिजानां बालानां संकल्पोत्थसुदेहिनाम् ।
पितृसंकल्पवत्तेषामवस्था जायते क्षणात् ॥१४॥
जातमात्रा युवानश्च किशोरा जरठाश्च वा ।
यथेच्छन्ति पितरश्च तथा भवन्ति वै द्रुतम् ॥१५॥
जातकर्मादिसंस्काराश्चोपवीतादयस्तथा ।
वेदाध्ययनयज्ञाश्च ब्रह्मचर्यव्रतादिकम् ॥१६॥
सर्वं तेषां स्वपितॄणां संकल्पोत्थं क्षणार्जितम् ।
जायते एव तत्राऽस्ति बलं पितृकृतं परम् ॥१७॥
न गर्भसूतकं तेषां न संस्कारसमाऽऽगमः ।
न कालाऽपेक्षणं तेषां प्राकट्यं दिव्यमेव यत् ॥१८॥
संकल्पोत्थाः प्रजा ईशेश्वर्यो भवन्ति सर्वदा ।
स्वभावसिद्धयः सर्वा जरामरणवर्जिताः ॥१९॥
तत्त्वपराभवशून्याः शाश्वताऽऽनन्दसंभृताः ।
विष्णुतुल्याः प्रजाः सर्वा जायन्ते मानसोद्भवाः ॥२०॥
परब्रह्मस्वरूपेण मया कृष्णस्तु मानसः ।
गोपीपतिः कृतो दिव्यो गोलोकाधिपतिः पुरा ॥२१॥
परब्रह्मस्वरूपेण मया व्यूहेश्वरस्तथा ।
वासुदेवो मानसश्च कृतोऽमृताऽधिपः प्रभुः ॥२२॥
परब्रह्मस्वरूपेण मया नारायणः पुरा ।
कृतो वैकुण्ठनाथश्च लक्ष्मीपतिर्हि मानसः ॥२३॥
परब्रह्मस्वरूपेण महाविष्णुः पुरा मया ।
कृतः श्रीधामनाथश्च महालक्ष्मीपतिर्हदा ॥२४॥
परब्रह्मस्वरूपेण मयाऽव्याकृतपालकः ।
भूमा कृतो न्यायदाता मानसश्चेश्वराधिपः ॥२५॥
परब्रह्मस्वरूपेण मया वै मानसाः सुताः ।
अवतारा असंख्याता धृता हयादयः पुरा ॥२६॥
परब्रह्मस्वरूपेण मया मन्मूर्तिशक्तयः ।
राधारमाद्या वामांगरूपा धृता निजप्रियाः ॥२७॥
मानस्यस्ताः समस्ता वै माणिकीकमलादिकाः ।
ब्रह्मप्रिया यूयमत्र हरिप्रियाश्च मे स्त्रियः ॥२८॥

असंख्यातास्तथा मुक्तानिका मन्मानसोद्भवाः ।
महाकालो महामाया विद्या मन्मानसोद्भवाः ॥२९॥
मुक्ता मे मानसोद्भूताकाराः सन्त्यपि धामनि ।
एषा मे मानसी सृष्टिरगर्भोत्थोत्तमोत्तमा ॥३०॥
योनिकोष्ठोज्झिता पाकरहिता सा ह्ययोनिजा ।
दिव्यसच्चित्सुखपूर्णा सर्वा मत्सदृशी मता ॥३१॥
तादृशीं सुप्रजां पत्न्यो यदि वाञ्छथ तां ददे ।
प्रब्रुवन्तु द्रुतं चात्र ददामि तत्र मा चिरम् ॥३२॥
कृतं पयोव्रतं वर्षमदित्या वामनाप्तये ।
नात्र पयोव्रतापेक्षा सर्वसिद्धिप्रदे मयि ॥३३॥
इत्युक्ता बद्रिके पत्न्यो वव्रिरे मानसीः प्रजाः ।
समानन्यायोगिन्यः प्रत्येकं युगलं शुभम् ॥३४॥
एकां पुत्रीमेकपुत्रं युगपद् ऋणमुक्तये ।
वन्ध्यात्वादिनिवारार्थं नाधिकं न्यूनमेव न ॥३५॥
अनादिश्रीकृष्णनारायणः प्राह तथास्त्विति ।
वनेष्वेवाऽभवन् पत्न्यस्तूर्णं युगलशोभिताः ॥३६॥
पुत्रीपुत्रान्विताः सर्वा मातापितृपदास्पदाः ।
प्रत्येकस्याः पुरस्तत्र प्रभाकृष्णेच्छया द्रुतम् ॥३७॥
अपत्यं युगलं जातं युवावस्थं विभूषितम् ।
सूर्याऽयुतादिभाभ्यासं हारमुकुटशोभितम् ॥३८॥
मातापितृगुणरूपैश्वर्याकृत्यादिराजितम् ।
कृतविद्यं कृतसर्वशृंगारं सहसंस्कृतम् ॥३९॥
कोट्यर्बुदाब्जपत्नीनां युगपद् युगलानि वै ।
कोट्यर्बुदाब्जपत्नीनां सरूपाणि शुभानि च ॥४०॥
कोट्यर्बुदाब्जसंख्यानि प्राविरासन् वनान्तरे ।
बद्रिके ध्यानयोगा ये सुरा गान्धर्वकोटयः ॥४१॥
अप्सरसः किन्नराद्या ज्ञात्वा कृष्णचमत्कृतिम् ।
दिव्यदृष्ट्या द्रुतं तत्राऽऽपेतुरम्बरमार्गतः ॥४२॥
पुष्पवृष्टिं चान्दनीं च वृष्टिं व्यधुस्तथाऽऽक्षतीम् ।
दध्यंकुरादिवृष्टिं च जयनादान् प्रचक्रिरे ॥४३॥
दिव्यवाद्यानि चादायाऽऽगत्वा वादनयोगिनः ।
वादयन्ति स्म वाद्यानि महोत्साहसमन्विताः ॥४४॥
गान्धर्वा गायनं चक्रुर्नर्तक्यो नर्तनं व्यधुः ।
मंगलानि व्यधुर्नार्यस्तुष्टुवुर्जगदीश्वराः ॥४५॥
मुक्तानिकाः सामगीतीर्जगुः प्रमोदसंभृताः ।
आशिषः प्रददुः सिद्धाः साधवश्च महर्षयः ॥४६॥
वनदेव्यो मंगलानि बगुश्चानर्चुर्गदरात् ।
इत्येवं बद्रिके तत्राऽपत्यजन्ममहोत्सवाः ॥४७॥
अभवन् बहुधाऽरण्ये वने ग्रामे गृहे गृहे ।
आययुः श्रीहरिणा ताः सापत्याः कृष्णयोषितः ॥४८॥
स्वस्वापत्ययुतास्तूर्णं स्वस्वप्रासादकेषु वै ।
अश्वपट्टसरोवारिजलैः कृष्णोऽभिषेचनम् ॥४९॥
तन्निमित्तं महाहर्षभरं चकार तत्र ह ।
जातसंस्कारमेवापि लोमशो वै समाचरत् ॥५०॥
प्रियःकृष्णो ददौ तत्र दानानि कानकानि च ।
मणिरत्नराजतानि धनाऽन्नाऽम्बरकाण्यपि ॥५१॥
गृहगोऽश्वविभूषाश्च भूपात्रोपस्कराणि च ।
विप्रेभ्यो यतिसाधुभ्यो दीनानाथेभ्य इत्यपि ॥५२॥
योषिद्भ्यो बालबालाभ्यो ददौ दानानि वै तदा ।
भोजनानि सुमृष्टानि भिक्षुकेभ्यो ददौ तदा ॥५३॥
प्रजाः पुत्रादिवीक्षार्थं चाययुः कृष्णमन्दिरम् ।
वीक्ष्य वीक्ष्य हरेः पुत्रान् पुत्रीर्युगलरूपिणः ॥५४॥
प्रमोदं मोदमासाद्याशीर्वादान् प्रददुश्च तं ।
जन्मोत्सवोत्तरं तूर्णं सद्यःसंस्कारयोग्यताम् ॥५५॥
वीक्ष्य श्रीलोमशस्तेषां युगलानां तदैव हि ।
कर्मप्रवाहसिद्ध्यर्थं संस्कारान् स व्यधात् परान् ॥५६॥
हवनानि व्यधात्तन्निमित्तानि च लोमशः ।
श्राद्धकर्माणि सर्वाणि दानानि भोजनानि च ॥५७॥
नामकरणसंस्कारं चकार लोमशो मुनिः ।
दिव्यनामानि सर्वाणि पुराणानि व्यनिश्चयत् ॥५८॥
तत्राऽष्टकृष्णपत्नीनां मुख्यानां पुत्रपुत्रिकाः ।
नामभिस्ते कथयामि बद्रिके शृणु चादितः ॥५९॥
सर्वज्येष्ठा शिवस्वामिसुता या काशिकोद्भवा ।
सर्वप्रिया सुखदालक्ष्मीस्तस्याः पुत्रस्तु नामतः ॥६०॥
मुकुन्दविक्रमो ज्येष्ठो मुक्तिबाला तु पुत्रिका ।
तयोर्युगलं नित्यं वै मोदते हरिमन्दिरे ॥६१॥
अथेतरा अष्टपत्न्यो लक्ष्मीः क्षीरोदपुत्रिका ।
कल्पद्रुमसुता श्रीश्च सूर्यपुत्री प्रभाऽऽत्मिका ॥६२॥
दिशां पुत्री पार्श्वती ललिता ब्रह्मणः सुता ।
जया सदाशिवपुत्री माणिकी दिव्यभूतिजा ॥६३॥
वैराजनामिजा पुत्री कमला तत्प्रजाः शृणु ।
लक्ष्म्याः पुत्रो वासुदेवः पुत्री तु दिव्यवासवी ॥६४॥
श्रियाः पुत्रो रासकृष्णः पुत्री रासेश्वरीति च ।
प्रभायाश्च प्रभुः पुत्रो ब्रह्मकान्तिः सुता तथा ॥६५॥
पार्श्वत्यात्मजोऽनन्तः पुत्री च बृहतीश्वरी ।
ललितायाः सुतो लालः सुता लीलेश्वरी तथा ॥६६॥

जयाया विजयः पुत्रो विजयेशी तु पुत्रिका।
माणिक्याः कौस्तुभमणिः सुतः सुता मणीश्वरी ॥६७॥
कमलायाः पद्मनाभः सुतः सुता नभोवती।
इत्येवमष्टपत्नीनां युगलाऽपत्यकाभिधाः ॥६८॥
अथाऽपराः शतं पत्न्यस्तासां नामानि वै शृणु।
तिस्रस्तथाऽधिकाश्चापि त्र्यधिकं शतमेव ताः ॥६९॥
तिस्रो मुख्या रमा राधा नारायणीति नामभिः।
रमायास्तु सुतो रामः पुत्री रामायणी तथा ॥७०॥
राधायास्तु सुतो रायः सुता ऋद्धिरया मता।
नारायण्या नरः पुत्रः पुत्री नरोत्तमी तथा ॥७१॥
शतपत्न्यभिधानानि शृणु बद्रीप्रियेऽधुना।
ब्राह्मी भागवती धामा भार्गवी च सरस्वती ॥७२॥
मंगला मानसा रेवा भक्तिर्गंगा रतिः कृतिः।
मुक्तिरेकादशी पुण्या कामदुघा च तुलसी ॥७३॥
सती मूर्तिर्गोमती च स्वर्णरेखा च नन्दिनी।
सावित्री विरजा दुर्गा दोला पुष्पा कलावती ॥७४॥
बदरी माधवी पम्पा षष्ठी प्रीतिः ऋतध्वजी।
कुशला काशिका चान्द्री मणिर्ज्योत्स्ना प्रभावती ॥७५॥
आर्षा सुरसा नन्दा च काञ्चनी हरिणी हनूः।
विश्वा वितस्तिः रसिका सुपर्णा च हिरण्मयी ॥७६॥
प्रभूतिः करिणी पद्मा पिंगला च सरोजिनी।
पूर्णिमा वल्लभा कार्ष्णी जोष्ट्री ज्योत्स्ना च पद्मिनी ॥७७॥
सुदुघा योगिनी विद्योतिनी शान्तिश्च मालती।
रक्ता चोरुक्रमा वैश्वी देवता कुमुदा शिवा ॥७८॥
तरला रेणुभिभा च कानकी नलिनी परी।
सुनन्दा कलिका साध्वी सुधाऽम्बा प्रकृतिः शमी ॥७९॥
श्यामा बाला मञ्जुला च पल्लवा वल्लवीश्वरी।
वेदी मोघवती श्वेता वैष्णवी मालिनी स्तवा ॥८०॥
भ्रमरी चारणी शीला दुग्धेति शतपत्निकाः।
तासां युगलापत्यानां नामानि बद्रिके शृणु ॥८१॥
क्रमशस्तत्र वै ब्राह्मया ब्रह्मरातः सुतः खलु।
सुता बृंहणिकानाम्नी मातृरूपगुणान्विता ॥८२॥
भागवत्याः सुतो भर्गो पुत्री भाग्येश्वरी शुभा।
सुधामायाः सुतश्चोर्जबलः सुता च धामिनी ॥८३॥
भार्गव्या बह्वृचः पुत्रः पुत्री ब्रह्मरुचिस्तथा।
सरस्वत्याः सुतः शार्ङ्गधरः सुता तु कौमुदी ॥८४॥
मंगलायाः सुतः प्रभासकः सुता तु भास्वरा।
मानसायाः सुतः सम्मानेशः सुता सुधोदरी ॥८५॥
रेवाया वारिजाक्षश्च सुतः सुता तु वारुणी।
भक्तेः सुतस्तु सर्वज्ञः सुता शेमुषिका शुभा ॥८६॥
गंगायास्तारकः पुत्रः पुत्री चातुरदीक्षिका।
रत्याः पुत्रो महानन्दः पुत्री सन्तर्पिणी सती ॥८७॥
कृतेः सुतस्तु सूद्योगः सुता तु नयरावती।
मुक्तेः सुतः सुनिर्वाणः सुता धुष्याश्वती शुभा ॥८८॥
एकादश्याः सुतः पुण्यव्रतः सुता पतिव्रता।
पुण्याया वृषविघ्नश्च सुतः सुता सतीश्वरी ॥८९॥
सुतः कामदुघायास्तु विष्णुः सुता सुराईणा।
तुलस्याः कृष्णमालस्तु सुतः सुताऽर्कमञ्जरी ॥९०॥
सत्याः सुतः ऋतवार्द्धिः सुता ऋतम्भरा शुभा।
मूर्तेः सुतश्चानिरुद्धः सुताः सुदर्शनेश्वरी ॥९१॥
गोमत्याः पावनः पुत्रः पुत्री पीयूषवर्षिणी।
सुतः सुवर्णरेखायाः श्रीवत्सः प्रोज्ज्वला सुता ॥९२॥
नन्दिन्याश्चाशुतोषश्च सुतः सुता विरामिणी।
सावित्र्या ब्रह्मद्युम्नश्च सुतः सुता गिरीश्वरी ॥९३॥
विरजायाः सुतः संकर्षणः सुता त्वजेश्वरी।
दुर्गाया देवगणपः पुत्रः पुत्री कृषोश्वरी ॥९४॥
दोलायाः स्वर्णलतिका पुत्री पुत्रश्च तोरणः।
पुष्पायास्तु परागो वै पुत्रः सरघा पुत्रिका ॥९५॥
कलावत्याः कारुनाथः सुतः सुता चमत्कृतिः।
बदर्या बदरः पुत्रः पुत्री पत्रावली शुभा ॥९६॥
माधव्या मधुकृत् पुत्रो मधुकी पुत्रिका शुभा।
पम्पायाः सारसी पुत्री वीर्यसेतुस्तु पुत्रकः ॥९७॥
षष्ठीदेव्याः सुता रक्षावती पुत्रस्तु रक्षणः।
प्रीत्याः सुतः सुमेलार्यः सुता प्रोन्मीलनी शुभा ॥९८॥
ऋतध्वज्याः सुता शान्ता सुतः सत्यव्रतः शुभः।
कुशलायाः सुतो योगीश्वरः सुता सुयोगिनी ॥९९॥
काशिकायाः सुतः प्राज्ञः सुता तु तैजसी शुभा।
चान्द्रयाः सुतस्तु धवलः सुता पायसमाधुरी ॥१००॥
मणेः विश्वप्रभा पुत्री परिधिश्च सुतः शुभः।
ज्योत्स्नायास्तु सुता विश्वज्योतिर्भूमा सुतः शुभः ॥१०१॥
प्रभावत्याः सुता हव्यादेवी सुतस्तु गोचरः।
आर्ष्याः सुता तु गायत्री सुतः प्रणवसत्तमः ॥१०२॥
सुरसायाः सुता स्वादवती पुत्रः प्रमापतिः।
नन्दाया नन्दनः पुत्रः पुत्री तु नान्दिनीसती ॥१०३॥
काञ्चन्यास्तु सुतश्चामीकरः सुता सुवर्णिनी।
हरिण्यास्तु सुता सम्पद्वती सुतोऽर्थवेदनः ॥१०४॥

हन्वाः सुता तु हसिनी सुतस्त्रिबुककेसरः ।
विश्वायास्तु सुतश्चाश्ववाहनश्च सुता श्रुतिः ॥१०५॥
वितस्त्यास्तु सुतो हस्तीश्वरः सुता प्रमेश्वरी ।
रसिकायाः सुतः प्रेमानन्दः सुता महोत्सवी ॥१०६॥
सुपर्णायाः सुता शुक्लवर्णा सुतः सुलोकनः ।
हिरण्मय्याः सुता पिङ्गाक्षिणी पुत्रस्तु मौक्तिकः ॥१०७॥
प्रभूतेस्तु सुता विपश्चिका पुत्रः प्रणादनः ।
करिण्यास्तु सुता स्वर्णदन्ता सुतो गजाननः ॥१०८॥
पद्मायास्तु सुतो नालः सुता रक्तपत्रिणी ।
पिंगलायाः सुतः पिताम्बरः सुताऽऽत्मबोधिनी ॥१०९॥
सरोजिन्या रक्तगर्भः सुतः सुता सुकौशिकी ।
पूर्णिमायाः सुतः सुधाकरश्चन्द्रकला सुता ॥११०॥
वल्लभायाः सुतः कार्ष्णवाल्लभिः शलभा सुता ।
कार्ष्ण्याः कृशोदरः पुत्रः पुत्री मिष्टस्वरा शुभा ॥१११॥
बोध्र्याः पुत्रः स्वप्रकाशकः सुपुत्री विवेकिनी ।
ज्योत्स्नायास्तु सुताऽनङ्गलतिका सुकविः सुतः ॥११२॥
पद्मिन्याः सलिला पुत्री पुत्रस्तु मूलकर्दमः ।
सुदुघायाः सुता साध्वीव्रता पुत्रः पयोनिधिः ॥११३॥
योगिन्यास्तु सुतो ब्रह्मसमाधिर्मुक्तराट् सुतः ।
विद्योतिन्याः सुतः स्वर्गपतंगः कृतिनी सुता ॥११४॥
शान्तेः सुतो विरामर्षिः सुता निर्मोहिनी शुभा ।
मालत्यास्तन्तुधृक् पुत्रः सुता सन्तानिका शुभा ॥११५॥
रक्ताया रञ्जनः पुत्रः पुत्री स्मितानना शुभा ।
उरुक्रमायाः पुत्री तु संक्रमा वामनः सुतः ॥११६॥
वैश्व्या विश्वावसुः पुत्रः पुत्री तु वैश्वदेविका ।
देवतायाः सुतो देवेश्वरः सुता दिवस्पदा ॥११७॥
कुमुदायाः सुता प्रमोदिनी सुतः प्रमोदकृत् ।
शिवायाश्चात्मजो जाम्बूवर्णः सुता सुखंकरी ॥११८॥
तरलायाः सुता क्षिप्रधीषणा धीश्वरः सुतः ।
राजराजः सुतो रेणुमिभायाः रायणी सुता ॥११९॥
कानक्या भूषणः पुत्रः पुत्री चूडामणिसती ।
नलिन्या भ्रामरी पुत्री पुत्रः षडंगवेद्युतः ॥१२०॥
पर्याः पुत्रः परमेशः पुत्री पारविलासिनी ।
सुनन्दायाः सुतो नन्दः सुता नारनिवासिनी ॥१२१॥
कलिकाया विकासास्यः सुतः सुता प्रफुल्लिका ।
साध्व्याः सुतः सन्तजनः सुता सुवासिनी शुभा ॥१२२॥
सुधायाः शंकरः पुत्रः पुत्री तथाऽम्बिका सती ।
अम्बाया आम्बलिः पुत्रो बालिकेशी तु पुत्रिका ॥१२३॥
प्रकृतेः कृतिमान् पुत्रः पुत्री यत्नेश्वरी शुभा ।
शम्याः पुत्रो दिव्यगर्भः पुत्री विश्वर्द्धिसत्तमा ॥१२४॥
श्यामाया नीलराजश्च सुतः सुता निलायनी ।
बालाया बहुलार्काख्यः सुतः सुता प्रवालिका ॥१२५॥
मञ्जुलायाः सुता मातंगिनी सुतो महेश्वरः ।
पल्लवायाः सुता पत्रानना सुतो दलेश्वरः ॥१२६॥
वल्लवायाः सुतो भारवाटो वाघेश्वरी सुता ।
वेद्याः सुतो मखधर्मा सुता तु स्वर्णकेशिनी ॥१२७॥
मोघवत्याः सुतः शार्ङ्गधरः सुता तलायना ।
श्वेतायाः पाण्डुरकेशी सुता पुत्रो हिमध्रुवः ॥१२८॥
वैष्णव्याः काण्डिका पुत्री पुत्रः सर्वक्रमाभिधः ।
मालिन्या जिष्णुदेवश्च सुतः सुता तु रोहिणी ॥१२९॥
स्तवायास्तापहा पुत्री पुत्रस्तपनकः शुभः ।
अमर्या अमृतः पुत्रः पुत्री तु ध्रुवशेमुषी ॥१३०॥
चारण्या ग्रन्थवित् पुत्रः पुत्री ब्रह्मरुतानना ।
शिलायास्तु सुतो विश्चिः सुतो रहस्यवेदनः ॥१३१॥
दुग्धाया धारिणी पुत्री धाता पुत्रः शुभक्रियः ।
इत्येतासां प्रजाः प्रोक्तास्तथाऽन्यासां तु योषिताम् ॥१३२॥
चत्वारिंशत्तथा तासां शतं संख्यातमेव तु ।
तासां प्रजा युगलात्मरूपा जाताः शुभक्रियाः ॥१३३॥
अन्यासां चापि कोट्यर्बुदाब्जसंख्याधियोषिताम् ।
युगलात्मप्रजाः प्राविष्कृताः संख्या न विद्यते ॥१३४॥
मुख्यानां द्वादशानां च शतसंख्याजुषामिह ।
योषितां चार्वपत्यानां नामान्युक्तानि चात्र वै ॥१३५॥
श्रवणादर्थभानाच्च दिव्यतां मोक्षमाप्नुयात् ।
भुक्तिं मुक्तिं लभेच्चापि परमेशे च भक्तिमान् ॥१३६॥
प्रातरुत्थाय नामानि य इमानि समुच्चरेत् ।
विघ्ननाशः कार्यसिद्धिस्तस्य वै स्यात् पदे पदे ॥१३७॥
किमत्र बहुनोक्तेन हरेर्वंशो हरिर्हि सः ।
हृत्वा पापानि चात्मानं हरत्यक्षरमच्युतः ॥१३८॥

इतिश्रीलक्ष्मीनाराणीयसंहितायां चतुर्थे तिष्यसन्तानेऽनादि-
श्रीकृष्णनारायणभगवतो द्वादशोत्तरशतमुख्यपत्नीनां
चैत्रशुक्लतृतीयायां युगलात्माऽपत्योद्भवाभिधानानि,
तथा तदधिकाऽष्टाविंशतीपत्नीनां तथा कोट्य-
र्बुदाब्जादिपत्नीनां युगलात्मकप्रजा-
वत्त्वोद्देशनिरूपणनामैकाऽधिक-
शततमोऽध्यायः ॥ १०१ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि चान्यासां तु समासतः।
समष्टिनामधेयानि वंशविस्तारगौरवात् ॥ १ ॥
चतुर्दशसहस्राणि युगलानि तु बद्रिके।
मेघनादीयकन्यानां हरेर्बालानि चाऽभवन् ॥ २ ॥
कोटिदीपावल्यपत्यान्यभवन् युगलानि वै।
कामधेनवीकन्यानां कोट्यपत्यानि चाऽभवन् ॥ ३ ॥
वसुमत्यादिकन्यानां शताऽपत्यानि चाऽभवन्।
गह्वराकन्यकाऽपत्यान्यभवन्नेककोटिकम् ॥ ४ ॥
वनदेव्यात्मजाकन्याऽपत्यानि चैकलक्षकम्।
दामनीकन्यकालक्षयुगलानि तथाऽभवन् ॥ ५ ॥
कंकतालीयकन्यानां षडपत्यानि चाऽभवन्।
तथैव कंकतालानामयुतं युगलान्यपि ॥ ६ ॥
अर्यम्णाद्यात्मजानां चापत्यान्यप्येकलक्षकम्।
रासातलीयकन्यानां पञ्चसाहस्रबालकाः ॥ ७ ॥
वासन्तिकस्त्र्यपत्यानि षोडशैवाऽभवन् खलु।
शाल्मालीयकन्यानां पञ्चशतानि बालकाः ॥ ८ ॥
स्वस्तिकनागकन्यानां सहस्राणि दशाऽभवन्।
युगलानि प्रजातानि विंशतिश्चापराणि च ॥ ९ ॥
शावदीनीयकन्यानामेकसहस्रबालकाः।
ऐन्द्रजालिककन्यानामपत्यानि सहस्रकम् ॥१०॥
विद्याकन्यायुगलानि पञ्चसप्ततिबालकाः।
लाक्ष्मणीपुत्रिकाऽपत्यान्यभवन् द्वे सहस्रके ॥११॥
वेधसीकन्यकाऽपत्यान्यभवन् युगलानि हि।
द्वासप्ततिसहस्राणि बालकानि शुभानि वै ॥१२॥
विश्वावसुसुतापत्यान्यभवँस्त्रिशतानि ह।
जुम्मासेम्लासुतापत्यान्येकसहस्रबालकाः ॥१३॥
सान्तपनसुताऽपत्यपञ्चसाहस्रमित्यपि।
सौरतीयसुताऽपत्यान्यभवन् शतमेव च ॥१४॥
महाबालेश्वरीकन्याऽपत्यानि त्रीणि चाऽभवन्।
दाक्षजावंगरीकन्यापत्यानि शतमित्यपि ॥१५॥
प्रज्ञाकन्यायुगलानि सहस्रबालकानि वै।
दासीकन्यात्मजातानि सहस्राणि दशाऽभवन् ॥१६॥
पितृकन्यात्मजातानि युगलानि तु विंशतिः।
पराचीनीयकन्यानामपत्यान्येककोटिकम् ॥१७॥
सान्तारणिसुतापत्ययुगलद्वयमित्यपि।
लाजाया युगलं चैकं क्रोधनायास्तथैकलम् ॥१८॥
सूच्याश्च युगलं चैकम् ऐलवीलीत्यमेकलम्।
शैब्यानां युगलान्येकशतं तदाऽभवच्छुभम् ॥१९॥
थार्कूटस्थीकन्यकानां पञ्चाशद्युगलानि च।
वैरजारीयकन्यानां युगलानि शतं तथा ॥२०॥
शाक्त्यक्षिणीकन्यकानां षष्टिस्तु युगलानि वै।
पैशाचिनीकन्यकानां युगलानि शतं तथा ॥२१॥
कालिमाशीयकन्यानां युगलानि शतद्वयम्।
औरलकैतुकीनां च त्रिंशद्युगलकानि च ॥२२॥
क्राथकीनां युगलानि पञ्चाऽभवँस्तदा ह्यपि।
पार्थवीनां युगलानि विंशतिश्चाभवँस्तदा ॥२३॥
औष्ट्रालराजीकन्यानां दशाऽपत्ययुगान्यपि।
हुंकारणीनां पञ्चापि तैराणीनां तु षट् तथा ॥२४॥
जयकाष्ठलकन्यानां पञ्चाऽपत्ययुगान्यपि।
आल्वीनरीयकन्यानां पञ्चापत्ययुगान्यपि ॥२५॥
जीनवर्द्धिसुताऽपत्ययुगलानि तु सप्त च।
अनाथीयुगलं चैकं प्राकीर्णकीसहस्रकम् ॥२६॥
शतद्वयं तथाऽपत्ययुगलान्यभवँस्तदा।
सप्ताऽऽल्पकेतवीयानामपत्ययुगलानि च ॥२७॥
जयकार्णीसुतायाश्चाऽपत्ययुगलमेकलम्।
पारीशानीयकन्यानामपत्यान्येकविंशतिः ॥२८॥
ऐन्दुरायीसुतानां द्वे युगलेऽभवतां तदा।
मौद्राण्डीनामपत्यानि पञ्चदशाऽभवँस्तथा ॥२९॥
गाण्डीसुताऽपत्यकानि युगलानि नवाऽभवन्।
लीनोर्णीकन्यकाऽपत्यचतुर्युगलकानि च ॥३०॥
बा॰च्छीकन्यकानामेकादशयुगान्यपि।
वाललीनीयकन्यानां चत्वारिंशद्युगान्यपि ॥३१॥
नारसिंहीकन्यकानां पञ्च युगलकानि च।
रायगामलीकन्यानामष्टयुगलकानि च ॥३२॥
फेनतान्तवीकन्यानां यमले द्वे तदापि च।
स्तौकहोमीयकन्याया यमलापत्यमेकलम् ॥३३॥
काष्ठयानीकन्यकायाः कौलक्याश्चैकमेकलम्।
दैनमानीयकन्यानामपत्यद्वयमेव च ॥३४॥
रायकिन्नटीकन्यानामेकपञ्चाशदात्मजाः।
रायरोकोश्वरीपुत्र्यपत्यानि चैकविंशतिः ॥३५॥
रायरणजित्पुत्रीणामपत्यानि च विंशतिः।
रायवाकाक्षिकीकन्याऽपत्यत्रियुगलानि च ॥३६॥
रायमारीशकन्यानामपत्यात्रियुगान्यपि।
रायबालेश्वरीपुत्रीत्र्यपत्ययमलानि च ॥३७॥
रायलम्बारात्मजानां षडपत्ययमान्यपि।
रायनवाकीकन्यानां सप्ताऽपत्ययमान्यपि ॥३८॥

रायहुण्डेशीसुतानां नवाऽपत्ययुगान्यपि ।
रायकूपेशीसुताया यमलं चैकलं तथा ॥३९॥
कालीमण्डलीनसुताऽपत्यचतुर्यमान्यपि ।
वनजेलेशीसुतानां पञ्चाऽपत्ययुगान्यपि ॥४०॥
पारावारपिश्रीकन्याऽपत्यत्रियमलानि च ।
कोटीश्वरीयकन्यानां यमले द्वे शुभे तथा ॥४१॥
श्रीसतीशीबालिकानां त्र्यपत्ययमलानि च ।
त्रेताकर्कशिकास्त्रीणां सप्ताऽपत्ययमान्यपि ॥४२॥
आण्डबरासुतानां तु चतुरपत्यकानि च ।
बाल्यरबोऽकजायास्तु यमलापत्यमेकलम् ॥४३॥
रायसोमनीकन्यानां त्र्यपत्ययमलान्यपि ।
उरुगवाक्षीपुत्र्योस्तु युगले द्वे मते तदा ॥४४॥
पराङ्वतीकन्ययोश्च युगले द्वे तथा मते ।
ईशानपानीबालानामेकचत्वारिंशकम् ॥४५॥
राबारायपतिजानां त्रयस्त्रिंशद्यमान्यपि ।
एकापत्ययमलं तु रायपतिभ्वसुस्तथा ॥४६॥
धैनुपालीकन्यकानां युगलानि त्रयोदश ।
आजनाभीकन्यकानां दशसाहस्रबालकाः ॥४७॥
प्रजाकन्याबालकानि दशसाहस्रकाण्यपि ।
शैवच्छात्रीकन्यकानां द्वादशाऽपत्यकान्यपि ॥४८॥
धेनुपालान्यपुत्रीणां त्र्यपत्ययुगलान्यपि ।
कौबेरीणामपत्यानि माहेन्द्रीणां तथापि च ॥४९॥
यमीनां वायवीनां च वार्क्षीणां युगलान्यपि ।
वैश्वकर्मणीकन्यानां रौद्रीणां युगलानि च ॥५०॥
वान्हेयीनां श्रावणीनां खानिजीनां युगानि च ।
साम्वत्सरीणां गोपीनां प्राचीनीनां युगानि च ॥५१॥
पिशंगीनां राशियानीनामपत्ययुगानि च ।
रोमायनीनां नारीणां पारशीनां युगानि च ॥५२॥
धीवरीणां किन्नरीणाममरीणां युगानि च ।
गौरीणां च परीणां च हारितीनां युगानि च ॥५३॥
आग्नित्तीनां च पातालीस्त्रीणामपत्यकानि च ।
स्वर्गिणीनामप्सरसां युगलापत्यकानि च ॥५४॥
ब्रह्मसरसां बालानि गान्धर्वीणां युगानि च ।
भौमीनां दानवीनां च युगलापत्यकानि च ॥५५॥
कोट्यर्बुदाब्जद्विगुणान्यभवँस्तत्र बद्रिके ।
एतेषां नामसंस्कारं चकार लोमशो मुनिः ॥५६॥
ततश्चकार संस्कारं पायसाऽन्नादिकाऽशनम् ।
कर्णवेधं च संस्कारं क्षौरसंस्कारमित्यपि ॥५७॥

विद्यारम्भं व्रतबन्धे यज्ञोपवीतकाऽर्पणम् ।
वेदाध्ययनसंस्कारं कारयामास लोमशः ॥५८॥
वेदानध्यापयामास सर्वाणि युगलानि वै ।
समावर्तनमेवापि कारयामास लोमशः ॥५९॥
वेदविद्याध्ययनं वै तेषां निमित्तमात्रकम् ।
आसीत्तत्र तदा बद्रि ज्ञानिनां पूर्वयोगिनाम् ॥६०॥
देवा देव्य ईशान्यश्चेश्वराश्चासन् हरेः सुताः ।
मुक्ता मुक्तानिकाश्चापि पुत्र्यः पुत्राः कृतश्रवाः ॥६१॥
सिद्धविद्या अभवँस्ते सुताः पुत्र्यश्च सर्वज्ञः ।
सिद्धभाषा अभवँश्च सर्वविद्याविशारदाः ॥६२॥
अनादिश्रीकृष्णनारायणवत् सर्वविद्यकाः ।
सर्वकलावेदिनश्चाऽभवन् पुत्राश्च पुत्रिकाः ॥६३॥
जातिस्मरा दिव्यबोधा हस्ताऽऽमलकदृशः ।
सर्वज्ञास्ते सुताः पुत्र्योऽभवन् महर्षयो यथा ॥६४॥
युगलानि समस्तानि समाधिसिद्धिमन्ति च ।
अभवन् बद्रिके तानि नित्यदाम्पत्यवन्ति च ॥६५॥
आदिसृष्टौ तथोत्पत्तिर्युगलानां तदा ह्यभूत् ।
तस्मात्तानि युगलानि दम्पतीरूपकाणि वै ॥६६॥
कृष्णनारायणेनैव निर्मितानि तथेच्छया ।
परस्परातिस्निग्धानि गृहधर्मार्थवन्ति च ॥६७॥
योग्यान्येवाऽवलोक्याऽथाऽऽज्ञया हरेस्तु लोमशः ।
विवाहाख्यं सुसंस्कारं कारयामास लोमशः ॥६८॥
तत्रोत्सवे समायाता देवा ईशाश्च पार्षदाः ।
मुक्ताश्च पितरः सिद्धा मानवा दानवादयः ॥६९॥
मण्डपेषु च दिव्येषु युगलानां करार्पणम् ।
अभवद् वन्हिदेवस्य साक्ष्ये महर्षिसन्निधौ ॥७०॥
वन्हि प्रदक्षिणं कृत्वा वरमालां प्रजगृहुः ।
ग्रन्थिं धर्ममयीं बद्ध्वा दाम्पत्यं चाऽऽप्नुवँस्तदा ॥७१॥
गीतयश्चाऽऽभवन् दिव्या दिव्यांगनासमीरिताः ।
अप्सरसां नर्तनानि वाद्यघोषास्तदाऽभवन् ॥७२॥
परस्परं द्वयोर्दानान्यभवन् युग्मदेहिनाम् ।
परस्परं कवलानां दानं युगलयोगिनाम् ॥७३॥
युगलानां दम्पतीनां करद्रव्यार्पणं तथा ।
आशीर्वादाः परिहारो महीमानार्चनं तथा ॥७४॥
दिव्यदानानि सर्वाणि गोभूस्वर्णात्मकानि वै ।
अभवन् मणिरत्नानां दानानि च बहून्यपि ॥७५॥
पात्रभूषाम्बराणां च दानानि विविधानि च ।
गृहोपस्करणानां चाऽभवन् बद्रि गृहे गृहे ॥७६॥

भोजनानि मही मानवर्गाणां च ततोऽभवन् ।
कुंकुमवापिकाक्षेत्रसर्वमानवदेहिनः ॥७७॥
भोजयामास भगवान् कृष्णनारायणः प्रभुः ।
विदायं प्रददौ लोकान् ययुस्ते स्वस्वभूमिकाः ॥७८॥
भगवद्वंशविस्तारो मुमुदे कृपया हरेः ।
बद्रिके मानसानां तु दम्पतीनां ततः परम् ॥७९॥
संकल्पसृष्टयः पुत्राः पौत्राश्चासन् यथायथम् ।
पुत्र्यश्च पुत्रिकापुत्र्यस्तथाऽऽसन् देवताऽमलाः ॥८०॥
योनिजत्वरहितत्वात् विवाहो यमलस्य वै ।
निर्बाधः सर्वथा बद्रि देवेश्वरादिरीतिका ॥८१॥
कालान्तरे तु ते ताश्च मातुलानां क्षितिष्वपि ।
भुवनेषु भवनेषु कृष्णाज्ञया हरीच्छया ॥८२॥
भूत्वा युगलकान्येव दम्पतीधर्मवन्त्यपि ।
ययुर्वृद्धातिवात्सल्यैर्निवासार्थे सदा सुखात् ॥८३॥
बालकृष्णस्य पुत्राणामासीद्धस्तचतुष्टयम् ।
द्वौ मुख्यौ चाऽऽजानुलम्बौ द्वौ हस्तौ स्कन्धजौ शुभौ ॥८४॥
कन्यकानां समस्तानां चतुर्भुजास्तथाऽभवन् ।
द्वौ मुख्यौ चाऽऽजानुलम्बौ द्वौ ह्रस्वौ स्कन्धजौ तथा ॥८५॥
शङ्खचक्रगदापद्मरेखाः करेषु चाऽभवन् ।
दीर्घाः पुष्टाः श्वेतरूपा देहास्तेषां सुरूपिणः ॥८६॥
अभवन्पुत्रवर्गाणां नारीणां तु ततोऽधिकाः ।
प्रमाणन्यूनदेहा वै श्वेतरक्तास्तथाऽभवन् ॥८७॥
अणिमादिमहैश्वर्यवन्तोऽप्रधृष्यरूपिणः ।
सर्वगाः सर्वधर्माढ्याः संकल्पसिद्धमूर्तिकाः ॥८८॥
अनन्ताऽसीमशक्त्याढ्या अभवन् सर्वतः सुखाः ।
सर्वगुणोपेतसंस्थानाश्चाऽभवन् प्रमान्विताः ॥८९॥
नास्ति लोको भवनानि चतुर्दशस्तरेष्विह ।
यत्र नैषां हि सौगन्ध्यं वर्तते च यशःपरम् ॥९०॥
नास्ति सा वसतिर्द्वीपो लोकश्च भुवनान्यपि ।
यत्र न स्यात् कृष्णवंशप्रजाः पावनमूर्तयः ॥९१॥
पातालेषु तथा नाकेष्वपि खण्डेषु सर्वशः ।
चतुर्भुजामत्स्रष्टीनां वसतिः सर्वतोऽभवत् ॥९२॥
बद्रिके कालयोगेन हस्तचिन्हद्वयोऽभवत् ।
ललाटे पुण्ड्रकचिन्हमात्रं ततोऽवशिष्यत ॥९३॥
तच्चष्टं कालयोगेन श्वेत्यमात्रं ततोऽभवत् ।
गीर्वाणवचनान्येव कालान्तरे ततोऽभवन् ॥९४॥
ततः कालान्तरे बद्रि यज्ञोपवीतमात्रकम् ।
पीताम्बरयुतं चासीद् धारणे ब्रह्मदेहिनाम् ॥९५॥
तच्चष्टं कालयोगेन रूपं नष्टं गुणा गताः ।
मानवा पशुतुल्या वै नार्यो निरयभूमयः ॥९६॥
आसन् विविधधर्माश्च भिन्नाचारक्रियादनाः ।
कालयोगेन धर्माणां ह्रासोऽभवत् प्रजास्वपि ॥९७॥
मिश्रणं क्षत्रविप्राणां धर्मकर्मादियोजितम् ।
शनैस्ततोऽभवद् बद्रि सर्वाचारादिमिश्रणम् ॥९८॥
सत्यधर्मा विनष्टा वै त्रेतायां संभवन्ति हि ।
त्रेताधर्मास्ततो नष्टा भवन्ति द्वापरेऽमितः ॥९९॥
द्वापरस्य ततो धर्मा नश्यन्ति तिष्यके युगे ।
तिष्यस्य मानवा बद्रि कल्मषप्रचुराः खलु ॥१००॥
प्रजायन्ते क्लेशभाजो मृषाचाराः शठाः खलु ।
स्वल्पमेधाः स्वल्पकालाः स्वल्पतृप्ताः कलिप्रियाः ॥१०१॥
ईश्वरा मानवा देव्यः पितरो देवताः सुराः ।
सर्वे तिष्यगता बद्रि निर्बलास्ते भवन्ति हि ॥१०२॥
ओजोहीनाः क्षुधाव्यापारतृष्णारागपरायणाः ।
तेनैषां सिद्धयो बद्रि नश्यन्ति योगिनामपि ॥१०३॥
वैजात्यं तु यथा स्वर्णलोहयोः क्लेदरत्नयोः ।
तथा प्रजायते तिष्ये वैगुण्यं ह्रास इत्यपि ॥१०४॥
हरेर्भक्ताः कालबलैर्नाभिभूयन्त एव च ।
ब्रह्मशीलास्तथा नाभिभूयन्ते कालकुञ्जवैः ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने भगवतो युगलापत्यानां संख्यादि, संस्काराः, दाम्पत्यं, तत्प्रजाः, युगबलं, चेत्यादिनिरूपणनामा द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

श्रीबद्रीप्रियोवाच—

हरे नारायण विष्णो कालबलं कियत् कथम् ।
कदा कीदृग् भवत्येव तदुद्धारः कथं तथा ॥ १ ॥
कृपया कालदग्धानां हितार्थे मे निवेदय ।
हितं कीदृक् कदा केन कथं वा जायते वद ॥ २ ॥

श्रीनरनारायण उवाच—

सत्ये धर्मा मानसा वै संकल्पकृतमूर्तयः ।
ऋतम्भरा बुद्धिगम्याः सद्योजाताः समूर्तिकाः ॥ ३ ॥
संकल्पितानि सर्वाणि तत्त्वानि मूर्तिमन्ति वै ।
प्रजायन्ते तदर्थे न यत्नस्तदा त्वपेक्ष्यते ॥ ४ ॥
रसवर्षिणो वृक्षाश्च पुटके पुटके मधु ।
सर्वाः कामदुघा गावः पतिव्रताश्च योषितः ॥ ५ ॥

संकल्पसृष्टयस्तत्र कृषिस्तदा न विद्यते ।
भूगर्भजलजाः सस्यसम्पदोऽर्धदिनस्थिराः ॥ ६ ॥

मध्याह्ने कणदाश्चापि जनाः प्राकाम्यसिद्धयः ।
सर्वलोकगतिमन्तो लक्षाधिवर्षजीवनाः ॥ ७ ॥

गह्वरालयवासाश्च समाध्यात्मकृताश्रयाः ।
पुष्पावतंसका नार्यश्चाञ्चल्यवर्जितास्तदा ॥ ८ ॥

ऋतवः ऋतुधर्माश्च नासन् पुरा कृते युगे ।
युगलाद् युगलस्यैव प्राविर्भावोऽभवत्तदा ॥ ९ ॥

युगलं मानसं जातं दाम्पत्यधर्मसंयुतम् ।
भ्रातृस्वसृव्यवहारस्तत्र नासीत् पुरामुखे ॥१०॥

सहजातोऽभवद्धर्मो दक्षवामांगवत्तदा ।
जायेते सह पित्रोस्तौ वर्तेते तौ सहैव च ॥११॥

सहैव च तिरोभावं दम्पतीरूपिणावितः ।
सत्यः सर्वव्यवहारः प्रत्यक्षो गोचरो यथा ॥१२॥

रागद्वेषतृषाहीनो नित्यतृप्तिभृतोऽभवत् ।
यथेष्टनिधनाः सर्वे यथेष्टरूपधारिणः ॥१३॥

संकल्पस्मृद्धयः सर्वे ह्यासन् कृतयुगे पुरा ।
अथ त्रेतायुगे प्राप्ते ममाऽहंभाव उद्गतः ॥१४॥

सत्यं तपो मखो दानं धर्मपानचतुष्टयात् ।
सत्यस्य ह्रासयोगेन त्रिपाद् धर्मोऽवशिष्यते ॥१५॥

कृते सत्याधीनधर्माः सिद्धयश्च तदा तु याः ।
त्रेतायां तास्तपोधीना अभवन् ऋतसत्फलाः ॥१६॥

संकल्पा निर्बला जाता असत्यस्य प्रवेशनात् ।
दर्शनं सबलं तत्र दर्शनोत्थाश्च सिद्धयः ॥१७॥

हृष्टा वृक्षाः फलन्त्येव हृष्टो धर्मः प्रशस्यते ।
वृक्षाणां पोषणैर्वृत्तिर्जीविका जायते तदा ॥१८॥

सस्यानां वृष्टिजा सिद्धिर्वृष्टिवारिपिबो जनाः ।
भौतिकाश्रयपुष्टाश्च कृतवृक्षनिकेतनाः ॥१९॥

स्वस्वसत्ताकभूभागोत्पन्नसस्यादिजीविकाः ।
जाताः प्रजास्तदा बद्रि नियमो युगलस्य न ॥२०॥

यमलस्य न चोत्पत्तिश्चैकलस्योद्भवस्ततः ।
कन्याकुमारदानानि प्रावर्तन्त तदा युगे ॥२१॥

रक्षणानि महर्द्धीणां जीवनार्थं ततोऽभवन् ।
तपसामपि हानिश्च लोकेषु कालतोऽभवत् ॥२२॥

तापस्यः सिद्धयः सर्वा नष्टाः परात्तजीवनाः ।
पराधीनाश्रया लोका अभवन् यज्ञजीविनः ॥२३॥

कर्मलभ्याऽन्नवस्त्राद्यैर्वर्तयन्ति ततो जनाः ।
कूपादिजलयोगाश्च कृषिलभ्यान्नभोजनाः ॥२४॥

प्रधृष्या भौतिकैस्तत्त्वैः स्वेच्छायानं लयं गतम् ।
त्रेतान्ते च तपोहीनाः प्रजाः पुण्यविवर्जिताः ॥२५॥

यज्ञपूजाबलवत्योऽभवन् नान्यबलान्विताः ।
स्पर्शजाश्च प्रजास्तत्र विवाहबन्धनास्तथा ॥२६॥

गर्भजाऽपत्यवत्यश्च बाल्यौवनभावनाः ।
उप्तसस्योत्थकणजैर्जीविकावत्य एव च ॥२७॥

द्वापरे ताः प्रजाः सर्वा व्यापारजीविकापराः ।
भृत्यदासीदासभावा गृहग्रामाऽऽलयास्तथा ॥२८॥

चौर्यशाठ्यतृषातृष्णाकापट्यादियुतास्ततः ।
उप्तानां जायते कणस्मृद्धिश्चार्धा न चाधिका ॥२९॥

न्यूना वा जायते वृष्टिकूपवारिप्रसेचनैः ।
तया जीवन्ति मनुजाश्चौरास्तथाऽपहारकाः ॥३०॥

प्रजासु मानवा अजायन्त लुण्टनकर्मिणः ।
तेषां दण्डप्रदानार्थं राजा दण्डधरोऽर्थितः ॥३१॥

राज्यराष्ट्रप्रजा जाताः सर्वा दण्डवशम्वदाः ।
रागो द्वेषो मृषा मिथ्या कापट्यं च छलं तथा ॥३२॥

असत्यं बहुलं क्लेशः कलहस्तेऽभवँस्ततः ।
द्वापरान्ते दुर्गवासाः प्रजामिथुनसृष्टिजाः ॥३३॥

सुखाल्पा दुःखबहुलाः प्रसह्य भोगवाञ्छनाः ।
दुर्भिक्षबहुलाश्चापि मखपुण्यादिसिद्धयः ॥३४॥

अकालमरणाश्चापि मिथो विश्वासवर्जिताः ।
स्वल्पायुर्मरणाश्चापि प्रयत्नार्धाऽर्धसत्फलाः ॥३५॥

अतृप्ता वासनावत्यः प्रजाः क्षुधाप्रधानिकाः ।
द्वापरान्तेऽभवँस्तत्र यज्ञा ह्रासं ततो गताः ॥३६॥

बद्रिके कालवेगेन मिथ्याचारो व्यवर्धत ।
इच्छन्ति प्रायशो लोका मद्यं मांसं च मैथुनम् ॥३७॥

धूम्रचूषणमेवापि प्राणचूषणमित्यपि ।
रक्षका भक्षकास्तत्र व्यवर्धन्त गृहे गृहे ॥३८॥

राजा जारोऽभवच्चापि तिष्ये सत्त्वं लयं गतम् ।
त्रेतायां दशसाहस्राधिजीवना हि मानवाः ॥३९॥

द्वापरे ते सहस्राधिजीवनाश्च शनैः शनैः ।
कलौ ते तु शतकाधिजीवना नाधिकस्थिराः ॥४०॥

रोगदुःखबहुलाश्च फलाऽर्धाऽर्धाऽर्धविन्दकाः ।
गृहे चौर्यं गृहे हानिर्गृहे क्लेशो विशेषतः ॥४१॥

दम्पत्योः कलहो नित्यो गृहे हिंसा वचोमयी ।
अवमानं महतां प्रच्छन्नता स्वगृहेऽपि च ॥४२॥

प्रतारणं क्षणे तत्र शीलनाशः क्षणे क्षणे ।
असत्या वाक् सदा तत्र पादक्रमोऽनृतात्मकः ॥४३॥

लेखाः कपटभाराश्च लुब्धाव्याप्तं जगत्तदा ।
अयत्नलभ्यधनिनस्तिष्ये तु बद्रिके तदा ॥४४॥
अधर्मवंशविस्तारा धर्मवंशविनाशिनः ।
मनसा चात्मना दुष्टा नारीक्रयप्रजीविनः ॥४५॥
एकवर्णा एकपेया एकभोज्याः कलौ युगे ।
एकशय्यासनवाहा एकपात्रादना जनाः ॥४६॥
पत्नीविनिमयीशय्याः सर्वाः सर्वस्य चांगनाः ।
अशुद्धिर्विद्यते नैव स्पर्शे भोज्ये कलौ युगे ॥४७॥
पेये शयने वासे च वस्त्रेऽङ्गे नाऽप्यशुद्धता ।
सर्वस्य भक्ष्यो देवार्थः प्रत्यक्षान्यं मृषा तदा ॥४८॥
न संस्काराः मृतके न स्नानं पूजा न प्रोक्षणम् ।
पूज्यपूजाविलोपश्च शास्तृशासनवर्जिता ॥४९॥
न धर्मनियमा श्रद्धा न दाम्पत्यं स्थिरं कलौ ।
कन्यादानविलोपश्चाऽतिथिवार्ताविलोपनम् ॥५०॥
साधुगुरुषु नास्तिक्य सुराऽर्हा न दिवा निशि ।
न देवदर्शनं शान्तिर्न निद्रा निशिथे सुखा ॥५१॥
नाऽऽन्तरे कस्यचिद्दोषः उद्वेगबहुला जनाः ।
अर्थोपार्जनरक्तानां नाऽऽर्थाऽऽगमेऽपि पूर्णता ॥५२॥
न वेषैर्नरनारीणां जातिपरिचयोऽपि वै ।
विक्रीतक्रीतभोज्याऽन्नादना आपणजीविकाः ॥५३॥
आपणे भोजनाद्याश्च पर्वसु पानतत्पराः ।
सर्वे चत्वररासका इन्द्रजालावलोकनाः ॥५४॥
बहुव्ययाः क्लेशपरा नग्नरुचयो मानवाः ।
सर्वेषु कलिकालेषु पर्यायेणाऽऽगतेषु वै ॥५५॥
कन्यकाः सर्वभोगिन्यो भविष्यन्ति कलौ शनैः ।
बालगर्भो मातृनाम्ना न्यायं चालम्बयिष्यति ॥५६॥
पञ्चसहस्रवर्षान्ते तीर्थलोपः समूलतः ।
वितस्तिजलवाहिन्यो महानद्यो युगे कलौ ॥५७॥
अष्टोत्तरा सगर्भा स्याच्चत्वारिंशे मृतिं लभेत् ।
स्वयंवरा लाजशून्या नग्नदेहास्तदा स्त्रियः ॥५८॥
सर्वपुंपार्श्वशायिन्यो रजोऽशुद्ध्यप्रपालिकाः ।
रुग्णाः स्वार्थपरा डाकन्यश्च नार्यो युगे कलौ ॥५९॥
गृहे रात्रिनिगमो न सर्वत्र नरयोषितोः ।
पितुर्नाम कलौ नास्ति जातिनाम न विद्यते ॥६०॥
माताऽपि बालभावस्य ततो माता न विद्यते ।
कुटुम्बसमुदायश्च नश्यत्येव कलौ द्रुतम् ॥६१॥
यत्र रक्तं मनो यस्य यस्या वा तावदेव तौ ।
कामनाधर्मभागौ वै दाम्पत्यं नैव विद्यते ॥६२॥
अनावृतसुगुप्तांगा अन्यान्नानां तु का कथा ।
एकलाया विहारश्च परदेशेष्वपि स्त्रियाः ॥६३॥
एकलायाः परक्षेत्रे निवासोऽस्ति तदा स्त्रियाः ।
पुंसां पराधीनता च स्त्रीवर्गाग्रे कलौ युगे ॥६४॥
स्त्रीशासनं निम्नवर्णशासनं च कलौ कलौ ।
अविद्याऽध्ययनं तिष्ये भूतवादप्रधानता ॥६५॥
प्रत्यक्षरचना लोकाः परोक्षवर्जनाः कलौ ।
अनायाससुखार्थाश्च स्वात्मश्रेयोविवर्जिताः ॥६६॥
हिंसाप्रधाना जनताश्छलधर्मप्रबोधनाः ।
वान्ताशनास्तदा श्रेष्ठाः कनिष्ठा नितरां तथा ॥६७॥
तिष्ये माया तथाऽसूया वधश्चापि तपस्विनाम् ।
तामसाश्च नरा नार्यो भवन्ति क्षुद्भयान्विताः ॥६८॥
देशानां चापि राष्ट्राणां विपर्ययाः पुनः पुनः ।
प्रामाण्यं न श्रुतेस्तत्र प्रामाण्यं बलिनस्तदा ॥६९॥
अभिचारैर्दुराचारैर्दुष्कर्मभिर्दुरागमैः ।
लुब्धादानां तदा राज्यैः प्रजानां मर्दनं कलौ ॥७०॥
सम्बन्धो नरनारीणां यथेष्टः शयनादिषु ।
राजानः श्वपचास्तत्र बाधयन्ति सुधर्मिणः ॥७१॥
भ्रूणहत्या वीरहत्या स्त्रीहत्या च प्रजास्वति ।
नीचास्तत्र सदाचारा उत्कृष्टा नीचिनो मताः ॥७२॥
राजवृत्तिगताश्चौराश्चौराचाराः प्रजेश्वराः ।
एकपत्नीव्रतं नास्ति वर्धन्ते चाभिसारिकाः ॥७३॥
आसनस्था वीक्ष्य पूज्यान् नोत्तिष्ठन्ति कलौ सतः ।
ताडयन्ति सुतास्तिष्ये पितॄन् पितामहादिकान् ॥७४॥
उच्चासनस्था नीचास्तु प्रधानाग्र्याः कलौ युगे ।
नीचानां गोपुरे श्रेष्ठाः सदा तिष्ठन्ति सेवकाः ॥७५॥
सेवन्ते नीचवर्णांश्च स्तुवन्ति नीचयोनिजान् ।
पुरुषाल्पत्वं बहुस्त्रीत्वं तिष्ये भवन्ति चोत्तरे ॥७६॥
श्वापदानां बहुलत्वं गवादीनां परिक्षयः ।
साधूनां विनिवृत्तिश्च तिष्ये तिष्ये भवन्ति वै ॥७७॥
चित्रवर्षी तदा मेघः सर्वे वणिक्क्रियाछलाः ।
कुशीलचर्यापरमाः क्रूरवाक्याः कलौ कलौ ॥७८॥
निन्दकाः पतिता लोका मण्डलानि पुरे पुरे ।
भवन्त्यल्पजला पृथ्वी चाल्पफलाऽविनाफला ॥७९॥
दशसाहस्रवर्षाणां विगमे देवमूर्तयः ।
प्रलयं यान्ति सर्वत्र मन्दिराणि न सन्त्यपि ॥८०॥
पञ्चदशसहस्राणां वर्षाणां विगमे कलौ ।
प्रजाः षोडशवर्षान्ता प्रयान्ति वृद्धताम् मृतिम् ॥८१॥

चतुर्वर्षा युवती च बरठा द्वादशाब्दिका ।
षण्मासे बालसूत्यश्च दशाब्दे तु रजःक्षयाः ॥८२॥
गर्तालया वितस्तिमात्रका ह्रस्वा जनास्तदा ।
भावो मुष्टिद्वयोत्सेधास्तिष्यप्रान्ते भवन्ति हि ॥८३॥
चौराश्चौरस्वहर्तारो हर्तुर्हर्ता तथाऽपरः ।
कीटमूषकनकुला घर्षयन्ति कलौ तदा ॥८४॥
स्त्रीबालगोवधं कृत्वा हत्वा मिथो निजानपि ।
मानवाँस्ते वृथाक्लेशान् साधयन्ति कलौ जनाः ॥८५॥
तदा दानं तारकं वै चार्धकलौ स्थितं ह्यपि ।
नाशं याति समस्तं च दानवार्ताऽपि नास्ति हि ॥८६॥
तदा दानादिहीनेऽपि नारायणपरायणाः ।
बद्रिके शरणं प्राप्ता हरेस्तरन्ति तिष्यजाः ॥८७॥
उत्सीदन्ति कलौ यज्ञा व्रतानि नियमा यमाः ।
पाखण्डकर्मठा लोकाः प्रजायन्ते कलौ युगे ॥८८॥
दुःखप्रभूतमल्पायुः स्वल्पधैर्ये सरोगता ।
अधर्मसंभृता लोकाः सदा हत्यापरायणाः ॥८९॥
सत्ये वत्सरशतकस्त्रेतायां वत्सरात् स वै ।
द्वापरे माससाध्यः स धर्मः कलौ दिनेन वै ॥९०॥
दिनधर्मफलं कृष्णनारायणैककीर्तनात् ।
तिष्ये प्रजायते बद्रि नारायणः प्रमोक्षदः ॥९१॥
प्रजास्तिष्ये यदा सर्वाः परस्परभयार्दिताः ।
व्याकुलाश्च परिभ्रान्तास्त्यक्त्वा दारान्निजालयान् ॥९२॥
निर्मर्यादाः प्रतिहता हित्वा जनपदानपि ।
सरित्सागरकूपाँस्ताः सेवन्ते पर्वतानपि ॥९३॥
मधुमांसैर्मूलफलैर्वर्तयन्ति सुदुःखिताः ।
जराव्याधिक्षुधाविष्टा भवन्त्यन्यपथिस्थिताः ॥९४॥
देवार्चत्राणि नग्नानि स्थंकस्थनरवन्ति वा ।
नरांकस्थस्त्रीमयानि कलौ गृहे गृहे तदा ॥९५॥
देव्यः सूक्ष्माम्बराधाना मिथुनारूढदर्शनाः ।
चित्रिता देवमार्श्लिष्टा दृश्यन्ते चत्वरे गृहे ॥९६॥
अमर्यादाऽऽलिङ्गनस्थाश्चित्र्यन्ते युगलान्यपि ।
कलौ नृत्यानि नाट्यानि कन्यानां च पुरे पुरे ॥९७॥
कन्यकानां युवतीनां राशक्रियाश्च चत्वरे ।
वधूनां लाजशून्यत्वं विवाहे च गृहेऽपि च ॥९८॥
कामे दोषा न दृश्यन्ते कामो गुणो महाँस्तदा ।
रजोगुणक्रिया सर्वा धर्माख्यां लभते कलौ ॥९९॥
असत्यं सत्यवत्तत्र प्रतारणं तु धर्मवत् ।
कन्या कुमारवत् तिष्ये नारी नरसमा कलौ ॥१००॥
मानुषकश्चैकविधो व्यवहारो न वै पृथक् ।
भ्राता तु भगिनीं हन्यात् स्वसा हन्यात् स्वसोदरम् ॥१०१॥
भार्या हन्यात्पतिं पुत्रं तौ भार्यो वा परस्परम् ।
अन्यायोपार्जननेत्राः प्रजास्तिष्ये स्थले स्थले ॥१०२॥
सर्वा राक्षसधर्मा वा दैत्यधर्माः प्रजास्तदा ।
तथा पिशाचधर्मा वा तथा दानवधर्मिकाः ॥१०३॥
तथा वा लुण्टकधर्माश्चौरधर्मा गृहे गृहे ।
निष्कामित्वं कलौ नास्ति मिथो वैरं गृहे गृहे ॥१०४॥
भवन्ति भ्रष्टकरणा मानवा मूषका इव ।
बद्रिके तिष्यभावास्ते कथिता भ्रष्टमार्गिणः ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
तिष्यमानुषस्वभावानां निरूपणनामा
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि तिष्योद्धारकरान् वृषान् ।
दिने क्षणे कृतैश्चापि देहयुद्धारः प्रजायते ॥ १ ॥
कालबलं समस्तेषु प्रवर्तते न संशयः ।
देवानां दैवतं तिष्ये मान्द्यं याति क्रमात्तथा ॥ २ ॥
ऋषीणां च तपश्चाप्यैश्वर्यं मान्द्यं प्रयात्यपि ।
सतीनां वै सतीत्वं तु तिष्ये ह्रासं प्रयाति च ॥ ३ ॥
योगिनां योगचर्यापि शक्तिशून्या प्रजायते ।
ईश्वराणामीशानत्वं निःसत्त्वं जायते कलौ ॥ ४ ॥
ब्रह्मतेजो ब्राह्मणानां विलीयते न संशयः ।
मन्त्राणां च बलं शीलं शैथिल्यं याति वै कलौ ॥ ५ ॥
हवनानां मखानां च फलं विशीर्यते कलौ ।
जपानां च व्रतानां च सामर्थ्यं लीयते कलौ ॥ ६ ॥
दानानां सफलत्वं च भिद्यते तिष्ययौवने ।
योगिनीनां परा सत्ता तिरोभवति वै कलौ ॥ ७ ॥
सिद्धानां सिद्धता छन्ना जायते तिष्यकालिका ।
पूजायाः प्रतिफलता शून्यायते कलौ तदा ॥ ८ ॥
साधूनां सद्गुणावासः कुवास इव जायते ।
धर्मस्य च गतिः शान्ता ह्रासं याति कलौ तदा ॥ ९ ॥
ज्ञानस्यापि फलं नैव शान्त्यर्थं सम्प्रजायते ।
वैराग्यस्य विनाशो वै जायते सर्वथा कलौ ॥१०॥
ऐश्वर्याणां क्लेशदत्वं गर्विता जायते कलौ ।
तीर्थानां मग्नशीलत्वं वर्धते च कलौ कलौ ॥११॥

तारकाणां च निस्तारस्तारणे निर्बला यतः ।
पृथ्वी दोहे समर्था न बलं तृप्तौ च निर्बलम् ॥१२॥
वह्निः पाके न वै शक्तः कलौ वायुर्न सौख्यदः ।
लक्ष्मीः कलावशुद्धा च सम्पदो विपदन्विताः ॥१३॥
आश्रया व्रणयुक्ताश्च गुरुत्वं न गुरौ कलौ ।
गौरवं गर्त्तगं तिष्ये प्रतिष्ठा क्लिष्टताहता ॥१४॥
सम्मानं भानहीनं च क्रिया ध्यानविवर्जिता ।
स्थितिर्विश्वासरहिता भवत्येव कलौ कलौ ॥१५॥

बद्रिके प्रतिमाः सर्वा देवताश्च शवा इव ।
कलौ सर्वत्र जायन्ते द्यौस्तमोवद् विभाति च ॥१६॥
आशा तृष्णा च वर्धेते कलेःायुष्यतोऽधिके ।
आशावान् म्रियते तिष्ये न त्वाशा म्रियते क्वचित् ॥१७॥
पर्व पर्व दिनं तिष्ये श्रद्धाहीनं प्रजायते ।
धर्मकर्मादि च कृत्यविषयं वै कलौ कलौ ॥१८॥
दीक्षा भिक्षा च शिक्षा च क्षयमेति कलौ तदा ।
कक्षा चक्षा च पक्षा च यक्षा रक्षा न विद्यते ॥१९॥

उद्याने फलवद्वृक्षस्तरलो बहुशोऽफलाः ।
मानवे नयवल्लोको विरलो बहुशोऽनयाः ॥२०॥
खातेषु जलवद्गर्तो दुर्लभः सुलभोऽजलाः ।
स्वामिषु हितकृन्नेता क्वचित् सर्वत्र नाशकाः ॥२१॥
यात्रासु दानकृत् कश्चिद् बहुलाः पानकारिणः ।
व्यवहारे परार्थस्तु कश्चित् स्वार्था गृहे गृहे ॥२२॥
सत्यवाग् दुर्लभस्तत्र मिथ्यावाक् तु पदे पदे ।
आपत्तौ हासकास्तिष्ये सम्पत्तौ चाभ्यसूयकाः ॥२३॥
अवमानेऽमृतजिह्वाः सम्माने नेत्रवन्हयः ।
व्यसने तालिकावादाः कलौ भवन्ति मानवाः ॥२४॥
द्यूते हास्ये कलौ नाट्ये कुतूहले विनाशने ।
संधिनो मानवास्तिष्ये सत्कार्ये पृष्ठपादिनः ॥२५॥
धर्मे व्रते सहाये च भजने बोधने हले ।
कथायां विरला लोकाः कलौ भवन्ति सेवने ॥२६॥

नाशोन्मुखास्तु बहुधा रक्षोन्मुखाः क्वचित् कलौ ।
आराधनायां विरला बाधायां संघशो जनाः ॥२७॥
त्यागे तिष्ये नाऽधिका वै ग्रहणे सर्वतो जनाः ।
मारणे संहिताः सर्वे तारणे नैक इत्यपि ॥२८॥
प्रपातने प्रवीणाश्चोत्तारणे मूर्ध्निमारकाः ।
उन्नयने तु रिक्तांऽका बूडने बहुसंख्यकाः ॥२९॥
आगमे तु कृतोत्साहा विगमे म्लानमानसाः ।
अवग्रहे तनुत्यागा विग्रहे मदगंजनाः॥३०॥

असत्सु च कृतावेशाः सत्सु चाऽऽदरवर्जिताः ।
भवन्त्येव जनास्तिष्ये शिष्ये प्रतारणार्थिनः ॥३१॥
ग्रामा दुर्गविहीनाश्च लोका लज्जाविहीनकाः ।
विवाहा वह्निरहिताः कलौ भवन्ति सर्वशः ॥३२॥
ज्ञानं पालनशून्यं च दानं मानविवर्जितम् ।
गानं च देवताशून्यं तिष्ये सर्वत्र जायते ॥३३॥
आदानं सर्वतस्तिष्ये प्रदानं शून्यतापरम् ।
निदानं बाह्यतो मिथ्या तिष्ये भवति धीरधीः ॥३४॥

पानं तु सरसं तिष्ये भोजनं विरसं सदा ।
भञ्जनं परकार्याणां तिष्ये सर्वत्र विद्यते ॥३५॥
रञ्जनं चेन्द्रियाणां चोद्वेजनं तु कुटुम्बिनाम् ।
आटाटोपाऽञ्जनं तिष्ये भोजने व्यञ्जनं बहु ॥३६॥
परगृहे धनं तिष्ये परहस्ते सुता प्रिया ।
पारवश्यं निजे देहे पारवश्यं गृहे गृहे ॥३७॥
निद्रा स्वल्पा कलौ स्वप्नबाहुल्यं कलहो बहुः ।
शान्तिरल्पा महाचिन्ता रक्तनाशोऽधिकः कलौ ॥३८॥

वैद्यालयास्तु बहुलाः प्रजालयाः सुरांगिणः ।
प्रलया नित्यशस्तिष्ये निलया भयसंभृताः ॥३९॥
भूषा भषकबालाद्याः प्रतिष्ठा वेषलग्नता ।
म्लेच्छभाषा च विद्वत्ता कलौ सर्वत्र जायते ॥४०॥

धूम्रपानं महत्ता च गालीवादः सरस्वती ।
सांकर्यं चोत्सवे धर्मस्तिष्ये भवति सर्वशः ॥४१॥
नीतिश्चूषणरूपा च लाभो धनसहायिनः ।
भार्या मिष्टान्नदातुश्च कलौ सर्वत्र जायते ॥४२॥
सर्वे सर्वत्रपाकाश्च पामराणां गृहेशयाः ।
हत्यायां जन्तुमूल्याश्च तिष्ये सन्ति स्थले स्थले ॥४३॥

श्मश्रूहीना नरास्तिष्ये केशकबरीशालिनः ।
पात्रस्थधातुजाऽपत्यप्रजा भवन्ति तिष्यके ॥४४॥
अलिंगगर्भाः पशवश्चाऽनात्मपुत्तला भटाः ।
अधारशस्त्राः संग्रामास्तिष्ये भवन्ति बद्रिके ॥४५॥
अयत्नसाध्याः कूट्टन्यः कुटिका भोजनालयाः ।
नाट्यशालाश्च शिक्षांग्यस्तिष्ये भवन्ति बद्रिके ॥४६॥

नार्यश्च बहुनाथा वै नराः स्त्रीभावशोभनाः ।
कृत्रिमपुत्तलाऽऽनन्दास्तिष्ये भवन्ति मानवाः ॥४७॥
कृत्रिमदन्तका लोकाः कृत्रिमस्तनधारिणः ।
कृत्रिमदृश्यतृप्ताश्च कृत्रिमस्त्रीविहारिणः ॥४८॥
स्वहस्तक्षुरकर्माणः स्वहस्तदेहमर्दनाः ।
यन्त्रदोहनपशवस्तिष्ये पाकाश्च यान्त्रिकाः ॥४९॥

विग्रहहासना लोका निःसत्त्वपानभोजनाः।
रक्तविक्रयनिर्वाहास्तिष्ये भवन्ति मानवाः ॥५०॥
पशुस्नेहपरा नार्यो नराः पशुसुयोगिनः।
पाशवव्रत्तिचर्याश्च तिष्ये भवन्ति मानवाः ॥५१॥
हृदि चान्ये वचस्यन्ये कर्मण्यन्ये फलेऽपरे।
रहस्यन्ये प्रकाशेऽन्ये कलौ भवन्ति मानवाः ॥५२॥
स्वल्पेऽपि क्लेशकर्तारस्तामसा बहुला जनाः।
मानाभिमानजीवाश्च वितण्डामात्रवीरकाः ॥५३॥
नारीमग्रे व्यवस्थाप्य विजयाऽऽकांक्षिणः सदा।
बहुचित्राम्बरा नार्यो नारीवेषा नराः कलौ ॥५४॥
दैत्यम्लेच्छादरपराः शास्त्रसाधुविरोधिनः।
चिरधर्मविहन्तारो वृत्तिधर्मपराः कलौ ॥५५॥
प्रतारका देवकार्ये गृहकार्ये कुसीदिनः।
बहुमृषासम्प्रदाया मिथो देवाऽतिनिन्दकाः ॥५६॥
शब्दाडम्बरविद्वांसो युक्तिश्रुतपरायणाः।
सन्दिग्धाः सर्वकृत्येषु गुरुष्वत्यन्तनिर्घृणाः ॥५७॥
जिह्वापोषाः सम्प्रदायाः शिश्नपोषा गृहाश्रमाः।
कीर्तिपोषा यतयश्च भवन्त्येव कलौ जनाः ॥५८॥
पुत्रवत् पुत्रिकामानं पुत्री पुत्रायते कलौ।
आश्रिता सुभगा नारी पत्नीयति परार्थिनी ॥५९॥
लोहपात्रव्यवाहारा नालिकावारितर्पिणः।
अशिखाः प्रायशो विप्रा द्विजास्तिष्ये न सन्ति च ॥६०॥
प्रतारणं पुरुषार्थो न्यायो हुत्वा प्रगच्छति।
द्रव्यं कुटुम्बवत् सर्वे धर्मस्तु शत्रुवत् कलौ ॥६१॥
गृहे गृहे चापणानि विष्टालया गृहे गृहे।
विधवा विधुराश्चापि तेषां योगा गृहे गृहे ॥६२॥
भृत्याधीनाः स्वामिनश्च स्त्र्यधीनाः पतयस्तथा।
प्रजाधीनानि राज्यानि भवन्ति वै कलौ युगे ॥६३॥
समुदायाऽपीनराष्ट्रं मर्यादाहीनमण्डलम्।
भाण्डानां गणिकानां च प्राबल्यं तु कलौ कलौ ॥६४॥
भोजनस्य स्थले वारिपानं सत्काररूपकम्।
वारिपानस्थले धूम्रपानं सत्काररूपकम् ॥६५॥
पयोवार्युष्णपानं च कलौ सत्कारकारणम्।
महीमानाऽतिथिसाधुसत्कारो वाङ्मयः कलौ ॥६६॥
न नेत्रयोर्न हृदये स्नेहः सत्कारकारणम्।
उच्चासनस्थाः श्वपचा नीचस्था ब्राह्मणाः कलौ ॥६७॥
मिथ्याप्रचारः शतधा मिथ्यावाणी सहस्रधा।
मिथ्याऽन्धयोऽयुतधा च कलौ भवति बद्रिके ॥६८॥

अफलाः श्रुतवस्तिष्ये चारंभा विफलाः कलौ।
सर्वकर्मकलानार्यो नराः कृष्णाः कलौ युगे ॥६९॥
कापट्यपटलं पृथ्व्यां पर्वते गगनेऽपि च।
सर्ववस्तुषु सांकर्यं धूलिधुर्याः कलौ जनाः ॥७०॥
परदोषारोपकाश्च स्वदोषे गुणमानिनः।
मग्नपादा ललज्जिह्वा मानवा वै कलौ कलौ ॥७१॥
कृष्णकर्दममार्गाश्च नीलीस्पर्शाम्बरास्तथा।
कालुष्यादिप्रपूर्णाश्च मानवा वै कलौ कलौ ॥७२॥
गृहस्थिनोऽस्थिरस्थानास्त्यागिनः सपरिग्रहाः।
व्याघ्राः सिंहा ग्रामसीमवासाः श्ववत् कलौ कलौ ॥७३॥
चत्वरे चत्वरे द्वीपा गोमायवो गृहे गृहे।
आपणे चापणे धूर्ताश्चौरास्तिष्ये पदे पदे ॥७४॥
धिष्ण्ये धिष्ण्ये शठास्तिष्ये वृन्दे वृन्दे च वृन्दलाः।
प्रसह्य च करग्राहास्तिष्ये भवन्ति बद्रिके ॥७५॥
राक्षसाभाश्च भूताभाः पिशाचाभाश्च मानवाः।
दैत्याभा वामना ह्रस्वाः कुब्जास्तिष्ये हि मानवाः ॥७६॥
कुसूलान्यन्नहीनानि जलहीनं प्रपास्थलम्।
हृदयं स्नेहशून्यं च मानवानां मिथः कलौ ॥७७॥
रात्रिन्दिवं व्यवसायपराणामपि नैव ह।
पूर्णमुपार्जनं तिष्ये रूक्षः कलिस्ततो मतः ॥७८॥
तथापि बद्रिके तत्र सत्कार्यं चेत् कृतं भवेत्।
सहस्रगुणितं तद्वै फलदं श्रद्धया कृतम् ॥७९॥
सर्वदोषनिधानेऽपि कलौ गुणो महानपि।
कृष्णकीर्तनमात्रेण शुद्धिं यातीति मानवः ॥८०॥
पूजनं जलमात्रेण कीर्तनं नाममात्रतः।
स्मरणं रूपमात्रस्य कलौ वै मोक्षदं हरेः ॥८१॥
यादृशास्तादृशा वाऽपि काषायाऽम्बरसाधवः।
आश्रितास्तारकास्तिष्ये श्रीकृष्णाऽङ्कस्थिता यतः ॥८२॥
सधूम्रो वा मन्दवर्चाः छन्नो वा मलिनाश्रयः।
दुष्टादो वाऽनलः शुद्धस्तथा साधुः कलौ शुचिः ॥८३॥
गृहं क्षेत्रं धनं नारीं ग्रामं त्यक्त्वा स्वकं निजम्।
कृष्णाऽङ्केऽवस्थितः साधुः श्रेष्ठयं चाऽस्य ततः सदा ॥८४॥
सत्तां त्यक्त्वा पारवश्यं त्यक्त्वा शक्तिं च दीनताम्।
शान्तिं विहाय शरणं जग्राहाऽतो वरो मुनिः ॥८५॥
कलिदोषेऽपि हृदये जिह्वायां शरणेऽपि च।
हरिं रक्षति गृह्णाति शृणोत्यतो वरो मुनिः ॥८६॥
देहाचारदुराचारपरोऽपि भक्तिमोदनः।
पावनो ब्रह्मवित् साधुर्यतः स लोकपावनः ॥८७॥

व्यभिचारपरश्चापि शाठ्यचौर्यपरोऽपि वा ।
द्रव्यतृष्णान्वितश्चापि कृष्णपुत्रो वरो मुनिः ॥८८॥
कृष्णस्मृतेस्तु कर्ता सः कारयिता विलोकितः ।
मिलितो रामवक्ता च वाचयिता वरो मुनिः ॥८९॥
कृष्णवेषधरो नाट्ये कृष्णस्य स्मारको यथा ।
स्मृत्या पापविहन्ता स्यात् तथा तादृग्वरो मुनिः ॥९०॥
काषायाऽम्बरमालोक्य पापा नमन्ति तं मुनिम् ।
ब्रह्मात्मभावनाधानं तस्मात् साधुर्धरः सदा ॥९१॥
बद्रिके दर्शनात् साधोः स्पर्शनात् सेवनात्तथा ।
मर्दनाद् भोजनाद् वारिपानाच्छुद्धयन्ति मानवाः ॥९२॥
साधोश्चरणरजसा प्रसादभोजनादपि ।
साधोस्तत्त्वाऽऽसादनाच्च सद्यः शुद्धयन्ति मानवाः ॥९३॥
कृष्णदीक्षावतो योगाद् भक्तस्य शीलनादपि ।
साधुजीवनकरणात् कलौ शुद्धयन्ति मानवाः ॥९४॥
साधुसाध्व्योः सुसत्सङ्गात् तयोः प्रसादनादपि ।
साध्वाज्ञाकरणात् तिष्ये सद्यः शुद्धयन्ति मानवाः ॥९५॥
साधोः पादाऽमृतपानात् साध्वाश्लेषविधापनात् ।
साधुदेहस्य योगाच्च सद्यः शुद्धयन्ति मानवाः ॥९६॥
साधवे देहदानाच्च तथेन्द्रियसमर्पणात् ।
मनोऽर्पणाज्जीवदानान्मुक्तिं प्रयान्ति मानवाः ॥९७॥
साधौ तादात्म्ययोगाच्च ध्यानावरणसंगमात् ।
तद्रूपाऽऽकारतायोगान्मुक्तिं प्रयान्ति मानवाः ॥९८॥
यथेष्टवस्तुदानाच्च कुटुम्बसम्पदर्पणात् ।
श्रीकृष्णार्पणकरणान्मुक्तिं प्रयान्ति मानवाः ॥९९॥
कृष्णन्यासात् कृष्णभावात् कृष्णरहस्यसेवनात् ।
कृष्णसाधुव्रताचारान्मुक्तिं प्रयान्ति मानवाः ॥१००॥
तिष्ये तु बद्रिके देवा मूर्तयो न पुनन्ति हि ।
तीर्थानि न पुनन्त्येव सद्यः पुनन्ति साधवः ॥१०१॥
सेवां दत्वा द्रुतं सन्तः पुनन्ति मानवान् कलौ ।
सेवां कृत्वा सतां सद्यः शुद्धयन्ति मानवाः कलौ ॥१०२॥
आशीर्वादैः सतां साध्व्यः साधवश्च यथा कलौ ।
पवित्राः पावका यद्वत्तथा भवन्ति मानवाः ॥१०३॥
सतां संगादाश्रयाच्च कृष्णकान्तस्य कीर्तनात् ।
स्मृतेर्नार्यो नरा दिव्या भूत्वा मोक्षं प्रयान्ति वै ॥१०४॥
अनादिश्रीकृष्णनारायणस्वामिसतां मुहुः ।
सेवनात् कीर्तनात् बद्रि मोक्षो भवति देहिनाम् ॥१०५॥
इत्येतत् सरलं तिष्ये साधनं बद्रिके मया ।
मोक्षस्य कथितं सर्वार्पणात्मकं सुनिश्चितम् ॥१०६॥
प्रभोः कृपावतः स्वामिनश्च कृष्णस्य योगिनः ।
सेवनादस्य पठनाच्छ्रवणात् स्मरणात्तथा ॥१०७॥
सर्वार्पणाद्याचरणात् तादात्म्यभावयोजनात् ।
तिष्ये भुक्तिर्मुक्तिरस्ति देहिनां शाश्वती शुभा ॥१०८॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कलिदोषाणां मोक्षसाधनगुणानां सतां सेवादीनां च प्रदर्शननामा चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि मायापालस्य भूभृतः ।
सर्वपापरतस्यापि साध्वर्पणात् प्रमोक्षणम् ॥ १ ॥
कामरूपे पूर्वदेशे मायापालोऽभवन्नृपः ।
मांसादो मद्यपश्चापि व्यवायकर्मतत्परः ॥ २ ॥
द्रव्यापहारकश्चापि कन्यादूषणकारकः ।
प्रजासु यत्र कुत्रापि विलोकयति शोभनाम् ॥ ३ ॥
युवतीं कन्यकां वापि वधूं सुवासिनीं च वा ।
प्रसह्य राजदूतैः स समाहृत्य भुनक्ति ताम् ॥ ४ ॥
नित्यं वधं पशूनां च करोति मांसहेतवे ।
पक्षिणां सर्वजातीनां मांसं खादति भूपतिः ॥ ५ ॥
यादसां भक्षकश्चापि सुरामद्यपरायणः ।
पराराष्ट्रे निजदूतैश्चौर्यं कारयतीत्यपि ॥ ६ ॥
विप्राणां वा विधवानां देवानां धर्मवर्तिनाम् ।
धनान्याहृत्य राजाऽपि स्वकोशे स्थापयत्यपि ॥ ७ ॥
मखानां धर्मकार्याणां विरोधी दाननिन्दकः ।
साधूनां च सतीनां च तिरस्कारपरायणः ॥ ८ ॥
भिक्षुकानां दुःखकर्ता होमरोधनतत्परः ।
मन्दिराणां नाशयिता पूजारोधकरस्तथा ॥ ९ ॥
देवतां मनुते नैव मूर्तौ श्रद्धाऽस्य नो गुरौ ।
ईश्वरं नैव मनुते परमेशं कुतोऽपि न ॥१०॥
अहमेवाऽस्मि भगवान् राजा हि परमेश्वरः ।
यजन्तु नृपतिं मां वै प्रजेश्वरं महेश्वरम् ॥११॥
पूजयन्तु प्रजा मां च प्रसादयन्तु मां हरिम् ।
राजा साक्षाद्धरिर्लोके नान्यो हरिरगोचरः ॥१२॥
पातिव्रत्यं राजरूपे हरौ कार्यं स्त्रिया सदा ।
राज्ञे करः प्रदातव्यो धर्मार्थं एव जायते ॥१३॥
राजा भोक्ता समस्तानां शास्ता नेता च रक्षकः ।
मूर्तिर्ब्रह्ममयी राजा यष्टव्यः स मखे द्विजैः ॥१४॥

कामनातर्पणं श्राद्धं नान्यच्छ्राद्धं विधेयवत् ।
पुमर्थः कामनातृप्तिरिन्द्रियाणां च तर्पणम् ॥१५॥
भोगः श्रेयस्करो लोके परः पुमर्थ एव सः ।
न स्वर्गो नापवर्गश्च प्रेतता नहि कस्यचित् ॥१६॥
याम्यलोको न चैवाऽस्ति कारागारो ममैव सः ।
यमोऽहं च कुबेरोऽहं नारायणो भवाम्यहम् ॥१७॥
मां भजन्तु ततः सर्वेऽन्यथा दण्ड्या ममेति वै ।
बद्रिके स नृपो मायापालश्चैवं समन्ततः ॥१८॥
घोषणां कारयामास प्रजासु राष्ट्रगासु वै ।
आजीविका हृतास्तेन पूर्वराजभिरर्पिताः ॥१९॥
देवालयाः सार्गलाश्च कृतास्तेनाऽधिनाऽभितः ।
पूजाप्रवाहा निहता विप्राश्च दण्डिता मुहुः ॥२०॥
सतीनार्यो दूषिताश्च मूर्तयः खण्डिता हरेः ।
तीर्थदानादिविषयो हृतास्तेन दुरात्मना ॥२१॥
देवयजना विप्रास्तु कारागारे निपातिताः ।
साधवो बहवस्तेन निजदण्डेन ताडिताः ॥२२॥
साध्व्यो देव्यः पुरुषेभ्यः प्रसह्य तेन चार्पिताः ।
तीर्थं नाम हृतं तेन नास्तिक्येन तु भूभृता ॥२३॥
निजपत्नी महाराज्ञी कामाक्षी नामतः कृता ।
सैव देवो सैव लक्ष्मीर्दुर्गा सैवेति घोषिता ॥२४॥
सा तीर्थं सा देवमाता सा मान्येति प्रघोषिता ।
समद्यमांसनैवेद्यार्पणं तस्यै करोति सः ॥२५॥
राज्ञे सर्वार्पणं कार्यं चेत्येवं स करोत्यपि ।
प्रातः सिंहासने नित्यं राजा राज्ञी प्रतिष्ठितः ॥२६॥
प्रजाः शासनरोधेन नित्यं प्रातर्यथाक्रमम् ।
आगत्य देववन्नत्वाऽर्चयन्ति तावुभावपि ॥२७॥
ब्राह्मणा नृपतेर्लोकानुत्थार्थं पूजयन्ति तौ ।
भोजयन्ति च भूपालं राज्ञीं च सततं प्रजाः ॥२८॥
एवं वै बद्रिके चाऽऽन्ध्यं प्रावर्तत तदा खलु ।
मायापाले हि नृपतौ कामरूपे प्रदेशके ॥२९॥
देवकोपस्ततो जातः प्रजाकोपोऽपि वै महान् ।
दुर्भिक्षं चाऽभवद् राष्ट्रे रोगाः प्रजासु चाऽभवन् ॥३०॥
दावाग्निर्वनभूभागे व्यजायत पुनः पुनः ।
राज्ञो दोषेण वै बद्रि प्रजापीडाः समागताः ॥३१॥
यतो राजानुयायिन्यो नास्तिक्यश्च प्रजा अपि ।
राजाश्रयानुसारिण्यस्तदाऽभवन् गृहे गृहे ॥३२॥
दुर्भिक्षेण तदा बद्रि हाहाकारो महानभूत् ।
नाऽन्नं न सलिलं क्वापि लभते मानवः खलु ॥३३॥
ब्रह्मपुत्री जलहीना महानदी व्यजायत ।
हिमाद्रौ वर्षणं नास्ति देवतानां प्रकोपतः ॥३४॥
अरण्यानि समस्तानि पर्वतीयानि सर्वशः ।
दावानलैः प्रदग्धानि पर्वता भस्मशोभनाः ॥३५॥
अभवन् बद्रिके भूमिर्दग्धेव दृश्यते तदा ।
पशवः पक्षिणश्चापि मृता यादांसि सर्वथा ॥३६॥
नाऽऽहारो लभ्यते राष्ट्रे भवन्ति व्यसवो जनाः ।
मांसादा मानवास्तत्र मानुषादास्ततोऽभवन् ॥३७॥
राक्षसा इव चान्योन्यं भक्षयन्ति नरान् मिथः ।
नार्यश्च बालकौश्चापि मृतमांसान्यदन्ति च ॥३८॥
एवं वै दैवकोपेन रोगेणापि हृताः प्रजाः ।
पापिनां चातिपापानां फलानि त्वत्र जन्मनि ॥३९॥
आयान्त्येव न सन्देहस्तीव्रवेगवतां द्रुतम् ।
संगदोषेण पुण्याढ्या अपि दह्यन्ति वेगगाः ॥४०॥
शुष्कमध्यस्थितं चार्द्रं दावाग्निना हि दह्यति ।
राज्ञः पुत्रशतं नष्टं रोगेण कन्यकाशतम् ॥४१॥
रोगग्रस्तौ नृपो राज्ञी व्यजायेतां क्षयान्वितौ ।
दासा दास्यो मृताः सर्वे रोगेण पशवोऽपि च ॥४२॥
वाहनानि विनष्टानि क्षुधया पीडितानि वै ।
कामाक्ष्याः परमः कोपो राज्येऽभितो व्यजायत ॥४३॥
भूताः प्रेताः पिशाचाश्च भ्रमन्ति नगरे तदा ।
यमदूतास्ताडयन्ति मारयन्ति नयन्ति च ॥४४॥
एवं याम्यालयो राष्ट्रं द्वितीय इव चाऽभवत् ।
पादौ हस्तौ विक्षिपन्तो दृश्यन्ते मानवा भुवि ॥४५॥
क्षुधया तृषया व्याप्ता मूर्छिताश्चत्वरादिषु ।
नग्ना विवस्त्रा निर्लज्जा महादुःखार्तिपीडिताः ॥४६॥
जलं जलं च क्रोशन्तश्चान्नं चान्नं मुहुः क्षितौ ।
विलुण्ठन्तोऽप्यशक्तास्ते समुत्थातुं विमूर्छिताः ॥४७॥
कण्ठरावान् भयदांश्च कृत्वा त्यजन्ति वै ह्यसून् ।
न दाता विद्यते कश्चिन्न हर्ता शान्तिदोऽपरः ॥४८॥
समानावस्थगाः सर्वे कः कं संभालयेदहो ।
राष्ट्रं वै प्रलयावस्थं मायापालस्य दृश्यते ॥४९॥
पापफलं समस्तं वै समायातं समूहितम् ।
हाहाकारोऽभितो जातो राष्ट्रान्तरेषु कर्णगः ॥५०॥
मम लोके तथा स्वर्गे सा वार्ताऽवर्ततापि च ।
मायापालेन राज्ञा वै फलं पापस्य भुज्यते ॥५१॥
प्रजाभिर्भुज्यते चापि प्रत्यक्षं चेह जन्मनि ।
ब्रह्मपुत्री नदी चापि ब्रह्माऽग्रेऽकथयत् कथाम् ॥५२॥

सनत्कुमारो भगवान् श्रुत्वा दयापरोऽभवत् ।
नत्वा स्वपितरं तूर्णं ब्रह्मपुत्र्या समं तदा ॥५३॥
दयावशो भुवं गत्वा व्यलोकयद् दशां च ताम् ।
कामाक्षी देविका लज्जानम्रा सत्कारमाचरत् ॥५४॥
दिव्यः सनत्कुमारः स ब्रह्मपुत्री स्वसा नदी ।
कामाक्ष्या पूजितौ चोभौ निषेदतुः स्वमन्दिरे ॥५५॥
शुभासने राजमानौ पप्रच्छाऽऽगमकारणम् ।
सनत्कुमारो भगवानाह कामाक्षिकां सतीम् ॥५६॥
दुर्भिक्षेऽत्र प्रदेशे वै त्वयाऽनुष्ठितभूतले ।
आर्ता नश्यन्ति बहवः प्रजा नाशं प्रयान्ति च ॥५७॥
राजा पापफलं भुङ्क्ते पापात्मा प्रजया सह ।
देवा देवालया यज्ञा विप्रा हताश्च भूभृता ॥५८॥
जाताः प्रजाश्च तन्मध्यस्ततः पीडां प्रयान्ति ताः ।
वार्तैषा दिवि सत्ये च देवर्षयो वदन्ति हि ॥५९॥
ब्रह्मपुत्रीमुखाच्छ्रुत्वा जातदयोऽहमागतः ।
निरीक्षितुं समीकर्तुं सान्त्वयितुं तदापदः ॥६०॥
यदि मातुः कृपा चास्ति चिकीर्षामि प्ररक्षणम् ।
श्रुत्वैवं बद्रिकें कामाक्षिणी प्राह सनत्मुनिम् ॥६१॥
राजा पापतमश्चास्ते ततः प्रजा च तादृशी ।
दण्डाऽर्हो विद्यते राजा साक्षाद् दण्ड्योऽस्ति सर्वथा ॥६२॥
शिक्षोत्तरं कृपा युक्ता देवद्रोही यतो नृपः ।
इतिकामाक्षिणीवाक्यं श्रुत्वोवाच सनत्मुनिः ॥६३॥
अस्त्वेवं पापकृद् राजा दण्डं भुनक्तु गोचरम् ।
तावद् देव्या स्मृतस्तत्र यमदूतः समाययौ ॥६४॥
विकरालः करालास्यः कज्जलाभो गिरिप्रभः ।
समुद्गरो व्योममार्गेणाऽवाततार सन्निधौ ॥६५॥
मायापालं विनिगृह्य बध्वा सदेहमम्बरे ।
निनाय मारयन्मारं मुद्गरेण यमालयम् ॥६६॥
चित्रगुप्तोदितकर्मफलभोगार्थमेव सः ।
क्षिप्तो लोहमयीसूर्म्यालिंगनार्थे महानले ॥६७॥
ततोऽवितप्ततैलाढ्यकटाहे भर्जितः स तु ।
महारौरवनरके भक्षितो रौरवैस्ततः ॥६८॥
असिपत्रवने राजा चालितो भेदितो बहुः ।
वृषदंशो वृश्चिकाद्यैर्दष्टः सर्पादिभिस्तथा ॥६९॥
विध्वस्तः प्राणिभिश्चापि नृपो विशसने मुहुः ।
तप्तलोहरसं राजा पायितश्च पुनः पुनः ॥७०॥
लकुटैः क्षारयष्ट्याद्यैस्ताडितश्च विघातितः ।
अघोमस्तकवान् राजा वह्निकुण्डे प्रदाहितः ॥७१॥
ताम्रभूमौ चालितश्च चूर्णितो यन्त्रकैस्ततः ।
पेषितश्चक्रकैश्चापि रन्धितो भक्षितो यमैः ॥७२॥
सन्दंशेन नृपजिह्वा निष्कासिता च कर्तिता ।
कर्णयोः सीसकं तप्तं सेचितं च मुखेऽपि च ॥७३॥
शूलं तप्तं नेत्रयोश्च निहितं च गलेऽपि च ।
शक्त्या राजा भेदितश्च वक्षस्येव पुनः पुनः ॥७४॥
उत्कृत्य चर्म भूपस्य मांसं वै खादितं यमैः ।
रुधिरं च यमैः पीतं मज्जाऽस्याऽऽस्वादिता यमैः ॥७५॥
श्वापदैः फाडितश्चापि कुंभिपाके निपातितः ।
लोहयन्त्रे पेषितश्च पर्वतात् पातितस्तथा ॥७६॥
वैतरण्यां वाहितश्च लिङ्गं तस्य विकर्तितम् ।
नपुंसकीकृतो राजा निर्वृषणोऽभवत्ततः ॥७७॥
स्त्रीभगाढ्यः शरीरे च सहस्रभगवान् कृतः ।
स्त्रीमूत्रं पायितस्तत्र प्राशितः पाशवं मलम् ॥७८॥
शंकुन्यासान्नासिकायां गुदायां च प्रपीडितः ।
गलरोधान्मारितश्च करस्पर्शेन जीवितः ॥७९॥
पुनश्च भक्षितो राजा पुनः स्वस्थीकृतो मुहुः ।
इत्येवं कर्मणां राजा फलानि तेन वर्ष्मणा ॥८०॥
दैवेच्छयाऽऽसवान् कष्टान्यनन्तानि यमालये ।
सनत्कुमारो भगवान् ध्यानेन च समाधिना ॥८१॥
व्यलोकयद्धि तत्सर्वं पापफलं नृपे तदा ।
पुनर्दयां परां प्राप्योवाच कामाक्षिकां सतीम् ॥८२॥
दुष्टानां दमनं धर्मः स च जातोऽस्ति भूभृति ।
देवानां तु दया धर्मः कर्तव्योऽद्य नृपादिषु ॥८३॥
भुंक्ते कष्टानि भूपालश्चाक्रोशं प्रकरोत्यपि ।
हा हतोऽस्मि हा हतोऽस्मि त्राता मे त्राणमावह ॥८४॥
न नास्तिक्यं करिष्येऽहं न व्यवायं न हिंसनम् ।
न चौर्यं हरणं वापि निन्दनं शठतां न च ॥८५॥
न यज्ञानां निरोधं वा पूजावरोधनं न वा ।
न करिष्येऽवमानं च साधूनां योगिनां तथा ॥८६॥
हा चेद् रक्षाकरः कश्चिन्नारायणो नरोऽपि वा ।
मां प्ररक्ष्य निजं लोकं सदेहं प्रापयन्त्वितः ॥८७॥
प्रणमामि परात्मानं यमं धर्मं नमामि च ।
विष्णुं हरं वेधसं च प्रणमामि जनार्दनम् ॥८८॥
कामाक्षीं च सतीं दुर्गां लक्ष्मीं नमामि रक्षिकाम् ।
तीर्थानि प्रणमाम्यत्र साधून्नमामि रक्षकान् ॥८९॥
देवान् सर्वान् प्रणमामि रक्षन्तु मां यमालयात् ।
भजिष्ये परमात्मानं पूजयिष्ये द्विजान् सतः ॥९०॥

सत्संगतिं विधास्येऽहं तीर्थस्नानं गुरूत्सवम् ।
दानयज्ञं ब्रह्मयज्ञं करिष्ये ज्ञानयज्ञकम् ॥९१॥
जपयज्ञं होमयज्ञं करिष्ये साधुसेवनम् ।
एवं प्रलपन् विलपन् ननाम चाम्बरे मुहुः ॥९२॥
तावद् देवाज्ञया साधुः सनत्कुमारको मुनिः ।
क्षणमात्रेण चाऽदर्शि यमालये नृपाग्रतः ॥९३॥
सूर्यचन्द्रासुरांगं तं तपोनिधिं हरेः प्रियम् ।
भक्तिपात्रं जगत्त्राणकरं सिद्धं दयान्वितम् ॥९४॥
आगतं शान्तमनसं पुण्यनिधिं सुयोगिनम् ।
ब्रह्मशीलपरं दृष्ट्वा यमदूता भयं ययुः ॥९५॥
त्यक्त्वा नृपं ययुस्तूर्णं धर्मराजसभां प्रति ।
जगदुस्तं च वृत्तान्तं यमेशो विस्मयं ययौ ॥९६॥
उत्थाय सहसा धर्मराजः स्वागतमाचरत् ।
सत्कारं पूजनं चापि स्तवं चकार वै मुनेः ॥९७॥
पप्रच्छ चागमे हेतुं मुनेः पादजलं पपौ ।
राज्ञः पाशविमुक्त्यर्थमागतोऽस्म्याह तं मुनिः ॥९८॥
पापिनां पापनाशार्थं साधूनां कर्म शस्यते ।
तदहं चास्य पापानां नाशार्थं पाशमुक्तये ॥९९॥
समागतोऽस्मि धर्मेन्द्र विमोचयैनमत्र ह ।
मा चिरं कुरु धर्मेन्द्र विमोचय नृपं द्रुतम् ॥१००॥
अस्य दुःखस्य चानन्त्यं न द्रष्टुं शक्यते मया ।
तस्मान्मोचय राजेन्द्रं नेष्ये सदेहमेव तम् ॥१०१॥
इत्युक्त्वा विरराम द्राङ् मुनिः सनत्कुमारकः ।
धर्मो विचार्य वाक्यानि मुनये समुवाच ह ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने मायापालनृपस्य नास्तिक्यं महापापानि च, तत्फलानि, सदेहस्य याम्यदण्डभोगः, तद्रक्षार्थं सनत्कुमारागमश्चेत्यादिनिरूपणनामा पञ्चाऽधिकशततमोऽध्यायः ॥ १०५ ॥

**श्रीनरनारायण उवाच—**

बद्रिके धर्मराजस्तं सनत्कुमारकं मुनिम् ।
विनयेन नृपस्यैव चेष्टितं प्राह चाऽधमृत् ॥ १ ॥
दण्डपात्रं स्वयं राजा सनत्कुमार ! सर्वथा ।
न मोक्तव्योऽतिपापात्मा महापापकरो हि सः ॥ २ ॥
मद्यं मांसं घसाशित्वं कृतवानयमुल्बणम् ।
देवानां निन्दनं मूर्तिनाशं मखविघातनम् ॥ ३ ॥
देवद्विजधनानां चापहारं कृतवानयम् ।
उच्छेदं दानयज्ञानां कृतवान् स्तैन्यमुल्बणम् ॥ ४ ॥
कन्याशीलविहन्ताऽयं व्यवायं कृतवानयम् ।
परदाररतश्चायं पशुपक्षिप्रभक्षकः ॥ ५ ॥
धर्मकार्यविहन्ताऽयं हरिमन्योऽतिगर्ववान् ।
नारायणस्य भागान् वै भुक्तवान् स्वयमेव ह ॥ ६ ॥
यादसां भक्षकश्चाऽयं लुब्धादो लुण्टकोऽप्ययम् ।
सतीसाध्वीधर्षयिता स्नानतीर्थादिलोपनः ॥ ७ ॥
देवानां देवतानां च मन्दिराणां विनाशकः ।
निन्दकश्च सतां धर्मकर्मणां पापवाचनः ॥८॥
पापश्रवणकारश्च नास्तिकोऽधर्मवर्त्तनः ।
वृत्तिहा जीविकाहन्ता प्रसह्य शीलनाशकः ॥ ९ ॥
शरणागतहन्ताऽयं स्वर्गमार्गनिरोधकः ।
देवहविर्विरोधी च वह्निपूजाविनाशनः ॥१०॥
साधूनां नाशकश्चाऽयं न मोक्तव्यः कथञ्चन ।
कोटिवर्षसहस्राणि कोटिवर्षाऽर्बुदान्यपि ॥११॥
भुञ्जानस्य स्वपापानां निस्तारोऽत्र तथापि न ।
एवंविधोऽयं पापिष्ठो भगवन्निन्दकः सदा ॥१२॥
कृष्णधिष्ण्यस्थितो नित्यं नैवेद्यं भुक्तवानयम् ।
यावत् क्षितिर्भवेद् याम्यलोको यावच्च विद्यते ॥१३॥
तावच्च निजपापानि भुञ्जानस्यापि नाऽवधिः ।
एवं पापतमश्चाऽयं मोक्तव्यो न कथञ्चन ॥१४॥
साधो राजा स्वयं पापी प्रजानां पापयोगदः ।
प्रजानां पापमार्गेषु प्रेरकोऽयं यतः सदा ॥१५॥
अतः प्रजानां पापात्मा प्रजापापफलाश्रयः ।
ब्रह्मणो वर्षपर्यन्तं मोक्तव्योऽयं न वै क्वचित् ॥१६॥
सर्वपापैर्मुच्यतेऽपि देवद्रोहान्न मुच्यते ।
विश्वासघातकर्तुश्च द्रोग्धुर्देवस्य सद्गुरोः ॥१७॥
धर्मघातकिनश्चापि निष्कृतिर्नैव विद्यते ।
देवानां निन्दकस्यापि यज्ञनाशकरस्य च ॥१८॥
मूर्तेर्हर्तुर्न वै चास्ति निष्कृतिस्तु मुने क्वचित् ।
तस्मादयं न मोक्तव्यो ब्रह्माण्डपापवानयम् ॥१९॥

**श्रीसनत्कुमार उवाच—**

योग्यं दण्डप्रदानं वै यमस्य दण्डशासितुः ।
योग्यं दण्डान्मोचनं वै साधोर्दयावतस्तथा ॥२०॥
पापिनां पापनाशार्थं साधवो निर्मिताः पुरा ।
ब्रह्मणा निर्मितश्चाऽहं पापनाशाय मुक्तये ॥२१॥
ऋभुश्च सनकाद्या मे भ्रातरोऽपि तथा कृताः ।
दयालवोऽघहन्तारो मुक्तिदाः सर्वदेहिनाम् ॥२२॥

राजा तु प्राप्तवान् दण्डं बहुधा शिक्षणाय वै ।
प्रजादुःखं महच्चापि विद्यते कामरूपके ॥२३॥
अनावृष्टिकृतं रोगकृतं दैवापराधजम् ।
मोक्तव्यास्ताः प्रजाश्चापि मया वृष्टिविधापनात् ॥२४॥
द्रुतं मोचय राजानं नीत्वा प्रयामि नान्यथा ।
स्वस्ति तेऽस्तु सदा धर्मं साधोर्वाक्यानि पालय ॥२५॥
हरेर्वाचः सतां वाचो नोल्लंघ्या वै कदाचन ।
अप्रसन्नेषु सत्स्वत्र हानिर्महती चापतेत् ॥२६॥

श्रीधर्मराज उवाच—

अस्य पापानि कस्मैश्चिद् देयानि तु मुने त्वया ।
राज्ञे देयानि शेषाणि ततो मुक्तिं प्रयास्यति ॥२७॥
पापदानं कष्टदानं दुष्टदानं हि विद्यते ।
पापशुद्धिं विना कर्ता न विमोक्तुं समर्हति ॥२८॥
पुत्रो वा प्रमदा पुत्री भ्राता गुरुश्च वा सखा ।
पापं चेत्स्वतः सर्वे गृह्णीयान्मुच्यते तदा ॥२९॥

श्रीसनत्कुमार उवाच—

तिष्ठ धर्म क्षणं पत्नी विद्यतेऽस्य नयाम्यहम् ।
उक्त्वैवं क्षणमात्रेणाऽनयद् राज्ञीं मुनिर्यमम् ॥३०॥
वद राजा मुच्यतेऽत्र पापं गृहाण भूभृतः ।
सा प्राह नाऽहं गृह्णामि पापं कष्टप्रदं यतः ॥३१॥
पुण्यं गृह्णामि पत्युश्च न पापं कष्टदं क्वचित् ।
मया कृतानि पापानि तानि गृह्णातु भूपतिः ॥३२॥
राज्ञः पापेन मे पुत्राः पुत्र्यो नष्टाः शतं शतम् ।
प्रजानाशो वर्तते च पापं गृह्णामि नैव ह ॥३३॥
रुग्णाऽहं दुःखसंव्याप्ता कथं गृह्णामि पापकम् ।
पुण्यस्य भागिनी स्यां वै न स्यां पापस्य भागिनी ॥३४॥
इत्युक्त्वा विररामाऽसौ पत्नी मौनं दधार ह ।
धर्मराजस्तदा चर्षिं प्राह सनत्कुमारकम् ॥३५॥
गृहाणर्षेऽस्य पापानि नय तं निजराष्ट्रकम् ।
ओमित्याह दयालुः स पापं जग्राह वारिणा ॥३६॥
राजा निर्दोषतां प्राप्तो यमेन मोचितस्तदा ।
सनत्कुमारो भगवान् पूजितोऽस्य यमादिभिः ॥३७॥
नृपं नीत्वा च यावत् सः प्रस्थितस्तावदेव तु ।
नारकाश्चासंख्यजीवाश्चक्रुराक्रोशमुल्बणम् ॥३८॥
प्रत्वलामो वयं साधो माऽस्मान् विहाय याहि वै ।
तवाऽऽगमेन कुण्डस्था वयं त्वद्वायुना तथा ॥३९॥
दर्शनेन तव साधो परां शान्तिं गतास्त्विह ।
दुःखानि देहसंस्थानि याम्यविषोल्बणानि च ॥४०॥
तैजसानि ज्वलनानि नष्टानि चान्तराण्यपि ।
तस्मादायाहि साधो त्वं रक्षयाऽत्र च नः सदा ॥४१॥
इत्येवं नारकाः साधुं प्रार्थयामासुरुत्सुकाः ।
सनत्कुमारो भगवान् दयां प्राप्य पुनस्तदा ॥४२॥
धर्मराजं समुवाच राजकेताँश्च नारकान् ।
विमोचय महादुःखान्नारकान्मम वाञ्छया ॥४३॥
साधोः समागमो नित्यं दुःखिनां दुःखनाशकः ।
शान्तिदश्चाऽघहश्चापि परमोद्धारकारकः ॥४४॥
यमराज महाबाहो दयां कृत्वा विमोचय ।
नाऽन्यथाऽहमितो यामि तिष्ठाम्यत्रैव ते गृहे ॥४५॥
इत्युक्तो यमराजश्च प्रत्युवाच मुनिं शनैः ।
मुने समर्थ एवाऽसि किन्तु न्यायो न विद्यते ॥४६॥
पापिनां मोचनं नैव योग्यं यमालयात् क्वचित् ।
पापभोगं विना नैव त्यक्तव्या निगडस्थिताः ॥४७॥
यद्येवं मोचये दुष्टान् न्यायालयो निरर्थकः ।
साधूनादाय बहवश्चायास्यन्तीह मानवाः ॥४८॥
निजान् विमोचयिष्यन्ति नारकान् वा तथाऽपरान् ।
अन्धन्यायप्रवाहोऽयं प्रवर्त्स्यति ततः परम् ॥४९॥
तस्मादिमे समस्ता वै त्यक्तव्या नारका नहि ।
नृपं नीत्वा मुने याहि यथेष्टं कुरु भूतले ॥५०॥
इत्युक्तो बद्रिके साधुः सनत्कुमार आचरत् ।
निषद्य भगवन्नामरटनं धुन्यमुत्तमम् ॥५१॥
'बालकृष्ण हरेकृष्ण कृष्णनारायण प्रभो ।
अनादिश्रीकृष्णनारायण विष्णो हरे विभो' ॥५२॥
सततं भावयामास भ्रमित्वाऽखिलतत्पुरम् ।
नारकाश्च समाकर्ण्य मुक्तबन्धास्तदाऽभवन् ॥५३॥
यमदूता ययुर्दूरं श्रुत्वा नाम हरेस्तदा ।
नारका नरकं त्यक्त्वा ययुः स्वर्गं तदोत्तरम् ॥५४॥
सनत्कुमारः सततं बभ्राम दशवारकम् ।
यमलोके मुहुः संश्रावयन् कृष्णनरायण ॥५५॥
अनादिश्रीकृष्णनारायण गोपालबालक ।
कम्भराश्रीमहालक्ष्मीनन्दनाऽच्युत केशव ॥५६॥
प्रभोकृष्ण परस्वामिन् कृष्णनारायणाऽच्युत ।
स्वामिन्नारायणविष्णो पुरुषोत्तम माधव ॥५७॥
तालिकां वादयित्वैवं मुनिर्धुन्यं यमालये ।
चकार परितस्तत्र विचरन् मोक्षयन् जनान् ॥५८॥

नारका नरकान् हित्वा हित्वा भयं च दूतजम् ।
निर्गत्य दिव्यदेहाश्च भूत्वा भूत्वा दिवं ययुः ॥५९॥
कुण्डानि प्रायशस्तत्र रिक्तानि चाऽभवँस्तदा ।
मुनेर्भजनवेगेन कुण्डानि रिक्ततां ययुः ॥६०॥
नैकोऽपि नारकी तत्र दृश्यते तु यमालये ।
एवं वै कृतवान् चानुग्रहं सनत्कुमारकः ॥६१॥
मायापालो नृपश्चापि व्यधाद् भजनमुत्तमम् ।
अन्तरात्मन् हरे स्वामिन् कृष्णनारायणेति च ॥६२॥
तालिकां वादयित्वैव चक्रे धुन्यं प्रवेगतः ।
नारकाः सुखितास्तेन मोचिताश्च यमालयात् ॥६३॥
धर्मराजस्तथा दूताश्चित्रगुप्तादयोऽपि च ।
यमाश्च भृत्यवर्गाश्चाऽभवन् गलितगर्वकाः ॥६४॥
याम्यलोके न चैकोऽपि शिष्यते दण्डदोषवान् ।
सनत्कुमारो भगवान् प्रेषयामास तान् दिवम् ॥६५॥
यमो विस्मयमापन्नो पूजायामास तं मुनिम् ।
अहो साधोः प्रमाहात्म्यं हरेरिव महत्तमम् ॥६६॥
अन्यथाकर्तुमेवाऽपि समर्थोऽस्ति हरिर्यथा ।
राजा प्रसन्नतां प्राप्तो यथा निगडबन्धिनः ॥६७॥
विमोचयति तूर्णं स्वेच्छया तद्वन्महामुनिः ।
समर्थानां प्रभावाऽग्रे नियमा यान्ति संक्षयम् ॥६८॥
पापिनां पापनाशाय समर्थाः सन्त एव ह ।
भाग्यरेखासुसंव्यत्यासेऽपि शक्ता हि साधवः ॥६९॥
शापाऽनुग्रहशक्ताश्च तारकाः पापवारकाः ।
पुण्यपुञ्जप्रदातारः समर्थाः साधवोऽन्वहम् ॥७०॥
यत्र नारायणकृष्णस्वामीश्रीर्वर्तते हृदि ।
सर्वा हि शक्तयस्तत्र वसन्ति साधुमाधवे ॥७१॥
इत्युक्त्वाऽऽह यमेशस्तं क्षन्तव्योऽहं सदा त्वया ।
साधुनाऽभ्युदयायाऽपि क्षन्तव्या गृहधर्मिणः ॥७२॥
इत्यभ्यर्थ्य ददौ पूजां मुनये यमराट् स्वयम् ।
पुष्पमालां चन्दनं च नीराजनं च दण्डवत् ॥७३॥
नैवेद्यं मिष्टमिष्टं च क्षीरामृतं सुभोजनम् ।
जलामृतं शुभं चापि मुखवासं तथोत्तमम् ॥७४॥
पादौ प्रक्षाल्य दुग्धेन पपौ धर्मः स्वयं मुनेः ।
धूम्रोर्णाऽपि च तत्पत्नी पपौ पादजलं मुनेः ॥७५॥
चित्रगुप्तादयश्चापि ब्रह्मपुत्राश्च लेखकाः ।
पपुर्मुनेः पादवारि प्रसादं जगृहुस्ततः ॥७६॥
यमदूताः समस्ताश्च श्रवणाः पितरस्तथा ।
अन्येऽपि भृत्यवर्गाश्च यमराजकुटुम्बिनः ॥७७॥
सर्वे चक्रुर्दण्डवच्च सनत्कुमारकं मुनिम् ।
विदायं चार्पयामासुर्जयशब्दैः सुघोषितैः ॥७८॥
सनत्कुमारस्तान् सर्वानाशीर्वादैः प्रयुज्य च ।
व्योममार्गेण राजानं नीत्वा कामाक्षिणीं ययौ ॥७९॥
राजपत्नीं च राजानं चास्थापयत्तदालये ।
सदेहौ तौ प्रवीक्ष्यैव याम्यदुःखानि सर्वथा ॥८०॥
जातौ तदास्तिकौ सर्वदैवकार्यपरायणौ ।
यज्ञारम्भं चक्रतुश्च विप्रैर्महर्षिभिः शुभम् ॥८१॥
विष्णुयागे ददतुस्तौ दक्षिणां कोशरिक्तताम् ।
सर्वस्वं नाणकं स्वर्णं रौप्यं ददतुर्भावतः ॥८२॥
सनत्कुमारो भगवान् वर्तयामास चाऽध्वरम् ।
मेघो ववर्ष चात्यर्थं रोगा नष्टाः समन्ततः ॥८३॥
राजयक्ष्मा नृपतेश्च नष्टो निर्मूल एव ह ।
मुनेः कृपया राष्ट्रं च सस्यसम्पत्सुशोभनम् ॥८४॥
जातं यावच्च वै तावत् साधुर्ददौ नृपाय तु ।
अक्षयां तुम्बिकां दिव्यां मिष्टान्नपूरितां शुभाम् ॥८५॥
साच्छादनां तथा चाऽन्यामक्षय्यवारिसंभृताम् ।
आज्ञां च दत्तवान् राज्ञे राज्ञ्यै सनत्कुमारकः ॥८६॥
अरिक्ताभ्यां तुम्बिकाभ्यामन्नवारिं प्रपूर्णकम् ।
आच्छाद्य दक्षहस्तेन दातव्यं च निरन्तरम् ॥८७॥
अक्षयं तज्जलमन्नं वर्षमात्रं भविष्यति ।
ततस्ते तुम्बिके मह्यं स्वयमेवाऽऽगमिष्यतः ॥८८॥
'ओं नमः श्रीकृष्णनारायणाय स्वामिने स्वाहा' ।
मन्त्रं ददौ नृपायाऽपि राज्ञ्यै प्रजाभ्य इत्यपि ॥८९॥
इत्युक्त्वा दक्षिणां लब्ध्वा प्रदत्वा तुम्बिके ततः ।
मुनिर्ययौ व्योमपथा सत्यलोकं सुखाश्रयम् ॥९०॥
मृतानां च तदा राजाऽवभृथे श्राद्धमाचरत् ।
तेऽपि पीत्वा च भुक्त्वा च पितरः प्रेतसंज्ञकाः ॥९१॥
ब्रह्मपुत्रीजले स्नात्वा मुक्ता भूत्वा ययुर्दिवम् ।
कामाक्षी सुप्रसन्ना च सञ्जाता सर्वकामदा ॥९२॥
राजा तां प्रत्यहं राज्ञी चापि पुपूज मातरम् ।
देवालयान् समस्तांश्च कारयामास वै पुनः ॥९३॥
प्रतिष्ठां कारयामास मायापालः पुनस्तथा ।
जीविकां दापयामास योजयामास भूसुरान् ॥९४॥
अहिंसां ब्रह्मचर्यं चाऽस्तेयं ररक्ष भूपतिः ।
मांसमद्यादिसन्त्यागं चकार सर्वथा नृपः ॥९५॥
कथोत्सवान् सुबहुलान् कारयामास वै नृपः ।
अन्नसत्राणि रम्याणि विद्याशालाः सुशोभनाः ॥९६॥

साध्वाश्रमांश्च विपुलान् कारयामास शोभनान् ।
धर्मकृत्यानि दानानि सतीसाध्व्यादिसेवनम् ॥९७॥
अनाथदीनरक्षां च कारयामास भूपतिः ।
भजनार्थं मण्डलानि कलसयामास राष्ट्रके ॥९८॥
'बालकृष्ण हरिकृष्णाऽनादिकृष्णनरायण ।
राधालक्ष्मीपते मुक्तपते मोक्षपरायण' ॥९९॥
एवं धुन्यं प्रजाश्चक्रुर्मन्त्रजापं प्रचक्रिरे ।
कृपया परमेशस्य वैष्णवं राष्ट्रमेव तत् ॥१००॥
सञ्जातं भगवन्मार्गपरायणं समस्तकम् ।
मोक्षमार्गगतं सर्वे प्रजाः कालेन मोक्षणम् ॥१०१॥
प्रापुर्नृपोऽपि कालेन सनत्कुमारतारितः ।
विमानेन स्त्रिया साकं ययौ धामाऽक्षरं हरेः ॥१०२॥
एवं बद्रीप्रिये ! साधुः सर्वपापप्रणाशकः ।
सर्वपुण्यप्रदश्चाऽपि कृपालुः सेवितो यदि ॥१०३॥
मोक्षं दद्याद् दिवं दद्याद् व्यसनानि विनाशयेत् ।
कलिकालमहादोषान्नाशयेत् क्षणमात्रतः ॥१०४॥
निगडानि नाशयेच्च मायाबन्धं विमोचयेत् ।
प्रापयेत् परमात्मानं कृपापात्रं निजाश्रितम् ॥१०५॥
साधुर्वै साधनं तस्मात् कलौ मोक्षप्रदं महत् ।
दिव्यं पात्रं परेशस्य साधुः सर्वार्थसम्प्रदः ॥१०६॥
बद्रिके चातिपापानां नाशकः साधुसत्तमः ।
सेवनीयः कलौ लोकैः सर्वेच्छापूरको हरिः ॥१०७॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कामरूपभूपतेर्नाम्ना मायापालस्य सदेहयमलोके यातना-भोगः, सनत्कुमारसाधुना कृतस्तस्योद्धारश्चेत्यादि-निरूपणनामा षडधिकशततमोऽध्यायः ॥ १०६ ॥

श्रीबद्रीप्रियोवाच—

नरनारायण विष्णो कृष्ण केशव माधव ।
कलौ चार्धे गते धर्माः पाल्या लोकैस्तु कीदृशाः ? ॥ १ ॥
द्रव्यह्रासे गुणह्रासे बलह्रासोऽपि जायते ।
कालह्रासे धर्मह्रासः श्रद्धाह्रासोऽपि जायते ॥ २ ॥
प्रातिकूल्ये नेष्टसिद्धिस्ततो ह्रासाः समस्तकाः ।
प्रवर्तन्ते प्रजावर्गे नास्तिक्यप्रेरिता मुहुः ॥ ३ ॥
तदानीं शुद्धयः शौचं व्रतानि कीदृशानि वै ।
पूजादिकं कीदृशं च मखा वा कीदृशास्तदा ॥ ४ ॥
कलौ पालयितव्यान् मे सदाचारान् प्रकीर्तय ।
प्रायः केचन तिष्येऽपि पालयन्ति समास्तिकाः ॥ ५ ॥

श्रीनरनारायण उवाच—

बद्रिके निम्नवेगे वै तिष्ये निम्ना वृषा मताः ।
समासेन कथयामि शृणु सर्वान् तदास्थितान् ॥ ६ ॥
शीतोदकेन वै स्नानं कलौ नास्त्येव सर्वथा ।
उष्णोदकेन वै स्नानं क्वचित् क्वचित्तदा मतम् ॥ ७ ॥
भस्मस्नानं कलौ त्यागिवर्गे प्रायः कलौ युगे ।
करास्यक्षालनमात्रं प्रातःस्नानं कलौ युगे ॥ ८ ॥
मुखशुद्धिर्गण्डूषैश्च भस्मना कर्दमेन वा ।
क्वचित् काष्ठेन भवति धूम्रपानेन सर्वथा ॥ ९ ॥
तैलक्षेपः शिरःशुद्धिश्चूर्णेन मुखशुद्धिका ।
आचमनं कलौ मिष्टोदकपानात्मकं तदा ॥१०॥
देवपूजा जलेनैव कलौ वा जायते न वा ।
नैवेद्यं कल्पनामात्रं मानसं वै कलौ न वा ॥११॥
आरार्त्रिकं चैकवर्त्तिवह्निनाऽद्भिश्च वा न वा ।
नमस्कारो दण्डवत् स जयशब्दः स्तुतिर्न वा ॥१२॥
मखस्तु चुल्लिकावह्नौ तैलबिन्दूपसर्पणम् ।
नैवेद्यं श्रीफलं मासे मासे वा वत्सरेऽथवा ॥१३॥
वेषदानं तथा मासे वत्सरे वा सुरादिषु ।
सिन्दूरदानकं वर्षे वस्त्रदानादि वा नवा ॥१४॥
स्नापनं वा तथैवेति मासे वा वत्सरेऽथवा ।
एवं देवविधिस्तिष्ये ह्रासं गतो विजायते ॥१५॥
आतिथ्यं जलमात्रेण कलौ वाचा च केवलम् ।
वैश्वदेवो मुखे नैजे कवलस्य प्रदानकम् ॥१६॥
सायंपूजा तरूद्याने भ्रमणं नाटकेऽथवा ।
उत्सवः स्त्रीधनयोगः कलौ चास्ते गृहे गृहे ॥१७॥
केशप्रसाधनं स्त्रीणां सौभाग्यं चूर्णलेपनम् ।
रन्धितान्नं कणवद्वै न दुष्टं स वृषः कलौ ॥१८॥
अस्पृश्यं रन्धितान्नं न नाऽभक्ष्यं कस्यचिद् वृषः ।
सर्वविधं जलं पेयं पूतं जलं सदा वृषः ॥१९॥
पात्रेऽपि भ्रष्टता नास्त्युच्छिष्टं पात्रं सु पावनम् ।
उच्छिष्टजलधान्यां वै क्षिप्तं धौतं सदा शुचि ॥२०॥
वस्त्रेण मार्जितं पात्रं शुद्धं सर्वविधं तदा ।
ऊर्णावच्छुचि कार्पासाम्बरं सर्वत्र वै कलौ ॥२१॥
मलत्यागोत्तरं स्नानं कलौ नास्त्येव नास्ति हि ।
करशुद्धिर्जलेनैव वस्त्रेण गुह्यशुद्धिकाः ॥२२॥
पादप्रक्षालनं नास्ति कलौ भूशोधनं नहि ।
प्रायश्चित्तं कलौ नास्ति राजदण्डो हि शोधनम् ॥२३॥
वायुना शोधनं सूर्यकिरणैः शोधनं कलौ ।
मार्जनेन च वा शुद्धिर्लेपनं न कलौ तदा ॥२४॥

पशुपक्ष्यादिसंस्पर्शो भोज्येषु नास्ति दूषणम् ।
उच्छिष्टदूषणं नैव पर्युषितस्य नैव च ॥२५॥
पात्रौष्ठस्पर्शदोषो न कलौ तदा गृहे गृहे ।
सांकर्यं सम्प्रदायानां सधर्मो वै कलौ गृहे ॥२६॥
शवस्पर्शे सूतकं तु स्नानात् तिष्ये गतं भवेत् ।
राहुस्पर्शः सूतकं न कलौ प्रायस्तु सर्वथा ॥२७॥
मरणं सूतकं तावद् यावच्छोकस्मृतिः खलु ।
कलौ चैकादशाहादिश्राद्धभोज्यं गृहे गृहे ॥२८॥
एकाहादूर्ध्वमपि तद् भोजनं गृह्यते कलौ ।
जन्मनः सूतकं यावन्मातुः स्वास्थ्यं न शोभनम् ॥२९॥
मातुरेवापि तत्तत्र नान्येषां सूतकं कलौ ।
राजस्वल्यं सूतकं न कलौ स्त्रीणां मतं तदा ॥३०॥
रजोदर्शनमात्रं तु मूत्रवद् गण्यते कलौ ।
मैथुनस्याऽप्यशुद्धिर्न कलौ कल्मषशालिनोः ॥३१॥
मलत्यागे ह्यशुद्धिर्न गण्यते वमने यथा ।
मलवाहाः श्वपचाश्च शुद्धाः कलौ पुरे पुरे ॥३२॥
मृतमांसादनाश्चापि शुद्धा कलौ गृहे गृहे ।
यवनाः श्वपचाश्चर्मकारा भृत्या गृहे गृहे ॥३३॥
पाचकास्ते सूदकास्ते ब्रह्मक्षत्रालयादिषु ।
सूकरगर्दभश्वोष्ट्रस्पर्शदोषो कलौ नहि ॥३४॥
म्लेच्छानां मन्दिरे वासः पवित्रो वै कलौ तदा ।
व्यसनानां सुसम्मानं व्रतानां त्याग एव च ॥३५॥
सदान्नभोजनं धर्मः कलौ भवति शस्तिमान् ।
एकभुक्तं व्रतं तिष्ये गण्यते चोपवासवत् ॥३६॥
एकपत्नीव्रतस्तिष्ये गण्यते नैष्ठिकः स वै ।
गृहस्थधर्मवाँस्तिष्ये त्यागी प्रगण्यते तदा ॥३७॥
कामद्वेषभराचार्या गण्यन्ते मोक्षदाः कलौ ।
द्वेषमार्गप्रणेतारो गुरवो मोक्षदाः कलौ ॥३८॥
वैतण्डिकाः सुविद्वांसः पूज्यन्ते चेशवत् कलौ ।
आज्ञायां किंकरस्त्यागी गृहस्थस्य महागुरुः ॥३९॥
गृहस्थदास्यकर्मा च त्यागी कलौ प्रपूज्यते ।
गृहस्थः स्त्रीप्रदाता च त्यागिकृपापरः कलौ ॥४०॥
स एव भक्तराट् तिष्ये यौनसम्बन्ध उत्तमः ।
तिष्ये भिक्षान्नभोक्तारो गृहस्था धार्मिका इति ॥४१॥
साधुभ्यो भृत्यतां नैवा कारयन्ति गृहस्थिताः ।
निजसेवाकरः साधुः श्रेष्ठो गृहसुधर्मिणाम् ॥४२॥
कलौ तु गुरुशिष्याणां दारैक्यं धर्म उत्तमः ।
उदरार्थं तु नारीणां परभोग्यत्वमित्यपि ॥४३॥

कलौ कलौ जायते तु गृहे गृहे जने जने ।
मृत्तिकानां तु पात्राणां सदा शुद्धिः कलौ कलौ ॥४४॥
चर्मस्पर्शो दूषणं न पत्त्राणस्पर्श इत्यपि ।
मलस्पर्शो दूषणं न कलौ सर्वप्राजासु वै ॥४५॥
श्मशानवसतिर्दोषो शवधूम्रोऽपि दूषणम् ।
कलौ न गण्यते तिर्यक्शवस्पर्शोऽपि दूषणम् ॥४६॥
मूत्रस्पर्शो दूषणं न गण्यते तिष्यगैर्जनैः ।
नासिकामलसंस्पृष्टनक्तकश्च कलौ शुचिः ॥४७॥
धोत्रं शुद्धं कटिवस्त्रं शुद्धं कलौ च घर्घरी ।
कौपीनकं कलौ शुद्धं सुरवालः सदा शुचिः ॥४८॥
वामहस्तः कलौ शुद्धो नासा शुद्धा मलान्विता ।
कलौ कलावती नाली शुद्धा वारिप्रदा प्रपा ॥४९॥
चर्मकोशः कलौ शुद्धः कूपपात्रं घटी तथा ।
तैलकारस्य यन्त्रं वै शुद्धं शुद्धश्च तैलकृत् ॥५०॥
मदिराकृत् कलौ शुद्धः शुद्धं च रुधिरं कलौ ।
अस्थि शुद्धं कलौ सर्वं दन्तिदन्तनिभं तदा ॥५१॥
मज्जा शुद्धा तु मत्स्यानां सूकराणां घृतं शुचि ।
अण्डानि कुक्कुटादीनां शुद्धानि वै कलौ तदा ॥५२॥
जलपक्वं पिष्टकादि शुद्धं कलौ गृहे गृहे ।
नापितश्च क्षुरश्चापि शुद्धा वाटकिकाऽस्य च ॥५३॥
म्लेच्छस्य दुग्धदध्यादिपात्रं शुद्धं कलौ सदा ।
औषधं मांसमद्याढ्यं शुद्धं कलौ जने जने ॥५४॥
भोज्यपात्रे रोमपातो भोजनेऽपि कलौ शुचिः ।
समुद्रपारयात्रादि शुचि सौधे च तालकम् ॥५५॥
पलाण्डुलशुनाद्यं च शुचि तिष्ये गृहे गृहे ।
पत्रकः कर्गदश्चापि शुचिस्तिष्ये च कर्दमः ॥५६॥
गृहकोणे तथा भित्तौ ष्ठीवनं द्वारि गोपुरे ।
चुल्लीभस्मनि शय्यायाः पार्श्वे तत्पावनं कलौ ॥५७॥
सूर्योदयनादूर्ध्वं जाग्रतिस्तु स कलौ वृषः ।
रात्र्यर्धेऽपि व्यवसायो धर्मो भवति वै कलौ ॥५८॥
दिवारात्रं तु यन्त्राणां गतिः कृतिश्च चालनम् ।
आयोधनं मिथः क्षुद्रलाभार्थं स वृषः कलौ ॥५९॥
गृहाश्रमोऽपि वृद्धानां शस्यते तु वृषः कलौ ।
अन्यायविजयो धर्मः कलौ क्लेशकरो महान् ॥६०॥
यो मृषाऽऽन्दोलनकरस्तिष्ये धर्मगुरुर्हि सः ।
कलौ किञ्चित्प्रधीः प्राणी गुरुरेव स धर्मवित् ॥६१॥
अघाशनाश्च लुञ्चादाः कलौ वै धर्ममूर्तयः ।
ब्राह्मे मुहूर्ते निद्रायां केलिकर्मणि वा वृषः ॥६२॥

अदेवस्मरणं सायं गायत्रीवर्जनं दिवा ।
अजपश्चाप्यहोत्रश्च ग्राम्याध्ययनमित्यपि ॥६३॥
अपितृतर्पणं धर्माः नूतं भवन्ति सर्वशः ।
प्रतिमा पुत्तली स्पष्टा न भावस्तत्र वै कलौ ॥६४॥
नखकेशोत्कर्तनेऽपि नाऽशुद्धिर्हि कलौ मता ।
विष्टागृहोपशीलेऽपि नाऽशुद्धिस्तत्र गण्यते ॥६५॥
श्वशुरस्पर्शनं वध्वा दूषणं न कलौ तदा ।
परगोत्रस्वगोत्रादिसम्बन्धो भूषणं कलौ ॥६६॥
निम्नकन्याग्रहणं च प्रशंसाधर्म उत्तमः ।
यज्ञोपवीतकं कण्ठी देवचिन्हं सचन्द्रकम् ॥६७॥
तिलकं दूषणं भाले कलौ धर्मो विचन्द्रकः ।
पितरि जीवति पुत्रश्मश्रुमुण्डनमित्यपि ॥६८॥
धर्मः कलौ प्रशस्तो वै वन्हिं विना विवाहनम् ।
विप्रं विना च दातारं विना कन्यार्पणं वृषः ॥६९॥
आपणे तु महीमानभोजनं चोत्तमो वृषः ।
संस्काराऽकरणं धर्मो व्ययहीनो वृषः कलौ ॥७०॥
हत्यागृहाणि तिष्ये तु पुण्यस्थानानि वै तदा ।
धेनूनां तु कलौ तत्र शकट्यां योजनं वृषः ॥७१॥
बहूनामेकपत्नी च कलौ धर्मो मतस्तदा ।
प्रातस्तु वाचनं ग्राम्यपत्राणां च वृषस्तदा ॥७२॥
विधवाग्रहणं तिष्ये परोपकार उत्तमः ।
पापिनां स्वीकृतिस्तिष्ये धर्मः श्रेयस्करस्तदा ॥७३॥
अगालितानां पानं च रसानां च कलौ वृषः ।
अधवायाः पुत्रवत्त्वं सगर्भात्वं वृषः कलौ ॥७४॥
कुमार्या अपि बालस्य जननीत्वं वृषः कलौ ।
गणिकायाश्च पूज्यत्वं भाण्डस्यापि कलौ वृषः ॥७५॥
मौनिश्लोकमयी चेष्टा व्यवहारः कलौ बहुः ।
शाब्दमेतिह्यमेवापि प्रथमं निर्णये कलौ ॥७६॥
त्यागिनश्च कलौ सर्वे व्यापारिणो मठे मठे ।
बहुस्त्रीमण्डलाध्यक्षाः सन्न्यासकल्पिनः कलौ ॥७७॥
भृत्यद्वारा सुरपूजाक्षेपकास्त्यागिनः कलौ ।
गृहस्थाः पूजया हीना अपत्यार्चापरायणाः ॥७८॥
शासकानामुभयतोमुखवत्त्वं वृषः कलौ ।
धर्मलक्ष्मीप्रभोक्तृत्वं कलौ धर्मो गृहस्थितेः ॥७९॥
कलौ धर्मदासंस्थाया भक्षणं मानवो वृषः ।
दानं स्वल्पं बहुलं चाऽऽदानं धर्मो हि देहिनाम् ॥८०॥
उत्सवेषु कृपणता कन्याधनस्य भक्षणम् ।
प्रजाशोषणं बहुलं कलौ धर्मोऽभितस्तदा ॥८१॥
अन्याययुद्धकरणं सेवा च कर्मचारिता ।
स्वल्पाऽऽशाबहुला लब्धेर्धर्मः कलौ तदाऽभितः ॥८२॥
मर्यादानां विलोपश्च राजसी मानसी स्थितिः ।
पदे पदेऽनृतता च कलौ वृषोऽभितस्तदा ॥८३॥
सर्वजातीयलोकानां सर्वकार्यप्रकारिता ।
सर्ववेषाद्यभिधृतिर्धर्मः कलौ समानता ॥८४॥
औरसाः क्षेत्रजा दासीपुत्राः कलौ समाः सदा ।
दायभागे समास्ते च पुत्र्यश्चापि समास्तथा ॥८५॥
धिष्ण्याधिकारवान् यः स समुदायप्रतिष्ठितः ।
शिष्यः पुत्रश्च मित्रं वा कलौ संघकृतो महान् ॥८६॥
विप्रत्वं तनुमात्रं वै तिष्यान्ते तन्तुनाशनम् ।
क्षत्रत्वं बलवत्त्वं वै तिष्यान्ते बलनाशनम् ॥८७॥
वैश्यत्वं धनवत्त्वं वै तिष्यान्ते धननाशनम् ।
शूद्रत्वं भृत्यता तिष्ये तिष्यान्ते भृत्यतालयः ॥८८॥
एकाकारं समस्तं वै समधर्माः कलौ जनाः ।
बद्रिके तत्र पापं न कलेर्बलाजनेषु वै ॥८९॥
स्वल्पं दानं साधवेऽपि स्वर्गमोक्षप्रदं तदा ।
हरेः कीर्तनमात्रं वै कलौ मोक्षस्य साधनम् ॥९०॥
मालिकया जपः कृष्णनारायणेति मोक्षदः ।
जपः पापौषधं तिष्ये नाशकं चाघहारकम् ॥९१॥
कल्मषाणां क्षालनं सेवनं सतां गुरोर्हरेः ।
आन्तरे स्मरणं विष्णोः शोधकं पावनं परम् ॥९२॥
भावशुद्धिर्महाशुद्धिस्तिष्ये शुद्धस्तु नेतरा ।
बाह्यशुद्धिः कलौ काचित् सत्त्वशुद्धिस्तु वै क्वचित् ॥९३॥
कर्मशुद्धिः कलौ नास्ति पुण्यशुद्धिर्न सर्वथा ।
जपशुद्धिः कलौ तत्र शस्यते धार्मिकी हि सा ॥९४॥
सर्वार्पणं हरौ कृष्णे गुरौ सनातने प्रभौ ।
कलौ धर्मः प्रशस्तो वै मोक्षदस्तत्र चान्तिमः ॥९५॥
औदासीन्यं परकृत्ये स्वकृत्ये शान्तवृत्तिता ।
कृत्यार्पणं हरौ कृष्णे कलौ मोक्षस्य साधनम् ॥९६॥
सर्वेषां देहिनां तिष्ये षट्कं वै मोक्षसाधनम् ।
सेवनं चार्पणं भक्तिर्ध्यानं दानं च कीर्तनम् ॥९७॥
कृष्णस्य सद्गुरोः सेवा महाशीर्वाददायिनी ।
पावनी स्नेहकर्त्री च परधामप्रदायिनी ॥९८॥
श्रीहरौ वा गुरौ सर्वार्पणं निष्कर्मरूपि तत् ।
नैष्कर्म्यं भोगवर्ज्यं तच्छुद्धिदं मोक्षदं तदा ॥९९॥
भक्तिः स्नेहेन दास्यं वै यथाज्ञावर्तनं सदा ।
हरौ गुरौ हि कैंकर्यं स्नेहकृन्मोक्षदं तदा ॥१००॥

ध्यानं मूर्तेर्धारणं श्रीहरेस्तु हृदये सदा ।
गुरोर्ध्यानं च हृदये तन्मयत्वप्रदायकम् ॥१०१॥
तदात्मकता मोक्षो वै नारायणस्वरूपवान् ।
नारायणसमा या तु स्थितिः सा ध्यानसत्फला ॥१०२॥
विशिष्यते ततो ध्यानं दिव्यवृषः कलौ सदा ।
ध्यानं मोक्षप्रदं तस्मान्नारायणांगवासदम् ॥१०३॥
दानं नारायणे साधौ दीने विप्रे गुरौ द्विजे ।
सत्यां साध्व्यां च विद्यायां परोपकरणादिषु ॥१०४॥
सर्वान्तर्यामिरूपे वै कृष्णे दानं प्रमोक्षदम् ।
अक्षय्यफलकं दानं स्वल्पं तच्छाश्वतं हरौ ॥१०५॥
दानं सकामनादत्तं स्वर्गदं सम्पदाम्प्रदम् ।
कृष्णबुद्ध्याऽर्पितं सर्वं निर्गुणं मोक्षदं कलौ ॥१०६॥
कीर्तनं सततं विष्णोर्नाम्नां कृष्ण हरे प्रभो ।
नारायण महाविष्णो पुरुषोत्तम सद्विभो ॥१०७॥
स्वाम्यनादिकृष्णनारायणश्रीकृष्णमाधव ।
प्रभोकृष्ण पाशवतीकृष्ण लक्ष्मीश वल्लभ ॥१०८॥
भजनं मोक्षदं तिष्ये पापहं च प्रमोददम् ।
बद्रिके ते समासाद्वै मयोक्तं तिष्यवर्तनम् ॥१०९॥
न विस्तारो हि धर्माणां ह्रासशीले कलौ तदा ।
कल्पिताश्चानुकूलाश्च धर्मास्तत्र कलौ कृताः ॥११०॥
स्वल्पधर्मोऽपि तिष्ये वै त्रायते महतो भयात् ।
पठनाच्छ्रवणादस्य तिष्यस्थो निर्भयो भवेत् ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने कलिधर्माणां संक्षेपतो वर्णनं सेवार्पणभक्तिध्यान-दानकीर्तनेतिषट्काऽन्यतमं मोक्षसाधन-मित्यादिनिरूपणनामा सप्ताधिकशत-तमोऽध्यायः ॥ १०७ ॥

**श्रीबद्रीप्रियोवाच—**

नरनारायण कृष्णनारायण जगत्प्रभो ।
कलेरन्ते पुनर्धर्माः सत्या भवन्ति वा न वा ॥ १ ॥
अन्तिमस्य कलेरन्ते कल्पान्ते कीदृशी स्थितिः ।
पुनः किं जायते शून्यं यद्वा मूर्तं नवं परम् ॥ २ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि कलेरन्ते हरीच्छया ।
संभवामि तु सत्यानां धर्माणां स्थापनाय वै ॥ ३ ॥
तदा त्वं चाऽसिरूपा वै श्वेतस्वरूपधारिणी ।
देवैरभिष्टता दिव्या जलभूव्योमचारिणी ॥ ४ ॥
जायसे तीक्ष्णधाराऽसि नरोऽयं चाऽश्वरूपवान् ।
श्वेतरूपो भूमिवारिखादिवन्हिप्रचारवान् ॥ ५ ॥
भूत्वा देवैरभिवन्द्यो यत्पार्श्वे सम्प्रतिष्ठति ।
तदाऽहं तं मत्स्वरूपं श्वेताश्वं नररूपिणम् ॥ ६ ॥
आरुह्य धर्मपुत्रोऽहं विष्णुनामिद्विजात्मजः ।
त्वां तदा दिव्यशक्त्याढ्यामसिरूपां सुशोभनाम् ॥ ७ ॥
संगृह्य भूतले बद्रि ! विचरामि जले स्थले ।
कलिकल्मषपापानां नाशो मद्वायुना तदा ॥ ८ ॥
पापिनां कल्कदेहानां विनाशश्च ममाऽसिना ।
मानसानामनिष्टानां मद्ध्यानैः परिवर्तनम् ॥ ९ ॥
मानवानां सात्त्विकानां तदायुष्यविवर्धनम् ।
धर्मे स्थिरस्वभावानां निसर्गतः प्रसज्जनम् ॥१०॥
कृतधर्माभिपन्नानां महर्षीणां प्रकाशनम् ।
गुरूणां देवकोटीनां तदा मम सहायनम् ॥११॥
नारीणां कन्यकानां च सतीनां च विवर्धनम् ।
शीलव्रतपराणां च तापसानां तदोदयः ॥१२॥
कर्मठानां सतां लोके प्रायशश्च सुमेलनम् ।
सन्न्यासानां दिव्यदृष्टिर्बालानां बहुवेदिनाम् ॥१३॥
दिव्याचार्यगुरूणां च प्रभावो जन्मयोगिनाम् ।
नैर्मल्यं भूविकाराणां मत्प्रभावकृतं तदा ॥१४॥
स्फुरणं पूर्वधर्माणां कर्मणां मोक्षदायिनाम् ।
सत्कर्मणां दर्शनं च प्रवृत्तिर्मखधर्मिणाम् ॥१५॥
देवानां च तदा पृथ्व्यामागमनं ममाऽन्तिके ।
धर्मसृष्टेः प्रचारश्च जने जने तदाऽस्ति वै ॥१६॥
पृथिवी मत्पादयोगा पवित्रा पावनी शुभा ।
जलानि मम योगेन दिव्यानि साधकान्यपि ॥१७॥
मत्प्रसंगेन तीर्थानि भवन्ति शक्तिमन्त्यपि ।
चैत्यानां चेतनत्वं च तदा समुपजायते ॥१८॥
मानसानां बलवत्त्वं सफला कल्पना तदा ।
सुखदुःखसहिष्णुत्वं शरीरिणां च पुष्टता ॥१९॥
दीर्घायुष्ट्वं च बालानां सतीत्वं कन्यकादिषु ।
संहारश्चापि दुष्टानां म्लेच्छानां योषितामपि ॥२०॥
कल्कसम्पन्नदेहानामस्तित्वं तत्र नास्ति वै ।
तथा चरामि खड्गेन बहुवेगेन खे भुवि ॥२१॥
वर्षमात्रेण लोकानां करोमि युगपर्ययम् ।
मद्भक्ताः कृतयोग्या ये ते तिष्ठन्ति न चेतरे ॥२२॥
वेनवश्चौषधयश्च वनान्युद्यानवाटिकाः ।
सरसा दुग्धपूर्णाश्च दीर्घजीवा भवन्ति ते ॥२३॥

मद्भयाच्चौरलोकानां विलयश्च क्षितेस्तलात् ।
विनाशो मम सैन्यैश्च दिव्यस्वरूपधारिभिः ॥२४॥
त्वत्संकल्पात्तदा श्वेता अश्वाश्च दिव्यविग्रहाः ।
लक्षशस्तव पुत्रास्ते सैन्यवाहा भवन्ति हि ॥२५॥
मत्संकल्पाज्जायमाना देवाः सैन्यात्मकास्तदा ।
नाशयन्ति परितस्ते म्लेच्छदुष्टाधिराक्षसान् ॥२६॥
अधर्मिदानवदैत्यान् विधर्मिमानवान् मुहुः ।
निर्मलं भूतलं सर्वं सर्वपापाऽस्पृष्टं शुभम् ॥२७॥
जायते तु तदा वह्नि कलेरन्ते ममाश्रयात् ।
धर्मास्तदाऽहं बहुधा सत्यरूपान् वदामि ह ॥२८॥
प्रजाः सर्वा मम भक्ता अहिंसासत्यवृत्तिकाः ।
शीलव्रतपराश्चापि मनोबलसमन्विताः ॥२९॥
उदयन्ति कृतकृत्याः शान्तिधर्मपरायणाः ।
विरलाः स्वल्पसाहस्रा योजने त्वेकमानवाः ॥३०॥
अन्ये विनाशमायान्ति मम कालाऽसिना तु ते ।
मम पृथ्व्यां भ्रमणेन देवानां मण्डलान्यपि ॥३१॥
विचरन्ति क्षितौ तत्र महर्षयोऽप्यगोचराः ।
तीर्थानि धर्मदेवश्च धर्मपुत्राश्च शक्तयः ॥३२॥
मत्प्रतापेन चाकृष्टा महानन्दा भ्रमन्ति ते ।
पूर्वत्यक्तप्रदेशेष्वालयेषु चैत्यभूमिषु ॥३३॥
आचरन्ति निवासं स्वं यथापूर्वं कृताय ते ।
मम संकल्पयोगेन कालपर्ययतस्तथा ॥३४॥
भाविपुण्यबलेनापि प्रजानां सत्यपर्ययः ।
स्थले स्थले वर्तमानः प्रकाशते कृतात्मकः ॥३५॥
शान्तिर्लोके प्रवृद्धा च वर्तते देहिनां तदा ।
यदा चन्द्रश्च सूर्यश्च तथा पुष्यबृहस्पती ॥३६॥
एकराशौ सम्मिलन्ति तदा कृतयुगं मतम् ।
एवं योगे तु सञ्जाते सर्वं कृताऽर्हणं तदा ॥३७॥
ब्रह्मसत्राणि जायन्ते विष्णुयागाः स्थले स्थले ।
प्रायश्चित्तानि जायन्ते तीर्थयात्राश्च देहिनाम् ॥३८॥
उत्सवा मे प्रजायन्ते राष्ट्रे राष्ट्रे गृहे गृहे ।
वह्रिके सत्त्वनैर्मल्यं सत्त्वप्रकर्षता तथा ॥३९॥
साधुवत् सर्ववर्णानां नैर्मल्यं काशते तदा ।
मेघानां वर्षणं शश्वत् रसानामुदयो बहुः ॥४०॥
दुग्धानां च मधूनां च प्रवाहा बहवस्तदा ।
सम्पदां चाभिवृद्धिः पुनः पुनः स्वतोऽधिका ॥४१॥
प्रवर्तते कृते तत्र देहिनां दिव्यदर्शिता ।
सुराणां च क्षितौ साक्षादागमनं प्रजायते ॥४२॥
मानवानां दिवं प्रत्यप्यस्ति गतिस्तदा कृते ।
सतीत्वं योषितां चापि तापसानां तपस्विता ॥४३॥
शान्तत्वमिन्द्रियाणां च दावाग्नीनां शमस्तदा ।
उत्पातानां प्रशान्तिश्चोद्वेगानां शमनं तदा ॥४४॥
ब्रह्मभक्तिप्रधाना वै शिष्टाः प्रजाजनास्तदा ।
वेदाः स्वयं हृदयेषु स्फुरन्ति देहिनां तदा ॥४५॥
वर्णाश्रमव्यवस्था च शौचाचारप्रतिस्थितिः ।
आस्तिक्यं सत्यवृत्तिश्च प्रजायन्ते कृते पुनः ॥४६॥
ब्राह्ममुहूर्ते स्तवनं ध्यानं स्नानं प्रपूजनम् ।
देवाराधनमेवाऽपि पितृतर्पणपूजनम् ॥४७॥
वृद्धाभिवादनं चात्मचिन्तनं दैवयोगिता ।
पञ्चयज्ञविधानं च सत्ये स्वभावतः पुनः ॥४८॥
प्रवर्तन्ते प्रजास्वेव नैसर्गिकविचारतः ।
धर्मसजीवनं पादचतुष्टयेन वै कृते ॥४९॥
प्रतिष्ठाकर्म देवानां चमत्काराश्च मानसाः ।
दर्शनं चापि देवानां स्वप्ने प्राग् जायते कृते ॥५०॥
ततः शनैः शनैर्विप्रसाधुरूपेण दर्शनम् ।
ततश्चागमनं साक्षात् कृते पृथ्व्यां तु नाकिनाम् ॥५१॥
उद्भवाश्च महर्षीणां सतां कृते ससिद्धिकाः ।
चमत्कारयुता बालाः प्रजायन्ते च बालिकाः ॥५२॥
वाक्सिद्धयः प्रवर्तन्ते कर्माणि सफलान्यपि ।
सस्यानां स्मृद्धयश्चापि प्रद्योतन्ते कणान्विताः ॥५३॥
देवानां भक्तिरिष्टा च प्रजाजने प्रवर्तते ।
रागद्वेषादिदोषाणां ह्रासो भवेत् कृतागमे ॥५४॥
वह्नयः सम्प्रकाशन्ते निर्मलाः सुखदाः शिवाः ।
अरोगा वायवश्चापि सुखस्पर्शाः प्रशान्तिदाः ॥५५॥
भूतानि पक्षिणश्चापि यादांसि पशवस्तथा ।
सत्त्वविशेषकाः सत्ये प्रजायन्ते युगानुगाः ॥५६॥
मानवानां शरीराणि सत्यबलान्महान्ति च ।
पशवः पक्षिणो वृक्षा उच्चदेहा भवन्ति च ॥५७॥
बलं शतगुणं पश्चात् सहस्रगुणितं कृते ।
वीर्यं ज्ञानं वीरता च सहस्रगुणिताः कृते ॥५८॥
अन्नेषु शक्तयश्चापि सहस्रगुणिताः कृते ।
अस्थिजीवा असवश्च कृते पुनर्भवन्ति च ॥५९॥
विमानानि मन्दिराणि नगराणि नवानि च ।
प्रजायन्ते कालवृद्धिभवानि सत्यवर्तने ॥६०॥
प्रजानां हृदयो दिव्याः सतीनां सत्यदिव्यता ।
साधूनां दिव्यवाचश्च प्रजायन्ते कृते पुनः ॥६१॥

समुद्रगर्भे गतयश्चाकाशे गतयस्तदा ।
भूविवर्ते गतयश्च जायन्ते देहिनां कृते ॥६२॥
म्लेच्छानां विलये बद्रि राज्ञां रक्षणकारिणाम् ।
स्थापनं वै मया तत्र क्रियते द्विजजातिषु ॥६३॥
एवं धर्मस्य सत्ये वै चतुष्पात्त्वं प्रवर्तते ।
सत्यं तपो मखो दानं प्रवर्तन्ते स्थले स्थले ॥६४॥
सत्यान्ते च पुनस्त्रेताधर्मा भवन्ति शोभनाः ।
ततो द्वापरधर्माश्च ततस्तिष्यस्य वै पुनः ॥६५॥
एवं युगानां सततं चावर्तते तु चक्रकम् ।
सहस्रयुगपर्यन्तं ततः कल्पाऽवसानकम् ॥६६॥
जायते बद्रिके सार्धं कलेरन्ते शतं समाः ।
अनावृष्टिर्हि महती सर्वसत्त्वविनाशिनी ॥६७॥
ततः सूर्यास्तापयन्ति पृथ्वीं ते भर्जयन्ति वै ।
रूक्षांगारसमा पृथ्वी जायते सूर्यतापतः ॥६८॥
वह्निमयं समस्तं वै भूतलं जायते ततः ।
वह्निबाष्पोद्भवा मेघाः प्रवर्षन्ति शतं समाः ॥६९॥
स्वर्गान्तं जलपूर्णं वै ब्रह्माण्डार्धे प्रजायते ।
दशलोका निमज्जन्ति भस्मरूपा जलान्तरे ॥७०॥
कर्दमास्ते भवन्त्येव कल्पान्ते निम्नगा यदा ।
पाताले कर्दमाः सर्वे विश्रमन्ति जलप्लुताः ॥७१॥
मत्स्यस्वरूपो भगवानहं बीजानि सर्वथा ।
रक्षामि च पुनः सृष्टिहेतवे जलमध्यगः ॥७२॥
कल्किस्तु भगवान् सार्धं साऽश्वः साऽसिः ससैन्यकः ।
सूक्ष्मरूपः स्वयं भूत्वा तिरो महः प्रयामि वै ॥७३॥
रात्रौ मत्स्यस्वरूपोऽहं रात्र्यन्ते तु भुवः कृते ।
कृतयत्नो भवाम्येव वाराहरूपवान् भवान् ॥७४॥
मत्स्योऽहं तु विचरामि सलिले प्रातरेव ह ।
वाराहोऽहं तले गत्वा कार्दमं गोलकं महत् ॥७५॥
कृत्वा नयामि तं गोलं जलपृष्ठे प्रभाववान् ।
ततोऽहं वाडवो वह्निर्भवामि वडवामुखः ॥७६॥
शोषयामि जलाधिक्यं चाऽष्टलोकसुखार्थकम् ।
यथापेक्षं च रक्षामि शुष्कयामि क्षितिं ततः ॥७७॥
श्वासैर्मुहुर्मुहुः सप्तपातालान् रचयामि च ।
तत्र सर्वत्र बीजानि क्षिप्त्वा प्रजाः सृजामि च ॥७८॥
मत्स्योऽहं तु ततस्तिरो भवामि जलसञ्चरः ।
पृथ्वीं स्थिरां चाऽष्टपटां कृत्वा तिरोभवामि हि ॥७९॥
हयग्रीवस्ततो भूत्वा प्रजाभ्यो वेदसंभवम् ।
ज्ञानं ददामि सर्वाभ्यस्तूर्णं कृताद्यसञ्चरे ॥८०॥

ततोऽनादिकृष्णनारायणश्रीवल्लभः प्रभुः ।
पृथ्व्यामादौ कृते स्वेच्छारूपधृक् संभवामि वा ॥८१॥
दिवि वाऽन्यस्तटे तत्र करोमि वर्णरक्षणम् ।
उपासनां प्रवर्त्यैव स्थित्वा सपादलक्षकम् ॥८२॥
वर्णानां भूतले सर्वधर्मस्थितिं करोम्यपि ।
मोक्षमार्गे हरिस्तत्र प्रवर्तयामि सर्वतः ॥८३॥
क्षीरोदं च ततो लक्ष्मीनारायणो भवन् प्रभुः ।
आविर्भवामि लक्ष्मीशस्तत्र स्वपिमि वै पुनः ॥८४॥
बद्रिके च ततः कालान्तरे सम्परक्षयोत्तरम् ।
समुद्रमथनं सर्वरक्षार्थे कारयाम्यहम् ॥८५॥
कच्छपं तु तदा रूपं धारयामि गिरेः स्थितेः ।
मोहिनीस्त्री दैत्यमोहकरी भवामि सुन्दरी ॥८६॥
अमृतं देवताः सर्वाः पाययामि तदाप्यहम् ।
तिरोभूत्वा पुनः सिंहरूपं धरामि हेतवे ॥८७॥
हयशीर्षो भवाम्येव क्वचिद् दैत्यक्षयाय वै ।
ज्ञानदानाय हंसात्मा भवामि कपिलोऽपि च ॥८८॥
यज्ञभिक्षुर्वामनश्च भवाम्यासुरलोपकृत् ।
हरिश्चाऽहं भक्तकृते भवामि दुःखहारकः ॥८९॥
नरो नारायणः कृष्णो हरिर्भवामि धर्मतः ।
पृथ्वीपतिर्दोहनाय भवामि चक्रवर्तनः ॥९०॥
तापसः साधुधर्मा च दत्तदानो भवाम्यपि ।
बोधदश्च तथा योगी भवामि वनगोचरः ॥९१॥
पर्शुधृक् क्षत्रदण्डात्मा भवाम्यपि क्वचित्ततः ।
चक्रधृग्धर्मधारी च भवामि गोप इत्यपि ॥९२॥
यज्ञश्चाऽहं तथा स्वामी कृष्णनारायणोऽपि च ।
भवामि कृषिकर्ताऽपि राजराजो भवामि च ॥९३॥
विप्रश्च क्षत्रियो वैश्यः किंकरोऽपि भवामि च ।
यथाकालं तथाऽऽचार्यो भवामि व्यास इत्यपि ॥९४॥
गुर्वी प्रमदा वाऽथ गोरूपः सुसती ह्यपि ।
पत्नीव्रताख्यविप्रोऽहं भवाम्यप्यत्र भूतले ॥९५॥
जिष्णुर्भवामि वै स्वर्गे पाताले हाटकेश्वरः ।
शेषेश्वरः सागरे च मेरौ विष्णुश्चतुर्भुजः ॥९६॥
देवो वा मानवो वापि गान्धर्वः संभवामि च ।
चारणो वा च विद्याध्रो दक्षो वापि भवामि च ॥९७॥
वनी वा न्यासयोगी वा यतिर्वा ब्रह्मशीलकः ।
भवामि भूतले बद्रि बहुरूपधरः प्रभुः ॥९८॥
यथापेक्षो यथाकालो यथारूपो भवामि च ।
रक्षार्थे मम सद्दीनां मोक्षार्थे तु विशेषतः ॥९९॥

आराधनावशीभूतः क्वचिद्भवामि तादृशः ।
क्वचित्पुत्रोऽर्थितश्चापि भवामि सुखदात्मकः ॥१००॥
ब्रह्मा विष्णुर्महेशश्च रूपत्रयं सदा मम ।
आभूतसम्प्लवं चास्ते प्रवाहहेतवे सदा ॥१०१॥
एवं ते कथितं बद्रि प्राविर्भावप्रयोजनम् ।
प्रयोजनं प्रसाध्यैवाऽऽनन्दयित्वा निजाश्रितान् ॥१०२॥
तिरोभवामि सहसा वारं वारं हि लीलया ।
नाऽन्तोऽस्मि मे विभूतेश्च न संख्या जन्मनां मम ॥१०३॥
न कर्मणां न रूपाणां चरित्राणां न चाऽवधिः ।
श्रेयसां जनकश्चाऽहं प्रजाश्रेयः करोमि तु ॥१०४॥
दुष्टानां दण्डनं भक्तजनानां रक्षणं तथा ।
धर्मस्य स्थापनं भक्तेः प्रवर्तनं क्रिया मम ॥१०५॥
स्तुतो देवैर्विशिष्टोऽहं भवाम्यतर्कितो मुहुः ।
भक्तस्तुतो भवाम्येव भक्तमात्रस्य गोचरः ॥१०६॥
सुराष्ट्रे धर्मराष्ट्रे वै निवसामि विशेषतः ।
लीलया देवकार्याणि कृत्वा तिरोभवामि च ॥१०७॥
मत्प्रसंगगता लोका नरा नार्यश्च वै तदा ।
प्रजायन्ते दिव्यरूपा मोक्षगाश्च ततः परम् ॥१०८॥
इत्येवं मे रहस्यं ते कथितं बद्रिके परम् ।
येन केनापि रूपेण त्वं चास्से हि मयाऽन्विता ॥१०९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने तिष्यान्ते भगवदपेक्षा कल्परात्रौ कल्पप्रातर्दिवाऽपि च भगवत्प्राविर्भावादिकथननामाऽष्टाऽधिकशततमोऽध्यायः ॥ १०८ ॥

श्रीबद्रीप्रियोवाच—

यदा यदा भवान् पृथ्व्यां स्वर्गे सत्ये तलादिषु ।
वर्तते च तदा तत्र भवाम्यहं न संशयः ॥ १ ॥
क्वचिन्मूर्तौ क्वचिच्चिन्हे क्वचित् पार्श्वे क्वचिद्धृदि ।
क्वचित्त्वाज्ञाकरी यत्र क्वापि वर्ते पृथक् स्थिता ॥ २ ॥
तत्र सर्वत्र भगवन् तवाऽऽश्रयेण मच्छ्रिताः ।
मुक्तिं प्रयान्ति परमां निष्कामाः साधुसंश्रयाः ॥ ३ ॥
सकामास्तु मम भक्ताः स्वर्गं राज्यं प्रयान्ति वा ।
तद्राज्यं भुज्यते भक्तनृपैः स्वर्गे तु सत्सुरैः ॥ ४ ॥
पार्थिवं यन्महद्राज्यं पुरा कृतयुगे तदा ।
अनादिश्रीकृष्णनारायणेन परमात्मना ॥ ५ ॥
कस्मै दत्तं भूमिभृते कश्च राजा ततः परम् ।
हैमखण्डमहाराज्यं कस्मै स प्रददौ पुरा ॥ ६ ॥
ततः परं च किं कृष्णः कृतवान् वंशविस्तृतः ।
कियान् कालो हि कृष्णस्य पृथ्व्यां यातस्ततः परम् ॥ ७ ॥
इत्येतत् सर्वमेवाऽत्र कृपया वक्तुमर्हसि ।
अनादिश्रीकृष्णनारायणलीला मनोहराः ॥ ८ ॥
श्रोतुमिच्छामि तत्पश्चाज्जाता या याः स्मृता अपि ।
मोक्षदात्र्यो भवन्त्येव परमानन्दशान्तिदाः ॥ ९ ॥
यासां यस्य स्मृतेश्चापि तापा यान्ति लयं द्रुतम् ।
तत्कथाः श्रावयोदारा नरनारायणप्रभो ॥१०॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि कृष्णनारायणप्रभुः ।
ब्रह्माण्डानां साधकं च सृष्ट्वा वैराजपूरुषम् ॥११॥
तद्द्वारा च समुत्पाद्य विश्वसृजो विधीन् बहून् ।
चतुर्वक्त्रे पद्मजाय दत्वोत्पत्तिविधानकम् ॥१२॥
महाराज्यं महाण्डस्य चतुर्दशस्तरात्मनः ।
तद्द्वारा जनयामास स्वायम्भुवं मनुं नृपम् ॥१३॥
आग्नीध्राद्याश्च तनयाः स्वायंभुवमनोः सुताः ।
मानसास्ते महावीर्या द्वीपराज्यानि चक्रिरे ॥१४॥
आग्नीध्रश्चाजनाभाय ददौ खण्डं हिमालयम् ।
आजनाभं महावर्षं दशसाहस्रयोजनम् ॥१५॥
अजनाभे भूपतौ तु वैराग्यवेगमास्थिते ।
वनं याते तु तपसे पृथिवीगर्वमास्थिता ॥१६॥
सस्यानां सम्पदो रसभेदान् रसानचोरयत् ।
तदा तु पृथवे पृथ्वीराज्यं ददौ हरिः स्वयम् ॥१७॥
पृथुर्दुदोह पृथिवीं ददौ दुग्धानि सर्वशः ।
प्रजाभ्यः प्रययौ पश्चात्तपसेऽथ ततः परम् ॥१८॥
खण्डराज्यानि भक्तेभ्यो नृपेभ्यः प्रददौ प्रभुः ।
दिव्यराज्यानि देवेभ्यः प्रददौ पुरुषोत्तमः ॥१९॥
चन्द्राय तु ददौ राज्यमोषधीनां च शाखिनाम् ।
यज्ञव्रतानां तपसां नक्षत्राणां द्विजन्मनाम् ॥२०॥
वरुणाय ददौ राज्यमपां च यादसां तथा ।
कुबेराय ददौ राज्यं धनकोशादिसम्पदाम् ॥२१॥
रवीणां च ददौ राज्यं विष्णवे द्वादशात्मने ।
वसूनां च ददौ राज्यमग्नये धातुयोगिने ॥२२॥
प्रजापतीनां राज्यं च दक्षाय प्रददौ प्रभुः ।
शक्राय मरुतां राज्यं ददौ वै द्युनिवासिनम् ॥२३॥
दैत्यदानवकोटीनां प्रह्लादाय ददौ तु तत् ।
पितॄणां प्रददौ राज्यं यमाय याम्यवासिनाम् ॥२४॥

पिशाचरक्षसां भूतवेतालानां शिवाय च ।
गिरीणां प्रददौ राज्यं हिमालयाय वै तदा ॥२५॥
नदीनां च नदादीनां राज्यं तदाऽब्धये ददौ ।
गन्धर्वाणां किन्नराणां विद्याध्राणां तदा ददौ ॥२६॥
राज्यं चित्ररथायाऽपि किंपुंसामपि शोभनम् ।
नागराज्यं वासुकये ददौ तामसयामकम् ॥२७॥
सर्पाणां च महाराज्यं तक्षकाय ददौ तदा ।
करिणां दिग्गजेन्द्राणां राज्यमैरावताय वै ॥२८॥
पतत्रिणां सुपर्णायोच्चैःश्रवसे तु वाजिनाम् ।
मृगाधिपत्यं सिंहाय वृषभाय गवां तथा ॥२९॥
वनस्पतीनां तु कल्पद्रुमाय च ददौ तदा ।
सुधर्मणे पूर्वदिशां शंखपदाय दक्षिणाम् ॥३०॥
केतुमते प्रतीचीं चोत्तरां हिरण्यरोमिणे ।
एवं राज्यानि भगवान् ब्रह्मद्वारा ह्यदापयत् ॥३१॥
आजनाभेऽत्र खण्डे तु हिमालयाऽऽख्यपर्वते ।
पृथौ गते तु तपसे विश्वगस्तस्य चात्मजः ॥३२॥
राज्यं चक्रेऽथ यमुनां नन्दिभिल्लो ह्यरोधयत् ।
दिलावरीं च नगरीं स्त्रीनाम्नाऽस्थापयन्नवाम् ॥३३॥
यमुनायास्तटे रम्ये महादुर्गसमन्विताम् ।
दिल्लावरीमहाराज्यं कृष्णनारायणप्रभुः ॥३४॥
नागविक्रमभूपाय ददौ हत्वा तु भिल्लकम् ।
नन्दिभिल्ले हते नागविक्रमः प्रशशास तत् ॥३५॥
अनादिश्रीकृष्णनारायणोपास्तिबलान्वितः ।
तपस्तप्त्वोपासनया प्राप प्रालेयकं धनुः ॥३६॥
अनादिश्रीकृष्णनारायणाच्छ्रीपरमात्मनः ।
धनुषा तेन दिव्येन विमानेन विहायसा ॥३७॥
पृथ्वीं जेतुं प्रचचार नारायण इवाऽपरः ।
भूपालास्तेन परितो धनुषा करदीकृताः ॥३८॥
वैष्णवं भूतलं सर्वं चक्रे स नागविक्रमः ।
दक्षपश्चसमुद्रान्तं दशसाहस्रयोजनम् ॥३९॥
आजनाभं महाराज्यं प्राप वै नागविक्रमः ।
दिल्लावरी राजधानी रक्षिता तेन सर्वदा ॥४०॥
नागपुरीति सैवाऽपि कृता तेन स्वबोधिनी ।
नागविक्रमभूपस्य भार्याऽऽसीद्धस्तिमालिनी ॥४१॥
पतिव्रता महाभागा वैष्णवी सात्त्वती सती ।
तस्या नाम्ना कृता पार्श्वे नगरी हास्तिनीपुरी ॥४२॥
प्राप्तवैराग्यवेगाढ्यो राजा तु नागविक्रमः ।
युक्तः स हस्तिमालिना तीर्थार्थे निर्ययौ गृहात् ॥४३॥
यमुनां सरयूं गंगां गोगरां गण्डकीं ततः ।
स्नात्वा कांचनगंगां च ब्रह्मपुरीं ततः परम् ॥४४॥
कापिलं सागरं स्नात्वा पुरुषोत्तममन्दिरम् ।
ययौ महानदीं गोदावरीं कृष्णां च दक्षिणाम् ॥४५॥
स्नात्वोदधिं श्रीमहाद्रिं स्नात्वा तापीं च नर्मदाम् ।
महीं शत्रुंजयां स्नात्वा सोमनाथं ययौ ततः ॥४६॥
मूलद्वारवतीं कृत्वा कुशस्थलीं च गोमतीम् ।
भद्रां स्नात्वा ययावश्वपट्टसरोवरं महत् ॥४७॥
कुंकुमवापिकाक्षेत्रं कृष्णनारायणाश्रितम् ।
लोमशं प्रथमं नत्वा पूजयित्वा ततस्तु सः ॥४८॥
अश्वपट्टजले स्नात्वाऽनादिकृष्णनरायणम् ।
द्रष्टुं पूजयितुं स्वेष्टदेवं प्रति ययौ नृपः ॥४९॥
गजासने स्थितं स्वर्णे स्मृद्धे दिव्याक्षिकारकं ।
हरिं विलोक्य नृपतिः प्रपूज्य विधिना ततः ॥५०॥
पादामृतं पपौ पत्नीसहितो भृत्यसंयुगः ।
राज्ञी पपौ हरेः पादामृतं भावसमन्विता ॥५१॥
उपदा विविधाः कृष्णस्वाम्यग्रे न्यस्य वै ततः ।
आरार्त्रिकं हरेः राज्ञी नृपयुक्ता चकार सा ॥५२॥
हरिं तुष्टाव बहुधा निषसादाऽर्पिताऽऽसने ।
स्वागतं च प्रसत्कारं चक्रे नारायणः स्वयम् ॥५३॥
भोजयामास विधिना नृपं राज्ञीं च माधवः ।
श्रीमद्गोपालकृष्णाद्या राजस्वागतमाचरन् ॥५४॥
अथ राजा सभार्यश्च कृताऽऽवसथ एव च ।
विश्रामं चाप्तवान्निद्रां गतः समाधिमाप ह ॥५५॥
तत्राऽपश्यज्जगत्सर्वं ब्रह्मेशविष्णुपालितम् ।
स्वर्गं सत्यं व्यपश्यत् स मेरुं तत्तन्निवासिनः ॥५६॥
आवृतिस्थानीश्वरांश्च व्यपश्यत् स नराधिपः ।
क्षीरसागरसंस्थं च श्वेतद्वीपगत प्रभुम् ॥५७॥
बदरीस्थं नरनारायणं सूर्यं हिरण्मयम् ।
वह्नौ वैश्वानरं नारायणं राजा व्यलोकयत् ॥५८॥
साध्यलोकान् पितृलोकान् यज्ञनारायणं तथा ।
ध्रुवलोकं याम्यलोकं महेन्द्रभवं तथा ॥५९॥
ब्रह्मसभां विष्णुलोकं शिवलोकं व्यलोकयत् ।
वैराजलोकं ललिताश्रीधामाऽव्याकृतं तथा ॥६०॥
अमृताख्यं भूमलोकं वासुदेवालयं तथा ।
सदाशिवस्य कैलासं साकेतं स व्यलोकयत् ॥६१॥
मायालोकं महाविष्णुलोकं गोलोकमित्यपि ।
वैकुण्ठं श्रीमधामानि धामाऽक्षरं व्यलोकयत् ॥६२॥

परंधाम परब्रह्माऽनादिकृष्णनरायणम् ।
सर्वाऽवतारधर्तारं ह्यपश्यत् त्वक्षरेश्वरम् ॥६३॥
सुन्दरं षोडशवर्षं मुक्ताढ्यं पुरुषोत्तमम् ।
मुक्तानिकाऽर्चितं तेजोव्याप्तं भूषाविभूषितम् ॥६४॥
दिव्यमालाधरं दिव्यकोटिमन्मथशोभनम् ।
रमणीयं युवानं चाऽऽप्राणखात् सुसुवर्णकम् ॥६५॥
राधारमाप्रियालक्ष्मीपद्मावतीप्रसेवितम् ।
माणिकीस्वामिनं बद्रीश्वरं कृष्णं व्यलोकयत् ॥६६॥
सर्वलावण्यसौन्दर्याऽमृतपीयूषसंभृतम् ।
प्रेमस्नेहप्रमोदानामाश्रयं वरमूर्तिकम् ॥६७॥
कोटिकोट्यर्कतेजांसि यस्यैकरोमरेणुके ।
वर्तन्ते शाश्वततुष्टितृप्तिदानि सुखानि च ॥६८॥
सकौस्तुभं समुकुटं दिव्याभरणभूषितम् ।
व्यलोकयद्धरिं राजा पितृभ्यां सहितं तदा ॥६९॥
राज्ञी चापि कृपया वै सर्वं व्यलोकयत् सती ।
विभूतीश्च तथा दिव्याः सौभाग्यानि व्यलोकयत् ॥७०॥
दिव्यभोगान् दिव्ययोगान् सर्वांश्च दिव्यसम्पदः ।
दिव्याऽमृतानि सर्वाणि दिव्याः सिद्धीर्व्यलोकयत् ॥७१॥
दिव्यालयान् मन्दिराणि दिव्यरत्नालयांस्तथा ।
दिव्यतेजोमयान्वैजान् विग्रहानवलोकयत् ॥७२॥
अनन्तसुखमासाद्य कृष्णनारायणस्य तौ ।
विहाय तत्त्विमं लोकं प्रत्यागन्तुं न चेच्छतः ॥७३॥
अजराऽमृतभावं वै प्राप्य बद्रि तु को जनः ।
इच्छेन्मायामये गन्तुं पुनर्यो बहिरूर्ध्वगः ॥७४॥
तथापि तौ हरेस्तत्राऽऽज्ञया पुनः स्ववर्ष्मणोः ।
आययतुः प्रसह्यैव कुंकुमवापिकाजुषोः ॥७५॥
उत्थितौ सहसा कृष्णसन्निधौ दिव्यवैभवौ ।
इन्द्रियाऽन्तःकरणानि दिव्यान्यभवन्तयोः ॥७६॥
न रूपं रोचते मायामयं विलोकितुं तदा ।
न स्पर्शो रोचते मायामयः स्प्रष्टुं तयोस्तदा ॥७७॥
न रसाश्चापि रोचन्ते भोक्तुं सुदिव्यवर्ष्मणोः ।
न गन्धो रोचते मायामयो दुर्गन्धवत् तयोः ॥७८॥
न शब्दो रोचते मायामयो वक्तुं तयोस्ततः ।
तयोर्मायामयं सर्वं सहसा निरयायते ॥७९॥
त्यक्ताहारविहारौ श्रीकृष्णलग्नमानसौ ।
वर्तते बद्रिके कृष्णनारायणस्य सन्निधौ ॥८०॥
बालकृष्णस्य वै मूर्तेः सुखानन्दाशनौ च तौ ।
विन्देते न क्षुधां नैव तृषां तु मायिकीं तदा ॥८१॥
एवंविधौ महादिव्यानन्दभोगपरायणौ ।
मुक्तौ जीवन्प्रमुक्तौ तौ विदेहाविव संवृतौ ॥८२॥
कृष्णमूर्तेर्महामूल्यं प्राप्तं ब्रह्मरसस्य यत् ।
न राज्यभोगमूल्यं वै तदग्रे स्थातुमर्हति ॥८३॥
असारः खलु संसारस्तयोरग्रेऽभवत्तदा ।
न संसारे मनः स्थातुमभवच्च तयोः सदा ॥८४॥
प्रभोःकृष्णहरेर्ध्यानात् समागमात् प्रसेवनात् ।
नष्टानि च तयोः सर्वावरणानि समन्ततः ॥८५॥
जले स्थलेऽम्बरे गेहे भित्तौ वन्हौ निरोधने ।
अप्रत्याहतगतिकौ पारप्रवेशकारिणौ ॥८६॥
अजायतां नृपो राज्ञी सूक्ष्ममहत्प्रसिद्धिकौ ।
एवंविधौ तु तौ दिव्यौ कृष्णध्यानपरायणौ ॥८७॥
कृष्णचेष्टापरौ कृष्णकर्मकाण्डपरायणौ ।
कृष्णार्थकृतसर्वस्वौ व्यावृत्तेन्द्रियमानसौ ॥८८॥
दासदासीजने नैजे चाऽदत्तमानसौ सदा ।
अवर्ततां नृपो राज्ञी कृष्णपूजापरायणौ ॥८९॥
एवंविधौ तु तौ वीक्ष्य दासा दास्योऽनुगास्तथा ।
शुश्रुवुर्बहुधा बद्रि तयोः कृतेऽतिसंभ्रमाः ॥९०॥
तर्कयामासुरेतौ ते विचित्तौ किं प्रमत्तकौ ।
वायुरुग्णौ च वा जातौ मन्त्राभिचारधर्षितौ ॥९१॥
यद्वा तूदासीनवृत्तौ किं वा पिशाचवेशिनौ ।
भूतावेशपरौ किंवा चित्तभ्रमातिधर्षितौ ॥९२॥
अस्थिरमानसौ किंवा योग्यावेशमयौ च वा ।
ग्रहावेशप्रपीडौ वा किमेतौ संबभूवतुः ॥९३॥
इत्येवं बहुधा भृत्यजनास्तर्कान् प्रचक्रिरे ।
नैतयोस्ते तु याथार्थ्यं स्थितेः पारं प्रपेदिरे ॥९४॥
प्रार्थनां चक्रिरे भृत्यजनाः कृष्णाय ते तदा ।
अनादिश्रीकृष्णनारायण विष्णो जगद्गुरो ! ॥९५॥
राज्ञ्या नृपस्य वैचित्र्यं किंवा जानीम एव न ।
चिन्तातुरा जना भूत्वा राज्यं राष्ट्रं तथाविभ्रम् ॥९६॥
सर्वमुद्वेगमापन्नं राज्ञः स्थितेरतर्कनात् ।
त्वमुद्धारकरः कृष्णो यथायोग्यं विधेहि वै ॥९७॥
स्वास्थ्यं राज्ञो भवेत् सम्यग् राज्यं प्रति प्रयाति च ।
यथा तथा कृपां कृत्वा विधेहि कुशलं हि नः ॥९८॥
राज्ञी चापि तथा चास्ते विसंज्ञेव यथा नृपः ।
जानासि त्वं परमात्मन् कल्याणं कुरु सर्वथा ॥९९॥

भक्तस्य भगवन् कृष्ण रक्षणं कुशलं कुरु ।
इत्येवमर्थयामासुर्भृत्याद्या नृपमानवाः ॥१००॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने ब्रह्मणः सुष्टयुत्तरं राज्ञां निर्माणं, दिल्लावरीराजधानीनृपस्य नागविक्रमस्य तीर्थयात्राविचरणे कुंकुमवाप्यां गमनं, तत्र समाधिफलं दिव्यतापादनमित्यादि-निरूपणनामा नवाऽधिकशत-तमोऽध्यायः ॥ १०९ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि नागविक्रमभूभृतः ।
भृत्यादीनां प्रार्थनोर्ध्वे यदभूत् तद् वदाम्यहम् ॥ १ ॥
अनादिः श्रीकृष्णनारायणाऽऽर्यः कृष्णमाधवः ।
प्रत्युवाच तु तद्भृत्यान् यथार्थं वै शुभं वचः ॥ २ ॥
नाऽयं राजा प्रमत्तोऽस्ति नोन्मत्तो न विचित्तकः ।
नापि भूतपिशाचाभिभववान् नाभिचारवान् ॥ ३ ॥
मद्भक्तो मत्प्रतापेन समाधौ मां निजाऽक्षरे ।
धाम्नि राजाऽधिराजं स व्यलोकयत् प्रियायुतः ॥ ४ ॥
दिव्यं मां दिव्यधामाऽपि सर्वांश्च दिव्यसम्पदः ।
वीक्ष्य दिव्यविभूतीश्च दिव्यतां प्राप्तवान् हि सः ॥ ५ ॥
दिव्यदृष्टिर्दिव्यकर्मा दिव्यधर्माऽस्ति साम्प्रतम् ।
दिव्यभावमयश्चास्त दिव्याऽन्तःकरणेन्द्रियः ॥ ६ ॥
न तस्य रोचते मायामयं चेदं सकल्मषम् ।
औदासीन्यं गतश्चास्ते पश्यत्येतत्तु नश्वरम् ॥ ७ ॥
निरयाख्यं समस्तं वै ब्रह्माण्डं स प्रपश्यति ।
राज्यं नैजं च भूम्यादि सर्वं पश्यति कर्दमम् ॥ ८ ॥
अशुद्धं चापि विकृतं क्लेदाढ्यं संप्रपश्यति ।
विदेह इव चास्तेऽसौ जीवन्मुक्तो जितेन्द्रियः ॥ ९ ॥
प्रत्याहृतान्तःकरणः सस्त्रीको मुक्तवत् स्थितः ।
ततोऽसौ योगिवद्भूमौ वर्तते हुतवासनः ॥१०॥
ब्रह्मदशां समारूढो वर्तते मायिकात्परः ।
अमायिकोऽयं सञ्जातो मत्समाधेर्मदात्मकः ॥११॥
सनकादिसमश्चास्ते शिवतुल्यो विरागवान् ।
मा शोचन्तु महाभाग्यं दिव्यं नृपं ततोऽनुगाः ॥१२॥
अस्य दिव्यतया सन्ति नावरणानि कानिचित् ।
भूमौ जलेऽनले पारं गन्तुं शक्तोऽणुसिद्धिमान् ॥१३॥
स्वर्गे सत्ये च वैराजे वैकुण्ठे गन्तुमीश्वरः ।
नाऽस्य राज्यं न वै भृत्या बाधितुमीश्वरास्त्विह ॥१४॥
ततोऽयं वर्तते योगिस्थित्या योगीश्वरो यतिः ।
सती तद्धर्मभार्याऽपि तथैव वर्तते परा ॥१५॥
भवतां प्रत्ययार्थं तं प्रेरयामि समक्षगम् ।
सान्त्वयितुं भवतश्च कृतयत्नो यथा भवेत् ॥१६॥
इत्युक्त्वा बद्रिके कृष्णनारायणमहाप्रभुः ।
राजानं प्रेरयामास भृत्यादिशोकनुत्तये ॥१७॥
शृणु राजँस्तव भृत्यादयः शोचन्ति ते कृते ।
तान् विज्ञापय वृत्तान्तं नैजं यथार्थमुज्ज्वलम् ॥१८॥
इत्येवं बद्रिके प्रोक्तो राजा तु नागविक्रमः ।
स्वभृत्यादीन् समुवाच विरागिणीं निजां स्थितिम् ॥१९॥
शृण्वन्तु भृत्यवर्गाद्याः ! कुर्वन्तु च मयोदितम् ।
हितं वदामि सर्वेषां प्राप्तं दिव्यं मया धनम् ॥२०॥
अयं वै भगवान् साक्षाच्छ्रीपतिः पुरुषोत्तमः ।
अक्षरेशोऽवताराणां धर्ता प्राप्तो मया त्विह ॥२१॥
मद्योगेन भवद्भिश्च प्राप्तः श्रीपतिवल्लभः ।
अनादिश्रीकृष्णनारायणः श्रीपुरुषोत्तमः ॥२२॥
तत्प्रतापेन साम्राज्यं प्राप्तं मया विशालकम् ।
तत्प्रतापेन दिव्यां च दृष्टिं स्थितिं गतोऽस्मि च ॥२३॥
अक्षरं परमं धाम तत्प्रतापेन वै मया ।
वीक्षितं च समाधौ वै दिव्यर्द्धयो विलोकिताः ॥२४॥
यदग्रे चेश्वराणां वै स्मृद्धयो निरयोपमाः ।
ततः किमुत देवानां सुतरां मानवर्द्धयः ॥२५॥
मायामय्यः स्मृद्धयस्ता निरया एव सन्ति वै ।
न रोचन्ते मम त्वेताः स्मृद्धयो मलिना यतः ॥२६॥
हरेर्दिव्यस्य योगेन प्राप्तोऽहं दिव्यतां पराम् ।
भवन्तोऽपि हरेर्योगाद् गृह्णन्तु दिव्यतां पराम् ॥२७॥
शाश्वतं परमानन्दं गृह्णन्त्वनादिमाधवात् ।
त्यजन्तु वासनासैन्यं निरयं भौतिकं गृहम् ॥२८॥
हरेः राज्यं समस्तं वै ब्रह्माण्डानां परं तथा ।
समस्तं श्रीहरेः राज्यं न मे राज्यं मनागपि ॥२९॥
मुक्तिराज्यं समिच्छामि भुक्तिराज्यं न रोचते ।
ततो भवन्तो भृत्याद्याः कृष्णं श्रयन्तु सत्पतिम् ॥३०॥
त्यक्तभोगसुखा नित्यानन्दा भवन्तु केशवे ।
अध्रुवं मा च वल्गन्तु वल्गन्तु परमेश्वरम् ॥३१॥
मृतस्य राजदेहस्य न राज्यं न धनं गृहम् ।
आत्मनस्तु प्रमुक्तस्य महाराज्यं पराऽक्षरम् ॥३२॥
विचार्येत्थं चार्पयामि समस्तं परमात्मने ।
दिल्लावरीमहाराज्यं चार्पयामि परात्मने ॥३३॥

वैराग्यं प्राप्तवानस्मि सपत्नीको न संशयः ।
भूत्वा दासो हरेः साधुः सेविष्येऽत्र गुरुं हरिम् ॥३४॥
राज्यं ददामि हरये येन दत्तं पुरा तु मे ।
स एव सर्वमवतु नाऽहं राज्यं प्ररोचये ॥३५॥
इत्युक्त्वा भृत्यवर्गेभ्यो राजा वै नागविक्रमः ।
हस्ते जलं समादाय राज्यं कृष्णाय चाऽऽर्पयत् ॥३६॥
सर्वेषां पश्यतां कृष्णपादयोर्निपपात सः ।
विहाय राजचिह्नानि कृष्णपादरजोऽगिलत् ॥३७॥
राज्ञी चापि तथा चक्रे कृष्णपादरजांसि वै ।
जिह्वया लेहयामास कृष्णपादतलं तथा ॥३८॥
आश्चर्यं परमं प्रापुः भृत्याद्यास्ते नृपाऽनुगाः ।
मत्वैव धन्यभाग्यानि ववन्दिरे हरिं तदा ॥३९॥
प्रशशंसुर्नृपं चापि मोक्षमार्गप्रयायिनम् ।
सर्वे भृत्यादयश्चापि त्यागमार्गं प्रपेदिरे ॥४०॥
निपत्य श्रीहरेरग्रे नृपवच्चक्रिरे च ते ।
निजार्पणं हरेरग्रे त्यागार्थं प्राकृतस्य वै ॥४१॥
अथ श्रीभगवान् राज्ञे ददौ दीक्षां तु साधवीम् ।
नाम कृष्णो ददौ तस्य त्रिविक्रमायनो मुनिः ॥४२॥
राज्या नाम चकाराऽपि कृष्णः श्रीमालिकायनी ।
त्रिविक्रमायनः साधुः साध्वी श्रीमालिकायनी ॥४३॥
पुपूजतुः परात्मानं स्वामिकृष्णनरायणम् ।
गुरुं चान्ये बद्रि सर्वे भृत्याः सहस्रसंख्यकाः ॥४४॥
साधुदीक्षां अगृहुश्च त्यागाश्रमे स्थितास्तदा ।
सर्वे त्यागं समाश्रित्य भेजुः श्रीकान्तवल्लभम् ॥४५॥
नार्यो दास्यश्च यास्ता वै साध्वीदीक्षां प्रपेदिरे ।
सहस्रसंख्यका नार्यः साध्व्यस्तत्राऽभवँस्तदा ॥४६॥
दिव्यभावा दिव्यदेहाः समस्तत्यक्तवासनाः ।
अश्वपट्टसरःक्षेत्रे न्यवसँस्ते तथाविधाः ॥४७॥
स्वतःप्रकाशो भगवान् स्वाश्रमे तानवासयत् ।
ते भेजुः परमात्मानं सिषेविरे पतिं प्रभुम् ॥४८॥
श्रुत्वा पृथ्व्यां जनाः सर्वे महाश्चर्यं प्रपेदिरे ।
राजानश्चापि चाश्चर्यं प्रापुर्वै त्यागगोचरम् ॥४९॥
इत्येवं बद्रिके तत्र राजा वै नागविक्रमः ।
त्यागाश्रमं त्वाविवेश सस्त्रीसैन्यानुगः क्षणात् ॥५०॥
तपस्तेपे हरेः क्षेत्रे भेजे श्रीमाधवीपतिम् ।
सिषेवे श्रीप्रभुं नाथं ब्रह्मस्थित्या हि वर्तयन् ॥५१॥
अथ श्रीभगवान् बद्रि प्राह त्रिविक्रमायनम् ।
दिलावरीमहाराज्यं कस्मै देयं वदाऽत्र मे ॥५२॥
मुनिः प्राह हरे राज्यं भवता मयि योजितम् ।
भवतस्तत्, न मे राज्यं यथेष्टाय निवेदय ॥५३॥
पुत्रोऽयं भवतः कृष्ण त्वत्समो राजते प्रभुः ।
मुकुन्दविक्रमो नाम्ना चक्रवर्तिगुणान्वितः ॥५४॥
दक्षहस्ततले तस्य चक्रचिह्नं विराजते ।
राज्ययोग्यो भवत्येषस्तस्मै चेच्छसि देहि वै ॥५५॥
एवं त्वभिहिते तत्र साधु साध्विति चाभितः ।
वाचोऽभवन् हर्षयुक्ता नारीनराऽभ्युदीरिताः ॥५६॥
मुकुन्दविक्रमस्याऽर्थे जयशब्दास्तदाऽभवन् ।
श्रीकृष्णस्य सुताः पुत्र्यः पत्न्यश्चापि तथाऽवदन् ॥५७॥
मुकुन्दविक्रमो राजा ज्येष्ठपत्न्यग्रजः सुतः ।
सर्वज्येष्ठतमस्तस्माद् राज्यमर्हति शोभनम् ॥५८॥
एवं वाचोऽभवन् बद्रि मंगलाः सर्वतोदिशः ।
ओमित्येवं हरिश्चापि मेने तथ्यां मुनेर्मतिम् ॥५९॥
सा वार्ता प्रासरत् तूर्णं कुंकुमपत्तनेऽभितः ।
आक्षरे परमे क्षेत्रे सौराष्ट्रेऽपि गृहे गृहे ॥६०॥
आजनाभे तथा खण्डे खण्डेष्वन्येष्वपि ध्रुवा ।
स्वर्गे सत्ये च पाताले सर्वलोकेषु सत्वरम् ॥६१॥
नागविक्रमनृपतिस्त्यागिनां जगृहे भुवि ।
मुकुन्दविक्रमो राजा चक्रवर्ती भविष्यति ॥६२॥
हरेः पुत्रो हरेरंशो दिलावरीश्वरोऽधुना ।
हास्तिनीनगरीस्वामी हैमखण्डे भविष्यति ॥६३॥
मुक्तिबालेश्वरी तस्य सहजा यमलोद्भवा ।
सम्राज्ञी तत्प्रिया राज्यमाता श्रेष्ठा भविष्यति ॥६४॥
इत्येवं भूतलादौ वै प्रावर्तत जने जने ।
महामंगलवार्तेयं कृष्णस्मरणकारिणी ॥६५॥
उत्सवाश्चाप्यजायन्त वाद्यकीर्तननर्तनैः ।
नारीणां वेषशृंगारैर्मानवानां गृहे गृहे ॥६६॥
अथ श्रीबद्रीकेऽनादिः कृष्णनारायणः प्रभुः ।
चन्द्रं तु सन्मुखं वीक्ष्य मुहूर्ते बलवत्तमे ॥६७॥
दिलावरीं प्रति गन्तुमाज्ञां ददौ निजात्मजान् ।
मुकुन्दविक्रमो ज्येष्ठपुत्रो राजा भविष्यति ॥६८॥
तदुत्सवे विमानैश्च युगलानि प्रयान्तु वै ।
मम पत्न्यः समस्ताश्च यावन्ति यमलान्यपि ॥६९॥
दासा दास्यो भृत्यवर्गा दिलावरीं प्रयान्तु वै ।
लोमशश्च तथा योगी सार्थः प्रकाशकायनः ॥७०॥
त्रिविक्रमायनश्चापि तथाऽन्ये साधवो जनाः ।
महर्षयश्च ऋषयो मुनयो वेदपारगाः ॥७१॥

कर्मठा वैष्णवा विप्रा दिलावरीं प्रयान्तु वै ।
एवमाज्ञाप्य भगवान् प्रेषयमास प्राक् तु तान् ॥७२॥
पार्षदैश्चापि भूखण्डे प्रेषयामास पत्रिकाः ।
स्वर्गे सत्ये च पाताले चतुर्दशस्तरेष्वपि ॥७३॥
प्रेषयामास विज्ञप्तिपत्रिकां मंगलावहाम् ।
ईश्वरान् सिद्धसाध्यांश्च पितृन् सुरांश्च मानवान् ॥७४॥
दिक्पालान् लोकपालांश्च यक्षराक्षसकिन्नरान् ।
किम्पुरुषांश्चारणांश्च विद्याध्रान् दैत्यदानवान् ॥७५॥
अप्सरसो ब्रह्मसरसश्च साध्वीः सतीस्तथा ।
योगिनीः शक्तिदेवीश्च देवताश्च तथेश्वरीः ॥७६॥
विज्ञप्तिपत्रिकाः कृष्णः प्रेषयामास सर्वशः ।
धामधामादिमुक्तांश्च मुक्तानिकास्तथा प्रभून् ॥७७॥
आह्वयामास भगवान् कुंकुमपत्रिकादिभिः ।
भक्तान्नृपान् समस्तांश्चाऽपरान् खण्डान्तरेश्वरान् ॥७८॥
द्वीपेश्वरान् भूभृतश्चाह्वयामास हरिस्तदा ।
श्वशुरान् निजपुत्रांश्च तत्तद्धामगृहस्थितान् ॥७९॥
आह्वयामास भगवान् दिलावरीपुरीं प्रति ।
अथ श्रीभगवान् मात्रापित्रा पुत्रादिभिः सह ॥८०॥
पत्न्यादिभिश्च सहितो विमानेन हि सत्वरम् ।
ययौ दिलावरीं राजधानीं हैमभुवां शुभाम् ॥८१॥
मण्डपं कारयामास दशयोजनमुत्तमम् ।
सौवर्णं चाऽनुयमुनं दिव्यरत्नादिराजितम् ॥८२॥
दिव्यादिव्यनृपवर्गसिंहासनादिसंयुतम् ।
मुनिमहर्षिमुक्ताद्यासनपंक्त्याद्यलंकृतम् ॥८३॥
सर्वसिद्धिमयं सर्वराजसमृद्धिप्रपूरितम् ।
सर्वदृश्यमहादृश्यशालापुत्तलाऽन्वितम् ॥८४॥
सर्वरंगावलिशोभं कल्पलताद्रुवेष्टितम् ।
विद्युत्प्रकाशभाभ्यातं दिव्याऽऽदर्शादिशोभनम् ॥८५॥
दिव्यपरीदेवताभिः करमालाभिवर्धितम् ।
दिव्यास्तरणभूभागं दिव्यतोरणराजितम् ॥८६॥
बहुव्योमान्तरकक्षानारीवृन्दविलासितम् ।
गन्धसुगन्धसुरभिव्याप्तं सुस्पर्शवातिनम् ॥८७॥
सर्वपानादिसंक्लृप्तं सर्वसेवकवेत्रिणम् ।
सर्वमंगलपद्मादिस्वस्तिकादिसुशोभितम् ॥८८॥
रंगवल्लीवितानाद्यैर्मालाहारालिराजितम् ।
दिव्ययन्त्रध्वनिरम्यं गीतिगायनहर्षितम् ॥८९॥
वाद्यसुवाद्यगान्धर्वगणनृत्यादिहृद्वरम् ।
मनोहरं समस्ताभिर्विश्वकर्मकलादिभिः ॥९०॥
वह्निकुण्डादिभिर्देवासनोत्तमैर्विराजितम् ।
आभिषेकोपकरणैः पूजाद्रव्यैः समन्वितम् ॥९१॥
हव्यैर्विविधैर्दानाद्यैः सम्पूर्णं साधनादिभिः ।
राजविधिमहाद्रव्यैर्युक्तं वेषादिभिस्तथा ॥९२॥
राज्याभिषेकोपकरणाद्यैः समन्वितं शुभम् ।
स्वर्णरत्नविभूषाद्यैर्नृपयोग्यसुवस्तुभिः ॥९३॥
छत्रचामरवेत्राद्यैः पादपीठादिसंकुलम् ।
सौवर्णकलशैस्तीर्थजलभृतैर्विराजितम् ॥९४॥
मिष्टान्नफलपत्राद्यैः समित्कुशादिभिर्युतम् ।
दिव्यचन्दनवर्यैश्च गन्धसारैः सुगन्धितम् ॥९५॥
राजाधिराजशोभाढ्यं संकल्पसिद्धवस्तुदम् ।
चैत्यचेतनधिष्ण्यैश्च लक्ष्यसंख्यैर्विराजितम् ॥९६॥
महासिंहासनराजन्मध्यपश्चिमपीठकम् ।
एतादृशं सुवैकुण्ठप्रभं दिव्यं हि मण्डपम् ॥९७॥
कारयामास भगवान् धामयुक्तकलाकरैः ।
तथैव भोजनानां च पर्वतान् मिष्टसद्रसान् ॥९८॥
पयोऽमृतादिपानानां सरांसि चाप्यकारयत् ।
आवासान् क्लृप्तयामास सुखशय्यादिशोभनान् ॥९९॥
पानभोजनवेषाणां क्लृप्तीः सुखकरीस्तथा ।
दासदासीभृत्यसेवाकरान् ररक्ष तत्र च ॥१००॥
इत्येवं सर्वथा स्वामीकृष्णनारायणः प्रभुः ।
रचयामास योग्यानि विधेयानि तदाऽभितः ॥१०१॥
बद्रिके च तदा सर्वप्राणिनां सुप्रमोदनम् ।
उत्सवाश्चाऽभवन् ह्यसु महानन्दा निसर्गजाः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीहरिः स्वपुत्रस्य मुकुन्दविक्रमस्य राज्याभिषेकं कर्तुं दिलावरीराजधानीं ययौ, मण्डपादीन् कारयामास, चैत्यादिनिरूपणनामा दशाऽधिकशततमोऽध्यायः ॥ ११० ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि मुकुन्दविक्रमं हरिः ।
उपोषणं चाद्यदिने कारयामास शुद्धये ॥ १ ॥
गव्यप्राशनमेवापि क्षौरकर्माऽप्यकारयत् ।
देहशुद्धिं तथा तीर्थवारिभिः स्नानमित्यपि ॥ २ ॥
अक्षय्यतृतीयायां च प्रगेऽभिषेकमुत्सवम् ।
कारयामास भगवान् सहस्रतीर्थवारिभिः ॥ ३ ॥

गणेशपूजनं चापि कुलदेवप्रपूजनम् ।
हनूमत्पूजनं चापि कारयामास माधवः ॥ ४ ॥
मण्डपे वास्तुदेवानामर्हणां लोमशेन तु ।
कारयामास भगवान् हवनानि यथायथम् ॥ ५ ॥
वन्हेः प्रपूजनं वन्हौ चरोः श्रपणमित्यपि ।
होमं च कारयामास विप्रैर्वेदपारगैः ॥ ६ ॥
बहुवाद्यान्यवाद्यन्त स्त्रीणां च गीतयोऽभवन् ।
महीमानाः सर्वलोकनिवासिनः समाययुः ॥७॥
मुक्तास्तथाऽवताराश्चेश्वराः सिद्धाश्च साधवः ।
सत्यदेवाश्च पितरो मातरो देवताः सुराः ॥८॥
पार्षदाश्चापि मुक्तान्यो देव्यो लक्ष्म्यः समाययुः ।
मण्डपे धनिवासाश्च रुद्राद्या विष्णवो ह्यजाः ॥९॥
लोकपाला दिशांपाला मेरुमन्दरवासिनः ।
तीर्थानि दिव्यतरवश्चाययुर्वृक्षवल्लिकाः ॥१०॥
तत्त्वानि शक्तयश्चापि कामदुघाः समाययुः ।
महर्षयश्च मुनयः साध्व्यः सत्यः समाययुः ॥११॥
भटाश्चारणगन्धर्वाः सूतमागधबन्दिनः ।
नर्तकाश्चापि नर्तक्यो मण्डपे वै समाययुः ॥१२॥
विद्वांसः किंपुरुषाश्च किन्नरा यक्षराक्षसाः ।
उरगाश्च भुजंगाश्च नागा दैत्याश्च दानवाः ॥१३॥
पशवः पक्षिणो दिव्या जातिस्मराः समाययुः ।
नद्यश्च पर्वताश्चापि समुद्राश्च रसास्तथा ॥१४॥
तारा ग्रहाश्च नक्षत्रमण्डलानि समाययुः ।
मानवाः ऋषयो विप्रा दीनाऽनाथाः समाययुः ॥१५॥
राजानो राजवर्गाश्च प्रजेश्वराः प्रजाजनाः ।
श्रेष्ठिनो वैष्णवा भक्ताः कोटिशस्तत्र चाययुः ॥१६॥
राजराजेश्वराः सर्वे निषेदुः स्वासनादिषु ।
मण्डपः सर्वसृष्टीनां सम्राजैः शोभनोऽभवत् ॥१७॥
वेदकार्याणि सर्वाणि प्रवर्तन्ते द्विजादिभिः ।
वेदघोषा उद्भवन्ति गर्जयन्ति दिशो दश ॥१८॥
गोपालः कारयामास पार्षदैः स्वागतादिकम् ।
श्रीकृष्णः कारयामास सम्मानं पाद्यवारिभिः ॥१९॥
अर्घ्यादिभिश्चापि तथा मधुपर्कैः समर्हणैः ।
विमानानि समन्ताद्वै व्योम्नश्चाऽवतरन्ति च ॥२०॥
आयान्ति देववर्याश्च मण्डपे दिव्यविग्रहाः ।
स्वागतेनाऽर्चिता निषीदन्ति सिंहासनेषु ते ॥२१॥
होमकार्ये तदा वह्निं प्रवर्तते यथायथम् ।
मुकुन्दविक्रमस्तत्र सपत्नीकोऽनले चरुम् ॥२२॥
जुहाव भावनायुक्ताश्चाज्यसमित्फलादिभिः ।
अथ श्रीलोमशस्तत्र कारयामास पूजनम् ॥२३॥
सुवर्णवर्मणश्चापि खड्गस्य चर्मणस्तथा ।
छत्रस्य वेत्रयष्टयाश्च मुकुटस्य पटस्य च ॥२४॥
शतघ्न्याः पूजनं चापि गदायाः पूजनं तथा ।
चक्रस्य पूजनं लक्ष्म्या रुद्राण्याः पूजनं तथा ॥२५॥
धनुषः पूजनं चापि बाणस्य पूजनं तथा ।
सर्वशस्त्रास्त्रमन्त्राणां पूजनं च ततः परम् ॥२६॥
राजधिष्ण्याऽर्हणां चापि रुद्रस्य पूजनं तथा ।
विष्णोश्च ब्रह्मणश्चापि कारयामास पूजनम् ॥२७॥
सेनादेव्याः पूजनं च कोशदेवस्य पूजनम् ।
पृथिव्याः पूजनं चापि कारयामास लोमशः ॥२८॥
वाराहपूजनं चापि स्वामिश्रीकृष्णपूजनम् ।
भूपमुकुटपूजां च कारयामास लोमशः ॥२९॥
श्रिया लक्ष्म्याः पूजनं च लाभशुभप्रपूजनम् ।
जयश्रीपूजनं चापि कारयामास लोमशः ॥३०॥
दिक्पालाऽऽवाहनं भूपदेहे चकार लोमशः ।
सुराऽऽवाहनमेवाऽपि चकार लोमशो गुरुः ॥३१॥
भूपतित्वार्थसंसिद्धयै चक्रे भुवः प्रपूजनम् ।
प्रजापतित्वसिद्ध्यर्थं चक्रे प्रजेशपूजनम् ॥३२॥
लक्ष्मीपतित्वसिद्ध्यर्थं चक्रे लक्ष्मीप्रपूजनम् ।
दण्डपतित्वसिद्ध्यर्थं चक्रे यमस्य पूजनम् ॥३३॥
धनपतित्वसिद्ध्यर्थं चक्रे कुबेरपूजनम् ।
नद्यम्बीशत्वसिद्ध्यर्थं चक्रे वरुणपूजनम् ॥३४॥
अन्नौषधीशताप्त्यै चक्रे चन्द्रप्रपूजनम् ।
राजत्वसिद्धिलाभाय चक्रे महेन्द्रपूजनम् ॥३५॥
पाकपतित्वलाभार्थं चक्रेऽर्कपूजनं मुनिः ।
आरोग्यार्थं रोगपतिरुद्रार्हणां चकार सः ॥३६॥
तेजोलाभाय च वह्निपूजां चकार लोमशः ।
प्राणरक्षाकरं देवं वायुं पुपूज लोमशः ॥३७॥
मातृकापूजनं राष्ट्रप्रजावृद्धयै चकार सः ।
समस्तसृष्टिदेवानां चकार पूजनं तथा ॥३८॥
वाहनानां पूजनानि शमिगोहस्तिवाजिनाम् ।
यानयन्त्रविमानानां पूजां चकार लोमशः ॥३९॥
बलिदानानि सर्वेभ्यो ददौ श्रीलोमशस्तदा ।
निर्ऋतिरक्षसां चापि सुराणां ग्रहनाकिनाम् ॥४०॥
बलिदानानि च ददौ लोमशः सुखहेतवे ।
कृत्वैवं विधिवत् पूजां शान्तिं श्राद्धं यथाविधि ॥४१॥

मुखे पूर्णाहुतिं दत्वा लोमशस्तु ततः परम् ।
प्रसादतिलकं चक्रे राजराज्ञीललाटयोः ॥४२॥
राजवेषं च मुकुटं यज्ञोपवीतकं स्रजम् ।
मुकुटं धारयामास यवांकुराणि भूपतिः ॥४३॥
शस्त्रधारणमेवाऽपि चक्रे मुकुन्दविक्रमः ।
चक्रे राज्यप्रतिज्ञां च प्रजापालनगर्भिताम् ॥४४॥
लोमशाद्याः ऋषयश्च वृद्धा नृपादयः प्रजाः ।
ईश्वराश्च तथा मुक्ता विप्रा आरात्रिकं व्यधुः ॥४५॥
आशीर्वादान् ददुश्चापि चिरं जीव प्रजा अव ।
पुत्रपौत्रादिमानास्स्व प्रजासेवापरो भव ॥४६॥
स्वस्ति ते सर्वदा चास्तु मंगलानि सदा तव ।
उत्सवास्ते प्रजायां तु भवन्तु सततं सुखाः ॥४७॥
अविघ्नं तव राज्यं चाऽसमुद्रान्तं स्थिरं सदा ।
आरोग्यधान्यधनवत् सम्पन्नं सर्वदाऽस्त्विति ॥४८॥
अथैवं द्विजवर्यास्ते समुच्चार्य सुमाऽक्षतैः ।
वर्धयामासुरत्यर्थं पुष्पाञ्जलीन् ददुः क्रमात् ॥४९॥
त्रिविक्रमायनर्षिश्च तिलकं प्रचकार ह ।
मुकुटं च स्रजं तस्य मूर्ध्नि कण्टेऽन्यसत्तदा ॥५०॥
अन्येऽपि साधवो विप्राः पुपूजुः क्ष्मापतिं तदा ।
गुरुः प्रकाशो भगवान् राजपत्रं ददौ तदा ॥५१॥
राज्याधिकारलेखं च ददौ तस्मै नृपाय वै ।
जयनादा अभवँश्च राजानश्चोपदा ददुः ॥५२॥
उपायनानि रत्नानि मणिहारान् सुवर्णजान् ।
ददुर्नृपाय चाऽमूल्यान् सम्पदश्च पराः शुभाः ॥५३॥
कश्चिच्छत्रं तथा कश्चिद् वेत्रं तथा च चामरे ।
मुकुटं कुण्डले कश्चित् कटके च धनानि च ॥५४॥
स्वर्णरूप्यकभूषाश्च ददू राजन्यवंशजाः ।
प्रजाजनाः सुरा देववराश्च देवता ददुः ॥५५॥
उपायनानि बहूनि चामूल्यानि तदा तदा ।
अथ श्रीभगवानस्य तिलकं संव्यधाद्धरिः ॥५६॥
वंशविस्तारवान् राजा भव चक्राधिपाधिपः ।
इत्युक्त्वा मस्तके मालां करं पुत्रस्य सन्ददौ ॥५७॥
आह संशृण्वतां सर्वभूपानां संसदि प्रभुः ।
भवतां सर्वभूपानां मूर्धन्योऽयं मया कृतः ॥५८॥
मुकुन्दविक्रमो राजेश्वरः सम्राट् कराऽर्जकः ।
सुदर्शनं मम चक्रं रक्षार्थं दीयतेऽस्य वै ॥५९॥
अशासने स्थिता ये स्युस्तेषां निबर्हणं त्विदम् ।
इत्युक्त्वा श्रीकृष्णनारायणश्चक्रं ददौ महत् ॥६०॥
सहस्रारं यथावाञ्छा तथारूपधरं शुभम् ।
चक्रध्वजं जैत्ररथं ददौ शंखं जयप्रदम् ॥६१॥
कल्पलतां चाऽक्षयं सत् पात्रं ददौ हरिः स्वयम् ।
पुष्पाञ्जलिं ददौ कण्ठे जीवमालां ततो ददौ ॥६२॥
अथैवं पूजने जाते मुकुन्दविक्रमो नृपः ।
शुशुभे कृष्णवत् तत्र राज्ञीयुतो नृपासने ॥६३॥
वृद्धाभिवादनं चक्रे श्रीकृष्णपूजनं व्यधात् ।
ददौ दानानि सर्वाणि स्वर्णरत्नाम्बराणि च ॥६४॥
गजवाजिविमानानि गृहोद्यानतलानि च ।
धनानि सम्पदश्चापि दिव्यान्नभूषणानि च ॥६५॥
ब्रह्माण्डदानमेवाऽपि तुलादानानि यान्यपि ।
धेनुदानानि सर्वाणि कन्यादानानि वै तथा ॥६६॥
ग्रामक्षेत्रालयदानान्यपि ददौ तदा नृपः ।
जीविकाः प्रददौ देवालयदीनान्धरोगिषु ॥६७॥
मोचयामास निगडस्थितान् प्रदण्डितान् जनान् ।
मिष्टान्नानि तदा तत्र भूरीणि प्रददौ नृपः ॥६८॥
सूतमागधवन्दिभ्यश्चारणेभ्यो धनं ददौ ।
विप्रर्षिद्विजजातिभ्यो महादानानि वै ददौ ॥६९॥
भोजनानि समस्तेभ्यो ददौ राज्ये तदा दिने ।
जयशब्दैः समं तत्र सभामण्डपतो नृपः ॥७०॥
दत्वा च दक्षिणास्तूर्णं परिहारं विधाय च ।
उत्थितो राजचिन्हैश्च सर्वराजन्यवन्दितः ॥७१॥
मातरं पितरं नत्वाऽभिवाद्याऽभिजनं नृपः ।
राज्याऽग्रपदभाग्भिश्च प्रार्थितो भ्रमणाय ह ॥७२॥
नगर्यां सैन्यसहितो वर्धमानो जनैस्तदा ।
बभ्राम राजमार्गेषु सर्वसैन्यसमन्वितः ॥७३॥
वन्दितः पूजितश्चाशीर्भिश्च संवर्धितो नृपः ।
प्रजाः प्रसाद्य यमुनां गत्वा प्रपूज्य तां नदीम् ॥७४॥
जलं पीत्वाऽऽपूज्य दुर्गं शनैर्यायान्नृपालयम् ।
विशश्राम क्षणं पश्चाद्राजनानि शुभानि वै ॥७५॥
कारयामास सर्वेभ्यो महीमानेभ्य आदरात् ।
भोजयामास सर्वांश्च विदायं प्रददौ तदा ॥७६॥
जयध्वनिं च यन्त्राणां श्रावयामास चक्रराट् ।
सायं नृत्यानि मोदार्थे भूभृतोऽप्सरसो व्यधुः ॥७७॥
गायनानि च गन्धर्वाः कवयः कविता व्यधुः ।
एभ्योऽपि नृपवर्योऽसौ ददौ तोषाय सद्धनम् ॥७८॥
विशश्रमुस्ततो रात्रौ सर्वे राजा प्रजादयः ।
प्रातर्जागरः भूत्वा मंगलानि शुभानि ह ॥७९॥

महीमाना ययुर्नेजान् देशान् लोकान् सुखान्विताः ।
भुक्त्वा विधाय पानानि चाशीर्वादपरायणाः ॥८०॥
अथाऽनादिकृष्णनारायणः श्रीपुरुषोत्तमः ।
निजपुत्रान् यमलौंश्च स्वस्वमातामहादिभिः ॥८१॥
सह गन्तुं तदाज्ञां वै चकार बहुपूजितान् ।
श्वशुराश्च तथा चाऽन्ये प्रसन्ना बहुमानिताः ॥८२॥
ययुर्नैजान् प्रदेशाँश्च विमानैश्च निजैः सह ।
प्रजाः स्वस्वप्रदेशाँश्च ययुर्वै मानितास्तदा ॥८३॥
अथाऽनादिकृष्णनारायणः स्वीयजनैः सह ।
पुत्राय शिक्षणं दत्वा ययौ कुंकुमवापिकाम् ॥८४॥
स्वपत्न्यादिसमेतश्च स्वीयकुटुम्बयुक् तथा ।
लोमशाद्यैश्च सहितो ययावश्वसरोभुवम् ॥८५॥
बद्रिके भगवत्पुत्रश्चाभिषिक्तो नृपासने ।
शशास पृथिवीं दीर्घां दशसाहस्रयोजनाम् ॥८६॥
करदीकृतभूपालो भगवद्बलमाश्रितः ।
वैष्णवीं पृथिवीं सर्वां चकार धर्मशासनः ॥८७॥
नाऽस्य राज्ये ह्यनावृष्टिर्दुर्भिक्षं दुष्टपीडनम् ।
रोगा नैवाऽकालमृत्युर्न च वैधव्यमित्यपि ॥८८॥
न शाठ्यं न च पैशुन्यं कापट्यं न प्रजास्वपि ।
न हिंसा नापि चौर्यं च प्रसह्य हरणं न च ॥८९॥
नैव वसतिद्वाराणां पिधानं विद्यते तदा ।
उद्घाटितकपाटा वै तदा वसतयः सदा ॥९०॥
वाग्बन्धे न व्यभिचारः प्रतिज्ञाभंग एव न ।
वृद्धाभिवादनं नित्यं पञ्चमखप्रवर्तनम् ॥९१॥
पञ्चाग्नितापनं नित्यश्राद्धादि कर्म वै सताम् ।
विप्राणां वेदघोषाश्च ग्रामे ग्रामे स्थले स्थले ॥९२॥
सर्वाः कामदुघा गावः पातिव्रत्यपराः स्त्रियः ।
सत्यः साध्व्यश्च सन्तश्च गृहस्था अपि सर्वदा ॥९३॥
शममार्गस्थिता नारायणध्यानपरायणाः ।
फलन्ति च तदा कल्पवल्लिका इव बुद्धयः ॥९४॥
कृष्णार्पितानि शस्त्राणि दिव्यविग्रहवन्ति च ।
प्रवर्तन्ते तु दण्डार्थं गत्वा दुष्टं स्वयं तदा ॥९५॥
देशान्तरे प्रचारास्ताः शस्त्ररूपा भटास्तदा ।
कारागारस्य नैरर्थ्यं तदाऽभवत् समन्ततः ॥९६॥
अग्नयः सीमभागस्था रक्षन्त्यस्य सुराष्ट्रकम् ।
अब्धयो मूर्तिमन्तश्च दुर्गनिर्वाहकारिणः ॥९७॥
अस्याऽध्वरेषु वै देवाः साक्षादायान्ति शार्ङ्गिणा ।
सहिताः पार्षदा मुक्ता ईश्वरा हव्यभोजनाः ॥९८॥
ग्रामदेव्यो वनदेव्यो रक्षन्ति तत्प्रजाः सदा ।
दैत्यदानवरक्षांसि सत्त्वभावं गतानि वै ॥९९॥
तामस्यः सम्पदो याश्च गताः सात्त्विकतां तदा ।
विप्रसाधिप्रजाश्चास्य देवगृहान्वितगृहाः ॥१००॥
बद्रिके सर्वथा भक्तिः प्रावर्तत समन्ततः ।
हरेः पुत्रस्य राज्ये वै मोक्षदा सम्पदावहाः ॥१०१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने दिलावरीराजधान्यां मुकुन्दविक्रमस्य राज्याभिषेकोत्सवादिनिरूपणनामैकादशाधिकशततमोऽध्यायः ॥ १११ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि मुकुन्दविक्रमो नृपः ।
क्षीरोदपुत्र्या लक्ष्म्यास्तु सुताय मन्त्रिणे तदा ॥ १ ॥
वासुदेवाय राज्यस्य धुरं निर्वहितुं सदा ।
आज्ञाप्य निर्ययौ पृथ्वीं वीक्षितुं परितस्तदा ॥ २ ॥
विमानेन ययौ प्राक् तु दुहीनाऽद्रीन् तथोत्तरान् ।
कुरून् किम्पुरुषं चापि केतुमालमिलावृतम् ॥ ३ ॥
पूर्वदेशान् दक्षिणाँश्च पश्चिमान् भूप्रदेशकान् ।
सर्वत्र भूपवर्या ये तिष्ठन्ति ते तु भावतः ॥ ४ ॥
चक्रुः सम्मानमर्घ्यं च पूजां सम्राट् सुसन्निभाम् ।
करान् ददुश्च ते सर्वे यथायोग्यान् स्वभूभृते ॥ ५ ॥
एकचक्रं महाराज्यं दशसाहस्रयोजनम् ।
वीक्ष्याऽऽगत्य यमी स्नात्वा दिलावर्यां स्थिरोऽभवत् ॥ ६ ॥
कोटिपरार्धरत्नानि राजदत्तानि चाऽनयत् ।
तानि सर्वाणि च वासुदेवसात्कृत्य वै ततः ॥ ७ ॥
स्वयं व्रतं प्रजग्राह सदैवात्मनिवेदनम् ।
सर्वदा भगवद्भक्तिमयं पत्नीयुतो नृपः ॥ ८ ॥
यमुनायास्तटे रम्ये कारयित्वा सुगह्वरम् ।
प्रस्थाप्य पितृभगवत्प्रतिमां तत्र कानकीम् ॥ ९ ॥
अनादिश्रीकृष्णनारायणाख्यां शोभनां शुभाम् ।
सर्वदा सर्वथा तस्याः सेवापरोऽभवन्नृपः ॥१०॥
जटाधृक् सुवल्कलाढ्यः करमालाधरस्तथा ।
सुसाधुवेषोऽन्तर्वृत्तिमूर्तिध्यानादिमानसः ॥११॥
बभूव सर्वदा बद्रि! योगिराडिव मुक्तिगः ।
सर्वः कर्मकलापश्च कृतस्तेन हरेः कृते ॥१२॥
पृथ्वीतत्त्वं देहगं च कृतं हर्यर्थमेव तत् ।
जलतत्त्वं च देहस्थं कृतं हर्यर्थमित्यपि ॥१३॥

वह्नितत्त्वं शरीरस्थं कृतं हर्यर्थमन्वहम् ।
वायुतत्त्वं देहगं च कृतं हर्यर्थमुत्तमम् ॥१४॥
व्योमतत्त्वं च देहस्थं कृतं हर्यर्थमम्बरम् ।
शब्दः स्पर्शो रसो रूपं गन्धो हर्यर्थमित्यमी ॥१५॥
पादौ प्रदक्षिणं कर्तुं योजितौ श्रीहरेस्तथा ।
हस्तौ कृष्णस्य सेवायां सर्वथा योजितौ सदा ॥१६॥
वाणी कृष्णस्य कीर्तौ च व्यापारिता स्तवादिषु ।
पायूपस्थेन्द्रिये तेन कृते शीले च संयमे ॥१७॥
नेत्रे तु योजितेऽनादिकृष्णरूपादिदर्शने ।
श्रोत्रे कृते हरेः शब्दग्रहणे नियमान्विते ॥१८॥
त्वङ्नित्यं स्थापिता कृष्णसम्बन्धिवस्तुयोगिनी ।
रसना कृष्णनैवेद्यरसमात्राभिवर्तिनी ॥१९॥
घ्राणं कृष्णस्य सुरभेर्ग्रहे सदा विनिर्मितम् ।
प्राणान् सर्वान् जपगर्भान् चक्रे कृष्णार्थजीवनः ॥२०॥
मस्तकं नमने चक्रे योजितं श्रीहरेः सदा ।
कण्ठं चकार भगवत्स्वरालापगुणोदये ॥२१॥
हास्यं हरेः समीपे भ्रूकुटिं चक्रे हरेः कृते ।
निमेषं भगवन्निमिषं क्षुवनं नामसंगतम् ॥२२॥
ओष्ठयोर्मेलनं कृष्णप्रसादाद्यादिलेहने ।
जिह्वाया भ्रमणं चास्ये कृष्णप्रसादमार्गणे ॥२३॥
वर्णस्थानानि सर्वाणि चक्रे कृष्णाभिधाकृते ।
ग्रीवां चक्रे हरेः स्रग्भिर्भूषितां चन्दनादिभिः ॥२४॥
जाग्रतिः स्पष्टमूर्त्यर्थे निद्रा मानसमूर्तये ।
सुषुप्तिस्तुर्यरूपे च कृष्णार्थे तेन योजिता ॥२५॥
खर्जनं मोडनं देहत्रोडनं शयनं तथा ।
आसनं गुण्ठनं संकोचनं चक्रे हरेः कृते ॥२६॥
उत्तानं भूप्रतानं च पार्श्वतानमधःस्थितम् ।
स्वस्तिकाद्यासनभेदान् चक्रे कृष्णे प्रयोजितान् ॥२७॥
दण्डवत् करणे नेत्रे करौ पादौ मनः शिरः ।
वक्षश्चेत्यष्टकं चक्रेऽञ्जलिं कृष्णस्य सन्निधौ ॥२८॥
मालिकाऽऽवर्तने सर्वाङ्गुलीश्चक्रे सुयोजिताः ।
हस्ततलेऽङ्गुष्ठयुक्ते चक्रेऽर्हणे हरेः स वै ॥२९॥
प्रकोष्ठयोः क्रियाः कफोणिकयोश्च क्रियास्तथा ।
स्कन्धयोश्च क्रियाश्चक्रे कृष्णकार्यविधापने ॥३०॥
नितम्बयोश्च पृष्ठस्योदरस्य नलयोः क्रियाः ।
नाडीनां वायुसञ्चारांश्चक्रे कृष्णक्रियायुताः ॥३१॥
हृदयस्य धमनीत्वं चक्रे कृष्णक्रियान्वितम् ।
रोम्णां वलीनामस्तित्वं सर्वं कृष्णार्थमस्य वै ॥३२॥
सक्थ्नोश्च जंघयोः पुष्टिर्धातूनां क्लृप्तिरित्यपि ।
भोजनं पानमास्वादश्चास्य कृष्णकृतेऽभवन् ॥३३॥
देहसंशोधनं भूषावेषशृंगारमार्जनम् ।
द्रवद्द्रव्यप्रदानं च सर्वं कृष्णार्थमस्य वै ॥३४॥
रोम्णां स्नेहोद्गमश्चापि तथेन्द्रियप्रमोदनम् ।
कृष्णप्रमोदप्रीत्यर्थे रागस्तस्याऽभवत् सदा ॥३५॥
आदानं गमनं तृप्तिस्तपः संयम उत्थितिः ।
आलस्यं स्मरणं रोधः सर्वमस्य हरेः कृते ॥३६॥
मुष्टिः प्रसृतिरस्याप्यञ्जलिर्व्यङ्गुलिविस्तरः ।
फणाप्रसार एवापि सर्वमस्य हरेः कृते ॥३७॥
नखनिकृन्तनं रोमनिकृन्तनं च कम्पनम् ।
नर्तनं गायनं भावा धावनं च हरेः कृते ॥३८॥
चाञ्चल्यं च मुनित्वं च बहिरान्तरवर्तनम् ।
उद्गारश्चापि हिक्का च व्यात्तत्वं च हरेः कृते ॥३९॥
अक्रियत्वं सक्रियत्वं व्यापारा वर्ष्मणस्तथा ।
स्नानं सन्ध्या जपो होमः सर्वं तस्य हरेः कृते ॥४०॥
लेखनं वाचनं पुष्पपत्राद्याधारणं तथा ।
पूजोपकरणाऽवाप्तिः सर्वमस्य हरेः कृते ॥४१॥
यानवाहनयोगाश्च नरनार्यभिमेलनम् ।
प्रजाप्रदर्शनं चापि सर्वमस्य हरेः कृते ॥४२॥
मन्त्रणाऽनुमतिः कार्ये क्वचित्कार्योऽवलोकनम् ।
निर्वृत्तिः सम्मतिर्वापि सर्वमस्य हरेः कृते ॥४३॥
देशावलोकनं श्रेष्ठोत्सवाभिगमनं शुभम् ।
शोभा प्रवृत्तिरेवापि सर्वमस्य हरेः कृते ॥४४॥
राजोत्सवाः सैन्यशोभोत्सवा देवोत्सवास्तथा ।
व्रतोत्सवाश्च दानानि सर्वमस्य हरेः कृते ॥४५॥
यज्ञाः परोपकाराश्च न्याया दण्डाः प्रशिक्षणम् ।
स्मृद्धयः सम्पदश्चापि सर्वमस्य हरेः कृते ॥४६॥
उदयास्तमयौ तस्य मध्यान्हं संगवस्तथा ।
सन्ध्या वेला ब्राह्मकालो निशा चास्य हरेः कृते ॥४७॥
ऋतवश्चौष्ण्यशैत्यादि वृष्टयश्चातपास्तथा ।
वातं घर्मोऽग्निसंज्वालाप्राकट्यं च हरेः कृते ॥४८॥
सत्कारः स्वागतं चार्घ्यं मधुपर्कः सुगन्धनम् ।
सम्मानं च महीमानागमश्चाऽस्य हरेः कृते ॥४९॥
आयव्ययौ च कृष्णार्थौ कोशाः कृष्णार्थकास्तथा ।
दासा दास्यो भृत्यवर्गाः सर्वे कृष्णकृतेऽस्य वै ॥५०॥
संकल्पो मननं बोधश्चिन्तनं तृप्तिरित्यपि ।
ध्यानं च भवनं प्रत्यभिज्ञानं स्मरणं धृतिः ॥५१॥

भक्तिः प्रीतिः स्थितिर्मानं सर्वमस्य हरेः कृते ।
आत्मसंवेदनं चात्मभोगः साक्षात्स्ववृत्तिता ॥५२॥
निजानन्दश्च सन्तोषः सर्वमस्य हरेः कृते ।
एकान्तसेवनं चापि श्वसनं जीवनं रतिः ॥५३॥
आहारश्चोपवासश्च सर्वमस्य हरेः कृते ।
आत्मनो देहवासश्च तथा वस्त्रादिधारणम् ॥५४॥
गह्वरे च गृहे वासो वृक्षेऽस्यापि हरेः कृते ।
निभालयति राजाऽसौ चात्मन्यात्मानमच्युतम् ॥५५॥
सर्ववस्तुषु सर्वत्र निभालयति माधवम् ।
ऋषयो मुनयो देवास्तीर्थानि मूर्तिमन्ति च ॥५६॥
तदाश्रयं समागत्य दृष्ट्वा प्रयान्ति नित्यशः ।
सत्यश्च साधवः साध्व्यो योगिन्यो योगिनस्तथा ॥५७॥
विरक्ता ब्रह्मसंसक्ता ज्ञानिनो ध्यानिनस्तथा ।
परितस्तस्य तिष्ठन्ति दिव्याश्रमस्य सीमसु ॥५८॥
कृष्णकथाः प्रवर्तन्तेऽनुवेलं चाध्वरा जपाः ।
वेदघोषाः कीर्तनानि प्रवर्तन्तेऽस्य चाश्रमे ॥५९॥
अभिषेका देवपूजा बलयो भोजनानि च ।
चरवो देवकार्याणि नीराजनानि चाभितः ॥६०॥
सुघण्टाझल्लरीनादाः प्रवर्तन्तेऽभितोऽस्य च ।
शंखनादा जयनादाः कृष्णकृष्णेतिघोषणाः ॥६१॥
अपि सिंहा मृगाः सत्त्वाः पक्षिणः पशवस्तथा ।
कीटाश्चेताः पतंगाश्च वदन्ति ब्रह्मगायनम् ॥६२॥
यादांसि भूमिगर्तस्था वृक्षकोटरवासिनः ।
त्वावासाः पत्रवासाश्च वदन्ति ब्रह्मशाश्वतम् ॥६३॥
वृक्षाश्च वल्लिकाश्चापि स्मरन्ति ब्रह्म शाश्वतम् ।
प्रतिशब्दैश्च गर्जन्ति पर्वता गर्तिका जडाः ॥६४॥
एवमस्याऽभवद्भक्तिः कृष्णनारायणे सदा ।
बद्रिके नृपतेर्योगात् प्रजाः सर्वा नराः स्त्रियः ॥६५॥
वैष्णव्यः सर्वथा दिव्या अजायन्त भुवस्तले ।
प्रसादं पितरश्चापि लभन्ते देवता ग्रहाः ॥६६॥
पूजां लभन्ते वृषदो हरिः सर्वत्र पूज्यते ।
मानवे मानवे कण्ठी जपमालाऽस्य वर्तते ॥६७॥
मानवे मानवे मूर्तिर्नारायणस्य वर्तते ।
ग्रामे ग्रामे मखश्चाऽपि वैश्वदेवः प्रतिद्विजम् ॥६८॥
गोपुरे गोपुरे कृष्णमूर्तिगोप्रासशोभना ।
नार्या नार्या विभूषासु कृष्णाभिधानमस्त्यपि ॥६९॥
शस्त्रे शस्त्रे हरेर्नाम सर्वेषूपस्करेष्वपि ।
आपणे आपणे मूर्तिर्नारायणस्य वर्तते ॥७०॥
ग्रामे ग्रामे मध्यभूमौ कृष्णनारायणस्य वै ।
मन्दिरं वर्तते श्रेष्ठं पत्तने पत्तनेऽपि च ॥७१॥
प्रातः सायं हरेर्लक्ष्मीस्वामिनश्च प्रपूजनम् ।
नीराजनानि जायन्ते घण्टादिनादनान्यपि ॥७२॥
स्तुतयः सम्प्रवर्तन्ते गीतयः कीर्तनान्यपि ।
नैवेद्यानि प्रदीयन्ते ताम्बूलानि जलानि च ॥७३॥
प्रसादाश्च प्रभुज्यन्ते पीयतेऽमृतवारि च ।
बद्रिके प्रत्यहं ग्रामे ग्रामे सायं कथाः शुभाः ॥७४॥
लक्ष्मीनारायणसंहितायाः भवन्ति भूतले ।
एवं वै वैष्णवी भूमिर्जाता मुकुन्दतन्मयी ॥७५॥
मुकुन्दविक्रमो राजा तापसो नित्यमेव च ।
प्रातरुत्थाय कृष्णस्य करोति ध्यानमन्वहम् ॥७६॥
स्नात्वा पितृगणेभ्यश्च तर्पणं प्रकरोति च ।
सूर्याराधनमेवाऽपि सन्ध्यावन्दनमित्यपि ॥७७॥
हरेः पूजां प्रतिमायां करोति लग्नमानसः ।
आवाहनं स्वर्णसिंहासने कृत्वा ततः परम् ॥७८॥
पाद्यमर्घ्यं समर्प्याऽऽचमनीयकं ददात्यपि ।
दन्तधावनमेवापि शौचजलं ददात्यपि ॥७९॥
हस्तपादादिशुद्ध्यर्थं मृदं चूर्णं ददात्यपि ।
गण्डूषार्थं जलं पात्रमञ्जनं प्रकरोत्यपि ॥८०॥
कृष्णमूर्तौ सुगन्धिभृत्तैलसारं ददात्यपि ।
अर्कसारं रससारं ददाति मर्दनं श्रपि ॥८१॥
चन्दनं च सुगन्धं च ददाति पञ्चगव्यकम् ।
दुग्धं दधि घृतं क्षौद्रं शर्करां तीर्थवार्यपि ॥८२॥
अभिषेकं कारयित्वा मार्जनं प्रकरोत्यपि ।
वस्त्रदानं विभूषाणामर्पणं च करोत्यपि ॥८३॥
शृङ्गारं विविधं सर्वं करोति कृष्णवर्ष्मणि ।
केशप्रसाधनं तैलप्रदानं पुष्पयोजनम् ॥८४॥
नेत्रयोः कज्जलं भाले तिलकं चन्द्रकं शुभम् ।
कस्तूरिकां चन्दनं च मालिकां रत्नमालिकाम् ॥८५॥
हारान् तुलसीपत्राणि तथा यज्ञोपवीतकम् ।
अक्षतान् कुंकुमं चापि गुलालं प्रददात्यपि ॥८६॥
अबीलं चोत्तरगन्धं गुच्छं रंगादिरञ्जनम् ।
धूपं दीपं च नैवेद्यं फलं ताम्बूलकं जलम् ॥८७॥
करोद्वर्तनकं चापि ददाति नक्तकं ततः ।
शय्यां सुशोभनां सर्वोपस्कारसहितां तथा ॥८८॥
प्रेंखां ददाति भावेन व्यजनं पवनप्रदम् ।
छत्रं सुचामरे यष्टिं पत्राणे मुकुटादिकम् ॥८९॥

यानं च वाहनं चापि भ्रमणं गृहखेलनम् ।
मध्याह्ने भोजनं चापि ददाति श्रीविलासिने ॥९०॥
पादसंवाहनं चापि विश्रामं शयने शुभे ।
उत्थानं भ्रमणं सायं महोद्याने ददात्यपि ॥९१॥
खेलनं चापि सन्ध्यायामारात्रिकं करोति च ।
स्तवनं पूजनं चापि भोजनं पायसार्पणम् ॥९२॥
जलार्पणं मुखवासं शयनं च ददात्यपि ।
अंगानां मर्दनं चापि करोति सुखकृद्धरेः ॥९३॥
प्रदक्षिणं दण्डवच्च सेवनं विविधं तथा ।
कथायाः श्रवणं कृष्णकीर्तनं स्मरणं हरेः ॥९४॥
दास्यं चात्मार्पणं चापि करोति कृष्णतोषणम् ।
एवं कर्मकलापं श्रीशार्थे मुकुन्दविक्रमः ॥९५॥
करोति सर्वदा बद्रि नारायणपरायणः ।
तद्भार्या च सती मुक्तिबालेश्वरी विरागिणी ॥९६॥
वैष्णवी पतिवत् सर्वाः क्रियाः कृष्णार्थसंभृताः ।
करोति पतिसेवाढ्या श्रीकृष्णार्पितमानसा ॥९७॥
देहनिर्वाहयोग्यं यत् सर्वं कृष्णार्थमेव तत् ।
पतिसेवोपयोग्यं यत् सर्वं कृष्णार्थमेव तत् ॥९८॥
इत्येवं बद्रिके तेन मुकुन्दविक्रमेण वै ।
अर्पितं श्रीहरौ दिव्यादिव्याचरणमात्मनः ॥९९॥
वैकुण्ठमपरं भूमौ गोलोकश्चापरः क्षितौ ।
कृतस्तेन हरेर्भक्त्याऽवतारित इवोत्तमः ॥१००॥
गृहे गृहे चमत्काराः प्रजायन्ते नवा नवाः ।
साक्षात् कृष्णहरिर्भक्त्या भक्तदृष्टौ प्रयाति च ॥१०१॥
अनेके ब्रह्मवेत्तारो जीवा नार्यो नरास्तदा ।
प्रयान्ति परमं धाम श्रीहरेः परमात्मनः ॥१०२॥
एवं सत्ययुगस्तत्र मुकुन्दविक्रमे नृपे ।
अवर्तताब्धिपर्यन्तं देवमानवसदृशः ॥१०३॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
मुकुन्दविक्रमस्य राज्ञो भगवत्परायणतादिवर्णननामा
द्वादशाऽधिकशततमोऽध्यायः ॥ ११२ ॥

**श्रीनरनारायण उवाच—**

अथ श्रीभगवान् बद्रि कृष्णनारायणः प्रभुः ।
वर्तते कुंकुमवाप्यां सर्वसौख्यप्रदस्तदा ॥ १ ॥
वासुदेवसहायार्थं पुत्रास्तेन परेऽपि च ।
प्रेषिता राज्यपुष्ट्यर्थं कलाशास्त्रविशारदाः ॥ २ ॥
श्रियाः पुत्रो रासकृष्णश्चोपप्रधानकोऽभवत् ।
प्रज्ञापुत्रो ब्रह्मप्रभुः सैनापत्यमरक्षयत् ॥ ३ ॥
पद्मावतीसुतोऽनन्तः कारागाराऽधिपोऽभवत् ।
ललितायाः सुतो लालेश्वरो राष्ट्राधिपोऽभवत् ॥ ४ ॥
जयाया विजयः पुत्रश्चोपमन्त्री तदाऽभवत् ।
माणिक्याः कौस्तुभमणिन्र्यायप्रदोऽभवत् तदा ॥ ५ ॥
कमलायाः पद्मनाभः सभाध्यक्षोऽभवत् सदा ।
रमासुतो रामसाक्षी विद्याधिकारवानभूत् ॥ ६ ॥
राधात्मजो राधकेशी कोशाध्यक्षोऽभवत्तदा ।
नारायण्या नरदेवश्चोपसैन्याधिपोऽभवत् ॥ ७ ॥
ब्राह्मयाः सुतो ब्रह्मरातो राजपुरोहितोऽभवत् ।
भागवत्याः सुतो भर्गो यज्ञकार्यकरोऽभवत् ॥ ८ ॥
ऊर्जबलाद्या ये चाऽन्ये खण्डपालाश्च तेऽभवन् ।
द्वादशोर्ध्वशतानां तु पुत्रास्तं वै यथायथम् ॥ ९ ॥
इयुक्तव्यवसायेषु योजितास्तेऽभवँस्तदा ।
एवं राज्यं महानन्दप्रदं चाऽभूत्तदाऽभितः ॥१०॥
बदरि ! तं सुतस्तत्र बादरायणसंज्ञकः ।
ज्ञानदो दानदश्चासीद् दक्षिणादिप्रदायकः ॥११॥
प्रजाश्च ज्ञानमासाद्य विदेहा इव चाऽभवन् ।
साक्षात्प्रभोर्ज्ञानवत्यो यात्रार्थमश्वसारसम् ॥१२॥
द्रष्टुं नारायणं कृष्णं चायान्ति यान्ति वै मुहुः ।
अश्वपट्टसरस्तीर्थे तीर्थोत्तमोत्तमोत्तमम् ॥१३॥
व्यजायत हरेर्वासादाक्षरं क्षेत्रमुत्तमम् ।
आगत्य च महाभक्ताः कृष्णनारायणस्य तु ॥१४॥
प्रयान्ति चाऽक्षरं धाम परमं दिव्यमद्भुतम् ।
केचित् समाधिमासाद्य गत्वा चायान्ति तत् पुनः ॥१५॥
वर्णयन्ति हरेर्धामाऽक्षरं तत्परमं पदम् ।
श्रुत्वा श्रुत्वाऽपरे लोका मोदन्ते सात्त्वतोत्तमाः ॥१६॥
प्रशंसन्ति हरेर्धामाऽक्षरं तत्परमं पदम् ।
गोलोकाच्चापि वैकुण्ठादुत्तमं परमं पदम् ॥१७॥
यत्रैताः श्रीहरेः पत्न्यो मुक्तानिकात्मिकाः सदा ।
विराजन्तेऽनादिकृष्णनारायणस्य सेविकाः ॥१८॥
श्रुत्वैवं बद्रिके शंसां जिज्ञासा कृष्णयोषिताम् ।
उत्पन्ना वीक्षितुं दिव्यं धामाऽक्षरं सुखास्पदम् ॥१९॥
शाश्वतं ब्रह्मलोकं तं दिव्यं स्वस्वविराजितम् ।
अथाऽर्थनां तु ता नार्यश्चक्रुः स्वामिपतिं प्रति ॥२०॥
शाश्वतस्याऽक्षरधाम्नो लोकितुं दिव्यसम्पदः ।
हरिः प्राह तदा स्त्रीभ्यो न द्रष्टव्यं तथाऽधुना ॥२१॥

यस्य वै दर्शने तत्र स्थातुं मनः प्रजायते।
पुनरागमने नैव मतिर्भवति देहिनाम् ॥२२॥
मद्धामाऽग्रेऽन्यधामानि निस्तेजांसि विभान्ति वै।
ईश्वराणां निलयास्तु भासन्ते निरया इव ॥२३॥
अक्षरस्य मम धाम्नो रसे पीते ततस्त्विह।
पानं निःस्वादेव स्यान्मायामयं रसक्षयम् ॥२४॥
अक्षरस्य मम धाम्नो मिष्टान्ने भक्षिते त्विह।
भोजनं स्वादहीनं स्यान्मायामयं रसक्षयम् ॥२५॥
अक्षरस्य सुगन्धे तु गृहीतेऽत्र तु सौरभः।
न्यक्कार एव दुर्गन्धरूपः स्यान्मायिकः खलु ॥२६॥
अक्षरस्याऽऽस्वादिते तु पायसे कामधेनुजे।
मायामयानि दुग्धानि भवन्ति नीरसानि वै ॥२७॥
अक्षरस्य फलपुष्पाद्यलंकारे तु वीक्षिते।
भुक्ते सत्यत्र पुष्पादि क्लेदवत् संभवन्ति वै ॥२८॥
तत्रत्यसम्पदां भोगे भोगाश्चात्र पुरीषवत्।
तत्रत्यानां विभूतीनां वीक्षणेऽन्यत् कुरूपवत् ॥२९॥
कुष्ठवज्जायते पल्न्यस्तस्मान्न वीक्षणं वरम्।
इदानीं वै भवतीनां प्रमन्ये तु विरागकृत् ॥३०॥
इह लोके निवासे तद् विघ्नकर्तृ भविष्यति।
आयुषोऽन्ते दिव्यधाम द्रष्टव्यं नाऽधुना ह्यतः ॥३१॥
इत्येवं बोधिताः पत्न्यो नोचुर्नारायणं प्रति।
किन्तु तीव्रतमा तासां दिदृक्षा संव्यजायत ॥३२॥
कीदृश्यो वै वयं तत्र वर्ण्यमाना तु योगिभिः।
भवामश्च हरिस्तत्र कीदृग् भवेत् प्रसुन्दरः ॥३३॥
यावद् वयं न पश्यामस्तावच्छान्तिर्न वै मता।
दिदृक्षायाश्च वै नित्यं प्राबल्यं संप्रवर्धते ॥३४॥
विचार्येत्थं दिनेऽन्यस्मिन् प्राहुः पद्मावतीं प्रियाम्।
भगिनि श्रीहरेः पत्नि प्रिये मान्या मताऽसि वै ॥३५॥
भवत्या संप्रार्थनीयोऽस्मत्पतिः वल्लभः प्रभुः।
धामदर्शनलाभार्थे त्वद्वचः पालयिष्यति ॥३६॥

**श्रीनरनारायण उवाच—**

सपत्नीभिस्तु सर्वाभिः प्रेरिता माधवीप्रिया।
प्रार्थयामास तद्धामदर्शनार्थे स्ववल्लभम् ॥३७॥

**श्रीपद्मावतीप्रिया प्रोवाच—**

परमप्रिय नाथ त्वं दयालो निजयोषितः।
दर्शयाऽक्षरधामाऽद्य सर्वासां त्वं कृपां कुरु ॥३८॥
पुनस्त्वमत्र चानेतुं समर्थोऽसि महाप्रभो।
आनेतव्याः प्रियाः सर्वाः पूरयित्वा मनोरथान् ॥३९॥
अथाऽन्याः कोट्यर्बुदाब्जान्यपि चक्रुस्तथाऽर्थनाम्।
प्रदर्शय प्रभो स्वामिन् धामाऽक्षरं परं तव ॥४०॥
सर्वा वयं समिच्छामो वीक्षितुं धाम चाऽक्षरम्।
सर्वसंकल्पितं स्वामिन् पूरयितुं स्ववाञ्छया ॥४१॥
समर्थोऽसि पुनश्चाऽत्राऽऽनेतुं शक्तोऽसि सर्वथा।
तस्माद्धामाक्षरं नैजं प्रदर्शय पते हरे ॥४२॥

**श्रीनरनारायण उवाच—**

इत्येवं बद्रिके सर्वा ब्रह्मप्रियाश्च योषितः।
चक्रुः सम्प्रार्थनां तीव्रामशाम्यामनिवर्तिनीम् ॥४३॥
हरिर्विज्ञाय भावं च निजेच्छयोत्थितं तदा।
विस्तारं चापि संहर्तुं स्वयं चैयेष तन्मिषात् ॥४४॥
तथाऽस्त्वोमिति ताः प्राह भगवान् सर्वभावनः।
ताश्च सर्वाः प्रसन्नाश्च जाता वीक्षितुमक्षरम् ॥४५॥
बद्रिके भगवान् सर्वाः प्राह सज्जा भवन्त्विति।
कोट्यर्बुदाऽब्जपत्न्यस्ताः श्रुत्वाऽऽज्ञां स्वामिनः शुभाम् ॥४६॥
सवेषभूषाशृंगाराः स्वेष्टोपकरणान्विताः।
अत्युत्साहभरा नार्यः सज्जास्तूर्णं तदाऽभवन् ॥४७॥
अमूल्याऽम्बरधारिण्यः केशवेषातिशोभनाः।
स्वर्णरत्नमणीन्द्राढ्यहारभूषाद्यलंकृताः ॥४८॥
तेजोऽभिवर्धिता दिव्या युवत्यो नैकरंगिकाः।
सज्जा द्रुतं वीक्षितुं चाऽक्षरं धामाऽभवन् मुदा ॥४९॥
मिथः प्रमोदवचनान्यब्रुवन् स्नेहसंभृताः।
आल्यो नाथेन कृष्णेन सनाथा वै वयं सदा ॥५०॥
कान्तेन कृपयाऽस्मभ्यो दर्शितं क्षितिमण्डलम्।
ततः स्वर्गानि सर्वाणि पातालान्यप्यशेषतः ॥५१॥
दर्शितानीश्वराणां च गृहाणि विविधान्यपि।
ईशसृष्टिः समस्ता नो दर्शिता परमात्मना ॥५२॥
वैकुण्ठं चापि गोलोको धामाऽव्याकृतमित्यपि।
अमृतं श्रीपुरं श्रेष्ठं दर्शितानि दयालुना ॥५३॥
परं धामाऽक्षरं तस्य स्वामिनः सर्वतोऽधिकम्।
द्रक्ष्यामोऽद्य महाभाग्यवत्यः स्मोऽत्र हरेः प्रियाः ॥५४॥
नाऽन्यासां तादृशं भाग्यं यदस्माकं प्रवर्तते।
मूलं गृहं स्वामिनो नो द्रक्ष्यामः शाश्वतं पदम् ॥५५॥
श्रुतयोऽपि न पश्यन्ति न पश्यन्त्यपि योगिनः।
ईश्वरा नैव पश्यन्ति तद् द्रक्ष्यामो हरेः पदम् ॥५६॥

यदत्र भगवानस्मदग्रे किरोति वर्णनम् ।
भवतीनां स्वरूपाणि सन्त्यक्षरे परे पदे ॥५७॥
दिव्यातिदिव्यदिव्यानि स्वरूपाणि स्वयोषिताम् ।
तानि रूपाणि चाऽस्माकं द्रक्ष्यामोऽद्य कृपालवात् ॥५८॥
दिव्यं स्वस्वामिनं चाऽऽलयो द्रक्ष्यामस्तत्र संस्थितम् ।
असंख्यमुक्तजुष्टं चाऽसंख्याऽवतारधारिणम् ॥५९॥
अनन्तदिव्यवामाभिः सेवितं स्वामिनं हरिम् ।
अनादिश्रीकृष्णनारायणं द्रक्ष्याम उत्तमम् ॥६०॥
भोक्ष्यामो दिव्यभोगाँश्च वत्स्यामश्च यथेप्सितम् ।
रंस्यामहे महानन्दप्रदेन परमात्मना ॥६१॥
उद्यानानि समस्तानि मन्दिराणि शुभानि च ।
ब्रह्महदान् ब्रह्मनदीर्द्रक्ष्यामः परमात्मनः ॥६२॥
दिव्यसिंहासनादीनि दिव्यसंसद्स्थलानि च ।
दिव्यरासविहाराँश्च द्रक्ष्यामः कृपया हरेः ॥६३॥
दिव्यसुधाः प्रपास्यामो वेत्स्यामो निजसम्पदः ।
अत्स्यामो मिष्टभोज्यानि श्रीहरेर्ब्रह्मधामनि ॥६४॥
इत्येवं वदमानास्ता ब्रह्मप्रिया हरिप्रियाः ।
कृष्णप्रियाश्च ताः पत्न्यः सज्जास्तदाऽभवन् द्रुतम् ॥६५॥
बद्रिकेऽनादिकृष्णश्रीनारायणः समुत्सुकः ।
सस्मार मुक्तवृन्दानि तदा स्वाऽक्षरधामतः ॥६६॥
आययुर्दिव्यरूपाश्च दिव्याऽसंख्यविमानगाः ।
दिव्यविमानिनश्चापि दिव्यविमानवाहकाः ॥६७॥
आययुस्ताः समानेतुं सृष्ट्यावरणवर्जिताः ।
कुंकुमवापिकाक्षेत्रोर्ध्वेऽम्बरे तेऽभवन् स्थिराः ॥६८॥
पुष्पाणां दिव्यगन्धानां चक्रुः कृष्णे प्रवर्षणम् ।
वादयामासुरत्यर्थं दिव्यवाद्यानि वै तदा ॥६९॥
देवाद्या दर्शनं कर्तुमाययुर्द्युनिवासिनः ।
कृष्णनारायणश्चाज्ञापयामास निजप्रियाः ॥७०॥
मातरं पितरं चापि दासान् दासीश्च वै तदा ।
ऋषीन् महर्षीन् साधूँश्च साध्वीश्च सेवकाँस्तथा ॥७१॥
यमलानि सहस्थानि स्वापत्यानि तदाऽपि च ।
आरोढुं च विमानेषु दिव्येषु क्रमशः खलु ॥७२॥
पत्न्यः सर्वा निषेदुश्च दास्यो दासाश्च बालकाः ।
सेवकाः पितरौ चापि निषेदुस्तेषु चाम्बरे ॥७३॥
सत्यश्च साधवश्चापि परीहारपरायणाः ।
निषेदुस्ते विमानेषु मुक्तैः सह क्षणान्तरे ॥७४॥
शंखनादोऽभवत्तूर्णं ततः सञ्चारबोधकः ।
न कश्चिद्वा काचिदपि ऽछिष्यते भूतले यथा ॥७५॥
कुंकुमवापिकाक्षेत्रं क्षणं शून्यमिवाऽभवत् ।
विमानेषु स्थिताः सर्वनारीनरादिकोटयः ॥७६॥
पुनर्वै शंखनादोऽभूत् कृष्णनारायणस्य ह ।
न कश्चिच्छिष्यते पृथ्व्यां धामनिर्गमिषार्थवान् ॥७७॥
अथ कृष्णश्चकाराऽपि शंखनादं तृतीयकम् ।
विमानानि तदा श्रीमद्व्योमशेनाऽन्वितानि वै ॥७८॥
असञ्चरन् व्योममार्गे क्षणाददृश्यतां ययुः ।
विभिद्य सप्तनाकानि तथाऽष्टावरणान्यपि ॥७९॥
ईश्वराणां च धामान्युल्लंघ्याऽक्षरपदं ययुः ।
अक्षरस्य तदा सीम्नि शारदीपूर्णिमातिथौ ॥८०॥
वेगवन्ति विमानानि मध्याह्ने त्वक्षरं ययुः ।
ब्रह्महदे हरिः सर्वान् स्नापयित्वा विमानगान् ॥८१॥
नराञ्नारीः समस्तांश्च कृत्वा तद्योग्यविग्रहान् ।
दिव्यान् दिव्यस्वरूपांश्च ब्रह्मदेहान् समस्तकान् ॥८२॥
अजराऽमरसदृशरूपाञ्जिजस्वरूपिणः ।
शाश्वतान् चैकतत्त्वाख्यान् सच्चिदानन्दविग्रहान् ॥८३॥
धामयोग्यैश्वर्यसिद्धिगुणशक्तिसमन्वितान् ।
कृत्वाऽवस्थाप्य च पुनर्विमानेषु समस्तकान् ॥८४॥
ययावग्रे हरिः स्वामी नैकरूपधरः प्रभुः ।
सर्वान्नीत्वा सहैवाऽग्रे परमाक्षरधामनि ॥८५॥
अथापि बद्रिके दिव्याऽपारतेजोऽभिसम्पदम् ।
आक्षरं व्योम संवीक्ष्य क्षणं ते स्तब्धतां गताः ॥८६॥
तदा श्रीभगवाँस्तेषु मुक्तेष्वाविश्य सत्वरम् ।
शक्तीर्निजा धामयोग्याः प्रददौ तेभ्य आक्षरीः ॥८७॥
अथाश्चर्यं महत्प्राप्ताः किमेतत् पुरुषा वयम् ।
नारीत्वं विगतं सर्वमभवामो नरोत्तमाः ॥८८॥
पुरुषोत्तमरूपाः स्वस्वामिरूपाश्च सर्वथा ।
भवामोऽत्र किमेतद्वै महाश्चर्यमिदं त्विह ॥८९॥
ब्रह्मप्रियादिकमुक्ताः पप्रच्छुः परमेश्वरम् ।
किमत्र भगवाञ्जोऽस्ति पुंस्त्वं तत्कारणं वद ॥९०॥
श्रुत्वा तु बद्रिकेऽनादिकृष्णनारायणो हरिः ।
प्राह स्त्रीयांगकोटिभ्यः शृण्वन्तु मम चांऽगनाः ॥९१॥
माया या प्रकृतिः प्रोक्ता मम शक्तिस्वरूपिणी ।
सा सधा कृष्णपत्नी च मया स्वस्मात् प्रकाशिता ॥९२॥
मुक्तरूपाऽतिरूपाढ्या मुक्तगन्धातिगन्धिनी ।
मुक्तस्नैग्ध्यातिस्नैग्ध्याढ्या चाकचिक्यातिशोभना ॥९३॥
सुबाला पेशला तन्वी सर्वलावण्यशेवधिः ।
सर्वाकर्षणधर्माढ्या दर्शनीयाऽतिसुन्दरी ॥९४॥

विचित्रां चक्षुरन्तां तां च वीक्ष्य विसृज्य मां च वै ।
मुक्ताः स्निग्धाः परब्रह्म मत्वा तां मत्स्वरूपिणीम् ॥९५॥
दध्युरानर्चुरेतां च सिषेविरे महेश्वरीम् ।
नवधा गधिकायास्तु भक्तिं चक्रुर्विशेषतः ॥९६॥
विदन्तो मां तदाकृष्टास्तन्मयास्तेऽभवँस्तदा ।
अथाऽहं मत्प्रभावं तं ज्ञात्वा मुक्तवशंकरम् ॥९७॥
कृष्णं रूपं समास्थाय चाऽपाऽसरं तदाऽक्षरात् ।
गोलोकं वासयामास सदा तत्र स्थितोऽभवम् ॥९८॥
मूलरूपोऽक्षरेऽप्येवाऽवसं मुक्तामिसेवितः ।
तदाऽसंकल्पयं चाऽत्राक्षरे धाम्नि परे मम ॥९९॥
प्रकृतिर्वापि राधा वा माणिकी लक्ष्मीरित्यपि ।
ब्रह्मप्रियाश्च वा कृष्णप्रिया हरिप्रियाश्च वा ॥१००॥
ईशान्यश्चेश्वराण्यो वा मुक्तान्यो भक्तयोषितः ।
मन्मूर्तेः शक्तयो वापि चाऽवतारस्त्रियोऽपि वा ॥१०१॥
आगच्छेयुर्मम धाम्न्यक्षरे परमधामनि ।
तदा नार्यो नरा भूत्वाऽनादिकृष्णस्वरूपिणः ॥१०२॥
आविशेयुश्च तिष्ठेयुर्विहरेयुर्ममाऽक्षरे ।
नान्यथेति नियमो वै मया शाश्वतिकः कृतः ॥१०३॥
प्रकाशं नैव नारीणां रूपमत्र प्रवर्तते ।
तदेवं भवतीनां वै मत्स्वरूपाणि चाऽक्षरे ॥१०४॥
प्रजातानि ततश्चात्र मदात्मकानि सर्वथा ।
सालोक्यसार्ष्टिसारूप्यसामीप्यैकत्ववन्ति च ॥१०५॥
अथापि बहुवारं ता राधाद्या मां समार्थयन् ।
अक्षरे निजरूपेण सेवितुं मां यथेष्टकम् ॥१०६॥
मया ततोऽतिसंवार्थं प्रतिपन्नं वदामि वः ।
यथा मुक्ता न पश्येयुर्नारीरूपं ममाऽक्षरे ॥१०७॥
तथा रहः प्रसेवन्तां मन्दिरे मम सर्वदा ।
यथेष्टरूपमाधाय पत्नीरूपाणि वै तथा ॥१०८॥
मुक्ता अपि प्रसेवन्तां चाऽप्रकाशं तथाविधाः ।
ततोऽक्षरे परे धाम्नि चात्र प्रकाशगोचराः ॥१०९॥
सर्वे नरस्वरूपा वै विचरन्ति मदात्मकाः ।
अगोचरास्तु ते सर्वे मदन्यागोचराः सदा ॥११०॥
मदंगनास्वरूपा मामुपासते मम प्रियाः ।
तथा भवन्तो मुक्ताश्च पुमांसः सन्ति गोचराः ॥१११॥
मदन्याऽगोचराः काले भवथ मत्प्रिया अपि ।
आकर्षणातिवेगेनोपासनाऽन्यत्र नो यथा ॥११२॥
भवेत् तथा निगूढाश्च प्रत्येकमात्रगोचराः ।
मद्योषितोऽन्वहं भूत्वा प्रसेवन्तां यथायथम् ॥११३॥
सर्वे मुक्ताः प्रसेवन्ते गूढकामास्तथाहि माम् ।
यथेष्टरूपधर्तारः सेवन्ते मां स्वमन्दिरे ॥११४॥
लीलामेतां मम धाम्नि न जानन्त्यपरे मिथः ।
एवमपारसामर्थ्योऽनन्तलीलादिगोचरः ॥११५॥
अतिस्नेहेन चाऽऽश्लेषं ददामि ताभ्य उत्तमम् ।
इत्युक्त्वा बद्रिके चाग्रे विमानानि व्यनोदयत् ॥११६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने श्रीहरेर्निजपत्न्यादीनां परमाऽक्षरधामाऽवलोकनप्रार्थनां स्वीकृत्य सर्वाभिः सह कोटिविमानैः परमाक्षरधामाभिगमनं, तत्र मुक्तनरस्वरूपेषु सर्वासां परिवर्तनं, तज्जिज्ञासायाः समाधानं चेत्यादिनिरूपणनामा त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

श्रीनरनारायण उवाच—

बद्रिकेऽथ विमानानि यान्ति ब्रह्महृदोत्तरम् ।
विमानस्था ब्रह्ममुक्ताः पश्यन्ति कौतुकान्विताः ॥ १ ॥
ब्रह्मरससमुद्रं वै सहस्रयोजनायतम् ।
असंख्ययोजनदीर्घं ब्रह्मानन्दरसप्रदम् ॥ २ ॥
यद्रसास्तत्र मुक्तानां शाश्वतानन्ददायकाः ।
तथा वै शाश्वततृप्तिप्रदा दिव्यसुधामयाः ॥ ३ ॥
यद्रसेषु च सामुद्रा मुक्ता वसन्त्यसंख्यकाः ।
दिव्यशाश्वतसम्मिष्टानन्दभोगातिमोदिनः ॥ ४ ॥
रत्नधराः कृष्णरूपा दिव्यकुण्डलशोभनाः ।
दिव्यमुकुटकटकादिभिर्विभूषणैर्युताः ॥ ५ ॥
खचारा व्योमचाराः सच्चिदानन्दविग्रहाः ।
यथेष्टरूपधर्तारः सपक्षाः सकराश्च वै ॥ ६ ॥
यादसां रूपधर्तारो विहंगरूपधारिणः ।
प्रशाखिरूपधर्तारो रमाश्रीरूपधारिणः ॥ ७ ॥
अनेकाश्चर्यसम्पूर्णं ब्रह्मरससमुद्रकम् ।
वीक्ष्य विमानगाश्चाग्रे ययुः पारं परं शुभम् ॥ ८ ॥
दिव्यसमस्तरत्नाढ्यं दिव्यतेजोऽभिविस्तरम् ।
दिव्यमृद्वीवालुकाभिर्व्याप्तं सर्वर्द्धिशोभनम् ॥ ९ ॥
कोटिकोट्यर्कभावद्भिर्नौकागृहैश्च कोटिभिः ।
कोटिविमानविभामैर्महाधालैः सुशोभितम् ॥१०॥
ब्रह्मतत्त्वविमानानां कोटिगृहैर्विराजितम् ।
आक्षरभूप्रदेशानां राजमार्गाभिसंगतम् ॥११॥

आगमैर्विगमैश्चापि विमानानां प्रघोषितम् ।
धामविमानयानानामवतारतलान्वितम् ॥१२॥
असंख्यमानसयन्त्रैर्वस्तुविनिमयान्वितम् ।
अपारमुक्तशालाभिव्यवसायविराजितम् ॥१३॥
आगतानां लेखशाला कोटिकोट्यभिराजितम् ।
अवतारणचिन्हाढ्यध्वजदीपाभिभासुरम् ॥१४॥
महादिव्यद्रुमोद्यानमहाराजिवनान्वितम् ।
द्वीपोपद्वीपशोभाढ्यं महाबन्धसमीकृतम् ॥१५॥
दिव्यसोपानसेत्वाढ्यं दिव्यवेलाभिशोभनम् ।
दिव्यावतारसंराजत्तीरहीरकमञ्जुलम् ॥१६॥
विश्रामशालासंख्याप्तमसंख्यधामधामिनाम् ।
असंख्यनगरावासाभिरामं ते व्यलोकयन् ॥१७॥
एतादृशं परं तीरं प्राप्य शोभां समीक्ष्य च ।
आतिवाहिकमुक्ताद्यैरर्चितास्ते विमानगाः ॥१८॥
ययुरग्रे मुदा व्याप्ता वनानि विलुलोकिरे ।
दिव्यसुगन्धिपत्राणि मिष्टपीयूषवन्ति च ॥१९॥
नेत्राऽऽह्लादप्रदाऽरण्यान्यलोकयन् विमानगाः ।
प्रफुल्लपुष्पवल्लयाढ्यदिव्यपुष्पितपादपान् ॥२०॥
स्तबकाँस्तरुषण्डाँश्च दिव्यशोभान् व्यलोकयन् ।
यथेष्टरूपसम्पन्नान् कायाविवर्तनप्रभून् ॥२१॥
सर्वसिद्धिमयान् ब्रह्माऽऽपूरकान् द्रून् व्यलोकयन् ।
आक्षरीदिव्यभूमिस्थान् नैकरंगांऽगशोभनान् ॥२२॥
सुधास्वादुफलाढ्याँश्च दिव्यान् द्रुमान् व्यलोकयन् ।
कन्दिमूलिदलिमुक्तान् शाखितन्तुमतो द्रुमान् ॥२३॥
कदम्बकान् ब्रह्मदारून् पाटलान् पारिजातकान् ।
सर्जतरून् चम्पकाँश्चाऽशोकान् शृङ्गारपादपान् ॥२४॥
तिलकान् बकुलान् लोध्रान् किंशुकान् खदिरांस्तथा ।
कुन्दान् सहस्रपद्माँश्च केसरान् स्थलपद्मकान् ॥२५॥
चन्दनान् बदरान् जम्बीरकान् सुनवरंगकान् ।
कृष्णफलान् रामफलान् लक्ष्मीफलाँस्तथाऽमृतान् ॥२६॥
श्वेतफलान् लिकुचाँश्च कदलान् नालिकेरकान् ।
खर्जुरान् खारिकाँश्चापि दाडिमान् जम्ब्वजीरकान् ॥२७॥
मिष्टनिम्बून् तिन्तिडीश्च पनसान् मधुकाँस्तथा ।
आम्रानाम्रातकान् बिल्वान् चिरबिल्वान् रतालुकान् ॥२८॥
द्राक्षान् काजून् बदामाँश्च सन्तरान् सुकपित्थकान् ।
एलालवंगजावन्त्रीद्रुमान् तिक्तादिवल्लिकाः ॥२९॥
त्वक्सारान् कीचकान् प्लक्षान् वटान् सांगान् शमीद्रुमान् ।
शिंशपान् नागवल्लीश्च कल्पवल्लीर्जीवन्तिकाः ॥३०॥
मालतीश्चित्रपर्णाश्च कमलानि व्यलोकयन् ।
कल्पद्रुमान्नास्पतिकान् चिकुकान् मिष्टकर्दमान् ॥३१॥
सूर्यमुखान् चन्द्रदलान् ब्रह्मपत्रान् रमारसान् ।
सुधाधारान्मधुस्रातान् कामपूरान् व्यलोकयन् ॥३२॥
पयोभृतान् मिष्टकुंभान् शार्करान् समलोकयन् ।
मिष्टमोहनकान् शैत्यद्रुमान् कर्पूरकानपि ॥३३॥
रतिस्वादान् मोदकणान् आमोदद्रून् व्यलोकयन् ।
प्रमौक्तिकान् रत्नगुच्छान् स्वर्णपुष्पान् हिरण्मयान् ॥३४॥
कानकान् राजतान् वृक्षान् दार्पणद्रून् व्यलोकयन् ।
स्वर्णहारान् गन्धमालान् भूषाफलान् व्यलोकयन् ॥३५॥
चिदम्बरान् सत्प्रणादान् चिदानन्दद्रुमाँस्तथा ।
दधिकाष्ठान् मुनिमोदान् श्रीद्रवानप्यलोकयन् ॥३६॥
सिद्धपादान्मनोवर्षान् चिन्तावल्लीर्व्यलोकयन् ।
अक्षय्यपत्रकान् चाज्यलताः प्रदीपपादपान् ॥३७॥
तक्रपुटान् मणिशाखान् स्वर्णमूलान् व्यलोकयन् ।
कौंकुमान् शीतचूर्णाश्च कज्जलिकान् व्यलोकयन् ॥३८॥
आलक्तकान् पिंगरसान् महीदीनान् महाक्षतान् ।
निवारान् पूगकान् जातिफलान् मल्लिकवल्लिकाः ॥३९॥
सदापुष्पा नित्यफला ब्रह्मांशर्म्यान्व्यलोकयन् ।
श्रीफलान् श्रीद्रुमकाँश्चाऽऽमलकान् जलपद्मकान् ॥४०॥
फलजनान् त्रिमूलूँश्च प्रवालान् वालशिम्बकान् ।
केशधारान् मृदुलेखान् गन्धसारान् सुशाल्मलान् ॥४१॥
कार्पासकान् कुशेयकान् कलमान् देवविग्रहान् ।
चैतन्यफलिनश्चापि कमलानि व्यलोकयन् ॥४२॥
एवंविधान्यसंख्यानि महारण्यानि चाऽक्षरे ।
दिव्यमुक्तस्वरूपाणि कामरूपाणि सर्वथा ॥४३॥
अनादिश्रीकृष्णनारायणार्थे संस्थितानि वै ।
कामगानि समस्तानि वनानि समलोकयन् ॥४४॥
तेजःपत्राणि नालानि महोद्यानानि चाभितः ।
आरामाँश्च तडागाँश्च सरितश्चाऽप्यलोकयन् ॥४५॥
वनोद्यानमयीं भूमिं दशसाहस्रयोजनाम् ।
आयतां परितो व्याप्तां चाक्षरीं समलोकयन् ॥४६॥
यासु मुक्ता अनन्ता वै ब्रह्मरूपा वसन्त्यपि ।
अरण्यानि सकलानि मुक्ताश्रितानि वीक्ष्य च ॥४७॥
आश्चर्यं परमं प्रापुर्मुक्ता ब्रह्मप्रियादयः ।
तैः कृता विविधाः पूजाः कृष्णनारायणस्य वै ॥४८॥
विमाने चाऽम्बरे गत्वा बद्रिके फलचन्दनैः ।
उपदाभिर्दिव्यदानैस्तोषितः स्वपतिर्हरिः ॥४९॥

अथोल्लंघ्याऽरण्यभूमिं पर्वतानागतान् बहून् ।
व्यलोकयन् दिव्यरूपान् कोटिसूर्यसमप्रभान् ॥५०॥
अरण्यानीयुतान् दीर्घगह्वरान् मुक्तसेवितान् ।
सौवर्णे राजतैः शृंगै रत्नशृंगैः सुशोभितान् ॥५१॥
मणिभिर्विविधैर्दिव्यैः संभृतान् हीरकोज्ज्वलान् ।
वज्रशृंगैस्तथा मुक्ताशिखरैरतिशोभितान् ॥५२॥
पद्मरागाद्रिपंक्तिभिरन्वितान् दीर्घसेतुभिः ।
मारकतैश्च शिखरैरिन्द्रनीलतलान्वितैः ॥५३॥
वैदूर्यैरन्वितान् पुष्परागशृंगैर्विराजितान् ।
कर्केतनानां शिखरैर्भीष्मकानां कटिभ्रमैः ॥५४॥
पुलकानां मध्यभागै रुधिरम्वा प्रशोभितान् ।
स्फटिकशृंगगह्वरैश्च विद्रुमोर्ध्वस्थलैर्युतान् ॥५५॥
चिन्तामणियुतानद्रीन् कौस्तुभादिसमन्वितान् ।
माणिक्यवर्णैः शिखरैः सुशोभितानलोकयन् ॥५६॥
सिद्धमुक्तनिवासाढ्यान् गान्धर्वमुक्तशोभितान् ।
विद्वन्मुक्तकृतावासान् तापसानां गृहान्वितान् ॥५७॥
योगिमुक्तालययुतान् ब्रह्मयुक्ताधिवासितान् ।
कलामुक्ताश्रमयुतान् साधुमुक्ताद्यधिष्ठितान् ॥५८॥
कमठैर्होत्रिभिर्मुक्तैः कृतावसथमन्दिरान् ।
भक्तिघरैस्तथा मुक्तैः स्थले स्थले कृतालयान् ॥५९॥
अधित्यकासु वै देवमुक्तैर्ध्यानवासिभिः ।
स्थापितश्रीमहाग्रामानद्रीन् दिव्यानलोकयन् ॥६०॥
निकुंजैर्मुक्तकोटीनां निर्झरैर्दिव्यवारिभिः ।
आपगाभिश्च दिव्याभिर्ब्राह्मीभिरुपशोभितान् ॥६१॥
सच्चिदानन्दसलिलैरमृतैः संभृतैः शुभैः ।
सरोवरैर्महारम्यैः शोभितान्द्रीनलोकयन् ॥६२॥
कमलैः पद्मनिवहैः कल्हारैः कुमुदैः शुभैः ।
पुण्डरीकैररविन्दैर्नलिनीकुसुमैर्युतान् ॥६३॥
तटान् सुगन्धिपुष्पाणां परागाढ्यानलोकयन् ।
दिव्यान् हंसान् सारसांश्च गरुडाननलान् खगान् ॥६४॥
शुकमेनामयूरांश्च दिव्यमुक्तानलोकयन् ।
भारद्वाजान् चातकांश्च कामरूपवरान् बहून् ॥६५॥
मुक्तरूपान् दिव्यपक्षिगणान् सर्वानलोकयन् ।
गजान् सिंहान् मृगान् दिव्यान् दिव्याश्वान् समलोकयन् ॥६६॥
धेनूश्चमरीर्महिषीर्मृगान् शार्दूलकानपि ।
दिव्यान् सत्वान् मुक्तरूपान् कामरूपानलोकयन् ॥६७॥
शाखामृगान् दिव्यरूपान् हनूयुतान् प्लवंगमान् ।
सपक्षांश्च परीगणान् पर्वतेषु व्यलोकयन् ॥६८॥
दशसाहस्रभूभागायतान् वीक्ष्य गिरीश्वरान् ।
बद्रिके कोटिशृंगाख्यं महाशैलमलोकयन् ॥६९॥
स्वर्णमात्रस्वरूपं च स्वर्णमात्रोत्थवस्तुकम् ।
असंख्यसूर्यभावन्तं हिरण्याद्रिमलोकयन् ॥७०॥
असंख्ययोजनदीर्घं लक्षयोजनकाऽऽयतम् ।
सच्चिदानन्दतत्त्वाढ्यं ब्रह्मतत्त्वमयं गिरिम् ॥७१॥
असंख्यसुरमुक्तानां नगरैरधिवासितम् ।
अनेकाश्चर्यसंयुक्तमनेकज्योतिरन्वितम् ॥७२॥
दिव्यामृतमेघकोटिकोट्यभ्रघनसंश्रितम् ।
असंख्याऽमृतसरिदाच्छन्ननिम्नप्रणालिकम् ॥७३॥
दिव्यदीपौषधिव्रातैरलंकृतं महागिरिम् ।
सुशोभितं प्रवीक्ष्यैवोपत्यकासु व्यलोकयन् ॥७४॥
लक्षयोजनभूभागाऽऽयतासु हरितासु वै ।
अनेकमुक्तसंघान् संस्थितान् नगरसंश्रितान् ॥७५॥
नदीनदतटाकाद्यैर्युक्तानावसथांस्तथा ।
वाप्युद्यानमहारामान् व्यलोकयन् विमानगाः ॥७६॥
सौवर्णवनमध्ये चाऽपश्यन् नृत्यस्थलीं प्रभोः ।
दिव्यकुंजनिकुंजाढ्यां सर्वोद्भिज्जातिमुक्तकैः ॥७७॥
उषित्वा शोभितां कृष्णनारायणस्य सौख्यदाम् ।
यत्र वै ब्रह्मसरसो ब्रह्ममुक्तानिकाः शुभाः ॥७८॥
ब्रह्मपुमांस एवैते नृत्यन्ति कृष्णतुष्टये ।
वर्तुलां दिव्यसौधाढ्यां दशसाहस्रयोजनाम् ॥७९॥
दिव्यसभागृहगर्भां सर्वभोगसमन्विताम् ।
कोटिकोट्यर्कभाव्याप्तशिखरां चाभितः शुभाम् ॥८०॥
अनन्तरूपधारिश्रीकान्तमुक्तैः सदोषिताम् ।
दिव्यगोपुरदुर्गाद्यैर्बहुखण्डैर्विभाजिताम् ॥८१॥
कोटिविमानिकायुक्तां कोटिभूषालयान्विताम् ।
कोटिशृंगारशालाढ्यां कोटिवाद्यादिमन्दिराम् ॥८२॥
कोट्युपकरणैः श्रेष्ठैः संभृतरंगमण्डपाम् ।
कोटिसिंहासनस्थानां नृत्यमण्डलिकां स्थलीम् ॥८३॥
विलोक्याऽग्रे विमानस्था ययुः श्रीरासमण्डलम् ।
दशलक्षयोजनात्मविशालं पारमेश्वरम् ॥८४॥
कोटिस्तम्भकृताधारवृत्तमण्डपशोभितम् ।
सर्वरासोपकरणैर्दिव्यैः श्रेष्ठैः समन्वितम् ॥८५॥
कोटिमुक्ता निवसन्ति हर्याज्ञया तु यत्र वै ।
विमानानि सुवर्णादिदिव्यानि यत्र सन्ति च ॥८६॥
असंख्यकलशैर्युक्तश्चोपमण्डपशोभितः ।
महामण्डप एवाऽसौ राजतेऽब्जार्कवत् सदा ॥८७॥

सच्चिदानन्दसन्दोहाः सच्चिदानन्दभूस्तराः ।
सच्चिदानन्दवल्लभ्यो राजन्ते यत्र मण्डपे ॥८८॥
कल्पलताः कल्पवृक्षाः कल्पतृणानि यत्र च ।
कल्पपात्राणि संकल्पस्तवका यत्र सन्ति च ॥८९॥
चिन्तामणयः श्रेष्ठाश्चाऽक्षयपात्राणि यत्र च ।
सर्वकामदुघाः स्थल्यो बृस्यः सिद्धरसान्विताः ॥९०॥
सर्वविधान्यमृतानि सर्वरसाश्च शाश्वताः ।
महानन्दतरवश्च वर्तन्ते मानसोद्भवाः ॥९१॥
प्रकाशा ब्रह्मतत्त्वोत्था वायवो दिव्यलोत्थिताः ।
सुखस्पर्शाः सुखवीक्षा यत्र भवन्ति सद्गुणाः ॥९२॥
सर्वेन्द्रियमहाभोगा भवन्ति रासमण्डले ।
अकल्प्याश्चाऽप्यगम्याश्चाऽतर्क्याश्चापि तु मानसाः ॥९३॥
दिव्यब्रह्ममया ब्रह्मोत्थिताः कृष्णेच्छया शुभाः ।
शाश्वतानन्दपूराश्च पुष्टिदाः संभवन्ति हि ॥९४॥
सुखाऽऽकर्षणदाः सर्वे भोग्या भोगा हि मण्डपे ।
समास्ते परितः सन्ति दिव्यास्ते रासमण्डले ॥९५॥
यथेष्टरूपधर्तारो वसन्ति मुक्तसाधवः ।
अनादिश्रीकृष्णरूपस्वरूपाऽभिन्नविग्रहाः ॥९६॥
बालकृष्णस्यसामर्थ्यशक्तिसर्वस्वयोजिताः ।
परमेश्वमहासिद्धिसमाख्यात्मान इत्यपि ॥९७॥
जन्मजयन्तिकादौ च रासरमणकारिणः ।
मुक्तानिकाऽसंख्यभक्तानिकामण्डलसंगताः ॥९८॥
रमन्ते ते गीतगानैर्नर्तनैः कूर्दनैस्तथा ।
तालिकाभिः पादसंक्रमणैर्देहविवर्तनैः ॥९९॥
मेलनैर्भावगर्भैश्चाऽऽश्लेषैर्वक्षोभियोजनैः ।
अर्पणैः सर्वकामानां पूरणैः परमात्मना ॥१००॥
तृप्यन्ति सततं मुक्ता मुक्तानिकास्वरूपिणः ।
मोदन्ते श्रीहरिं प्राप्य कान्तं कामप्रपूरकम् ॥१०१॥
एतादृशं सुखकोशं वीक्ष्य तद्रासमण्डलम् ।
तन्मुक्तैः कृतपूजाश्च ययुरग्रे विमानगाः ॥१०२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने परमाऽक्षरब्रह्मधाम्नि ब्रह्मप्रियाहरिप्रियादिभिर्ब्रह्महृदोत्तरस्थब्रह्मरसमुद्रतीराऽवतारः कृतः, महावनपर्वतहिरण्यकोटिशृंगाद्रिवनोपत्यकोद्याननृत्यस्थलीरासमण्डलानि चावलोकितानीत्यादिनिरूपणनामा चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

श्रीनरनारायण उवाच—

रासमण्डलतश्चोर्ध्वं हरेर्विहारमण्डलम् ।
लक्षयोजनविस्तारं व्यलोकयन् विमानगाः ॥ १ ॥
यत्र परममुक्तानां निवासा मन्दिराणि च ।
प्रासादा दिव्यकलशाः सन्ति कृष्णालया यथा ॥ २ ॥
मुक्ता मुक्तानिका भूत्वा सेवन्ते कान्तमच्युतम् ।
विहारो यत्र सौधेषु भवन्ति ब्रह्मयोषिताम् ॥ ३ ॥
कोटिकोट्यर्बुदपत्न्यो मुक्तानिका हरिं पतिम् ।
विहारमण्डले नैजसौधेषु दिव्यविग्रहाः ॥ ४ ॥
सेवन्ते परमात्मानं सुखशय्यास्वहर्निशम् ।
शृंगारा यत्र वर्तन्ते नवा दिव्याश्च शाश्वताः ॥ ५ ॥
पानभोजनभोगाश्च वर्तन्तेऽमृतसंभृताः ।
यत्र कामदुघा गावो विद्यन्ते मानसेष्टदाः ॥ ६ ॥
यत्र शय्याः कोमलाश्च नित्यसुगन्धिसंभृताः ।
मानसेष्टप्रदाः सर्वाः सुखस्पर्शाश्चिदात्मकाः ॥ ७ ॥
दिव्यरूपस्पर्शगन्धशब्दरसरतिप्रदाः ।
कल्पताम्बूलवल्ल्यादिपत्रचर्वणगन्धिकाः ॥ ८ ॥
सुगन्ध्युत्तरसुरभिकेसरादिविराजिताः ।
कामपूरास्तथा सर्वोपकरणोत्तमाश्रिताः ॥ ९ ॥
स्नानशालास्तापशाला रसशालाश्च यत्र वै ।
भोज्यशाला रहःशालाः स्वापशालाश्च यत्र वै ॥१०॥
द्रवशाला नाट्यशाला दृश्यशालाश्च यत्र वै ।
गीतशाला नृत्यशाला वेषशालाश्च यत्र वै ॥११॥
सर्वशृंगारशालाश्च कामशालाश्च यत्र वै ।
भोगशालाश्चांगप्रसाधनशालाश्च यत्र वै ॥१२॥
रेखाशालास्तथा कान्ताश्लेषशाला भवन्ति च ।
प्रासादा कलशैर्युक्ता दिव्या स्वर्णविनिर्मिताः ॥१३॥
शोभन्ते कोटिशो यत्र विहारमण्डलेऽभितः ।
नगराणि विचित्राणि विचित्रमन्दिराणि च ॥१४॥
वर्तन्ते मुक्तकोटीनां निवासा यत्र चाभितः ।
वसतयः सेवकानां सेविकानां भवन्त्यपि ॥१५॥
दासानां चापि दासीनां पुंरूपाणां भवन्त्यपि ।
सुहृदां मित्रवर्गाणां मुक्तानां सुगृहाणि च ॥१६॥
भवन्ति श्रीहरेः सौधभाऽऽभभावन्ति तत्र ह ।
एवं विहारिमुक्तानां वीक्ष्य विहारमण्डलम् ॥१७॥
विमानगा ययुरग्रे राष्ट्रप्रदेशभूमिषु ।
हरिद्वर्णाऽतिरसमन्मिष्टकणिशवन्ति वै ॥१८॥

यासु सस्यानि सर्वाणि राजन्ते ऋद्धिमन्ति च ।
दिव्यब्रह्ममयान्येवाऽक्षतशालिभिधानि च ॥१९॥
गोधूमयवनिवारचणकादीनि सन्ति वै ।
दिव्यब्रह्मस्वरूपाणि कामरूपाणि तानि वै ॥२०॥
मुक्तरूपाणि सस्यानि धामिनां सुखदानि हि ।
इक्षुक्षेत्राणि परितः शाकक्षेत्राढ्यवाटिकाः ॥२१॥
राजन्ते दीर्घिकावापीकूपतडागवन्ति च ।
सरितो दिव्यजलदा वहन्ति चित्स्वरूपिकाः ॥२२॥
सीमभूमिप्रदेशाश्च विद्यन्ते फलिपादपाः ।
अनेकपुष्पवृक्षाणां वृतिभिर्वर्तुलीकृताः ॥२३॥
रक्षिताः सर्वतो दिग्भ्यो महासस्यसमृद्धयः ।
मुद्गमाषै राजमाषैः कङ्गुभिः शोभिताः शुभाः ॥२४॥
राजिकाकंसरैर्युक्ता दुग्धिकाबृहतीयुताः ।
अनेकाकारसंख्यैश्च भाजीशाकैः समन्विताः ॥२५॥
कन्दपुष्पदलाद्यैश्च समृद्धाः शोभना अति ।
कर्षुकाख्यप्रमुक्तानां नगराणि च तत्र वै ॥२६॥
सन्ति ग्रामाश्च खेटाश्च खर्वटा गोपकर्मणाम् ।
पुराणि दिव्ययोगानि दिव्यव्यापारवन्त्यपि ॥२७॥
भवन्ति दिव्यसौवर्णवर्णानि प्रोज्ज्वलानि च ।
यत्र मुक्ता महामुक्ता वसन्ति ब्रह्मरूपिणः ॥२८॥
तथा परममुक्ताश्च वसन्ति ब्रह्मयोगिनः ।
अनादिश्रीकृष्णनारायणब्रह्मपरायणाः ॥२९॥
येषां कर्मकलापा वै दिव्याः कृष्णपरायणाः ।
भवन्ति सर्वथा बद्रि तांस्ते व्यलोकयन् मुदा ॥३०॥
आलयानाश्रमानावसथान् सौधान् कुटीस्तथा ।
गृहाणि कोटरान् मन्दिराणि कुंजान् निकुंजकान् ॥३१॥
सौधान् शाला निवासांश्च भवनानि च गर्भकान् ।
विद्यालयान् कलाशाला गोशाला गोपुरान् शुभान् ॥३२॥
दुर्गान् भित्तिस्तम्भशृंगाण्यपि वृत्तसुमण्डपान् ।
उपगृहाणि चारामान् छत्राणि तूपकांस्तथा ॥३३॥
सभागृहाणि च न्यायनृत्यगान्धर्वभूमिकाः ।
मल्लनाट्येन्द्ररमणान् महानसानि यान्यपि ॥३४॥
मल्लालयान् राजसौधानापणान् व्योमकोष्ठकान् ।
त्रिवरान् द्वारदेशांश्च वीक्ष्य सौवर्णशोभनान् ॥३५॥
समाकाररचनांश्च स्वर्णकलशराजितान् ।
नैसर्गिकप्रकाशांश्च सर्वर्द्धिप्रदभित्तिकान् ॥३६॥
कल्पकुंभीकल्पचुल्लीकल्पपात्रविराजितान् ।
अक्षय्येष्टप्रदान् वीक्ष्य भोज्यपानर्द्धिसंभृतान् ॥३७॥
सर्वोपकरणैर्युक्तान् दिव्यशाश्वतविग्रहान् ।
सच्चिदानन्दरूपांश्च सर्वरंगर्द्धिशोभनान् ॥३८॥
ध्वजैः पताकिकाभिश्च वावातादिभिरन्वितान् ।
दिव्यमुक्तगणैर्युक्तान् वीक्ष्य प्राप्य समर्हणाम् ॥३९॥
अग्रे विमानगा देशानुल्लंघ्याऽर्बुदयोजनान् ।
मुक्तवसतीन् संवीक्ष्य ययुः सुराष्ट्रमुत्तमम् ॥४०॥
यत्र मार्गा दीर्घतमा ब्रह्मसमुद्रयोगिनः ।
वनपर्वतवसतीनभिव्याप्य च मण्डपान् ॥४१॥
मण्डलानि पुरग्रामान् समायान्ति सुराष्ट्रकम् ।
छायावृक्षैः फलिवृक्षैर्युताः पन्थान उत्तमाः ॥४२॥
सर्वयात्रिकसुखदाः सुभगा रमणीयकाः ।
प्रवासिनां सर्वभोग्यप्रदाः सच्चिद्रसप्रदाः ॥४३॥
विद्यन्ते ते मृदुस्पर्शा गतिश्रमविवर्जिताः ।
शीतोष्णानुकूलसर्वतस्त्वाऽऽनन्दप्रदाः शुभाः ॥४४॥
पार्श्वनदीनदवारिसुधावल्लीद्रुशोभिताः ।
तरुसूक्ष्मफलवालुमृदुपार्श्वसुशोभिताः ॥४५॥
पुष्पीवृक्षकृतराजिकदम्बराजिराजिताः ।
लताप्रतानितछत्रच्छायाद्रुमसुपार्श्वकाः ॥४६॥
शर्कराफलवल्लीनां कृत्रिमनदपार्श्वकाः ।
चञ्चद्दिव्यमहामूल्यमणिगर्भातिशोभनाः ॥४७॥
कूष्माण्डवल्लिकाव्याप्तकुटीयुक्क्षेत्रमध्यगाः ।
अमृतरसम्रक्षेत्रान्तःप्रविष्टदीर्घयायिनः ॥४८॥
मधुस्राविमहावृक्षशाखारसाभिषेकिनः ।
ब्रह्मचन्दनवृक्षाणां रसवृष्ट्या सुगन्धिताः ॥४९॥
देवपुष्पविकीर्णैश्चाञ्चिताः शय्याभसौख्यदाः ।
मुक्तमुक्तानिकावृन्दपादपद्मातिपावनाः ॥५०॥
नैकधातुप्रचूर्णोत्थलहरीवलिशोभिताः ।
पार्श्वविश्रान्तिवेदीभिर्मनोहराऽऽश्रयप्रदाः ॥५१॥
नदीनदमहासेतुसंकलनाऽद्वितीयकाः ।
मुक्तिसौख्यप्रदा मार्गास्तृप्तिदा नित्यसौख्यदाः ॥५२॥
मध्यक्षेत्रीयसृतिभिः संगताश्चत्वरान्विताः ।
तानप्रतानमार्गैश्च मिलिता देशदर्शकाः ॥५३॥
सुधापर्वात्मकशालाऽमृतदानप्रमोददाः ।
ब्रह्मराष्ट्राऽऽविद्धमध्या परब्रह्मगृहान्तगाः ॥५४॥
अनादिमुक्तविहाराः शाश्वतानन्दसंभृताः ।
अपुनरावर्तनाश्च गतानां मुक्तिसंगिनाम् ॥५५॥
मांगलिकरसद्रव्यैः सिक्ताः श्रेयोरसादिभिः ।
कल्याणपदवीयुक्ता विशाला बहुविस्तराः ॥५६॥

एतादृशान्मोक्षमार्गान् वीक्ष्याऽऽश्चर्यंगतास्तु ते ।
अग्रे विमानगा देशानसंख्ययोजनायतान् ॥५७॥
वीक्ष्य तुल्यर्द्धिसम्पद्भिः शोभनान् ययुरुत्सुकाः ।
अपश्यन् दूरतस्ते चाऽक्षरधामपुरं महत् ॥५८॥
परार्धयोजनदीर्घदिव्यचिह्नविराजितम् ।
असंख्याऽक्षरमुक्तानामावासमन्दिरात्मकम् ॥५९॥
सर्वसृष्टिमहातेजोऽधिकतेजोऽम्बरान्वितम् ।
सर्वसृष्टमहानन्दाधिकानन्दाऽम्बरान्वितम् ॥६०॥
सर्वसौरभवासं च सर्वरूपाभिरूपवत् ।
सर्वरसाऽधिमिष्टं च सर्वमिष्टस्वरान्वितम् ॥६१॥
सर्वलावण्ययुक्तं च सर्वमाधुर्यसंभृतम् ।
असंख्यानादिमुक्तानां महामन्दिरशोभनम् ॥६२॥
कोटिकोट्यब्जसूर्याणां तेजोवत्कलशान्विताः ।
दिव्यशृंगयुता यत्र शोभन्ते मुक्तसंश्रयाः ॥६३॥
कामरूपधराऽनादिमुक्तवृन्दा वसन्ति च ।
दिव्यरत्नहीरकाणां मणीनां मन्दिरेषु ह ॥६४॥
असंख्यपारं तद्धाम सर्वधामोत्तमोत्तमम् ।
असंख्यदिव्यसंस्थानविमानैरुपशोभितम् ॥६५॥
असंख्यनगरैर्ग्रामैः पत्तनैः खेटखर्वटैः ।
उद्यानारामवाटीभिः क्षेत्रभूविस्तरैर्युतम् ॥६६॥
सच्चिदानन्दतत्त्वैस्तैर्ब्रह्मपुरैरलंकृतम् ।
सर्वगोपुरदुर्गाद्यैर्वनपर्वतराजिभिः ॥६७॥
आक्षरैश्च नदीसरोवरैर्नदैः सुशोभितम् ।
कौस्तुभानां दीर्घशृंगैः पर्वतैरतिशोभनम् ॥६८॥
असंख्यदिव्यदुग्धानां कुल्याभिरभितो युतम् ।
सुधापीयूषभोज्यानां कुल्याभिरभिरामकम् ॥६९॥
यानवाहनशय्यानामुपस्कारैः समृद्धिमत् ।
कामरूपधरमुक्तमुक्तानिकाकृताश्रयम् ॥७०॥
सर्वसमानरूपैश्च कृष्णनारायणाश्रितैः ।
कृतावासमनन्तं चाऽपारमसीमकं महत् ॥७१॥
सर्वसस्यर्द्धिसंयुक्तफलान्नकणसिद्धिमत् ।
सर्वदिव्यसुसौवर्णभूमिगृहादिपत्तनम् ॥७२॥
असंख्यस्तम्भसंशोभन्महासौधालिसत्प्रभम् ।
निसर्गधामतत्त्वोत्थसर्वभोग्यसुहेतुकम् ॥७३॥
यस्य पारो न वै चास्ति गन्तॄणां व्योमचारिणाम् ।
दिव्यचक्षुष्मतां कृष्णदृष्ट्या मनाक् सुगोचरम् ॥७४॥
यत्र मुक्ता असंख्याता राजाधिराजरूपिणः ।
कृष्णनारायणतुल्या वृन्दात्मानो भजन्ति तम् ॥७५॥
बद्रिके केचन मुक्ताः सभाऽऽस्थानश्च कोटिशः ।
ध्यायन्ति परमात्मानं श्रीकृष्णं पुरुषोत्तमम् ॥७६॥
अन्येऽब्जसंख्यका मुक्ताः कथां शृण्वन्ति शार्ङ्गिणः ।
अपरे पद्मसंख्याश्च स्तुवन्ति स्वामिनं हरिम् ॥७७॥
तथाऽन्ये स्वामिनो वाद्यैः कीर्तनं विदधत्यपि ।
अर्चयन्ति शतवस्तुभिश्चेतरे हरिं पतिम् ॥७८॥
तथाऽन्ये दास्यमेवाऽपि कुर्वन्ति परमात्मनः ।
आत्मनिवेदनं मुक्तानिकाः कुर्वन्ति सत्पतौ ॥७९॥
रमन्ते श्रीहरेरग्रे सेवन्ते तन्मनोऽनुगाः ।
यजन्ते तथा हरिं मुक्ता आराधयन्ति तन्मयाः ॥८०॥
भोजयन्ति स्नापयन्ति संवाहयन्ति तं हरिम् ।
नीराजयन्ति तं नाथं प्रसादयन्ति चाऽर्पणैः ॥८१॥
रञ्जयन्ति गन्धीयन्ति शृङ्गारयन्ति माधवम् ।
आनन्दयन्ति बहुधा पाययन्ति सुधामृतम् ॥८२॥
धूपयन्ति दीपयन्ति यथा तद्रूपधारिणः ।
एवं विविधरूपाँश्च परार्धाऽधिकमुक्तकान् ॥८३॥
विमानगा विलोक्यैवाऽऽश्चर्यं प्रापुः परं तदा ।
सेवाभक्तिप्रकाराँश्च वीक्ष्य निर्मानतां गताः ॥८४॥
अक्षरः पुरुषः सोऽपि निजालये परेश्वरम् ।
अनन्तमुक्तसहितः सेवते स्वामिनं हरिम् ॥८५॥
सर्वदेहकृताभिश्च क्वचिन्नारी क्वचिन्नरः ।
भूत्वा भूत्वा क्रियाभिश्च सेवते स्वामिनं निजम् ॥८६॥
अक्षरस्य महासौधे कोट्यर्बुदादितोरणे ।
कोट्यर्बुदस्तम्भतोलये कोट्यर्बुदादिशृंगके ॥८७॥
असंख्यभोग्यवस्त्वाढ्येऽसंख्यदासीसमन्विते ।
असंख्यमुक्तमुक्तानीसेविते ब्रह्मरूपिणि ॥८८॥
ब्रह्ममहोलसंज्ञे स्वे सेवते स्वपतिं हरिम् ।
वीक्ष्येदं सेवनं बद्रि ब्रह्मप्रियास्तु सर्वथा ॥८९॥
स्तब्धा निर्गर्वभावं च प्राप्ताः स्वस्वामिनं प्रति ।
एवंविधं तु तद्धामाऽक्षरं तद्वसतीन् शुभान् ॥९०॥
मुक्तावसतीन् सेवां च वीक्ष्याऽक्षरगृहं तथा ।
अक्षरं सेवकं वीक्ष्य महानन्दं प्रलेभिरे ॥९१॥
अक्षरस्य गृहे बद्रि विशालेऽसंख्ययोजने ।
ईश्वराणां समस्तानां मुक्तानां दिव्यवर्ष्मणाम् ॥९२॥
ब्रह्माण्डानां च सर्वेषामुद्भवः सौक्ष्म्यतः स्थिताः ।
अक्षरे बद्रिके सर्वमेतज्जगच्चराचरम् ॥९३॥
विद्यते संस्थितं बद्रि सर्वसृष्टिस्वरूपकम् ।
यदक्षरगृहे चास्ते तद् ब्रह्माण्डेषु वर्तते ॥९४॥
यदक्षरगृहे नास्ति सृष्टिषु तन्न विद्यते ।
एकैकस्मिन् मणौ दिव्ये वसन्ति भिन्नसृष्टयः ॥९५॥

एतादृशा हि मणयः सन्त्यक्षरगृहे शुभाः ।
मायाधामानि सर्वाणि विद्यन्ते चैकके मणौ ॥९६॥
गोलोकाद्या महाभौमा विद्यन्ते चैकके मणौ ।
वैकुण्ठाद्या आलयाश्च विद्यन्ते चैकके मणौ ॥९७॥
वासुदेवादयो व्यूहाः सर्वर्द्धिसहिता मणौ ।
वर्तन्ते चैकके कर्तुं वर्णनं नैव शक्यते ॥९८॥
एतादृशं ब्रह्मपदं धामाऽक्षरं सुशोभनम् ।
असंख्यर्द्धिभृतं वीक्ष्य लब्ध्वा पूजां च तत्कृताम् ॥९९॥
अवतारालयान् दिव्यान् मन्दिराण्युत्तमानि च ।
असंख्यान् मुक्तरूपांश्च कृष्णनारायणांशजान् ॥१००॥
कृष्णनारायणरूपान् कृष्णनारायणात्मकान् ।
असंख्यसृष्टिसंजातान् तदक्षरे सदा स्थितान् ॥१०१॥
ब्रह्मशीलपरान् सर्वावतारान् श्रीप्रभुप्रभान् ।
असंख्यैश्वर्यसंपन्नान् वीक्ष्य धामोत्तरस्थितान् ॥१०२॥
अयं स्वामी ह्ययं स्वामी कृष्णनारायणो ह्ययम् ।
इत्येवं प्रतिपन्नास्ते विमानगाः क्षणं तदा ॥१०३॥
असंख्यकृष्णरूपाणि प्रभून् कृष्णानसंख्यकान् ।
मुक्तात्मकान् विलोक्यैव विलोक्य दिव्यचक्षुषा ॥१०४॥
सारूप्यमानमापन्नान् मुक्तान् विज्ञाय तादृशान् ।
प्रतिपत्तिं मुक्तरूपां प्राप्याऽऽनन्दं प्रलेभिरे ॥१०५॥
आश्चर्यं परमं प्राप्ता अदृष्टदर्शनात् खलु ।
प्रशशंसुर्विमानस्था ब्रह्मप्रियादयो भृशम् ॥१०६॥
अहो भाग्यं हरेर्योगाद् यदस्यादिदर्शनम् ।
लभामहे कृपालेशात् स्वामी नः परमो यतः ॥१०७॥
बद्रिके चाऽवतारायैः कृतां लब्ध्वा समर्हणाम् ।
प्रभुः कृष्णो हरिश्चाग्रेऽपासरत् माधवीपतिः ॥१०८॥
जयनादैस्तोषशब्दैरक्षतादिसुवर्धनैः ।
पुष्पाञ्जलिप्रदानैश्चाशीर्भिः सहाग्र उद्ययुः ॥१०९॥
विमानानि समस्तानि दिव्याम्बराभियोगिनाम् ।
मुक्तानां श्रीहरेः पत्युर्मन्दिरं परमं प्रति ॥११०॥
तद्गत्या तद्वायुयोगात् परधामप्रभांशकात् ।
महानन्दकृतां मूर्छां सुखाढ्यां प्रापुरेव ते ॥१११॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने विमानगा हरेर्विहारमण्डलं राष्ट्रप्रदेशान् सुराष्ट्रमण्डलम् अक्षरधामपुरम् अनादिमुक्तपुराणि दिव्यभक्तिकलापान् अक्षरब्रह्ममहोल्म् असंख्यावतारमहोलानि वीक्ष्य परमं धाम प्रति चापासरन्नित्यादिनिरूपणनामा पञ्चदशाऽधिकशततमोऽध्यायः ॥ ११५ ॥

श्रीनरनारायण उवाच—

शृणु बद्रीप्रिये देवि हृदयं द्रवते मम ।
वर्णयतो हरेर्धाम प्रत्यक्षं पश्यतो यथा ॥ १ ॥
अवर्ण्यानन्दसन्दोहान् प्रभुञ्जामि प्रवर्णनात् ।
अनन्यमानसी भूत्वा हृद्यं गद्यं निबोध मे ॥ २ ॥
सहस्रशो गम्यमाना विमानगाश्चिदम्बरे ।
दिव्यदृष्ट्या महातेजःपुञ्जाद्रिं पद्मयोजनम् ॥ ३ ॥
ब्रह्मतेजोऽधिकखर्वगुणितेजोभिवर्धितम् ।
व्यलोकयन् दूरतस्ते शताऽब्जयोजनोच्छ्रयम् ॥ ४ ॥
अक्षरब्रह्मगस्तेजोराशिर्यस्याऽणुमात्रके ।
प्रदेशे लीनतां याति तादृक् तेजो व्यलोकयन् ॥ ५ ॥
अक्षरब्रह्मधाम्नस्तद्धाम श्रेष्ठं परं पदम् ।
अक्षरात् खर्वगुणितप्रभावदेकरोमकम् ॥ ६ ॥
परब्रह्माऽनादिकृष्णनारायणस्य धाम तत् ।
श्रीकृष्णनारायणस्वाम्यक्षरेशस्य परात्मनः ॥ ७ ॥
मूर्तिजन्यं हि तत्तेजः शाश्वतं चैकतानकम् ।
समैकरसघनकं सच्चिदानन्दनामकम् ॥ ८ ॥
परब्रह्मलोकरूपं सर्वतोऽनन्तभाप्रदम् ।
यत्प्रकाशैककिरणेनाऽक्षरं पूर्णतेजसा ॥ ९ ॥
पूर्यते शिष्यते नैव रिक्तं तत् तादृशं घनम् ।
यत्तेजोदर्शनं दूराच्छीतमिद्धसुधाऽदनम् ॥१०॥
समर्पयति द्रष्टॄणां सर्वाकर्षणतर्पणम् ।
सर्वानन्दप्रदं सर्वामृतवर्षि प्रमोददम् ॥११॥
अनन्ततृप्तिदं तेजो दूराद् व्यलोकयन् प्रियाः ।
यथा यथा विमानानि चाभियान्ति तथा तथा ॥१२॥
मुग्धास्तेजोऽभिभूतान्तर्नेत्राऽनुद्घाटनक्रियाः ।
विमानगा अभवँश्च तदा पिहितपक्ष्मकाः ॥१३॥
अथ श्रीभगवान् यावत् प्रियास्त्वाविश्य नेत्रदः ।
नेत्रतेजोमहाशक्तिप्रदोऽभवद् विमानिषु ॥१४॥
दासा दास्यः प्रिया मुक्तानिका मुक्ताश्च ते ततः ।
कृष्णनेत्रैः कृष्णतेजोऽभवन् शक्ता विलोकितुम् ॥१५॥
एवं रूपं रसं स्पर्शं शब्दं तद्धामगं परम् ।
आदत्तुं त्वसमर्थानां कृष्णः शक्तीर्निजा ददौ ॥१६॥
कम्पितानां महाधैर्यं ददावाविश्य वर्ष्मसु ।
विशीर्णानां बलं वीर्यं ददौ नैजं प्रविश्य च ॥१७॥
चिदम्बरमहावेषान् ददौ दार्ढ्यबलान्वितान् ।
तदा विमानिनः स्वास्थ्यमापन्ना वीक्षितुं प्रभाम् ॥१८॥

अथ श्रीभगवान् तेभ्यः परब्रह्ममहानदे ।
स्नापयामास सहसा चिदाकाशगते परे ॥१९॥
तेनाऽऽप्तसर्वसामर्थ्याः परब्रह्मस्वरूपिणः ।
परब्रह्मसमदेहाः परब्रह्मात्मशक्तिकाः ॥२०॥
विमानगाः समस्तास्तद्धाम्नो योग्यास्तदाऽभवन् ।
विशुद्धशक्तिका दिव्याक्षरोर्ध्वदिव्यविग्रहाः ॥२१॥
अथ स्वामिप्रतापेन विमानानि तदन्तिके ।
नदे सम्प्लावितान्येव बलवन्ति ततोऽभवन् ॥२२॥
आययुर्दिव्यतत्त्वानि परधामगमानि वै ।
परब्रह्ममहाधामाऽन्तिकं निरतिशायिनि ॥२३॥
महाचिद्घनतेजोभासीमान्तस्तटकाम्बरे ।
यावत्तावत्परधामानन्दं प्राप्य विमानिनः ॥२४॥
विसस्मरुः सुखं सर्वमक्षरस्य यदर्जितम् ।
परधाम्नोऽण्डभागे तत्सुखं सर्वं व्यलीयत ॥२५॥
बद्रिके श्रीहरेर्धाम्नः सुखाग्रे गणना तु का ।
असंख्याक्षरधाम्नां वै मुक्तानां गणना कुतः ॥२६॥
चिद्घने परमे धाम्नि लीना इवाऽभवन् हि ते ।
बहिष्टो नहि दृश्यन्ते मेघछन्ना यथा ग्रहाः ॥२७॥
महातेजोऽन्तःप्रविष्टा मिथो पश्यन्ति गर्भगाः ।
अन्तःस्थाश्च बहिर्नैव पश्यन्ति तेजसाऽधिकाः ॥२८॥
परधामगतानामक्षरं तम इवाऽभवत् ।
शून्यमिवाऽभवत् सर्वं शून्यं स्याद् गोचरं कथम् ॥२९॥
छायेव चाऽभवत् सर्वमक्षरं परमात्मनः ।
एतादृशं परं तेजः परं धाम व्यलोकयन् ॥३०॥
तेजोमयं महादुर्गं सौवर्णं चाप्यलोकयन् ।
उच्छ्रितं च विशालं चोभयथा लक्षयोजनम् ॥३१॥
दैर्घ्येऽस्य गणना नास्ति सा संख्या विद्यते नहि ।
अनन्ताऽपारदैर्घ्यं वै तस्य दुर्गस्य विद्यते ॥३२॥
गोपुरा लक्षशस्तत्र कोटिशश्च प्रकोष्ठिकाः ।
प्रस्तरा लक्षशस्तत्र कक्षाश्च लक्षशस्तथा ॥३३॥
लक्षशश्चापि तन्मध्ये प्रासादाः सेतुमाश्रिताः ।
कोटिशोऽनादिमुक्तानां निवासाः सन्ति गर्भगाः ॥३४॥
असंख्यमण्डपास्तत्राऽसंख्यमुक्तानिकाऽऽलयाः ।
असंख्यसौधप्रासादा यत्र विधन्त ऊर्ध्वगाः ॥३५॥
असंख्यानि विमानानि यस्तरेषु भ्रमन्ति च ।
असंख्यभूमिकावासाऽनादिमुक्ता वसन्ति च ॥३६॥
एतद्दुर्गसमं दिव्यमसंख्ययोजनायतम् ।
नगरं नाऽपरं दृष्टं पूर्वं विमानगैस्तदा ॥३७॥
परधाम्नोऽभितो दुर्गश्चायं सर्वोत्तमोत्तमः ।
असंख्यनगरात्मा चासंख्योद्यानप्रशोभनः ॥३८॥
असंख्यमुक्तवसतिशोभाढ्यो धामरक्षकः ।
अत्राऽनादिकृष्णमूर्तेः किरणानि समन्ततः ॥३९॥
पतन्ति तैः सदा दुर्गे स्मृद्धयः शाश्वतात्मिकाः ।
किरणेभ्यः सुधावर्षा भवन्ति च यथेष्टिकाः ॥४०॥
परब्रह्मसुधानद्यो दुर्गे वहन्ति मध्यगाः ।
महानदास्तटाकाश्च दीर्घिका वाटिकास्तथा ॥४१॥
नित्यपूर्णा महानन्दप्रदा भवन्ति दुर्गिणाम् ।
रसकुल्या घृतकुल्या दधिकुल्या भवन्ति च ॥४२॥
पानकुल्या वारिकुल्या मधुकुल्या भवन्ति च ।
शीतकुल्या ऊष्णकुल्याः स्वादकुल्या भवन्ति च ॥४३॥
लेह्यकुल्याश्चोष्यकुल्या भोज्यद्रवा भवन्ति च ।
भक्ष्याद्रयो भोज्यशैलाः फलपुष्परसोत्तमाः ॥४४॥
मिष्टादनोदजालानि शर्कराः संभवन्ति च ।
पिष्याकानि समस्तानि पीयूषाण्युत्तमानि च ॥४५॥
मूर्तिरस्यानि सर्वाणि तृप्तिदाज्यानि यान्यपि ।
नवनीतानि तक्राणि दुग्धसाराणि यान्यपि ॥४६॥
क्षीराणि पायसानिष्टप्रियाणि संभवन्ति च ।
सर्वरसोत्तमा दिव्याः कल्पद्रुमकरन्दकाः ॥४७॥
कल्पवल्लीफललेह्यपेयरसा भवन्ति च ।
शालिदुग्धाऽमृतसाराः सिद्धान्नानि भवन्ति च ॥४८॥
सर्वशाकरसाः सर्वमिश्ररसा भवन्ति च ।
सर्वशृंगारभोगार्हद्रवोद्भवा भवन्ति च ॥४९॥
सर्वभव्यागन्धवासाः किरणेभ्यो भवन्ति च ।
सर्वशालासुखपुञ्जा दिव्याऽक्षय्या भवन्ति च ॥५०॥
सर्वभूषाम्बरवेषा वाटिकोद्यानसंभवाः ।
सर्वेष्टपात्रपुञ्जाश्चोपस्कराश्च भवन्त्यपि ॥५१॥
सर्वसौन्दर्यसद्द्रव्याण्युत्तमानि भवन्ति च ।
सर्वरागा रञ्जनानि चिक्कणानि भवन्त्यपि ॥५२॥
सर्वतेजांसि वर्चांसि बलानि पुष्टयस्तथा ।
धातवः सुखदाः कृष्णकिरणैः सम्भवन्ति च ॥५३॥
किरणैः सम्प्रजायन्ते रत्नमौक्तिकहीरकाः ।
मणयो हेतवः सर्वसाधनानि शुभानि च ॥५४॥
बद्रिके कोमलं रूक्षं मृदु तीव्रं च मध्यमम् ।
यद्वस्तु यादृशं यैश्चापेक्ष्यते तत्प्रजायते ॥५५॥
कायाकल्पाः प्रजायन्ते कायाविवर्तकान्यपि ।
यथेष्टरूपधारित्वं कल्पशृंगैर्भवन्ति हि ॥५६॥

असंख्यानन्तभोगानामालयो दुर्ग एव सः ।
यत्समस्तवर्णनं तु शक्यते नाऽक्षराऽऽयुषा ॥५७॥
वीक्ष्य दुर्गं विमानस्था ध्वजतोरणराजितम् ।
चक्रुर्मनांसि तत्रैवोषितुं चानन्ददायिनम् ॥५८॥
अथापि चोह्यमानास्ते तथाऽग्रे वीक्षणेच्छया ।
ययुर्विमानगाश्चाऽग्रे सप्त दुर्गान् प्रवीक्षितुम् ॥५९॥
परार्धयोजनभूम्यान्तरभागोत्तरस्थितान् ।
अनाद्यनन्तमुक्तानां राष्ट्राणां रक्षकान् शुभान् ॥६०॥
घनतेजोमयीं भूमिमसंख्यनगराश्रयाम् ।
असंख्यानादिमुक्तानां वसत्यादिसमाश्रिताम् ॥६१॥
सर्वर्द्धिसहितां सर्वरसपूर्णां मनोहराम् ।
सर्वसस्यद्रुमवृक्षलतावल्लीतृणान्विताम् ॥६२॥
परब्रह्मात्मकमिष्टफलकन्ददलप्रदाम् ।
सर्वभोग्यप्रदां कामरूपभां सरिदन्विताम् ॥६३॥
परब्रह्मरसवारियुक्ततडागशोभनाम् ।
महानदनदीव्याप्तां महासागरशोभनाम् ॥६४॥
दिव्यामृतसरोभिश्च सर्वकमलयोगिभिः ।
असंख्यमुक्तवल्लीभिः शोभनां हृदयंगमाम् ॥६५॥
व्यलोकयन् विमानस्थाः सच्चिदानन्दतन्मयीम् ।
वीक्ष्य तां दीर्घपट्टां चाप्यनन्तां दिव्यगोचराम् ॥६६॥
आगतं कानकं दुर्गं घनतेजोऽभिरामकम् ।
व्यलोकयन्महाश्चर्ययुतं पूर्ववदायतम् ॥६७॥
पूर्ववदुच्छ्रितं पूर्ववत् सुवसतिसंश्रयम् ।
अनादिदिव्यमुक्तानां प्रासादैर्गोपुरैर्युतम् ॥६८॥
संकल्पोत्थसमस्तैश्च भोग्यभोगोपसाधनैः ।
भोगोपकरणैर्दिव्यैः संभृतालयशोभनम् ॥६९॥
आश्चर्यं परमं प्राप्ता वीक्ष्य विमानगामिनः ।
बद्रिके ते कल्पयन्ति प्रतीक्षन्ते हरेर्गृहम् ॥७०॥
महाश्चर्यमयं चेदं प्राप्य नेति विदन्त्यपि ।
अथाऽग्रे प्रययुश्चापि भूमिकां दीर्घपट्टिकाम् ॥७१॥
असंख्याऽनादिमुक्तानां नगरैरधिवासिताम् ।
पूर्ववच्छोभनां सर्वभोग्यभोगोपसाधनैः ॥७२॥
सर्वभोगोपकरणैरलंकृतां प्रभासुराम् ।
वीक्ष्याश्चर्यमयीं भूमिं चासंख्यनगराश्रिताम् ॥७३॥
ययुरग्रे परं दुर्गं सौवर्णतैजसोद्भवम् ।
पूर्ववदायतं पूर्ववदुच्छ्रितं मनोहरम् ॥७४॥
असंख्याऽनादिमुक्तानामावासैरतिशोभनम् ।
सर्वकामर्द्धिसहितं सर्वरसादिसंभृतम् ॥७५॥
सर्वचिन्तोद्भवतत्त्वप्रदं दिव्यसुखप्रदम् ।
आवीक्ष्य तं महादुर्गं तदन्तर्भूमिमागताः ॥७६॥
विमानिनः समस्तास्ते व्यलोकयन् हि राजतीम् ।
श्वेतां चन्द्रसमां भूमिं सर्वर्द्धिवसतिश्रिताम् ॥७७॥
असंख्यानादिमुक्तानां पत्तनाद्यभिशोभिताम् ।
असंख्ययोजनायामां ययुर्दुर्गं चतुर्थकम् ॥७८॥
दिव्यराजततत्त्वात्मतेजोराशिसमुद्भवम् ।
पूर्ववदायतं सर्वसमृद्धिभोग्यसमन्वितम् ॥७९॥
असंख्यानादिमुक्तानां शुक्लानां मन्दिरैर्युतम् ।
वीक्ष्येदं वै भवेत् कृष्णनारायणस्य मन्दिरम् ॥८०॥
एवं प्रतर्कयन्तस्ते न प्राप्याऽग्रे ययुर्द्रुतम् ।
भूमिं वै दिव्यवैदूर्यतेजोमयीं तथाऽऽयताम् ॥८१॥
दिव्याऽनादिमुक्तवासामसंख्यर्द्धिरसान्विताम् ।
सर्वकामप्रपूरां चालोकयन् बहुशोभनाम् ॥८२॥
पूर्वतेजोऽधिकतेजोरसमयीमनुत्तमाम् ।
वीक्ष्य तूर्णं पुरो याता दुर्गं तु पञ्चमं प्रति ॥८३॥
स्फाटिकाख्यमणिगर्भमहातेजोऽभिनिर्मितम् ।
असंख्यानादिमुक्तानां दिव्यालयादिशोभनम् ॥८४॥
श्रीहरेः किरणैः सर्वभोग्यतत्साधनान्वितम् ।
महानन्दप्रदं बद्रि वीक्ष्याऽग्रे प्रययुश्च ते ॥८५॥
षष्ठं दुर्गं तथादीर्घायतोच्छ्रयं मनोहरम् ।
सर्वाऽसंख्यमहादिव्यकौस्तुभमणिविग्रहम् ॥८६॥
असंख्यानादिमुक्तानां दिव्यमन्दिरशोभनम् ।
सर्वदिव्यर्द्धिसहितं सर्वकामप्रपूरकम् ॥८७॥
विमानगास्त्विदं कृष्णनारायणाश्रयस्थलम् ।
मत्वा वीक्ष्य तमप्राप्य ययुरग्रे समुत्सुकाः ॥८८॥
लीलाभूमिं विशालां च दिव्यतेजोभिशोभनाम् ।
पूर्वपूर्वत उत्कृष्टतेजोरसर्द्धिवर्धिताम् ॥८९॥
असंख्याऽनादिमुक्तानां वसत्या वासितां शुभाम् ।
महासाम्राज्यशोभाढ्यां सर्वानन्दपरिप्लुताम् ॥९०॥
सर्वेन्द्रियसुखानन्दप्रदां दिव्यात्मगोचराम् ।
वीक्ष्याऽग्रे प्रययुः सर्वे दुर्गं तु सप्तमं प्रति ॥९१॥
चिन्तामणिमहातेजःकल्पितं पूर्ववदायतम् ।
असंख्यानादिमुक्तानां महामन्दिरशोभनम् ॥९२॥
सर्वर्द्धिसहितं सर्वभोग्यभोगाभिपूरितम् ।
अयं नाथस्य वासश्चेत्येवं मत्वाऽनवाप्य तम् ॥९३॥
ययुरग्रे दिव्यचिन्तामणिभूमिं तदुत्तमाम् ।
सर्वर्द्धिसहितां सर्ववनोद्याननदादिभिः ॥९४॥

शोभनां सर्वथा दिव्यामसंख्ययोजनायताम् ।
असंख्यानादिमुक्तानां प्रासादपत्तनान्विताम् ॥९५॥
वीक्ष्य तूर्णं ययुर्दुर्गमष्टमं कल्पतरुवजम् ।
कल्पतेजोमयं सर्वकल्पकिरणभोगदम् ॥९६॥
असंख्यानन्तमुक्तानामनादीनां च मन्दिरैः ।
सर्वथा सर्वतो व्याप्तं सर्वदुर्गोत्तमोत्तमम् ॥९७॥
पूर्वेभ्यश्चापि सर्वेभ्यो विशालायतमुच्छ्रितम् ।
असंख्यभूमिकाकक्षास्तरमालाधिराजितम् ॥९८॥
अनादिश्रीकृष्णनारायणोत्थकिरणान्वितम् ।
सर्वविद्याभिर्भोमिश्च परब्रह्मरसप्रदम् ॥९९॥
असंख्यगोपुरैर्युक्तमुपर्युपरि संस्थितैः ।
असंख्यभूमिकाकक्षाऽनादिमुक्ताऽभिवासितम् ॥१००॥
असंख्यघनतेजोजस्वर्णमण्डपकोष्ठकम् ।
असंख्यगह्वरगर्भमसंख्यतोरणोज्ज्वलम् ॥१०१॥
असंख्ययानसंयानविमानाद्यभिसंभितम् ।
असंख्यचन्द्रशालास्थोद्यानवाटीसुशोभनम् ॥१०२॥
असंख्यदीर्घशिखरैर्युक्तप्रासादविग्रहम् ।
असंख्यनगरावासं चाऽसंख्यपत्तनान्वितम् ॥१०३॥
असंख्यानन्तसम्पद्भिर्भोग्याभिश्च प्रपूरितम् ।
भोगोपकरणैर्दिव्यैर्भोगैः प्रसाधनैर्युतम् ॥१०४॥
असंख्याऽनन्तदिव्येष्टकल्पग्रावमणिकृतम् ।
असंख्यदिव्यशालाभिर्विहारै रासमण्डलैः ॥१०५॥
युक्तं रंगविचित्रांऽगमण्डपैर्गर्भवर्तिभिः ।
असंख्याऽव्ययसर्वोर्ध्वदिव्यानन्दसरिद्ह्रदैः ॥१०६॥
महानन्दसरोभिश्च शोभितं कनकोज्ज्वलम् ।
अनादिश्रीकृष्णनारायणरूपाऽनुरूपिभिः ॥१०७॥
शक्तिसामर्थ्यमुक्तैश्चाऽध्युषितं सर्वतोमुखैः ।
अनादिमुक्तमुक्तानीसाम्राज्यदिव्यमन्दिरम् ॥१०८॥
उपर्यनन्तं च तलेऽप्यनन्तं
पार्श्वेऽप्यनन्तं परितोऽप्यनन्तम् ।
मध्येऽप्यनन्तं क्रमणेऽप्यनन्तं
ह्यपारपारं तमलोकयँस्ते ॥१०९॥
समस्तभोगं च समस्तमोदं
समस्तपीयूषमखण्डशंदम् ।
समस्तसौख्यं च समष्टिबीजं
दुर्गं महान्तं तमलोकयँस्ते ॥११०॥
सदैकतत्त्वं बहुभावरूपं समस्तसत्कामसुपूरकं च ।
समस्तसत्त्वतेनकल्पकान्तप्रख्यैर्मणीन्द्रैरभिरामकं तम् ॥१११॥
व्यलोकयन् वल्लभिकासमृद्धि-
प्रकाशनातिप्रभुमिष्टदं च ।
कल्पद्रुचिन्तामणिकल्पवल्ली-
कल्पोर्मिकाचक्रमणीन्द्रगर्भम् ॥११२॥
समस्तसत्सौरभरम्यरूप-
समस्तकाऽऽस्वादनसद्रसाढ्यम् ।
असंख्यकाऽऽकर्षणभृत्स्वराढ्य-
मसंख्यसत्स्पर्शसुखप्रदं च ॥११३॥
यत्र कामदुघा गावो यत्र कल्पप्रिया रमाः ।
यत्राऽऽनन्दप्रदा मुक्ता निवसन्त्यभितः सुखाः ॥११४॥
येषां प्रत्येकनिलये द्वारदेशेऽग्रभागके ।
सृष्टिदृश्यो मणिश्चास्ते सर्वसाक्षात्प्रदर्शनः ॥११५॥
येषामन्तर्गृहे भित्तौ सृष्टिश्राव्यो मणिः स्थितः ।
सर्वसृष्टिस्वरशब्दश्रावको बोधदायकः ॥११६॥
येषां देहलिकामध्ये चास्ते वै मानसो मणिः ।
सृष्टिमानससाक्षात्कारप्रदो दिव्यबोधनः ॥११७॥
येषां गृहविताने च लम्बते तु सुधामणिः ।
सर्वतृप्तिप्रदः सर्वानन्दप्रमोदसौख्यदः ॥११८॥
येषां तु चत्वरे चास्ते कल्पद्रुर्मणिसत्फलः ।
सर्वास्वादरसदाता शाश्वतीं तृप्तिमावहन् ॥११९॥
येषामन्तर्गृहे चास्ते स्पर्शानन्दप्रदो मणिः ।
कृष्णस्पर्शप्रदः सर्वस्पर्शदः शाश्वतः सुखः ॥१२०॥
विशिष्टं बद्रिके ! तत्र शृणु त्वं वै रहस्यकम् ।
गृहे गृहे कामफलं मुक्तेच्छापूरकं परम् ॥१२१॥
वर्ततेऽनादिकृष्णेन दत्तं तु प्रतिमुक्तकम् ।
फलं स्पृष्ट्वाऽनादिमुक्तो भूत्वा मुक्तानिका प्रिया ॥१२२॥
कान्तं कृष्णं पतिं कृत्वा सेवितुं यदि वाञ्छति ।
तदा कृष्णा प्रिया भूत्वा कण्ठे धृत्वा फलं तु तत् ॥१२३॥
सेवते स्वपतिं कृष्णनारायणं रतिप्रिया ।
पूर्णानन्दं परं भुक्त्वा प्रसाद्य वल्लभम्प्रभुम् ॥१२४॥
मणिमुत्तार्य कण्ठात्तं फलाख्यं जायते पुमान् ।
एतद्वै परमैश्वर्यं स्वयं जानाति नेतरः ॥१२५॥
यस्मै दत्तं फलं यत्तु तद्वै तस्य प्रवर्तते ।
नाऽन्यहस्तगतं तद्वै प्रवर्ततेऽन्यरूपणे ॥१२६॥
एतदेव महाश्चर्यं सर्वानन्दप्रदप्रभोः ।
मुक्तानां सर्वकामानां पूरकस्य परात्मनः ॥१२७॥
सन् स्वयं भगवाँस्तत्र चित् सा मुक्तानिका तदा ।
तयोरानन्द उत्कृष्टः सच्चिदानन्द इत्ययम् ॥१२८॥

य एतां परमां दिव्यां मुक्तिरहस्यबोधिकाम् ।
उपनिषदं जानाति सोऽपि यायात्परां गतिम् ॥१२९॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने
हृद्बोधने परे धाम्नि दिव्याऽष्टदुर्गराष्ट्राऽनादिमुक्त-
वसतितदालयैश्वर्यतद्रहस्योपनिषदादि-
वर्णननामा षोडशाधिकशत-
तमोऽध्यायः ॥११६॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि विमानगाः समर्चिताः ।
रहस्याऽनादिमुक्तैस्तैर्वीक्ष्य दुर्गं तमष्टमम् ॥ १ ॥
बालकृष्णेरिताश्चाऽग्रे ययुर्देशांस्ततः परान् ।
अनन्ताऽसंख्यमानांश्चाऽतर्क्यर्द्धिसंभृतान् शुभान् ॥ २ ॥
अनादिश्रीकृष्णनारायणतेजोभिसंभृतान् ।
यत्राऽनादिमहायुक्ता वसन्ति सर्वतः खलु ॥ ३ ॥
यत्र रहस्यमुक्ताश्च निवसन्ति हरेः प्रियाः ।
यत्र तादात्म्यमुक्ताश्च सदा वसन्ति भूमिषु ॥ ४ ॥
यत्र वसन्ति च मूर्तिमुक्ता अभिन्नभावनाः ।
यत्र वसन्ति चाऽदृश्यमुक्ताः कृष्णैकगोचराः ॥ ५ ॥
बद्रिके ! वर्णनं चाऽस्याः स्थितेर्बुद्धेः परं मम ।
तान् प्रदेशान् लोकयन्तो ययुरग्रे विमानगाः ॥ ६ ॥
व्यपश्यंस्ते तादृशानां मुक्तानां नगराणि वै ।
पत्तनानि नगरीश्च वसतीन् राष्ट्रकाणि च ॥ ७ ॥
कृष्णनारायणाऽऽनन्दवाहिन्यो येषु चापगाः ।
कृष्णनारायणमूर्तिरसप्राणि सरांसि च ॥ ८ ॥
कृष्णनारायणाऽऽस्वादवत्यो येषु तु दीर्घिकाः ।
कृष्णनारायणाऽऽस्योत्थताम्बूलरससागराः ॥ ९ ॥
कृष्णनारायणाऽऽश्लेषजन्याऽमृतभरा च भूः ।
कृष्णनारायणमूर्तिप्राणि रजांसि येषु च ॥१०॥
कृष्णनारायणमूर्तिप्राणि वनानि येषु च ।
कृष्णनारायणमूर्तिफलिका येषु वल्लयः ॥११॥
कृष्णनारायणमूर्तिपुष्पिणः स्तबकास्तथा ।
कृष्णकान्तधरा वाट्य आरामाः कृष्णयोगिनः ॥१२॥
उद्यानान्यभितः सन्ति कृष्णमयानि यत्र च ।
तृणानि मुक्तरूपाणि सस्यानि तादृशानि च ॥१३॥
कृष्णनारायणमूर्तिधराणि सन्ति चाभितः ।
विविधानां च मुक्तानां ध्यानसेवाजुषां हरेः ॥१४॥
मण्डलानि विराजन्तेऽभितः सभागृहेषु वै ।
कामरूपधराः सर्वे काममणिप्रधारिणः ॥१५॥
कामपूरककृष्णस्य कलांऽशाऽऽवेशरूपिणः ।
कृष्णांगरूपिणः सर्वे कृष्णाऽभिन्नस्वरूपिणः ॥१६॥
कृष्णानन्दभराः कृष्णाऽपृथक्सिद्धविशेषणाः ।
अनन्तभूप्रदेशस्था रिक्तस्थलीविवर्जिताः ॥१७॥
प्रत्येकं श्रीहरेर्मूर्त्या सहिताः सन्ति सन्मुखाः ।
वनारण्यमहामुक्ताः सर्वेऽपि कृष्णमूर्तयः ॥१८॥
पर्वतादिमहामुक्ताः सर्वेऽपि कृष्णमूर्तयः ।
नदीनदमहामुक्ताः सर्वेऽपि कृष्णमूर्तयः ॥१९॥
सीमवाटीमहामुक्ताः सर्वेऽपि कृष्णमूर्तयः ।
आरामोद्यानगा मुक्ताः सर्वेऽपि कृष्णमूर्तयः ॥२०॥
ग्रामपत्तनमुक्ताश्च सर्वेऽपि कृष्णमूर्तयः ।
नगरावासमुक्ताश्च सर्वेऽपि कृष्णमूर्तयः ॥२१॥
प्रसादालयमुक्ताश्च सर्वेऽपि कृष्णमूर्तयः ।
कृष्णमण्डलमुक्ताश्च सर्वेऽपि कृष्णमूर्तयः ॥२२॥
शाखिप्रशाखिमुक्ताश्च सर्वेऽपि कृष्णमूर्तयः ।
वन्यनागरिका मुक्ताः सर्वेऽपि कृष्णमूर्तयः ॥२३॥
स्वामिकान्तस्य मुक्तान्यः सर्वास्ताः कृष्णमूर्तयः ।
शक्तयश्चापि मुक्तान्यः सर्वास्ताः स्वामिमूर्तयः ॥२४॥
परब्रह्मप्रियाः कृष्णहरिप्रियाश्च शक्तयः ।
सर्वा रहस्यमुक्तान्यः सर्वथा हरिमूर्तयः ॥२५॥
अरे बद्रि विभूषाश्च चेतना हरिमूर्तयः ।
अरे बद्रि स्वर्णवेषाश्चेतना हरिमूर्तयः ॥२६॥
अरे बद्रि च शृङ्गाराश्चेतना हरिमूर्तयः ।
अरे बद्रि चायुधानि सर्वाणि हरिमूर्तयः ॥२७॥
अरे बद्र्युपस्कराणि सर्वाणि हरिमूर्तयः ।
अरे बद्रि प्रभोग्यानि सर्वाणि हरिमूर्तयः ॥२८॥
अरे बद्रि सुवर्ष्माणि सर्वाणि हरिमूर्तयः ।
अरे बद्रि च हर्म्याणि सर्वाणि हरिमूर्तयः ॥२९॥
अरे बद्रि समस्तानीन्द्रियाणि हरिमूर्तयः ।
अरे बद्रि पृथग् यानि तानि वै हरिमूर्तयः ॥३०॥
अरे बद्रि निजात्माऽपि तत्राऽऽस्ते हरिमूर्तिकः ।
यत्किञ्चिद्वर्तते धाम्नि परे तत् कृष्णमूर्तिकम् ॥३१॥
सर्वं हर्यात्मकं कृष्णस्वरूपं नान्यदस्ति तत् ।
कृष्णानन्दसुखं कृष्णाऽपृथक्प्रसिद्धविग्रहम् ॥३२॥
एकमेवाऽद्वितीयं तत्रान्यत् पश्यति नेतरः ।
सर्वं श्रीकृष्णकान्तात्मान्वितं तद्रूपरूपितम् ॥३३॥

तत्र किं केन गृह्णीयात् स्वात्मकं स्वं प्रविन्दते ।
एतादृशं परब्रह्म वर्तते सर्वतोऽन्वितम् ॥३४॥
बद्रिकेऽण्डप्रदेशेऽपि परब्रह्म प्रकाशते ।
परा ब्राह्मी महाविद्योपनिषत् सेयमुच्यते ॥३५॥
एतामधीत्य मुक्तोऽपि परब्रह्मायते तदा ।
अमुक्तो मुक्ततां याति मुक्तोऽनादिप्रमुक्तताम् ॥३६॥
अनादिमुक्त एवापि याति रहस्यमुक्तताम् ।
रहस्यमुक्त एवापि याति तादात्म्यमुक्तताम् ॥३७॥
तादात्म्यमुक्तः संयाति परब्रह्मस्वरूपताम् ।
नाऽन्यदस्याऽवशिष्टं स्याज्ज्ञातव्यं परमं ततः ॥३८॥
नाऽन्यदस्य तथाऽऽप्तव्यं शिष्येत कान्ततः परम् ।
स्वः कान्तः कान्त एव सः सा कान्ता कान्त एव सः ॥३९॥
यत्साम्यमेवाऽस्य न किञ्चिदस्ति
यस्मात्परं नास्ति तथा च किञ्चित् ।
यद्गर्भमेवाऽखिलमस्य चास्ति
तद्भाव्य विद्वान्न पृथक् प्रशास्ति ॥४०॥
का वा प्रिया तत्र च कः प्रियोऽस्य
यस्य प्रियं सर्वमयं स एव ।
तं प्रेष्ठकान्तं परिरभ्य धाम्नि
परे पृथक्त्वं विजहाति मुक्तः ॥४१॥
सोऽयं प्रियः सैव परा प्रिया च
स एव भोक्ता च भुजिष्यिका सा ।
स गर्भनिष्ठो हृदये बहिश्च
तं प्राप्य कान्तं वृजिनं छिनस्ति ॥४२॥
ब्रह्मप्रियाः कृष्णरमाश्च बद्रिके
हरिप्रिया मुक्तरमाश्च ताः खलु ।
तं प्राप्य कान्तं च समस्तरूपिणं
स्थातुं हि तत्रैव मनांसि चक्रिरे ॥४३॥
विमानगास्ताः खलु कृष्णदेहिनो
मुक्ता अपि कण्ठमणीच्छया मुहुः ।
समुत्सुकाः कृष्णपतिस्पृहार्थिनो
मुहुर्व्यपश्यन् स्मितभावगर्भिकाः ॥४४॥
हरिः प्रविज्ञाय च वीक्ष्य भावं
निजं परं प्रेम तथाविधं च ।
प्रदर्श्य शीघ्रं ह्यनयत् पुरं स्वं
परात्परं सर्वपरं महोल्बम् ॥४५॥
विमानगाश्च ते सर्वे वीक्ष्य मुक्तमयीं भुवम् ।
पारब्राह्मीं च वसतिं ययुः श्रीकृष्णमन्दिरम् ॥४६॥

सर्वमुक्तनगराणां वर्तुलानां च गर्भगम् ।
महादुर्गाभिसम्पन्नं निजं रहस्यमन्दिरम् ॥४७॥
बद्रिके ! ते स्पृहावन्तो धाम्नि स्थातुं विमानगाः ।
परब्रह्मपुरं दूरान् मुक्तवसतिमध्यगम् ॥४८॥
व्यपश्यन् यावदेवेति तावन्नेत्राणि सत्वरम् ।
तेजोऽभिभूततेजांसि मिमिलुर्वै विमानिनाम् ॥४९॥
परब्रह्मपुरं द्रष्टुमशक्तास्ते विमानगाः ।
महिमानं विदुः स्वेशं स्वामिनस्तेजसां तदा ॥५०॥
प्रार्थयन् परमात्मानं दृष्टिं दातुं तदुत्तमाम् ।
हरिर्ददौ निजां पराकाष्ठितां दृष्टिमुत्तमाम् ॥५१॥
निजनेत्रमयीं दृष्टिं निजनेत्रऽपृथक्स्थिताम् ।
तदा विमानगाः सर्वे स्फारनेत्राः सशक्तिकाः ॥५२॥
अभवन्निर्निमेषाश्च कृष्णतेजःसहाः सदा ।
विमानानि ययुर्द्राक् च परब्रह्मपुरान्तिकम् ॥५३॥
घनतेजोघनतेजोघनतेजोऽतिघट्टितम् ।
यत् ततोऽपि च सद्घट्टतेजोघट्टातितैजसम् ॥५४॥
परब्रह्मपुरदुर्गं व्यपश्यँस्ते विमानगाः ।
अनादिश्रीकृष्णनारायणात्मतत्त्वनिर्मितम् ॥५५॥
सर्वाश्चर्यमयं दिव्यं रहस्यमुक्तसंश्रितम् ।
कण्ठमणिमहामुक्तप्रेममुक्ताधिवासितम् ॥५६॥
कोट्यर्बुदाब्जपत्नीनां दासा दास्यश्च सेवकाः ।
पुत्रा पुत्र्यश्च या ये च ते सर्वे कृष्णरूपिणः ॥५७॥
तत्र दुर्गे निवसन्ति परार्धयोजनावृते ।
असंख्यर्द्धियुते सर्वकृष्णभोगाभिपूरिते ॥५८॥
दिव्यगोपुरभूम्यब्जोच्छ्रयेऽन्तःपुररक्षक ।
विमानस्था विलोक्याऽपि तान् सर्वान् कृष्णरूपिणः ॥५९॥
समानान् ज्ञातवन्तो न पुत्रीः पुत्रांश्च सेवकान् ।
ऋषीन् साधून् यतीन् साध्वीर्विविदुर्न यदा तदा ॥६०॥
प्रवेदनपरां बुद्धिं ददौ तेभ्यो हरिः प्रभुः ।
द्रुतं प्रोद्भिन्नमतयः सर्वज्ञास्तेऽभवन् द्रुतम् ॥६१॥
सर्वाऽऽवेदनयोग्याश्च सर्वांस्ते विविदुस्तदा ।
मम पुत्रो ह्ययं पुत्री चेयं दासो ममाऽप्ययम् ॥६२॥
मम माता पिता चाऽयं मम दासी त्वियं सुहृत् ।
इत्येवं प्राप्तविज्ञानाः प्रमोदिनो विमानगाः ॥६३॥
सहर्षाश्चात्मसम्बोधा मिथो गाथाः प्रचक्रिरे ।
बद्रिके ते रहस्याख्या मुक्ता अपि च सत्वरम् ॥६४॥
विमानगान् पिता मेऽयं मातेयं मे सुहृन्मम ।
बन्धुश्चाऽयं क्षितौ देशे पुत्रोऽयं पुत्रिका त्वियम् ॥६५॥

इत्येवं बहुधा व्यक्तमवोचुर्वीक्ष्य चाम्बरे ।
श्रुत्वा वीक्ष्य निसर्गोत्थस्नेहाः कुतुहलान्विताः ॥६६॥
ससंभ्रमाः सचाञ्जल्या दुद्रुवुः प्रेमपूरिताः ।
सपूजोपस्करपात्रकरास्ते कृष्णमूर्तयः ॥६७॥
विमानगाः समस्तास्तेऽपि च तान् प्रेमनेत्रिणः ।
आलोकयन्तः स्नेहाढ्यास्तदाह्वानं प्रचक्रिरे ॥६८॥
कोटिकोटिविमानानामवतारणभूमिषु ।
दुर्गमध्यस्थलीष्वेते स्वागतार्थं समाययुः ॥६९॥
सर्वसौगन्ध्यलावण्यव्याप्तोद्यानसुभूमिषु ।
परब्रह्ममहोलस्याऽगारभागात्मिकासु वै ॥७०॥
जयशब्दान् सुखशब्दाँश्चक्रिरे ते मुदान्विताः ।
अवतेरुर्विमानानि कृष्णनारायणेच्छया ॥७१॥
तानि सर्वाणि ते मुक्ता अक्षतैः कुसुमादिभिः ।
चन्दनैरमृतैस्तोयैर्वर्धयामासुरुत्सुकाः ॥७२॥
मिमिलुश्चावतीर्णास्तान् निजान्निजान् हरिप्रियान् ।
समाश्लिषन् मिथो वक्षोमेलनैर्नेत्रमेलनैः ॥७३॥
आननानां मेलनैश्च देहानां मेलनैस्तथा ।
अथ बद्रिप्रिये देवि रहस्यं शृणु चोत्तमम् ॥७४॥
विमाने ये स्थिताश्चासन् नारीमुक्तादयोऽखिलाः ।
अवतीर्णा विमानात्तु यदा तदा पुरः स्थितान् ॥७५॥
व्यलोकयन्निजरूपान् स्वागतार्थं समागतान् ।
अनादिसिद्धमुक्ताँस्तान् कृष्णकान्ताऽऽत्मकान् शुभान् ॥७६॥
सदा परमधामस्थान् परब्रह्मपुराश्रयान् ।
स्वात्मकान् स्वाऽपररूपान् स्वभावगुणरूपिणः ॥७७॥
स्वागतं कुर्वतः स्वेषां स्वपूजार्थं समागतान् ।
स्वाऽभिन्नरूपिणस्ताँश्च स्वाँश्च तच्छायिकात्मकान् ॥७८॥
वीक्ष्य विज्ञाय मूलात्मरूपिणः सर्वतः स्थितान् ।
आश्चर्यं परमं प्राप्ता अभवन् वै विमानिनः ॥७९॥
कृष्णपूजोत्तरं पूजां प्राप्य कृष्णाज्ञया तु ते ।
विमानिनो ययुस्तैस्तैः सहिताः स्वस्वकालयान् ॥८०॥
विमानिना तु मुक्तेन प्रत्येकेन सह प्रभुः ।
अनादिश्रीकृष्णनारायणो ययौ तदालयम् ॥८१॥
तस्य तस्य गृहे दिव्यगजासनेऽपरो हरिः ।
राजते मूलरूपोऽपीत्येवं व्यलोकयन् हरिम् ॥८२॥
हरिद्वयं निजरूपद्वयं वीक्ष्य विमानिनः ।
स्वीयमनादिमुक्तत्वं रहस्यमुक्ततामपि ॥८३॥
विविदुर्दिव्यविज्ञानाश्चान्तर्भावं निजात्मनि ।
मूलरूपे ययुः सर्वे कृष्णो कृष्णे तिरोऽभवत् ॥ ८४ ॥
सर्वेऽनादिकृष्णरूपा मूलरूपा यदाऽभवन् ।
बद्रिके दिव्यपरमां विश्रान्तिमापुरुत्तमाम् ॥ ८५ ॥
यथा विदेशे विहृत्य स्वगृहे शान्तिमेति ह ।
तथा विश्रान्तिमापन्ना विसस्मरुर्विदेशकान् ॥ ८६ ॥
अहो कृष्णस्य सामर्थ्यं दिव्याऽदिव्यमतिप्रदम् ।
अनन्तरूपधारित्वमसंख्यरूपदत्वकम् ॥ ८७ ॥
विमानानि विमानेषु व्यलीयन्त क्षणात्तदा ।
भूषावेषसमृद्धयश्च व्यलीयन्त तदर्द्धिषु ॥ ८८ ॥
अनादिश्रीकृष्णनारायणरूपं समस्तकम् ।
एकमेवाऽद्वितीयं वै रूपतो गुणतोऽपि च ॥ ८९ ॥
अभवत् सर्वमेवेति लीलां जानाति को हरेः ।
गृहे गृहे हरिश्चास्ते मुक्तं मुक्तं प्रति प्रभुः ॥ ९० ॥
ब्रह्मप्रियादिकाः सर्वा रहस्यमुक्ततां गताः ।
कोट्यर्बुदाब्जकोट्यश्च प्रासादाश्चातिशोभनाः ॥ ९१ ॥
असंख्यर्द्धियुतास्तत्र परब्रह्मपुरे स्थिराः ।
कण्ठमणिप्रभावेण प्रासादेषु स्थिताश्च ते ॥ ९२ ॥
विविदुश्च निजं पत्नीभावं कृष्णं हरिं प्रति ।
सिषेविरे तथैवैनं पतिं नारायणं प्रभुम् ॥ ९३ ॥
तदंगार्धस्वरूपाढ्याः प्राप्य स्वं शाश्वतं पुरम् ।
परब्रह्माऽमृतस्नानं चक्रिरे ते तदा गृहे ॥ ९४ ॥
परब्रह्माऽक्षतपुष्पचन्दनैः कृष्णमीजिरे ।
परब्रह्मरसास्वादामृतानां भोजनं व्यधुः ॥ ९५ ॥
परब्रह्माऽमृतवारिपानं प्रचक्रिरे प्रियाः ।
परब्रह्म परं कान्तं सिषेविरे निरन्तरम् ॥ ९६ ॥
परब्रह्मणः कान्तस्योपासनां चक्रिरेऽन्वहम् ।
परब्रह्मपराभक्तिं व्यधुस्ते नित्यमुक्तिगाः ॥ ९७ ॥
परब्रह्मानन्दवार्द्धिं बुभुजिरेऽतिसेवया ।
विविदुर्न परं किञ्चित् कान्तसुखात् सुखेतरत् ॥ ९८ ॥
कृष्णस्य कृपया पत्न्यः प्रापुः कृष्णस्वरूपताम् ।
अथ श्रीभगवाँस्ताभ्यो दर्शयितुं स्वमन्दिरम् ॥ ९९ ॥
कोट्यर्बुदाब्जकोटीनां प्रासादानां तु मध्यगम् ।
मनश्चक्रेऽथ वै कृष्णः सर्वाः प्राह प्रियं वचः ॥१००॥
परब्रह्ममहोलाख्यसभास्थानं प्रयाम्यहम् ।
आयान्तु सहसा सर्वास्तत्र मत्परमं पदम् ॥१०१॥
प्राप्तवत्यो भवत्योऽत्र सालोक्यं सार्ष्टिं चेत्यपि ।
सायुज्यं चापि सारूप्यं चैकत्वं परिशिष्यते ॥१०२॥
तदप्यहं दर्शयामि परधिष्ण्यस्थिते मयि ।
इत्येवं बद्रिके प्रोक्त्वा कृष्णनारायणप्रभुः ॥१०३॥

तिरोभवद्द्रुतं तत्तन्मन्दिरात् प्रययौ सभाम् ।
यत्र राजाधिराजेशाधिराजेश्वरपूजितः ॥१०४॥
अनाद्यनन्तमुक्तेशेश्वरमुक्तादिपूजितः ।
असंख्यानन्तविभवैरवतारैश्च पूजितः ॥१०५॥
असंख्यदिव्यशक्त्याद्यैरायुधैरभिपूजितः ।
सर्वसृष्टिस्वराट् चास्ते सर्वधामस्वराट् पतिः ॥१०६॥
अनादिश्रीकृष्णनारायणार्यः कृष्णकेशवः ।
स्वयं मूले स्वरूपे स्वे गत्वा स्थिरोऽभवद्धरिः ॥१०७॥
कंभरानन्दनो योऽयं गोपालकृष्णबालकः ।
प्रभुः पद्मावतीस्वामी राधालक्ष्मीवरोत्तमः ॥१०८॥
परमात्मा परब्रह्म परमेशः परेश्वरः ।
पुरुषोत्तमसंज्ञो वै भूत्वा धिष्ण्ये स्थिरोऽभवत् ॥१०९॥
बद्रिके मुक्तकोट्यस्ता आययुश्च सभां प्रति ।
हर्षिताः स्वपतिं प्रोष्य प्राप्ता पुनर्यथाऽगनाः ॥११०॥
भुवि प्राकट्यदिवसे सप्तविंशतिसंख्यके ।
ऊर्जकृष्णाष्टमीरूपे प्रातरेव प्रियादिकाः ॥१११॥
अनादिश्रीकृष्णनारायणस्मारितमुत्सवम् ।
कर्तुं तूर्णं ययुः सर्वे मुक्ता मुक्तानिकास्तदा ॥११२॥
गजासने स्थितं कान्तं सभामहोलकेऽभितः ।
स्थित्वाऽऽनर्चुः स्वामिनं स्वं चारात्रिकं व्यधुस्तथा ॥११३॥
असंख्यमुक्ता आगत्य दिव्योपचारकैर्हरिम् ।
पुपूजुः परया प्रीत्या जयनादान् प्रचक्रिरे ॥११४॥
तत्रत्याः प्रययुः सर्वे प्रपूज्य च निजालयान् ।
सहायातास्तु ये ब्रह्मप्रियाद्या मुक्तकोटयः ॥११५॥
ते सर्वे तु समैच्छन् वै द्रष्टुं कृष्णमहोलकान् ।
ओमित्याह तदा मुक्तान् दर्शयामीति चाह तान् ॥११६॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने-ऽक्षमदुर्गोत्तरस्थाः परधामप्रदेशाः, परब्रह्मपुर-दुर्गः, परब्रह्मात्ममुक्तवसतयः, परब्रह्मपुरस्थानां वैमानिकानां स्वरूपद्वयेऽप्यैक्यं, परब्रह्मपुरे स्वस्वालयेष्ववतरणम्, स्वागतं विश्रमणं, परब्रह्मणः सभायां स्वशाश्वतधिष्ण्यं प्रति गमनमित्यादिनिरूपण-नामा सप्तदशाधिकशत-तमोऽध्यायः ॥ ११७ ॥

**श्रीनरनारायण उवाच—**

शृणु बद्रीप्रिये देवि रंगमहोलमुत्तमम् ।
सभामहोलमुत्कृष्टं वासमहोलमित्यपि ॥ १ ॥
शय्यामहोलमुत्कृष्ठं महोलं मन्दिराभिधम् ।
स्नानमहोलनैर्मल्यं खेलमहोलमित्यपि ॥ २ ॥
शान्तिमहोलसौख्यं च शृंगारार्हमहोलकम् ।
महोलं भोजनाख्यं च पूजामहोलमित्यपि ॥ ३ ॥
सर्वांगममहोलं च भक्तसेवामहोलकम् ।
तथा रहस्यमुक्तानीकृतसेवामहोलकम् ॥ ४ ॥
पट्टांगनामहामुक्तानिकामहोलकं तथा ।
अन्तःपुरमहोलं च षोडशेतिमहोलकान् ॥ ५ ॥
ब्रह्मप्रियाद्या मुक्ताश्च व्यपश्यन् बहुविस्तरान् ।
लक्षयोजनविस्तारान् प्रत्येकं तान् महोलकान् ॥ ६ ॥
रंगमहोलसंज्ञो यो महोलः परमात्मनः ।
अनादिश्रीकृष्णनारायणस्य सन्निवासवान् ॥ ७ ॥
सर्वो दिव्यसुवर्णात्मा सच्चिदानन्दतैजसः ।
सर्वर्द्धिसिद्धिसामर्थ्यासंख्यैश्वर्यादिसंभृतः ॥ ८ ॥
सर्वोर्ध्वध्वजसंशोभद्वृत्तमण्डपराजितः ।
असंख्यस्तम्भशोभाभिः रमणीयमनोहरः ॥ ९ ॥
कल्पलताऽक्षयपात्रचिन्तामण्यादिकोणकः ।
सर्वभोग्यादिसंराजत्पार्श्वशालादिराजितः ॥१०॥
असंख्यतोरणालम्बिकम्मानिकातिसुन्दरः ।
दिव्यातिदिव्यतेजोभिर्हरेः समन्ततः शुभः ॥११॥
मध्ये ब्रह्मासनाढ्यश्च वितानछत्रचामरैः ।
दिव्यदेवतामुक्ताभिः पुष्पस्रगाभिवर्षितः ॥१२॥
यत्तेजांसि हरेः सिंहासनतेजोभवानि वै ।
तत्तेजांसि प्रसरन्ति चान्यमहोलकेषु ह ॥१३॥
अन्यमहोलतेजांसि वर्तुलानि प्रयान्ति च ।
बहिर्दुर्गाभिसम्मुखान्यतीव सर्वसृष्टिषु ॥१४॥
ब्रह्मासनेऽनादिकृष्णनारायणो विराजते ।
परेश्वरो मूलरूपः सर्वस्वामी सदीश्वरः ॥१५॥
सर्वाभरणभूषश्च सर्वसुगन्धसंभृतः ।
सर्वरूपातिरूपाढ्यः सुन्दरेभ्योऽपि सुन्दरः ॥१६॥
युवाऽऽषोडशवर्षोनः सर्वकान्तामनोहरः ।
सर्वशृंगारशोभाढ्यः सर्वेषां हृदयंगमः ॥१७॥
सहस्रस्तम्भयुक्सौम्यब्रह्मासने विराजितः ।
शतसोपानोर्ध्वपीठे समासीनः स कोमले ॥१८॥
सर्वपूजोपहाराद्यैरर्चितो मुक्तकोटिभिः ।
तमेनं परमात्मानं कान्तं परमपुरुषम् ॥१९॥
दृष्ट्वाऽऽनन्दं ययुः सर्वरहस्यमुक्तकोटयः ।
रंगमहोले मुक्तास्ते व्यपश्यन् स्वान् हि कोटिशः ॥२०॥

दिव्यरत्नगतरूपान् नैजानसंख्यकानपि ।
भित्तौ ते च ततोऽपश्यन् धामसृष्टीः समस्तिकाः ॥२१॥
चरुष्वपि ततोऽपश्यन्श्रीश्वराखिलसर्जनम् ।
पट्टिकासु ततोऽपश्यन् ब्रह्माण्डानि समस्ततः ॥२२॥
एवंविधं परं साक्षादनुभवं हि लेभिरे ।
कोणके कोणके सर्वसृष्टिव्यूहा भवन्ति हि ॥२३॥
तलके तलके तत्र सर्वधामानि सन्ति हि ।
फलके फलके सर्वब्रह्माण्डानि भवन्ति हि ॥२४॥
अनन्ताराधिकारस्तत्राऽसंख्याश्च कमलास्तथा ।
असंख्याश्चापि माणिक्यः पद्मावत्योऽप्यसंख्यकाः ॥२५॥
प्रिया अनन्तकास्तत्र लक्ष्म्योऽप्यनन्तका अपि ।
रमा अनन्तकाश्चापि श्रियः सन्त्यप्यनन्तकाः ॥२६॥
रंगमहोलमध्ये श्रीकृष्णनारायणप्रियाः ।
कृष्णनारायणरूपप्रतिमा मुक्तविग्रहाः ॥२७॥
सर्वाः पुंरूपिण्य इति सेवन्ते कान्तमुत्सुकाः ।
रहस्यरूपधारिण्यः सेवने शयनालये ॥२८॥
पुंरूपप्रधारिण्यस्ताः सेवन्ते रंगमण्डपे ।
ब्रह्मप्रिया असंख्याश्चाऽप्यसंख्याश्च हरिप्रियाः ॥२९॥
कार्ष्ण्योऽप्यनन्ताः सेवन्ते हरिण्यो हरिमच्युतम् ।
नारायण्योऽप्यसंख्याश्च माधव्योऽपि तथाविधाः ॥३०॥
लीलाश्चापि तथा वासुदेव्यश्चापि ह्यसंख्यकाः ।
पद्माश्चापि च पद्मिन्यस्तुलस्यश्चाप्यसंख्यकाः ॥३१॥
शारदाश्च सरस्वत्यो गंगा यम्योऽप्यसंख्यकाः ।
पुंमुक्ताख्याः प्रसेवन्ते कान्तं कृष्णं नरायणम् ॥३२॥
पूजयन्ति प्रभुं कान्तं रामयन्ति रमोत्तमाः ।
प्रेङ्खायां श्रीहरिमान्दोलयन्ति गीतिकोविदाः ॥३३॥
शृंगारयन्ति कमलाः स्वामिश्रीकृष्णमीश्वरम् ।
संवाहयन्ति चांगानि हरिण्यश्च हिरण्यभाः ॥३४॥
भोजयन्ति प्रभुं सर्वरस्यभोजनपानकैः ।
सुखयन्ति कृपानाथं सर्वाश्लेषप्रदानकैः ॥३५॥
सुखं गृह्णन्ति कान्तात् ता रहस्यमन्दिरश्रिताः ।
पाययन्ति हरिं दिव्यशर्करैलार्ककेसरैः ॥३६॥
मिश्रितानि सुदुग्धानि कामधेनूद्भवानि वै ।
एवंविधे महारंगमहोले हीरकोत्तमाः ॥३७॥
विद्यन्तेऽसंख्यरत्नानि स्वर्णहाराश्च शोभनाः ।
तैस्तैः कान्तं भूषयन्ति कान्ताः श्रीकान्तवल्लभम् ॥३८॥
तत्र ब्रह्मप्रियाद्यास्ताः स्वामिना सह संगताः ।
तत्रापि भगवान् कृष्णो द्वितीयरूपधृक् प्रभुः ॥३९॥
ताभिर्विलोकितः कान्तो द्वयोरैक्यं ततोऽभवत् ।
ब्रह्मसिंहासने तत्र व्यराजत परेश्वरः ॥४०॥
राजाधिराजश्रीमाद्योऽनन्तमुक्ताऽभिसेवितः ।
बद्रिके महदाश्चर्यं ह्यलोकयँश्च तत्स्थले ॥४१॥
प्रत्येकं ये कृष्णनारायणा ह्यासन् सहागताः ।
प्रतिमुक्तेन सहते परकृष्णे लयं गताः ॥४२॥
ब्रह्मसिंहासनेऽनादिकृष्णनारायणे प्रभौ ।
लयं यातान् निजकान्तान् वीक्ष्याऽऽश्चर्यं परं गताः ॥४३॥
तत एव प्रिया मुक्ता आकृष्टाः सुखमूर्छिताः ।
मुग्धाः कान्ते परे देवे पुपूजुस्तुष्टुवुर्मुदा ॥४४॥
आरार्त्रिकं प्रचक्रुश्च समाश्लिक्षन् पतिं प्रभुम् ।
समूचुः श्रीहरिं मुक्ताः प्रलुब्धाः परमेश्वरे ॥४५॥
हरे कृष्ण कृपासिन्धो त्वमेव परमः पुमान् ।
राजसेऽनन्तकृष्णात्मा सेवनीयोऽसि नः सदा ॥४६॥
भवतः सम्पदः सर्वाः प्रदर्शयाऽत्र नो विभो ।
महोलाः षोडश दिव्या बहिष्टो वीक्षिताः खलु ॥४७॥
आन्तरं वीक्षितुं सर्वं समीच्छामः प्रभोपते ।
बहिष्टोऽनन्तपारास्ते दृश्यन्ते माधवीपते ॥४८॥
तैजसोर्ध्वा यथा सूर्यास्तैजसानां सदाधिकाः ।
ब्रह्माण्डेषु भवन्त्येव तथा महोलकास्तव ॥४९॥
षोडशानां सुमध्यस्थो रंगमहोलकस्तव ।
कोटिसूर्यात्मकः सूर्य इवाऽऽभाति समन्ततः ॥५०॥
सर्वाधिको महाराज ! मनोमोहकरो हि नः ।
प्रदर्शय प्रभो सर्वान् सम्पदां निलयान् हि नः ॥५१॥
बद्रिके श्रीहरिस्तूर्णं दर्शयितुं तु तैः सह ।
रंगमहोले बभ्राम यत्रद्धर्यो ह्यसंख्यकाः ॥५२॥
दिव्यचिन्तामणीनां वै भित्तयश्च तलानि च ।
दिव्यचिन्तामणीनां च स्वर्णानां भूषणानि च ॥५३॥
दिव्यरत्नस्रजो रम्या दिव्यतोरणपंक्तयः ।
दिव्यवेषा दिव्यसर्वोपस्करा दिव्यभूमिकाः ॥५४॥
दिव्यसर्वास्तरणानि दिव्यासनानि मूर्तयः ।
दिव्यपात्राणि सर्वाणि दिव्यमञ्जुषिकादिकाः ॥५५॥
शृणु श्रीबद्रिके तत्र सन्ति रङ्गमहोलके ।
एकैकस्माद् वस्तुनस्तु बीजमणीन्द्रसंज्ञकात् ॥५६॥
यथेष्टमुद्भवाः सञ्जायन्तेऽसंख्यसजातिकाः ।
रूपकुल्या रसकुल्या गन्धकुल्या मणीश्वराः ॥५७॥
दधिकुल्या मधुकुल्याः सुधाकुल्या मणीश्वराः ।
आनन्दघनपानादिकुल्यास्तृप्तिप्रदास्तथा ॥५८॥

सर्वलावण्यकुल्याश्च मण्यो रस्यसम्प्रदाः ।
रहस्यमुक्तनिवहैर्वीक्षिता भोग्यदास्तदा ॥५९॥
केशाः सर्वाधिका बद्रि शृंगारद्रव्यसम्प्रदाः ।
भूषावस्त्रप्रदा वेषप्रदास्तत्र विलोकिताः ॥६०॥
लक्षशो भूमिकाः कक्षाः सच्चिदानन्दभायुताः ।
एकैकया प्रियया च सह स्थितः पतिः प्रभुः ॥६१॥
अनादिश्रीकृष्णनारायणाः प्रत्येकमन्दिरे ।
विलोकितः समस्ताभिर्दिव्यमुक्तानिकादिभिः ॥६२॥
सर्वोत्कृष्टमहानन्दघनवर्षणकारिणः । ।
विलोकितास्तत्र कृष्णमणयः कान्तमूर्तिजाः ॥६३॥
परावर्त्तनमण्यो लताकुञ्जमणिव्रजाः ।
महोद्यानादिमणयश्चाराममणयस्तथा ॥६४॥
विलोकिताः समस्ताभिस्तत्र रत्नादिहेतवः ।
हिरण्मय्यभियः सर्वा लोकिता वै समन्ततः ॥६५॥
सूर्यचन्द्रादिमणयो दर्पणादर्शपट्टकाः ।
विलोकिताः समस्ताभिः रंगमहोलकेऽभितः ॥६६॥
स्वस्वरूपाणि सर्वाणि विलोकितानि तत्र च ।
रहस्यमुक्तनिवहैः स्पृहावद्भिर्महोलके ॥६७॥
अत्याश्चर्यमिदं तत्र दृष्टिपथमभूद् गतम् ।
कृष्णनारायणमूर्तौ स्थितायां रंगमण्डपे ॥६८॥
परधामसमस्तं वै मस्तके तैर्विलोकितम् ।
अक्षरं धाम हृदये मायाधामोदरे तथा ॥६९॥
अवतारादिधामानि मुखे विलोकितानि वै ।
ईश्वराणां तु लोकाश्च जघने ह्यवलोकिताः ॥७०॥
ब्रह्माण्डानि पादयोस्तु विलोकितानि तैस्तदा ।
लिङ्गे संकर्षणरुद्रशंकरास्तैर्विलोकिताः ॥७१॥
अनिरुद्धा वेधसश्च नाभौ तस्य विलोकिताः ।
प्रद्युम्ना विष्णवस्तस्य वृषणयोर्विलोकिताः ॥७२॥
महापुमान् महाकालो भ्रुकुटौ तस्य लोकितौ ।
प्रकृतिश्च महामाया तदिच्छायां विलोकिता ॥७३॥
साक्षी वासुदेव एतौ बुद्धौ तस्य विलोकितौ ।
कृष्णो नारायणस्तस्य भुजयोस्तैर्विलोकितौ ॥७४॥
प्रियाः सर्वा हरेर्वामे पार्श्वे कुक्षौ विलोकिताः ।
आत्मानश्च हरेर्दक्षे नराः सर्वे विलोकिताः ॥७५॥
विहंगमाः पृष्ठदेशे यादांसि तु नितम्बके ।
वामे दक्षे तु तिर्यञ्चः शाखिनः सर्वरोमसु ॥७६॥
कन्दा रोम्णां तु मूलेषु रोमकूपेषु वल्लिकाः ।
पर्वताः कठिने तस्य नद्यो नाडीषु सर्वशः ॥७७॥
एकतत्त्वात्मके तस्मिन् तस्यैव कृपया बहून् ।
भेदान् विलोकयामासू रहस्यमुक्तकोटयः ॥७८॥
सुराष्ट्रं तस्य भाले वै भालमध्येऽक्षरासनम् ।
तस्य निजस्वरूपाणि व्यलोकयन् हरेः प्रियाः ॥७९॥
आहोऽस्य बद्रिके पारो वैभवानां न गम्यते ।
यद्यन्मूर्तौ च तत्सर्वं रंगमहोलकेऽभितः ॥८०॥
विलोकितं प्रियाभिर्वै व्यतिरिक्तं तदिच्छया ।
पुनश्च कृपया तत्र तत्र वस्तुनि माधवः ॥८१॥
प्रकाशमगमद् वस्तु तिरोभावमुपागमत् ।
अन्वितः श्रीकृष्णनारायणश्रीपतिवल्लभः ॥८२॥
विलोकितः समस्ताभिः सर्वात्मकोऽभितः पतिः ।
शरीरीव तदन्तःस्थो बहिःस्थश्चापि लोकितः ॥८३॥
वस्तु विलीय सहसा लोकितः स तदैकलः ।
स्वराट् सम्राण्महाराट् स एक एवाऽद्वितीयकः ॥८४॥
तत्रैकतां तदा प्राप्ता अनादिमुक्तकोटयः ।
परमुक्तकोटयश्च लोकिताः श्रीहरौ तदा ॥८५॥
मूर्तिमग्ना जले यद्वन्मीना इव ह्यसंख्यकाः ।
एकत्वरसवेत्तारश्चाऽपृथग्भावमास्थिताः ॥८६॥
न निःसरन्ति ते क्वापि मूर्तिलग्ना बहिः क्वचित् ।
येषां पारो न वा सीमा न संख्या न च मानकम् ॥८७॥
ह्येषा मूर्तिमयी सृष्टिः परधाम्नोऽतिरेकिणी ।
वीक्ष्य तां परमाश्चर्यं गता रहस्यमुक्तिगाः ॥८८॥
मानं च गलितं तासां न्यूनस्थित्या तदग्रतः ।
अथ ताश्चार्थयामासुः कान्ते स्थितिं तु तादृशीम् ॥८९॥
हरिर्ददौ च वचनं महोलदर्शनोत्तरम् ।
ततो वै दर्शयामास वासमहोलमुत्तमम् ॥९०॥
लक्षयोजनमानं च सर्वर्द्धिपूर्णमच्युतः ।
ततश्च दर्शयामास शय्यामहोलमुत्तमम् ॥९१॥
कोट्यर्बुदाब्जकान्तानां शय्यापर्यंकमण्डितम् ।
सर्वशृंगारवेषाद्युत्तमद्रव्यादिसंभृतम् ॥९२॥
अदृष्टपूर्वमेनं च दृष्ट्वाऽऽश्चर्यं परं ययुः ।
अथ स्वमन्दिरं पश्चाद् दर्शयामास माधवः ॥९३॥
यत्र माता कम्भराश्रीः पिता गोपालकृष्णकः ।
सन्तुष्टा च स्वसाऽप्यास्ते शुकश्च भगवानपि ॥९४॥
वल्लभश्च तथा तेषां भक्ता वसन्ति सर्वदा ।
तत्तन्मूलस्वरूपेषु मातापित्रादिकान् हरिः ॥९५॥
सर्वेषां पश्यतां तत्र कृपयाऽन्तरभावयत् ।
आश्चर्यं परमं तद्वै वीक्ष्य तेऽपि मुदं ययुः ॥९६॥

तत्रैवोषुर्यथेष्टं वै मात्राद्या मन्दिरालये ।
सर्वर्द्धिसहिते लक्षयोजने दिव्यविग्रहे ॥९७॥
अथ स्नानमहोलं च दर्शयामास सत्पतिः ।
दिव्यस्नानविधानानि वीक्ष्याऽऽश्चर्यं परं ययुः ॥९८॥
प्रस्रवणाः समस्ताश्च क्षीरनीराज्यमाधवाः ।
सुधाऽमृताऽऽनन्दमोदप्रमोदादिप्रवाहिणः ॥९९॥
वीक्षिताः सर्वसौगन्ध्यमृदुपेशलवार्युताः ।
ततस्ताभिर्वीक्षितश्च खेलमहोल उत्तमः ॥१००॥
सर्वानन्दरमणानि खेलसाधनकानि च ।
यत्र दिव्यानि वै सन्ति कल्पलभ्यानि सर्वथा ॥१०१॥
ततः शान्तिमहोलं च दर्शयामास केशवः ।
सर्वशान्तिप्रदं सर्वशान्तिसाधनसंभृतम् ॥१०२॥
ततश्च दर्शयामास शृङ्गारोद्यानमुत्तमम् ।
लक्षयोजनविस्तारं सुशृंगारमहोलकम् ॥१०३॥
कोट्यर्धुदाब्जपद्मानां शृङ्गारवस्तुपूरकम् ।
मूर्तिकल्पलताव्याप्तं सर्वेष्टसम्प्रदं शुभम् ॥१०४॥
कुंकुमाऽलक्तकवल्लीः कज्जलाऽक्षतवल्लिकाः ।
चन्दनद्रवलतिका गन्धसारद्रवद्रुमान् ॥१०५॥
स्नेहसारनवनीतपिण्डान् मृदुरसानपि ।
वीक्ष्य मोदं परं प्राप्ता रहस्यमुक्तिगास्तदा ॥१०६॥
भोजनानां महोलं च दर्शयामास मुक्तिकृत् ।
सर्वविधासु दिव्यास्वदिव्यासु सर्वसृष्टिषु ॥१०७॥
यद्यद् भोज्यं भक्ष्यवर्यं चोष्यं लेह्यं च पानकम् ।
तस्य सर्वस्य मूलं वै दिव्यं भोज्यं समस्तकम् ॥१०८॥
सर्वं दैवं चैश्वरं चाऽवतारीयं च मौक्तिकम् ।
आत्मीयं ब्राह्ममेवापि सर्वं तत्र प्रवीक्ष्यताः ॥१०९॥
स्पृहावत्योऽभवन् भोक्तुं भोजयामास तत्पतिः ।
चान्तिमां परमां तृप्तिं बहिर्भावां ददौ प्रभुः ॥११०॥
ततः पूजामहोलं च लक्षयोजनविस्तरम् ।
सर्वपूजार्हणायोग्योपरकारवस्तुसंभृतम् ॥१११॥
दर्शयामास भगवान् पूजां प्रचक्रिरे तु ताः ।
सर्वागममहोलं च दर्शयामास धामपः ॥११२॥
सर्वसृष्टिनिवासानामागमार्थकृतक्षणम् ।
समाधियोगिनां यत्र कृष्णयोगः प्रजायते ॥११३॥
यत्रैकके मणौ सर्वसृष्टयो दृष्टिगोचराः ।
प्रजायन्ते च वीक्ष्यैनं भक्तसेवामहोलकम् ॥११४॥
व्यलोकयँश्च ते मुक्ता यत्र सेवां हरेः सदा ।
मुक्ताः कुर्वन्ति विविधां मुक्तसेवां हरिस्तदा ॥११५॥
परस्परप्रसेवानां वीक्ष्य सेवकतां तयोः ।
महाश्चर्यं ययुः सर्वाः परं भाग्यं हि मेनिरे ॥११६॥
दर्शयामास भगवान् स्वं रहस्यमहोलकम् ।
यत्र कान्ता इमाः सर्वाः कान्तं श्रीकृष्णवल्लभम् ॥११७॥
सर्वकामप्रदा नित्यं सेवन्ते शयनादिषु ।
असंख्यकान्ताधामैतद् वीक्ष्याऽऽश्चर्यं गताः स्त्रियः ॥११८॥
ततश्च दर्शयामास पट्टाऽङ्गनामहोलकम् ।
यत्र शतं तथा चत्वारिंशत् सन्ति निजांगनाः ॥११९॥
सहस्रसेविकायुक्ताः प्रत्येकं स्वपतिं हरिम् ।
सेवन्ते सर्वदा बद्रि ! वीक्ष्य मोदं प्रलेभिरे ॥१२०॥
तासु तास्ता लयं प्राप्ता निजमूलासु योषितः ।
अथ श्रीभगवान् बद्रि चान्तःपुरमहोलकम् ॥१२१॥
दर्शयामास सर्वास्ता अनन्तमानमृद्धिदम् ।
भजन्ते कान्तभावेन कृष्णनारायणं तु याः ॥१२२॥
सर्वसृष्टिषु सर्वत्र सर्वास्ता यान्ति तत्र ह ।
लभन्ते कान्तमेवैनं चान्तःपुराख्यधामनि ॥१२३॥
वीक्ष्य ताः परमाश्चर्यं प्राप्य ववन्दिरे पतिम् ।
निजतादात्म्ययोगार्थं मूर्तौ वासाय सर्वदा ॥१२४॥
हरिर्विज्ञाय तद्भावं समाश्लेषं स्ववक्षसि ।
ददौ प्रेम्णा ददौ वासं चान्तर्भाव्य निजे हृदि ॥१२५॥
स्वमूर्तौ मूर्तिगर्भाख्यसृष्टौ वासं ददौ सदा ।
कोट्यर्बुदाब्जपत्नीः स्वाः सखीभिः सहिताः प्रियाः ॥१२६॥
अन्तर्भाव्य ययौ कृष्णो निजे रंगमहोलके ।
एकलो भगवान् कृष्णश्चैकधा बहुधापि सन् ॥१२७॥
भक्तेच्छापूरकश्चैवं स्वेच्छास्वतन्त्रभागपि ।
स्वस्मिन् स्वस्यैव विस्तारं स्वं समावेशयत्प्रभुः ॥१२८॥
पुत्रपुत्र्यादिकं सर्वं दासदासीप्रविस्तरम् ।
स्वोद्भावितं स्वविस्तारं स्वस्मिन्नावेशयत्प्रभुः ॥१२९॥
अथ क्षणात् तिरोभूय कुंकुमवापिकालये ।
लोमशेन पुनः स्वतःप्रकाशेन पुनस्तथा ॥१३०॥
लक्ष्म्या हृदि स्थयाऽश्विन्या माणिक्यया च वाहया ।
विमानेनापि युक्तः श्रीहरिश्चाश्वसरो ययौ ॥१३१॥
प्रज्ञापद्मावतीयुक्तो जलं पपौ जगद्गुरुः ।
यात्रामेतां च सप्तायतनं स्मरेत् तु यो जनः ॥१३२॥
स यायाच्छ्रीकृष्णस्वाम्याचार्यश्रीहरिधाम वै ।
अनादिश्रीकृष्णनारायणः प्रज्ञा च माधवी ॥१३३॥
लक्ष्मीश्च लोमशः स्वतःप्रकाशो माणिकी च तत् ।
सप्तायतनमेतद्धै स्मर्तव्यं सर्वदा जनैः ॥१३४॥

परब्रह्म कृष्णनारायणस्तिस्रोऽस्य शक्तयः ।
ज्ञानशक्तिः प्रभा चेच्छाशक्तिर्लक्ष्मीः प्रकीर्तिता ॥१३५॥
पद्मावती क्रियाशक्तिर्माणिक्या शाश्वती छविः ।
स्वतःप्रकाशः संकल्पो लोमशो ब्रह्मशीलता ॥१३६॥
स्थापयेत् पूजयेद् यस्तान् सर्वान् कामानवाप्नुयात् ।
हरेर्मूर्त्तः प्रभा कान्तिः पद्मावती तु दिव्यता ॥१३७॥
लक्ष्मीश्च कमनीयत्वं माणिक्या स्वच्छतात्मिका ।
स्वतःप्रकाशः परिधिर्लोमशो रोमरूपधृक् ॥१३८॥
विदित्वैवं सप्तरूपं कृष्णनारायणात्मकम् ।
पृथङ्मुक्तिमतिक्रम्य मूर्तिमुक्तिं प्रयाति सः ॥१३९॥
राधां दुःखहरां शक्तिं लक्ष्मीं सम्पत्प्रदां तथा ।
प्रभां स्वरूपदां शक्तिं पद्मावतीं तु मोक्षदाम् ॥१४०॥
लोमशं मेऽनादिमुक्तं ब्रह्म स्वयंप्रकाशितम् ।
सप्तायतनकं त्वेवं विदित्वा कृष्णरूपगम् ॥१४१॥
मुक्तिं यान्ति परां त्वेवं परे धाम्नि न संशयः ।
एवमाह पुरा बद्रि हरिर्मो परमेश्वरः ॥१४२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने परधामनि रङ्गमहोलादिषोडशमहोलानां रहस्यमुक्तेभ्यः प्रदर्शनं, तदर्द्धिप्रदर्शनं, स्वमूर्तौ सर्वर्द्धिसर्वसृष्टिप्रदर्शनं, श्रीहरिमूर्तिगर्भगताऽनादितादात्म्यमुक्तसृष्टिप्रदर्शनं, रहस्यमुक्तानां तत्स्पृहावतां मूर्तिगर्भतादात्म्यमुक्तिप्रदानं, सप्तायतनसमष्टिरूपहरेः कुंकुमवापीं प्रत्यागमनं, चेत्यादिनिरूपणनामाऽष्टादशाऽधिकशत - तमोऽध्यायः ॥ ११८ ॥

श्रीनरनारायण उवाच—

बद्रिके ता यत्र यत्र विमानेन ययुः स्त्रियः ।
तत्र तत्रेश्वरलोके प्रतिगृहं हरिं पतिम् ॥ १ ॥
व्यलोकयन् स्वर्गलोके सत्यादौ परमेश्वरम् ।
वैराजेषु तथा चेश्वराणां लोकेषु सर्वशः ॥ २ ॥
धामस्वप्यवताराणां प्रतिमुक्तं हरिं पतिम् ।
व्यलोकयन् तथा ताश्चाऽक्षरे धाम्नि गृहे गृहे ॥ ३ ॥
सर्वदुर्गान्तरसृष्टौ प्रतिमुक्तं हरिं पतिम् ।
प्रतिगृहं तथाऽनादिकृष्णनारायणालयम् ॥ ४ ॥
महोलेषु तथा कृष्णहृदयेऽपि च मन्दिरम् ।
प्रतिमुक्तं प्रतिमूर्तिं व्यलोकयन्निजं प्रभुम् ॥ ५ ॥
विनाऽनादिकृष्णनारायणं तद्धृदयेऽपि च ।
मुक्ता नैव हि वर्तन्ते मूर्तौ यत्कोटिमूर्तयः ॥ ६ ॥
असंख्यमूर्तयस्तत्र प्रतिमुक्तं भवन्त्यपि ।
त्वया दृष्टं तदा तत्र मया दृष्टं तथा तदा ॥ ७ ॥
तादात्म्यतामवाप्स्यन्ति ये ते द्रक्ष्यन्ति तत्तथा ।
अन्येषां दर्शनं चापि नैव भवति तादृशम् ॥ ८ ॥
सर्वोत्कृष्टा मूर्तिगर्भसृष्टिस्तादात्म्यसंज्ञिका ।
द्वितीया तु परे धाम्नि रहस्यभावसृष्टिका ॥ ९ ॥
तृतीया तु परे धाम्नि महामुक्तमयी हि सा ।
चतुर्थी तु परे धाम्नि मुक्तसृष्टिः समानिका ॥१०॥
अष्टदुर्गमयी सर्वा परब्रह्मपरायणा ।
पञ्चमी त्वक्षरे धाम्नि सृष्टिश्चाऽक्षरमुक्तिगा ॥११॥
षष्ठी सर्वावताराणां धाममयी तदात्मिका ।
सप्तमी चेश्वराणां तु सृष्टिः सत्त्वमयी शुभा ॥१२॥
अष्टमी तु त्रिगुणानां सृष्टिर्मायामयी तथा ।
नवमी शंकरब्रह्मविष्णूनां सृष्टिरुत्तमा ॥१३॥
दशमी सिद्धकोटीनां सृष्टिः साधुमयी शुभा ।
एकादशी तु पितॄणां द्वादशी द्युनिवासिनाम् ॥१४॥
त्रयोदशी महर्षीणां मानवानां च बद्रिके ।
चतुर्दशी तिरश्चां तु पञ्चदशी तु शाखिनाम् ॥१५॥
षोडशी गुणधर्माणां सृष्टयः षोडश त्विमाः ।
असृष्टिः परमात्माऽसावनादिपुरुषोत्तमः ॥१६॥
सर्वसृष्टिधरो नाथः सर्वान्तर्यामिकः प्रभुः ।
अन्वितः सर्वसाक्षी चाऽनन्वितस्तु स्वराट् परः ॥१७॥
अन्विताऽनन्वितभिन्नोऽवतारादिस्वरूपधृक् ।
मोक्षदो भक्तसुखदो धर्मस्थापनविग्रहः ॥१८॥
नामिरूपिजगतां स नेता हन्ता तदन्वितः ।
इत्येषां सम्प्रविज्ञायोपनिषदं तु षोडशीम् ॥१९॥
विरज्येत विमुच्येत प्रयायात् परमं पदम् ।
न तस्य पुनरावृत्तिर्य एवं वेद षोडशीम् ॥२०॥

श्रीबद्रीप्रियोवाच—

कुंकुमवापीमागत्य भगवान् पुरुषोत्तमः ।
किं चकार तदाचक्ष्व नरनारायणप्रभो ॥२१॥

श्रीनरनारायण उवाच—

अनादिश्रीकृष्णनारायणश्चागत्य भूतले ।
कुंकुमवापिकाक्षेत्रे चातुर्मास्यव्रतं व्यधात् ॥२२॥

अष्टाविंशतितमके निजप्राकट्यकेऽहनि ।
ऊर्जकृष्णाष्टमीप्रातःकाले निजोत्सवोत्तरम् ॥२३॥
ददौ दानानि भगवान् स्वर्णरत्नगवां तथा ।
प्रासादानां रूप्यकाणां रजतानां द्विजातये॥२४॥
पात्राणां चापि रत्नानां मणीनां वाजिनां तथा ।
विमानानां च यानानां गजानां विप्रजातये ॥२५॥
ददौ दानानि भगवान् वस्त्राणां स्वर्णयोगिनाम् ।
भूषणानां समस्तानां पर्यंकानां सुवर्चसाम् ॥२६॥
मुकुटानां कटकानां श्रृंखलानां विशेषतः ।
मौक्तिकानां स्फटिकानां गोमेदानां सुतेजसाम् ॥२७॥
ददौ दानानि भगवान् पादुकानां स्रजां तथा ।
छत्राणां चामराणां च वेत्राणां स्वर्णपत्रिणाम् ॥२८॥
सिंहासनानां पेटानां मञ्जुषाणां ददौ हरिः ।
कपाटानां बृसीनां च खट्वानां सिंहचर्मणाम् ॥२९॥
गजव्याघ्रर्क्षहरिणद्विपिगवयचर्मणाम् ।
ददौ दन्तोत्थवस्तूनां दानानि बालकृष्णकः ॥३०॥
कम्बलानां कञ्चुकीनां कञ्चुकानां च वर्मणाम् ।
शस्त्राणां च वितानानां भूस्तराणां विशेषतः ॥३१॥
कौशेयानामम्बराणां धौत्राणां मूर्द्धवाससाम् ।
सुकञ्चूनां कटिस्थानां रशनानां ददौ प्रभुः ॥३२॥
गेन्दुकानां चक्रकाणां कशिपूनां च तूलिनाम् ।
तुलानां मुसलानां चोलूखलानां जलभृताम् ॥३३॥
प्रेङ्खाणां बालदोलानां घटानां च विशेषतः ।
स्थालीनां वाटिकानां च पेषणीनां तथा ददौ ॥३४॥
चुल्लीनां व्यजनानां च यन्त्राणां पादरक्षिणाम् ।
कवचानामूर्मिकानां बाणानां धनुषां तथा ॥३५॥
शराणां चापि खड्गाणां मुद्गराणां प्रविद्युताम् ।
रज्जूनां दर्पणानां च कंशप्रसाधनार्थिनाम् ॥३६॥
ददौ दानानि च गुप्तदोरकाणां जनार्दनः ।
क्षेत्राणां वाटिकानां च महिषीणां पयोमुचाम् ॥३७॥
सस्यानां च कणानां च शुभाद्यानां विशेषतः ।
कलमानां शाखिनां च फलिनां पुष्पिणां तथा ॥३८॥
धनानां कलशानां च यूपानां चापि सम्पदाम् ।
गृहोपकरणानां च शय्यानां परमाऽनसाम् ॥३९॥
उद्यामाऽऽरामवापीनां शकटानां ददौ हरिः ।
शिबिकानां मण्डपानां पटमण्डपरूपिणाम् ॥४०॥
परभित्तिगृहाणां च वरूथानां विशेषतः ।
पल्याणानां च दानानि कूपाऽम्बालिकश्रृंगिणाम् ॥४१॥
निःश्रेणीनां चतुष्पादघोटीनां पट्टसेविनाम् ।
द्रोणीनां गर्गरीणां च कुसुलानां विशेषतः ॥४२॥
तोरणानां प्रदीपानां घण्टानां वाद्यनामिनाम् ।
ददौ दानानि च वीणाविपञ्चीनां जनार्दनः ॥४३॥
कण्ठीनां कन्यकानां च कोशानां भृत्ययोषिताम् ।
दासानां चापि दासीनां ददौ दानानि गोधनी ॥४४॥
तालानां पञ्चपात्राणां शाटीनां पयसां तथा ।
नक्तकानां प्रगुच्छानां पूगानां मुखवासिनाम् ॥४५॥
लेखिनीनां च वेदानां विद्यानां दानकान्यपि ।
महानसीयवस्तूनां सभास्थानोपयोगिनाम् ॥४६॥
महोत्सवादिवस्तूनां ददौ दानानि वै हरिः ।
धातूनां सर्वजातीनां दंशमत्सरनाशिनाम् ॥४७॥
वस्त्रशय्यावितानानां ददौ दानोत्तमानि सः ।
पिष्टानां पेटिकानां च नावां सौवर्णपक्षिणाम् ॥४८॥
आसनानां चतुष्कीणां ददौ दानानि माधवः ।
घर्घरीणां झल्लरीणां स्त्रीभूषाणां समस्ततः ॥४९॥
मखपात्रोपपात्राणां ददौ दानानि गोपजः ।
वृषभाणां वत्सकानां वत्सिकानां विशेषतः ॥५०॥
स्थालानां कुण्डिकानां च हीरकाणां ददौ प्रभुः ।
शर्कराणां च गूडानां मिष्टानां मधुगन्धिनाम् ॥५१॥
मधूनां नवनीतानां घृतानां च ददौ प्रभुः ।
द्विदलानां च धान्यानामक्षतानां ददौ तथा ॥५२॥
गोधूमानां चणकानां मुद्गानां परमेश्वरः ।
मुन्यन्नानां तथा कमण्डलूनां श्रेष्ठरूपिणाम् ॥५३॥
दर्वीनां स्रुक्स्रुवादीनां चमचीनां ददौ प्रभुः ।
महास्थालाऽतिथालानां शिरस्त्राणादिबन्धिनाम् ॥५४॥
राजवेषादिवेषाणां ददौ दानानि वह्निके ।
कार्पासानां शणानां च माषाणां च रमेश्वरः ॥५५॥
सक्तूनां राजमाषाणां कङ्गूनां प्रददौ तथा ।
रसानां चापि गन्धानां चन्दनानां द्रवात्मनाम् ॥५६॥
कस्तूरीणां तथा श्रेष्ठकर्पूराणां ददौ प्रभुः ।
एलालवंगजावंत्रीजायफलादिगन्धिनाम् ॥५७॥
राजिकाशुण्ठिकातिक्तकटूनां दानकान्यपि ।
भक्ष्याणां चापि भोज्यानां लेह्यानां चूष्यतावताम् ॥५८॥
चर्वणार्हकणानां च लवणानां ददौ तथा ।
वेषवारोत्तमानां च कन्दानां शाकपत्रिणाम् ॥५९॥
आरनालादिमूलानामिक्षूणामम्लपुष्पिणाम् ।
तक्राणां च चरूणां च क्षीराणां दानकानि च ॥६०॥

शुकानां पञ्जरस्थानां मेनकानां च पक्षिणाम् ।
सारिकाणां चातकानां गरुडानां ददौ प्रभुः ॥६१॥
कोकिलानां तित्तिराणां भारद्वाजादिपक्षिणाम् ।
मयूराणां च हंसानां मृगाणां बहुशृंगिणाम् ॥६२॥
घोटकानां तथोष्ट्राणां ददौ दानानि दानकृत् ।
देवानां च प्रतिमानां जीविकानां तथा ददौ ॥६३॥
पुत्तलीनां तथाऽन्येषां पुत्तलानां ददावपि ।
ब्रह्माण्डानां घटानां च गुप्तदानानि वै ददौ ॥६४॥
शालानां मन्दिराणां च संहितानां ददौ तथा ।
शिरस्त्राणोष्णिषां प्रावरणानां कल्पशाखिनाम् ॥६५॥
कल्पलतानां दानानि ददौ श्रीपरमेश्वरः ।
वज्रमणीन् ददौ मुक्तामणीन् सुपद्मरागकान् ॥६६॥
इन्द्रनीलान्मरकतान् वैदूर्यान् प्रददौ हरिः ।
कर्केतनान् पुष्परागान् भीष्मकांश्च मणीन् ददौ ॥६७॥
पुलकान् रुधिरान् सर्वान् स्फटिकान् प्रददौ प्रभुः ।
विद्रुमान् कौस्तुभान् चिन्तामणीन् ददौ परेश्वरः ॥६८॥
माणिक्यान् चन्द्रहासांश्च पारशान् स्वर्णदांस्तथा ।
सूर्यकान्तान् दिव्यकाचान् काचयन्त्राणि दीपिकाः ॥६९॥
तैजसीर्हाण्डिकाश्चापि छुम्भरान् बहुशोभगान् ।
प्रददौ सर्वशः कृष्णनारायणो द्विजातये ॥७०॥
कन्याभ्यो बहुरत्नानि कुमारेभ्योऽपि वै ददौ ।
दीनाऽनाथाऽतिथिभिक्षुसद्भयो ददौ प्रभेश्वरः ॥७१॥
हिरण्यपर्वतदानं तिलपर्वतमार्पयन् ।
सुवर्णमेदिनीदानं कल्पपादपदानकम् ॥७२॥
हेमधेनुप्रदानं च स्वर्णलक्ष्मीप्रदानकम् ।
तिलधेनुप्रदानं च गोसहस्रप्रदानकम् ॥७३॥
हिरण्याऽश्वप्रदानं च चक्रे पद्मावतीश्वरः ।
कन्यादानानि दीनानामदापयत् सतीपतिः ॥७४॥
हिरण्यवृषदानं च सुवर्णगजदानकम् ।
लोकपालाऽष्टकदानं ब्रह्मविष्णुशिवार्पणम् ॥७५॥
चकार स सतां नाथो ह्यश्वपट्टसरस्तटे ।
श्राद्धानि विविधान्येषश्चकार तर्पणं ददौ ॥७६॥
पितृश्राद्धानि सर्वाणि मातृश्राद्धानि यान्यपि ।
नान्दीश्राद्धानि सर्वाणि चकार कृष्ण एव सः ॥७७॥
यद्यत् कृष्णेन लोकेभ्यः पूजायां तु समर्पितम् ।
राजदेवर्षिपितृभ्यश्चेश्वरेभ्यः समर्जितम् ॥७८॥
श्रेष्ठिभ्यश्चापि दैत्येभ्यो दानवेभ्यस्तथाऽर्जितम् ।
यक्षेभ्यो राक्षसेभ्यश्च नागेभ्यो यदुपार्जितम् ॥७९॥
भक्तेभ्यश्चापि मुक्तेभ्यः स्वभुजाभ्यां समर्जितम् ।
तत्सर्वं स्वधनं चापि स्वपत्नीनां धनान्यपि ॥८०॥
कोट्यर्बुदाब्जपद्मानि ददौ दाने हरीश्वरः ।
प्रासादिकं हरेर्यद्वै सर्वं दिव्यं च मोक्षदम् ॥८१॥
मत्वा मत्वा दानपात्रं भूत्वा भूत्वा सुरादयः ।
ईश्वराश्चापि मुक्ताश्च ब्रह्मक्षत्रादिद्विजातयः ॥८२॥
अन्यवर्णाश्चापि कृष्णप्रसादमहिमेच्छया ।
जगृहुर्भिक्षुका भूत्वा सर्वे यत् कृष्णभिक्षुकाः ॥८३॥
यैर्यैः प्राप्तानि दिव्यानि वस्तूनि कृष्णहस्ततः ।
ते ते तद्वस्तुयोगेन भूत्वा तु पापवर्जिताः ॥८४॥
महापुण्याश्रया भूत्वा भूत्वा दिव्यगुणालयाः ।
सत्त्वप्रकर्षवन्तस्ते भूत्वा भक्ता हरेः खलु ॥८५॥
देहान्ते ते ययुः स्मृत्वा तद्योगेन परं हरिम् ।
परं धाम ययुर्ब्रह्मलोकं लोकं तथाऽऽक्षरम् ॥८६॥
वैकुण्ठं चापि गोलोकं श्रीपुरं चाऽमृतं पदम् ।
अव्याकृतपदं चापि ययुर्विष्णुपदं ह्यपि ॥८७॥
अहो श्रीबद्रिके यैर्यैर्गृहीतं तत्प्रसादकम् ।
ते ते दारिद्र्यहीनाश्चाऽभवन् पृथ्व्यां समृद्धयः ॥८८॥
अन्तेऽभवन् हरेर्योगे परमे मोक्षभागिनः ।
येऽपि दानानि कृष्णस्य प्रशशंसुर्मुदान्विताः ॥८९॥
गुणं च जगृहुर्येऽपि तेऽपि मोक्षगतिं ययुः ।
कृष्णप्रदत्तधेनूनां पीतानि यैः पयांस्यपि ॥९०॥
तेऽपि धाम ययुस्तस्य प्रसादस्य प्रतापतः ।
हीरकाद्यन्विता मालाः कृष्णप्रसादमूर्तयः ॥९१॥
देहे धृताश्च यैर्भूषा वस्त्राण्यपि धृतानि यैः ।
पर्यंकाद्या उपभुक्ता वेषा धृताः सुपावनाः ॥९२॥
यानवाहनशकटाऽनोविमानानि यैरपि ।
अधिष्ठितानि धिष्ण्यानि प्रसादपावनानि वै ॥९३॥
गृहाणि च रजांसि श्रीकृष्णपादस्य यैरपि ।
याभिश्चापि धृतान्येव देहे ते ता ययुः परम् ॥९४॥
कृष्णप्रसादलब्धानि फलान्यन्नानि यैरपि ।
बृस्यासनानि कौशेयकम्बलादीनि यान्यपि ॥९५॥
अधिष्ठितानि यैस्तेऽपि पूताः परं पदं ययुः ।
बद्रिके भगवान्नित्यं चाश्वपट्टसरस्तटे ॥९६॥
लक्षविप्रान् लक्षपत्नीयुतान् द्विलक्षबालकान् ।
लक्षकन्याकुमारांश्च लक्षदीनाऽतिथीन् सतः ॥९७॥
लक्षसाधुजनान् लक्षसाध्वीर्लक्षाऽधिभिक्षुकान् ।
भोजयत्येव भावेन मिष्टान्नानि शुभानि वै ॥९८॥

गरिष्ठानि सुगन्धानि वंह्याज्यानि सदा सदा ।
क्षीरपायसयुक्तानि लड्डुकैः सहितान्यपि ॥९९॥
मेशुभानि च शाकानि सुरम्याण्योदनानि च ।
दधिभक्तानि साऽज्यानि भोजयत्येव नित्यशः ॥१००॥
पानताम्बूलकाद्यैश्च मुखवासैरनुत्तमैः ।
दक्षिणाभिः स्वर्णमुद्राभिश्च तोषयति द्विजान् ॥१०१॥
वर्षकाले समायातं चाऽष्टाविंशं महोदिनम् ।
स्वजन्मनो हरिस्तत्र पूजितो विप्रभूमिपैः ॥१०२॥
देवैर्मुक्तैः पितृभिश्च प्रजाभिर्वैष्णवैस्तथा ।
साधुभिः सर्वलोकानां देहिभिः पूजितः प्रभुः ॥१०३॥
नित्यं प्रपूज्यते तद्वत् कृष्णनारायणो हरिः ।
ददाति पूजकानां च मुक्तिं परं पदं निजम् ॥१०४॥
बद्रिके भवने नैजे राजतेऽश्वसरस्तटे ।
सर्वदुःखहरः स्वामीश्रीकृष्णो वल्लभः प्रभुः ॥१०५॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने भगवान् स्वोपार्जिताऽसंख्यसमृद्धीनां दानानि चकारेत्यादिनिरूपणनामा नवदशाऽधिकशततमोऽध्यायः ॥११९॥

श्रीनरनारायण उवाच—

बद्रिके श्रीहरिकृष्णो वानप्रस्थः समाद्वयम् ।
अतिष्ठत महाशान्तो महाव्रतधरः प्रभुः ॥ १ ॥
ब्रह्मव्रतपरो नित्यं भक्तिमार्गप्रबोधकृत् ।
ऋषीणां च सतां योगियतीनां मण्डलैः सुयुक् ॥ २ ॥
आत्मध्यानपरश्चापि वर्तते त्यागशीलवान् ।
साध्याः सिद्धाः समायान्ति सभायां हरिसन्निधौ ॥ ३ ॥
कथावार्ताः प्रवर्तन्ते ह्याध्यात्मिक्यो हि मोक्षदाः ।
बहवो देहिनो दीक्षां लब्ध्वा यान्ति परं पदम् ॥ ४ ॥
बद्रिके श्रीकृष्णनारायणोऽपि निष्परिग्रहः ।
सर्वव्यवहारमुक्तस्त्यागिमार्गं समैहत ॥ ५ ॥
त्यागिसाधुमहादीक्षां समैच्छल्लोमशाद्गुरोः ।
प्रार्थयल्लोमशं चापि कार्तिके शुक्लपक्षके ॥ ६ ॥
एकादश्यां महादीक्षां ग्रहीतुं परमेश्वरः ।
आश्रमक्रमरक्षार्थं धर्मसंस्थापनहेतवे ॥ ७ ॥
परमेशोऽपि भगवान् महादीक्षां समैहत ।
धर्मस्यापि सुनिर्माता धर्ममूर्तिर्विधायकः ॥ ८ ॥
आश्रमाणां सदाधारो महादीक्षां समैहत ।
यस्माद् दीक्षाः प्रवर्तन्ते मखा व्रतानि वै यतः ॥ ९ ॥
यदिच्छायां महामोक्षः सोऽपि दीक्षां समैहत ।
यद्वचस्तच्छ्रुतिवाक्यं यत्संकल्पो विधिर्मतः ॥१०॥
यत्प्रसादात् फलं सर्वं यत्प्रपत्तिः परात्परा ।
यद्वीक्षणं महादीक्षा सोऽपि दीक्षां समैहत ॥११॥
दीक्षया यत्फलं प्रोक्तं यज्ज्ञानं दीक्षयाऽऽप्यते ।
यथाऽघानां क्षालनं च यदनुग्रहतो भवेत् ॥१२॥
यां विनाऽपि स्वयं शक्तो मोक्षं दातुं निजेच्छया ।
सोऽपि सर्वाऽवतारेशो महादीक्षां समैहत ॥१३॥
यत्स्पर्शः शस्त्रमात्रादिद्वारको मोक्षणाय वै ।
पापिनामपि जीवानां सोऽपि दीक्षां समैहत ॥१४॥
यत्स्पर्शः कामनापूर्वः स्त्रीणामुद्धारकृत् सदा ।
आश्लेषो मुक्तिजनकः सोऽपि दीक्षां समैहत ॥१५॥
यस्याऽङ्गुष्ठजलं गंगा मोक्षदा सर्वदेहिनाम् ।
यद्भक्ता मोक्षदाश्चापि सोऽपि दीक्षां समैहत ॥१६॥
बद्रिके दीक्षया यत्र गन्तव्यं सोऽस्ति यः स्वयम् ।
यद्योगेन स्वदेहाश्च याता यान्ति परं पदम् ॥१७॥
ब्रह्मप्रियाद्या मुक्ताश्च येन नीता निजं पदम् ।
रक्षितास्तत्र तेनैव दिव्यदेहेन येन तु ॥१८॥
यन्मन्त्राऽऽसेर्मोक्षदाश्च भवन्ति साधवो जनाः ।
मोक्षदाः सर्वजीवानां सोऽपि दीक्षां समैहत ॥१९॥
यदैश्वर्यकणं प्राप्य दीक्षां मोक्षं ददात्यपि ।
सोऽपि दीक्षाभिक्षुकः सन् महादीक्षां समैहत ॥२०॥
रोमशो लोमशश्चापि यदुपासनाऽभवत् ।
महामुक्तो महर्षिश्च चिरायुर्मोक्षदः सदा ॥२१॥
सर्वकल्याणकृत् साधुविप्रर्षिः पावनः परः ।
तस्मादुपासकात् कृष्णो महादीक्षां समैहत ॥२२॥
सर्वोपास्यो हरिर्भक्तानुपास्ते प्रेमसम्प्लुतः ।
सोऽयं कृष्णोऽपि भगवानुपास्ते लोमशं मुनिम् ॥२३॥
शिक्षको बालमध्याप्य बालाद् गृह्णाति सारवत् ।
दीक्षको मुनिमध्याप्य मुनेर्गृह्णाति दीक्षणम् ॥२४॥
एवं परम्परां पूर्वपूर्वेषां सृष्टिरक्षणे ।
रक्षितुं तां महादीक्षां लोमशात् कृष्ण ऐहत ॥२५॥
दशम्यां श्रीहरिश्चक्रे ह्युपोषणं सुनिर्जलम् ।
पञ्चगव्याशनं चक्रे देहशुद्धिप्रयोजकम् ॥२६॥
तथाऽघमर्षणं चक्रे तीर्थस्नानादिभिस्तथा ।
रात्रौ जागरणं चक्रे गीतकीर्तनमङ्गलैः ॥२७॥
प्रातरुत्थाय वै स्नानं ध्यानं चक्रे निजात्मनः ।
पूजनं प्रचकारापि देवानां च विधानतः ॥२८॥

क्षौरं प्रकारयामास सस्नौ तीर्थादिवारिभिः ।
श्राद्धादि प्रचकारापि पितृतृप्तिकरं शुभम् ॥२९॥
कुण्डं च मण्डपं रम्यं कारयामास सत्वरम् ।
पुण्याहं वाचयामास जलं मुमोच भूतले ॥३०॥
आचमनं तथा न्यासान् प्रचकार विधानतः ।
प्राणायामान् विधायाऽथ चक्रे गणेशपूजनम् ॥३१॥
वास्तुदेवाद्यर्हणं च वर्धनीकलशाऽर्हणम् ।
कुण्डमण्डपदेवानामर्हणं प्रचकार च ॥३२॥
ग्रहाणां पूजनं सर्वदिक्पालानां प्रपूजनम् ।
लोकपालाऽर्हणं चापि ऋषिपित्रर्हणं तथा ॥३३॥
देवीदेवतापूजां चेश्वराणां पूजनं तथा ।
ईशानीनां पूजनं चाऽवताराणां प्रपूजनम् ॥३४॥
मातृकाणां योगिनीनां सतीनां पूजनं तथा ।
मुक्तानां पूजनं मुक्तानिकानां पूजनं ततः ॥३५॥
परब्रह्माऽर्हणं चक्रे सर्वतत्त्वाऽर्हणं तथा ।
काश्यपीनां प्रजानां च पूजनं प्रचकार सः ॥३६॥
प्रायश्चित्तविधिं चक्रे हवनं प्रचकार च ।
वह्निपूजां वह्निमुखसर्वदेवप्रतर्पणम् ॥३७॥
चकार भगवान् होमं क्षीराज्यपायसोद्भवम् ।
फलपुष्पमधूनां च समिधां हव्यमञ्जसाम् ॥३८॥
कव्यानां हवनं चक्रे पिण्डानां च प्रदानकम् ।
श्रीफलाद्यैर्महाहोमं चक्रे च घृतधारया ॥३९॥
मध्ये व्यावर्त्य वस्त्राणि काषायाणि दधार सः ।
धौत्रं चांगरक्षकं चोत्तमांगं समुष्णिषम् ॥४०॥
यज्ञोपवीतकं प्रच्छदपटीं चोत्तरीयकम् ।
पादुके च दधारापि कौपीनं च कमण्डलून् ॥४१॥
तिलकं चन्द्रकं चक्रे चान्दनं कौंकुमं तथा ।
शिखां बद्ध्वा च गायत्रीं वैष्णवीं जगृहे गुरोः ॥४२॥
'परब्रह्मणे विद्महेऽनादिकृष्णाय धीमहि ।
तन्नो हरिः प्रचोदयादिती' जग्राह लोमशात् ॥४३॥
ओं परब्रह्माऽहमस्मी'त्यष्टाक्षरं च जगृहे ।
'ओमनादिकृष्णनारायणोऽस्तु शरणं मम' ॥४४॥
षोडशाक्षरमन्त्रं च जगृहे लोमशान्मुनेः ।
इत्येवं प्राप्य मन्त्रांस्त्रीन् त्रिवारं प्रणनाम तम् ॥४५॥
लोमशं च तथा वह्निं देवान्नत्वा प्रदक्षिणम् ।
प्रचक्रे दण्डवत् साधुः कृष्णनारायणायनः ॥४६॥
देवप्रसादं जगृहे पुपूज लोमशं गुरुम् ।
उपदाः प्रददौ दिव्यां श्रेष्ठां स्वर्णमयीं तथा ॥४७॥

दक्षिणां प्रददौ चापि त्यागी भूत्वा जनार्दनः ।
कृष्णवत् लभ्यते यः सः श्रीकृष्णो वल्लभोऽभवत् ॥४८॥
वैष्णवो वै परब्रह्म हंसोविज्ञानशोभनः ।
साधुरूपः परब्रह्म हंसस्त्यागाश्रमी प्रभुः ॥४९॥
स्वामी नारायणः कृष्णः सर्ववल्लभतां गतः ।
परमेशः स्वामिभावे वर्तते सर्वदाऽपि सः ॥५०॥
दीक्षया स्वामितां प्राप्य स्वामिस्वामी ततोऽभवत् ।
ब्रह्मचर्यं व्रतं नित्यं भक्तिव्रतं महत्तमम् ॥५१॥
पालयामास भगवान् कृष्णो नारायणायनः ।
दीक्षाकाले मण्डपे च महर्षिसाधुसाध्विकाः ॥५२॥
आशीर्वादान् ददुस्तत्र श्रेयसे परमात्मने ।
विरेजे भगवान् द्वेधा काषायाम्बरधृक् तथा ॥५३॥
राजाधिराजरूपोऽपि सर्वेषां मानसेषु सः ।
दीक्षाकाले तु वाद्यानि ह्यवाद्यन्त समन्ततः ॥५४॥
वेदमन्त्रा महर्षीणां गीतयः सुरयोषिताम् ।
मानवीनां कीर्तनानि मण्डपादौ तदाऽभवन् ॥५५॥
उपदेशं च दीक्षां च लब्ध्वा त्यागाश्रमं शुभम् ।
पूर्णाहुतिं व्यधाद्धोमे ददौ दानानि वै तदा ॥५६॥
स्वर्णहीरकरूप्याणां रत्नगोधनवाससाम् ।
पर्णशालां विना सर्वं प्रददौ भवनादिकम् ॥५७॥
लोमशस्याऽऽश्रमे पश्चाच्छिष्यरूपोऽवसत्प्रभुः ।
असंख्यसाधुसञ्जुष्टे त्यागिनां मण्डले हरिः ॥५८॥
न्यवसत् शान्तचित्तात्मा साधुसेवाकृतादरः ।
असंख्यजीवजातानां मोक्षे तु सततं रतः ॥५९॥
लक्ष्मीस्तदा पृथग् भूत्वा साध्वी काषायधारिणी ।
अस्तौत् स्वामिस्वरूपं श्रीपरब्रह्मप्रहंसकम् ॥६०॥
ओं नमः श्रीपरब्रह्म ते नमः परमात्मने ।
ब्रह्ममुक्ताऽधिपतये परधामनिवासिने ॥६१॥
अपृथग्भक्तसंस्थाय रहस्यमुक्तसेविने ।
नमस्ते श्रीरङ्गमहोलादिवासाय योगिने ॥६२॥
निर्लेपाय महामुक्ताऽनादिमुक्तादिसेविने ।
आक्षरैर्मुक्तवृन्दैश्च सेविताय च ते नमः ॥६३॥
अवतारैरीश्वराद्यैः सेविताय च ते नमः ।
ऋषिपितृसुराद्यैश्च सेविताय च ते नमः ॥६४॥
मानवैश्चेतरैश्चापि यक्षगन्धर्वकिन्नरैः ।
नागैः सर्पै राक्षसैश्च सेविताय च ते नमः ॥६५॥
उद्भिज्जरास्वेदजैश्च प्रसेविताय ते नमः ।
नरैश्च प्रमदाभिश्च सर्वस्थावरजङ्गमैः ॥६६॥

पुष्पार्थं संसेविताय सुखदाय च ते नमः।
असंख्ययोगिनां कामपूरकाय च ते नमः ॥६७॥
असंख्यानां स्वभक्तानां तारकाय च ते नमः।
माणिक्याया बदर्याश्च नाथाय ते नमो नमः ॥६८॥
बदरो नाम राजर्षिर्व्यधाद् बदरिकाश्रमम्।
यत्कृपांऽशात् स्वामिनं तं वन्दे बदरिकेश्वरम् ॥६९॥
हेमानलासुरो येन पर्वताधो निषूदितः।
तस्य बदरनृपतेः प्रसन्नाय च ते नमः ॥७०॥
बदरीस्वीयमूलाधो हेमानलममर्दयत्।
यत्प्रतापेन तं कृष्णं नताऽस्मि साधुरूपिणम् ॥७१॥
बदरो रसारूपोऽपि यत्कृपातो व्यजायत।
फले तं परमात्मानं वन्दे श्रीस्वामिनं त्विह ॥७२॥
नरोऽपि बीजतां प्राप्तो बदराख्ये फले सदा।
यत्कृपातस्तं फलेशं वन्दे श्रीस्वामिनं प्रभुम् ॥७३॥
श्रीशीलस्य तु विप्रस्य प्रेतभूतस्य मोक्षणम्।
बदरस्य प्रदानेन कृतं येन च ते नमः ॥७४॥
साधुसाध्वीस्वरूपाभ्यां दाराभाग्याय दर्शनम्।
दत्वाऽप्यमोक्षयद् भूपं तं यस्तस्मै च ते नमः ॥७५॥
ब्रह्मदेवद्विजपत्न्यै दत्वा द्वे बदरे फले।
बद्रिका पुत्रिकापुत्रौ ददौ बद्रीश ते नमः ॥७६॥
यत्प्रतापात् कृष्णपत्नी जाता वै बालयोगिनी।
सुरेश्वरीसुता तं श्रीकृष्णं वन्दे नरायणम् ॥७७॥
यः कृष्णो दिव्यदेहां च चारणीं नाम्नकेसरीम्।
कृत्वा मुक्तानिकां निन्येऽक्षरं तस्मै नमो नमः ॥७८॥
नर्मकर्त्र्या विनोदिन्याः साधुयोगेन मोक्षणम्।
कृतं येन कृतो देवलोकोऽपि च सखीविधः ॥७९॥
मोक्षं तस्मै ददौ यश्च तस्मै ते स्वामिने नमः।
बाहुलकाय तत्पत्न्यै लीलावत्यै च नर्तनात् ॥८०॥
ददौ ब्रह्मरसं मोक्षं तुष्टो यस्ते नमः सदा।
मालियानं मल्लिकां च मालाकारौ हरिः पुरा ॥८१॥
प्रसन्नः पाययामास ब्रह्मरसं ततस्तयोः।
मोक्षणं कृतवान् कृष्णो यस्तस्मै स्वामिने नमः ॥८२॥
निकामदेवसंज्ञाय धीशूराय हरिः स्वयम्।
मोक्षं ददौ च तत्पत्न्यै तस्मै श्रीस्वामिने नमः ॥८३॥
निगडग्रामकैवर्तं मत्स्याद्यापात् सुदुःखिनम्।
तारितं भक्त्या पत्न्या यस्य कृपादिशेवचः ॥८४॥
अनयः स्वं परं धाम तया साकं च योषिता।
तथा तत्पुत्रिका चाद्या साध्वी पुण्डरिका सती ॥८५॥
निर्वाणिका सती चान्याऽऽनन्दघना तृतीयका।
तथा पञ्चाऽऽत्मजा ज्ञानदर्म्यादयोऽपि यं प्रभुम् ॥८६॥
भजित्वा मोक्षणं प्राप्तास्तं भजे स्वामिनं हरिम्।
कृतघ्न्यास्तु कुथल्याख्यस्त्रिया यो राजयक्ष्मतः ॥८७॥
रक्षां चक्रे ददौ मोक्षं तं वन्दे स्वामिनं प्रभुम्।
प्रतारण्या विषलाण्याः सतां समागमाद्धरिः ॥८८॥
उद्धारं कृतवान् यस्तं वन्दे श्रीस्वामिनं प्रभुम्।
गंगांऽजनीं कटकर्त्रीं सत्संगेन त्वमोक्षयत् ॥८९॥
रमाञ्जनीं रमां चक्रे यस्तस्मै हरये नमः।
सुनारिणीं कुलालीं च रणस्तम्भं च तत्पतिम् ॥९०॥
साधुयोगेन तत्पुत्रं संसाराद् यो व्यमोचयत्।
वन्दे तं स्वामिनं कृष्णं वल्लभंप्रभुमीश्वरम् ॥९१॥
स्वर्णकारस्त्रिया हेमसुधायास्तु प्रभक्तितः।
प्रसन्नो यो ददौ तस्यै चाऽन्नपूर्णात्वमुत्तमम् ॥९२॥
मुक्तिं ददौ तथाऽन्ते च वन्दे श्रीस्वामिनं हरिम्।
राधिकायनयोगेन विद्रुमिणीं तु विष्टिणीम् ॥९३॥
धार्मिं राधासमां चक्रे यस्तस्मै स्वामिने नमः।
श्वपचीं मालवानीं यो धर्मयोगेन मुक्तिगाम् ॥९४॥
सकुटुम्बामकरोद् यस्तस्मै श्रीस्वामिने नमः।
रथ्यामार्जनिकां कारेलिकां हिताञ्जलेर्मुनेः ॥९५॥
योगात् कथाश्रवणेन मुक्तिमनयद् यः प्रभुः।
हेताञ्जलेश्च पुत्रीणां निर्मोहित्वं च यद्बलात् ॥९६॥
मोक्षणं कृतवान् यश्च तस्मै तेऽस्तु नमो मुहुः।
निरञ्जनादयश्चापि भ्रातरः पञ्च तादृशाः ॥९७॥
मुक्तिं येन प्रणीतास्तं वन्दे श्रीस्वामिनं प्रभुम्।
यन्त्रकर्त्री गोमतीं च नयराजं च तत्पतिम् ॥९८॥
अरक्षयत् राजयक्ष्मतो यस्तं स्तौमि माधवम्।
कनकांगदायाः कृष्णो धूर्ताया मोक्षणं व्यधात् ॥९९॥
भाणवाण्या द्यूतकर्त्र्याः श्रेयश्चकार यो हरिः।
रायहरिनृपस्याऽपि तं वन्दे स्वामिनं प्रभुम् ॥१००॥
माधवरायनृपतेः श्रेयो व्यधात्तु यः प्रभुः।
वैद्योतिकां तु कंसारीं दिव्याममोक्षयच्च यः ॥१०१॥
नरराजं कुंभकारं तद्भार्यां रत्निकां च यः।
अम्बालिकां स्वर्णकर्त्रीं धातुघ्नीं च विनोदिनीम् ॥१०२॥
अमोक्षयद्धरियंश्च नर्टं रञ्जनकोविदम्।
श्रीरामसुन्दरं चापि कदर्यं योऽप्यमोक्षयत् ॥१०३॥
वन्दे तं परमात्मानं स्वामिनं दीक्षितं प्रभुम्।
क्षीरोदवीरं भूपं च राज्ञीं कहारिणीं च यः ॥१०४॥

गणिकां सोमिकां पञ्चपुत्रीयुताममोक्षयत् ।
अरुणानीपतिं पाटलान्यादीश्चं नमामि तम् ॥१०५॥
मद्यपाया लियार्याश्च मोक्षणं यो व्यधात् प्रभुः ।
मिष्टासवश्चवजिनश्च तं वन्दे स्वामिनं हरिम् ॥१०६॥
गण्डवाताभिधायाश्च चक्रिण्यामोक्षणं व्यधात् ।
यास्कवादस्य च मोक्षं तं वन्दे स्वामिनं हरिम् ॥१०७॥
निन्दाकर्त्र्या द्विवंदन्त्या मोक्षणं यो व्यधात्प्रभुः ।
द्विर्गर्जनाख्यपत्युश्च तं वन्दे स्वामिनं हरिम् ॥१०८॥
सुरप्रसादं विप्रं च गुरुघ्नं यो ह्यमोचयत् ।
मातरं पितरं तस्य चाऽमोक्षयत्तु यः प्रभुः ॥१०९॥
नागविक्रमभूपस्य देवद्रोहरतस्य च ।
नवद्रोहियुतस्याऽपि मोक्षकर्त्रे तु ते नमः ॥११०॥
शालमित्रो जीविकाघ्नो जयालक्ष्मीश्च तत्प्रिया ।
उद्धृतौ येन कृष्णेन तस्मै श्रीस्वामिने नमः ॥१११॥
कन्याघ्नं यद्धराजं यो विषदं साधुयोगतः ।
अमोचयद् यमदूतान् तं भजे स्वामिनं हरिम् ॥११२॥
साधुजीवं कुमारं च कुमारीं साधुजीवनीम् ।
निर्विषादं च यः कृष्णोऽमोक्षयत् तं मुहुर्नमः ॥११३॥
नारायण्यै प्रभावत्यै घटमालाख्ययोषिते ।
मोक्षणं प्रददौ यश्च तस्मै श्रीस्वामिने नमः ॥११४॥
अनंगवल्ल्याः कुट्टन्यास्तत्सखीनां च मोक्षणम् ।
कृतवान् यः प्रभुः स्वामी तस्मै कृष्णाय ते नमः ॥११५॥
षण्ढवज्राभिधं षण्ढं यः संसाराद् व्यमोचयत् ।
नपुंसकानां पुंस्त्रीत्वं चक्रे यस्ते नमो मुहुः ॥११६॥
यवसन्धं तु मांसादं पत्नीं मज्जावलीं च यः ।
तत्कुटुम्बं हरिर्व्यमोचयत् तस्मै च ते नमः ॥११७॥
भाण्डं यो भण्डशीलं तु सकुटुम्बं व्यमोचयत् ।
त्रिगालवाँस्तथा भवायनादीन् यो व्यमोचयत् ॥११८॥
हरिवीर्यादिमल्लाँश्चऽमोक्षयद् यः प्रभुर्हरिः ।
वार्धुषिकान् हरिलालादींश्च व्यमोक्षयत्तु यः ॥११९॥
कीरवणादिमृगयूममोक्षयच्च यः प्रभुः ।
अमोक्षयच्च नागादं वादिटं यश्च ते नमः ॥१२०॥
सारहासीयमार्तण्डमण्डलादिप्रमोक्षकम् ।
विलासदेवं शुक्रादं व्यमोक्षयच्च तं भजे ॥१२१॥
दैवान् प्रकाशकादींश्च तत्पुत्रान् साधुदीक्षितान् ।
मौक्तिकायनिकाद्याश्च तत्पुत्रीः सात्त्विकास्तथा ॥१२२॥
व्यमोक्षयच्च यः स्वामी वन्दे श्रीस्वामिनं च तम् ।
दुरितघोषनामानं सर्वादं यो व्यमोक्षयत् ॥१२३॥
तत्पत्नीं च महासत्यायनीं व्यमोक्षयच्च यः ।
तत्पुत्रान् तत्पुत्रिकाश्चाऽमोक्षयद् यश्च तं भजे ॥१२४॥
धर्मभटं महामात्यं शीलयानीं च तत्प्रियाम् ।
अमोक्षयत् प्रभुर्यः श्रीस्वामिनं तं सदा भजे ॥१२५॥
धर्माध्यक्षं प्रभुर्मुकुन्दसाविप्रममोक्षयत् ।
न्यायाक्षिणीं च तद्भार्यां यस्तं वन्दे जनार्दनम् ॥१२६॥
विशालरेखकं यश्चौद्धारयल्लेखकं हरिः ।
शुचिकान्तां च तत्पत्नीं तं वन्दे स्वामिनं प्रभुम् ॥१२७॥
कृष्णकान्तेश्वरोनाथं नमामि वल्लभम् प्रभुम् ।
कायस्थान् करणाद्यान् योऽमोक्षयत् परमेश्वरः ॥१२८॥
शाहविलापनादींश्चाऽमोक्षयत् तं नमामि च ।
गृध्र उद्धारितो येन पूर्वकौलिकदेहवान् ॥१२९॥
मार्जारश्चोद्धृतो येन पूर्वगोबारगोपकः ।
जम्बूकश्चोद्धृतो येन पुरा ठठ्ठोलको वणिक् ॥१३०॥
स्वर्णाऽञ्जनादयो भृत्या उद्धृता येन शार्ङ्गिणा ।
श्येनः समुद्धृतश्चापि पुरा यो भरवाटकः ॥१३१॥
चटकाश्चोद्धृताः पूर्वेऽबा यास्तं नौमि माधवम् ।
कपोता उद्धृता येन सार्थवारास्तु ये पुरा ॥१३२॥
काकास्तथोद्धृता येन पुरा ये कंकजातिजाः ।
गृहगोधोद्धृता येन नाणकी प्राक् खवासिनी ॥१३३॥
मूषका उद्धृता येन प्राक् शूद्राः संघवाटकाः ।
नकुलश्चोद्धृतो येन प्राक् बारुटस्तु सागरः ॥१३४॥
कीरताराभिधो भाट उद्धृतो येन तं भजे ।
ज्योतिर्वेत्ता देवगतीश्वरो येन समुद्धृतः ॥१३५॥
पुण्यवती च तद्भार्योद्धृता येन नमामि तम् ।
बन्दिजनो जयमानो नृपश्च वज्रविक्रमः ॥१३६॥
प्रजाश्चाप्युद्धृता येन वन्दे श्रीस्वामिनं हि तम् ।
सताऽश्विसिंहनृपतिः सुतस्तस्य सुकेसरी ॥१३७॥
राज्ञी रक्षावती येन मोक्षितास्तं नमाम्यहम् ।
मागधो हर्षनयनो योगिदासश्च सेवकः ॥१३८॥
येन सौरभसाविप्रस्ताम्बूलकृत् समुद्धृतः ।
रंगिलो रंगकारश्च डमरूकश्च वाद्यकृत् ॥१३९॥
चिहुराथो भावसारश्चधृतो येन तं भजे ।
रमेश्वरो ग्रामयाजी तथोद्धृतोऽपि येन ह ॥१४०॥
स्वर्णास्तरणो विद्याभ्रष्टिव्रजहादयस्तथा ।
उद्धृताः किन्नरा येन किंपुमांसश्च चारणाः ॥१४१॥
असंख्याश्च नृपा येनोद्धृतास्तं त्वां नमामि च ।
नन्दिभिल्लं हतवान् यो ररक्ष नागविक्रमम् ॥१४२॥

हृतं सैन्यं पुनः सञ्जीवयामास नमामि तम् ।
पुरञ्जयनृपं ह्यमोक्षयद् यस्तं नमाम्यहम् ॥१४३॥
मोक्षिता येन बहवः सप्तस्वर्गनिवासिनः ।
सप्तपातालवासाश्च तं नमामि महाप्रभुम् ॥ ४४॥
ईश्वरेभ्यश्च धामिभ्यो दर्शनं यो ददौ प्रभुः ।
सर्वस्त्रीदासवर्गाढ्यस्तं भजे पुरुषोत्तमम् ॥१४५॥
सर्वस्त्रीभ्यो निजाभ्यश्च युगलापत्यकानि यः ।
मानसानि ददौ तस्मै नमः श्रीपरमात्मने ॥१४६॥
मायापालो नृपो महानास्तिको यमलोकतः ।
मोचितो येन कृष्णेन तं भजे साधुसत्कृतिम् ॥१४७॥
ज्येष्ठपुत्राय च दीलावरीराज्यं ददौ ततः ।
स्वयं पत्नीदर्शयितुं ययौ धामाऽक्षरं प्रति ॥१४८॥
धाम नीत्वा निजान् सर्वान् सर्वाश्च प्रमदास्तथा ।
परे धाम्नि स्वीयमूर्तौ वासं दत्वा ह्यरक्षयत् ॥१४९॥
कुंकुमवापिकाक्षेत्रमागत्य त्यागमाप्य यः ।
साधुदीक्षां परिगृह्य वर्तते साक्षिगोचरः ॥१५०॥
नमामि स्वामिने तस्मै श्रीकृष्णप्रभवेनमः ।
अनादिश्रीकृष्णनारायणायनाय योगिने ॥१५१॥
यः सदा श्रीहरिश्चास्ते सप्तायतनमूर्तिमान् ।
लीना लक्ष्मीर्यदंगेऽहं वर्ते सामपरायणा ॥१५२॥
प्रज्ञा लीना पार्श्ववती लीना च स्वामिनि प्रभौ ।
यल्लीलाः श्रेयसे सर्वा जीवानां कर्मदेहिनाम् ॥१५३॥
तस्मै ते पतये चाप्यपतये प्रणमाम्यहम् ।
सर्वदानीश्वरवर्योत्तमाय परमात्मने ॥१५४॥
नमो विशिष्टरूपाय सर्वतीर्थातितीर्थिने ।
तीर्थार्थं भगवन् स्वामिन् लोककल्याणहेतवे ॥१५५॥
अभिलाषा जायते मे महात्मँस्तां प्रपूरयः ।
असंख्यजन्मभिः कृष्णोद्धृतास्त्वया हि देहिनः ॥१५६॥
धर्मवृद्धिः कृता सर्वा पुनश्चापि विभावय ।
लक्ष्मीभक्ता बहवोऽत्र लोके भवन्ति तान् प्रभो ॥१५७॥
साधुरूपेण निर्बन्धान् कृत्वा मोक्षय मच्छ्रितान् ।
इत्यर्थयामि भगवन् विरमामि त्वयि प्रभो ॥१५८॥
इत्युक्त्वा बद्रिके लक्ष्मीः स्वामिन्यन्तरधीयत ।
लक्ष्मीस्तवं प्रभाषेत भावगर्भोऽपि यो जनः ॥१५९॥
लक्ष्मीवच्छ्रीहरौ लीनस्थानमेष्यति शाश्वतम् ।
नारी स्तवमधीयाना लक्ष्मीः स्यान्नात्र संशयः ॥१६०॥
प्रिया लक्ष्मीः स्तवाज्जाता जाता लक्ष्मीश्च माधवी ।
भुक्तिं मुक्तिं लभेत् स्तोत्राद् यथेष्टां पारमेश्वरीम् ॥१६१॥
यत्कृष्णस्य समस्तं वै तत् तस्याः स्यात् समस्तकम् ।
श्रीकृष्णार्पणदक्षायाः कार्ष्ण्याः श्रीबद्रिके स्वकम् ॥१६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्तानेऽनादिश्रीकृष्णनारायणपरमात्मनो वानप्रस्थधर्मोत्तरं साधुदीक्षाग्रहणं लक्ष्मीकृतस्तवनं लक्ष्मीप्रभृतीनां स्वस्वामिनि शाश्वती लीनतेत्यादिनिरूपणनामा विंशत्यधिकशततमोऽध्यायः ॥१२०॥

**श्रीनरनारायण उवाच—**

बद्रिके च ततोऽनादिःकृष्णोनारायणो हरिः ।
लक्ष्मीं प्रज्ञां पार्श्ववतीं चान्तर्भाव्य निजात्मनि ॥ १ ॥
कुंकुमवापिकाक्षेत्रे स्वैकरूपेण चाऽवसत् ।
द्वितीयेन स्वरूपेण श्रिया युक्तेन चान्तरे ॥ २ ॥
साधुरूपेण तीर्थेषु ययौ श्रीयुक्तमूर्तिकः ।
अगोचरोमुक्तसेव्यःदेवजुष्टः सपत्कलः ॥ ३ ॥
कुंकुमवापिकातीर्थजलं पीत्वाऽश्वसारसम् ।
जलं पीत्वाऽऽचमनं च कृत्वा स्नात्वा सरोवरे ॥ ४ ॥
श्रीगणेशं गुरुं चापि नत्वा सम्पूज्य भावतः ।
सर्वतीर्थानि नत्वाऽपि कृत्वा सरःप्रदक्षिणम् ॥ ५ ॥
प्रययौ चाऽऽम्रवणतो व्याघ्रारण्यं महत्तरम् ।
सिंहारण्यं ययौ पश्चात् तलश्यामस्थलं शुभम् ॥ ६ ॥
स्नात्वा ययौ सोमनाथं प्राचीपिप्पलमित्यपि ।
मूलद्वारावतीं नैजां ततश्चोष्णपुरं ययौ ॥ ७ ॥
गोपनाथं ययौ पश्चाद् गोकर्णं प्रजगाम सः ।
नृसिंहेशं शरभेशं कृत्वा व्योम्ना ययौ द्रुतम् ॥ ८ ॥
नारायणीं महादीर्घां सर्वोत्तमां नदीं पराम् ।
त्रिनासं च सरश्चापि रुद्रलालसरो ययौ ॥ ९ ॥
विषतुरीयकसरस्त्रिगायनसरोवरम् ।
न्यायजं च सरश्चापि ययौ कङ्कमहानदीम् ॥१०॥
न्यायजरां नदीं गत्वा भूमध्यसागरं ययौ ।
नीपरां प्रययौ यानां वातगामुरलां नदीम् ॥११॥
बालकृष्णसरश्चापि ययावोबीं महानदीम् ।
यानेशीं च ययौ कृष्णो द्विकलं च सरोवरम् ॥१२॥
आयुरां च नदीं रम्यां चाऽब्धिं ययौ ततः परम् ।
बहुलिङ्गसमुद्रं च गत्वा मत्कुञ्चिकानदीम् ॥१३॥
गर्तस्नावसरो गत्वा लीनपादसरो ययौ ।
सुपरोत्रसरो गत्वा ततोऽकेंशां नदीं ययौ ॥१४॥

समुद्रं च ततो गत्वाऽऽमाञ्जनीं सुनदीं ययौ।
पारानशीं नदीं गत्वोल्लंघ्यसमुद्रमायतम् ॥१५॥
उष्ट्रालये मयूरां च नदीं ययौ जनार्दनः।
कालिन्जीं नदीं गत्वा ययावैतसरोवरम् ॥१६॥
ग्रासकायां नदीं गत्वा व्योम्ना ब्रह्मप्रदेशकम्।
आययौ भगवान् बद्रि मेनकाञ्जी महानदीम् ॥१७॥
शाल्वीनां तथा चैरावतीं नदीं ययौ प्रभुः।
शिक्षांगीं चाङ्कशिक्षांगां त्रियाशिकां नदीं ययौ ॥१८॥
ब्रह्मपुत्रां च गंगां च गोदावरीं च नर्मदाम्।
शत्रुञ्जितां ययौ कृष्णस्ततोऽश्वपट्टसारसम् ॥१९॥
आययौ भगवान् व्योम्नाऽक्षरक्षेत्रं निजालयम्।
एकोनत्रिंशां सुभगां नैजां जन्मजयन्तिकाम् ॥२०॥
व्यधात् कृष्णः साधुवेषः कुंकुमवापिकालये।
एवं श्रीभगवान् बद्रि लक्ष्म्या मनोऽप्यपूरयत् ॥२१॥
पद्मावत्याश्च प्रज्ञायाः मनस्यपि ह्यपूरयत्।
पृथिव्यां यानि तीर्थानि नदीनदाद्रिसागराः ॥२२॥
वनभूगह्वरारण्यग्रामद्वीपपुरालयाः।
यत्र तत्र ययौ कृष्णनारायणाथनो मुहुः ॥२३॥
श्रेयसे स्वस्तये कल्याणाय भद्राय देहिनाम्।
मोक्षाय मुक्तये निर्वाणाय शाश्वतसिद्धये ॥२४॥
अनेकान् देहिनः कृष्ण उद्दधार भवार्णवात्।
बद्रिके स्वेच्छया नैजकृपया लीलया धिया ॥२५॥
मुहुर्देशेषु सर्वेषु भक्तवशः प्रयात्यपि।
कृत्वोद्धारं जनानां च समायाति निजालयम् ॥२६॥
कुंकुमवापिकाक्षेत्रं राजते साधुभूषणः।
लक्षशः साधवः साध्व्यो यत्र वसन्त्यहर्निशम् ॥२७॥
त्रिशतमाद्याः कृष्णस्योत्सवा जन्मनिमित्तजाः।
क्रियन्ते साधुसाध्व्याद्यसंख्यभक्तैः प्रमोददाः ॥२८॥
मुच्यन्तेऽसंख्यमनुजास्तद्योगात् प्रतिवत्सरम्।
कृष्णनारायणपुत्रा युगला ये विदेशगाः ॥२९॥
तेऽपि त्वागत्य पितरं वीक्ष्य प्रसेव्य माधवम्।
प्रयान्ति ते निजमातामहदेशान् सुखान्विताः ॥३०॥
असंख्याश्च नरा नार्यो वैष्णवा भक्तिभावनाः।
बद्रिके नित्यमायान्ति सेवनार्थं हरिं प्रभुम् ॥३१॥
निकामं ते सम्प्रसेव्य समासाद्य मनोगतम्।
प्रयान्ति निजदेशांश्च प्राप्नुवन्ति परं सुखम् ॥३२॥
परं पदं परं धाम देहान्ते सम्प्रयान्ति वै।
अनादिश्रीकृष्णनारायणे तिष्ठति भूतले ॥३३॥
सर्वथा कार्तयुगको व्यवर्तत प्रजासु वै।
अन्ये युगाः प्रभावं न कर्तुं शक्ता भवन्ति तु ॥३४॥
सत्ये यथा तथा त्रेतायुगे द्वापरके तथा।
कलौ तथा हरेर्योगात् प्रजानां कृतवत् स्थितिः ॥३५॥
धर्मकामार्थमोक्षाणां बलं कृष्णकृपावशात्।
यथार्थं सुखदं चासंत सर्वेषां देहिनां तदा ॥३६॥
बद्रिके श्रीकृष्णनारायणोऽनादिः परः प्रभुः।
ब्रह्मविष्णुमहेशाद्यैरर्थितश्च मुहुर्मुहुः ॥३७॥
पृथ्व्यां तस्थौ लक्षवर्षाण्यूर्ध्वं च पञ्चविंशतिः।
सहस्राणि तथा पञ्चशतानि सर्वगोचरः ॥३८॥
सपादलक्षवर्षान्ते परं धाम निजं पदम्।
तेनैव वर्ष्मणा दिव्यशाश्वतेन ययौ हरिः ॥३९॥
ततः कुंकुमवाप्यादौ मूर्तिरूपो विराजते।
सर्वेषां देहिनां चर्मचक्षुषां दृष्टिगोचरः ॥४०॥
दिव्यदृशां तु दिव्यात्मा प्रत्यक्षः पूर्ववत् सदा।
लोमशादेस्तु भगवान् नित्यप्रत्यक्ष एव ह ॥४१॥
साध्वीनां च सतां साधुस्वरूपो नित्यगोचरः।
योगिनां ध्यानगम्यश्च मुक्तानां धामगोचरः ॥४२॥
भक्तानां स्नेहवशगो वर्तते हृदये स्थितः।
सर्वत्र वर्तते साक्षी स एव परमेश्वरः ॥४३॥
बद्रिके बहवस्तस्याऽवताराः संभवन्ति हि।
नरनारायणश्चाहं तस्याऽवतार एव ह ॥४४॥
त्वं चाऽपि तस्य कृष्णस्याऽर्धाऽङ्गनाऽस्यवतारिणी।
भज तं परमात्मानं कान्तं भजाम्यहं यथा ॥४५॥
विष्णुब्रह्ममहेशाद्या यथा भजन्त्यहर्निशम्।
देवर्षिपितृसाध्याश्च यथा भजन्त्यहर्निशम् ॥४६॥
ईशा ईशानिका मुक्ता यथा भजन्त्यहर्निशम्।
स्मर कृष्णं सदा कान्तं शाश्वतानन्ददायकम् ॥४७॥
स्मारयाऽन्यान् हरिं तं च कृष्णंनारायणं प्रभुम्।
तस्यैव भजनं बद्रि भक्तिं कारय देहिनाम् ॥४८॥
तस्यैव भजनेनैव ते यास्यन्ति परं पदम्।
यथैव भजनं तस्य मोक्षदं च तथाविधम् ॥४९॥
संहितायाः श्रवणं च मोक्षदं नित्यमोददम्।
मया बद्रि श्राविताानि चरित्राणि हरेस्तव ॥५०॥
भक्ताभक्तमोक्षदानि चमत्कारमयानि वै।
तल्लीलाललितं नाथं हृदि निधेहि बद्रिके ॥५१॥
श्रीश्वेतायनव्यास उवाच—
शृण्वन्तु मुनयो लक्ष्मीनारायणीयसंहिताम्।
ये श्रोष्यन्ति भागतोऽपि ते यास्यन्ति परां गतिम् ॥५२॥

खण्डोऽत्र प्रथमश्चास्ते कृतसन्तानकाभिधः ।
द्वितीयश्च समास्ते वै त्रेतासन्तानकाभिधः ॥५३॥
तृतीयो द्वापरसन्तानाख्यः खण्डोऽस्य वर्तते ।
चतुर्थस्तिष्यसन्तानाभिधोऽस्त्यत्र चमत्करः ॥५४॥
प्रथमे कृतसन्तानेऽध्यायाः पञ्चशतानि च (५९०) ।
नवतिश्च तथाऽध्याया वर्तन्ते द्विजमूर्तयः ॥५५॥
श्लोकास्तु पञ्चपञ्चाशत्सहस्राणि तथा पुनः ।
पञ्चशतान्यधिकानि सप्तविंशतियुञ्जि च (५५५२७) ॥५६॥
द्वितीये त्रेतसन्ताने त्वध्यायास्त्रिशतानि (३००) च ।
वै द्वात्रिंशत्सहस्राणि द्वे शते च तथा पुनः ॥५७॥
पञ्चाशच्चापि चत्वारः श्लोकाः सन्ति हि तीत्रके (३२२५४) ।
तृतीये द्वापरसन्तानकेऽध्यायाः शतद्वयम् ॥५८॥
सप्तत्रिंशत् (२३७) तथा सन्ति मोक्षदा दिव्यविग्रहाः ।
श्लोकाः सन्ति सहस्राणि पञ्चविंशतिरप्यथ ॥५९॥
शतं षष्टिश्च वै द्वे च (२५१६२) मुक्तिदा भक्तिदाः खलु ।
चतुर्थे तिष्यसन्तानेऽध्यायास्तु (१२३) शतमित्यपि ॥६०॥
त्रयोविंशतिश्चाप्येव वर्तन्ते ब्रह्मधामदाः ।
श्लोकाः सन्ति त्रयोदशसहस्राणि तथोपरि ॥६१॥
(१३०३८) अष्टात्रिंशतिसर्वे साक्षान्मोक्षप्रदाः पराः ।
चतुःसन्तानरूपायाः संहितायास्तु सर्वशः ॥६२॥
(१२५०) अध्यायाश्चैकसाहस्रं तदूर्ध्वे हि शतान्यपि ।
पञ्चाशत् सन्ति च तथा सर्वथा मोक्षकारिणः ॥६३॥
अस्याः पूर्णसंहितायाः श्लोकास्तु चैकलक्षकम् ।
तदूर्ध्वं तु पञ्चविंशतिसहस्राणि वै तथा ॥६४॥
नवशतानि चैकाशीतिस्तदूर्ध्वे भवन्ति हि (१,२५,९८१) ।
ततोऽतिरिक्ताः सप्ताऽपि विद्यन्ते श्लोकका अपि ॥६५॥
अनादिश्रीकृष्णनारायणः श्रीवल्लभप्रभुः ।
मुनयो ! न्यवसत् पृथ्व्यां लक्षवर्षाणि तत्परम् ॥६६॥
पञ्चविंशतिसहस्राण्यपि पञ्चशतानि च ।
तत्र कृताश्चमत्काराः संख्यातुं चाऽऽप्य गोचराः ॥६७॥
साधुरूपेण कृष्णेन कृता ये ये तु तेऽखिलाः ।
लिखिता वै साधुसंहितायां साधुभिरादरात् ॥६८॥
सनत्कुमारप्रभृतिभिस्तु मोक्षपरायणैः ।
श्लोके श्लोकेऽत्र सर्वत्र हरेर्योगेन देहिनाम् ॥६९॥
मोक्षेच्छया कृष्णकृपा सिञ्चिता दुर्लभा तु या ।
कृपामूर्तिस्वरूपेयं संहिता मोक्षदा ततः ॥७०॥
लक्ष्मीरूपा संहितेयं संहिता श्रीस्वरूपिणी ।
यथा लक्ष्मीस्तथा चेयं यथा चेयं तथा रमा ॥७१॥
दयिताऽनादिकृष्णस्याऽर्धांगना मोक्षदायिनी ।
पावनी सर्वलोकानां जननी मुक्तिगामिनाम् ॥७२॥
पोषणी चैहिकानां तु सम्पत्प्रदा तु कामिनाम् ।
कृष्णकण्ठाद् दिव्यरूपा चाविर्भूतेयमीश्वरी ॥७३॥
श्रुतिरूपा ततश्चेयं वेदवद् वेदिनी त्वियम् ।
वेदानां फलदा चेयं पूजिता वाचिता श्रुता ॥७४॥
सदा शान्तिकरी चेयं मुक्तिवन्मोदकारिणी ।
राधावद् ऋद्धिसिद्धिश्च सर्वर्द्धिसिद्धिदायिनी ॥७५॥
नारायणी मूर्तिमती नारायणस्य बोधिनी ।
नारायणप्रातिकरी पूजिता वाचिता श्रुता ॥७६॥
वैष्णवीयं मूर्तिमती वैष्णवानां प्रमोदिनी ।
योगिनी युगवार्तानां बोधिनी ब्रह्मयोगिनी ॥७७॥
ब्रह्मरूपकरी श्रोतुर्वक्तुः पूजयितुस्तथा ।
स्वाहेयं सर्वयज्ञानां फलदा दक्षिणात्मिका ॥७८॥
प्रज्ञेयं श्रीकृष्णनारायणवल्लभमूर्तिजा ।
ब्रह्मपारप्रदा चेयं यज्ञाऽवभृथरूपिणी ॥७९॥
सरस्वती ब्रह्मपत्नी नित्या वाणी हरेरियम् ।
सतामाशीर्वादरूपा लोमशेन विकासिता ॥८०॥
श्वेतिप्रभृतिशिष्यैश्च सनकाद्यैः सुपोषिता ।
द्यौर्दिव्या देवकोटीनां सजीवनप्रकारिणी ॥८१॥
महासाध्वी सती देवी दिव्येयं चाऽच्युती मता ।
गंगेयं पापविध्वंसकारिणी विष्णुधारिणी ॥८२॥
शिवेयं शिवदा स्वस्तिप्रदाऽऽनन्दप्रदा सदा ।
संज्ञेयं मानदा सौरी गायत्री त्राणदा परा ॥८३॥
स्वधेयं सर्वपितृणां प्रेतानां श्रेयसाम्प्रदा ।
कौमुदीयं सुधास्वादप्रदा चान्द्री सरोजनी ॥८४॥
पद्मेयं पद्मिका पद्मधरीवाऽव्ययकारिणी ।
अन्नपूर्णा कृष्णतृप्त्याभोगसुखप्रदायिनी ॥८५॥
गाणेशीयं सर्वविघ्ननाशिनी क्षेमलाभदा ।
हानुमती महाशक्तिः शौलिनी ब्रह्मवर्चुला ॥८६॥
काच्छपी फणिनी शक्तिः पृथिव्युद्धारकारिणी ।
महालक्ष्मीरियं विद्या नारायणस्य खेलनी ॥८७॥
बदरीयं हैमगिरौ तापसी तापनाशिनी ।
यमुनेयं यमलोकगतिनिरोधिनी स्वसा ॥८८॥
गोमतीयं परब्रह्मकिरणानां प्रमात्मिका ।
कामधेनुरियं द्रोग्ध्री कृष्णसौरभदायिनी ॥८९॥
सर्वकामप्रपूरेयं सेविता क्षीरपायसी ।
अमृतेयं सेवकानां महामृतप्रदायिनी ॥९०॥

कल्पवल्ली शाश्वतीयं मनोवाञ्छाप्रपूरणी ।
अक्षय्यपात्रिका चेयं कृष्णकथाऽक्षयान्विता ॥९१॥
कल्पद्रुमस्वरूपेयं सर्वार्थरसवर्षिणी ।
चिन्तामणिः संहितेयं सर्वेषां कृष्णचिन्तनी ॥९२॥
धर्ममणिः सदा चेयं वासनाद्रिप्रभेदिनी ।
सर्वव्रतमहाशाला संहितेयं फलप्रदा ॥९३॥
सर्वतीर्थमयी चेयं सर्वतीर्थप्रबोधिनी ।
सर्वेश्वरी महादेवीश्वराणां स्मृतिकारिणी ॥९४॥
धार्मिकीयं धर्मरक्षाकर्त्री धर्मस्य धारिणी ।
विभूतिः शाश्वतीयं च श्रीकृष्णस्याऽवतारिणी ॥९५॥
संक्रान्तिः संहितेयं च कृष्णसंक्रान्तियोगिनी ।
महोत्सवी सदा चेयं श्रोतुर्वक्तुः समुत्सवा ॥९६॥
अमूर्ता शब्दमूर्तेयं कृष्णजिह्वा रसाऽऽभरा ।
कृष्णयोनिः कृष्णनारायणाऽऽनन्दप्रदायिनी ॥९७॥
मोक्षविमानिका श्रेष्ठा धामसृतिः सुकोमला ।
कृष्णशय्यात्मिका दिव्या कृष्णपार्श्वप्रदायिनी ॥९८॥
श्रीकृष्णाऽऽस्यस्वरूपेयं कृष्णताम्बूलपायिनी ।
अनादिश्रीकृष्णनारायणात्मरूपिणी त्वियम् ॥९९॥
बहुना किं साधवीयं चतुःपुमर्थदायिनी ।
तुलसीमालिकेयं च साध्वीदीक्षेयमित्यपि ॥१००॥
महासंन्यासिनी चेयं कण्ठीयं संहिता सदा ।
ऋतम्भरेयं सततं सत्त्वप्रकर्षिणी त्वियम् ॥१०१॥
आतिवाहिकदेवीयं पराविद्येयमव्यया ।
विधिशक्तिरियं शास्त्री भक्तिमूर्तिरियं तथा ॥१०२॥
दुःखहाश्रीरियं नित्यं कृष्णनारायणप्रिया ।
लक्षाऽश्वमेधयज्ञानां फलदा वाचिता श्रुता ॥१०३॥
लक्षविष्णुमखानां च पुण्यदा मोक्षदा शुभा ।
सर्वविधानां तपसां फलदा शान्तिदा तथा ॥१०४॥
सर्वव्रतानां तीर्थानां सर्वेषां पुण्यदायिनी ।
कोटिधेनुगजाश्वानां दानानां फलदोत्तमा ॥१०५॥
ब्रह्माण्डदानफलदा जीवाऽभयप्रदायिनी ।
कोटिकन्यादानफला कोटिश्रीदानसदृशी ॥१०६॥
उपनिषत् मूर्तिमती कृष्णसन्निधिकारिणी ।
आत्मविद्या ह्यकामानां सकामानां तु चेष्टदा ॥१०७॥
धनदा पुत्रदा पुत्रीप्रदाऽऽरोग्ययशःप्रदा ।
राज्यदा पुष्टिदा नारीप्रदा चेष्टपतिप्रदा ॥१०८॥
स्वर्गदा धामदा मोक्षप्रदा कृष्णाऽङ्कवासदा ।
सर्वदा सर्वदा चेयं संहिता हितदाऽन्वहम् ॥१०९॥

गृहस्था तु गृहस्थानां गृहस्थितिप्रपोषिणी ।
हृदिस्था तु सतां सच्चिदानन्दहरियोगिनी ॥११०॥
सर्वसौभाग्यदा चेयं सर्वोत्कर्षप्रदायिनी ।
अनन्तानन्दधामाख्यसाम्राज्यसुखवर्षिणी ॥१११॥
वर्तते संहिता चेयं महामुक्तानिका क्षितौ ।
प्रत्येकमस्याः सन्तानाः पुत्रा नारायणस्य वै ॥११२॥
नारायणसमा मोक्षे बले कीर्तौ च सम्पदि ।
यथा कृतः सर्वधर्मे त्रेता यथाऽखिले मखे ॥११३॥
द्वौतो यथाऽखिले दाने तिष्योऽखिले जपेऽतुलः ।
कृतः सामर्थ्यसङ्कृष्टस्त्रेता दिव्यचरित्रवान् ॥११४॥
द्वौतश्च दिव्यलीलाढ्यस्तिष्यः शरणितारकः ।
सत्यः स्वात्मब्रलोद्धर्ता त्रेता सुरादिसंश्रयात् ॥११५॥
द्वौतः कृष्णचमत्कारात् तिष्यः साधुसमागमात् ।
तिष्योऽयं कृष्णसन्तानः केवलः पठितः श्रितः ॥११६॥
श्रुतश्च भावितश्चापि पूजितश्च गृहेऽवितः ।
स्मृतो गुणैर्गृहीतश्च तारयत्याश्रितान् द्रुतम् ॥११७॥
अनादिश्रीकृष्णनारायणस्य कानकीं शुभाम् ।
हरेः सुप्रतिमां कृत्वा तिष्यसन्तानकं त्विमम् ॥११८॥
दद्याद् दाने तु यो भक्त्या विदुषे ब्रह्मवादिने ।
वैष्णवाय विशेषेणाऽऽचार्याय गुरवेऽपि च ॥११९॥
विप्रायाऽध्यापकायाऽपि कथावाचनशीलिने ।
धेनुं वत्सायुतां सर्वोपस्करणादिसंयुताम् ॥१२०॥
शय्यां प्रपूर्णां मृद्वीं च पात्राणि चार्पयेत्तथा ।
सरत्नधान्यवस्त्रादि दद्याद् यः स तु मोक्षभाक् ॥१२१॥
सकामः स्वर्गमासाद्य ब्रह्मकल्पायुरेव च ।
भुक्त्वा भोगान् प्रयात्येव संहितादानतोऽक्षरम् ॥१२२॥
तिष्यसन्तानकश्चाऽयं सद्भावाऽऽधायकः सताम् ।
सत्सु स्नेहकरः सेवाधर्मबोधप्रदस्तथा ॥१२३॥
पापानामपि सर्वेषां क्षालकः पापिमोक्षदः ।
शरणागतजीवानां ब्रह्मधामप्रदः सुखः ॥१२४॥
अपि साधोर्हरेर्वापि पापी प्रसादभुग् भवेत् ।
तिर्यग् वा स्वेदजोऽण्डोत्थो जराजो वा समुच्यते ॥१२५॥
तिष्याध्यायं गृहे त्वेकं वाचयेद् यः समाहितः ।
तिष्यसन्तानपाठस्य लभते स फलं द्रुतम् ॥१२६॥
मुनयः ! तिष्यपाठानां तिष्यवेगो न बाधते ।
तिष्यदोषा न जायन्ते यमोऽस्य याति दूरतः ॥१२७॥
तिष्यकथाश्रवणार्थी मत्कृपापात्रमेव सः ।
सर्वमोक्षप्रदान् साधून् श्रित्वा यत्लभतेऽक्षरम् ॥१२८॥

यस्य दानं तपो धर्मस्तपो जपो न शीलता ।
तस्य तिष्याश्रयाद् साध्वीसाध्वाश्रयात् प्रमोक्षणम् ॥१२९॥
स्वर्णविमानकं कृत्वा संस्थाप्य तिष्यखण्डकम् ।
प्रपूज्य चाऽर्पयेत् पात्रे दाता विमानगोऽक्षरे ॥१३०॥
सर्वकुटुम्बसहितो मोदते हरिमन्दिरे ।
भुक्तिं मुक्तिं च लभते शाश्वतीं नात्र संशयः ॥१३१॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्तानेऽनादिश्रीकृष्णनारायणस्य मुनिरूपेणाऽपरेण दिव्येनस्वरूपेण श्रीमनोरथपूरणार्थं पृथिव्यां सर्वतीर्थाऽभिगमनं, पुनः कुंकुमवापिकागमनम्, तिष्यसन्तानस्य समस्तसंहितायाश्चाऽध्यायश्लोकसंख्यानिर्देशः, समस्तसंहितायास्तिष्यसन्तानस्य च दानादिमहिमेत्यादिनिरूपणनामैकविंशत्यधिकशततमोऽध्यायः ॥१२१॥

श्रीश्वेतायनो व्यास उवाच—

शृणुत श्रीसंहितायाः पुरश्चरणमुत्तमम् ।
सर्वायास्तु संहितायाः कर्तव्यं भूतिमिच्छता ॥ १ ॥
स्वयं पठेत् पाठयेद्वा चाष्टोत्तरशतद्विजैः ।
वैष्णवैः साधुसाध्वीभिर्ब्रह्मशीलपरायणैः ॥ २ ॥
मण्डपं कारयेद् रम्यं विशालं कुण्डमण्डपम् ।
परितः स्थापयेद् सौम्याऽऽसनानि चोर्णजानि तु ॥ ३ ॥
काष्ठासनादीनि चापि स्वेकैकं पुस्तकं तथा ।
श्रेष्ठासने तु प्रत्येके स्थापयेत् पूजयेत्ततः ॥ ४ ॥
आरार्त्रिकं प्रकुर्याच्च ततः पाठानि कारयेत् ।
प्रत्यहं पूरिकाक्षीरपायसान्नानि भोजयेत् ॥ ५ ॥
यद्यदपेक्षितं सर्वं दद्यात्तु दापयेत्तथा ।
मासं पारायणं चात्र पुरश्चरणमात्रकम् ॥ ६ ॥
द्विमासं वा कारयेच्च चतुःपुमर्थसिद्धिदम् ।
षाण्मासिकं कारयेद्वा वार्षिकं वाचयेच्च वा ॥ ७ ॥
नित्यं साधून् वैष्णवाँश्च दीनाऽनाथान् प्रभोजयेत् ।
विप्रान् साध्वीर्बालिकाश्च बालकान् भोजयेदपि ॥ ८ ॥
स्वर्णरूप्यकपात्राणां दानानि दापयेत्तथा ।
धनाऽम्बरकणानां चाऽन्नानां दानानि कारयेत् ॥ ९ ॥
अनादिश्रीकृष्णनारायणमूर्तेः श्रिया समम् ।
पूजनं कारयेन्नित्यं हवनं चाऽऽचरेत्तथा ॥१०॥
राधालक्ष्मीरमाप्रज्ञावतीश्रीमाणिकीयुतम् ।
पूजयेत् परमात्मानं कृष्णनारायणं हरिम् ॥११॥
दशांशहोमं नित्यं वै कारयेद् घृतपायसैः ।
समिद्भिः पुण्यवृक्षाणां फलपुष्परसादिभिः ॥१२॥
मासपारायणेऽध्यायान् नित्यं वै वाचयेद् व्रती ।
द्व्यधिचत्वारिंशदेव द्विमासे तु तदर्धतः ॥१३॥
षण्मासे चान्वहं षट्कं वर्षमात्रे त्रिकं त्रिकम् ।
न्यूनाधिकं यथायोगं विभज्य वाचयेद् व्रती ॥१४॥
श्लोकानां संख्ययानित्यं दशांशहवनं चरेत् ।
दक्षिणा बहुधा दद्याद् वाचकेभ्यः सुखप्रदाः ॥१५॥
पुस्तकं नववस्त्रेण वेष्टयित्वा प्रपूजितम् ।
भ्रामयेन्नगरे स्वर्णहस्तिस्थितं सचामरम् ॥१६॥
दानं ततः प्रदद्याच्च मुख्यवाचकसाधवे ।
छत्रदानं पादुकादानकं वस्त्रादिदानकम् ॥१७॥
भूपागोभूहिरण्यादि दद्याद् वै मुख्यसाधवे ।
सुवाचकाय गुरवे विद्याचार्याय योगिने ॥१८॥
वैष्णवाय विशेषेण दद्याद् विप्राय भावतः ।
भोजयेद् विप्रवर्यांश्च साधून् साध्वीश्च बालकान् ॥१९॥
भक्तांश्च वैष्णवान् सर्वान् भोजयेच्च विसर्जयेत् ।
एवं पुरश्चरणेन स्वेष्टान् कामानवाप्नुयात् ॥२०॥
महादानं प्रवक्ष्यामि सम्राड्योग्यं निबोध मे ।
सार्वभौमो महाराजस्त्वाश्वीध्रः प्रददौ पुरा ॥२१॥
स्वायम्भुवो मनुश्चापि प्रददौ गोमतीतटे ।
कुबेरः प्रददौ चापि विशालायां हिमालये ॥२२॥
कोटिरायो ददौ चापि सिन्धुतटेऽब्धिसन्निधौ ।
एवमन्ये प्रददुश्च यथाकालं यथाधनम् ॥२३॥
सार्वभौममहादानं गद्यते तन्मया शृणु ।
अत्र ये कीर्तिता देवा भक्ता देव्यः प्रमुक्तिगाः ॥२४॥
सर्वनामानि संगृह्य कारयित्वा सुवर्णजाः ।
प्रतिमाः कोटिशः सर्वा दद्याद् दाने सुतीर्थके ॥२५॥
संहितादेवता यत्र चैकापि नातिरिच्यते ।
सर्वदेवता दद्याद् वै दाने गोदानपूर्वकम् ॥२६॥
पूजयित्वा विधानेन दद्याद् विप्रेषु साधुषु ।
सत्पात्रेषु समस्तेषु पुण्यपारो न विद्यते ॥२७॥
श्रीहरेर्भगवतोऽर्थे येन सर्वस्वमर्पितम् ।
स एव कर्तुं शक्नोति महादानं यथार्थतः ॥२८॥
स तारयेज्जगत्सर्वं महादानबलात् खलु ।
महादानप्रदातुस्तु सन्निधौ गोचरो हरिः ॥२९॥
लक्ष्मीश्च गोचरा नित्यं भवेदेव न संशयः ।
संहितायाः कथायज्ञं कुर्यात् प्रकारयेच्च यः ॥३०॥

तस्याद्वयं समस्ताः स्युरश्वय्या वृद्धिमागताः ।
कार्तिकेऽस्या दानकर्ता ब्रह्मा भवति विश्वसृट् ॥३१॥
मार्गशीर्षे प्रदाताऽस्या नारायणाः प्रजायते ।
पौषे दाता संहिताया रुद्रो भवति शंकरः ॥३२॥
माघे दाता संहिताया विष्णुः प्रजायते खलु ।
फाल्गुनेऽस्याः प्रदाता तु जायते धनदोऽचलः ॥३३॥
चैत्रेऽस्या दानकर्ता वै जायते सूर्यदेवता ।
वैशाखे दानकृच्छ्रेष्ठो ध्रुवो भवति वैष्णवः ॥३४॥
ज्येष्ठे दाता विराट् स्याच्चाऽऽषाढे दाता सदाशिवः ।
श्रावणे तु महाविष्णुर्भवेद् दाता न संशयः ॥३५॥
भाद्रे दाता महेन्द्रः स्यादाश्विने तु बृहस्पतिः ।
अधिमासे प्रदाताऽस्या वासुदेवः प्रजायते ॥३६॥
एवं दानफलं श्रेष्ठं संप्रोक्तं मत्कपोद्भवम् ।
नारी दात्री भवेद् राधा रमा लक्ष्मीश्च माधवी ॥३७॥
दारिद्र्याणि समस्तानि नश्यन्त्यस्याः प्रदानतः ।
त्रिविधान्यपि दुःखानि नश्यन्त्यस्याः प्रदानतः ॥३८॥
सम्पूर्णां संहितां चैतां निधाय गजमस्तके ।
यद्वा स्वर्णगजे स्वर्णसंहितां प्रणिधाय च ॥३९॥
दद्याद् यस्तस्य साम्राज्यं चतुर्दशभुवां भवेत् ।
मनुः स्यात् खण्डदाताऽपि समस्तायाः प्रदो हरिः ॥४०॥
अस्याः श्लोकस्य वै वक्तुर्नाऽसद्गतिर्भवेत् क्वचित् ।
सर्ववर्णाश्रमधर्मफलं चास्याः प्रदानतः ॥४१॥
यो विद्वान् संहितां चेमां कण्ठे कृत्वा त्वविष्यति ।
स तु तेनैव देहेन दिव्यभावेन सर्वथा ॥४२॥
लक्ष्मीनारायणात् प्राप्तविमानेन परं पदम् ।
प्रयास्यत्याक्षरमुक्तैः शंसितः पूजितः सुरैः ॥४३॥
लक्ष्मीनारायणसंहिताया योऽहृदि धारकः ।
सृष्ट्यन्तरे भवेदेषः वैकुण्ठधाम्न ईश्वरः ॥४४॥
नारी स्यादीश्वरी लक्ष्मीर्वैकुण्ठस्वामिनी सदा ।
एषणावान् लभेतेष्टं सकामः कामनां लभेत् ॥४५॥
निष्कामो मोक्षणं प्रेयाक्षरो नारायणो भवेत् ।
नारी नारायणी स्याच्च संहिताधारणात् सदा ॥४६॥
चतुष्टयं सदा कार्यं शाश्वतीं भूतिमिच्छता ।
लक्ष्मीपूजा हरेर्ध्यानं दानमस्याः कथाश्रुतिः ॥४७॥
चतुष्टयं सदा कार्यं शाश्वतं मोक्षमिच्छता ।
सतां सेवा हरेर्भक्तिर्लीलास्मृतिस्तदर्पणम् ॥४८॥
द्वयं सदा कार्यं शाश्वतीं शान्तिमिच्छता ।
अनारम्भश्च निवृत्तिर्जपो विवेकिताऽऽत्मनि ॥४९॥

य इह सुमतिमान् स्याच्छाश्वतानन्दमिच्छेत् ,
त्रिभुवनसुपतित्वं चेश्वराणां पतित्वम् ॥
अपि च परममुक्तिं चाऽवतारात्मकत्वम् ,
पिबतु स सततं श्रीसंहितोत्थाऽमृतानि ॥५०॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्तानेऽस्याः श्रीलक्ष्मीनारायणसंहितायाः पुरश्चरणविधिः, सार्वभौम-महादानविधिः, संहिताधारणायाः फलं चेत्यादि-निरूपणनामा द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२॥

श्रीनरनारायण उवाच—

शृणु श्रीबदरीदेवि नारायणि परेश्वरि ।
तिष्यसन्तानविषयान् संक्षेपात् स्मारयामि ते ॥ १ ॥
चतुर्थे तिष्यसन्ताने नरनारायणस्य मे ।
श्रीबदर्याः स्वरूपस्य वर्तनं ते समीरितम् ॥ २ ॥
राजर्षेर्बदराख्यस्याऽऽख्यानं हिमाचलस्य च ।
हेमानलासुरस्यैव गर्ते निक्षेप ईरितः ॥ ३ ॥
श्रीमाणिक्या बदरीश्रीरूपतादि प्रकीर्तितम् ।
श्रीशीलस्य तु विप्रस्य प्रेतस्य मुक्तिरीरिता ॥ ४ ॥
दाराभाग्याख्यभूपस्य परीक्षणं च मोक्षणम् ।
ब्रह्मदेवद्विजस्यापि वंशवत्त्वकथोदिता ॥ ५ ॥
बदर्या बाल्ययोगिन्या गीतोक्ता ब्रह्मभावदा ।
दास्यं भागवतत्वं च वैष्णवत्वं च योगिता ॥ ६ ॥
परब्रह्मप्रेमरसवर्णनं चेति कीर्तितम् ।
सत्सेवया नाग्नमुखीचारण्या मुक्तिरीरिता ॥ ७ ॥
विनोदिन्यास्तु कान्तस्य भक्त्या नारायणाऽऽगमः ।
देवलिकात्मकत्वं चेत्यैतत् सर्वमुदीरितम् ॥ ८ ॥
बाहुलकस्य च लीलावत्या भक्तिरुदाहृता ।
ससदश्योऽन्नादिकृष्णजन्मोत्सवस्तथोदितः ॥ ९ ॥
मालियानमल्लिकयो सेवया मुक्तिरीरिता ।
ज्ञानलभ्यो ब्रह्मरसश्चोपास्त्या कथितस्ततः ॥१०॥
रसप्रदाधिधर्माणां महायोगस्य वर्णनम् ।
अनादिश्रीकृष्णनारायणश्च बाल्ययोगिनीन् ॥११॥
विवाहयामास कथा चैषा तत उदीरिता ।
सद्भक्तस्य ततो निकामदेवस्य च मोक्षणम् ॥१२॥
स्वरूपयोगरूपं च परब्रह्मणि चोदितम् ।
ततो विशिष्टब्रह्माऽद्वैतात्मा हरिरुदीरितः ॥१३॥

निर्भययोगकथनं स्तुतिश्चापि तथोदिता ।
स्तुतिकर्त्र्यै तथा स्तोत्रे ह्यखिलधामिदर्शनम् ॥१४॥
सदेहदिव्यमुक्तिश्च तयोस्तत उदीरिता ।
निगडभ्रमणादीनां कैवर्तानां प्रमोक्षणम् ॥१५॥
पिपठायनयोगेन तत उक्तं हि बद्रिके ।
एकलायाश्च कुशलीसागर्या राजयक्ष्मतः ॥१६॥
रक्षणं मोक्षणं चापि तत उक्तं हि बद्रिके ।
वञ्चयित्र्या विषलाण्याः सतां प्रसादभोजनात् ॥१७॥
मुक्तिरुक्ता ततो गंगाङ्गन्या मोक्ष उदीरितः ।
रमाङ्गन्या रमात्वं च मोक्षणं समुदीरितम् ॥१८॥
स्त्रियां रणस्तम्बकुम्भकारस्य साधुसेवया ।
चन्द्रमाः पुत्रतां प्राप्तस्ततो मोक्ष उदीरितः ॥१९॥
ततो देवसुधानाम्न्याः स्वर्णकर्त्र्याश्चमत्कृतिः ।
दुर्भिक्षेऽसंख्यजीवानां भोजनं मोक्षणं तथा ॥२०॥
विष्टिनार्या विद्रुमिण्याः सत्संगेन च दिव्यता ।
चाण्डाल्या मालवान्याश्च सेवया धर्मदर्शनम् ॥२१॥
मूर्तमन्त्रदर्शनं च मोक्षणं चाप्युदीरितम् ।
कारेलिकायाः शूद्र्याश्च निर्मोहित्वमुदाहृतम् ॥२२॥
बद्रिकायनसाधोश्च मूकता शापमोक्षणम् ।
यन्त्रकर्त्र्याश्च गोमत्याः क्षयरोगनिवारणम् ॥२३॥
कनकांगदाया मोक्षः साधूनां सेवया कृतः ।
रायहरिभाणवाण्योरुन्मत्तयोस्तु मुक्तये ॥२४॥
लक्ष्मीनारायणसंहितायाः कथादिवाचनम् ।
अष्टादशो हरेर्जन्ममहोत्सव उदीरितः ॥२५॥
नारायणसरःस्थानां मोक्षणं कच्छभूभृतः ।
पावनत्वं तथा विद्योताया मोक्ष उदीरितः ॥२६॥
कुंभकारकुटुम्बस्य स्वर्णकारस्त्रियास्तथा ।
धातुध्माया नटस्यापि कदर्यस्यापि मोक्षणम् ॥२७॥
क्षीरोदनृपतेः पत्न्याः प्रजानां मुक्तिरीरिता ।
सोमिकादिगणिकानां मोक्ष उदीरितस्ततः ॥२८॥
दुःखनाशो मद्यपस्य मोक्षश्च हरिणा कृतः ।
चक्रिणो यास्कवादस्य बहूनां मोक्ष ईरितः ॥२९॥
निन्दकयोर्द्विवदन्तीर्द्विगर्जनाभिधानयोः ।
मद्दूतदर्शनं च मोक्षस्तत उदीरितः ॥३०॥
सुरप्रसादविप्रस्य गुरुहन्तुः कथाश्रवात् ।
सतां प्रसेवया मोक्षस्तत उक्तो हि बद्रिके ॥३१॥
काराग्रहे पतितानां देवद्रोहवतां सदा ।
नागविक्रमादीनां च रक्षामोक्ष उदीरितौ ॥३२॥
शालमिश्रनृपतेश्च राज्ञ्याश्चायुर्विनाशनम् ।
मोक्षणं संहिताकथाश्रवणात् समुदीरितम् ॥३३॥
मुद्गरास्य च विषप्रदस्य कन्यकादिषु ।
यमदूतागमो मृत्युः साधुकृतं च रक्षणम् ॥३४॥
व्यवायिन्या गर्भहन्त्र्या अनंगवल्लरीस्त्रियाः ।
पापनाशो मोक्षणं च कथाश्रवादुदीरितम् ॥३५॥
षण्ढवज्रादिषण्ढानां कथाश्रवात् प्रमोक्षणम् ।
नपुंसकानामन्येषां पुंस्त्रीव्यञ्जकतोदिता ॥३६॥
घातकिनो यवसन्ध्याख्यस्य मुक्तिरुदीरिता ।
भण्डशीलाख्यमाण्डस्य भवायनस्य मोक्षणम् ॥३७॥
हर्षवीर्यादिमल्लानां मृगयूणां च बद्रिके ।
वार्धुषिकाणां मोक्षश्च कथाश्रवादुदीरितः ॥३८॥
नागादस्य वादिटस्य हारहासे च खेलिनाम् ।
कथासाधुप्रसंगेन मोक्षस्ततः उदीरितः ॥३९॥
विलासदेवविप्रस्य छुच्छादस्य च दीक्षणम् ।
दुरितघोषसंज्ञस्य दीक्षणं कीर्तितं ततः ॥४०॥
शीलयान्याः स्वामिनश्च धर्मभटस्य मोक्षणम् ।
न्यायाक्षिण्याः स्वामिनश्च न्यायाधीशस्य मोक्षणम् ॥४१॥
विशालरेखकायस्थादीनां चोक्तं च मोक्षणम् ।
शाहविलापनक्षत्रियस्योक्तं मोक्षणं ततः ॥४२॥
दण्डारणिकौलिकस्य गृध्रजन्मनि मोक्षणम् ।
गोचारस्य बिडालजन्मनश्चोक्तं प्रमोक्षणम् ॥४३॥
ठट्ठोल्लवणिजो मोक्षः प्रोक्तः शृगालजन्मनः ।
स्वर्णाङ्गनानिभृत्यानां सेवयोक्तं प्रमोक्षणम् ॥४४॥
अजापालस्यापि मुक्तिरुक्ता च श्येनजन्मनः ।
अजानां मोक्षणं चोक्तं चटकाजन्मनां ततः ॥४५॥
कपोतानां पुरा सार्थवाहानां मोक्षणं तथा ।
पुरा तु कंकजातीनां मोक्षणं काकपक्षिणाम् ॥४६॥
नाणकिन्याः सभासिन्या गृहगोधाख्यजन्मनि ।
मोक्षणं संघवाटादिशूद्राणामाखुजन्मनाम् ॥४७॥
सागरदानवाटकीरताराख्यभाट्योः ।
पुण्यवत्याः स्वामिनश्च देवगतीश्वरस्य च ॥४८॥
जयमानबन्दिनश्च वज्रविक्रमभूभृतः ।
कथाश्रवणतः प्रोक्तं मोक्षणं बद्रिके ततः ॥४९॥
सप्ताब्धिसिंहनृपतेः सर्पदष्टस्य मोक्षणम् ।
हर्षनयनसंज्ञस्य मागधस्यापि मोक्षणम् ॥५०॥
योगिदासस्य मोक्षश्च कथितो बद्रिके ततः ।
सौरमसाविप्रनाम्नस्ताम्बूलिनश्च मोक्षणम् ॥५१॥

रंगिलाख्यरंगकर्तुर्मोक्ष उक्तस्ततः परम् ।
डमरूकाभिधवाद्यकारस्योक्तं च मोक्षणम् ॥५२॥
चिह्नरायाभिधभावसारस्योक्तं च मोक्षणम् ।
स्वर्णास्तरणादीनां च विद्याध्राणां प्रमोक्षणम् ॥५३॥
चित्रचर्हादिगन्धर्वोत्तमानां मोक्षणं ततः ।
किन्नराणां चारणानां सिद्धानां मोक्षणं ततः ॥५४॥
संहितायाः कथायास्तु समाप्तौ पूजनादिकम् ।
नगरे भ्रमणं सर्वराजराष्ट्रादिषु प्रभोः ॥५५॥

कुंकुमवापिकायां श्रीहरेश्च गमनं ततः ।
उक्तः सर्वमेधयज्ञो नागविक्रमभूपतेः ॥५६॥
दिलावरीश्वरनन्दिभिल्लस्य योधनं ततः ।
नागविक्रमभूपेन सह सैन्योभयोरपि ॥५७॥
नागविक्रमविजयो नन्दिभिल्लस्य संक्षयः ।
दिलावर्याः सतीत्वं च कथितं बद्रिके ततः ॥५८॥
प्रभुणा निजकान्ताभ्यः कृष्णनारायणेन तु ।
गृहगीता शुभा प्रोक्ता गृहिणां मोक्षसाधनम् ॥५९॥

विध्यर्थाऽऽज्ञावतां मोक्षः कथितो गृहिणोरपि ।
द्वाविंशः श्रीहरेर्जन्मजयन्त्युत्सव ईरितः ॥६०॥
पुरञ्जयक्षितीपस्य स्वप्ने नरकभोगिता ।
मोक्षणं कथितं चापि सत्यलोकं ययौ हरिः ॥६१॥
सप्तलोकेषु भगवान् गत्वाऽक्षसारसं ययौ ।
अतलादिषु गत्वापि हरिर्जन्मदिनं निजम् ॥६२॥
चतुर्विंशं प्रचक्रे कुंकुमवाप्यां कथोदिता ।
सप्तद्वीपेषु गत्वापि पञ्चविंशं निजोत्सवम् ॥६३॥

कुंकुमवापिकायां च चकार परमेश्वरः ।
वैराजेश्वरप्रभृतिलोकेषु धामसूर्ध्वगः ॥६४॥
हरिः प्रदर्श्य पत्नीभ्यो धामानि चाययौ ततः ।
कुंकुमवापिकाक्षेत्रं सिंहारण्यादिभूमिषु ॥६५॥
विचचार विहारार्थे पत्नीभिः सहितः प्रभुः ।
तत्र सर्वाभिरिष्टानि ह्यपत्यानि हरेस्तदा ॥६६॥

सर्वाभ्यः प्रददौ तत्र युगलापत्यकानि सः ।
मानसानि हि दिव्यानि न गर्भजानि बद्रिके ॥६७॥
तेषां संस्कारविषयः कथिताश्च ततः परम् ।
तिष्यस्वभावकथनं तिष्यगुणप्रवर्णनम् ॥६८॥
मायापालनृपतेश्च याम्यदण्डात् प्ररक्षणम् ।
सनत्कुमारमुनिना कृतं च मोक्षणं ततः ॥६९॥
कलौ मोक्षसाधनानि प्राविर्भावा हरेस्ततः ।
नागविक्रमभूपस्य तीर्थयात्रा च दिव्यता ॥७०॥

श्रीहरिर्निजपुत्राय मुकुन्दविक्रमाय तु ।
दिलावरीराजधान्याममभिषेकं चकार ह ॥७१॥
श्रीकृष्णो निजपत्नीनामक्षरेक्षणवाञ्छनाम् ।
गत्वा कोटिविमानैः प्रदर्श्य पूरितवान् प्रभुः ॥७२॥
पत्नीनां मुक्तपुंरूपत्वं च ब्रह्महृदाप्लवः ।
कोटिशृंगाद्रिवीक्षा च नृत्यमण्डपवीक्षणम् ॥७३॥
रासमण्डपवीक्षा च विहारमण्डलेक्षणम् ।
राष्ट्रमण्डलवीक्षा चाऽक्षरधामपुरेक्षणम् ॥७४॥

ब्रह्ममहोल्लवीक्षा चाऽवतारालयवीक्षणम् ।
वर्णितं सर्वमेवैतत् ततः परमधामनि ॥७५॥
गमनं तद्रहस्योपनिषदादिविवेचनम् ।
अष्टदुर्गवर्णनं च परब्रह्मपुरस्य च ॥७६॥
परब्रह्मात्मुक्तादिवसतीनां प्रवर्णनम् ।
रहस्यमुक्तकोटीनां द्वैधात्वमैक्यमित्यपि ॥७७॥
षोडशानां महोल्लानां दर्शनं वर्णितं ततः ।
मूर्तिगर्भगताऽनादितादात्म्यमुक्तकेक्षणम् ॥७८॥

स्वपत्नीनां समस्तानां तादात्म्यमुक्ततार्पणम् ।
श्रीहरेः सप्तायतनसमष्टिरूपतोदिता ॥७९॥
श्रीहरेः कुंकुमवाप्यामागमनमुदाहृतम् ।
असंख्यानां निजर्द्धीनां दानानि कथितानि च ॥८०॥
वानप्रस्थोत्तरं साधुदीक्षा हरेश्च कीर्तिता ।
लक्ष्मीकृतं स्तवनं च ततस्तीर्थाऽभियात्रिका ॥८१॥
हरेर्लक्ष्म्या सहितस्य पुनः कुंकुमवापिकाम् ।
प्रत्यागमनमुक्तं श्रीस्वामिनीभिश्च कोटिभिः ॥८२॥

संहिताध्यायसंख्या च श्लोकसंख्या ह्युदीरिता ।
संहितादानमाहात्म्यं पुरश्चरणमित्यपि ॥८३॥
सार्वभौममहादानविधिस्तत उदीरितः ।
पुनः कथानां स्मरणं बद्रिकेऽभिहितं च ते ॥८४॥
इत्येवं विषया बद्रि कथितास्ते मयाऽखिलाः ।
येषां श्रवणात्स्मरणान्मुक्तिं विन्दति देहवान् ॥८५॥

विषयाः प्रतिखण्डस्य खण्डान्ते तत्र तत्र च ।
कथिता बद्रिके तस्मात् ज्ञातव्यास्तत्तदन्ततः ॥८६॥
तत्तत्खण्डस्य माहात्म्यं तदन्ते चोपपादितम् ।
पठनाच्छ्रवणाद्ध्यानाद् भुक्तिर्मुक्तिर्मिलेद् ध्रुवा ॥८७॥
विरमामि क्षणं बद्रि ! कृष्णनारायणेऽधुना ।
त्वं विरामं कृष्णनारायणे याहि सुनन्ददम् ॥८८॥
एह्यागच्छ महानन्दपयोधौ स्याव तन्मयौ ।
श्रीकृष्णस्वामिजाऽऽनन्दं भुज्यास्वाऽति यथेष्टकम् ॥८९॥

श्रीश्वेतकृष्णायनो व्यास उवाच—

एवं वै वर्तमानायां कथायां प्राह बद्रिका ।
धन्याऽस्मि तापसी चाहं महाभाग्याऽन्विताऽस्मि च ॥९०॥
याऽहं शक्तिश्चार्धमूर्तिः पुरुषोत्तमरूपिणी ।
अवैमि मां माणिकीं च माधवीं च प्रभात्मिकाम् ॥९१॥
अवैमि मां च लक्ष्मीं श्रीकृष्णनारायणीं स्वयम् ।
स्वामी कान्तोऽनादिकृष्णनारायणोऽस्ति मे पतिः ॥९२॥
अवैमि तं सकलावतारिणं परमेश्वरम् ।
स भवानिह बद्रीनारायणोऽस्ति नरान्वितः ॥९३॥
साऽहं नारायणीबद्री सर्वेशी पुरुषोत्तमी ।
नरनारायणस्वामिन् ते सत्संगात् कथाश्रवात् ॥९४॥
मन्निमित्तेन लोकानां परं श्रेयो भविष्यति ।
धन्येयं पृथिवी सर्वा धन्याश्च मानवा इमे ॥९५॥
येषां नारायणो भर्ता धर्ता कर्ताऽविता सदा ।
धन्या नार्यः सर्वविधाः कृपा यासु हरेः शुभा ॥९६॥
सर्वाभ्योऽपि विशेषेण कृपा षट्सु हि चक्रिणः ।
कृष्णरूपस्य राधायां लक्ष्म्यां नारायणस्य च ॥९७॥
प्रज्ञायां पाद्मवत्यां श्रीकृष्णनारायणस्य च ।
नारायणीश्रियां चापि पुरुषोत्तमरूपिणः ॥९८॥
नरनारायणस्याऽपि बदर्यां मयि शाश्वती ।
लक्ष्म्यै नारायणेनात्र श्रावितः कृतखण्डकः ॥९९॥
राधायै कृष्णरूपेण श्रावितस्त्रीतखण्डकः ।
पुरुषोत्तमरूपेण नारायणीश्रियै तथा ॥१००॥
श्रावितो द्वापरसन्तानको मह्यं त्वयाऽन्तिमः ।
प्रज्ञायै पाद्मवत्यै च गृहगीताद्युदीरितम् ॥१०१॥
एषाऽहं भगवन्नस्मि पतिता पादयोस्तव ।
मामन्तर्भाव्य मूर्तौ त्वं कृष्णनारायणे प्रभौ ॥१०२॥
विरामं लभ मे स्वामिन्नेषा ध्यायामि तं हरिम् ।
इत्युक्त्वा बदरी तूर्णं ध्यानमग्ना यतोऽभवत् ॥१०३॥
तावत्तत्राऽभवत्तूर्णं महाश्चर्यं महाद्भुतम् ।
महातेजोऽभवद् व्याप्तं शीतलं मधुरं सुखम् ॥१०४॥
तत्राऽभवन्त सन्नादाः किंकिणीनां मनोहराः ।
विभूषाणां पादयोश्च करयोः कटिवक्षसोः ॥१०५॥
किंकिणीनां मिष्टनादाः अभूयन्त सुखावहाः ।
तत्र तेजसि कन्यैका व्यदृश्यत सुसुन्दरी ॥१०६॥
प्रोद्भिन्नयौवनाकोटिचन्द्रकान्तिप्रविग्रहा ।
चतुर्हस्तेषु रम्येषु चतुर्धा पुस्तकानि सा ॥१०७॥
स्मितहासा धृतवती सर्वाभरणभूषिता ।
दिव्यस्वर्णकटकादिदिव्यमुकुटशोभना ॥१०८॥
दिव्यगन्धसुगन्धाढ्या दिव्याम्बरसुशोभना ।
रमणीनां समस्तानां मोहिनी चातिसुन्दरी ॥१०९॥
पुष्टा सर्वांगरम्या च भरपूरबलान्विता ।
चतुर्षु संहितावत्सु करेषु वरमालिकाः ॥११०॥
चतस्रो धृतमाना च प्रसन्नवदनेक्षणा ।
लक्ष्मीर्यद्वा राधिका माणिकी बद्री प्रभाऽथवा ॥ ११॥
माधवीं वाऽथतां नारायणोऽन्तरे तु संहिताम् ।
बद्री मूर्तिमतीं ज्ञात्वेमां लक्ष्मीसंहितां तथा ॥११२॥
नेमाते कुशलं पप्रच्छतुश्चक्रतुः स्वागतम् ।
नारायणोऽस्यै प्रददौ मधुपर्कं शुभासनम् ॥११३॥
का ? कुतश्च ? कथं ? पृष्टा सा प्रोवाच निजां कथाम् ।
लक्ष्मीनारायणसंहिताऽस्मि श्रीपुरुषोत्तमी ॥११४॥
अनादिश्रीकृष्णनारायणांगाद् दिव्यरूपिणी ।
प्राविर्भूताऽहमेवाऽस्मि राधालक्ष्मीस्वरूपिणी ॥११५॥
नारायणीश्रीस्वरूपा बद्रीरूपा प्रभात्मिका ।
पद्मावतीरूपिणी च चतुर्हस्तवती सदा ॥११६॥
चतुःपुस्तकधर्त्री च चतुःसन्तानविग्रहा ।
चतुर्वेदोद्भवमाता चतुर्धामस्वरूपिणी ॥११७॥
चतुर्नारायणवाणी चतुर्युगेषु वर्तिनी ।
चतुराश्रमवर्णानां चतुःसाधनसंभृता ॥११८॥
चतुष्पादवती चाम्मि चतुर्नारायणाश्रिता ।
चतुर्नारायणमूर्तिश्चतुर्मुक्तिसुविग्रहा ॥११९॥
चतूरूपा चतुर्मालाधरा च भगवन्मयी ।
सम्पूर्णाऽद्य भवाम्येव चतुर्नारायणात्मिका ॥१२०॥
साऽहं नारायणं कृष्णं बद्रीपं पुरुषोत्तमम् ।
अर्चितुं कामये कृष्णनारायणार्यवल्लभम् ॥१२१॥
इत्युक्त्वा सा चतुर्हस्तैः समालैः श्रीनरायणम् ।
अर्चितुं त्वाजगामाऽग्रे तावत्तु भगवान् पतिः ॥१२२॥
राधया सह कृष्णोऽभूद् द्विभुजो मुरलीधरः ।
चतुर्भुजधरो नारायणो लक्ष्म्या सहाऽभवत् ॥१२३॥
नारायणीश्रिया युक्तः श्रीपुरुषोत्तमोऽभवत् ।
बद्रीनारायणश्चापि प्रादुरासीत् पुरःस्थले ॥१२४॥
प्रज्ञाबदरिकास्वामी चतुर्ष्वपि सुदृश्यते ।
पूजां नेतुं कृपां कर्तुमाशिषोऽर्पयितुं हरिः ॥१२५॥
तादृशो दृश्यते तस्मै चतस्रः पद्ममालिकाः ।
आर्पयच्चन्द्रकं भालेऽक्षतकुंकुमचन्दनैः ॥१२६॥

कृत्वा प्रपूज्य युग्मानि चाऽस्तौत् तद्गतमानसा ।
विह्वला स्नेहहृदया पूर्णकामाऽपि संहिता ॥१२७॥
विचरति योऽक्षरे परतरे निजधाम्नि
हरिर्बहुविधिसेवितश्च पुरुषोत्तम इष्टपतिः ।
निजतनुरूपिणीभिरनुगाभिरमाभिरयं
परतम एव सोऽस्तु मम सर्ववरार्थकरः ॥१२८॥
बहुविधगोपिकाभिरभिसेवित एव च यो
विलसति राधया च सहितोऽत्र स कृष्णपतिः ।
निजजनमानसानि समपूरयितुं पुरतः
स भवतु मे मनोऽभिलषितं सुविधातुमिह ॥१२९॥
प्रसरति यः प्रभुर्मुहुरसंख्यतनुर्वसतौ
स हि कमलापतिर्मयि नरायणरूपधरः ।
बहुकरुणाकरस्त्विह सुगोचरतां तु गतो
वितरतु हृद्गतं मम समस्ततनुग्रहितम् ॥१३०॥
विधविधलोकिनां सुखदशान्तिकृते तपसा
सुरुकमनीयरूपमपि शुष्कवसे सततम् ।
अगणितबोधदः स इह मे बदरीशमुनिः
पतिरभिलाषगोचरमतीव ददातु च मे ॥१३१॥
नमनमनन्तकं मुहुरिहाऽस्मि च दत्तवती
चरणतले चतुःप्रतिमधारिहरेरिह वै ।
अयुगलरूपिणी युगलमानमवाप्तुमतिः
प्रकटवचोमयी कमनुयामि चतुष्षु रता ॥१३२॥
इत्येवं संहितादेवी तुष्टाव चतुरः प्रभून् ।
लज्जानम्रा प्रतस्थौ च मौनमास्थाय कामिनी ॥१३३॥
चत्वारो हरयस्तस्यै वरदानानि सन्ददुः ।
संहिते सुभगे देवि नो मुखेभ्यो विनिर्गता ॥१३४॥
राधायां च श्रियां चापि बद्र्यां लक्ष्म्यां कृतस्थितिः ।
विराजसे यतो नित्या नित्याऽस्मद्रूपधारिणी ॥१३५॥
अस्मदभिप्रायगर्भा वर्तसे वेदसत्प्रसूः ।
पात्रं त्वं वर्तसे श्रेष्ठं वरदानाऽयुतस्य वै ॥१३६॥
दद्मस्ते वरदानानि चतुःस्वरूपरूपिणी ।
संहिते ! शाश्वती पत्नी चतुर्णामग्रतोऽसि च ॥१३७॥
चतुष्पत्नीसमा चैका प्रज्ञापार्वतीसमा ।
ता देव्यो मुक्तिदा यद्वत् तथा त्वं मुक्तिदा सदा ॥१३८॥
सर्वधामाधिदेवी च महती पुरुषोत्तमी ।
सर्वदा वस नो धामालयेषु दिव्यभामिनी ॥१३९॥
द्वितीयेन स्वरूपेण वाणी वस विमुक्तिदा ।
आश्रितानां पूजकानां श्रोतॄणां तव संहिते ! ॥१४०॥
तथा वाचनशीलानां परं श्रेयोऽस्तु धामनि ।
धर्मोऽस्तु धर्मकामानामर्थोऽस्तु चाऽर्थकामिनाम् ॥१४१॥
कामः कामवतां चाऽस्तु मोक्षोऽस्तु मोक्षकाङ्क्षिणाम् ।
न चैवाऽस्त्वशुभं तेषां सदा स्वस्त्यस्तु सेविनाम् ॥१४२॥
प्रजार्थिनां प्रजाः सन्तु यशश्चाऽस्तु यशोऽर्थिनाम् ।
प्रजाप्राधान्यमेवाऽपि राजधिष्ण्याधिपालनम् ॥१४३॥
श्रीश्च तेषां विपुलाऽस्तु श्रेयश्चाऽस्तु परात्परम् ।
वीर्यं तेजो बलं चाऽस्तु निर्भयत्वं सदाऽस्त्वपि ॥१४४॥
अस्त्वारोग्यं च सौन्दर्यं गुणित्वं बहुमान्यता ।
अबन्धनत्वं सर्वापन्मोचनं पुत्रपौत्रकाः ॥१४५॥
वंशशाखाः स्वर्गराज्यं भूपतित्वं सुरेशता ।
इषिता भोगसामर्थ्यं चर्द्धयः सन्तु सर्वदा ॥१४६॥
यद्यद्धामाभिमुक्तत्वं वाञ्छितं तद् भवत्वपि ।
विद्वत्त्वं च कलावित्त्वं भाविवित्त्वं भवत्वपि ॥१४७॥
जातिस्मरत्वं सार्वज्ञ्यं निरावरणताऽस्त्वपि ।
योगित्वं कोविदत्वं च गान्धर्वत्वं भवत्वपि ॥१४८॥
सिद्धता यतिता ब्रह्मविष्णुमहेशताऽस्त्वपि ।
संहितासेविका नारी लक्ष्मी राधाऽस्त्वितीश्वरी ॥१४९॥
नरो नारायणश्चाऽस्तु दद्मस्ते सद्वरानिमान् ।
संहिते ! वेदधात्रीत्वं ख्यातिं लोके गमिष्यसि ॥१५०॥
वेदाधानस्वरूपा त्वं वेदगर्भा च वैदिकी ।
एवमुक्त्वा विरेमुस्ते कृष्णनारायणादयः ॥१५१॥
राधिकाद्यास्ततः प्राहुः प्रसन्नवदनास्तदा ।
भव त्वखण्डसौभाग्यवती मोक्षप्रदा ध्रुवा ॥१५२॥
इत्युक्त्वा संहितां पत्नीं निन्युः सह तिरोहिताः ।
वाणीरूपां पृथिव्यां तां ररक्षुः शाश्वतीः समाः ॥१५३॥
सेयं विजयते लोके कृष्णनारायणप्रिया ।
ईशलोके ब्रह्मलोके सदाधारा हरिप्रिया ॥१५४॥
प्रपूजिता समस्तैस्तैः सर्वमाता परेश्वरी ।
वैष्णवानां कुटुम्बेषूवासेयं संवसत्यपि ॥१५५॥
निवत्स्यति सदा कालं व्यासेषु सत्सु साधुषु ।
भाववत्सु प्रभक्तेषु भक्तासु जयमेष्यति ॥१५६॥
जयतु सकलकल्पद्रुमस्वरूपाऽऽत्मवल्ली
निगमरससुपात्री ब्रह्मसम्बन्धदात्री ।
शरणरणितभर्त्री संहिता मोक्षकर्त्री
नयतु निजगुणाढ्यान् स्वामिधामाऽक्षरं नः ॥१५७॥

जयत्वनादिश्रीकृष्णनारायणोऽखिलेश्विता ।
माता श्रीकम्भरालक्ष्मीः पिता गोपालकृष्णकः ॥१५८॥

कुंकुमवापी जयतु चाश्वपट्टसरोवरम् ।
सौराष्ट्रमण्डलं जयत्वजस्रं लोमशो मुनिः ॥१५९॥

स्वतःप्रकाशो जयतु लक्ष्मीर्जयतु शाश्वती ।
मुक्तिर्जयतु भक्तिश्च जयत्वाशु सुखप्रदा ॥१६०॥

विजयोऽस्तु च कल्याणं स्वस्तिरस्तु सुखं शुभम् ।
मंगलं सर्वदा चाऽस्तु परब्रह्माभियोगिता ॥१६१॥

इति स्मृत्वा परं कान्तं दद्यच्छाशीर्वचांसि वै ।
ओं नमोऽनादिश्रीस्तुश्रीकृष्णनारायणाय ओम् ॥१६२॥

इतिश्रीलक्ष्मीनारायणीयसंहितायां चतुर्थे तिष्यसन्ताने तिष्यसन्तानविषयाः, बद्रिकानारायणसन्निधौ संहितायाः कुमारीरूपेणाऽऽविर्भावः, श्रीनारायणश्रीकृष्णनारायणश्रीपुरुषोत्तमनारायणश्रीनरनारायणानां स्वस्वशक्तिभिः साकं तत्रैव आविर्भावः, संहितायै वरदानानि, कथाश्रवणफलं चेत्यादिनिरूपणनामा त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## इतिश्रीतिष्यसन्तानखण्डः

॥ सम्पूर्णेयं चतुःखण्डात्मिका श्रीलक्ष्मीनारायणसंहिता विजयते ॥

हरिः ओम्

---

तिष्यसन्तानस्याऽध्यायाः—१२३

श्लोकाः—१३०३८

## श्रीलक्ष्मीनारायण संहितायाः अध्यायाः—श्लोकाः

| | अध्यायाः | श्लोकाः |
|---|---|---|
| कृतसन्तानस्य— | ५९० | ५५,५२७ |
| त्रेतासन्तानस्य— | ३०० | ३२,२५४ |
| द्वापरसन्तानस्य— | २३७ | २५,१६२ |
| तिष्यसन्तानस्य— | १२३ | १३,०३८ |
| अध्यायाः— | १२५० | १,२५,९८१ |
| तिष्यसन्तानस्याऽधिकाः | श्लोकाः— | ७ |
| | श्लोकाः— | १,२५,९८८ सन्ति |

ओम्

॥ श्रीहरिः शरणं मम ॥



मुद्रक—ज्योतिष प्रकाश प्रेस, कालभैरव मार्ग, वाराणसी ।

# लक्ष्मीनारायणसंहितायां तिष्यसन्तानस्य शुद्धिपत्रम्

| पृष्ठम् | श्लोकाः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ९ | तापसां | तापसं |
| २ | ३७ | श्रीनारा | श्रीनरनारा |
| ४ | २५ | नायः | नार्यः |
| १२ | ८८ | सुवताराः | अवताराः |
| १३ | २८ | राधाऽऽवंभूव | राधाऽऽविर्बभूव |
| १४ | ४८ | रण्योद्याक्षे | रण्योद्यानक्षे |
| २८ | ७० | कोटिश्वराणी. | कोटीश्वराणी |
| ३३ | ७२ | परमं | परमां |
| ३४ | ७८ | प्रमा | रमा |
| ३५ | ३ | ध्रोव्या | ध्रौव्या |
| ३५ | १७ | नृपद्धि | नृपर्द्धि |
| ३५ | २७ | मानरु | मातरु |
| ४० | ९८ | पालितां | पालितं |
| ४६ | ४ | समयो | समये |
| ४७ | ६१ | चक्षुषान् | चक्षुषाम् |
| ५० | ६५ | मूर्तत्रिये | मूर्तित्रये |
| ५१ | ९१ | युगलौ | युगलं |
| ५४ | ६ | यदिवद् | यतिवत् |
| ५६ | ७३ | लभेत् | लसेत् |
| ६३ | ६ | हिरण्ययात्तु | हिरण्मयात्तु |
| ६४ | २१ | नारिकेल | नालिकेर |
| ६५ | ७० | श्वर्शी | श्वाशी |
| ६६ | १५ | त्याययोः | त्वावयोः |
| ६७ | ४० | प्रम्वस्मि | प्रभाऽस्मि |
| ६८ | ९५ | श्रीकृष्णस्य | श्रीकृष्णाय |
| ६८ | ९५ | वहन् | वदन् |
| ७४ | ७८ | जान्तो | जानन्तो |
| ७६ | ६२ | सस्तटे | सरस्तटे |
| ७८ | २८ | भवत् | भवन् |
| ७९ | ६७ | इत्येवं त्वं | इत्येवं |
| ८० | १४ | चेच्छत् | चंच्छत् |
| ८१ | २६ | यो निशि श्राति | योनिर्शिश्राति |
| ८६ | ९९ | प्रेरिया | प्रेरिता |
| ८६ | १०१ | युवती | युवतिः |
| ९४ | २ | विषयो | विष्टयो |
| ९६ | ८२ | निर्यान्ति | निर्याति |
| ९९ | ६४ | धर्मदव्य | धर्मदेव्य |
| १०१ | ३६ | त्तोऽहं | ऽतोऽहं |
| १०२ | ६२ | शाऽस्ति | साऽस्ति |
| ११२ | २७ | मण्यो | मणयो |
| ११२ | ४१ | साम्य | साम्य |
| ११३ | ४८ | पदे | यदे |
| ११६ | ५८ | प्रज्वायते | प्रजायते |
| ११७ | ९९ | नियेत् | निर्यन् |
| ११८ | ३५ | सूपवर्जित् | रूपवर्जितम् |
| ११९ | ८१ | धान्य | धन्य |
| १२० | ९० | युवती भूत्वा | युवतिर्भुत्वा |
| १२१ | १८ | त्वायास्पति | त्वायास्यति |
| १२३ | १०९ | श्रतार्थे | श्रुतार्थे |
| १२६ | ७५ | मादस्त | माऽस्तां |
| १३५ | ८१ | ऽभवद्धि हरिः, | ऽभवद्धरिः |
| १३५ | १०३ | निवासकम् | निवारकम् |
| १४० | ६६ | दानि | दानानि |
| १४० | ७० | कचलौं | कचलीं |
| नम्बर | हेडीङ्ग | ४१० | १४० |
| १४० | ७३ | मिष्टान्नापि | मिष्टान्नानि |
| १४५ | ५६ | भासं | ग्रासं |
| १४८ | ४६ | देवद्राग्भ्रे | देवद्रोग्भ्रे |
| १५० | १ | देवि | देवि वृत्तिहर्तुं कथ शुभाम् । जयशाला- मरराज्ये राजाऽऽसीत साधुपूजकः ॥ १ ॥ |
| १५० | २ | ॥ १ ॥ | ॥ २ ॥ |
| १५० | १०८ | ॥१०८॥ | ॥१०९॥ |
| १५१ | ५२ | पूजकस्यां | पूजकस्य |
| १६२ | २३ | यस्तेन | यतस्तेन |
| १६४ | १७ | प्राणमात्रं | प्राणत्राणं |
| १६७ | ६८ | धर्मं | धर्नं |
| १७८ | २८ | गत्या | गत्वा |
| १८९ | ३९ | स्वस्थि | स्वस्ति |

| पृष्ठम् | श्लोकाः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०६ | ६९ | स्यान्मे | न स्यान्मे ! |
| २०९ | ६९ | धाताऽर्थः | घाताऽर्थः |
| २१३ | १५ | दासदास | दासदासी |
| २१५ | ९३ | योगा | योग |
| २१६ | १७ | निमिमिरे | निर्ममिरे |
| २३८ | ९० | चान्द्रयन्द्रैश्च | चान्द्रचन्द्रैश्च |
| २४५ | १०७ | त्रया | क्रिया |
| २४५ | १२ | वक्तो | वक्रो |
| २४६ | ४७ | हारिषु | दारिषु |
| २४८ | ५ | एव | एक |
| २४८ | १२ | वापि | वापि तदा |
| २५४ | १५ | आलयेच्च | क्षालयेच्च |
| २५६ | ६४ | देवय | देयव |
| २५६ | ८८ | कृत्वा | कृत्वा कृत्वा |
| २६० | २ | भवजन्य | भवजन्म |
| २६० | ४ | कृष्णा | कृष्ण |
| २६३ | ३८ | बहुभिः | यानैर्बहुभिः |
| २६५ | १ | प्रज्ञा | देवि प्रज्ञा |
| २६९ | ११ | अष्टापि | अष्टौ च |
| २७० | ६९ | आश्वराः | आध्वराः |
| २८० | ७० | प्रचक्रश्च | प्रचक्रश्च |
| २८० | ३ | सिषवे | सिषेवे |
| २८३ | २० | समयन्ति | रामयन्ति |
| २८४ | ४३ | चात्म | चात्य |
| २८५ | ६५ | रामयुतुं | रामयितुं |
| २९० | २५ | पत्यमु | पत्ययु |
| ३०२ | ३९ | प्रत्वलामो | प्रज्वलामो |
| ३०२ | ५१ | मुत्तम् | मुत्तमम् |
| ३१७ | १३ | बगर्यां | नगर्यां |
| ३१७ | ७५ | भाजनानि | भोजनानि |
| ३२० | ६२ | श्वेताः | श्वेटाः |
| ३२० | ६३ | त्वावासाः | त्वम्वासाः |
| ३२० | ६९ | मूर्तिंगो | मूर्तिर्गो |
| ३२२ | २४ | निःस्वादेव | निःस्वादमेव |
| ३२२ | ३६ | बल्लभः | श्रीवल्लभः |
| ३२३ | ९२ | सधा | राधा |
| ३२९ | ९३ | मुद्धयः | मृद्धयः |
| ३३० | ६ | खर्णं | खर्वं |
| ३३१ | ३५ | विधन्त | विद्यन्त |
| ३३३ | १११ | चतेन | चेतन |
| ३३५ | ५२ | नेत्रऽ | नेत्राऽ |
| ३३६ | १०३ | विष्णय | धिष्ण्य |
| ३३९ | ५९ | मण्यो | मणयो |
| ३३९ | ७० | बघ्ने | जघने |
| ३४१ | १३७ | मूर्त्तः | मूर्त्तिः |
| ३४४ | ९१ | वं | व |
| ३४४ | २१ | पासना | पाशनया |
| ३४६ | ७२ | रसा | रस |
| ३४६ | ७४ | बदरस्व | बदरस्य |
| ३४६ | ९८ | तत्यतिम् | तत्पतिम् |
| ३४७ | ११२ | यद्ध | युद्ध |
| ३४७ | १२८ | श्वरो | श्वरी |
| ३४८ | १४८ | पक्षीद | पक्षीदं |
| ३५० | ६२ | त्रिंशति | त्रिंशदिति |
| ३५० | ६३ | हि | द्वि |
| ३५३ | ३१ | दानकतां | दानकर्ता |
| ३५३ | ४५ | लभेत् | लसेत् |
| ३५३ | ४९ | ष्टयं | चतुष्टयं |
| ३५४ | ३० | मदूत | यमदूत |
| ३५४ | ३२ | मोक्ष उ | मोक्षावु |
| ३५५ | ६१ | क्षितीपस्य | क्षितीपस्य |
| ३५६ | ११ | माणिको | माणिकी |
| ३५६ | १२२ | माऽगे | माऽग्रे |
| ३५६ | १२५ | माशिऽर्पं | माशिषोऽर्पं |
| ३५७ | १३१ | शुष्कवसे | शुष्कयसे |
| ३५७ | १५७ | द्रुमस्व | द्रुस्व |

